# THE

# BHÂTTA DÎPIKÂ

OF

MAHÂMAHOPÂDHYÂYA SARVAṬANTRASWATANTRA

## SHRÎMAT KHANDADEVA

WITH PRABHÂVATI THE COMMENTARY,

OF

**Shri Kavi Mandan Shambhu Bhatta.**

UP TO THE

### NIVÎTA PART I.



EDITED BY

**PANDIT VEĐÂNTAVIS'ARADA N. S. ANANTA KRISHṆA S'ÂSTRI,**

Sanskrit Leecturer, Calcatta University,

AND

**VÂSUDEVA LAXMAṆA ŚÂSTRÎ PAṆSÎKAR.**

---

**First Edition.**



PUBLISHED BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRNAYA-SAGAR" PRESS,

BOMBAY.

---

1921.



महामहोपाध्यायसर्वतन्त्रस्वतन्त्रश्रीमत्खण्डदेवप्रणीता

# भाट्टदीपिका ।



श्रीकविमण्डनतदन्तेवासिशम्भुभट्टप्रणीतप्रभावलीव्याख्यासंवलिता

## ( निवीतान्तो भागः १ )

वेदान्तविशारदश्रीयुक्तानन्तकृष्णशास्त्रिसंगृहीतमीमांसाशास्त्रसारयुतः ।

कल्कत्ताविश्वविद्यालयाध्यापकेन वेदान्तविशारदेन

नूरणिग्रामाभिजन-विद्वद्वरसुब्रह्मण्यात्मजेन

अनन्तकृष्णशास्त्रिणा

पणशीकरविद्वद्वरलक्ष्मणशर्मसूनु-वासुदेवशास्त्रिवराणां साहाय्येन

टिप्पणादिभिरुपस्कृतः ।



मुम्बय्याम्

पाण्डुरङ्ग जावजी-श्रेष्ठिभिः

स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये स्वायसाक्षरै-

रङ्कयित्वा प्राकाश्यं नीतः ।

---

शाकः १८४३, सन १९२२.

श्रीः

# भूमिका–

सत्स्वपि बहुषु दर्शनेषु मीमांसादर्शनमेव बौद्धादिनास्तिकमतनिरासेन सर्वेषामास्तिकदर्शनानामात्मलाभार्थमुपजीव्यमिति सर्वादरणीयमिदं दर्शनमिति सर्वविदितमिदम्। यथाहि ब्रह्मसूत्रविवरणं भिन्नभिन्नविषयेण भिन्नभिन्नसिद्धान्तादिना च भिन्नभिन्नप्रस्थानमव्यवस्थितं समुपदृश्यते न तथा मीमांसादर्शनमिति नैतत्प्रामाण्ये कस्यापि विप्रतिपत्तिं पश्यामः। ये ह्यद्वैतिनो वेदान्तानामेव परमं पर्यवसानं कर्मकाण्डानां त्ववान्तरमेव तदिति मन्यन्ते, तेऽपि विशेषतोऽद्वैतमतप्रक्रियाव्यवस्थापनार्थं तृतीयाध्यायादौ मीमांसादर्शनमाकाङ्क्षन्ते। यथाचैवं सत्यपि न पूर्वोत्तरमीमांसयोर्नैकशास्त्रत्वं तथा **निर्णयसागरमुद्रापितशास्त्रदीपिकाभूमिकायां** विशदं प्रकाशितमिति तत्तत एव द्रष्टव्यम्। किं बहुना? न किमप्यास्तिकदर्शनं मीमांसादर्शनं विना स्वात्मसत्तामपि विन्दते॥

मानवाद्यर्थशास्त्रादिनिर्णयोऽपि मीमांसान्यायोपष्टब्धो यथाऽप्रकम्प्यो भवति न तथा न्यायान्तरोपष्टब्ध इति प्रसिद्धमिदं सर्वेषाम्। ये त्वधुनातना धर्मशास्त्रविषये मीमांसान्यायविरुद्धा अपि ब्रह्मचारिकर्तृकदत्तकस्वीकारसाधुतादयः एकपुत्रदानप्रतिग्रहाविरुद्धतादयश्चाधिकरणिकनिर्णीताः कार्यकारिणश्च वर्तन्ते, तेषामप्यापातरमणीयत्वमपि मीमांसान्यायाभासोपष्टम्भनिबन्धनमेव। कुत्र कस्य न्यायस्य प्रवृत्तिः कुत्र च नेति बहुतरविमर्शनं विना क्रियमाणा हि निर्णयाः पारलौकिकार्थक्रियाकारितायां नोपयुक्ता भविष्यन्तीति निश्चिनुमः। व्यवस्थितं हि धर्मतत्त्वं न कालभेदेन देशभेदेन पुरुषभेदेन वाऽव्यवस्थां प्राप्नोतीति तु सांप्रदायिकः सिद्धान्तः। नहि दृष्टफलेषु कार्यान्तरेष्विवादृष्टफलेषु धर्मेषु समुदायस्य व्यवस्थापकत्वम्। न ह्यस्मदादिभिरधर्मोऽपि धर्मो निर्णीतः परलोकेऽपि धर्मफलं प्रदास्यतीति नियमकरणेऽपि कस्य चनाधिकरणिकस्यान्यस्य वा धनिकवर्यस्यापि योग्यतास्ति। ततश्च सम्यक् विमर्शनेन ब्रह्मचारिकर्तृकदत्तकस्वीकारादयो न धर्मा भवितुमर्हन्ति। विस्तृतं चैतत् निबन्धग्रन्थेष्विति तत एव द्रष्टव्यम्। ऋणापाकरणार्थं खलु पुत्रस्य संपादनम्। ब्रह्मचारिणां तु ऋणमेव नास्तीति भामत्यादिषु विस्तृतमिति नेह वितन्यते॥

एकपुत्रदानप्रतिग्रहनिषेधकं यत् वाक्यं "न त्वेवैकं दद्यात् प्रतिगृह्णीयाद् वा स हि सन्तानाय पूर्वेषामि"ति, तत्र "हि"शब्दश्रवणात् हेतुमन्निगदाधिकरणं प्रवर्तते। तथाच "स हि सन्तानाय पूर्वेषामि"त्यस्य केवलं स्तावकत्वात् पूर्वसन्तानार्थं नैकपुत्ररक्षणं नियतमित्येकपुत्रदानप्रतिग्रहौ न दुष्टाविति हि तेषां सिद्धान्तः (See sreeBalasu SreeBalasu-Case of Madras)। अत्र चाधिकरणिकैर्धर्मशास्त्रनिर्णये मीमांसान्यायादर आवश्यक इति यद्गृहीतं तेनाधमर्णमास्तिककुलमाधिकरणिकानाम्। इदमेवात्र दुःखं यत् मीमांसान्यायोऽत्र प्रकृताऽनुगुणो वोत नेति न सम्यक् परिशीलितमिति। एकेन न्यायवादिनाऽतिदिष्टस्य न्यायस्य तद्विरुद्धन्यायातिदेशेन च निरासोऽपरेण न्यायवादिना यदि न क्रियते तावता हि मतिदौर्बल्यं प्रकाशितं भवति न मतदौर्बल्यम्। ये हि निबन्धकारा मीमांसान्यायनिष्णाताः सर्वश्रुतिस्मृतिपारदृश्वानो हेतुमन्निगदाधिकरणादिविदोऽप्येकपुत्रदानप्रतिग्रहायोगमेव तत्र तत्र व्यवस्थापयन्ति, न ते कथमप्यगणनीया न्यायाधिपतीनाम्।

न ह्यत्र वयं हेतुमन्निगदाधिकरणप्रवृत्तियोग्यतां पश्यामः। नहि हिशब्दार्थः सर्वथा सर्वत्राविवक्षित इति मीमांसकानां राद्धान्तः। "नह्यत्रानूयाजा इज्यन्ते"इत्यत्र हि हिशब्दार्थो विवक्षित एवेति मीमांसादर्शने व्यक्तम्। ततश्च कस्य न्यायस्य कुत्र विषये प्रवृत्तिरिति विचारणायां हेत्वर्थस्याकाङ्क्षायां तद्विवक्षा तदभावे न तद्विवक्षेत्याद्यन्यत्र विस्तृतमिति प्रकृते "नह्यत्रानूयाजा" इत्यत्रेव हेत्वर्थविवक्षैव संमता। "चतुरुपभृती"त्युक्ते या शङ्का जायते कथं प्रकृताविव नाष्टावुपभृतीति, तन्निरासो "नह्यत्रानूयाजा" इत्यनेन यथा क्रियते, एवमत्रापि एकपुत्रो न देय इत्युक्ते या शङ्का जायते कथं द्वितीय इव स न देय इति, तन्निवर्तनं हि "स हि सन्तानाय पूर्वेषा"मित्यनेन क्रियते इति स्पष्टम्।

यदत्रापरं कारणमुक्तनिर्णये न्यायाधिपतीनाम्—"बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः। नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन॥" इति श्लोके पूर्वार्धे बहुपुत्राणां पुत्रदानं न यथा नियतं बोध्यते, न हि बहुपुत्रैः सर्वैरपि पुत्रदानाभावे प्रत्यवायो भवतीत्यत्र शास्त्रार्थः, तथोत्तरार्धेऽपि एकपुत्रदाननिषेधो न नियतः, किंत्वैच्छिकः—इति, तत्रोभयोरप्यैच्छिकविषयत्वे सपुत्रेण पुत्रदानं कर्तव्यमित्यर्थस्यैव फलितत्वात् वाक्यद्वयमिदं वितथं समापद्येत। नहि स्वरसतो रागः स्वपुत्रदाने कस्यापि भवतीति पुत्रदानस्यैच्छिकत्ववर्णनं न संगतं पश्यामः। एतेन निषेधोऽपि व्याख्यातः। निषेधो हि रागप्राप्तधात्वर्थविषयः सर्वत्र दृष्टो न रागप्राप्तस्य विषयः॥

अयमत्र निष्कर्षः—प्रत्येकं वाक्यपरिसमाप्तिः समुदाये वाक्यपरिसमाप्तिरिति न्यायद्वयं लोकसिद्धम्। तत्रैकां व्यक्तिमुद्दिश्य कस्यचन विधौ प्रथमः, समुदायमुद्दिश्य तद्विधौ तु द्वितीयः। तत्र समुदायावयवेनैकेन तद्विध्यर्थानुष्ठानेन सर्वेऽपि चरितविधयो भवन्ति। यथा बहूनां चोराणां शतरूप्यापराधे निर्णीते एकेनैव तद्दानेन सर्वेषां निर्हारः। तथाच तेन न्यायेनैकेन बहुपुत्रेण स्वीयैकपुत्रदानेन सर्वेऽपि बहुपुत्राश्चरितविधयो भवन्तीति "बहुपुत्रेणे"ति पूर्वार्धेऽपि नैच्छिकविषयत्वम्।

सर्वथा च मीमांसाशास्त्रस्य सम्यगपर्यालोचनमेवेदानींतनयथेच्छवेदव्याख्यानादीनां यथेच्छधर्मशास्त्रार्थनिर्णयस्य च मुख्यं कारणमिति मीमांसाशास्त्रस्य विशेषतः प्रचारस्तत्र तत्रापेक्ष्यते। पुरा हि न्यायालयेषु पण्डितानामपि नियोगः केषांचनासीत् तेषामेवानुमत्या धर्मशास्त्रार्थनिर्णयः कृत इति विदितमिदं सर्वेषाम्। तादृशानां पण्डितानामसहयोग एवैतादृशापसिद्धान्तानामपि सिद्धान्तत्वेन प्रवृत्तौ निमित्तम्।

यदिदानीं पण्डितपरम्परायामपि मीमांसाशास्त्रस्य न विशेषतः प्रतिष्ठा, तत्रापीदमेव मुख्यं निदानं यत् धर्मशास्त्रार्थनिर्णये न्यायाधिपतयोऽन्ये च न तथा मीमांसाशास्त्रमाद्रियन्ते इति न्यायाधिपतीनन्यांश्च सर्वानिदमेव प्रार्थयामो यत् धर्मशास्त्रार्थनिर्णयावसरे ते मीमांसाशास्त्रस्यापि पण्डितवरद्वारा समालोचनं कुर्वन्तु प्रचारयन्तु च तत् सर्वतो भारतवर्षे इति।

शास्त्रान्तरेषु यावन्ति पुस्तकान्यतिगभीराणि दुरवगाहाणि च वर्तन्ते, ततोऽन्यूनं तानि मीमांसायामपि विद्यन्त इति न वयमल्पज्ञाः पारयामोऽस्य परिच्छेत्तुं गभीरतादिकम्।

तत्र प्रथमं जैमिनिमहर्षिसूत्राणि, तत उपवर्षाचार्यकृता वृत्तिः, ततः श्रीशबरस्वामिकृतं सूत्रभाष्यं, ततः तद्विवरणं श्लोकवार्तिक–तन्त्रवार्तिक–टुप्टीकाभिधं श्रीकुमारिलभट्टसंपादितं, ततो विधिविवेको मण्डनमिश्रकृतः, ततो न्यायसुधा तन्त्रवार्तिकव्याख्या भट्टसोमेश्वरविरचिता, ततो न्यायरत्नाकर-शास्त्रदीपिका-न्यायरत्नमाला श्रीपार्थसारथिमिश्रकृता, अथ श्रीशंकरमिश्रविरचित–शास्त्रदीपिकाप्रकाश–बालप्रकाशौ, अथो श्रीमदापदेवविरचितो मीमांसान्यायप्रकाशः, अनन्तरं तत्सूनुविरचितो भाट्टालंकारः, ततः सविस्तरन्यायमाला विद्यारण्यस्वामिसंपादिता, ततो विधिरसायनं श्रीमदप्पयदीक्षितसंगृहीतं, ततो भाट्टदीपिका श्रीखण्डदेवकृतिः, ततः प्रभावली तद्व्याख्या श्रीशंभुभट्टमूलेति केषांचन ग्रन्थानां संग्रहेण क्रमो निरूप्यते। भाट्टदिनकर–भाट्टचिन्तामणि–भाट्टकौस्तुभ–तन्त्ररत्नव्याख्यावार्तिकव्याख्यान्तराण्यन्यानि च पुस्तकानि मीमांसाशास्त्रसंबन्धीनि भाट्टमतानुसारेण बहूनि वर्तन्ते।

अत्रच मीमांसायां प्रस्थानान्तरं प्राभाकराभिधं यत् वर्तते तदनुसारेणापि ऋजुविमलादयो बहवो वर्तन्ते। अयं हि प्रभाकरः श्रीकुमारिलपादानामन्तेवासीति प्रसिद्धा सोऽपि संप्रदायो बहुकालमारभ्य वर्तत एव। एवमपि याज्ञिकप्रयोगानुगुण्यं भाट्टसंप्रदायस्यैवेति तस्यैव विशेषतः प्रचारो बहुभिर्ग्रन्थविशेषैः प्राभाकरमतनिरासभूयिष्ठैराचार्यपरम्परया वर्तते। तत्र भाट्टसंप्रदायानुयायिनां सर्वेषामपि विषयाणामावापोद्वापाभ्यां प्रत्यधिकरणं विषयव्यवस्थापनं भाट्टदीपिकायां यथा वर्तते न तथाऽन्यत्र कुत्रापि वर्तते इति सर्वतो नवीनाऽपीयं भाट्टदीपिका सर्वादरणीयैव।

अत्र हि भाट्टदीपिकायां श्रीखण्डदेवाचार्यैः शब्दप्रयोगविषयेऽतीव कार्पण्यं प्रकाशितमिति सर्वविदितमिदम्। इदंच कार्पण्यं तैर्ग्रन्थसमाप्त्यर्थमेव समादृतम्, नतु स्वभावेन। नहि भाट्टकौस्तुभे परिपूर्णे तैस्तत् समादृतं वर्तते। नैयायिकादिशैल्या बहुतरन्यायातिदेशादिना च पूर्वोत्तरपक्षव्यवस्थापनं भाट्टदीपिकायां यत् कृतं तेन गम्यते मीमांसादिसर्वदर्शनमूर्तिस्वरूपा एव खण्डदेवाचार्या इति।

श्रीखण्डदेवाचार्यैः निवीतान्तं कौस्तुभं विस्तृतं विरचितं आन्तं च भाट्टदीपिका संगृहीतेति प्रभावलीदर्शिनामपरोक्षमेव। अस्याश्च भाट्टदीपिकायाः भाट्टचिन्तामणिः श्रीमत्मैसूरकुद्दिशास्त्रिमहाशयकृताऽतिविस्तृतव्याख्यैकाऽपरा श्रीभास्कररायकृताऽपरो भाट्टकल्पतरुरिति श्रीमन्महामहोपाध्याय श्रीरामसुब्बशास्त्रिचरणविरचितेतराच प्रभावलीनाम्नीति व्याख्याचतुष्टयमुपलभ्यते। तत्र भाट्टकल्पतरुरिदानींतनैः पूजनीयैर्महामहोपाध्यायैर्विरचितो मुद्रितस्तैरेव स्वतन्त्रम्। सा तु अतिसंग्रहरूपा न सर्वेषां पर्याप्ता भवेदिति नात्र बहु वक्तव्यमस्माकं वरीवर्ति।

श्रीभास्कररायकृतव्याख्या तु संग्रहरूपाऽपि सूक्ष्मेक्षिकया सर्वविधसंशयनिरासक्षमैव वर्तत इत्यत्र न सन्देहः। भाट्टचिन्तामणेस्तु प्रभावोऽन्यादृश एव वर्तते इत्यस्मदाचार्यमुखादस्माभिः श्रुतम्। नैतावताऽपि साऽस्माभिरपरोक्षीकृतेति सशोकं निवेदयामः।

येयं प्रभावलीनाम्नी व्याख्याऽत्रास्माभिः प्रकाश्यते, तत्र न्यायसुधाशास्त्रदीपिकातत्प्रकाशसोमनाथीयन्यायप्रकाशभाट्टालंकारविधिरसायनवेदान्तपरिभाषादिनिर्णयानां क्वचित्क्वचित् भाट्टदीपिकाया अपि च खण्डनमण्डनादिमुखेन सर्वेषां तत्पूर्वतनानां मीमांसाग्रन्थानां विमर्शः कृत इति नास्मदादिपरिच्छेद्यमेतद्गाम्भीर्यम्। नहि भाष्यादिपठनेनापि तथा न्यायस्वरूपावधारणं भवति यथा सप्रभावलीकभाट्टदीपिकाऽध्ययनेनेति नेयमतिशयोक्तिरिति व्याख्यान्तरादस्या उत्कर्षोऽपि व्या-

ख्यातः । अपरं चेदमुत्कर्पनिमित्तं यत् श्रीखण्डदेवान्तेवासिन एव शंभुभट्टा एतस्याः संपादका इति भाट्टदीपिकायाः सांप्रदायिकोऽर्थोऽनया गृहीतो भवतीति ।

निवीतान्तभाट्टकौस्तुभेनाप्यप्रकाशिताः तत्र तत्र प्रकाशभाट्टालंकारन्यायसुधादिदूषणादयोऽत्र प्रभावल्यां सविस्तरं प्रकाशिता इति निवीतान्तकौस्तुभेनाप्यगतार्थता प्रभावलीदर्शिनां विशदं भासेत । अत्र हि प्रभावल्यां दुर्बोधानामपि विषयाणां सुललितपदविन्यासादिभिः यत्सुबोधता संपादिता तेन गम्यते यथार्थनाम्न्येवेयं प्रभावलीत्यलमतिविस्तरेण ।

इयंच भाट्टदीपिका मूलमात्रं कल्कत्ताएशियाटिक्सोसयिट्यां मैसूरनगरे च प्रकाशिता । तत्र कल्कत्तासंपादिता प्रथमाध्यायद्वितीयपादेनोपक्रान्ता, मैसूरसंपादिता तु प्रथमाध्यायप्रथमपदेनेति सर्वविदितमिदम् । अत्रच श्रीभास्करराय-व्याख्या प्रथमाध्यायप्रथमपादस्यापि वर्तते इति श्रीखण्डदेवाचार्यैः प्रथमपादस्यापि भाट्टदीपिका कृतेति केषांचिदूहो वर्तते ।

अन्येतु प्रथमपादस्य भाट्टदीपिका भास्कररायैः स्वयं कृतैव न खण्डदेवाचार्यविरचिता, मैसूरनगरमुद्रापितप्रथमपादे हि कल्कत्तामुद्रापितपुस्तके मन्त्राधिकरणस्थानि बहूनि वाक्यानि योजितानि ततो निष्कासितानि चेत्यादि वर्णयन्ति । अत्रच निर्णयकारणं नान्या व्याख्या भवति प्रभावलीतः । प्रभावल्यां हि उपक्रम एव—आदितो व्याख्या प्रस्तूयते इत्यारभ्य प्रथमपादार्थानां सर्वेषामपि सङ्गतिनिरूपणमुखेन स्वयं संगृह्य द्वितीयपादेनैव शब्दतो व्याख्या क्रियत इति द्वितीयपादमारभ्यैव भाट्टदीपिका खण्डदेवाचार्यकृतेति स्पष्टमेव गम्यते । नहि भाट्टदीपिकायाः प्रारम्भादिनिर्णये श्रीखण्डदेवान्तेवासिशंभुभट्टविरचितव्याख्यातोऽपरा व्याख्या नियामिका भवितुमर्हतीति प्रभावलीमुद्रणारम्भः श्रेयःपरम्परामेवादधाति ।

तदत्र यथावसरं शंभुभट्टीसंपादनार्थं प्रवृत्तानामस्माकं समीचीनादर्शालाभेन प्रथमतः क्लेशमनुभूतवतां कल्कत्तैश्याटिक्सोसयिटीस्थादर्शः फार्मचतुष्टयानन्तरं विशेषत उपकरोति स्म । प्रथमतो विषयसंग्रहटिप्पण्यारब्धापि ग्रन्थविस्तरभयात् सा तृतीयाध्यायमारभ्य परित्यक्तेति सोऽयमपराधः क्षन्तव्य इति प्रार्थयामः ।

प्रभावलीग्रन्थोऽयमतिविस्तृतो नाद्यापि समाप्तिं गतश्चेदपि बहूनां प्रार्थनामनुसृत्य निवीतान्तेन प्रकाश्यते । तत्र संभाव्यमानानां प्रमादानां यथावसरं संशोधनं कालान्तरे करिष्याम इति तेषामुद्बोधनेन सर्वथा वयमुपकर्तव्या इति प्रार्थयामः ।

यो हि मीमांसाशास्त्रसाराभिधो ग्रन्थोऽत्र योजितः स कल्कत्ताविश्वविद्यालयकलोपाध्याय ( M. A. ) परीक्षार्थिनां कृते भाष्यादिप्रवचनसुखेनास्माभिः संगृहीत इति सर्वथैतदीयं स्वाम्यं कल्कत्ताविश्वविद्यालयस्यैव नान्यस्य । कल्कत्ताविश्वविद्यालयेन सर्वेषामपि शास्त्रविभागानामध्यापनव्यवस्थापनादिनाऽस्मत्भारतवर्षस्य यावदुपक्रियते न तथाऽन्येन केनापि । अत्रंच मुख्यं निदानं सर्वतन्त्रस्वतन्त्राणामतिगभीरप्रकृतीनां धीरोदात्तानां सरस्वत्यवताराणां शास्त्रवाचस्पत्यादिविविधविरुदभूषणानां श्री सर् आशुतोषमुखोपाध्यायानां निरङ्कुशं तदाध्यक्ष्यमेवेत्याबालगोपविदितमिदमिति नात्र बहुविलेखनेन पिष्टं पेषयितुमिच्छामः । सत्स्वपि बहुषु प्रतिबन्धिषु सत्स्वपिच बहुष्ववश्यकर्तव्येषु कार्यान्तरेषु सर्वमपि क्षणं ये विश्वविद्यालयार्थमेव विनियुञ्जते स्वप्नेऽपि तद्व्यवस्थामेव च परामृशन्ति, तादृशा भारतवर्षीयविभागस्याद्वितीयावलम्बस्थानीया महात्मानो हीदानीं विरलविरला एव । तदत्रास्यावश्यकर्तव्यं समुचितं समर्पणस्थानं तान् पूजनीयान् श्री सर् आशुतोषमुखोध्यायानेव विमृश्य निश्चिनुमः ।

विस्तृतस्यापि मीमांसाशास्त्रसारस्य योजनं बहुभिः प्रर्थितमिति तदनुसारेण निवीतान्तं सोऽपि समनुयोजित इति- तत्र कृतप्रयत्नानां पण्डिताग्रगण्यानां श्रीवासुदेवशास्त्रिणामन्येषां च निर्णयसागरमॅनेजरमहाशयादीनामधमर्णा वयमिति सविनयं निवेदयामः ।

कष्टसाध्येऽपि मुद्रणव्यापारेऽत्र समये एतादृशानां शास्त्रग्रन्थानां प्रकाशनार्थं निर्णयसागराधिपतीन् य उपदिशन्ति प्रोत्साहयन्ति च तादृशा माहात्मानः श्रीवासुदेवशास्त्रिणो निर्णयसागरस्य विशेषतः साहाय्यकारिण एव ।

सर्वथा चैतेषां पण्डितवराणां निर्णयसागराधिपतीनां श्रीपाण्डुरङ्ग जावजी श्रेष्ठिमहाशयानां च शास्त्रग्रन्थप्रचारेण महान्तं लोकोपकारमादधानानां चिरजीवनमेव वयं सदा भगवत्सविधे प्रार्थयाम इति शिवम् ॥

इति सुधीजनविधेयतमः

**वेदान्तविशारदः अनन्तकृष्णशास्त्री**

Calcutta University Sanskrit-Lecturer.

# शुद्धिपत्रम्—



| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २०. | १ | विषयो | विषहो |
| २२. | २१ | द्रव्यानां | द्रव्याणां |
| २३. | २७ | तनवाक्येन | तनेन |
| २५. | २६ | परः | परं |
| ,, | ,, | वृत्तिकः | वृत्तिकं |
| २८. | ९ | प्रकृत्यथा | प्रकृत्यर्था |
| ,, | ,, | कृता | कृतौ |
| ,, | ४२ | पपत्त्या | पपत्त्या |
| ३०. | ४ | तापत्तिः | तानापत्तिः |

श्रीः

# अविघ्नमस्तु

# अथ मीमांसाशास्त्रसारः ।

मीमांसा नाम वेदार्थविचारः । स च वेदार्थनिर्णयार्थः । तस्य च प्रयोजनं यथावदेव साङ्गप्रधानस्य धर्मस्यानुष्ठानद्वारा स्वर्गादिप्राप्तिरेव । कर्मानुष्ठानार्थमपेक्षितं वेदार्थज्ञानं न मीमांसाशास्त्रं विना व्याकरणेन निरुक्तादिना वा भवति । यद्यप्यधीतपदन्यायादितत्त्वस्य वेदवाक्यश्रवणसमनन्तरमेव कश्चिदर्थः प्रतिभाति तथापि स किं बाधितोऽबाधितः? किं स एव तत्र विवक्षितः? उतान्य इत्यादिसंशयनिरासो मीमांसाशास्त्रेणैव भवति ॥

तथाहि—"अक्ताः शर्करा उपदधाति" इत्येकं वैदिकं वाक्यं विद्यते । अत्र शर्करापदस्य लोष्टखण्डका अर्थः । अक्ता इत्यनेन तेषामञ्जनं कर्तव्यं कृताञ्जनानां चोपधानं कर्तव्यमिति च गम्यते । उपधानं नाम राशिरूपेण घटनाविशेषः । तत्र चाऽञ्जनं द्रवद्रव्येणैव भवति, न वालुकादिभिरिति सर्वविदितमिदम् । तत्रैवं संदेहो भवति केन द्रवद्रव्येणाञ्जनं कर्तव्यमिति । अनेकानि द्रवद्रव्याणि तैलं जलं घृतादिकं च विद्यन्ते । अयं च संदेहो न व्याकरणाध्ययनमात्रेण निरासमर्हति, मीमांसाशास्त्राध्ययनेन तु सर्वथा नावसरमाप्नोति ।

मीमांसाशास्त्रे हि प्रथमाध्यायस्यान्ते "संदिग्धे तु वाक्यशेषात्" इति सूत्रे—"अक्ताः शर्करा उपदधाति" इत्यत्र तद्वाक्यानन्तरश्रुतेन "तेजो वै घृतं" इति वाक्यशेषेण घृतस्य स्तुतिः क्रियते, स्तुतिर्हि तस्यैवाऽपेक्षिता यस्यानुष्ठानार्थमपेक्षा । तथाच घृतस्य स्तुत्याऽवगम्यते घृतेन किमपि कर्तव्यमिति पूर्वमवगतमिति, पूर्वं त्वञ्जनं कर्तव्यमिति बोधितम् केनेति साधनं किमपि द्रवद्रव्यमपेक्षते । एवंच नष्टाश्वदग्धरथन्यायेनोभयोरपि परस्परसंबन्धात् घृतेनैवाऽञ्जनं न तैलादिनेति निर्णयः सिद्धो भवतीति निरूपितम् । तथाच मीमांसाशास्त्राध्ययनमिदमत्यन्तमपेक्षितम् । मीमांसाशास्त्रं चेदं गुरुकुले स्थित्वैवाध्येयम् वेदाध्ययनवत् नतु गुरुकुलात्समावृत्य विवाहादिकमपि कृत्वा विना गुरुसहायं स्वयमपि वा । मीमांसा अवश्यं कर्तव्येति हि "स्वाध्यायोऽध्येतव्यः" इति वाक्येनावगम्यते । वेदाध्ययनमप्यवश्यं कर्तव्यमिति तदेव वाक्यं गमयति । तथाच एकविधिमूलकत्वाद्वेदाध्ययनवेदार्थविचारयोः उभयमपि गुरुकुले स्थित्वैव संपादनीयम् ।

कथं "स्वाध्यायोऽध्येतव्यः" इति वाक्यं मीमांसाशास्त्रमपि विदधाति? नहि मीमांसापरपर्यायविचारबोधकं किमपि पदमत्र वर्तते । तत्रहि स्वाध्यायपदस्य वेदवाक्यमर्थः । अध्येतव्य इत्यस्याध्ययनकर्तव्यताऽर्थः । तथाच विचारकर्तव्यताबोधकपदाभावात्कथमिदमुपपद्यते विचारोऽपि "स्वाध्यायोऽध्येतव्यः" इति विधिमूलक इति चेत्

अत्रेदं समाधानम्—अध्येतव्य इत्यस्य हि द्वेधा विवरणं भवति अध्ययनं कुर्यादिति, अध्ययनेन कुर्यादिति च । यथा पचतीत्यस्य पाकं करोति, पाकेन करोतीति च तद्वत् । यत्र हि देवदत्तः पचतीति द्वितीयान्तपदं विना पचतीत्यस्य प्रयोगस्तत्र पाकं करोतीति विवरणम् । यत्र तु पचत्योदनमिति प्रयोगस्तत्र पाकेनौदनं करोतीति च । नहि पाकं करोत्योदनमिति विवरणं सङ्गतं भवति । एककर्मा हि कृ धातुर्न द्विकर्मकः । तत्र च यदि प्रथमतः प्रमाणान्तरेण फलं पाकस्यावगतं तर्ह्येव पचतीति केवलप्रयोगः । अन्यथा न सः । तथाच अध्येतव्य इति विधिवाक्यस्थले यद्यध्ययनस्य फलं किमपि प्रमाणान्तरप्रसिद्धं स्यात् तर्ह्यध्ययनं कुर्यादित्येव विवरणं युक्तम् । यदि तु प्रमाणान्तरेण न सिद्धं तर्ह्यध्ययनेन फलं कुर्यादिति विवरणं युक्तम् ।

तत्राध्येतव्य इति कर्मणि तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानादध्ययनस्य स्वाध्यायः फलमिति प्रमाणान्तरानधिगतत्वादध्ययनेन स्वाध्यायं कुर्यादित्येव विवरणं श्रेयः । तत्र च केवलस्य स्वाध्यायपदवाच्यस्य वेदस्य कर्मत्वं कीदृशमिति विचारणायां किमपि तत् तत्र न भवति ।

चतुर्विधं हि कर्मत्वम्—उत्पाद्यत्वं प्राप्यत्वं विकार्यत्वं संस्कार्यत्वं चेति । यथा घटं करोतीत्यत्र घटस्योत्पाद्यत्वम् । ग्रामं वा गच्छतीत्यत्र तु ग्रामस्य गमनेन प्राप्यत्वं नतु जन्यत्वम् । तण्डुलं पचतीत्यत्र तण्डुलस्य विकार्यत्वं न प्राप्यत्वं नाप्युत्पाद्यत्वम् । नहि पाकेन तण्डुलो ग्राम इव प्राप्यते घटवदुत्पाद्यते वा किं तु विक्लेदनरूपावस्थान्तरं प्राप्यते । अवस्थान्तरप्राप्तिरेव खलु विकारः । आदर्शं विमलीकरोतीत्यत्र त्वादर्शस्य संस्कार्यकर्मत्वमिति ।

तत्राऽध्ययनेन वेदो न जन्यते; तस्य नित्यत्वात् । नापि विकार्यते; तत्रावस्थान्तरप्राप्तेरदर्शनात् । नापि संस्क्रियते, तदेव हि संस्कार्यकर्म भवति यस्योत्तरत्र कार्यान्तरेषूपयोगो भवति, तत्रायं विशेषः—लौकिकवाक्येन यस्य संस्कार्यकर्मत्वमवगम्यते तस्य लौकिके कार्यान्तरे विनियोगः । वैदिकवाक्येन यस्य संस्कार्यकर्मत्वमवगम्यते तस्य वैदिके कार्यान्तरे विनियोग इति । यथा "व्रीहीन्प्रोक्षति" इति वाक्ये संस्कार्यकर्मतयाऽवगतानां व्रीहीणां "व्रीहिभिर्यजेत" इति वाक्यान्तरेण यागे विनियोगो विद्यते । नचैवं स्वाध्यायेन किंचित्कुर्यादिति कस्मिंश्चन यागे स्वाध्यायस्य विनियोगः क्वचिदपि वर्तते । अतो न संस्कार्यकर्मत्वमपि संभवति । प्राप्यकर्मत्वं तु यद्यपि स्वाध्यायस्य संभवति । अध्ययनेन तस्य प्राप्यत्वात् । एवमपि न स्वाध्यायस्य केवलस्य प्राप्यत्वं विवक्षितम् । यतः "अनधीयाना व्रात्या भवन्ति" इति वाक्यान्तरेण केवलस्य स्वाध्यायस्य व्रात्यतापरिहारार्थं संपाद्यत्वं निरूपितमित्येतद्वाक्यवैयर्थ्यमापद्येत । नहि केवलः स्वाध्यायः प्रयोजनम् । तथाच केवलस्य वेदस्य "स्वाध्यायोऽध्येतव्यः" इति वाक्ये कर्मत्वेनान्वयासंभवादर्थज्ञानविशिष्टस्वाध्यायस्यैव प्राप्यकर्मत्वं विवक्षणीयम् । तथाच विशेषणीभूतार्थज्ञानार्थमध्ययनमुक्तवाक्ये विधीयत इति सिद्धम् ॥

यत्तु भामत्यां "स्वाध्यायोऽध्येतव्यः" इत्यत्राध्ययनेन स्वाध्यायस्य संस्कार एव फलमित्यपशूद्राधिकरणे व्यवस्थापितं तदपि तत्रैव संस्कृतस्य स्वाध्यायस्य दृष्टद्वारेणैवोपयोगे संभवति हिरण्यधारणवन्न साक्षाददृष्टार्थत्वमित्यधीतेन स्वाध्यायेन कर्मब्रह्मावबोधस्यैव व्यवस्थानादर्थज्ञानार्थमध्ययनमिति सिद्धान्तस्य न विरुद्धम् । तत्र च "कुठारेण छिन्द्यात्" इति वाक्ये कुठारो द्वैधीभावाख्यफलसाधनमिति बोधिते सति एवं शङ्का जायते कथं कुठारेण द्वैधीभावं संपादयेदिति । तत्र च समाधानं लौकिकानामिदमेव यदुद्यम्य निपात्य च द्वैधीभावः संपादनीय इति । तत्र प्रतीयमानमुद्यमननिपातनादिकं यत्कुठारस्य फलं प्रति साधनस्य फलजननार्थमुपकारकं तदितिकर्तव्यताशब्देन व्यपदिश्यते । कर्तव्यतायाः प्रकारविशेष एव इतिकर्तव्यता नाम । तथाचोद्यम्य निपात्येत्यस्यापि कुठारेण छिनत्तीत्यत्रान्वयानन्तरमेव तद्वाक्यं निराकाङ्क्षं भवतीत्यनुभवसिद्धम् । एवमत्राप्यध्ययनेनार्थज्ञानं कुर्यादित्युक्ते या शङ्का जायते कथमध्ययनेनार्थज्ञानं संपादनीयमिति तस्या इदमेव समाधानं यत् वेदार्थं विचार्य वेदाध्ययनेनार्थज्ञानं संपादनीयमिति ।

तथाच "स्वाध्यायोऽध्येतव्यः" इति वाक्ये विचार्येतिपदस्यापि योजनां विना न तद्वाक्यं निराकाङ्क्षं भवतीति "स्वाध्यायोऽध्येतव्यः" इतिविधौ विचारबोधकपदस्यापि विद्यमानत्वादध्ययनविचारयोरेकविधिमूलकत्वमुपपन्नमेव । एवंच गुरुकुल एव स्थित्वा विचारः कर्तव्य इति सिद्धम् । अमुमेवार्थं मनसि निधाय जैमिनिः "अथाऽतो धर्मजिज्ञासा" इति सूत्रयामास । **अथ** वेदाध्ययनानन्तरं **अतः** अध्ययनस्य अर्थज्ञानफलकत्वेनाऽध्ययनवद्वेदार्थविचारस्यापि वैधत्वात् **धर्मजिज्ञासा** वेदार्थविचारः कर्तव्य इति सूत्रार्थः[१] ।

अस्य सूत्रस्य जिज्ञासाधिकरणमिति नाम । अधिकरणलक्षणं तु—

"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं विदुः ॥"

इति वचनसिद्धं विषयादिपञ्चकमेव ।

तत्र सर्वेषामप्यधिकरणानां किमपि वेदवाक्यं (१) **विषयः** ।

तद्वाक्यं कस्याऽर्थस्य बोधकमिति सन्देहः (२) **विशयः** ।

तत्रैकतरनिरस्यकोटिः सयुक्तिका (३) **पूर्वपक्षः** ।

पूर्वपक्षकोटिनिरासपूर्वकस्वीकरणीयकोटिनिर्देशः (४) **सिद्धान्तः** ।

यथा जिज्ञासाधिकरणे "स्वाध्यायोऽध्येतव्यः" इति वेदवाक्यं **विषयः** ।

तेन वाक्येन स्वर्गार्थमध्ययनं विधीयते उतार्थज्ञानार्थमध्ययनं विधीयते वा । यदि स्वर्गार्थं तर्हि न विचारो वैधः । यद्यर्थज्ञानार्थं तर्हि विचारं विनाऽर्थज्ञानासंभवात्स वैध **इति सन्देहः** ॥

स्वर्गार्थमेवाऽध्ययनं नार्थज्ञानार्थं अर्थज्ञानार्थमध्ययनमिति भारताध्ययनादौ क्लृप्तत्वाद्विधिवैयर्थ्यात् **इति पूर्वपक्षः** ॥

अर्थज्ञानार्थमध्ययनमिति यद्यपि भारताध्ययनादौ क्लृप्तम्, तथापि लिखितपाठभाषान्तराध्ययनादिभिरपि भारताद्यर्थज्ञानमिव वेदार्थज्ञानं मा भूदित्येतदर्थं वेदाध्ययनेनैवार्थज्ञानं युक्तं संपादयितुं ननु भाषान्तरदर्शनादिभिरित्येतदर्थं बोधयितुं "स्वाध्यायोऽध्येतव्यः" इति विधिवाक्यमपेक्षितमेवेति दृष्टफले संभवत्यदृष्टकल्पनाया अन्याय्यत्वान्न स्वर्गार्थमध्ययनम् । यथा हि वेदार्थज्ञानस्य क्रत्वनुष्ठानद्वारा स्वर्गादिफलोपयोगः नैवं भारतार्थज्ञानस्येति भाषान्तरादिभिर्भारतार्थज्ञानं न दोषाय भवतीति **सिद्धान्तः** ॥

---

१ अत्रानन्तर्यार्थेनाथशब्देन वेदमधीत्य न स्नातव्यं त्वरितेन, किंतु वेदार्थविचारानन्तरमेव स्नातव्यमिति बोधनद्वाराऽधीतवेदस्य माणवकस्याध्ययनकालिकानां नियमविशेषाणामवर्जनमपि न दोषायेति गम्यत इति भाष्यवार्तिकादौ व्यक्तम् । एवंच वेदार्थविचारोऽयं इदानींतनरिसर्चं (Research) शिक्षणतुल्य एवेति जानीमः.

सङ्गतिर्हि चतुर्विधा—शास्त्रसङ्गतिः, अध्यायसङ्गतिः, पादसङ्गतिः, अधिकरणसङ्गतिश्चेति ॥

"शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधा" इति वचनात् ॥

शास्त्रसङ्गतिर्नाम—शास्त्रसंबन्ध्येवार्थः प्रत्यधिकरणं विचारणीय इति।

इदं हि मीमांसाशास्त्रं धर्मशास्त्ररूपम्। अतः प्रत्यधिकरणं धर्मनिर्णयोपयोग्येवार्थो विचारणीयः। मीमांसाशास्त्रं हीदं द्वादशाध्यायरूपम्।

तत्र **प्रथमाध्याये** धर्मप्रमाणम्, **द्वितीये** धर्माणां परस्परभेदः, **तृतीये** किं कर्म कस्य कर्मणोऽङ्गमित्याद्यङ्गाङ्गिभावः, **चतुर्थे** किं स्वतन्त्रफलसाधनं किंवा कर्मसमृद्ध्यर्थमित्यादि क्रत्वर्थपुरुषार्थविचारः, **पञ्चमे** कस्य कर्मणोऽनन्तरं किमित्यादिधर्मगतक्रमविशेषविचारः, **षष्ठे** कस्मिन्धर्मे कोऽधिकारी कोऽनधिकारीत्याद्यधिकारविचारः, **सप्तमे** धर्मस्य प्रकृतिगतस्य विकृतावतिदेशः सामान्यतः, **अष्टमे** स एव विशेषतः, **नवमे** ऊहः, **दशमे** बाधः, **एकादशे** तन्त्रम्, **द्वादशे** प्रसङ्गः, इत्येवं सर्वेष्वध्यायेषु धर्मकथैव विद्यते। जिज्ञासाधिकरणेऽपि सा विद्यत एवेति शास्त्रसङ्गतिरविकला ॥

एवं धर्मप्रमाणविचारस्यात्र प्रतिज्ञानात् **अध्यायसङ्गतिः** ॥ **पादसङ्गतिरप्येवमेव** ॥

तथाच धर्मविचारः गुरुकुले स्थित्वा कर्तव्य इति युक्तमेव।

स च धर्मः क इति चेत् "चोदनालक्षणोऽर्थो धर्मः" इति सूत्राच्चोदनालक्षणो वेदबोधितोऽर्थः प्रयोजनवान् स धर्म इति सिद्ध्यति। तथाच वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्म इति धर्मलक्षणं सिद्धं भवति।

वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्म इति लक्षणवाक्ये वेदशब्दस्य लिङादिघटितं वेदवाक्यमर्थः। तदुत्तरतृतीयाविभक्तेर्ज्ञाप्यत्वमर्थः। तस्य च विधीयमानपदघटकविधावन्वयः। तस्य च शानजर्थे फलरूपकृतिविषयत्वेऽन्वयः। तथाच वेदबोधितविधिविभाव्यप्रयोजनोद्देश्यककृतिविषयो धर्म इति फलितम्।

तत्र को नाम विधिः? स कस्यार्थः? काच कृतिः? सा कस्यार्थः? किं तस्यां प्रयोजनम्? किं च तद्विषयः? इति जिज्ञासायां "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति वाक्यमादाय तदुपपादयामः।

"गामानय" इत्यादिवाक्यश्रवणानन्तरं गवानयनार्थं किङ्करः प्रवर्तते। सा च प्रवृत्तिरेतद्वाक्याधीना। तत्र गोपदश्रवणं अमूविभक्तिश्रवणं आनीश्रवणं केवलाख्यातश्रवणं वा न निमित्तम्। नहि "गामानयति" इत्यादिवाक्यश्रवणानन्तरं कोऽपि गवानयनार्थं प्रवर्तते, किंतु लिङः श्रवणमेव निमित्तम्। तथाच लिङर्थज्ञानमेव प्रवृत्तिं प्रति तत्र करणम्। लिङर्थश्च प्रवृत्त्यनुकूलप्रवर्तयितृपुरुषनिष्ठोऽभिप्रायविशेषः। तथाच स एव विधिः। याच प्रवृत्तिस्तेन भवति सैव कृतिः। एवंच लिङ्श्रवणानन्तरं प्रवृत्त्यनुकूलव्यापारः प्रतीयते।

तत्र प्रवृत्तिः व्यापारः इत्यर्थद्वयं यत्प्रतीयते तत्र कारणं न लिङ एवार्थद्वयेऽपि सङ्केताङ्गीकारः। अन्याय्यश्चानेकार्थत्वमिति न्यायविरोधात्। अतो लिङ एव सामान्यधर्मपुरस्कारेण विशेषधर्मपुरस्कारेण चार्थभेदस्तत्राङ्गीक्रियते। अन्याय्यश्चानेकार्थत्वमिति न्यायः शक्यतावच्छेदकभेदे शक्तिभेदमप्यावश्यकं गमयति अतो न दोषः।

यद्यपि वेदे अपौरुषेये पुरुषाभिप्रायविशेषरूपा प्रेरणा लिङर्थो न भवितुमर्हति, तथापि शब्दगत एव व्यापारविशेषो वेदे लिङर्थ इति कल्पनान्न दोषः। अस्यैव लिङर्थस्य शब्दनिष्ठत्वात् शाब्दी भावनेति नामान्तरमपि। इयं तु प्रसिद्धिर्वैदिकानामेव।

भावना नाम फलानुकूलव्यापारः। इदं भावनात्वं फलानुकूलेषु सर्वत्राविशिष्टम्। तथाच प्रवृत्त्यनुकूलव्यापार इव स्वर्गादिफलार्थायां प्रवृत्तावपि भावनेति व्यवहारः। इयान्विशेषः—सा शाब्दी भावना, प्रवृत्तिः आर्थी भावनेति।

अर्थः प्रयोजनम्, तत्संबन्धिनी आर्थी भावनेत्यर्थः। यत्सुखरूपं तदेव मुख्यं प्रयोजनं न तत्साधनानि। तथाच शाब्दीभावनाया अपि प्रवृत्तिरूपप्रयोजनसत्त्वेऽपि स्वर्गफलायाः प्रवृत्तेरेवार्थभावनाशब्देन व्यवहारः।

तथाच अर्थभावना कृतिः प्रवृत्तिः इत्यादीनि पर्यायपदानि। यत्तु न्यायप्रकाशे भवितुर्भवनानुकूलो भावकव्यापारविशेषो भावनेत्युक्तं तस्याप्ययमेवाशयः। तत्र भवितुरित्यस्य फलस्येति भावकपदस्य तत्करणधात्वर्थाद्याश्रयेति चार्थात्।

तत्र शाब्दबोधे प्रथमान्तमेव मुख्यविशेष्यमिति नैयायिकाः। तेषां मते "देवदत्तः पचति" इत्यस्य पाकानुकूलकृत्याश्रयो देवदत्त इति "देवदत्तस्तण्डुलं पचति" इत्यत्र तण्डुलकर्मकपाकानुकूलकृत्याश्रयो देवदत्त इति च बोधः।

धात्वर्थमुख्यविशेष्यकः शाब्दबोध इति वैयाकरणाः। तेषां मते "देवदत्तः पचति" इत्यत्र देवदत्तनिष्ठः पाक इति "देवदत्तस्तण्डुलं पचति" इत्यत्र देवदत्तनिष्ठस्तण्डुलकर्मकः पाक इति च बोधः।

तत्र प्रथममते कारकाणां क्रियया साकमेवाऽन्वयनियमात्प्रथमार्थस्याप्यभिहितकारकस्य क्रियायामन्वयस्यैव युक्तत्वात्तादृशनियमोल्लङ्घनं द्वितीयमते सर्वत्र प्रत्ययार्थः प्रधानमिति यो नियमस्तस्य धात्वनन्तरप्रत्ययार्थे परित्यागात्तादृशनियमोल्लङ्घनं च दोष इति मीमांसका आख्यातार्थमुख्यविशेष्यकं शाब्दबोधं मन्यन्ते।

तथाच "पचती"त्यस्य पाकं करोतीति "पचत्योदनं" इत्यस्य पाकेनौदनं करोतीति विवरणमप्युपपद्यते। अतएव धात्व-

र्थस्य कर्मत्वेन करणत्वेन वा आख्यातार्थकृतावन्वयो युक्त इति "देवदत्तः पचति" इत्यस्य पाककरणिका देवदत्तकृतिरिति "पचति ओदनं" इत्यस्य पाककरणिका ओदनभाव्यका देवदत्तकृतिरिति च बोधः ।

तत्र च धात्वर्थस्य कृतिं प्रति करणत्वं न साक्षात्साधनत्वरूपम्, किंतु कृतौ भाव्यत्वेनान्वितस्वर्गादिसाधनत्वरूपम् । दृष्टं हि लोके तत्फलसाधने तदसाधनेऽपि साधनशब्दप्रयोगः, यथा–"कुठारेण छिनत्ति" इत्यादौ छेदनं प्रति कुठारः करणमिति । छेदनशब्दस्य हि द्वैधीभावानुकूलव्यापारोऽर्थः । नहि कुठारो व्यापारं प्रति करणम् किंतु तत्फलद्वैधीभावं प्रति । तत्रोद्यमननिपातनानामिवेतिकर्तव्यतात्वेनाऽत्राऽङ्गयागादीनामितिकर्तव्यतात्वेनान्वयः । तथाच "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति वाक्यस्य ज्योतिष्टोमाभिन्नयागकरणिका स्वर्गभाव्यका दीक्षणीयाद्यङ्गयागेतिकर्तव्यताका कृतिस्तदनुकूलव्यापार इति केषांचन बोधप्रकारः ।

नवीनास्तु शाब्दभावनाया अप्यर्थभावनायामेवान्वयाच्छाब्दभावनाभाव्याऽर्थभावना ज्योतिष्टोमादिकरणिकेति वदन्ति ।

तत्र विधिविषयीभूतप्रयोजनोद्देश्यकभावनारूपकृतिविषयत्वं तत्करणत्वरूपमेव पर्यवस्यतीति ज्योतिष्टोमेनेतिवाक्येऽर्थभावनायां यागस्य करणत्वेनान्वयाद्यागो धर्म इति लक्षणसमन्वयः ।

क्षुधानिरासादिप्रयोजनमुद्दिश्य विधीयमानानां भोजनादीनां तु न धर्मत्वम् वेदविहितत्वाभावात् । वेदबोधितविधिविषयार्थीभावनाभाव्यस्वर्गादिधर्मत्ववारणार्थं तु प्रयोजनमुद्दिश्येतिपदम् । वेदेनाभिचाराख्यशत्रुवधरूपप्रयोजनमुद्दिश्य विहितोऽपि श्येनयागो न धर्मः; तस्यार्थत्वाभावात् । अर्थपदेन ह्यनर्थभिन्नं विवक्षितम् श्येनयागस्तु आभिचारफलकोऽप्यभिचारस्य हिंसारूपत्वात्स्वफलद्वाराऽनर्थसाधनमनर्थरूप एव । तदुक्तम्—"फलतोऽपि च यत्कर्म नाऽनर्थेनानुबध्यते । केवलप्रीतिहेतुत्वात्तद्धर्म इति कथ्यते ॥' इति ॥

यद्यपि "चोदनालक्षणोऽर्थो धर्मः" इत्यत्र चोदनापदं "चोदनेति क्रियायाः प्रवर्तकं वचनम्" इति भाष्याद्विधिवाक्यपरमेव; तथापि मन्त्रार्थवादादिसाधारण्यार्थं अत्र वेदवाक्यसामान्यमेव विवक्ष्यते । संमतं चैतच्छबरस्वामिनाम् ।

यदत्र केषांचन पर्यनुयोगः वेदलक्षणोर्थो धर्म इति न कथं सूत्रयामासेति ।

तत्रायं भावः—वेदो हि चतुर्विधः विधिमन्त्रार्थवादनामधेयभेदात् । तत्र विधिवाक्यघटकद्रव्यादिपदानामिव नामधेयानामर्थवादानां च विध्येकवाक्यतयैव धर्मे प्रामाण्यम्, न स्वतन्त्रम् । मन्त्रस्तु यद्यपि विधिवाक्येन पदैकवाक्यतां वाक्यैकवाक्यतां वा न प्राप्नोति; तथापि भूम्ना "छत्रिणो गच्छन्ति" इतिवन्मन्त्राणामपि चोदनापदेन ग्रहणमिति ।

अत्र च चोदनालक्षण इत्यत्र "सर्वं वाक्यं सावधारणम्" इति न्यायेन चोदनैव प्रमाणम् चोदना प्रमाणमेवेति नियमद्वयं विवक्षितम् । तत्र प्रथमनियमोपपादनार्थं धर्मस्य प्रत्यक्षादिप्रमाणान्तरगम्यत्वनिरासश्चतुर्थाधिकरणेन प्रथमाध्यायप्रथमपादगतेन कृतः ।

चोदना प्रमाणमेवेति द्वितीयनियमोपपत्तिस्तु अप्रामाण्यकारणानां सर्वेषां वेदेऽप्रवृत्त्या निरूपणीया । तत्राप्रामाण्यकारणानि बहूनि विद्यन्ते । प्रमाणान्तराधिगतार्थविषयत्वम्, बाधितार्थविषयत्वम्, अनाप्तप्रणीतत्वम्, पौरुषेयत्वम्, इत्यादीनि ।

तत्र प्रमाणान्तराधिगतार्थविषयत्वं वेदस्य न संभवति; यदिन्द्रियार्थसंनिकर्षजन्यं विद्यमानार्थविषयं च ज्ञानं तत्खलु सत्प्रत्यक्षम् । नच धर्मो विद्यमान इति न प्रत्यक्षप्रमाणाधिगतविषयत्वम् । प्रत्यक्षपूर्वकत्वाच्चानुमानलौकिकवचनानां न तदधिगतविषयत्वमपि ।

**एतेन** बाधितार्थविषयत्वमप्यप्रामाण्यकारणं निरस्तं भवति । बाधितार्थविषयत्वं हि द्वेधा संभवति । योगाचारादिमते-नार्थस्यैवासद्रूपत्वात्, वेदेन योऽर्थो यथावगतस्तद्विरुद्धं प्रत्यक्षादिभिरवगतत्वाच्च । तत्र योगाचारादिबौद्धमतस्यायुक्तत्वान्न प्रथमनिमित्ताधीनं बाधितार्थविषयत्वम् ।

"चित्रया यजेत पशुकामः" इति वाक्येन यागस्य पशुः फलमिति बोधितम् न त्वव्यवहितोत्तरमेव फलं भवतीति यागानुष्ठानानन्तरमेव फलादर्शनरूपप्रत्यक्षेण न तद्वाक्यं बाधितम् ।

"स एष यज्ञायुधी यजमानः स्वर्गलोकं याति" इत्यत्र हि शरीरातिरिक्तमेवात्मस्वरूपं स्थिरं ज्ञानसुखाद्याश्रयो विवक्ष्यते न शरीरमिति शरीरस्वर्गगमनानुपलम्भप्रत्यक्षेण न तद्वाक्यमपि बाधितम् ।

अत्रात्मनो ज्ञानाश्रयत्वमेव नतु ज्ञानरूपत्वमिति निरासो हि भाष्यकृता यः कृतः स प्रकृताभिप्रायः, न तु वस्तुगत्या । **अतएव** "एक आत्मनः शरीरे भावात्" इत्यत्र शङ्करभगवत्पादैर्यद्यप्यात्मस्वरूपं शबरस्वामिना निरूपितं तथापि न तत्सूत्रारूढं इह तदारूढमित्युक्तम् । तथाच शबरस्वामिनामद्वैतमत एवाग्रहः । क्षणिकविज्ञानात्मत्वमत्र यथा खण्डितं न तथा स्थिरविज्ञानरूपत्वमपि ।

एवं "आदित्यो यूपः" इत्यादीनामपि यूपादिस्तुतावेव तात्पर्यान्न प्रत्यक्षविरुद्धो वेदार्थः कोऽपि विद्यत इति न द्वितीयनिमित्ताधानमपि बाधितार्थविषयत्वम् ।

अनाप्तप्रणीतपौरुषेयत्वे हि शब्दानित्यत्वेनाऽर्थानित्यत्वेन शब्दार्थसंबन्धानित्यत्वेन वाक्यार्थसंबन्धानित्यत्वेन पदसङ्घातात्मकवेदवाक्यपौरुषेयत्वेन च भवति ।

तत्र शब्दानामनित्यत्वं न युक्तम्, उच्चारणादीनाममिव्यक्त्यर्थत्वात् । परस्य जनस्यार्थं प्रत्याययितुं खलु शब्दानां प्रयोगः । नच शब्दानित्यत्वे तदुपपद्यते । यस्य पदस्यार्थेन संबन्धो गृहीतः स चेच्छब्दः पूर्वमेव नष्टः कथमिव प्रथमश्रुतात्पदान्तरात् पदार्थप्रत्ययोऽवकल्प्येत ? अतएव हि सोऽयं गकार इति प्रत्यभिज्ञोपपद्यते । ज्वालैक्यप्रत्यक्षवदियमपि सादृश्यनिबन्धनाभेदावगमेति कल्पनं हि दृढतरेण प्रमाणेन तत्र ज्वालाभेदस्येवात्रापि गकारभेदस्य सिद्धत्वे युज्यते, न चैतदस्ति । अतएवहि अष्टकृत्वो गोशब्दमुच्चारयतीति व्यवहारः नत्वष्ट गोशब्दानुच्चारयतीति । सर्वथाच शब्दस्य नित्यत्वात्तदनित्यत्वेन नानाप्तप्रणीतत्वादिशङ्का ।

यदत्र वैयाकरणानां नित्योऽपि शब्दो न वर्णात्मकः किंतु गोशब्दोच्चारणानन्तरमन्तर्मनसि प्रकाशमानमनवयवं विभु च किमपि स्वरूपं स्फोटपदाभिधेयं तदेव शब्द इति मतम्, इदमपि मतं वर्णात्मकवेदप्रामाण्यविरुद्धमेवेत्यत्र नास्ति विशयलेशोऽपि ।

यद्यपि—"उपायाः शिक्षमाणानां बालानामुपलालनाः । असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥' इति हरिकारिकावचनात्स्फोटात्मकस्य निरवयवस्यापि शब्दस्य कल्पितानवयवानादायैव व्याकरणशास्त्रप्रवृत्त्याऽद्वैतमत इव कल्पितस्यापि शब्दस्य व्यावहारिकप्रामाण्यमुपपद्यते तथापि वेदप्रामाण्यसाधनमेव पुरुषार्थं मन्यमानानां "न कदाचिदनीदृशं जगदि"ति सिद्धान्ताभिमानिनां च मीमांसकानां स्फोटवादो नादरणीयः ।

किंच स्फोटवादे निरवयववाक्यस्फोटस्यैव परमार्थत्वात् पदस्फोटादीनां सावयवानां अनित्यत्वाच्छब्दार्थसंबन्धनित्यत्वादिकं नोपपद्यते ध्वनिविशेषविशिष्टस्फोटस्यैव पदस्फोटत्वात् । एवमवान्तरवाक्यस्फोटस्याप्यनित्यत्वाद्यागादिधर्मपारमार्थिकतापि न सिध्येत् ।

स्फोटपक्षे हि निरवयवं वाक्यं निरवयवस्य वाक्यार्थस्य वाचकं, अवयवास्तु पदात्मका वर्णात्मकाश्च मृषाभूताः । ततश्च पदतदवयवाश्रितोहादेर्महावाक्यावान्तरवाक्यार्थप्रयाजाद्याश्रितप्रसङ्गतन्त्रादेः कार्यस्य मृषात्वं स्यात् । अतस्तत्सत्यतासिद्ध्यर्थं स्फोटनिराकरणं न निष्फलम् । तदुक्तं श्लोकवार्तिके—"कार्याणि वाक्यावयवाश्रितानि सत्यानि कर्तुं कृत एष यत्नः" इति ॥

अतएवाद्वैतिनामपि देवताधिकरणादौ स्फोटवादनिरासः । नहि ब्रह्मव्यतिरिक्तं किमपि सत्यमिति तेषां मतम् । स्फोट एव ब्रह्मेति तु न युक्तम्, तस्याचेतनस्य तत्त्वायोगात् । तस्यैव चैतन्यादिरूपत्वे चाङ्गीक्रियमाणे नाद्वैतमताद्विशेषः । सर्वथाच पारमार्थिकं प्रामाण्यं वेदानां मीमांसकैर्यदभिमतं तदिदं स्फोटवादाङ्गीकारे न सिध्यतीति वर्णात्मक एव शब्दः यो नित्य इति सर्वमुपपन्नम् ॥

एवमर्थोऽपि नित्य एव । यदि नैयायिकमत इव व्यक्तिराकृतिविशिष्टव्यक्तिर्वा अर्थः स्यात् तस्यानित्यत्वमापद्यते । ननु तदस्तीत्याकृत्यधिकरणेन सिद्धमेव ।

तथापि का सा आकृतिः तत्र किं प्रमाणम् ? नह्याकृतौ प्रमाणं विद्यते, यद्यपि गौः गौः इत्येवमनुगताकृतिः प्रत्यक्षा, तथापि तत्प्रत्यक्षं नाऽऽकृतिसाधकं भवितुमर्हति, यथाहि अवयवातिरेकेणावयवी समुदायो न विद्यते एवमपि वनमिति समुदायप्रत्यक्षं विद्यते । नहि प्रत्यक्षं विद्यत इत्येतावता समुदायोऽपि वस्तु संमतं मीमांसकानां, एवंच अविद्यमानार्थविषयं प्रत्यक्षं बहुदृष्टम् । अतो यदि प्रत्यक्षं प्रमाणं वनमपि समुदायोऽङ्गीक्रियताम् । यदि तु न प्रमाणं व्यक्तिरपि नाङ्गीक्रियतामिति बौद्धमतप्रवेशापत्तिरिति सर्वथा आकृतौ प्रमाणाभावान्नार्थो नित्यो भवितुमर्हतीति वनवादेनाशङ्कापि नात्र प्रसरति ।

नहि वयं प्रत्यक्षसिद्धं सर्वमपि वस्तुसदूरीकुर्मः, किंतु सत्प्रत्यक्षसिद्धम् । वनप्रत्यक्षं तु प्रमाणान्तरेण बाधितम् । दूराद्वनमित्यनुभवेऽपि समीपगमने वृक्षाणामेव तत्र प्रतीतेः । नचैवमाकृतौ । यदा व्यक्तेरनुभवस्तदैवाकृतिमप्यनुभवामः । ततश्चाकृतेः प्रामाणिकत्वात्तस्याश्च नित्यत्वादर्थोऽपि नित्य एवेत्यर्थानित्यत्वेनापि नानाप्तप्रणीतत्वादिकम् ।

एतेन—शब्दार्थसंबन्धनित्यत्वमपि व्याख्यातम् ॥ यद्यपि शब्दार्थयोर्न संयोगः तादात्म्यादिकं वा संबन्धः तथापि प्रत्यायकत्वाख्यस्तु संबन्धः संभवत्येव । तथाचार्थप्रत्ययानुकूलशक्तिरेव शब्दस्यार्थेन संबन्धः ।

स च न केनापि पुरुषेण कल्पितः । नहि तादृशं पुरुषं कमपि वयमुपलभामहे नवा स्मरामः । यदि हि पुरुषः कोऽपि संबन्द्धा स्यात् अवश्यं स स्मर्तव्यः । नहि देवदत्तादिनामसंबन्धिनः पुरुषस्य स्मरणं विना अयं देवदत्तशर्मेति निश्चिनुमः । नहि "वृद्धिरादैचू" सूत्रं तत्कर्तारं च पाणिनिं अस्मरन्तः "वृद्धिर्यस्याचामादिः" इत्यादौ वृद्धिशब्दस्यार्थं जानन्ति ।

किंच संबन्द्धा पुरुषो यदि न प्रत्यक्षसिद्धः यदि च न स्मृतः यदि च प्रमाणान्तराणि तत्साधकानि न सन्ति तर्हि कथं स ऊरीकर्तुं योग्यः ?

वृद्धा हि स्वार्थेन मध्यमवृद्धादिभिः सह शब्दैः सह संव्यवहरमाणा अस्माभिर्दृश्यन्ते । तद्व्यवहारं दृष्ट्वाऽस्य पदस्यायमर्थ इति गृह्णन्तीति सत्यामुपपत्तौ नार्थापत्त्यपि संबन्धः पौरुषेय इति भवति कल्पना ।

किंच त्रयो लोकाः त्रयो वेदाः इतिहासपुराणादीनि च बहूनि शब्दप्रयोगस्य विषयाः युगशतेनापि गोचरयितुमशक्या विद्यन्ते । तत्र सर्वत्रापि बहूनां कथं सङ्गमेनैकवाक्यतया सङ्केतकल्पनं संभवति ।

अस्य पदस्यायमर्थ इति सङ्केतोऽपि केनच शब्देन खलु बहुभिः करणीयः । तच्चेदकृतसंबन्धैः पदैः, तर्हि कथं संबन्धकल्पनं संभवति ? यदि कृतसंबन्धैः तर्हि तत्र संबन्धकरणं यद्यन्येन तदा तस्य केन तस्य केनेत्यनवस्थात्राऽसमाधेया समापतति । तदवश्यं के च नित्यसंबन्धाः शब्दा अङ्गीकरणीया इत्यलमर्धजरतीयन्यायाश्रयणेन । तथाच शब्दार्थसंबन्धानित्यत्वेनापि न वेदस्यानाप्तप्रणीतत्वादिकम् ॥

एतेन—वेदपौरुषेयत्वमपि परास्तम्; कर्तुरस्मरणात् । यथाहि लोके प्रमाणान्तरेणार्थमुपलभ्य काव्यानि विरच्यन्ते न तथा वेदो रचयितुं शक्यते । तदुक्तं—"धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्" इति ॥ तन्त्रवार्तिकेऽप्युक्तम्—

"प्रपाठकचतुष्षष्टिनियतस्वरकैः पदैः । लोकेष्वप्यश्रुतप्रायैः ऋग्वेदं कः करिष्यति" इति ॥

अत्र च वाक्यार्थस्य पदार्थेभ्य एव प्रतीतिर्नतु पदसङ्घातात्मकवाक्येनेति न वाक्यार्थानित्यत्वेनापि वेदस्याप्रामाण्यमिति सर्वथा प्रमाणान्तराविषयत्वादबाधितार्थविषयत्वात्कारणदोषाभावाच्च न वेदस्याप्रामाण्यमिति वेदः प्रमाणमेवेति द्वितीयनियमोऽप्युपपन्न एव ।

यदत्र भाष्यकारैः स्फोटवादनिरासादिकं बहूपक्षिप्तं तत्सर्वमपि सूत्रारूढमेव । "सूचनात्सूत्रमुच्यते" इति कथंचित्सूत्रकारेण सूचितानां सर्वेषामपि भाष्यकारैर्लेखनीयत्वात् । यथा—"अथातो ब्रह्मजिज्ञासा" इति ब्रह्मविचारे प्रतिज्ञातेऽप्यात्मान्तःकरणयोः परस्पराध्यासस्य ब्रह्मशब्दमहिम्ना सूचितस्य व्यवस्थापनेनाध्यासभाष्यं शङ्करभगवत्पादानाम् ।

एवंच या शङ्करभगवत्पादैः शरीरात्मत्वनिरासः शबरस्वामिनां न सूत्रारूढ इत्युक्तिः सा स्पष्टं तादृशसूत्राभावात्कथंचिदुपपद्यत एव। "एक आत्मनः शरीरेऽभावात्" इति सूत्रं तु शरीरातिरिक्तत्वादिना नित्यशुद्धबुद्धमुक्तासङ्गस्वरूपनिरूपणार्थमपेक्षितमेव ।

वस्तुतस्तु—क्षणिकविज्ञानादिरूपत्वनिरासेन शबरस्वामिना स्थिरविज्ञानात्मत्वमुपपन्नमिति यत्सूचितं न तत्सूत्रारूढम् । देहातिरिक्तविज्ञानाश्रयात्मस्वरूपेणापि कर्मानुष्ठानादिसिद्ध्या यैज्ञायुधिवाक्यस्य प्रत्यक्षाबाधितत्वसिद्ध्या च तावत्पर्यन्तं सूत्रतात्पर्यकल्पनस्यायोगात् । उपनिषदर्थवादत्वोक्तिरपि तादृशात्मस्वरूपाभिप्रायेणैव । तादृशमेवात्मस्वरूपं जैमिनेरभिमतमिति उत्तरमीमांसागतेन "शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः" इति सूत्रेण सिद्ध्यति । अतएवोक्तं श्लोकवार्तिके—

"इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन ॥" इति ॥

सर्वथा च मीमांसाशास्त्रमिदं वेदार्थविचाररूपं देहातिरिक्तात्मस्वरूपवेदप्रामाण्यादिकमेवोपजीव्य वरीवर्तीत्यास्तिकदर्शनतामेवार्हति ।

यत्तु—नवमाध्यायादौ शब्ददेवतात्वसमर्थनं देवताविग्रहनिरासादिकं च तदपि वैदिकेषु शब्देषु श्रद्धातिशयं प्रकाशयितुमेव, नतु देवताविग्रहं निरसितुम् । "वज्रहस्तः पुरन्दरः" इत्याद्यर्थवादानां स्तावकत्वेनोपक्षयान्न देवताविग्रहादौ तात्पर्यमिति खलूक्तं तत्र; अर्थवादस्य प्रमाणान्तराविरोधे प्रतीयमानार्थेऽपि प्रामाण्यं विद्यत इति प्रथमाध्यायप्रथमपादगतनित्यत्वाधिकरणे "लिङ्गदर्शनाच्च" इति सूत्रे भाष्यकारैर्निरूपितम् । इयं हि तदीया वचनव्यक्तिः "लिङ्गं चैवं भवति "वाचा विरूपनित्यया" इति । अन्यपरं हीदं वाक्यं वाचो नित्यतामनुवदति । तस्मान्नित्यः शब्दः" इति ॥

अत्र च पूर्वमीमांसायां बादरायणस्य उत्तरमीमांसायां जैमिनेश्च कीर्तनात् वस्तुगत्योभयोरप्यविरोध एव । आपाततस्त्वधिकारिभेदमनुसृत्य केचन विरोधाः प्रतीता अपि न ते गणनीयाः । सङ्कर्षकाण्डेन च देवताविग्रहादिस्वीकारात्सूचित एव वस्तुगत्याऽविरोधो जैमिनिनापि । एवमपि पूर्वोत्तरमीमांसयोर्विषयभेदात्स्वरूपतो भेद एव ।

वार्तिककारास्तु यत् अर्थवादाधिकरणे "एतेन उपनिषदो व्याख्याताः" इत्युपनिषदां जीवादिस्तावकतयोपयोगमभिप्रयन्ति न तदपि वस्तुगत्या । अतएव श्लोकवार्तिके—

"दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन"

इत्युक्तम् । वार्तिककाराणां यः सिद्धान्तः प्रौढिमात्रनिबन्धनः सर्वेषामपि नास्तिकानां आस्तिकानां च दर्शनानां धर्मे पर्यवसानमिति तदभिप्राय एवायमुपनिषदर्थवादत्ववाद इति "चोदनालक्षणोऽर्थो धर्मः" इति सुष्ठु सूत्रयामास ।

स च धर्मः साधनेतिकर्तव्यतान्यतररूपः। तत्र साधनसमर्पकत्वेन यजिधातुः अङ्गवाक्यानीतिकर्तव्यतासमर्पकत्वेन धर्मप्रमाणानि। स्वर्गकामपदं तु यद्यपि न धर्मबोधकम्; फलस्य धर्मत्वाभावात्, अनुष्ठेयस्योपादेयस्यैव धर्मत्वात्, तथाच या यागकरणिकक्रतिस्तस्याः फलसंबन्धं विना तदनुष्ठानासंभवात्तत्संपादकतया धर्मे प्रमाणं भवति।

एवंच प्रथमाध्यायप्रथमपादेन सामान्यतः शब्दनित्यत्ववेदापौरुषेयत्वनिरूपणेऽपि विधिवाक्यमात्रप्रामाण्यमेव दृढं निरूपितं भवति। अतएवास्य विधिपाद इति नाम।

"चोदनालक्षणोऽर्थो धर्मः" इति चोदनापदप्रयोग एतदर्थमपि। दृश्यते हि प्रतिपादमादौ सूत्रे सामान्यतः स्वविषयसूचनमपि। यथा द्वितीयपादे **अतदर्थानाम्**। तृतीयपादे **अशब्दम्**। चतुर्थपादे अपि वा **नामधेयम्**। इति॥

तत्सिद्धं—चोदनालक्षणोऽर्थो धर्मः तत्र वेद एव प्रमाणम्, वेदः प्रमाणमेव, तदर्थश्च विचारेणैव भवति, विचारश्चार्यं गुरुकुल एव कर्तव्यः,। तत्संपादितमेवार्थज्ञानं क्रतुफलं साधयति न भाषान्तरादिसंपादितं भारताद्यर्थज्ञानवदिति सर्वमनवद्यमिति।

तानि च विधिवाक्यानि षड्विधानि विद्यन्ते, यथा (१) "अग्निहोत्रं जुहोति" (२) "अग्निहोत्रं जुहुयात्स्वर्गकामः" (३)"दध्ना जुहोति"(४) दध्नेन्द्रियकामस्य जुहुयात्" (५)"सोमेन यजेत" (६) "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" इति॥

तत्र प्रथमविधावग्निहोत्राभिन्नहोमकरणिका भावनेति बोधः। सर्वत्र विधौ भावनायामाख्यातार्थे असति बाधके धात्वर्थस्यैव करणत्वेनान्वयः। अयं च नियमः सर्वथा प्रथमविधौ परिपाल्यते। अग्निहोत्रमिति द्वितीयाविभक्तिस्तु करणत्वमेव बोधयति लक्षणया।

द्वितीयविधौ त्वग्निहोत्राभिन्नहोमकरणिका स्वर्गभाव्यका भावनेति बोधः। अत्रापि यद्यपि भावनायां धात्वर्थस्य करणत्वम्। एवमपि धात्वर्थकरणत्ववद्भावनायां फलविशेषसंबन्धोऽप्यधिको विद्यत इति प्रथमविध्यपेक्षया द्वितीयविधिर्गुरुः।

तृतीयविधौ तु दधिकरणिका होमभाव्यका भावनेति बोधः। अत्र तु दध्नः करणत्वेनान्वयात्, धात्वर्थस्य च भाव्यत्वेनान्वयात्, पूर्वोक्तनियमस्य सङ्कोचः क्रियत इति विधिद्वयापेक्षया गुरुभूतस्तृतीयविधिः।

चतुर्थविधौ दधिकरणिका होमाश्रिता इन्द्रियभाव्यका भावनेति बोधः। अत्र तु दध्नः करणत्वेऽन्वयः भावनायाः फलसंबन्धश्चाधिक इति विधित्रयापेक्षया गौरवम्।

पञ्चमविधौ सोमविशिष्टधात्वर्थकरणिका भावना इति बोधात्तत्र च विशिष्टस्य करणत्वेनान्वयात् विधिचतुष्टयापेक्षया गौरवग्रस्तोऽयं विधिः।

षष्ठविधौ तु सौर्यचरुविशिष्टयागकरणिका ब्रह्मवर्चसभाव्यका भावनेति बोध इति फलसंबन्धोऽप्यधिक इति सर्वापेक्षया दुर्बलोऽयं विधिः।

तत्र सति संभवे प्रथमविधिरेवाश्रयणीय इत्यत्र तत्प्रख्याधिकरणं गमकम्। तत्र हि "अग्निहोत्रं जुहोति" इत्यत्राग्निहोत्रपदस्य अग्नये होत्रमिति व्युत्पत्त्या अग्न्युद्देश्यकहोमविधानमाशङ्क्य अग्निदेवतायाः प्रमाणान्तरप्राप्तत्वादग्निहोत्रपदं कर्मनामधेयमिति निरूपितम्। तथाच प्रथमविध्याश्रयणं नामधेयपक्षे, देवताविधानपक्षे तु पञ्चमविधिः "सोमेन यजेत" इतिवदिति नामधेयपक्षे लाघवं सिद्धमेव।

एवं द्वितीयविधौ चतुर्थविधौ षष्ठविधौ चैकस्मिन्वाक्ये प्रसक्ते द्वितीयविधिरेवाङ्गीकरणीय इत्यत्र उद्भिदधिकरणं गमकम्। तत्राधिकरणे उद्भित्पदस्य उद्भिद्यतेऽनेन भूमिरिति व्युत्पत्त्या खनित्रद्रव्यपरत्वमङ्गीकृत्य "दध्नेन्द्रियकामस्य जुहुयात्" इतिवत्, "सौर्यं चरुं निर्वपेत्" इतिवद्वा, चतुर्थविधित्वं षष्ठविधित्वं वा पूर्वपक्षय्योद्भित्पदस्य नामधेयत्वेनान्वयाद्द्वितीयविधिरेव स्वीकृतः उद्भिन्नाम्ना यागेन पशुं कुर्यादिति।

तत्र पञ्चमप्रथमविध्योः प्रसक्तयोः प्रथमविधिस्तत्रैव युक्तः यत्रोपपदार्थस्य द्रव्यस्य देवताया वा प्रमाणान्तरेण प्राप्तिः यथा "अग्निहोत्रं जुहोति" इत्यत्र। तथाच "सोमेन यजेत" इत्यत्रापि सोमशब्दस्य नामधेयत्वे प्रथमविधिः सोमस्य सोमलतापरत्वे पञ्चमविधिरिति स्थितेऽपि पञ्चमविधिरेव स्वीकृतो न प्रथमविधिः, सोमलतायाः प्रकृतयागे प्रमाणान्तरेण प्राप्त्यभावात्।

एवं द्वितीयचतुर्थविध्योरपि तत्रैव द्वितीयविध्याश्रयणम्, यत्रोपपदं यौगिकम्। यथा "उद्भिदा यजेत पशुकामः" इत्यत्र। तत्र ह्युद्भित्पदं पूर्वपक्षसिद्धान्तयोरुभयोरपि यौगिकमेव। एवंच "दध्नेन्द्रियकामस्य जुहुयात्" इति वाक्ये उपपदस्य दधिपदस्य यौगिकत्वाभावाच्चतुर्थविधिरेव स्वीक्रियते न द्वितीयविधिः।

"श्येनेनाभिचरन् यजेत" इत्यत्र तु श्येनपदस्य रूढत्वेऽपि द्वितीयविधिरेव यदाश्रीयते तत्र तु तस्य वाक्यस्यानन्तरवाक्ये "यथा वै श्येनो निपत्यादत्ते एवमयं भ्रातृव्यं निपत्यादत्ते" इति श्येनस्यैवोपमानोपमेयभावानुपपत्त्या श्येनशब्दस्य नामधेयत्वाङ्गीकारस्यैव युक्तत्वात्।

तदयं निष्कर्षः—उपपदार्थस्य नामत्वेनान्वये धात्वर्थस्य प्रमाणान्तरेणाप्राप्तौ फलपदाभावे प्रथमविधिः, तत्सत्त्वे तु द्वितीयविधिः ।

उपपदार्थस्य द्रव्यत्वेन देवतात्वेन वाऽन्वये धात्वर्थस्य प्रमाणान्तरेण प्राप्तौ फलपदाभावे तृतीयविधिः फलपदसत्त्वे चतुर्थविधिः।

उपपदार्थस्य द्रव्यत्वेनान्वये धात्वर्थस्य प्रमाणान्तरेणाप्राप्तौ फलपदाभावे पञ्चमविधिः फलपदसत्त्वे तु षष्ठविधिरिति ।

तथाच धात्वर्थस्य प्रमाणान्तरेण पूर्वतनवाक्येन प्राप्तौ कर्मत्वेनान्वयः यथा "दध्ना जुहोति" इत्यत्र । तद्धि वाक्यं "अग्निहोत्रं जुहोति" इति पूर्वतनवाक्यप्राप्तहोमोद्देशेनैव दधिरूपद्रव्यविधायकम् ।

प्रमाणान्तराभावे तूपपदार्थस्य नामधेयत्वे अग्निहोत्राऽभिन्नयागकरणिका भावनेति बोधः । उपपदार्थस्य द्रव्यपरत्वे त्वेकस्य-भावनायां धात्वर्थस्य सोमस्य चोभयोः करणत्वेनान्वयो न युक्त इति प्रतिपदाधिकरणे निरूपितमिति उपपदे मत्वर्थलक्षणा-मङ्गीकृत्य सोमविशिष्टयागकरणिका भावनेति बोध इति विशेषः ।

प्रतिपदाधिकरणे यत्रोपपदार्थो धात्वर्थश्च प्रमाणान्तरेणाप्राप्तौ तत्र प्रतिपदं भावनायां करणमेव समर्प्यते । तथाच "सोमेन यजेत" इत्यादिषु सोमोऽपि स्वर्गसाधनं यागोऽपि स्वर्गसाधनं इति पूर्वपक्षे एकस्य फलस्यैकमेव मुख्यं साधनमङ्गीकरणीयम्, इतरत्तु यत्फलसाधनं तस्यैवोपकारकमिति निरूपितम् ।

तथाच धात्वर्थस्य फलभावनायां करणत्वे सोमस्य यागसाधनत्वेनैवाऽन्वयो युक्तः । तथाच सोमेन यागं यागेन फलं कुर्यादिति वाक्यार्थे "सोमेन यजेत" इत्यत्र वर्ण्यमाने आख्यातद्वयमपेक्षितं भवतीति सोमशब्दस्य सोमविशिष्टोऽर्थः । तथाच सोमविशिष्टयागकरणिकेत्यादिबोधस्वीकार आवश्यक एव । "दध्ना जुहोति" इति तृतीयविधौ तु न मत्वर्थलक्षणाऽपेक्षिता । धात्वर्थस्य प्राप्तत्वेन दधिमात्रस्य करणत्वेनान्वयेन धात्वर्थस्य भाव्यत्वेनैवान्वयेन दध्ना होमं कुर्यादिति विनैवाख्यातद्वयं वाक्यार्थवर्णनसंभवात् ।

"सोमेन यजेत" इत्यत्र तु न तृतीयविधिः संभवति; धात्वर्थस्य यागस्य पूर्वतनेन केनापि वाक्यान्तरेणाविधानात् । यद्यपि "सोमेन यजेत" इत्यत्र फलवाचकं पदं नास्ति; तथापि भावनास्वाभाव्यात्सामान्यरूपेण फलस्यापि तत्र बोधोऽपेक्षित एव ।

भावना हि नियमेन अंशत्रयविशिष्टा । तच्चांशत्रयं साध्यं साधनं इतिकर्तव्यता च । तत्र केषुचन वाक्येषु सामान्यतः यत्किंचिद्भाव्यकेति फलादेरन्वयः यत्र फलवाचकपदाभावः, क्वचित्तु स्वर्गभाव्यकेति फलादेर्विशेषरूपेणान्वय इति परं विशेषः । सर्वथा च विधिः षड्विध इत्युपपन्नमेव ।

एतेषु षड्विधेषु विधिषु केचनोत्पत्तिविधयः केचनाधिकारविधयः सर्वेच प्रायेण विनियोगविधय इति विशेषोऽत्राऽनुसंधेयः।

येषु वाक्येषु न फलसंबन्धस्तेषामुत्पत्तिविधित्वम् । यथा—"अग्निहोत्रं जुहोति" "सोमेन यजेत" इत्यादीनाम् ।

येषु तु फलसंबन्धस्तेऽधिकारिविधयः । यथा—"अग्निहोत्रं जुहुयात्स्वर्गकामः" "दध्नेन्द्रियकामस्य जुहुयात्" "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" इत्यादयः ।

उत्पत्तिर्नाम साधनस्वरूपं, तद्बोधको विधिरुत्पत्तिविधिः । अधिकारः फलसंबन्धः, तद्बोधको विधिरधिकारविधिः ।

अत्र यदुद्देशेन यद्विधीयते तस्य तत्साधनम्, यथा स्वर्गस्य यागः, होमस्य दधि । अत्रोद्देश्यं फलं, विधेयं साधनं, इत्युत्सर्गः । तथाच उद्देश्यविधेयभावग्रहणेन विधिविवेकः संपादनीयः ।

तत्र धात्वर्थोत्पत्तिवाक्ये उद्देश्यवाचकपदाभावान्नोद्देश्यविधेयभावस्य स्पष्टं प्रतीतिरिति न तस्य विनियोगविधित्वम् । "दध्ना जुहोति" "दध्नेन्द्रियकामस्य जुहुयात्" "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादीनां तु विनियोगविधित्वमविवादमेव ।

**विनियोगो नाम** अङ्गाङ्गिभावः । अङ्गि उद्देश्यं, अङ्गं विधेयम् । तत्र चोद्देश्यता द्वितीयाविभक्त्या विधेयत्वं तृतीयादिश्रुत्येति विषयः सविस्तरं तृतीयाध्याये निरूपयिष्यते ।

यत्तु—अङ्गवाक्यानि प्रधानवाक्यं चैकीकृत्यैतत् कर्म कृत्वैतत् तत्कर्म कृत्वैतदिति प्रयाजादिभिरुपकृत्याङ्गान्तरमपि कृत्वा दर्शपूर्णमासाभ्यां यजेत इत्यङ्गप्रधानैकवाक्यतया महावाक्यं कल्प्यते तदेव प्रयोगविधिशब्देन व्यपदिश्यते । अयमपि सविस्तरं पञ्चमाध्याये विचारित एव पूर्वमीमांसायाम् ।

सर्वेषामपि विधीनां सामान्यलक्षणं त्वप्राप्तार्थविषयत्वम् । प्रमाणान्तरानधिगतार्थविषयत्वमिति यावत् । यो विधिः यत्प्रमाणान्तरानधिगतं विषयीकरोति तत्रविषये तस्य विधित्वम्, यथा "अग्निहोत्रं जुहोति" इत्यत्र होमस्वरूपे "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यत्र अग्निहोत्रस्य स्वर्गसाधनत्वे "दध्ना जुहोति" इत्यत्र दधिकरणत्वे । एवमन्यत्राप्यूह्यम् ॥

सोऽयं विधिस्त्रिविधः—अपूर्वविधिः, नियमविधिः, परिसङ्ख्याविधिश्चेति ॥ "विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति । तत्र चाऽन्यत्र च प्राप्तौ परिसङ्ख्येति कथ्यते ॥" इति प्राचीनानामपूर्वविध्यादिलक्षणम् ।

तत्रापूर्वविधावप्राप्तार्थविषयकत्वं विशदमेव वर्तते। नियमविधावपि पक्षे अप्राप्तस्यैव विधानाद्विधिसामान्यलक्षणमनपेतमेव। परिसङ्ख्याविधावप्यप्राप्ताया एवेतरव्यावृत्तेस्तात्पर्यविषयत्वात् लक्षणं सङ्गच्छत एव।

तत्रापूर्वविधेरुदाहरणम्—"अग्निहोत्रं जुहोति" "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादिकम्। नियमविधेस्तु "दध्ना जुहोति" इत्यादिकमुदाहरणम्।

होमस्तदाक्षिप्तयागो वा द्रव्यं विना न भवतीत्यर्थापत्तिप्रमाणेनैव कस्यापि द्रव्यस्य सिद्धत्वात् "दध्ना जुहोति" इति दधिविधिः, उक्तविधयाऽर्थापत्तिप्रमाणेन द्रव्यान्तरस्य प्राप्तिव्यावर्तनद्वारा द्रव्यान्तरप्राप्तिकाले पक्षाप्राप्तदधिविधित्वान्नियमविधिरिति युक्तमेव। सर्वे द्रव्यविधयो नियमविधय इति सिद्धान्तस्याप्ययमेवाशयः।

"व्रीहीनवहन्ति" इत्युदाहरणान्तरमपि प्रसिद्धमेव। तत्रावघातो वैतुष्यार्थं विधीयते। अवघातेन हि वैतुष्यं भवतीति लोकत एवावगतम्। तथापि लोकतो नखविदलनादिसाधनान्तरस्यापि प्राप्त्या तद्व्यावर्तनेन पक्षाप्राप्तावघातनियमनान्नियमविधित्वमुपपद्यते।

नियमविधिस्थले सर्वत्र साधनान्तराननुष्ठानेन विहितस्यैवानुष्ठानात्किमप्यपूर्वमुत्पद्यते, तदेव नियमापूर्वमिति कथ्यते। नियमापूर्वस्य च यदि नियम्यमानमवघातादिकं क्रत्वङ्गं यदि वा क्रतूपकारकं तर्हि क्रतुफलजनन एवोपयोगः। यथा अवघातदध्यादेरर्थज्ञानस्य च नियमापूर्वं। यदि नियम्यमानस्य स्वतन्त्रफलार्थत्वं तर्हि नियमापूर्वस्यापि स्वयोग्यं स्वतन्त्रफलान्तरमेव। यथा "प्राङ्मुखोऽन्नानि भुञ्जीत" इत्यादौ प्राग्देशकालादिनियमानाम्।

परिसङ्ख्याविधेरुदाहरणं "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यादिकम्। तत्र हि इमामगृभ्णन्निति मन्त्रेणाश्वरशनाग्रहणं कर्तव्यमिति बोध्यते। अयं च मन्त्रो विनाऽपीमं विधिं स्वसामर्थ्येन रशनाग्रहणार्थमेव भविष्यति। मन्त्राणां प्रयोगसमवेतार्थप्रकाशनेनैव साफल्यम्। अनेन च रशनाग्रहणं प्रकाश्यत इति स्पष्टमेव सर्वेषाम्। तथाच किमर्थमयं विधिरिति शङ्कायां मन्त्रसामर्थ्यमात्रेण मन्त्रविनियोगे ह्यत्राश्रीयमाणेऽश्वरशनाग्रहण इव गर्दभरशनाग्रहणेऽप्ययं मन्त्रः प्राप्नुयात्। यस्मिन्कर्मण्ययं मन्त्रो विद्यते तस्मिन्कर्मणि गर्दभरशनाग्रहणं अश्वरशनाग्रहणमुभयमपि विद्यते। अतोऽश्वरशनाग्रहणे गर्दभरशनाग्रहणे चोभयत्र प्राप्तस्य गर्दभरशनाग्रहणतो व्यावृत्तिपूर्वकमस्य विधेरश्वरशनाग्रहणमनेन मन्त्रेण कर्तव्यमित्यस्मिन्नर्थे प्रवृत्तत्वात्परिसङ्ख्याविधिरयमिति युक्तमेव।

ननु नियमपरिसङ्ख्याविध्योः को विशेषः, यदुभयत्रापीतरनिवृत्तिरेव गम्यते। यथा "दध्ना जुहोति" इत्यत्र दध्नैव जुहोति नान्येनेति "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यत्राप्यश्वरशनाग्रहणमेवानेन मन्त्रेण कर्तव्यं न गर्दभरशनाग्रहणमपीति चेत्।

अत्रेदं समाधानम्। विकल्पेन प्राप्तानां मध्ये इतरव्यावृत्तिर्यत्र स्थले भवति तत्र नियमविधिः, समुच्चयेन प्राप्तानां मध्ये इतरव्यावृत्तिर्यत्र भवति तत्र परिसङ्ख्याविधिरिति तयोर्विषयविवेक इति केचित्। इदं तु "नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ" इति लक्षणवाक्येन स्पष्टमेव प्रतिभाति।

इतरे तु नियमविधावितरव्यावृत्तिरार्थिकी, परिसङ्ख्याविधौ तु शाब्दीति वर्णयन्ति।

एतेषां मते इमामगृभ्णन्निति विधिवाक्यस्य इमामगृभ्णन्निति मन्त्रेण गर्दभरशनाग्रहणं न कर्तव्यमित्यर्थः। एवं "पञ्च पञ्चनखा भक्ष्याः" इत्यत्रापि पञ्चेतरपञ्चनखा अभक्ष्या इति वाक्यार्थोऽनुसंधेयः।

यत्तु अत्रापूर्वविध्यादीनां लक्षणस्य दुष्टत्वादुष्टत्वादिविचारलक्षणान्तरादिस्वीकरणतन्निरासादिकं विधिरसायनभाट्टदीपिकादिगतं विस्तरभयान्न तदत्रोपक्षिप्यते।

सर्वथा विधिसामान्यलक्षणं विधित्रयसाधारणम्। विधित्रयमपि प्रागुक्तप्रकारेण षड्विधमित्यादिकमुपपन्नमेवेति मन्तव्यम्।

स पुनरपि द्विविधः। उपदेशरूपोऽतिदेशरूपश्चेति। तत्र पूर्वमीमांसायां प्रथमषट्केनोपदेशविधेर्विचारः उत्तरषट्केनातिदेशविधेरिति विशेषस्तत्र तत्र निरूपयिष्यते।

तत्र प्रथमाध्यायेन सार्थवादस्य समन्त्रकस्य च विधिवाक्यस्यैव प्रामाण्यं विचार्यते। तत्र विधिमन्त्रयोः फलपदादिवद्विधिप्रामाण्य एवान्तर्भावादर्थवादप्रामाण्यादिविचारो द्वितीयपादे स्मृतिप्रामाण्यवादस्तृतीयपादे नामधेयप्रामाण्यवादश्चतुर्थे इति विभागो न युक्त इति प्राभाकरा मन्यन्ते।

भाट्टास्त्वर्थवादानामपि स्वतःप्रामाण्यमिति वदन्ति। तेषामयमाशयः—विधिर्नाम प्रेरणा शब्दभावनेति च पूर्वमेव निरूपितम्। एवंच भावनात्वसामान्यात् साप्यार्थभावनावदंशत्रयमपेक्षते। तत्र शाब्दीभावनाया भाव्यमार्थभावना, करणं लिङादिज्ञानम्। विहितस्य प्राशस्त्यज्ञानमितिकर्तव्यता।

अयं भावः—लिङ्घटितवाक्यश्रवणानन्तरं धात्वर्थे केचन प्रवर्तन्ते केचिन्न प्रवर्तन्त इत्यनुभवसिद्धम्। तत्र किं निमित्तमितिचेदिष्टसाधनत्वज्ञानं तदभावश्च कारणमिति केचिद्वदन्ति। नैतद्युक्तम्; "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति वाक्य-

श्रवणानन्तरं सत्यपि यागे इष्टसाधनमिति ज्ञाने प्रवृत्त्यदर्शनात्, नित्यकर्मस्वफलेष्विष्टसाधनत्वज्ञानाभावेऽपि प्रवृत्तिदर्शनाच्च। फलेच्छां विना क्रियमाणानामेव नित्यकर्मत्वात्। अतो बलवदनिष्टाननुबन्धित्वयोग्यत्वज्ञानतदभावावेव तन्निमित्तम्। व्यक्तं चैतद् भाट्टरहस्यादाविति खण्डदेवानुयायिनः।

परे तु—विधिना व्यापारसामान्यबोधेऽपि व्यापारविशेषाज्ञानान्न विधिवाक्यश्रवणानन्तरमेव प्रवृत्तिरिति मन्यन्ते। तदत्र मतद्वये यन्निमित्तमुपपादितं तदेवेतिकर्तव्यतात्वेन शाब्दभावनायामन्वेति।

तत्र प्रथमदले यद्बलवदनिष्टाननुबन्धित्वयोग्यत्वमुक्तं तदेव प्राशस्त्यं नाम। तच्च प्राशस्त्यं यद्यपि न विधिवाक्ये केनापि पदेन गम्यते तथापि विधेः प्रवर्तकत्वं अन्यथा न संभवतीति लक्षणया प्राशस्त्यमपि विधेरर्थं इत्यङ्गीक्रियते।

यथा लोके—अत्युदारचरितस्य परमकारुणिकस्य निखिलोपकारार्थमात्मानमपि विनियुञ्जानस्य प्रत्युपकारानपेक्षिणः परमधार्मिकस्य आप्तकामस्य च पुरुषस्य "इदं कर्म कुरु" इति वाक्यं श्रुत्वा विनापि तत्र कर्मणः स्पष्टं प्राशस्त्यबोधकपदान्तरमिदं कर्म मम प्रशस्तमिति बुद्धिर्जायते, तत्र तदीयविधिशब्दस्यैव लक्षणया सोऽप्यर्थ इति कल्प्यते तद्वत् "श्रुतिस्मृती ममैवाज्ञे" इत्युक्तरीत्या सत्यकामसत्यसङ्कल्पत्वादिनित्यनिरशयनिखिलगुणगणरत्नाकरस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य भक्तवत्सलस्य धर्मैकवशंवदस्य भगवत आज्ञारूपवेदवाक्यश्रवणानन्तरमपि विनैव प्राशस्त्यबोधकपदान्तरं यागादिप्राशस्त्यबुद्धिर्भवत्येवेति लक्षणया विधेरेव सोऽप्यर्थ इत्यङ्गीकारे न कोऽपि दोषः।

अत्रैवमाशङ्का भवति—विधिरेव प्राशस्त्यमपि यदि लक्षणया गमयति, तर्हि "वायव्यꣳ श्वेतमालभेत भूतिकामः" इति विधिवाक्यानन्तरं "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इत्यर्थवादो विफलः संपद्येत। अयं ह्यर्थवादः—वायुदेवताकत्वेन वायव्ययागः प्रशस्त इति प्राशस्त्यलक्षणार्थ इति हि मीमांसकानामुद्घोषः। तथाच यद्यर्थवादः प्राशस्त्यलक्षकस्तर्हि विधेरेव प्राशस्त्यार्थत्वं न युक्तं, यदि विधेरेव प्राशस्त्यार्थत्वं तर्ह्यर्थवादस्य प्राशस्त्यलक्षकत्वं नोपपद्यत इति।

तत्रेदं समाधानम्—कुत्रचिद्विधिः प्राशस्त्यं लक्षयति यत्र विध्यनन्तरमर्थवादस्य नाम्नानम्। कुत्रचित्त्वर्थवादः, यत्र स आम्नायते इति विवेकेन हि सर्वमिदमुपपद्यते।

मीमांसाकौस्तुभकारास्तु—अर्थवाद एव प्राशस्त्यं लक्षयति सर्वत्र न कुत्रापि विधिः। निरर्थवादविधिस्थलेऽप्यतिदेशात्प्राकृतस्यार्थवादस्योपस्थित्या प्राशस्त्यबोधोपपत्तिरिति—निरूपयन्ति।

अयमाशयः—"इदमौषधं स्वीकुरु आरोग्यकाम!" इति भिषग्वाक्यश्रवणमात्रेण हि रोगिणो नौषधं सेवितुं तात्कालिकारुचिपथ्यस्वीकारादिक्लेशादिकमनुसंदधाना उत्सहन्ते। इदमौषधमन्यादृशम् एतदौषधस्वीकारेणैव राजापि वर्षचतुष्टयमनेन रोगेण पीड्यमानो भिषगन्तरैरौषधान्तरैश्च बहुचिकित्सनेनापि पूर्वमारोग्यमविन्दन् दिनचतुष्टयेन दृढकायो योजनचारी यथाकालभोजी यथानियमं सर्वराज्यकार्यादिनिर्वाहकुशलोऽरोगश्च संवृत्त इत्यादिस्तुतिवाक्यश्रवणसमनन्तरं त्वत्युत्कटेनोत्साहेन मात्रयाप्यरुच्यादितात्कालिकक्लेशजातमविगणय्य तदौषधं शिरसा समाद्रियन्ते रोगिण इति प्रसिद्धमिदं सर्वेषाम्।

तदनेनावगम्यते न विधिवाक्यमात्रेण स्वारसिकी दृष्टफलेष्वपि कर्मसु प्रवृत्तिरन्तरा प्ररोचनावाक्यान्तरमुपजायत इति। तथाच दृष्टफलेष्वेव प्रवृत्त्यर्थं पृथक्प्ररोचनावाक्यान्तरं यद्यपेक्षितं भवति तदा कैव कथा अदृष्टफलेषु यागादिषु प्रवृत्त्यर्थं विशेषतः प्ररोचनावाक्यान्तरमपेक्षितं भवतीति। तच्च प्ररोचनावाक्यं प्रत्यक्षमाम्नातमातिदेशिकं वेत्यन्यदेतत्।

वस्तुतस्तु—कुत्रचित्केवलविधिरिव कुत्रचित्केवलार्थवादोऽपि वर्तते। तत्र केवलार्थवादस्थलेऽर्थवादः कस्य कर्मणः प्राशस्त्यं लक्षयेत्? विहितस्य खलु प्राशस्त्यमर्थवादेन बोधनीयं, नच विधिर्विद्यत इति शङ्कायामिदमेव समाधानम् केषांचन वृत्तिकारादीनां यदर्थवाद एव विधिरपि भवतीति। इदं तु मतं न सङ्गतम्; वार्तिककारैरर्थवादेन विध्यन्तरकल्पनस्यैव तत्राङ्गीकारात्। तथाच तेन न्यायेन निरर्थवादविधिस्थलेऽपि कल्पितार्थवादान्तरैरेव स्तुतिरुपपद्यत इति विधेरेव व्यापारद्वयाङ्गीकरणं नावश्यकम्। यत्तु भामत्यां दर्विहोमन्यायेन विधिरेव प्राशस्त्यस्यापि बोधक इत्युक्तम्, तत्प्राचीनमतानुसारीति न दोषः। सर्वथा च विधिः पुरुषं यागादिषु प्रवर्तयितुं कर्मणः प्राशस्त्यमन्यतो बोध्यमानमपेक्षत इति तदपेक्षितप्राशस्त्यबोधनद्वारा विधिवाक्यैकवाक्यतां भजदर्थवादवाक्यमपि धर्मे प्रमाणमेव।

यद्यपि राजाज्ञासदृशो विधिर्विहितस्य प्राशस्त्यमपेक्षत इति न युक्तम्। नहि राजाज्ञायां लोके तत्कुत्राप्यपेक्षितं दृष्टविषयेऽपि; तथापि द्विविधा राजाज्ञा प्रजाहितार्था एका, अन्या क्षितिरक्षार्था च। तत्र द्वितीयायां प्राशस्त्यापेक्षाभावेऽपि प्रथमायां तदपेक्षाऽस्त्येव।

परमात्मा हि भगवान् प्राणिनां कर्मानुसारेणैव प्राणिनं सुखिनं दुःखिनं संपादयितुमीष्टे, नहि भगवतोऽत्र स्वातन्त्र्यं किमपि विद्यते। अत एव हि भगवतो विषमत्वं निर्घृणत्वं वा न भवति। तदुक्तं बादरायणेन—"वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शनम्" इति। एवंच लोकहितार्थं शास्त्रस्य स्वाज्ञारूपस्य भगवता प्रवर्तितत्वादपेक्षत एव वैदिको विधिः पुरुषं

प्रवर्तयितुं परकृतां विहितप्ररोचनाम्। तद्यदि वैदिकेनाप्यर्थवादेन प्रवृत्तिसहा प्ररोचना न जायते तर्हि पुराणेतिहासादिभिः सा संपादनीया।

स्यादेतत् यदि कश्चिद्विधिश्रवणानन्तरमेव प्रवर्तते तद्विषयेऽर्थवादजन्यप्ररोचनया किं फलम्? एवं पुराणेतिहासादिजनित-प्ररोचनाधीनैव यस्य यागादिकर्मसु प्रवृत्तिस्तस्यापि तया किं फलं भवति? नह्युभयत्राप्यर्थवादस्योपयोगो विद्यत इति चेत्,

अत्रेदं वक्तव्यम्; "स्वाध्यायोऽध्येतव्यः" इति हि वाक्येन वेदेनैव धर्मज्ञानं संपादनीयं नतु भाषान्तरादिभिरिति न भाषान्तरादिसंपादितमर्थज्ञानं फलाय कल्पत इति च निरूपितम्। तथाच पुराणादितः संजातापि प्ररोचना वैदिकप्ररोच-नां परिपोषयन्ती सती निराकाङ्क्षीभवति। तथाच पुराणप्ररोचनपरिपोषितवैदिकप्ररोचनात एव तत्रापि प्रवृत्तिसिद्ध्या न द्वितीयस्थले वैकल्यम्। विधिवाक्यश्रवणसमनन्तरमेव प्रवृत्तिस्थलेऽपि वेदमूलकतत्तदङ्गज्ञानपूर्वकतत्तदनुष्ठानेनैव स्वर्गसिद्ध्या प्रवृत्त्यङ्गशाब्दभावनाङ्गप्राशस्त्यज्ञानमपि नियमेन वेदपूर्वकं संपादनीयम्। नह्यन्यथा प्रवर्तमानस्य फलं सिद्ध्यति। नहि वेदवाक्यं विना प्रकारान्तरेण संपादितमनुष्ठेयज्ञानं फलायेष्टं इति हि मीमांसकानां सिद्धान्तः।

**एतेन**—पौराणविधिवाक्यानि मन्वादिवाक्यानि बोधायनादिसूत्राणि निबन्धाचारादयश्च **व्याख्याताः**। नहि पुराण-श्रवणमात्रेण मन्वादिस्मृतिपठनमात्रेण धर्मसूत्रमात्रपठनेन वा धर्मज्ञाः; किंतु सेतिहासपुराणस्मृतिसूत्रादिसहितस्य वेदवा-क्यस्य मीमांसाशास्त्राध्ययनेन साकमध्ययनेन। अत एव पुराणादीनां मन्वादिस्मृतीनां च वेदमूलकत्वेनैव प्रामाण्यं नतु स्वत-न्त्रमिति निरूपयिष्यते।

तेच अर्थवादाः निन्दा-प्रशंसा-परकृति-पुराकल्परूपाः। निन्दार्थवादाः—निषेधवाक्यस्य शेषभूता भवन्ति। प्रशंसा-र्थवादास्तु—विधिवाक्यस्येति विवेकः। **एतेन**—परकृतिपुराकल्पावपि **व्याख्यातौ**। तयोः स्तुतिनिन्दान्यतर-रूपत्वनियमात्।

अर्थवादैर्हि प्रशंसा न शब्दशक्त्या गम्यते, किंतु—तात्पर्याख्यवृत्त्या, लक्षणया वा, प्रतीयमानास्त्वर्थाः केचन विव-क्षिताः केचनाविवक्षिता भवन्ति। तत्र निमित्तं तु—प्रतीयमानार्थस्य प्रमाणान्तरप्राप्तिप्रमाणान्तरबाधितत्वे। प्रमाणा-न्तरं च यथायथं भवति।

तत्र "अग्निर्हिमस्य भेषजम्" इत्यत्र प्रमाणान्तरप्राप्त्या न विवक्षा किंतु केवलं स्तुत्यर्थं प्रमाणान्तरप्राप्तस्यैवानुवादः। "स प्रजापतिरात्मनो वपामुदखिदत्" इत्यत्रापि प्रत्यक्षादिप्रमाणान्तरविरुद्धत्वात्स्तुत्यर्थमेव संभावनादिनाऽनुवादः। परकृ-तिपुराकल्पयोस्तु प्रायेण प्रमाणान्तराप्राप्तत्वात्स्वार्थेनाम्नानं तेन स्तुतिरपि। अत एव—अर्थवादोद्धारेण वा स्मृत्यादीनां प्रामाण्यमिति वार्तिकादिसिद्धान्त उपपद्यते।

तथाच "**एतेन** उपनिषदो **व्याख्याताः**" इत्युपनिषदां अर्थवादत्वाङ्गीकारमात्रेण पूर्वमीमांसकानां वार्तिककारादी-नामद्वैतमते विद्वेषो नोहितुमपि शक्यते। सूचितश्चायमर्थः पूर्वमेव। एवंच—निन्दाप्रशंसयोरेव परकृतिपुराकल्पयोरप्य-न्तर्भावेऽपि पृथक् तयोः परिगणनस्यापि निमित्तं सूचितम्।

यत्तु—"वेदवादरताः पार्थ नान्यदस्तीति वादिनः। समाधावचला बुद्धिस्तदा योगमवाप्स्यसि॥" इति गीतायामर्थ-वादमात्रानुशीलानां न विज्ञानादिकमित्युक्तम्।

तस्यायमेवाऽऽशयः—यत्कर्माऽर्थवादेषु श्रूयमाणस्वर्गादिपुरुषार्थमात्रार्थं न प्रवर्तितव्यम्, किंतु तत्र तत्र श्रूयमाणमोक्षादि-संपादनार्थमपीति। संमतमिदं वाचस्पतिमिश्राणां, येषां मते "आत्मा वा अरे द्रष्टव्यः" इत्यादीनि विधिच्छायापन्नानि न विधयः। "तत् त्वमसि" इत्यादिवाक्यानां स्वयमविधीनां तदशेषाणाममन्त्राणां च कस्मिन्वेदविभागेऽन्तर्भावः स्यात्? यद्यर्थवादत्वमपि तेषां न संमतं स्यात्। अर्थवादत्वेऽपि प्रतीयमानेऽर्थे तात्पर्याङ्गीकारात्तु नाऽद्वैतमताऽसिद्धिः। उपपा-दितमिदं शङ्करभगवत्पादैरपि देवताधिकरणे 'अर्थवादानां प्रतीयमानार्थेऽपि प्रामाण्यं विद्यते' इत्युत्तरमीमांसायाम्।

यदि ह्यर्थवादः केवलं प्राशस्त्यमेव समर्पयति तर्हि मीमांसकानां मते कथं रात्रिसत्राधिकरणमुपपद्येत? तत्र ह्यधि-करणे "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इत्यर्थवादेनैव फलस्याप्युपस्थितिरिति न स्वर्गकल्पनं रात्रिसत्रे विश्वजि-द्याग इवेति निरूपितम्।

विध्याकाङ्क्षितोऽर्थः प्रतीयमानोऽप्यार्थवादिकः सत्य इति देवताविग्रहादीनां विध्यनपेक्षितानां नार्थवादेन प्रतीतानामपि ग्रहणमिति पूर्वमीमांसागतदेवताधिकरणसिद्धान्तादिकं वैदिकवाक्ये श्रद्धातिशयमाधातुमेव नतु वस्तुगत्येति पूर्वमेव निवेदितम्।

विध्यनपेक्षितानामपि मन्त्रार्थवादयोर्दृष्टान्तविधयोपात्तानां धर्मत्वस्य तादृशधर्ममूलकत्वेन स्मृत्यादिप्रामाण्यस्य च वार्ति-ककारैरुपपादनेन प्रमाणान्तराविरुद्धानां सर्वेषामेव देवताविग्रहादीनामङ्गीकार्यत्वात्। एवंचोपनिषदर्थवादत्वादिकं नाऽद्वै-तमतविरुद्धम्। यथाचार्थवादे प्रतीयमानार्थान्तरविवक्षया बहूनामधिकरणसिद्धान्तानां प्रवृत्तिस्तथा भाट्टकौस्तुभे व्य-

क्तम्। अन्यथा "अक्ताः शर्करा उपदधाति" इत्यत्रापि "तेजो वै घृतम्" इति वाक्यशेषानुसारेण घृतस्यैवाञ्जनमिति नियमो न स्यात्।

एतादृशमेव प्रामाण्यमर्थवादानां साधयितुमर्थवादप्रवृत्तिरिति सेश्वरमीमांसायां निरूपितम्। प्रतीयमानार्थमात्रेण पर्यवसानं तु पुरुषार्थोपयोगित्वमर्थवादानां न संपादयति। अतः "स्वाध्यायोऽध्येतव्यः" इति विध्यवगतपुरुषार्थपर्यवसाय्यर्थावबोधजनकत्वमर्थवादानामुपपादयितुं प्राशस्त्यसमर्पकत्वं तेषामुपपादनीयमेव।

तथाच नार्थवादाः केवलं स्तावकाः, नापि प्रतीयमानार्थपरमात्रा वा, नाप्युभयरूपाः नियमेन, किंतु यथासंभवं क्वचित्केवलं स्तावकाः यत्र प्रमाणान्तरविरोधस्ततः प्राप्तिर्वा प्रतीयमानार्थस्य क्वचिदुभयरूपा इति तत्त्वम्।

"औदुम्बरो यूपो भवति" इति विधिवाक्यानन्तरं तु "ऊर्ग्वा उदुम्बरः ऊर्क् पशवः ऊर्जैवास्मा ऊर्जं पशूनाप्नोति ऊर्जोवरुध्यै" इत्यर्थवादे पशुप्राप्तिरूपार्थस्य प्रमाणान्तराविरुद्धस्यापि प्रतीयमानस्य न विवक्षा। उदुम्बरतायाहि यूपरूपेण फलेनैव शान्ताकाङ्क्षत्वान्नापेक्षा तत्र वर्तते।

यथाहि—"वायव्यꣳ श्वेतमालभेत भूतिकामः" इति यागोत्पत्तिवाक्य एव फलसंबन्धे सति "वायुमेव स्वेन भागधेयेनोपधावति" इति प्रतीयमानवायुदेवताप्राप्तिरूपफलान्तरं न विवक्ष्यते। एवमुदुम्बरताविधिवाक्य एव तस्याः फलसंबन्धेनार्थवादेन फलसंबन्धाभाव इति समानम्।

**एतेन**—"यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्यर्थवादोऽपि न प्रतीयमानफलसमर्पको भवतीति **सूचितम्।**

वस्तुतस्त्वङ्गयागानामङ्गकर्मादीनां च स्पष्टं फलसंबन्धबोधकविध्यभावेऽङ्गिफलेनैव शान्ताकाङ्क्षत्वान्नार्थवादेन फलसिद्धिः। रात्रिंनामधेयं सत्रं तु नाङ्गम्, किंतु प्रधानम्, अतो न विरोधः।

एतेन विश्वजिन्न्यायोऽपि व्याख्यातः; विश्वजिद्यागस्यापि प्रधानत्वेन फलापेक्षायाः सत्त्वात्।

उदुम्बराधिकरणेनैव यद्यप्यर्थवादो द्रव्यगुणसंस्कारविध्यनन्तरं श्रूयमाणो न फलसमर्पक इति सिध्यति, तथाप्यत्र केवलार्थवादत्वे समर्थिते चतुर्थाध्याये "द्रव्यसंस्कारकर्मसु फलश्रुतिरर्थवादः स्यात्" इत्यधिकरणमर्थवादत्वं फलसमर्पकत्वं उभयं च भवत्विति शङ्कानिरासार्थमिति पौनरुक्त्यपरिहारो वार्तिककृता यः कृतः सोऽपि प्रतीयमानार्थस्याऽसति बाधके विवक्षामेवोपोद्बलयति।

**एतेन** "शूर्पेण जुहोति तेन ह्यन्नं क्रियते" इत्यत्र "तेन ह्यन्नं क्रियते" इत्यर्थवादेऽपि हिशब्दार्थो न विवक्षितोऽनपेक्षितत्वादिति **सूचितम्।** "शूर्पेण जुहोति" इति विधौ सति कुत इत्याकाङ्क्षाकथनमपि न भवति। नहि "दध्ना जुहोति" इत्यत्र सा समस्ति। "वचनात्प्रवृत्तिर्वचनान्निवृत्तिः" इति खलु शास्त्रकाराणां संप्रदायः।

देवताविग्रहनिराकरणं तु देवानां कर्माधिकारनिषेधार्थं सत् कर्मणैवापूर्वद्वारा स्वर्गादिफलसिद्ध्या तस्य प्रकृतविधावपेक्षाभावान्नानुपपन्नम्। एवंच यावच्छक्ति विध्यपेक्षितप्रतीयमानार्थान्तरपरत्वमर्थवादानामङ्गीकरणीयमित्येव देवताविग्रहनिरासादिग्रन्थाशयः।

यदितु देवताविग्रहं विनाऽचेतनेन कर्मणा न फलसिद्धिरिति विभाव्यते तदा देवताविग्रहाङ्गीकारेपि न दोषः। अत एवोत्तरमीमांसायां ईश्वरस्यैव फलदातृत्वं न कर्मण इति देवताविग्रहादिकमङ्गीक्रियत एवेत्यादि निरूपितम्।

यथा देवतानां कर्मानधिकारो न तथा ब्रह्मविद्यायामित्युत्तरमीमांसायां देवताविग्रहसाधनं सर्वथोपपन्नमेव।

सर्वथा चाऽर्थवादानां कुत्रचित्स्तावकत्वं कुत्रचित्प्रतीयमानार्थपरत्वसहितं तदिति सिद्धमेवेत्युपनिषदामप्यर्थवादत्वाङ्गीकारो वार्तिककाराणां नाद्वैतमतविद्वेषं गमयतीति सर्वमनवद्यम्।

यद्यप्यात्मासङ्गत्वाकर्तृत्वादिज्ञानं न कर्मविध्यपेक्षितं प्रत्युत तद्विरुद्धमेवेति शङ्करभगवत्पादैर्निरूपितम्, तथापि स्वतन्त्रं प्रयोजनान्तरार्थं तज्ज्ञानमित्यङ्गीकारान्न दोषः।

यथाहि होमशेषोऽपि दधि "दध्नेन्द्रियकामस्य जुहुयात्" इति स्वतन्त्रफलान्तरार्थं भवति, एवं विधिशेषोऽप्यर्थवादरूपोपनिषत् स्वतन्त्रफलान्तरार्थापि भवतीति न विरोधः। तत्सिद्धमर्थवादानामपि प्राशस्त्यरूपधर्मे प्रामाण्यमिति।

"ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादौ धात्वंशस्य विधिघटकतया विधित्वेन यथा धर्मे प्रामाण्यं एवमर्थवादस्यापि विधिशेषत्वेन विधित्वेनैव प्रामाण्यसिद्ध्या किमर्थं पृथगर्थवादप्रामाण्यसाधनार्थं पादान्तरारम्भः? इति चेत्।

अत्र केचित्—यजिधातोर्विधिना पदैकवाक्यतयाऽन्वयः, अर्थवादानां तु वाक्यैकवाक्यतयैवेति विधिवत्स्वतन्त्रप्रमाणत्वादर्थवादानां पादान्तरारम्भ इति—वदन्ति।

यत्र पदजन्यपदार्थोपस्थितिमात्रेण पदार्थयोः परस्परान्वयेन वाक्यार्थो निष्पद्यते तत्र पदैकवाक्यता, यत्र तु पदाभिहितपदार्थयोराकाङ्क्षादिभिः संबन्धो ज्ञातः पुनश्च शेषशेषिभावायाकाङ्क्षायां वाक्यार्थयोरन्वयो भवति तत्र वाक्यैकवाक्यता।

यथा "समिधो यजति" इति वाक्यार्थस्य "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति वाक्यार्थस्य च परस्परमङ्गाङ्गिभावापेक्षया वाक्यैकवाक्यता, एवं प्रकृतेऽप्यर्थवादानां कर्मप्राशस्त्यबोधनेन शान्ताकाङ्क्षाणां विधिना साकमितिकर्तव्यतासमर्पणेनान्वयाद्वाक्यैकवाक्यतेति मन्तव्यम् ।

अत्र भाट्टरहस्ये यत्रार्थवादे स्तुत्यर्थमनूद्यमानोऽर्थो विनैव लक्षणां भासते, यथा "वायुर्वै" इत्यादौ तत्र पदार्थ एव प्राशस्त्यमिति विध्यर्थवादयोः पदैकवाक्यतैव । यत्र तु लक्षणादिनाऽनूद्यमानपदार्थोपस्थितिस्तत्र तु वाक्यैकवाक्यतैव, यथा "आदित्यो यूपः" इत्यादाविति निरूपितम्, एवंच पदैकवाक्यतयैव विध्यर्थवादयोरन्वयेऽपि न दोषः ।

तत्र हि भावना द्विविधा—आर्थी शाब्दी चेति पूर्वमुक्तम् । तत्र प्रधानभूताऽऽर्थभावनासंबन्धिनां विधिपादे विचारः, अप्रधानभूतशाब्दीभावनेतिकर्तव्यतासमर्पकत्वात्तु द्वितीयपादेऽर्थवादविचार इत्युपपद्यते । नामधेयानां तु ज्योतिष्टोमादिपदानां न साक्षात्साधनत्वेनेतिकर्तव्यतात्वेन वाऽन्वय इति चतुर्थपादे विचार इति सर्वमुपपन्नम् ।

अस्य च द्वितीयपादस्यार्थवादपाद इति नाम; अर्थवादविचारस्यैव बहुलत्वात् । मन्त्रस्यापि विध्यतिरिक्तवेदवाक्यत्वसामान्यादत्र विचारो न विरुद्धः ।

अस्मिन्पादे चत्वार्यधिकरणानि । तत्र त्रीण्यर्थवादमधिकृत्य एकं मन्त्रानधिकृत्येति विवेकः ।

तत्र मन्त्राः यद्यपि साध्यं साधनं इतिकर्तव्यतां वा प्रायो न बोधयन्ति, तथाप्यनुष्ठानात्पूर्वमपेक्षिततत्तत्पदार्थज्ञानं मन्त्राधीनं यदि भवति तर्ह्येव स्वर्गादिसिद्धिरिति कल्पनान्मन्त्रा अपि विवक्षितार्थाः ।

अत एव हि अग्निहोत्रकर्मण्यङ्गभूते "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा" इति मन्त्रेऽग्निदेवताप्रकाशनान्यथानुपपत्त्यैवाऽग्निहोत्रहोमे देवताविध्यभावेऽप्यग्निरूपदेवतासिद्धिर्नामधेयपादे निरूपिता तत्प्रख्याधिकरणे ।

तत्रार्थवादवदेव मन्त्रेऽपि प्रतीयमानानामर्थान्तराणां विवक्षा समस्ति । तत्र च यावच्छक्तिप्रकृतोपयोगित्वं प्रतीयमानानां सति संभवे संपादनीयम् । अन्यथा तु यत्र मन्त्रार्थस्य समवायस्तत्रोत्कर्षः करणीयो मन्त्राणाम् । यदि मन्त्राणां स्वसामर्थ्येनान्यदेवताप्रकाशकानां विनियोजकेन वाक्यान्तरेणेतरदैवत्यक्रियान्तरे विनियोगः, यथा ऐन्द्रीमन्त्रस्य "कदाचन स्तरीरसि" इत्यस्याग्निदेवत्ये कर्मणि "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति विधिना, तत्र मन्त्रगतेन्द्रादिपदानामप्यग्निरेवार्थः ।

तत्रापि प्रतीयमानस्य मुख्यार्थस्य स्वीकारो युक्तो न तु गौणार्थस्य लाक्षणिकस्य वा । विकृतौ त्वातिदेशिकविकृतीतरदेवताबोधकानां न लक्षणा विकृतिदेवतापरत्वम्, किंतु प्राकृतदेवताबोधकपदस्थाने विकृतिदेवताबोधकपदान्तरस्य निक्षेपरूप ऊह एव तत्रेत्याद्यन्यत्र विस्तरेण प्रतिपत्तव्यम् ।

यद्यपि मन्त्रार्थपर्यालोचनैव मन्त्राणां विनियोगे "इमामगृभ्णन् रशनामृतस्य" इति मन्त्रस्यापि तेनैव रशनाग्रहणे विनियोगः प्राप्नोति; तथापि रशनाग्रहणसामान्ये स मन्त्रो न विनियोक्तव्यः किंत्वश्वरशनाग्रहण एवेति नियमसिद्ध्यर्थं "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति विनियोगविधिरपेक्षितः । अयं न्यायोऽन्यत्राप्येतादृशविधावूहनीयः ।

एतेन "उरु प्रथस्वेति पुरोडाशं प्रथयति" इति विधिरपि व्याख्यातः; तस्यार्थवादत्वात्, तथाचैतादृशानां विनियोगविधीनां वैयर्थ्यभिया मन्त्रार्था न विवक्षिता इति शङ्का परास्ता; सति संभवे मन्त्रार्थानां विवक्षावश्यंभावात् ।

मन्त्रोच्चारणं ह्यध्ययनवदर्थज्ञानार्थमेव नतु स्वर्गार्थम् । ये तु मन्त्रा नार्थवन्तः, यथा "हुंफडादयः" तेषामुच्चारणमदृष्टार्थमेव ।

अत्र च मन्त्रे प्रतीयमानानां बहूनां मध्ये यद्येकस्य प्रयोगसमवेतत्वं प्रमाणान्तरप्रमितत्वं च तर्हि तदेकवाक्यतया प्रकृतायोग्यानामपि पदानामदृष्टार्थमेवोच्चारणम् । यथा—"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां निर्वपामि" इति मन्त्रे निर्वपामीत्येकस्यैवार्थज्ञानार्थं, अन्येषामदृष्टार्थमुच्चारणम् । नहि दर्शपूर्णमासयोः सविता पूषा अश्विनौ वा देवता विद्यन्ते, नवोत्पत्तिवाक्येनाग्न्यादिदेवतान्तरसिद्धौ कल्पयितुं तत्र शक्यन्ते ।

यन्मन्त्रार्थवादयोः कुत्रचित्प्रमाणान्तरसिद्धानामन्यस्तुत्यर्थं निन्दा दृश्यते न तेन निन्दितस्याधर्मत्वम् । नहि निन्दा निन्द्यं निन्दितुं प्रवृत्ता किंतु स्तुत्यं स्तोतुमिति न्यायात् ।

वार्तिककारा हि—"मन्त्रार्थवादा बहुधा बहुभिर्व्याख्यायन्ते । तत्र किमपि व्याख्यानमनुसृत्य क्वापि स्मृतिरित्यादिकं न संभवती"ति निरूपयन्तीति अधीतनिगमनिरुक्तव्याकरणादीनामपि विदुषां स्वतन्त्रे मन्त्रव्याख्याने ब्राह्मणवाक्यादिभिरनुपष्टब्धे द्रागित्येव विश्वासेन न किमपि कर्म कर्तव्यम्, किंतु सम्यङ्मीमांसादिभिर्विचारेणैव । अतो विद्यारण्यभाष्यं विनाऽधुनातनानां व्याख्यानविशेषादिदर्शनमात्रेण नास्माभिरुन्मार्गं गन्तव्यम् ।

तथाच विधिवन्मन्त्रार्थवादा अपि विवक्षितार्था धर्मोपयोगिन एव भवन्ति । एवंच न केनापि वर्णेन मात्रया वा वेदगतेनानर्थकेन धर्मापर्यवसायिना च भवितव्यम् । यद्यपि मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वेनैव धर्मे पर्यवसानं स्मृतिश्चाऽधिगतविषयत्वान्न प्रमा; तथाप्यबाधितार्थविषयकत्वरूपं प्रामाण्यं स्मृतेरपि विद्यत इति न दोषः ।

भाट्टदीपिकायां तु पदाभिहितानां पदार्थानामेव शाब्दप्रमाजनकत्वं न पदानामित्यभिहितान्वयवादरीत्या मन्त्राणामपि विनियोगविधौ पदार्थविधया भासमानानां प्रमाजनकत्वरूपं प्रामाण्यं विद्यत इति निरूपितम् ।

द्विविधमत्र मीमांसकानां मतं—अन्विताभिधानं, अभिहिताभिधानं चेति । पदस्यैव पदार्थस्मारकत्वं स्मारितानां परस्परान्वयबोधानुकूलशक्तिश्च प्रथममते ॥

द्वितीयमते पदैः पदार्थानां ज्ञानं जायते । तच्च ज्ञानं न स्मृतिः, तत्रानुभवात्, नाप्यनुभवः, अधिगतविषयत्वात्, किंत्वभिधानपदाभिधेयं स्मृतिसमं । तदुक्तं सङ्क्षेपशारीरके—"अभिहितघटना यदा तदानीं स्मृतिसमबुद्धियुगं पदे विधत्तः । परदृशि पुनरन्विताभिधाने पदयुगलात्स्मृतियुग्ममेव सत्यम् ।।" इति ।

तत्र प्रथममतेऽन्वयशक्तिरपि पदेष्वेव; शाब्दबोध इति व्यवहारानुसारात्, द्वितीयमते तु पदानां पदार्थाभिधानेन शान्ताकाङ्क्षा, अभिहितानां पदार्थानां त्वाकाङ्क्षाद्यनुसारेणान्वयबोधजनकत्वम् । आकाङ्क्षादिकमर्थधर्मोऽतोऽन्वयशक्तिरप्यर्थयोरेव युक्ता । तदुक्तं—"पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्" इति ॥ अस्मिन्मते शाब्दबोध इति व्यवहारोऽपि शाब्दप्रयोज्यत्वमादायोपपद्यते ।

अयमपरो विशेषोऽस्मिन्मते—यत्प्रमाणान्तरेणोपस्थितानामपि पदार्थानामन्वयबोधो भवति विनैव शब्दं, पूर्वस्मिंस्तु न तथा । तदुक्तं—"पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः । खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥" इति ॥

अभिहितान्वयबोधे प्राकृतस्य "अग्नये जुष्टं निर्वपामि" इति मन्त्रस्य विकृतौ सौर्येष्टावतिदेशेन प्राप्तस्य "अग्नये" इति पदस्थाने "सूर्याय" इतिपदनिक्षेपात्मक ऊहो यो नवमाध्याये निरूपितः स नापेक्षितः, विनापि सूर्यपदं प्रमाणान्तरेणोपस्थितसूर्यदेवताया अन्वयसंभवादित्यूहादिसिद्धान्तो नोपपद्यते इति केषांचनान्विताभिधानवाद एव महानाग्रहः ।

भाष्यकारैस्तु तर्कपादेऽभिहितान्वयपक्ष एव समादृतः ।

अयमाशयः—प्रकृतौ यः पदार्थो यथा स्मृतः तथैव विकृतावपि स्मर्तव्यः । प्रकृतौ तु देवतायाः पदमूलकं स्मरणमासीदिति विकृतावपि पदाध्याहारपक्ष एवावश्यक इति । अत्र मतद्वयेऽपि पदार्थे शक्तिज्ञानं कारणम्, अन्वये तु स्वरूपसती शक्तिः कारणमिति समानम् ।

अयमन्विताभिधानवादोऽद्वैतिनां "तत् त्वमसि" इत्यादिवाक्यसाधारणो न भवति । अभिहितान्वयवादस्तु तेषामपि साधारण इति विशेषः ।

ब्रह्मानन्दसरस्वत्यस्तु—"अन्विताभिधानवादोऽपि नाद्वैतिनां प्रतिकूलः । तत्रान्वितपदस्य हि तात्पर्यविषय इत्यर्थः" इति न्यायरत्नावल्यां निरूपयन्ति ।

मीमांसकानां पक्षद्वयेऽपि फलसाम्येऽभिहितान्वयवादे विशेषत आग्रहे किं निमित्तमिति चेत् मीमांसकानां मतेऽवयवातिरिक्तं समुदायाभिधं वस्तु शशशृङ्गप्रायम् । एवंच पद एव विजातीयशक्तिद्वयकल्पनाऽपेक्षया विजातीययोः पदतदर्थयोरेव शक्तिद्वयाङ्गीकारो युक्तः । तदुक्तं भाष्ये—"नच पदार्था एव वाक्यार्थः, सामान्ये हि पदं प्रवर्तते विशेषे वाक्यम्, अन्यच्च सामान्यमन्यो विशेषः" इति ॥

अतएव—"तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्" इति सूत्रमप्युपपद्यते । अत्र ह्यर्थस्य तन्निमित्तत्वादित्यर्थ एव वाक्यार्थं प्रति निमित्तमिति स्पष्टमुक्तम् । अन्यथा पूर्वपक्षोक्तरीत्या पूर्ववर्णसंस्कारसहितान्त्यवर्णस्य पदार्थज्ञानसहकृतस्यान्वयबोधकत्वेऽन्वयस्य कृत्रिमत्वं व्यामोहत्वं वा भवेदिति वेदप्रामाण्यमपि मीमांसकानां न सिध्येत् । तदुक्तं भाष्ये—तद्भूताधिकरणपूर्वपक्षग्रन्थे तस्मात्कृत्रिमो वाक्यार्थो व्यामोहो वेति ।

इदमभिहिताभिधानं वैयाकरणानां विरुद्धमेव । नैयायिकानां त्वशक्यस्यैवान्वयस्य समभिव्याहारमात्रेण भानमिति संमतम् । तत्र शाब्दबोधे वृत्त्यविषयस्य भानं विरुद्धमिति कुत्रापि शक्तेरङ्गीकारे पदार्थ एव तदङ्गीकारो युक्त इति मीमांसकानामाशयः । तथाचाऽन्विताभिधानवादोऽयं प्राभाकराणां न सूत्रारूढः, न वा भाष्यारूढः किंतु स्वकल्पितम् । भाट्टमतं तु न तादृशम् । अतएवाद्वैतिनोऽपि—"व्यवहारे भाट्टनयः" इति व्यवहारनिर्वाहं सर्वमपि भाट्टनयेनैव कुर्वन्ति । सर्वथा च मन्त्राणां विनियोगविधिदृष्ट्या धर्मप्रामाण्यमपि संभवत्येव ।

वस्तुतस्तु धर्मप्रामाण्यं सर्वेषां वेदवाक्यानां नापेक्षितम्, किंतु धर्मपर्यवसानमेवेति मन्त्रोच्चारणं विनाऽपूर्वोत्पत्त्यसंभवान्मन्त्राणामपेक्षितं धर्मपर्यवसानं सिध्यत्येवेति विधिमन्त्रार्थवादानां पादद्वयेन धर्मोपयोगः समर्थितः ।

तत्र निषेधवाक्यानामपि विधिपदेनैव ग्रहणान्न तदर्थं पादान्तरमपेक्षामहे । एवंच निन्दार्थवादानामपि विचारो द्वितीयपादे यः कृतः स उपपद्यत एव ।

तत्रेदं विचारणीयम् । यथा "आग्नेयं चतुर्धा करोति," "पुरोडाशं चतुर्धा करोति," इत्यनयोर्विध्योरुपसंहारेण आग्नेयपुरोडाशस्यैव चतुर्धाकरणम्, एवं निषेधद्वयस्याप्युपसंहारो भवति वा नवेति । तत्र बहूनामाशयः—निषेधयोर्नोपसंहारः

यथा—"न हिंस्यात्सर्वा भूतानि," "न ब्राह्मणं हन्यात्," "नात्रेयं हन्यात्," इति निषेधानामप्युपसंहारापत्त्या श्येनादियागस्य फलतोऽप्यनर्थाभावेन धर्मत्वप्रसङ्गादिति ॥

परेतु—अस्ति निषेधयोरुपसंहारः । यथा—"वार्ताकं न भक्षयेत्," "श्वेतवार्ताकं न भक्षयेत्," इति निषेधयोः । अयं विशेषः—निषेधद्वयस्य भिन्नस्मृतिस्थत्वे भिन्नशाखास्थत्वे वा तयोरुपसंहारः, एकशाखादिगत्वे तु न सः । यथाहि एकशाखागतानां निषेधानामुपसंहारेऽन्यतरवाक्यवैयर्थ्यापत्तिः, न तथा भिन्नशाखागतानाम् । "स्वाध्यायोऽध्येतव्यः" इत्येकशाखाध्ययनस्य नियमितत्वेनाधिकारभेदेन ब्रह्मयज्ञादौ सार्थक्यात्, "न ब्राह्मणं नात्रेयं" इत्यादिकं त्वेकशाखागतमतो नोपसंहार इति सर्वमनवद्यम् ।

अत्र निषेधानां अधर्मप्रमाणत्वम् । तथाच "चोदनालक्षणोऽर्थो धर्मः" इत्यत्राधर्मपदविभागोऽपि कैश्चन कृतो नानुपपन्नः । तत्र च निषेधवाक्येन तदधर्मत्वज्ञानपूर्वकं कलञ्जभक्षणस्याननुष्ठानेनैव प्रत्यवायाभावः, नतु स्वयं किंचिद्युक्त्यादिकल्पनया बौद्धादिशास्त्रान्तरपर्यालोचनया च तदननुष्ठानेन । तथोक्तं वार्तिके—"बौद्धाद्यहिंसावाक्यं श्वदृतिनिहितं क्षीरमिवानादरणीयम्" इति ॥

अयं न्यायो धर्मकथायामपि योजनीयः । तथाच अधुनातनानां वेदार्थे युक्तिगवेषणादिकं वेदाप्रामाण्योद्घोषणेन बौद्धादिवाक्यप्रामाण्यादिनाऽहिंसाद्याचरणं सर्वं वेदप्रामाण्यविघातार्थमेव ।

अत्रेदं विचारणीयम्—कथं पुरुषदोषेण वस्तुधर्मोऽन्यथा भवति? तथाच यद्यहिंसा धर्मः कथं शाक्योक्तिमात्रेण साऽधर्मः स्यात्? नह्यग्निः शीतलेन पुरुषेण स्पृष्टः स्वकीयमौष्ण्यं परिजहाति । एवंच बौद्धादिवाक्यावगतत्वमात्रेण कथमहिंसाऽधर्मो भवतीति ।

अत्रायमाशयः—बौद्धवाक्यं हि पौरुषेयं कदाचित् प्रमाणमप्रमाणं च भवति । तत्र प्रामाण्याप्रामाण्ये फलपर्यन्तप्रवृत्तिरूपया परीक्षया भवतः । नच कालान्तरफलेऽहिंसादौ परीक्षोक्तविधा भवतीत्यप्रामाण्यमेव पर्यवस्यति । तथाच वेदवाक्यमप्रमाणयतः बौद्धस्य सर्वतन्त्रस्वतन्त्रस्यापि मन्वादिवद्वैदिकत्वमात्मनोऽनङ्गीकुर्वतः वाक्ये न विश्वासो भवतीति तद्वाक्यश्रवणमात्रेणाहिंसादिधर्मत्वनिर्णयो न संभवति । नहि धर्माधर्मादिकमीश्वरस्यापि प्रत्यक्षमिति वेदापौरुषेयताप्रकरणे स्पष्टं निरूपितमन्यत्र ।

तथाच यागाद्यनुष्ठायिनां तत्तद्वेदवाक्यमजानतां तादृशवेदवाक्यजनितार्थज्ञानाभावे यथा नाधिकारः एवमहिंसादिकर्मण्यप्यवैदिकानां नाधिकारः[1], धर्माधर्मादीनामधिकारिभेदेन व्यवस्थितत्वाद्राजसूयादिकं ब्राह्मणादेरिवाहिंसावाक्यावगताहिंसा बौद्धानामपि न धर्मः । अपशूद्राधिकरणेन शूद्राणां धर्माधर्मार्थवेदाध्ययननिषेधेऽपि तेषां तज्ज्ञानसंभवान्न दोषः । तदुक्तं—"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यानं कृपया मुनिना कृतम् ॥" इति ॥

यद्यपि विधिषु श्राद्धोऽधिकारी निषेधेषु तु सर्वोऽपीति भामतीवाक्याद्बौद्धानामपि निषेधज्ञानं विनाऽनुष्ठीयमानं हिंसादिकमनर्थायैव स्यात्; तथापि हिंसया स्वस्य परस्य वा अनर्थं भविष्यतीति ज्ञानं न बौद्धानां भवितुमलम् । तथाच बौद्धवाक्यं चेदप्रमाणं तर्हि सर्वेषां निरङ्कुशा निवृत्तिः हिंसादितः स्यात् । अतस्तत्प्रामाण्यनिराकरण एव वार्तिकादीनामभिप्रायः, नतु बौद्धवाक्यदर्शनेनाहिंसाव्रतपरिपालनेनानर्थमपि भविष्यतीति ।

वस्तुतस्तु—गोक्षीरं श्वदृतौ धृतमिति दृष्टान्तस्वारस्यादास्तिकानामेव तदनादरणीयमिति गम्यते नतु बौद्धानामपि । तथाच न कोऽपि विरोधः ।

ये हि आस्तिका वैदिकाग्रगण्याः वेदविहितमेव धर्ममुपयन्ति न ते कथमपि बौद्धवाक्यं दृष्ट्वा धर्माधर्मनिर्णयं करिष्यन्ति । तथाच निषेधवाक्यजन्यज्ञानं विनाप्यनुष्ठितं हिंसादिकं दोषाधायकमेव । एवंचानुष्ठानसमये निषेधवाक्यानपेक्षायामपि निषेधवाक्यानां ब्रह्मयज्ञादिधर्मोपयोगोऽपि भवतीति न किंचिदनुपपन्नम् । अधिकं वेदान्तकल्पतरुपरिमले द्रष्टव्यम् । तथाच "चोदनालक्षणोऽर्थ एव धर्मः" इति सिद्धम् ॥

यदि चोदनालक्षणोऽर्थ एव धर्मस्तर्हि मन्वादिस्मृतीनां न धर्मे प्रामाण्यं स्यात् । नहि ताः वेदः । साधितं हि कल्पसूत्राधिकरणे यथा—"मन्वादिस्मृतयः कल्पसूत्रादिकं च न वेदः" इति ॥ एवंच बहूनां **विद्यास्थानानां** विभागोऽप्यनुपपन्न एव । नहि पुराणन्यायमीमांसाधर्मशास्त्राणि शिक्षादीनि षडङ्गानि वा वेदाः ।

स्मृतिर्हि नामानुभवजन्यज्ञानविशेषः प्राक्तनं यत्किंचित्प्रमाणाधीनमनुभवमपेक्षते । न चात्र स्मृतिसाधनमनुभवो वेदाधीनः; तादृशवेदवाक्यानामदर्शनात् । प्रलीनशाखागतानि वाक्यानि स्मृतिमूलानीति कल्पनायामियमेव स्मृतिः प्रमाणं इयं न प्रमाणमिति व्यवस्था न सिध्येत् ।

किंच मन्वादयः किं तानि वाक्यान्यदर्शन् उत न । यदि नापश्यन् तर्हि कथं मन्वादिस्मरणस्य तानि मूलानि भवेयुः । यद्यदर्शन् कुतो वा स्ववाक्यानीव मूलवाक्यान्यपि नाध्यापितानि । तदुक्तं वार्तिके—"येन यत्नेन मन्वाद्यैरात्मवाक्यं प्रपाठितम् । कस्मात्तेनैव यत्नेन मूलवाक्यं न पाठितम् ॥" इति ॥

---

१ तथाचावैदिकानां हिंसादौ प्रवृत्तानां केनापि निमित्तेन ततो निवृत्तानामपि न प्रत्यवायाभावः सर्वथेति सूचितम् ।

तथाच भ्रान्त्यादिमूलकाः स्वानुभवमूलकाः वञ्चनार्थं स्वबुद्धिकल्पिता वा मन्वादिस्मृतयः कथं धर्मे प्रमाणं भवन्ति ।

तत्रेदं समाधानम्—सत्यं मन्वादिस्मृतयः पुराणन्यायमीमांसादयः कल्पसूत्रादयः षडङ्गानि च न वेदाः, तथापि तानि धर्मे प्रमाणमेव ।

अयमाशयः—प्रमाणं हि द्विविधं साक्षात्प्रमाणं परंपरया प्रमाणं चेति । यद्यपि स्मृतिः साक्षान्न प्रमाणम्, तथापि प्रमाणभूतपरोक्षवेदानुमानद्वारा धर्मे प्रमाणमिति युक्तमेव । तथाच परोक्षवेदप्रामाण्यमेव तृतीयपादार्थ इति सिद्धम् । व्यक्तं चैतन्न्यायसुधायाम् ।

"चोदनालक्षणोऽर्थो धर्मः" इत्यत्र परोक्षापरोक्षद्विविधचोदनाया अपि सङ्ग्रहो विद्यत इति प्रत्यक्षवेदस्य विधिमन्त्रार्थवादरूपस्य प्रामाण्यविचारानन्तरं परोक्षतद्वाक्यप्रामाण्यविचार इत्युपपन्नम् । परोक्षत्वं चेदं न मन्वादिदृष्ट्या, किंत्वस्मदादिदृष्ट्या । मन्वादीनां तु तदपि प्रत्यक्षमेव, परंतु तत्तद्वाक्यं मन्वादिस्मृतिमूलभूतं विप्रकीर्णशाखागतमिति न तस्यापि मन्वादिभिः संप्रदायोच्छेदादिभिया पाठनं स्वकीयस्मृतीनामिव कृतमिति न दोषः ।

अयं भावः—"स्वाध्यायोऽध्येतव्यः" इति विधिवाक्ये अध्यायस्य स्वत्वविशेषणादेकवेदगतस्वपरम्पराप्राप्तशाखाध्ययनं, "वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्" इति वचनाद्वेदान्तरीयसर्वशाखाध्ययनं च विधीयते । तथाच कृष्णयजुश्शाखाध्यायिनां यजुर्वेदगतशुक्लयजुःशाखाध्ययनादिकं, ऋग्वेदगतस्वपरम्पराप्राप्तैकशाखाध्यायिनां तद्वेदगतशाखान्तराध्ययनं च निषिद्धं गम्यते । गुणोपसंहाराधिकरणे च सर्वशाखीयानां धर्मे सर्वैरनुष्ठानं कर्तव्यमसति विरोधे, सति तु विरोधे व्यवस्थितविकल्पादिकमिति निरूपितम् । तथाच शाखान्तरीयाणां धर्माणां शाखान्तरीयवाक्याध्ययनासंभवात्तेषामप्रत्यक्षत्वेऽपि मन्वादिस्मृतिमात्रपर्यालोचनया तादृशं किमपि वाक्यं शाखान्तरे स्यादिति विश्वासेन तदर्थानुष्ठानमावश्यकम् ।

तत्र च मन्वादिभिः स्वसाक्षात्कृतस्यापि शाखान्तरीयवाक्यस्याध्यापनं यदि क्रियेत तर्हि "स्वाध्यायोऽध्येतव्यः" इति विधिविच्छेदः कृतः स्यात् ।

वस्तुतस्तु स्वप्रत्यक्षाणि स्वाधीतवेदभागगतानि वेदवाक्यान्यपि मन्वादिस्मृतिमूलं भवितुमर्हन्ति, परंतु कानिचन मन्त्रार्थवादवाक्यानि कानिचन मन्त्रवाक्यानि वा भवेयुः ।

मन्त्रार्थवादयोस्तु कस्यार्थस्य विवक्षा कस्य न विवक्षेत्यादिनिर्णयो नास्मदादीनां भवति । मन्वादीनां तु सर्वतन्त्रस्वतन्त्राणामधिगतनिखिलविद्यास्थानानामधीतवेदचतुष्टयानां देवानामिव स्वयंप्रभातनिखिलवेदार्थानां मात्रामात्रापरित्यागेन वेदपरिपालनार्थं निखिलधर्माधर्मविवेचनेन धर्ममार्गप्रतिष्ठापनार्थमेव च कृतदीक्षाणाम् सर्वदा सत्सङ्गमपरिपावितचित्तवृत्तीनां च मन्त्रार्थवादेभ्योऽपि केभ्यश्चनैव धर्माद्यवभासः संभवत्येव । मन्त्रार्थवादयोरपि दृष्टान्तविधयोपात्तानामलौकिकानामर्थानां विवक्षा वर्तत इति वार्तिकादौ निरूपितम् । सर्वथाच मन्वादिस्मृतयो धर्मे प्रमाणमेवेति सिद्धम् । यतो वेदाद्वेदार्थं ज्ञात्वैव मन्वादयस्तमस्मरन् नतु स्वकपोलकल्पितं भ्रान्तिकल्पितं भ्रान्तिदृष्टं वा ।

शाक्यादिस्मृतयस्तु न वेदमूलाः । नहि मन्वादय इव ते वेदप्रामाण्यं मात्रामात्रापरित्यागेन वेदपरिपालनं वा मुख्यं मन्यन्ते । वेदाप्रामाण्यव्यवस्थापनं धर्मसमयोच्छेदनं चैव खलु ते पुरुषार्थं मन्यन्ते । अतो न तासां वेदो मूलम् । ततश्च स्वकपोलकल्पितत्वात् हेतुवादभूयिष्ठाः शाक्यादिस्मृतयो न प्रमाणम् ।

मन्वादिस्मृतयोऽपि प्रत्यक्षवेदवाक्यान्तराविरुद्धा एव धर्मप्रमाणमिति विवक्षितम्, नतु मनुस्मृतित्वादिना, शाक्यादिस्मृतयस्तु तत्स्मृतित्वेनैव प्रमाणमिति शाक्यानुसारिणां मतमिति नेदं मतं युक्तम् । नहि अहिंसासत्यादिकं धर्म इति हिंसादिकं अधर्म इति च प्रत्यक्षादिप्रमाणान्तरसिद्धमिति शाक्यादयोऽपि वेदार्थमेव वेदाप्रामाण्यनिरूपणपूर्वकं स्वकपोलकल्पिततया ज्ञापयन्ति प्रतारणार्थं लोकानाम् । तथाच वेदप्रामाण्यस्वीकारमन्तरा न कस्यापि स्मृतिः प्रमाणतामर्हतीति मन्वादिस्मृतय एव धर्मे प्रमाणम् । ता अपि वेदाविरुद्धा एव प्रमाणमिति सिद्धम् ।

प्रत्यक्षवेदवाक्यविरुद्धास्तु मन्वादिस्मृतयः स्वमूलं वेदवाक्यं नानुमापयन्तीति न ताः प्रमाणमिति भाष्यकारा वदन्ति ।

वार्तिककारास्तु प्रत्यक्षश्रुतिविरुद्धा अपि स्मृतयः श्रुतिमनुमापयन्त्येव, परंतु अनुष्ठानं प्रत्यक्षवेदवाक्यानुसार्येव युक्तं भवति । तथाच यस्य स्मृतिमूलं वेदवाक्यं प्रत्यक्षं स्मृतिविरोधि च तत्प्रत्यक्षं तस्य विकल्पेनोभयानुष्ठानमपि युक्तमेव । यत्र तु विरुद्धश्रुतिमात्रं प्रत्यक्षं तस्य स्मृत्यर्थानुष्ठानमेव युक्तम् । श्रुत्यविरुद्धस्मृतिस्थले तु परोक्षवेदवाक्यानुसारेणाप्यनुष्ठानं युक्तमेव ।

**एतेन** परोक्षवेदमूलकविरुद्धस्मृतिद्वयमपि **व्याख्यातम्**; तत्रापि "अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाति," इति विधिनिषेधस्थल इव विकल्पेनानुष्ठापकत्वात् ।

अत्र स्मृतिपदस्य भावव्युत्पन्नस्य स्मरणमेवार्थः । तथापि तन्मूलकग्रन्थविशेषस्यापि मन्वादिविरचितस्य गौण्या वृत्त्या स्मृतिपदेन व्यवहारः ।

एतेन उपचारात् रघुनन्दनवैद्यनाथादिनिबन्धग्रन्थानामपि स्मृतिपदव्यवहारो नानुपपन्न इति सूचितम्।

इयान्विशेषः—यन्निबन्धग्रन्थानां स्मृतिविरोधे आचारस्येव श्रुतिविरोधे स्मृतेरिव च न प्रामाण्यमिति। यत्तु "स्मृत्योर्विरोधे न्यायस्तु बलवत्तर" इति वचनं तत्परोक्षापरोक्षस्मृतिविरोधे मीमांसादिन्यायस्य प्राबल्यपरमिति न दोषः। निबन्धग्रन्था हि विचारशास्त्रविधयैव प्रमाणम्। मीमांसाशास्त्रं साक्षाद्वेदार्थविचाररूपम्। निबन्धास्तु स्मृत्यादिविचाररूपा इति तु विशेषः।

अत्र च मन्वादिस्मृतीनां वेदमूलकत्वेनैव प्रामाण्ये वर्णिते श्रुतिविरुद्धानामपि तासां प्रामाण्यापत्तिरिति शङ्कायां "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" इति सूत्रं प्रवृत्ते। तथा च—"औदुम्बरीः स्पृष्ट्वोद्गायति" इति श्रुतिविरुद्धा "औदुम्बरी सर्वा वेष्टितव्या" इति स्मृतिरप्रमाणमिति॥

अत्रैवं शङ्का जायते कथं तर्ह्येतत्स्मरणम्? नहि पूर्वतनानुभवमन्तरा स्मरणं संभवति। धर्मस्य चानुभवो न वेदमन्तरा प्रमाणान्तरेण भवतीति, तदर्थमिदं सूत्रम् "हेतुदर्शनाच्च" इति। अनेन हि सूत्रेण श्रुतिविरुद्धस्मृतौ कामादिकं दृष्टं कारणान्तरमेव निमित्तम् न तु प्रमाणजन्यानुभवो निमित्तमिति निरूपितम्।

इदं तु सूत्रं वार्तिककाराः संभाव्यमानदृष्टहेतुकानां सर्वासामपि स्मृतीनां श्रुतिविरुद्धानां तदविरुद्धानां वा अनुमेयश्रुतिमूलानामप्रामाण्यसाधनपरतया योजयन्ति।

तथाच सूक्ष्मगवेषणयापि यदि निमित्तं दृष्टं कस्याश्चन स्मृतेः संभाव्यते तर्हि तस्याः सर्वस्या अपि स्मृतेः न प्रामाण्यमिति सिद्धमितीदानीन्तनानां जनानां कालदेशाद्यनुगुणं मन्वादिभिः धर्मनिर्णयादिभिः कल्पिता एव स्मृतय इत्यादिकल्पनं निरालम्बनमेव।

यत्तु—पाराशरस्मृतौ "कलौ जनानां सौकर्यार्थं प्रायश्चित्तसङ्कोचार्थं स्वस्याः प्रवृत्तिरुपवर्णिता" इति तस्याऽयमाशयः—"आख्यातानां अर्थं ब्रुवतां शक्तिः सहकारिणी" इति न्याय एको वरीवर्ति। अनेन न्यायेन यत्र यत्र विधिः पुरुषं प्रवर्तयति तत्र सर्वत्र पुरुषस्य शक्तिरपि सहकारिणीति बोधयति। तथाच शक्तस्यैव विहितेषु सर्वत्र कर्मस्वधिकारो नाशक्तस्य। तत्र चातिक्लेशसाध्यप्रायश्चित्तेऽशक्तानधिकारिण उद्दिश्य तत्र सङ्कोचकरणं न दोषाय।

एवं युगभेदेन केषां चन धर्माणामधर्मत्वव्यवस्थापनमपि तादृशधर्मानुष्ठानाशक्तिदर्शनेनैव महर्षिवर्यैः कृतम्।

अयं भावः— येषां पापानां निवृत्त्यर्थं महाक्लेशसाध्यमल्पक्लेशसाध्यं च प्रायश्चित्तं विकल्पेन विहितम्, तत्र शक्तिपर्यालोचनया युगभेदेन व्यवस्थापनमेव शास्त्रकारैः कृतम्, न तु स्वतन्त्रं प्रायश्चित्तान्तरं कल्पितम्। अतएव पराशरमाधवीये तत्र विकल्पव्यवस्थापनमुपपद्यते। "कलौ पराशरः स्मृतः" इति वचनस्याप्ययमेवाशयः—यत्प्रायश्चित्तविषये पराशरीयव्यवस्थैव कलौ समादरणीयेति।

अत्र च प्रायश्चित्तसङ्कोचादिकमधिकारिभेदेनैवेति महाप्रायश्चित्तशक्तानां महाप्रायश्चित्तमेव कर्तव्यमिति मन्वादिस्मृतीनामपि कलौ प्रामाण्यं नानुपपन्नम्।

अत्रेदं विचारणीयम्—सत्यं अदृष्टार्थाष्टकाश्राद्धकर्तव्यतादिस्मृतीनां न प्रत्यक्षादिकं किमपि मूलं संभवतीति वेदमूलकत्वमेवेति, व्यवहाराध्यायादीनामर्थशास्त्राणां च कथं वेदमूलकत्वम्? ते हि दृष्टहेतुका एवोपलभ्यन्ते। अतएव व्यवहारालयेऽप्याधिकारणिकाः यथेच्छमेव स्मृत्यादिविरुद्धानपि निश्चयानातन्वते। यथा ब्रह्मचारिगृहीतस्य दत्तकस्यापि तदीयदायाधिकारः इत्यादिनिर्णयो न्यायवादिषु कार्यकारी वरीवर्ति। तथाच व्यवहाराध्यायो मन्वादिस्मृतिषु कथं प्रमाणमिति?

अत्रेदं तत्त्वम्—अर्थशास्त्राणां यद्यपि दृष्टमेव हेतुः तथापि तदीयार्थस्य यथावदेवानुष्ठानेनादृष्टविशेषस्यापि लाभो वर्तत एव। अतएव—"अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरकं चैव गच्छति॥" इति मन्वादिवचनमुपपद्यते। तथाच दायभागादिष्वप्यनधिकारिणां दायस्वीकारोऽनर्थायैव स्यात्। संपादितानामर्थानां हि भोजनादिव्यवहार इव धर्मानुष्ठानार्थेऽपि विनियोगः करणीयः। तत्र भोजनाद्यविहितकार्याणां कथंचिदन्यायार्जितधनैरपि निर्वाहेऽपि धर्माद्यनुष्ठानस्य तैः कथमपि निर्वाहो न भवति। तथाच व्यवहाराध्यायोऽपि श्रुतिमूल व न स्वतन्त्रं मन्वादिकल्पित इति सर्वथा प्रमाणमेवेति तद्विरुद्धानामिदानीन्तनानां व्यवहारालयाध्यक्षनियमानां न प्रामाणिकत्वमिति पश्यामः। नहि मन्वादय इवादृष्टधर्मपक्षपातेनेदानीन्तना नियमान्व्यवस्थापयन्ति, किंत्ववैदिकानामपि बहूनामाशयानुसारेण। नहि धर्माधर्मादिकथा भारतीयानां समुदायव्यवस्थासिद्धा, किंतु सर्वप्रमाणमूर्धन्यनिरस्तसमस्तदोषजातापौरुषेयनित्यवेदैकमूलसिद्धा। नहि वेदः पौरुषेय इति तु पूर्वमेव निरूपितम्। तथाच श्रुत्यविरुद्धानामसंभाव्यदृष्टहेतूनां च वैदिकमन्वादिस्मृतीनां धर्मप्रामाण्यमनपोह्यं सिद्धं भवति।

शाक्यादिस्मृतीनां त्वहिंसादिविषयाणामपि न प्रामाण्यमहिंसादिधर्मत्वे। सत्यवदनादिकं हि वेदवाक्याज्ज्ञायमानमेवाऽनुष्ठीयमानं फलाय कल्पते। वैदिकविध्यादिज्ञानं हि शाब्दभावनायां करणत्वेनान्वेतीति तादृशकरणं विना संपादिता प्रवृत्तिर्न वेदोक्तफलसाधनाय पर्याप्ता भवति। तथाच अर्थवादाधीनप्राशस्त्यज्ञानं विनानुष्ठीयमानं कर्म न यथा तत्फलं

जनयति, मन्त्रपूर्वकार्थज्ञानं विनानुष्ठीयमाना मन्त्रार्था यथा न फलं जनयितुमीशते तथा वैदिकलिङादिजनितप्रवर्तनाज्ञानं विना प्रवृत्तिरपि न फलमुत्पादयितुमलमिति शाक्यादिस्मृत्यनुसारेणानुष्ठीयमानमहिंसादिकं नादृष्टं पारलौकिकं फलं संपादयति । यथा स्वभावतः सर्वादरणीयं विशेषतः "पयो ब्राह्मणस्य व्रतम्" इति ब्राह्मणव्रतत्वेन कीर्तितं च पयः श्वचर्ममये पात्रे निक्षिप्तं सर्वथाऽशुद्धं सत्सर्वेषामनादरणीयं भवति, एवमवैदिकशाक्यसंबन्धाद्वैदिकधर्माधर्मादिव्यवस्थाप्यहिंसादीनां न संभवतीति मन्तव्यम् ।

एतदभिप्रायेणैव "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥" इति धर्मस्थानानां चतुर्दशत्वेन प्राचामाचार्याणां परिगणनम् । तथाच श्रुत्यविरुद्धा अपि शाक्यादिस्मृतयः श्रुतिविरुद्धा मन्वादिस्मृतय इव न धर्मे प्रमाणम् ।

श्रुतिविरोधश्च मन्वादिस्मृतीनां न श्रुतित्वेन स्मृतित्वेन च भवति, किंतु विरुद्धार्थप्रतिपादकत्वेनेति प्रबलार्थावलम्बा स्मृतिरपि प्रबलैव, दुर्बलार्था श्रुतिरपि दुर्बलैव । अर्थस्य प्राबल्यं यदि सोऽनुष्ठेयः । तथाच श्रुत्यर्थस्यानुष्ठेयत्वेऽनुष्ठेयधर्मत्वे वा स्मृत्यर्थस्यानुष्ठेयत्वे च स्मृतिरेव तत्र बलीयसीति स्मृत्यनुसारेण श्रुतेः सङ्कोचोऽपि क्वचन न दोषाय भवति । यथा "वेदं कृत्वा वेदिं करोति" इति श्रुतेः "क्षुते आचामेत्" इति स्मृत्यनुसारेण सङ्कोचः ।

तथाहि—वेदो नाम संमार्जनार्थो दर्भमुष्टिविशेषः । तं कृत्वानन्तरं वेदिं मण्टपं कुर्यादिति श्रुतेरर्थः । "क्षुते आचामेत्" इति स्मृतेस्तु यदा यदा कर्ममध्येऽपि क्षुतं भवति तदा तदा आचमनं कर्तव्यमित्यर्थः । तत्र यदि वेदकरणान्तिमक्षणे क्षुतं भवति तर्हि तदनन्तरमाचमने क्रियमाणे श्रुतिविरोधः । यदि वेदिः क्रियते तर्हि आचमनस्मृतिविरोध इति विरोधपरिहारः वेदकरणानन्तरमाचमनं कृत्वा वेदिकरणमिति वाक्यार्थस्वीकारेणैव करणीयः ।

कृत्वेति क्त्वाप्रत्ययस्य हि पूर्वकालतार्थः । सा च वेदवेदिकरणयोर्मध्येऽन्यस्यानुष्ठानेऽप्युपपद्यते । क्रमो हि सः । न च सोऽनुष्ठातुं शक्यः आचमनं त्वनुष्ठेयम् । तथाच स्मृत्यप्रामाण्ये पदार्थबाधः श्रुतिसङ्कोचे पदार्थधर्मक्रमबाध इति स्मृतिप्राबल्यमेवात्र सिद्धं भवति । तथाच स्वरूपतः प्रबलापि श्रुतिः प्रबलाऽऽचमनरूपपदार्थाश्रिताऽऽचमनस्मृत्यपेक्षया दुर्बलैव ।

तदुक्तम्—"अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः । दुर्बलैरपि बाध्यन्ते प्रबलैः पार्थिवाश्रितैः ॥" इति ॥

तथाच यत्र स्मृतौ श्रुतौ च विरुद्धावनुष्ठेयौ पदार्थौ भासेते तत्रोपजीव्योपजीवकभावप्रयुक्तप्राबल्यदौर्बल्याभ्यामेव व्यवस्थेति न श्रुतिस्मृत्योः समानयोगक्षेमं प्रामाण्यमिति न विरोधः ।

स्मृत्यपेक्षयापि दुर्बला मीमांसान्याया अपि प्रबलपदार्थाश्रिता श्रुतिमपि यथोक्तन्यायेन बाधन्त एव । अतएव "वेदमधीत्य स्नायादि"त्याम्नायेन वेदाध्ययनानन्तरं समावर्तनविधानेऽपि न्यायसिद्धानुष्ठेयविचारानन्तरमेव समावर्तनविधिस्तत्रोपपद्यते ।

तदुक्तं भाष्ये—"अतिक्रामाम इममाम्नायं अनतिक्रामन्तोऽर्थवन्तं सन्तं वेदमनर्थकं कल्पयेमे"ति ॥

यत्तु जिज्ञासाधिकरणभाष्ये—"अस्नाननियमानां समापनमेवात्र विधीयते" इति व्याख्यातम्, तदप्येतन्न्यायमूलमेव । तथाचोपजीव्यत्वेन प्रबलापि श्रुतिः कुत्रचन प्रबलपदार्थाश्रितया स्मृत्यापि बाध्यत इति सिद्धम् ।

प्रसिद्धं ह्युपजीव्यस्याप्यतिदेशस्योपजीवकेनोपदेशेन बाधनं "यो होता सोऽध्वर्युरि"त्यादौ । तत्र हि होतुरध्वर्युत्वे उपदिष्टे सति आतिदेशिकस्य होतृधर्मविशेषस्य होत्रा नानुष्ठानं कर्तव्यमिति दशमे निरूपितम् ।

अतएव प्रकरणोपजीव्यापि समाख्या प्रबललिङ्गोपष्टम्भेन प्रकरणबाधिका । तथाच पूषानुमन्त्रणमन्त्राणां दर्शपूर्णमासप्रकरणपठितानामपि पूषदेवताप्रकाशकत्वरूपलिङ्गसहकृतयागानुमन्त्रणसमाख्यानुसारेण पूषदेवताके यागे समुत्कर्ष इति तृतीये निरूपितम् । तदुक्तं—"यागानुमन्त्रणानीति समाख्या क्रतुयोजिका । पूषानुमन्त्रणमन्त्राणां तस्मात् तद्दैवते क्रतौ ॥" इति ॥

लोकेऽप्ययं न्यायो बरीवर्ति । तदुक्तं वार्तिके—"अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः । दुर्बलैरपि बाध्यन्ते प्रबलैः पार्थिवाश्रितैः ॥" इति ॥ तथाच प्रथमं श्रुतिबाध्यत्वं स्मृतेः, अनन्तरं स्मृतिबाध्यत्वं श्रुतेरुक्तमिति न विरोधोऽत्र समापतति ।

**एतेन** सदाचारप्रामाण्यमपि **व्याख्यातम्** । तथाहि—"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः" इति श्रुतिस्मृती इव सदाचारात्मतुष्टी अपि धर्मप्रमाणमामनन्ति । तत्रेयमाशङ्का भवति, सदाचाराः सर्वेऽपि यदि धर्मे प्रमाणं तर्हि "धर्मव्यतिक्रमो दृष्टो महतामपि साहस"मिति वचनसिद्धा अपि धर्मप्रमाणं भवेयुः ।

प्रसिद्धमिदं सर्वेषाम्—यद्विश्वामित्रो वसिष्ठशापाच्चण्डालं त्रिशङ्कुमयाजयत्, ब्रह्मचार्यपि भीष्मो बहूनश्वमेधानन्वतिष्ठत्,

पाण्डवार्जितैर्धनैर्धृतराष्ट्रोऽन्धोऽयजत्, युधिष्ठिरोऽर्जुनवीर्यसंपादितां द्रौपदीमात्मार्थेऽपि पर्यणैषीत्, अन्येऽपि धार्मिका बहवः किमपि किमप्यधर्मजातमाचरन् आचरन्ति चेति। एवं च को धर्मः कश्चाऽधर्मः इति धर्माधर्माध्यवसानं शिष्टाचारप्रमाणतायां न संभवति। ते नाम शिष्टा ये सदाचारशीलाः, ते सदाचाराः ये तेषामाचारा इति परस्पराश्रयदोषोऽपि शिष्टाचारप्रमाणतायां भवति। अस्तु वा कथंचिदपि शिष्टाचारप्रमाणता, तथापि "आचारश्चैव साधूनां" इति स्मृतिष्वाचारप्रामाण्यमुपक्षिप्तमिति स्मृतिप्रामाण्येनैवाचारप्रामाण्यमपि सिद्धमिति पृथगाचारप्रमाणतोक्तिः "श्रुतिः स्मृतिः सदाचारः" इत्यत्र निष्प्रयोजनैव संपद्यते। **एतेन—आत्मतुष्टिप्रमाणतापि—निरस्ता।**

"भिन्नरुचिर्हि लोकः" इति न्यायेन विचित्रा खल्वात्मतुष्टिर्भवति। तदुक्तं वार्तिके—"कस्यचिज्जायते तुष्टिरशुभेऽपि हि कर्मणि। शाक्यस्येव कुहेतूक्तिवेदब्राह्मणदूषणे। पशुहिंसादिसंबन्धे यज्ञे तुष्यन्ति हि द्विजाः। तेभ्य एव हि यज्ञेभ्यः शाक्याः क्रुध्यन्ति पीडिताः। स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति। अन्ये तु सव्यलीकेन मनसा तन्न कुर्वते॥" इति। एवं च—"आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" इति मनुवचनमप्रमाणमिति पश्यामः।

मनुस्मृतिर्हि—स्वतो न धर्माधर्मयोः प्रमाणम्, किंत्वनुमितश्रुतिद्वारा। श्रुतिविरुद्धा च स्मृतिर्न श्रुत्यनुमापनाय क्षमते इति हि शबरस्वामिनोऽभिप्रयन्ति, एवं चाव्यवस्थितात्मतुष्टिप्रमाणतायां बहुविधश्रुतिव्याकुलता भवेदिति न सा प्रमाणम्, एवमाचारोऽपीति मन्तव्यम्। एवंचाचारप्रामाण्यवादोऽयं न शोभतेतरामिति।

वयं तु पश्यामः—प्रमाणमेव धर्माधर्मयोः सदाचार इति। नहि सतामाचाराः सर्वेऽपि धर्मप्रमाणमिति वयं वदामः, किंतु धर्मबुद्ध्याऽनुष्ठीयमाना एव। नहि विश्वामित्रादयः स्वकीयं धर्मव्यतिक्रमं साहसकृतं धर्ममपि मन्यन्ते। पुराणेषु हि विश्वामित्रादीनां धर्मव्यतिक्रमो न धर्मबुद्ध्येति तेषां पश्चात्तापादिप्रकाशनेन स्पष्टमेव निरूप्यते।

यत्तु भीष्मस्य ब्रह्मचारिण एव सतः यागानुष्ठानम्, तत्तु "तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा" इति न्यायेन लघुमञ्जूषायां नागेशभट्टाचार्यैः समाहितम्। कुमारिलपादास्तु तन्त्रवार्तिके "भीष्मो न ब्रह्मचारी, किंतु गृहस्थ एव" इति वर्णयन्ति। पितृनिकटे या प्रतिज्ञा कृता न विवाहो मया क्रियते इति न सा धर्मार्थपत्नीविवाहविषया, किंतु पुत्रार्थपत्नीविवाहविषया। पुत्रार्थविवाहो हि तस्यैव नियतः, योऽन्यथा पितुः ऋणमपाकर्तुं न पारयति। भीष्मस्तु—"भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत्। सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत्॥" इति विचित्रवीर्यक्षेत्रजलब्धपितृऋणत्वः केवलयज्ञार्थपत्नीसंबन्धशालीति कल्पनायां न कोऽपि विरोधः समापतति। तदुक्तं वार्तिके—"यो वा पिण्डं पितुः पाणौ विज्ञातेऽपि न दत्तवान्। शास्त्रार्थातिक्रमाद्भीतो यजेतैकाक्यसौ कथम्॥" इति॥

शापानुग्रहसमर्था हि महर्षयः स्मर्यन्ते। तद्यथा—महर्षिवचनाद्धृतराष्ट्रोऽन्धः संवृत्तः, यथाच व्यासानुग्रहादाश्चर्यपर्वणि पुत्रानदर्शत्, एवं ऋतुकालेऽपि कस्यापि महर्षेरनुग्रहवशात्तस्यान्धत्वं निवृत्तमिति वार्तिककारा निरूपयन्तीति न धृतराष्ट्राचारोऽयमसदाचारः॥

पाण्डुपुत्राणामेकद्रौपदीपरिणयः सदाचारो वाऽसदाचारो वेत्यत्र वार्तिककाराणां वचनानि प्रियपाठकानामत्यन्तमेव कुतूहलं जनयेयुरिति तान्येवात्र निर्दिशामः। "या चोक्ता पाण्डुपुत्राणामेकपत्नीविरुद्धता। सापि द्वैपायनेनैव व्युत्पाद्य प्रतिपादिता॥ यौवनस्थैव कृष्णा हि वेदिमध्यात्समुत्थिता। सा च श्रीः श्रीश्च भूयोभिर्भुज्यमाना न दुष्यति॥" अत एवोक्तम्—"इदं च तत्राद्भुतरूपमुत्तमं जगाद विप्रर्षिरतीतमानुषः। महानुभावा किल सा सुमध्यमा बभूव कन्यैव गते गतेऽहनि॥" इति। नहि मानुषीष्वेवमवस्थोपपद्यते। अतएव वासुदेवेन कर्ण उक्तः—"षष्ठे च त्वामहनि द्रौपदी पर्युपस्थास्यति" इति॥

अथवा—पञ्चैव ताः सदृशरूपाः द्रौपद्य एकत्वेनोपचरिता इति व्यवहारार्थापत्त्या गम्यते। "यद्वा नार्यर्जुनस्यैव केवलस्य भविष्यति। साधारणप्रसिद्धिस्तु निश्छिद्रत्वाय दर्शिता॥" यथा सभामध्यमानीयमाना सपुत्रकस्य धृतराष्ट्रस्यायश उत्पादयितुमात्मानं ख्यापयितुं सहसैव द्रौपदी रजस्वलावेषं कृतवती, तथैव केवलार्जुनभार्याया एव सत्याः श्रीत्वं जनेनाविदितं परस्परविरोधासंदेहं च दर्शयितुं साधारणपत्नीत्वप्रख्यापनमिति।

एवंच शिष्टाचारप्रमाणतायां न धर्माधर्माध्यवसानासंभवः। वेदविहितार्थकारिणः शिष्टाः तेषामाचाराः सदाचारा इति न परस्पराश्रयदोषः समापतति। एवंच "आचारश्चैव साधूनां" इत्याचारप्रमाणतावचनमुपपद्यत एव। शाखान्तरगतवेदवाक्यदर्शनमूलानि स्मरणानि प्रमाणत्वेनोरीकृतानि, न तथा सदाचारस्य किमपि मूलं स्मृतेरिव कल्पयितुं शक्यते। यदि हि किमपि मूलं दृष्ट्वैव सदाचारप्रमाणता मन्वादिभिरुपक्षिप्ता स्यात्, तर्हि कुतो वा तेषां स्मरणं न कृतमिति परप्रत्ययेनैव सदाचारः प्रमाणमिति स्मृतिप्रामाण्यसाधनेनैव नाचारप्राण्यसिद्धिसंभवः। **एतेन आत्मतुष्टिरपि व्याख्याता।** तदुक्तं वार्तिके—"यथा रुमायां लवणाकरेषु मेरौ यथा वोज्ज्वलरुक्मभूमौ। यज्जायते तन्मयमेव तत् स्यात्तथा भवेद्वेदविदात्मतुष्टिः॥ एवं हि विद्वद्वचनाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम्। सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥" इति॥

अयमाशयः—यथा तपोविशेषैराराधितानां देवतानामयं मन्त्रो विषयो भवत्विति वरदाने सति तस्य मन्त्रस्य सकृन्मन्त्रण मात्रेण सर्पादिविषान्यपशेषतां प्राप्नुवन्ति, तथा वैदिकमन्वादिभिः शिष्टाचारः प्रमाणमिति वचनमात्रेण स प्रमाणमेव भविष्यति।

यत्तूक्तं—"कस्य चिज्जायते तुष्टिरशुभेऽपि हि कर्म(णि)" इत्यादि, तदपि **एतेन परास्तम्**। नहि वैदिकानन्तधर्मसंस्कृतात्मनां साधूनामधर्मेषु स्वाभाविकी प्रवृत्तिः संभवति। प्रत्यहं धर्मानुष्ठानव्यग्रचित्तस्याधर्मभीतस्य च सज्जनस्य हि न कदापि स्वरसेनात्मतुष्टिर्धर्मादन्यत्र संभवति, न वा तादृशस्य धर्मादन्यत्राचरणे प्रवृत्तिरपि संभवति। उक्तं च वार्तिके—"यथा वा सर्पसिद्धान्ते नकुलो यां किलौषधिम्। दन्तैर्गृह्णाति तामाहुः समस्तविषहारिणीम्। यथा वा यां भुवं कश्चिदध्यावसति पुण्यकृत्। तथाचारात्मतुष्ट्यादिधर्मं धर्ममयात्मनाम्। वेदोक्तमिति निश्चित्य ग्राह्यं धर्मबुभुत्सुभिः॥" इति॥

अत्रेदं विचारणीयम्—स्मृत्याचारौ किं समबलौ उत स्मृतिः प्रबला आचारो दुर्बल इति। तत्र वार्तिककाराः तयोः समबलत्वं केषांचन मतेनोपपादयन्तस्तयोः स्मृतिः प्रबला आचारस्तु दुर्बल इति निरूपयन्ति। तदुक्तं तन्त्रवार्तिके—"शिष्टं यावच्छ्रुतिस्मृत्योस्तेन यत्र विरुध्यते। न शिष्टाचरणं धर्मे प्रमाणत्वेन गम्यते। यदि शिष्टस्य कोपः स्याद्विरुध्येत प्रमाणता। तदकोपात्तु नाचारप्रमाणत्वं विरुध्यते॥" इति॥

अत्रेदं विचारयामः—कथमिदमुपपद्यते यत् देशभेदेनाचारव्यवस्था न संभवतीति निरधारि जैमिनीयैः "यस्मिन्देशे य आचारः" इत्यादिवचनं मातुलकन्यापरिणयादीनां देशभेदेन धर्माधर्मव्यवस्थापनमापस्तम्बादीनां च तद्विरुद्धमुपलभ्यत इति? तत्र वार्तिककाराः यदि मातुलकन्यापरिणयादयः केवलाचारप्रामाण्याधिकरणेन धर्माः, तर्हि स्मृतिविरुद्धस्याचारस्याप्रमाणत्वात्तेषामधर्मत्वमेव, न देशभेदेन धर्माधर्मव्यवस्थेत्याचारप्रामाण्याधिकरणे निरूपयन्ति। यदा तु "मातुलस्येव योषा" इत्यादिमन्त्रलिङ्गात्ते धर्मास्तदा न तेषामधर्मत्वं स्मृत्या आश्रयितुमीहामहे। "यस्मिन्देशे य आचारः पारंपर्यक्रमागतः। वर्णानां सान्तरायाणां स सदाचार उच्यते॥" इति वचनं तु वार्तिककारैः तदनुसारिभिर्न्यायसुधाकारैश्च स्मृत्यविरुद्धकुलधर्मादिविषयं व्याख्यातमिति न कोऽपि विरोधः। **एतेन**—"येनास्य पितरो याता येन याताः पितामहाः। तेन यायात् सतां मार्गं तेन गच्छन्न दुष्यति॥" इति मनुवचनमपि **व्याख्यातम्**॥

एवंच मातुलकन्यापरिणयादयो यदि धर्मास्तर्हि सर्वदेशीयानामपि धर्माः, यदि वाऽधर्माः स्मृतिविरुद्धत्वात्तर्हि सर्वदेशीयानामप्यधर्माः, अतएव हि "पञ्चधा विप्रतिपत्तिः दक्षिणतोऽनुपनीतेन भार्यया च सहभोजनं पर्युषितभोजनं उच्छिष्टभोजनं पितृस्वसृमातुलदुहितृपरिणयनमिति, तत्रोत्तरतः पञ्चधा—ऊर्णाविक्रयः सीधुपानं समुद्रयानमित्यादिना आपस्तम्बमतेनोपपाद्य "मिथ्यैतदिति गौतमः उभयं त्वेतन्नाद्रियते शिष्टस्मृतिविरोधात्" इति बोधायनेन देशभेदेन धर्माधर्मव्यवस्थानिराकरणमुपपद्यते।

अयमत्र निष्कर्षः—ये हि आचारप्रामाण्येन मातुलकन्यापरिणयं धर्मं मन्यन्ते, तन्मते स्मृतिविरोधात्तस्य धर्मता नोपपद्यते सर्वस्मिन्नपि देशे। ये तु तं श्रुतिसिद्धं मन्यन्ते तेषां श्रुतिविरुद्धस्मृतेरेवाप्रामाण्यात्सर्वस्मिन्नपि देशे स धर्म एव। ये तु स्मृतिसिद्धं तमभिप्रयन्ति तेषां तु मते स विकल्पेन धर्मः, सोऽपि देशविशेषापेक्षया न, किंतु सर्वदेशापेक्षयैव। एवंच आचारप्रामाण्याधिकरणे वार्तिककारेण तत्र तत्र तस्याधर्मत्वमिव यत्सूच्यते न तद्वस्तुगत्यनुसारेण। आत्मतुष्टिप्रामाण्योपक्रमे—"पशुहिंसादिसंबन्धे यज्ञे तुष्यन्ति हि द्विजाः। तेभ्य एव तु यज्ञेभ्यः शाक्याः क्रुध्यन्ति पीडिताः। स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति। अन्ये तु सव्यलीकेन मनसा तन्न कुर्वते॥" इति वदन्तो हि कुमारिलपादाः द्विजसंतोषाधायको यागः शाक्यासंतोषाधानकारणमिति यथा नाधर्मः श्रुतिविहितत्वात् एवं दाक्षिणात्यसंतोषकारणं मातुलसुतापरिणयनमन्यासंतुष्टिनिदानमपि नाधर्म इति ज्ञापयन्ति। यदि हि मातुलसुतापरिणयमाचारप्रामाण्येन धर्मं वयमुपगच्छेम, तर्हि तस्याधर्मत्वं कल्पयितुं शक्येत, नचैतदस्ति। एवंच सदाचारप्रामाण्येनानध्यायव्रतशक्रध्वजोत्सवादीनामेव धर्मत्वम्। तदुक्तं वार्तिके—"प्रदानानि जपो होमो मातृयज्ञादयस्तथा। शक्रध्वजमहो यात्रा देवतायतनेषु च। कन्याकानां च सर्वासां चतुर्थ्याद्युपवासकाः। प्रदीपप्रतिपद्दानमोदकापूपपायसाः। वैदिकैः कर्तृसामान्यादेषां धर्मत्वमिष्यते॥" इति॥ यद्यपि "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥" इति धर्मस्थानेष्वाचारो नोपन्यस्तः; तथापि स्मृतेरिवाचारस्यापि परोक्षवेदद्वारैव प्रामाण्यान्न धर्मप्रमाणतानुपपत्तिः। सर्वथा च सदाचारः प्रमाणमेवेति सिद्धम्॥

स्मृत्याचारयोर्यतो न समबलत्वं अतएव प्रथमाधिकरण एव नाचारप्रामाण्यविचारः किंतु पञ्चमाधिकरण एव तद्विचारः, अन्यथा कल्पसूत्रादीनामिवाचारस्यापि स्मृत्यधिकरण एव प्रामाण्यविचारापत्तिः। स्मृत्यधिकरणे परोक्षवेदानुमापनद्वारा स्मृतेरिवाचारप्रामाण्याधिकरणे स्मृत्यनुमापनद्वारा आचारप्रामाण्यं तदधिकरणे निरूप्यते, तथाच स्मृत्यधिकरणे परोक्षवेदप्रामाण्यस्यैव व्यवस्थापनेऽप्याचारप्रामाण्याधिकरणादौ परोक्षस्मृतिप्रामाण्यस्यैव व्यवस्थापनात्स्मृतिपाद

इत्येव तृतीयपादस्य नाम न परोक्षवेदपाद इति। तथा च स्मृतिस्थल इवाचारेऽपि स्मृत्यविरुद्ध आचारः प्रमाणं, स्मृतिविरुद्धाचारोऽप्रमाणं, संभाव्यमानदृष्टहेतुकशिष्टाचारोऽप्रमाणं, प्रबलपदार्थाश्रिताचारविरुद्धा स्मृतिर्न प्रमाणमित्यादिन्याया अनुसन्धेयाः। स्मृत्यविरुद्ध आचारः प्रमाणमित्यस्योदाहरणं होलाकाद्याचारः, स्मृतिविरुद्धाचारोऽप्रमाणमित्यस्योदाहरणं सीधुपानादिकं विश्वामित्रादिकृतमेनकादिगमनम्। संभाव्यमानदृष्टहेतुकाचाराप्रामाण्यस्य प्रबलाचारविरुद्धस्मृतिबाधस्य चोदाहरणं मृग्यम्। यत्तु स्मृतिविरुद्धाचाराप्रामाण्योदाहरणं मातुलकन्यापरिणयनमिति बहुषु स्थलेषु दृश्यते तत्तद्धर्मत्वबोधकश्रुतिस्मृत्यभावं कृत्वा आशङ्क्यैव न वस्तुगत्येति पूर्वमेव निरूपितम्।

सचायमाचारः शब्दसंबन्धी अर्थसंबन्धी च। शब्दसंबन्ध्याचारः शब्दस्यार्थविशेषबोधोद्देशेन प्रयोगः, अर्थसंबन्ध्याचारोऽर्थस्यानुष्ठानमिति विवेकः। तत्र स्मृतिप्रामाण्यस्थले अहिंसादिधर्मसंबन्धिन्यपि शाक्यादिस्मृतिर्यथा न प्रमाणमिति निरूपितं न तथाऽत्र शब्दसंबन्ध्याचारः सर्वथा नादरणीयः, किंतु वैदिकाचारविरोध एव। तथाच पिकनेमादिशब्दानां म्लेच्छप्रसिद्ध्यनुसारेणार्थनिर्णयो भवत्येव वैदिकानाम्। त्रिवृदादिशब्दानां तु वाक्यशेषाद्यनुसार्येवार्थः स्वीकरणीयः; वैदिकप्रसिद्धिविरुद्धम्लेच्छप्रसिद्धेरनादरणीयत्वात्॥

यत्तु प्रथमाध्यायचतुर्थपादे पुरोडाशादिशब्दानां वैदिकप्रसिद्ध्यनुसारेणाऽर्थो न स्वीकरणीयः, किंतु लोकप्रसिद्ध्यनुसारेण संस्कृतासंस्कृतपिष्टखण्डमात्रमर्थ इति निरूपितम्, तत् लौकिकप्रसिद्ध्यपरित्यागेन वैदिकप्रसिद्धिस्थले लौकिकप्रसिद्धिरेव स्वीकरणीयेत्यभिप्रायमिति न विरोधः।

ननु शब्दसंबन्ध्याचारस्यापि स्मृतिद्वारमेव खलु प्रामाण्यमङ्गीकरणीयम्। शब्दसंबन्धिनी च स्मृतिर्व्याकरणमेव। तथाच व्याकरणप्रामाण्यं विना नैतदुपपद्यत इति शङ्कायां व्याकरणप्रामाण्याधिकरणप्रारम्भः। स्मृत्यधिकरणेन व्याकरणप्रामाण्यमपि वैदिकस्मृतित्वाविशेषेण प्रमाणमिति न सिध्यति; तत्रार्थस्मृतिमात्रस्यैव ग्रहणेन शब्दस्मृतेरग्रहणात्॥

व्याकरणप्रामाण्यं च साधुशब्दनिर्वचनार्थम्। तच्च यदि लौकिकानां शब्दानां तर्हि धर्मप्रमाणविचारेऽस्मिन्नध्याये न तस्य सङ्गतिः। यदि वैदिकानां तर्हि वेदे साधूनामसाधूनां च सर्वेषां शब्दानामुपलम्भात् व्याकरणप्रामाण्येन वेदस्वरूपमेवोच्छिन्नं स्यादित्यनर्थायैव व्याकरणप्रामाण्याधिकरणं संपन्नमिति शङ्का भवति॥

तत्रेदं समाधानम्—लौकिकानां वैदिकानां च सर्वेषां शब्दानां साधूनां निर्वचनार्थमेव व्याकरणप्रामाण्यम्। तत्र लौकिकानां तन्निर्वचनस्य प्रयोजनं तु ऊहस्थले साधूनामेव लौकिकानां शब्दानां प्रयोगेणादृष्टसिद्धिर्नान्यथेति धर्मप्रमाणविचारेऽप्यस्मिन्नध्याये नासङ्गतिः। वैदिकानां तु "तस्य स्थूलपृषतीमि"त्यादौ स्वरविशेषनिर्णयद्वारा अर्थविशेषनिर्णयादिनाऽदृष्टोपयोगः सिद्ध एव वर्तते। सर्वथा व्याकरणप्रामाण्याधिकरणमत्यन्तमपेक्षितम्। तदुक्तं महाभाष्ये—"रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति॥" अस्य शब्दस्यायमर्थ इति विज्ञानं क्वचिद्व्याकरणात् क्वचित्कोशात् क्वचिदाप्तवाक्यात् क्वचिद्व्यवहारतश्च भवति। यत्तूपमानमपि शक्तिग्राहकमिति नैयायिकानां मतं तदिदं न सङ्गतम्। अन्यसादृश्यादन्यसादृश्यज्ञानं खलूपमानं नतु वाच्यवाचकभावज्ञानम्। विस्तृतं चैतत् श्लोकवार्तिक इति तत एव द्रष्टव्यम्। तत्र वैदिकानां येषां पदानां निगमनिरुक्तव्याकरणादिभिरर्थावबोधो भवतीति तत्र न काप्यनुपपत्तिः। व्यवहारात् येषां पदानामर्थनिर्णयोऽपेक्षितस्तेषामर्थाववोधार्थं लोकवेदयोः पदैकत्वमुपवर्णनीयम्। तदयमर्थो लोकवेदाधिकरणे निरूप्यते॥

अस्मिन्नधिकरणे—"क्रमन्यूनातिरिक्तत्वपदवाक्यश्रुतिस्मृतीः। पदावधारणोपायान्वदन्त्येके मनीषिणः॥" इति न्यायेन लौकिकानां वैदिकानां च पदानां क्रमभेदादिना भेदमाशङ्क्य अर्थभेदप्रतीत्युपयोगिनामेव तेषां पदभेदप्रयोजकत्वात् आत्मना त्मना इत्यादीनां रूपभेदेऽप्यर्थाभेदात्पदैकत्वमेवेति व्यवस्थापितम्॥

सचार्थ आकृतिर्वा व्यक्तिर्वेति संशये लोके वेदे चाकृतिरेव शब्दार्थो न व्यक्तिः। यद्यपि "व्रीहीन् प्रोक्षति," "गामानय," इत्यादौ नाकृतेरन्वययोग्यता, नहि प्रोक्षणानयनादिकमाकृतेर्भवति, किंतु व्यक्तिविशेषाणामेव; तथापि—"श्येनचितं चिन्वीत" इति वाक्ये श्येनाकृत्या चितमित्येवार्थोऽङ्गीकरणीयः। नहि श्येनपक्षिणां चयनं तत्र संभवति, अहिंसाशास्त्रादिविरोधात्। तथाच आकृतिरेव शब्दार्थः। "व्रीहीन् प्रोक्षति" इत्यादौ तु लक्षणया व्यक्तिबोधः। "श्येनचितं" इत्यादावाकृतेर्लक्षणया शब्दार्थत्ववादस्तु न युक्तः; व्यक्तिशब्दार्थत्वे हि व्यक्तीनामानन्त्यादनेकशक्तिकल्पनाप्रसङ्गः॥

**एतेन**—आकृतिविशिष्टव्यक्तिशब्दार्थतावादोऽपि—**परास्तः**; "नागृहीतविशेषणा शक्तिः विशिष्टमुपसङ्क्रामति" इति न्यायेनाकृतौ प्रथमं शक्तिकल्पनस्यावश्यकत्वेनैवेष्टसिद्धौ व्यक्तिशक्तिकल्पनाया अयोगात्। नच "पशुना यजेत" इत्यादावाकृतेरमूर्तायाः यागसाधनत्वासंभवः, अरुणाधिकरणन्यायेन मूर्तव्यक्तिपरिच्छेदद्वारा आकृतेरपि यागसाधनत्वात्। तथाच आकृतिरेव शब्दार्थः। तादृशार्थग्रहश्च व्यवहारादिना भवति, सच व्यवहारो यदि लौकिकानां वैदिकानां चाविरुद्धस्तर्हि सर्वोऽप्यादरणीयः। यदि विरुद्धस्तर्हि वैदिकानामेव स ऊरीकर्तव्यः। यदि वैदिकव्यवहाराभावस्तर्हि लौकिकव्यवहार आदरणीय इति व्यवहारस्याप्याचारकोटौ निवेशादाचारप्रामाण्य एवाऽऽकृत्यधिकरणस्यापि पर्यवसानम्। तथाच

स्मृत्याचारसिद्धा अपि धर्मा इति तयोरपि धर्मप्रामाण्यमविरुद्धम् । यथा वैदिकं वाक्यं साध्यसाधनेतिकर्तव्यतान्यतरसमर्पकं धर्मे प्रमाणम्, एवं स्मृत्याचारावपि । तदिदं सिद्धं यत् सर्वोऽपि वेदः परोक्षापरोक्षसाधारणः साध्यं साधनमितिकर्तव्यतां चैव बोधयतीति धर्मप्रमाणमिति ।

तत्रेयं शङ्का—नहि वेदे साध्यं साधनमितिकर्तव्यतैव वा बोध्यते । अतादृशोप्यर्थो हि वेदे प्रतिपाद्यते । यथा—"ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यत्र । यद्यपि यजिधातोर्यागः करणमर्थः स्वर्गकामपदस्य साध्यं स्वर्गोऽर्थः, ज्योतिष्टोमपदस्य तु यागनामधेयस्य न करणं इतिकर्तव्यता वाऽर्थः । तथाच ज्योतिष्टोमपदं कथं धर्मे प्रमाणम्? नचाऽयमर्थवादः, तेन स्तुतिबुद्धेरजननात् । नापि मन्त्रः; मन्त्रलक्षणाभावात्, अनुष्ठेयार्थस्मारकत्वाभावात्, मन्त्रत्वप्रकारकप्रसिद्ध्यभावाच्च । नचेदं पदं धर्मेऽप्रमाणमेव । न हि केनापि वर्णेन स्वरेण वा वेदगतेन नानर्थकेन धर्मानुपयोगिना वा भवितव्यमिति "स्वाध्यायोऽध्येतव्यः" इति विधितत्त्वविवेकिनां स्पष्टमेव विदितम् । तथाच नामधेयानां धर्मोपयोगः कथमिति ॥

अत्रेदं समाधानम्—नामधेयानामपि धर्मोपयोगो विद्यत एव । यद्यपि नामधेयं न भावनायां करणत्वेन भाव्यत्वेनेतिकर्तव्यतात्वेन वा पूर्वोक्तरीत्याऽन्वेति, नवा तत् मन्त्रार्थवादौ, तथापि धात्वर्थरूपकरण-परिच्छेदद्वारा करणमेव नामधेयेनापि समर्प्यते । अयं भावः—"यजेत स्वर्गकामः" इत्यत्र यजिधातुना यागसामान्यं विवक्ष्यते । तत्रच "निर्विशेषं न सामान्यं" इति न्यायेन यागविशेषज्ञानं नियमेनापेक्षितम् । यागविशेषज्ञानं च क्वचिद्द्रव्यादिना भवति । अत्रतु "सोमेन यजेत" इत्युत्पत्तिवाक्येन सोमद्रव्यकत्वावगमेऽपि न यागविशेषज्ञानं भवति । अनेके हि सोमद्रव्यका यागा अव्यक्ता विद्यन्ते । अव्यक्ता नाम स्वार्थचोदितदेवताशून्याः । तथाच तादृशानां सायस्कादीनां बहूनां विद्यमानत्वात् नामधेयेनैव यागविशेषज्ञानं भवतीति धात्वर्थपरिच्छेदद्वारा करणमेव धातुनापि समर्प्यत इति नामधेयमपि धर्मे प्रमाणमेव ॥

नामधेयानां तु सङ्कल्पादौ उपयोगः । गुणविशेषसंबन्धोऽपि यागविशेषाणां नामधेयेन भवति । यथा—"संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति" इत्यत्र वैमृधस्य पौर्णमास्यनुष्ठानानन्तर्यम् । एवं फलसंबन्धोऽपि । यथा—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यत्र षण्णामेव यागानां प्रधानानां फलसंबन्धः नतु प्रयाजाद्यङ्गानामपि ॥

विस्तरेण चोत्तरत्रैतन्निरूपयिष्यते । तथाचोपपदार्थानां दध्यादिद्रव्यानां यागसाधनतया नामधेयानां तत्परिच्छेदकतया धर्मोपयोग इति सिद्धम् ॥

तत्रेदमिदानीमवसरप्राप्तम्—यत्कुत्रोपपदं नामधेयं कुत्र द्रव्यदेवतान्यतरपरमिति । तत्रायं निष्कर्षः—यत्र वक्ष्यमाणेषु निमित्तेषु षट्सु एकमपि निमित्तं नास्ति तत्र द्रव्यदेवतान्यतरपरत्वम् । यत्र तु तदन्यतमं विद्यते तत्रोपपदं नामधेयमिति । तत्र प्रथमं निमित्तं यद्युपपदस्य यौगिकस्य द्रव्यपरत्वे मत्वर्थलक्षणाप्रसङ्गः नामधेयपरत्वे च तदभावः तर्हि तदुपपदं नामधेयमिति । यथा—"उद्भिदा यजेत पशुकामः" इत्यत्र यौगिकस्योद्भित्पदस्य द्रव्यपरत्वे मत्वर्थलक्षणाप्रसङ्गो नामधेयत्वे च तदभाव इति तत्पदं नामधेयम् ॥

तथाहि—दधिसोमादिपदानामिवोद्भित्पदस्यार्थविशेषे न रूढिर्विद्यते । अतः उद्भिद्यतेऽनेनेति व्युत्पत्त्या योगार्थमादायैवोद्भिच्छब्दस्य खनित्रं द्रव्यमर्थ इति वर्णनीयमित्युद्भित्पदं यौगिकम् । तच्चोद्भित्पदं यदि "उद्भिदा यजेत पशुकामः" इति वाक्ये द्रव्यपरं स्यात्तर्हि कतमो विधिस्तत्राङ्गीक्रियते इति विवेचनीयम् ।

तत्र न तावत् "अग्निहोत्रं जुहोति" इतिवत् प्रथमो विधिः; गुणफलयोरपि श्रवणात्; नापि "अग्निहोत्रं जुहुयात्स्वर्गकामः" इतिवत् द्वितीयः; गुणपदश्रवणात् । "दध्ना जुहोति" इतिवत्तृतीयविधिस्तु न संभवति; फलपदश्रवणात् । "दध्नेन्द्रियकामस्य जुहुयात्" इतिवत् चतुर्थविधिस्तु तदा स्यात् यदि दृष्टान्त इव धात्वर्थस्य प्रमाणान्तरेण प्राप्तिरत्र स्यात् । तत्र दृष्टान्ते "अग्निहोत्रं जुहोति" इतिवदत्र "सोमेन यजेत" इति वाक्यान्तरेणैव तत्प्राप्तिवर्णनं तु न संभवति; सोमेनेत्युत्पत्तिशिष्टद्रव्यावरोधे द्रव्यान्तरविधानासंभवेन ज्योतिष्टोम एव खनित्रद्रव्यस्य फलार्थं विधानासंभवात् । तदाश्रयं तत् भवितुमर्हति यत्साधनं यदवगतम्, यथा होमसाधनं दधीति दध्ना जुहोतीति वाक्यान्तरावगतत्वात् दध्नो होम आश्रय उक्तवाक्ये । तथाच सोमयागमाश्रित्य खनित्रद्रव्यं फलार्थं विधीयत इति वाक्यार्थसिद्ध्यर्थं प्रथमतः सोमयागे खनित्रद्रव्यविधानमनन्तरं फलसंबन्ध इति वर्णनीयम् । तच्च न संभवति; उत्पत्तिशिष्टगुणावरोधे गुणान्तरविधानासंभवात् । तथाच—"वाजिभ्यो वाजिनं" इत्यत्रेव "उद्भिदा यजेत" इत्यत्र खनित्रद्रव्यकयागान्तरविधानमेव विवक्षणीयम् । तत्र च भावनायां धात्वर्थस्यैव करणत्वं नतूपपदार्थस्यापि । उपपदार्थस्य तु द्रव्यस्य धात्वर्थोपकारकत्वमेवेति द्वितीयाद्ये भावार्थाधिकरणे निरूपितम् । तथाच "उद्भिदा यजेत" इत्यत्र यागेन पशुं उद्भिदा यागं च कुर्यादिति वाक्यार्थो न संभवति; एकेनैव यजिधातुना करणस्य फलस्य च यागस्य बोधासंभवात्, "सकृत्प्रयुक्तः शब्दः सकृदेवार्थबोधकः" इति न्यायेनानेकार्थबोधासंभवात् । तदुक्तं "शब्दबुद्धिकर्मणां विरम्यव्यापाराभावः" इति ।

यदि तु यागसंबन्धिनी भावनेति सामान्यतो यागस्य भावनायामन्वयो विवक्ष्येत तदापि विरुद्धत्रिकद्वयापत्तिर्भविष्य-

तीति वाजपेयाधिकरणे निरूपयिष्यते । तथाच "सोमेन यजेत" इत्यत्र मत्वर्थलक्षणां सोमशब्देऽङ्गीकृत्य सोमविशिष्टयागस्य यथा विधानं तथाऽत्रापि खनित्रविशिष्टयागस्यैव विधानमूरीकरणीयमिति द्रव्यपरत्वे मत्वर्थलक्षणाप्रसङ्गादुद्भित्पदं नामधेयमिति पश्यामः । तथाच नामधेयस्य धात्वर्थपरिच्छेदकस्य धात्वर्थाभिन्नत्वात् न भावनायां अनेककरणान्वयप्रसङ्ग इति न प्रतिपदाधिकरणविरोधो न वा भावार्थाधिकरणविरोध इति न "अग्निहोत्रं जुहोति" इत्यत्रेव मत्वर्थलक्षणा प्रसज्यत इति प्रथमनिमित्तेन उद्भित्पदं बलमित् विश्वजिदादिपदं च नामधेयम् ॥

"सोमेन यजेत" इत्यत्रापि यद्यपि द्रव्यपरत्वे मत्वर्थलक्षणा नामधेयत्वे च तदभावो विद्यते; तथापि सोमपदं लतायां रूढं न यौगिकमिति नैतन्निमित्तं तस्य नामधेयत्वमापादयति । किंच—सोमपदं यदि "सोमेन यजेत" इति वाक्ये नामधेयं स्यात् तर्हि तस्मिन्यागे न द्रव्यसिद्धिः स्यात् । "उद्भिदा यजेत" इत्यस्य नामत्वेऽप्यतिदेशादव्यक्तत्वेन ज्योतिष्टोमात् सोमद्रव्यं प्राप्नोति । नच विनिगमनाविरहः, उद्भिच्छब्दस्य यौगिकस्य कर्मद्रव्योभयसाधारणत्वस्य सोमपदस्य तदभावस्य च विनिगमकत्वात् । तत्सिद्धं मत्वर्थलक्षणापत्त्योद्भिदादिपदं नामधेयमिति ॥

भाट्टदीपिकायां खण्डदेवाचार्यास्तु—"सोमेन यजेत" इत्यत्र सोमशब्दस्यापि भावनायां करणत्वेनैवान्वयः । नचाऽनेककरणान्वयायोगः; एकजातीयानेककरणान्वयायोगेऽपि विजातीयानेककरणान्वयस्योपपन्नत्वात् । यागः फलसाधनतया भावनायां करणं सोमस्तु फलसाधनयागसाधनतया ततोऽपि परम्परया । तथाच सोमस्येतिकर्तव्यतात्वेनान्वय इति फलितमिति न मत्वर्थलक्षणाप्रसङ्ग इति—वदन्ति ॥

यदपि द्रव्यस्येतिकर्तव्यतात्वेनान्वयो न संभवति, क्रियाया एवेतिकर्तव्यतात्वादिति न्यायप्रकाशादावुक्तम्, तदिदं क्रियासंबन्धरहितद्रव्यविषयम् । अवान्तरक्रियासंबन्धे तु द्रव्यस्यापीतिकर्तव्यतात्वेनान्वयो भवत्येव । अतएव द्रव्याणामपि मन्त्राणामर्थप्रकाशनरूपावान्तरक्रियासंबन्धेन प्रकरणेनाङ्गत्वव्यवहारो मीमांसकानामुपपद्यते । तथाच सन्निहितयागरूपक्रियासंबन्धेन सोमस्येतिकर्तव्यतात्वेनाऽन्वयो युक्त एव ॥

अतएव—"नावान्तरक्रियायोगादृते वाक्योपकल्पितात् । गुणद्रव्ये कथं भावैर्गृह्णन्ति प्रकृताः क्रियाः ॥" इति वार्तिके **अवान्तरक्रियायोगादृते** इत्युक्तम् । ब्रह्मानन्दस्वरस्तोऽपि लघुचन्द्रिकायां सोमस्येतिकर्तव्यतात्वेन भावनान्वय इति मत्वर्थलक्षणां नाङ्गीकुर्वन्ति ॥

तथाच एतन्मतरीत्या "उद्भिदा यजेत पशुकामः" इत्यत्रोद्भित्पदस्य नामधेयत्वे निमित्तमेवं परिष्करणीयम्—यथा यौगिकस्य पदस्य द्रव्यपरत्वे इतिकर्तव्यतात्वेनान्वयप्रसङ्गो नामधेयत्वे तदभावश्च नामधेयत्वे प्रथमं निमित्तमिति । "सोमेन यजेत" इत्यत्र सोमस्येतिकर्तव्यतात्वेनान्वयेऽपि यौगिकत्वाभावान्न नामधेयत्वम् । "दध्ना जुहोति" इत्यत्र तु दधिपदं न यौगिकं नवा दध्न इतिकर्तव्यतात्वेनान्वय इति दधिपदमपि न नामधेयम् ।

"चित्रया यजेत पशुकामः" इति वाक्ये चित्रापदमपि चित्रत्वस्त्रीत्वरूपार्थद्वये प्रसिद्धमेव न यौगिकमिति नोद्भिदधिकरणन्यायेन नामधेयमिति चित्रत्वस्त्रीत्वरूपगुणद्वयविधानमेवात्र विवक्षितम् । तत्र च पूर्वतनवाक्येन "दधि मधु घृतमापो धानास्तण्डुलं तत्संसृष्टं प्राजापत्यं" इति वाक्येन विहिते दध्यादिसंसृष्टद्रव्यके यागे चित्रत्वस्यार्थसिद्धत्वात् स्त्रीत्वस्यान्वयायोगाच्च न यजिधातुना स याग उद्देष्टुं शक्यते, किंतु चित्रत्वस्त्रीत्वोभयस्य प्राणिद्रव्यासाधारणत्वात्प्राणिद्रव्यकयाग एवोद्देष्टव्यः ।

तत्र च प्राप्ते कर्मण्यनेकविधाने वाक्यभेदः । तदुक्तं—"प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः" इति ॥ प्राणिद्रव्यकश्च यागो यद्यग्नीषोमीयपशुयागः, तर्हि "अजोऽग्नीषोमीयः" इति वाक्येन तत्र पुंस्त्वस्य विधानान्न स्त्रीत्वविधानसंभवः । एवं "कृष्णसारङ्गोऽग्नीषोमीयः" इति वर्णान्तरविधानान्न चित्रत्वविधानसंभव इति "सारस्वतीं मेषीमालभते" इतिवाक्यविहितमेषीमनूद्य चित्रापदेन चित्रत्वविधाने एकेन चित्रापदेनैवोद्देश्यस्य विधेयस्य च समर्पणेनैकप्रसरताभङ्गापत्तिः ।

इयमेकप्रसरताभङ्गापत्तिर्वैयाकरणैः सामर्थ्यभङ्गापत्तिरित्यालङ्कारिकैरविमृष्टविधेयांशत्वदोषापत्तिरिति च व्यपदिश्यते । तदर्थं "वषट्कर्तुः प्रथमभक्षः" इत्यत्रेव प्राथम्यविशिष्टभक्षणस्यात्र चित्रत्वविशिष्टस्त्रीव्यक्तेर्विधाने गौरवलक्षणो वाक्यभेदः । प्राप्ते कर्मणि विशिष्टविधानासंभवान्नात्र चित्राविशिष्टयागविधानम् । सति संभवे न प्रकृतहानेनाप्रकृतयागान्तविधिविवक्षा युज्यते । तथाच वाक्यभेदापत्तिः द्वितीयं नामधेयत्वे निमित्तमङ्गीकरणीयमिति तेन चित्रापदं नामधेयमेव । "पञ्चदशान्याज्यानि" "सप्तदश पृष्ठानि" इत्यादावाज्यादिपदानां स्तोत्रनामधेयत्वेऽपीदमेव निमित्तम् । तत्र हि "आज्यैः स्तुवते" इति विहितस्तोत्रोद्देशेन पञ्चदशसङ्ख्याकाज्यानां सप्तदशपृष्ठानां वा विधानेऽनेकविधानप्रयुक्तो वाक्यभेदः समापद्यते । आज्यपदेन स्तोत्रविवक्षणे तु पञ्चदशस्तोममात्रविधानान्न वाक्यभेदः ॥

तदयं निष्कर्षः—प्रमाणान्तरप्राप्तधात्वर्थोद्देशेन विधेयानेकार्थबोधकं विधेयान्तरबोधकपदान्तरसमभिव्याहृतं वोपपदं नामधेयम् । तत्र चित्रापदं विधेयानेकार्थबोधकं, आज्यपदं विधेयान्तरबाधकपञ्चदशपदसमभिव्याहृतम्, "सोमेन

यजेत" इत्यत्र तु विशिष्टविधानान्न वाक्यभेदः । अत एव न विधेयान्तरबोधकपदान्तरसमभिव्याहृतं सोमपदमिति न द्वितीयनिमित्तेनापि सोमपदं नामधेयम् ॥

तृतीयं तु निमित्तं यद्विधानार्थं यदुपपदमिति विवक्ष्यते तदर्थस्य द्रव्यस्य देवताया वा प्रमाणान्तरेण प्राप्तौ तत्पदं नामधेयमिति । यथा "अग्निहोत्रं जुहोति" इत्यत्राग्निहोत्रपदम् । तत्रायं पूर्वपक्षः—अग्निहोत्रपदं अग्नये होत्रमस्मिन्निति व्युत्पत्त्याऽग्निदेवताकं होमं बोधयति । नेदं नामधेयम्; अग्निहोत्रपदे अग्निपदस्य यौगिकत्वाभावेनाग्निदेवताकहोमस्य विशिष्टस्यैव होमस्य "सोमेन यजेत" इतिवद्विधानेन वाक्यभेदाभावेन चोद्भिदधिकरणचित्राधिकरणयोरत्राप्रवृत्तेः, तथाच देवताबोधकमिति ॥

सिद्धान्तस्तु नात्राग्निदेवताविधानमपेक्षितम् । प्रमाणान्तरेणाप्राप्तं खलु विधिर्विधत्ते । नचाग्निः प्रमाणान्तरेणाप्राप्तः । "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति" इति विनियोगविधिना प्रकृतहोमाङ्गतया विनियुक्तो हि यो मन्त्रः "अग्निर्ज्योतिर्ज्योतिरग्निःस्वाहा" इति तस्मिन्नग्निदेवता प्रकाश्यते । मन्त्राणामयं स्वभावो यत्सति संभवे प्रयोगसमवेतार्थप्रकाशकत्वमिति । तथाचानेनाग्निदेवताप्रकाशनान्यथानुपपत्त्यैव प्रकृतकर्मण्यग्निदेवतासिद्ध्या नाग्निहोत्रपदेन देवताविधिरपेक्षितः । अन्यथोत्पत्तिशिष्टगुणावरोधे गुणान्तरावरोधस्यान्याय्यत्वात् "सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा" इति मन्त्रलिङ्गेन "यत्सूर्याय च प्रजापतये च प्रातः" इति विधिना वा प्रातःकाले सूर्यदेवतायाः प्रकृतहोमेऽप्राप्त्या "यत्सूर्याय च" इति वाक्यं क्रियान्तरपरमापद्येत । मन्त्रलिङ्गेन देवतासिद्धौ तु सायंप्रातःकालयोरग्निसूर्ययोर्देवतात्वस्य सिद्ध्या "यत्सूर्याय च प्रजापतये च" इति वाक्ये सूर्याय चेति सूर्यानुवादपूर्वकं तत्समुच्चितप्रजापतिविधानान्नापूर्वक्रियान्तरपरत्वमापद्यते ॥

अत्र केचित्—"यदग्नये च प्रजापतये च सायं जुहोति" इति विधिरेव देवताप्रापको न मन्त्रलिङ्गम् । तथासति हि "अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहा" इति मन्त्रस्याप्यत्र कर्मणि विनियोगेन तेन मिश्रमन्त्रलिङ्गेन सूर्यदेवताया अपि सायंहोमे प्राप्त्यापत्तिः, विधिना देवतासिद्धिरिति पक्षे तु न तदापत्तिः । यद्यपि मन्त्रलिङ्गेन देवतासिद्धिपक्षेऽपि "यदग्नये च" इति वाक्ये केवलाग्निदेवतानुवादान्यथानुपपत्त्या न मिश्रमन्त्रलिङ्गं देवताप्रापकमिति सिद्ध्यति; तथापि केवलाग्निदेवतायाः सायं होम एव मन्त्रलिङ्गेन प्राप्त्या मन्त्रलिङ्गेन देवताप्राप्तिमते "यदग्नये च प्रजापतये च सायं जुहोती" तिवाक्ये सायंपदवैयर्थ्यापत्तिः । तथाच न मान्त्रवर्णिकी देवता, किंतु वैध्येवेति—वदन्ति ॥

परे तु विधिना तदेव विधेयं यत्प्रमाणान्तरेण न प्राप्तम् । प्रमाणान्तरप्राप्तस्यापि विधिना विधानेऽग्निहोत्रपदमपि कर्मनामधेयं न स्यात् । अतो मन्त्रवर्णेन देवतायाः सिद्धतया "यदग्नये च" इति वाक्ये नाग्निदेवताया अपि विधानम्, अन्यथा प्राप्तकर्मोद्देशेनानेकविधाने वाक्यभेदप्रसङ्गात् । अतो मान्त्रवर्णिकदेवताविधिवाद एव समीचीनः । यद्यप्यस्मिन्पक्षे "यदग्नये च" इति विधिवाक्ये सायंपदं वितथम्; तथापि स्पष्टप्रतिपत्त्यर्थं तदिति न दोषः । इयमेव रीतिः—देवतावैधत्वमतेऽपि "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा" इति मन्त्रविनियोगविधौ सायंपदसार्थक्यार्थमादरणीया । यद्यप्यग्निहोत्रत्वावच्छेदेन नाग्निदेवता; प्रातःकाले तदभावात्, तथापि तत्सामानाधिकरण्येनाग्निदेवताया विद्यमानत्वात् नाग्निहोत्रपदनामत्वानुपपत्तिरिति—वदन्ति ॥

वस्तुतस्तु—मन्त्रवर्णप्रसक्ताग्निदेवताकत्वेनाग्निहोत्रपदं स्वरसत एव सायंप्रातःकालीनाग्निहोत्रहोमस्य बोधकम् । प्रातःकालेऽपि मिश्रमन्त्रलिङ्गेनाग्निदेवतायाः प्रसक्तिर्विद्यत एव । तथाच मान्त्रवर्णिकदेवताविधिपक्ष एव स्वरसः ॥

अत्रानुसंधेयानि वाक्यानि "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति," "सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः," "यदग्नये च प्रजापतये च सायं जुहोति," "यत् सूर्याय च प्रजापतये च प्रातः" "अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहा," "सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति" च ॥

तथाच विधेयत्वेनाभिमतस्य द्रव्यस्य देवतायाश्च प्रमाणान्तरेण प्राप्तौ तत्पदं न देवताबोधकम्, किंतु नामधेयं यदि तत्पदं धात्वर्थसमानाधिकरणम् । अत्र च यत्पदं नामधेयमिति निर्णीयते तेन पदेन या देवता यद्द्रव्यं वा विधित्स्यते तस्यैव प्रमाणान्तरेण प्राप्तिस्तत्प्रख्यपदेन विवक्ष्यते, नतु देवतान्तरस्य तत्रावरोधः । तथाच "वैश्वदेवेन यजेत" इति वाक्ये नाग्नेयादियागसप्तके देवताविधिपूर्वपक्षे आग्नेयादियागेष्वग्निदेवताया उत्पत्तिशिष्टत्वेऽपि वैश्वदेवपदं तत्प्रख्यन्यायेन नामधेयं भवितुमर्हतीति निमित्तचतुष्टयादेव नामत्वमिति न्यायप्रकाशसिद्धान्तश्चिन्त्योपपत्तिकः ॥

अत्र मान्त्रवर्णिकदेवताविधिवादे मन्त्रवर्णप्राप्तदेवतानुवादेऽपि "यदग्नये च प्रजापतये च" इति वाक्ये अग्नयेपदं न कर्मनामधेयम्, धातुसामानाधिकरण्याभावात्, चशब्दश्रवणाच्च । अयमेव न्यायः "आघारमाघारयति" इत्यत्राघारपदस्य कर्मनामधेयत्वेऽपि योजनीयः । अत्राघारपदस्य क्षरद्भूतं नार्थः; "चतुर्गृहीतं वा एतदभूत् तस्याघारमाघार्ये"ति वाक्यान्तरेण तस्याघारणसंस्कारस्य प्राप्तत्वादित्याघाराख्यहोमनामधेयमेवाघारपदम् । प्रथमोदाहरणं देवताविधित्वनिरासार्थम्, द्वितीयं द्रव्यपरत्वनिरासार्थमिति विवेकः । सर्वथा तत्प्रख्यन्यायः कर्मनामधेयतापादक इति सिद्धम् ।

तुरीयं निमित्तं तद्व्यपदेशः। तस्य विधित्सितस्य द्रव्यस्यैव व्यपदेशो विशिष्टोऽपदेशः उपमानत्वेनोपमेयत्वेन च वाक्यशेषे व्यवहार इति तदर्थः। अस्योदाहरणम्—"श्येनेनाभिचरन्यजेत" इत्यत्र श्येनपदम्। इदं हि पदं श्येनपक्षिणि लतायां सोम इव रूढम्, न तु यौगिकम्। अत उद्भिदधिकरणन्यायेन न नामधेयम्। अत्र यागस्याप्राप्तत्वात् प्राप्तत्वेऽप्यनेकविधानाभावान्न वाक्यभेदः। "चित्रया यजेत पशुकामः" इत्यत्र पूर्वपक्षे पशुकामपदं यथा न फलसमर्पकं, किंतु "स्त्रीकामः प्रायश्चित्तं कुर्यात्" इत्यत्रेव पशुकामनायां सत्यामिति निमित्तसमर्पकमेवमत्राप्यभिचरन्निति निमित्तसमर्पकम्। अतो गुणसंबन्धस्य फलसंबन्धस्य च बोधनेन वाक्यभेदप्रसङ्गोऽपि न भवतीति न चित्राधिकरणेनापि नामधेयम्। प्रमाणान्तरेण प्रकृतयागे श्येनपक्षिणो द्रव्यस्य प्राप्तेरभावान्न तत्प्रख्याधिकरणमप्यत्रावतरति। अतः परिशेषाद्द्रव्यपरमेवेति पूर्वपक्षः सिद्धो भवति।

सिद्धान्तस्त्वत्र वाक्यशेषे "यथा वै श्येनो निपत्याऽऽदत्ते एवमयं भ्रातृव्यं निपत्याऽऽदत्ते" इति श्येनपक्षिण उपमानत्वं यथा निर्दिष्टं एवं एवमयमितीदंशब्देनापि विधेयस्य श्येनस्यैव परामर्शादुपमेयत्वमपि तस्यैव निर्दिष्टं भवति। नचैतद्युज्यते, एकमेवोपमानमुपमेयं च न भवति, "रामरावणयोर्युद्धं रामरावणयोरिव" इत्याद्यनन्वयोदाहरणे त्वगत्या एकस्यैवोपमानत्वमुपमेयत्वं च यदङ्गीकृतम् तत् किमर्थम्? उपमानान्तराभावद्योतनार्थम्। तथाचोपमानान्तराभाव एव लक्षणयाऽनन्वयोदाहरणवाक्यार्थः। तत्र च पदसमूहात्मकवाक्यलक्षणापेक्ष्यैकस्य विधिघटकस्यापि श्येनपदस्य गौण्या यागनामधेयत्वाङ्गीकार एव युक्तः। "विप्रतिषेधे भूयसां स्यात्स्वधर्मत्वम्" इति न्यायात्, "सङ्घे शक्तिः कलौ युगे" इति प्रवादोप्येतन्न्यायमूलक एव॥

यद्यपि यथा—"उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम्। स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे॥" इत्यत्र एकस्यैवोपमानत्वमुपमेयत्वं चाङ्गीकृतम्, तद्वद्विशिष्टविधिपक्षे विशिष्टस्य यागस्योपमेयत्वं श्येनस्योपमानत्वमिति संभवति; तथापि विशिष्टविधिपक्षे विशेषणविधेरार्थिकत्वेन प्राथमिकयागविषयतयैव वाक्यशेषस्य योजनीयतयाऽनन्वयालङ्कार एवात्र भवतीति युक्तं श्येनपदं नामधेयमिति। अयं न्यायः "सन्दंशेन यजेत" इत्यादौ सन्दंशादिपदेऽपि सङ्गमनीयः॥

पञ्चमं निमित्तं विरुद्धत्रिकद्वयापत्तिः। तया नामधेयत्वं "वाजपेयेन स्वाराज्यकामो यजेत" इत्यत्र वाजपेयपदस्य। भाट्टदीपिकायां तु वाजपेयपदस्यापि यौगिकत्वान्मत्वर्थलक्षणाप्रसङ्गेनोद्भिदधिकरणेनैव नामत्वं निर्णीतमिति सूचितम्, तथापि यया व्युत्पत्त्या द्रव्यपरं यत्पदं तत्पदं तयैव व्युत्पत्त्या कर्मपरमपि यदि भवति तर्हि तत्पदं नामधेयमित्युद्भिदधिकरणनिष्कर्ष इति भाट्टदीपिकायामेवोक्तम्। अतएवोद्भिदधिकरणारम्भे भाट्टदीपिकायां—"गुणे कर्मणि च **तुल्यवत् वृत्तिकानामुद्भिदादिपदानां** इति विषयनिर्देशः कृतः। वाजपेयपदं तु वाजरूपं पेयमिति कर्मधारयसमासेन द्रव्यपरं वाजः पेयो यत्रेति बहुव्रीहिसमासेन कर्मपर इति न तुल्यवद्वृत्तिकः। तथाच वाजपेयपदस्य द्रव्यपरत्वे मत्वर्थलक्षणापत्तिर्यदि स्यात्तर्ह्यपि तन्नामधेयत्वमुद्भिदधिकरणन्यायेन न भवति। वस्तुतस्तु यौगिकस्य पदस्य द्रव्यपरत्वे मत्वर्थलक्षणाप्रसङ्ग एव नामत्वे उद्भित्पदस्य निमित्तम्। एवंच वाजपेयपदस्यापि तेन नामत्वं भवेदेव यदि वाजपेयपदे मत्वर्थलक्षणाङ्गीक्रियते, विनैव मत्वर्थलक्षणां वाजपेयेन यागं यागेन स्वाराज्यं कुर्यादिति वाक्यार्थे उच्यमाने तु न तन्न्यायस्यावसरः। यागस्याप्राप्तत्वेन गुणसंबन्धे फलसंबन्धे च विधीयमानेऽपि न वाक्यभेदः।

यद्यपि यजेतेत्यस्यावृत्तिरपेक्षिता; तथापि प्राथमिकबोधे यागस्य संबन्धसामान्येनान्वयात् वाजपेयकरणिका यागसंबन्धिनी भावनेति बोधाङ्गीकारान्न सोऽपीति न चित्राधिकरणमपि प्राप्नोति। अतिरिक्तस्य निमित्तद्वयस्य तु शङ्कैव नावकाशते। तथाच तद्द्रव्यपरमेवेति पूर्वपक्षः॥

सिद्धान्तस्तु यजिधातुना साध्यस्य साधनस्य च यागस्य निर्देशे विरुद्धत्रिकद्वयमापद्येत। उद्देश्यत्वं, प्रधानत्वं, अनुवाद्यत्वं, इत्येकं त्रिकम्। विधेयत्वं, गुणत्वं, उपादेयत्वं, इत्यपरं त्रिकम्। तदिदं द्वयं परस्परविरुद्धम्। नह्येकमेव सकृत् उद्देश्यत्वेन विधेयत्वेन च भानमर्हति। अतो वाजपेयपदं कर्मनामधेयम्।

तत्र नामधेयस्थले द्विविधा गतिर्वर्तते। क्वचिदाख्यातपरतन्त्रं नामधेयम्, क्वचिन्नामधेयपरतन्त्रमाख्यातमिति। तत्र यत्र नामधेयं प्रसिद्धं तत्र तत्परतन्त्रमाख्यातम्। यथा—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यत्र षण्णामेव यागानामाग्नेयादीनां तत्राख्यातेन ग्रहणम्। यथा वा "उद्भिदा यजेत" इत्यादौ च। वाजपेयेनेत्यत्र त्वाख्यातपरतन्त्रम्। प्राकरणिकेष्टिपशुसोमादीनां सर्वेषामेव वाजपेयपदनामत्वात्। नहि वाजपेयपदं प्रसिद्धार्थकमित्यन्यत्र विस्तरः।

यथा हि औदुम्बराधिकरणेन गतार्थत्वेऽपि पर्णमय्यधिकरणस्य मुखभेदेन प्रवृत्त्या न पौनरुक्त्यम्। एवं मुखभेदेन प्रवृत्त्या नानेनोद्भिदधिकरणस्योद्भिदधिकरणेनास्य वा पौनरुक्त्यम्।

भाट्टदीपिकायां तु निमित्तचतुष्टयस्याप्याक्षेप एवानेनाधिकरणेन धात्वर्थातिरिक्तभावनानङ्गीकारेण क्रियते परिहारश्चेति निरूपयन्ति। सर्वथा तु विरुद्धत्रिकद्वयापत्तिनिमित्तत्वेऽप्यस्याधिकरणस्य तात्पर्यवर्णनं भाष्यकाराणां युक्तमेव।

विरुद्धत्रिकद्वयापत्तिरपि धात्वर्थातिरिक्तभावनाङ्गीकार एव भवति नान्यथा। तथाच पञ्चममपि निमित्तमत्राङ्गीकरणीयमेव। एतादृशनिमित्तपञ्चकं यत्र न संभवति तत्र न नामधेयत्वं, किंतु द्रव्यपरत्वमेव। यथा—"सोमेन यजेत" इत्यादौ। "यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति" इत्यादौ च। अत्र ह्याग्नेयपदं कर्मनामधेयम् मन्त्रवर्णेन देवतायाः प्राप्तत्वादिति न संभवति, एतद्यागाङ्गतया कस्यापि मन्त्रस्य प्रमाणान्तरेण केवलाग्निदेवताकस्य प्राप्त्यभावात्। तथाच "सोमेन यजेत" इतिवद्विशिष्टविधिरेवात्र विवक्षितः॥

"वैश्वदेवेन यजेत" इत्यत्र तु वैश्वदेवपदं पूर्वोक्तनिमित्तपञ्चकेन नामधेयमिति न भवति, विश्वदेवशब्दस्य रूढत्वेन प्रथमनिमित्तस्यानेकविधानाभावेन वाक्यभेदाभावेन द्वितीयनिमित्तस्य चाभावेन पूर्वतनवाक्यविहितयागेषु देवताविधेरेवात्र विवक्षितत्वात्। "आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालं" इति वाक्याष्टकविहितेष्वष्टसु यागेषु देवताविधानमिति यद्यपि न संभवति, सप्तमे यागे विश्वदेवदेवताया उत्पत्तिवाक्येनैव प्राप्तत्वात्, तथापि सप्तसु यागेषु विश्वदेवदेवताविधानमिति युक्तमेव॥

तत्र यद्युत्पत्तिशिष्टगुणावरोधे गुणान्तरावरोधो न न्याय्य इति गुणात्कर्मभेद एवात्र युक्त इत्यालोच्यते, एवमपि विश्वदेवदेवताकक्रियान्तरस्यैवात्र विधानमिति सर्वथा वैश्वदेवशब्दो न यागनामधेयमिति शङ्का जायते। सा चैवं परिहरणीया॥

वैश्वदेवशब्दोऽत्र कर्मनामधेयमेव। अपूर्वयागान्तरविधाने हि प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गः। तथाचोत्पत्तिशिष्टन्यायसहकृततत्प्रख्यन्यायेन कर्मनामधेयत्वं वैश्वदेवशब्दस्य सिद्धमेव। अष्टसु यागेषु वैश्वदेवशब्दप्रयोगस्तु वक्ष्यमाणलिङ्गसमवायाधिकरणेन विश्वदेवदेवताकयागघटितसमुदायघटकत्वेन धर्मेण सादृश्याद्गौण्या वृत्त्योपपद्यते। अष्टानां यागानां वैश्वदेवशब्दनामत्वनिर्णयस्य प्रयोजनं तु "प्राचीनप्रवणे वैश्वदेवेन यजेत" इति विहितप्राचीनप्रवणदेशसंबन्धस्याष्टस्वपि प्राप्तिरेव। अन्यथा "वैश्वदेवीमामिक्षां" इति वाक्यविहितयागमात्रस्य सा समापद्येत॥

उत्पत्तिशिष्टन्यायो यद्यपि कर्मभेदापादक इति द्वितीयाध्याये निरूपयिष्यते; तथापि तत्र गुणान्तरबोधकस्य पदस्य धातुना वैयधिकरण्यमपेक्ष्यते। यथा "वाजिभ्यो वाजिनं" इत्यत्र वाजिनपदस्य धातुना कल्पितेन निर्वपतिना न सामानाधिकरण्यं, अत्र तु समानाधिकरणं वैश्वदेवपदमिति तस्माद्विलक्षणोऽयं न्याय इति विवेकः। सर्वथा च निमित्तषट्कं नामधेयत्वे सिद्धमेव भवति।

"वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते" इत्युपक्रम्य आम्नातानां "यदष्टाकपालो भवति यन्नवकपालो भवति यद्दशकपालो भवति यदेकादशकपालो भवति यद्द्वादशकपालो भवति" इति वाक्यानां अष्टाकपालादिशब्दास्तु वैश्वानरेष्टेस्तत्प्रख्यन्यायेन नामधेयानि द्वादशकपालविधिनाऽष्टाकपालादीनां प्राप्तत्वादिति शङ्का तु नात्र प्रसरति। अष्टाकपालशब्दवाच्यो हि पुरोडाशविशेषो द्वादशकपालशब्दवाच्यात्पुरोडाशाद्विलक्षण एव। एवं नवकपालादिशब्दार्थोऽपीति नाष्टाकपालादिपदानि नामधेयानि।

अतएव अष्टाकपालादिद्रव्यान्तरविधानमपि नात्र संभवति। उत्पत्तिशिष्टगुणावरोधे गुणान्तरावरोधस्यान्याय्यत्वेन तादृशद्वादशकपालावरुद्धायां वैश्वानरेष्ट्यामष्टाकपालादिविधानासंभवादित्यष्टाकपालद्रव्यविशिष्टयागान्तरविधानमत्र कर्तव्यम्। तच्च नात्र संभवति। "अष्टाकपालो भवति" इति भूधातुश्रवणेन यागाश्रयणात्।

यत्र हि द्रव्यदेवतासंबन्धो वाक्ये गम्यते, तत्र यज्यश्रवणेऽपि तत्कल्पनं संभवति। यथा "आग्नेयोऽष्टाकपालो भवति", "वायव्यं श्वेतमालभेत" इत्यादौ, "ईषामालभते" इत्यादौ तु न तत्कल्पनम्। तथाच "अष्टाकपालो भवति" इत्यादौ क्रियान्तरविधानमपि न संभवति॥

कथंचित्संभवेऽपि "पुत्रे जाते" इत्युपक्रमस्य "यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव" इत्युपसंहारस्य चैक्याद्वाक्यैक्यमत्रावगतं बाध्येतानेकयागविधाने इति द्वादशकपालस्तावकमेवाष्टाकपालादिवाक्यम्। अष्टाकपालानामंशानामेव तेजस्वित्वादिफलोपयोगित्वे द्वादशकपालः प्रशस्त इति किमु वक्तव्यमिति।

अंशस्तुतेः अंशिस्तुतिपर्यवसानं लोकेऽपि सिद्धमेव। यथा "नेत्रे कर्णान्तविश्रान्ते" इत्यवयवस्तुत्या नायकादिस्तुतिः पर्यवस्यति। अत्रानुसन्धेयानि वाक्यानि—"वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन्पशून्दधाति यस्मिन् जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" इति॥

अस्यामिष्टौ कर्तृत्वं पितुः फलं तु पुत्रस्येति षष्ठे निरूपयिष्यते। तथाचांशद्वारांशिस्तुतिसंभवे कथंचिदर्थवादत्वमेवाङ्गीकरणीयम्? न नामधेयत्वम्। नहि केवलं सामानाधिकरण्यमात्रं नामधेयतायां प्रमाणम्। तथाच "यजमानः प्रस्तरः," "आदित्योप यूपः" "अग्निर्वै ब्राह्मणः," "अपशवो वा अन्ये गोअश्वेभ्यः पशवः," इत्यादौ यजमानादित्याग्न्यपश्वादि-

पदान्यपि न प्रस्तरादिनामधेयानि, किंत्वर्थवाद एव। सामानाधिकरण्यं तु "सिंहो माणवकः" इत्यादिवद्गौणमेवेति न दोषः॥

तत्र सिंहशब्दो माणवके यथा गाम्भीर्यादिगुणयोगेन वर्तते एवं यजमानादिपदानि प्रस्तरादौ केन गुणेन वर्तन्ते इति चेदत्र सूत्रकाराः "तत्सिद्धिजातिसारूप्यप्रशंसास्तत्र गुणा" इति सूत्रयामासुः। तत्र **तत्सिद्धिः** एककार्यकारित्वम्। प्रस्तरयजमानयोः एकस्रुग्धारणादिकार्यकारित्वेन यजमानपदस्य प्रस्तरे वृत्तौ निमित्तम्। **जातिः** एकं जन्म एकोपादानत्वं अग्निशब्दस्य ब्राह्मणे वृत्तौ निमित्तम्। उभयमपि ब्रह्मणो मुखादुत्पन्नमिति श्रुतीनामुद्घोषः। **सारूप्यं** चाक्षुषतेजस्वित्वादिधर्मः यूपादित्ययोः सामानाधिकरण्ये निमित्तम्। घृताक्तो हि यूपोऽतीव तेजसा प्रकाशते। **प्रशंसा** स्तुतिः अपशुशब्दस्य पशुष्वजादिषु वृत्तौ निमित्तम्। यथा घटादयोऽश्वापेक्षयाऽप्रशस्ताः एवं अश्वमेधे अजादयोऽपि। अत्र प्रशंसाभावस्यैव निमित्तत्वेऽपि घटकतया प्रशंसापि निमित्तमेव। तदिदं सिद्धं यदन्यपदस्यान्यत्र प्रयोगो गौण्या वृत्त्या तदपेक्षिताश्च गुणाः तत्सिद्धिजातिसारूप्यप्रशंसाः इति॥

यत्तु—"स्तृष्टीरुपदधाति" इत्यत्र स्तृष्टिशब्दस्य स्वरसतः स्तृष्टिशब्दघटितमन्त्रपरस्यापि उपधानप्रकरणगतास्तृष्टिमन्त्राणामपि बोधकत्वं तदपि स्तृष्टिशब्दस्य गौण्योभयसाधारण्येनैव। तत्र तु गुणः स्वसजातीयाधिकावयवघटितसमुदायघटकत्वम्। अयमेव लौकिकः छत्रिन्यायः। **एतेन**—"प्राणभृत उपदधाति" इत्यत्र प्राणभृच्छब्देन प्राणभृदप्राणभृन्मन्त्रस्य विवक्षणमपि **व्याख्यातम्**॥

इयान् विशेषः—स्तृष्ट्यस्तृष्टिमन्त्रसमुदाये स्तृष्टिमन्त्रा अधिकाः अस्तृष्टिमन्त्राः स्वल्पाः। प्राणभृदप्राणभृन्मन्त्रसमुदाये तु प्राणभृन्मन्त्राः स्वल्पाः अप्राणभृन्मन्त्रा अधिका इति॥ तथाच छत्रिन्यायो लोके द्विविधो भवति। यत्र समुदाये छत्रिणोऽधिकाः स्वल्पा वाऽछत्रिणश्च स्वल्पा अधिका वा तत्र समुदाये सर्वेषां "छत्रिणो गच्छन्ति" इत्यत्र छत्रिपदेन ग्रहणमिति॥

स्तृष्टिशब्देन प्रमाणान्तरेण उपधानाङ्गतया प्राप्तत्वात् यथा स्तृष्टिमन्त्राणां ग्रहणं न तथा "अक्ताः शर्करा उपदधाति" इत्यनन्तरश्रुते "तेजो वै घृतं" इति वाक्यशेषे प्रमाणान्तरेणाञ्जनसाधनतया अनिर्णीतानां जलादीनां ग्रहणं इत्यन्यत्र विस्तरः॥ "स्रुवेणावद्यति" इत्यादौ वाक्यशेषे अवदेयविशेषस्याश्रवणेप्याज्यादीनामेव सामर्थ्यात् ग्रहणमिति सिद्धमिदं यत् विधिमन्त्रार्थवादस्मृत्याचारव्याकरणादीनां नामधेयानां च सर्वेषां धर्मे पर्यवसानमिति तादृशधर्मे चोदनैव प्रमाणं नाऽन्यदिति॥

इति प्रथमोऽध्यायः।

---

## अथ द्वितीयोऽध्यायः।

प्रथमाध्याये धर्मे प्रमाणानि विचारितानि। द्वितीयाध्याये धर्माणां परस्परं भेदो निरूप्यते। तत्र 'अग्निहोत्रं जुहुयात्स्वर्गकामः' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'विश्वजिता स्वर्गकामो यजेते'त्यादिषु बहुषु वाक्येषु किमेक एव स्वर्गोऽवगम्यते उत भिन्न इति निर्णयो हि साधनभेदेन साध्यभेदस्यावश्यकत्वात् साधनानां परस्परं भेदसिद्ध्यधीन एव भवति। साधनानां परस्परं भेदो हि नामधेयभेदेन धातुभेदेन गुणभेदेन संख्ययाऽभ्यासेन प्रकरणान्तरेण वा भवतीति निरूपयिष्यते। तदुपोद्घाततया च प्रथममिदानीं धात्वर्थ एव भावनायां फलसाधनत्वेनान्वेतीति निरूपणमावश्यकम्। तन्निरूपणं च सोमेन यजेतेत्यादिषु उपपदार्थः सोमो वा धात्वर्थो वैक एव फलसाधनमिति निर्णयाधीनम्॥

तदर्थं च प्रतिपदाधिकरणे उपपदार्थः धात्वर्थश्च भावनायामुभयं प्रत्येकं करणम्। तथाच सोमोऽपि स्वर्गसाधनं यागोऽपि स्वर्गसाधनमिति पूर्वपक्षय्यानेकादृष्टकल्पनाप्रसङ्गादेकमेव फलकरणं अन्यत्तु तदुपकारकमिति निर्णीतम्॥

अयं भावः—सिद्धं हि सोमद्रव्यं नारण्यावस्थितिमात्रेण फलजनकं यजमानस्य भवितुमर्हति किंतु यजमानेनोपादेयत्वेन। उपादेयत्वं नाम कृतिविषयत्वं यत्किंचित्क्रियाद्वारैव सोमस्य भवति। सा च क्रिया "सोममभिषुणोती"त्यादिवाक्यविहिताभिषवादिः "ग्रहैर्जुहोती"ति वाक्यसिद्धहोमपर्यन्ता विवक्षितेति होमेन भस्मसाद्भावमापन्नः सोमोऽपि क्षणिकयागादिकमिवापूर्वद्वारैव फलजननसमर्थ इति सोमेन स्वर्गजननार्थमेकमपूर्वं कल्पनीयम्। एवं यागेनापि विना द्रव्यं स्वरूपासिद्ध्या यत्किंचिद्द्रव्यद्वारा स्वस्वरूपसिद्धावपि स्वेन फलजननार्थमेकमपूर्वं कल्पनीयमिति प्रत्येकं फलसाधनतयाऽन्वयेऽनेकादृष्टकल्पनाप्रसङ्गः। एकस्यैव फलसाधनत्वे तु सोमकरणत्वे धात्वर्थः आश्रयतया सोमस्य, यागकरणत्वे द्रव्यतया सोमश्च यागस्योपकरोतीति नापूर्वद्वयकल्पनेति॥

तत्र च कस्यैकस्य फलसाधनत्वं विवक्षितम्? किं सोमस्योपपदार्थस्योत यागादेर्धात्वर्थस्येति विशये सोमेन यजेतेत्यत्र यजेतेत्यस्य यागेन फलं कुर्यादिति विवरणेऽपि स्पष्टं यागस्य धात्वर्थस्य करणत्वं न प्रतीयते। नहि धातूत्तरमपि तृतीयादि-

विभक्तिः संभवति । 'अर्थवदधातुरप्रत्ययः प्रातिपदिक'मिति धातुभिन्नमेव खलु प्रातिपादिकमित्यनुशशास पाणिनिः। सोमेनेति तृतीयाविभक्त्या तु सोमस्य करणत्वं स्पष्टमवगम्यते । तथाचाख्यातार्थकृतेः संनिहितोऽपि धात्वर्थो यथा षष्ठाद्याधिकरणन्यायेन भाव्यत्वेन नान्वेति एवं साधनत्वेनापि नान्वेति ॥

कारकश्रुत्या हि सोमस्यैव करणत्वं कामपदसमभिव्याहारेण स्वर्गस्यैव भाव्यत्वमिव स्पष्टं गम्यते । अत एव हि सिद्धं साध्यायोपदिश्यते इति न्यायः । साध्यं हि फलं सिद्धेनैव भवति न साध्येन । अन्यथा साध्यस्यापि साध्यान्तरेणैव साध्यत्वे तस्यापि साध्यान्तरेण तस्यापि साध्यान्तरेण इत्यनवस्था समापद्यते, तथाच सोमस्यैव भावनायां करणत्वेनान्वयः इति पूर्वपक्षः । अस्मिन्पक्षे सोमस्य प्रधानत्वेन विकृतिष्वतिदेशो न स्यात् । सोमाभावे पूतिकस्य प्रतिनिधेर्ग्रहणमपि न युक्तमिति विवेकः ॥

इदं तु न सङ्गतम् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वं हि नियतम् । तथाचाख्यातार्थकृता प्रथमतो यागस्यान्वयानन्तरमेवोपपदार्थस्य सोमादेरन्वयः । तथाच साधनाकाङ्क्षायां यागस्य प्रथमतः साधनत्वेनान्वये सति अनन्तरं सोमस्याकाङ्क्षाभावेन करणत्वेनान्वयासंभवात् यागोपकारकतयैव सोमस्यान्वयः ॥

भावना हि अंशत्रयमपेक्षते साध्यं साधनमितिकर्तव्यतां चेत्युक्तम् । तत्र च प्रथमतः साधनाकाङ्क्षा, अनन्तरं साध्याकाङ्क्षा, तत इतिकर्तव्यताकाङ्क्षेति क्रमः । कुर्यादित्युक्ते हि प्रथमतः किमिति, तदनन्तरं किमर्थमिति, तदनन्तरं कथमिति खल्वाकाङ्क्षन्ते । तथाच भावनायां धात्वर्थस्यापेक्षितत्वेन प्राथम्येनोपजीव्यत्वेन च एकपदवोध्यत्वप्रत्यासत्त्या धात्वर्थ एव भावनायां करणं नोपपदार्थः सोम इति सिद्धम् ॥

यत्तु षष्ठाद्याधिकरणे धात्वर्थस्य यागस्यैव फलत्वेनान्वय इति पूर्वपक्षितं, तत्साध्याकाङ्क्षैत्र प्राथमिकीत्यभिप्रायेण । सिद्धान्तस्तु साधनाकाङ्क्षाया एव प्राथम्यात् धात्वर्थस्य करणत्वेनान्वय इति षष्ठाद्यधिकरणमप्यत एवोपपद्यते । अन्यथा साध्याकाङ्क्षाया एव प्राथम्ये धात्वर्थस्य कथमपि भावनायामन्वयात् पूर्वं स्वर्गकामपदार्थस्य स्वर्गस्य भाव्यत्वेनान्वयासंभवात् तदधिकरणमसङ्गतं स्यात् ॥

यत्तु "दध्ना जुहोती"त्यादौ उपपदार्थस्य करणत्वेनान्वयो होमस्य च भाव्यत्वेनान्वयः स 'आनर्थक्यप्रतिहतानां विपरीतं बलाबल'मिति न्यायेनागत्या "परिपूर्णं पदं पदान्तरेणान्वेती"ति नियमोल्लङ्घनाधीन एव ॥

अस्तु वा प्राथमिकी साध्याकाङ्क्षाऽनन्तरं साधनाकाङ्क्षा तत इतिकर्तव्यताकाङ्क्षेति । षष्ठाद्याधिकरणसिद्धान्ते तु परिपूर्णं पदं पदान्तरेणान्वेतीति नियमस्यानर्थक्यप्रतिहतन्यायेन दध्ना जुहोतीत्यत्र करणाकाङ्क्षाप्राथम्यपक्ष इव संकोच एव कल्प्यत इति न दोषः । तथाच द्वितीयस्यां साधनाकाङ्क्षायां साधनत्वेन धात्वर्थस्यान्वययोग्यत्वेन तत्परित्यागेनोक्तनियमहानेन च सोमस्य न करणत्वेनान्वयो युक्त इति धात्वर्थ एव सर्वत्र सति संभवे भावनायां करणत्वेनान्वेति । तदुक्तं 'वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसंभवे' इति । अत्र च 'श्रुत्यर्थः सन्निकृष्टत्वं वाक्यार्थो विप्रकृष्टते'ति वार्त्तिकात् 'वाक्यार्थविधिरुपपदार्थविधिः श्रुत्यर्थविधिः सन्निकृष्टार्थविधिरिति निष्कर्षः । यत्तु न्यायप्रकाशे—'वाक्यार्थविधिः पदान्तरार्थविधिरित्यर्थः' इत्युक्तं तस्याप्ययमेवाभिप्रायः ॥

इदं च भावार्थाधिकरणं तत्रैव धात्वर्थस्य करणत्वेनान्वयं गमयति । यत्र धात्वर्थगुणयोरप्राप्तिः यथा सोमेन यजेतेत्यत्रोपपदार्थस्य सोमस्य यागस्य चोभयस्य प्रमाणान्तरेणाप्राप्तत्वात् । यत्र वोभयोरपि संभवत्प्राप्तिः प्राप्तिरेव वा, यथो 'उरुप्रथस्वेति पुरोडाशं प्रथयति' 'ऐन्द्रवायवाग्रान्ग्रहान्गृह्णीया'दित्यादौ । अत्र प्रथमोदाहरणे पुरोडाशविधिनैवान्यथानुपपत्त्या प्रथनस्य लिङ्गेन तत्र मन्त्रस्य च संभवत्प्राप्तिर्विधेयते चेदप्यध्वर्युकर्तृकत्वादिसिद्ध्यर्थं मन्त्रप्रथनयोरुभयोरपि विधिर्विवक्षितः । द्वितीयोदाहरणे तु "ऐन्द्रवायवं गृह्णाती"ति वाक्यमन्तरेणैन्द्रवायवग्रहणं विहितमपि तत्रैन्द्रवायवग्रहणस्य प्राथम्यार्थं पुनर्विधिर्विवक्षित इत्युभयत्रापि भावार्थाधिकरणं प्रवर्तते । एवं यत्र धात्वर्थस्यैवाप्राप्तिस्तत्रापि "अग्निहोत्रं जुहोती"त्यादौ तदधिकरणं प्रवर्तते । 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यत्रापि अग्निहोत्रहोमस्योत्पत्तिवाक्येन फलसामान्यसाधनत्वबोधेपि फलविशेषसाधनत्वस्याप्राप्त्या धात्वर्थस्य करणत्वमेवेति भावार्थाधिकरणं प्रवर्तत एव । "दध्ना जुहोती"त्यत्र तु होमस्या"ग्निहोत्रं जुहोती"त्यादिभिः प्राप्तत्वात् दध्न एव करणत्वेनान्वयो न होमस्येति न भावार्थाधिकरणप्रवृत्तिः । एवं "दध्नेन्द्रियकामस्य जुहुयादि"ति वाक्येऽपि दध्न एव करणत्वेनान्वयः, धात्वर्थस्तु दध्नः फलजननार्थमाश्रयो भवति ॥

अत्र प्राचीनाः दधिकरणत्वं करणीभूतं दधि वा विधीयत इति वदन्ति । खण्डदेवाचार्यास्तु यागवैषम्ये प्रमाणाभावात् दध्न एव विधानम् । नच प्राप्तत्वान्न विधिरिति वाच्यम्, पक्षप्राप्तावपि नियतप्राप्त्यभावेन विधित्वसंभवात् । "अग्निहोत्रं जुहोती"ति वाक्यानन्तरं हि "दध्ना जुहोति" "पयसा जुहोति" "यवाग्वा जुहोती"ति वाक्यैः खले कपोतन्यायेनान्वितानां दध्यादीनां विकल्प इति दध्नः पक्षप्राप्तिर्न नियता प्राप्तिः । इदं च भावार्थाधिकरणं धात्वर्थातिरिक्तायां भावनायां सत्यामेवोपपद्यते ॥

नच तस्यां प्रमाणं विद्यत इति वैयाकरणानामाशङ्का तु पचतीत्यस्य पाकं करोति पाकेन करोतीति विवरणानुपपत्त्य

धात्वर्थस्यापि कारकत्वावगमात् तस्यापि अन्वययोग्या क्रियाऽख्यातेनावबुध्यत इत्यङ्गीकरणीयमिति तस्या एव करोतिपद-विव्रियमाणाया भावनात्वान्नात्र प्रसरति । तथाच "भावप्रधानमाख्यात"मिति निरुक्तमपि भावनामुख्यविशेष्यतामेव वोधयति न धात्वर्थमुख्यविशेष्यताम् । एवंच सति संभवे नह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणमिति न्यायेन सर्वेषामपि भावनायामेवान्वयः ॥

तत्र च प्रातिपदिकार्थस्य प्रत्ययार्थकरणत्वादौ सुबुपात्तलिङ्गसंख्यादेरपि तत्रैवान्वयस्यापेक्षितत्वात् चशब्दार्थसमुच्चयादेः प्रातिपदिकार्थ एवान्वयात् स नियम एवं परिष्करणीयः यत् सुबुपात्तलिङ्गसंख्यातिरिक्तार्थो यो निपातोपसर्गप्रातिपदिकातिरिक्तशब्दगम्यस्तस्य सर्वस्यापि भावनायामेवान्वय इति । तथाच स्वर्गभाव्यकायां भावनायां यागस्यैव करणत्वेनान्वय इति क्षणिकस्य योगस्य फलपर्यन्तावस्थानासंभवात् श्रौतार्थानुपपत्त्याऽन्नापूर्वमेकमेव कल्प्यत इति नानेकादृष्टकल्पनाप्रयुक्तं गौरवमापतति ॥

अत्र वेदान्तिनः कर्माराधितेश्वरप्रसाद एव कर्मणः फलजननार्थं द्वारं नत्वपूर्वमिति मन्यन्ते ॥

तदिदं न सङ्गतमिति तु मीमांसकाः । तेषामयमाशयः—धर्मो येन क्रियते तन्निष्ठस्यैव कस्यचन व्यापारस्तस्य युक्तत्वेन तद्व्यधिकरणेश्वरप्रसादस्य तत्त्वायोगः । तथाच सूक्ष्मावस्थापन्नो याग एव यावत् फलमवतिष्ठते इति वा यागेऽनुष्ठिते फलोत्पत्त्यनुकूला एका शक्तिरङ्गीक्रियत इति वाङ्गीऽकरणीयम् । तत्र सूक्ष्मावस्थापन्नस्य यागस्य फलजननानन्तरं नाशकल्पनं न युक्तमिति शक्तिरेव द्वारम् । तदेवापूर्वमिति कथ्यते ।

यत्तु केषांचन ध्वंसद्वारा यागस्यैव फलजनकत्वमिति नापूर्वकल्पनमत्रापेक्षितमिति पर्यनुयोगकरणम्, तत्र "धर्मः क्षरति कीर्तनादि"ति धर्मनाशबोधकस्मृत्यनुपपत्तिः । नहि ध्वंसो नश्वरः । किंच प्रधानयागस्य साङ्गस्यैव फलजनकत्वात् अङ्गयागानां तदुपकारकत्वमपि ध्वंसद्वारैवेति कल्पनीयम् । तथाच सकृद्दर्शपूर्णमासयोरङ्गानुष्ठानेनैवेष्टसिद्ध्या पुनःपुनरङ्गानामनुष्ठानं नापेक्षितं स्यादिति प्रतिप्रधानं गुणावृत्तिन्यायो न सफलः स्यात् । एवं विकृतिष्वपि प्रकृतियागानुष्ठानानन्तरं अङ्गानुष्ठानमनावश्यकं भवेत् । अतोऽपूर्वमेवावान्तरो व्यापारः । एवं च तत्तदङ्गापूर्वाणां तत्तत्प्रधानयागजन्यपरमापूर्वोत्पत्तावेव विनियोगात् प्रधानापूर्वोत्पत्त्यनन्तरमेव नाशात् न कालान्तरे पुनरङ्गानुष्ठानं प्रकृतौ विकृतौ वाऽऽपद्यते ।

तच्चापूर्वं उत्पत्त्यपूर्वं अङ्गापूर्वं परमापूर्वं समुदायापूर्वं नियमापूर्वमिति पञ्चविधम् । उत्पत्त्यपूर्वं प्रधानयागानुष्ठानानन्तरमेवाङ्गयागानुष्ठानतः पूर्वं प्रधानयागजन्यं यदपूर्वं तदेव । अङ्गयागाद्यनुष्ठानानन्तरं उत्पत्त्यपूर्वजनने उत्पत्त्यपूर्वेण परमापूर्वजनने उपकारकाणि यान्यपूर्वाणि तान्यङ्गापूर्वाणि । तत्र दृष्टार्थपूर्वाङ्गविशेषाणां उत्पत्त्यपूर्वजनने उपयोगः, इतरेषामुत्तराङ्गापूर्वाणां तेन परमापूर्वजनने उपयोग इति विवेकः ॥

यत्र हि बहूनां प्रधानानां समुच्चित्यैकफलसाधनत्वं तत्र तदुत्पत्त्यपूर्वैः समुदायापूर्वं जन्यते । तत्र समुदायद्वये तु समुदायापूर्वाभ्यां परमापूर्वं जन्यते । नियमापूर्वं नियम्यमानानुष्ठानेन भवतीति पूर्वमेव निरूपितम् । तथाचैकं प्रधानं यत्र तत्राङ्गापूर्वाणि उत्पत्त्यपूर्वं परमापूर्वं च । यत्र बहूनां यागानामेकः समुदायः फलसाधनं तत्राङ्गापूर्वाणि उत्पत्त्यपूर्वं समुदायापूर्वं परमापूर्वं च । दर्शपूर्णमासयोस्तु अङ्गापूर्वं षडुत्पत्त्यपूर्वाणि समुदायापूर्वद्वयं चेति विशेषः। समुदायापूर्वस्थलेऽङ्गापूर्वाणां परमापूर्वेऽपि परम्परयोपयोगात् विकृतिषु नाग्नेयादिधर्मातिदेशानुपपत्तिरित्यादि भाट्टदीपिकायां व्यक्तम् ॥ तथाच सोमेन यजेतेत्यत्रैकस्यैव प्रधानस्य विद्यमानत्वात्नापूर्वद्वयकल्पनमिति प्रतिपदाधिकरणसिद्धान्त उपपन्न एव ॥

तत्र च श्रौतार्थापत्त्याऽपूर्वं अदृष्टफलेष्वेव कर्मसु कल्प्यते न दृष्टफलेषु, दृष्टफलेषु तु विधिसार्थक्यार्थं नियमापूर्वकल्पनमपेक्ष्यते । यथा "व्रीहीनवहन्ती"त्यत्र । अत्र हि अवघातस्य धात्वर्थस्य यद्यपि भावनायां करणत्वेनान्वयः, तथापि नावघातोऽपूर्वद्वारा क्रतूपकारकः प्रयाजादिवत् । तदेव हि फलं यत् भावनायां भाव्यत्वेनान्वेति । यथा ज्योतिष्टोमयागभावनायां भाव्यं स्वर्गो यागस्य फलम् । तथाच प्रकृतेऽपि व्रीहीनिति द्वितीयया व्रीहीणामेव कर्मत्वावगमात् त एव फलं ॥

फलत्वं च चतुर्धा भवत्युत्पाद्यत्वादिनेति पूर्वमेव निरूपितम् । तत्र विकार्यत्वरूपं फलत्वं व्रीहीणामङ्गीक्रियते । यद्यपि अवघातेन व्रीहिषु वैतुष्याख्यावस्थान्तरप्राप्तिर्भवतीति लोकत एवाधिगतं तथापि लोकतो नखविदलनादिसाधनान्तरं मा प्रवर्ततामिति लोकतः पूर्वं शास्त्रप्रवृत्त्यङ्गीकारेणावघातविधिरत्र सार्थक इति "व्रीहीनवहन्ती"त्यत्राप्यपूर्वविधिरेवेति खण्डदेवानुयायिनः ॥

तेषां मतेऽवघातोऽदृष्टार्थ इति पूर्वपक्षस्यावसर एव नास्ति । शास्त्रतः पूर्वं लोकप्रवृत्त्यङ्गीकारेण वा पूर्वपक्षः । अन्ये तु नियमविधिरेवायमिति अवघातनियमानुष्ठानात् एकं नियमापूर्वमङ्गीकरणीयम् । तत्रच नियमापूर्वं आनुषङ्गिकं न प्रधानोद्देश्यमिति न नियमापूर्वार्थं वैतुष्यार्थं चावघातानुष्ठानं । अन्यथा कृष्णलचरावपि नियमापूर्वार्थमवघातानुष्ठानापत्त्यार्थलोपात् कृष्णलेषु नावघात इति दशमाध्यायाधिकरणमसङ्गतं स्यात् । अतएव नानेकोद्देश्यकत्वनिबन्धनवाक्यभेदो न वा भावनायाः कृतिरूपाया एककर्मत्वभङ्गापत्तिः, किंतु वैतुष्यार्थमेवावघातानुष्ठानम् ॥

यद्यप्यवघातजन्यवैतुष्यस्य नखविदलनजन्यवैतुष्यस्य च स्वरूपतो न भेदस्तथापि अवघातजन्यवैतुष्यमेवापूर्वोपयोगि; अन्यथा नियमापूर्वसंपादनासंभवात् । तत्र व्रीहिपदेन व्रीहिस्वरूपं यदि विवक्ष्यते तर्हि वैकृतनीवारादिचरावघातानापत्तिः । प्रकृतावपि यवपुरोडाशप्रयोगेऽवघातानापत्तिः । अतः व्रीहिपदेनापूर्वसाधनव्यक्तयो विवक्ष्यन्ते इति अवघातस्यापि वैतुष्यद्वाराऽपूर्व एव पर्यवसानात् न विकृत्यादौ अवघातापत्तिः । अत्र चाऽपूर्वपदेन न परमापूर्वं विवक्ष्यते । अस्य वाक्यस्य दर्शपूर्णमासप्रकरणस्थत्वेन तादृशपरमापूर्वसाधनत्वस्याज्यादिष्वपि विद्यमानत्वेन तेषामप्यवघातापत्त्याऽवघातदृष्टार्थताबाधापत्तेः, किंतु पुरोडाशयागजन्यापूर्वमेव विवक्ष्यते इति न संकरः । तथाच "व्रीहीनवहन्ती"त्यत्र व्रीहिपदस्य न व्रीहित्वविशिष्टा व्यक्तिः केवलव्यक्तिविशेषो वार्थः, किंतु पुरोडाशयागजन्यापूर्वसाधनत्वमिति नावघातातिदेशाद्यनुपपत्तिः ॥

अत्रेदं विचारणीयम्—व्रीहिपदेन पुरोडाशयागजन्यापूर्वसाधनयवनीवारादिव्यक्तिसामान्यस्यापूर्वसाधनत्वेनैव खलु विवक्षा, तथाच तेन धर्मपुरस्कारेण व्रीह्यादिषु वैतुष्यार्थमवघातस्य लोकतोऽप्राप्तत्वात् कथमत्र नियमविध्यादिसिद्धान्तोपपत्तिरिति, अत्रायमाशयः—यद्विशेषयोः कार्यकारणभावः तत्सामान्ययोरपीति न्यायेनापूर्वसाधनत्वेनेव व्रीहित्वेनापि अवघातस्य साधनत्वमर्थसिद्धमादाय सामान्यरूपेणावघातादिप्राप्तिमादायैव सर्वत्र नियमविधिप्रवृत्तिरिति । विवेचितं चैतत् नवमाध्याये भाट्टदीपिकायामिति तत एव द्रष्टव्यम् । अद्वैतसिद्धावपि तृतीयपरिच्छेदेऽयमर्थः सम्यगेव विशदीकृत इति सर्वमनवद्यम् । तथाचावघातो नापूर्वार्थ इति सिद्धम् ॥

एतेन—"व्रीहीन् प्रोक्षती"ति वाक्यमपि व्याख्यातम् । तत्रापि प्रोक्षणेन व्रीहिष्वेव कस्य चन संस्कारस्योत्पत्त्यभ्युपगमेन प्रयाजादिवददृष्टार्थत्वाभावात् । स च संस्कारः अतिशय इति पदेन व्यपदिश्यते । स च व्रीहिधर्मो नापूर्ववदात्मधर्मः । उभयत्रापि पूर्वपक्षेऽपूर्वार्थत्वम् । तत्र व्रीहीनिति द्वितीयाया लक्षणया करणत्वमर्थः । विशिष्टविधानं च समानम्, सिद्धान्ते तु प्रथमवाक्ये व्रीहिधर्मवैतुष्यार्थत्वं द्वितीयवाक्ये तन्निष्ठसंस्कारार्थत्वमिति विवेकः । तथाच सति संभवे धात्वर्थस्य दृष्टार्थत्वम्, अन्यथा अदृष्टार्थत्वम् ॥

यत्तु—"विनापि विधिना दृष्टलाभान्न हि तदर्थता । कल्प्यस्तु विधिसामर्थ्यात्स्वर्गो विश्वजिदादिव"दिति शास्त्रदीपिकायामुक्तं तत् दृष्टफलत्वे यस्य वाक्यस्य नियमविधित्वं न संभवति तद्वाक्यविषयम् । यथा होमादीनां न दध्यादिभस्मभावार्थत्वं किंतु अदृष्टार्थत्वमेव । यत्र तु नियमविधित्वं संभवति तत्र दृष्टार्थत्वमेवाङ्गीकरणीयम् । यथा अध्ययनविधेरर्थज्ञानार्थत्वम् । तदुक्तं शास्त्रदीपिकायां—"लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना । विधेस्तु नियमार्थत्वान्नानर्थक्यं भविष्यती"ति । तथाच प्रकृतेऽपि दृष्टार्थत्वमेवाङ्गीकरणीयम् । एतेन करणमन्त्रा अपि 'बर्हिर्देवसदनं दामी'त्यादयो व्याख्याताः । तेषामपि तत्तदर्थप्रकाशनरूपदृष्टार्थत्वात् । मन्त्रेणैव मन्त्रार्थाः स्मर्तव्या इति नियमविधिसंभवात् ॥

यानि तु स्तोत्राणि शस्त्राणि वा तानि त्वदृष्टार्थान्येव । तत्र प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम् । अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम् । तानि हि न देवताप्रकाशनार्थानि किंतु तद्गुणाभिधानानि । गुणाभिधानस्य हि प्रकृतकर्मणि देवाताया इव व्रीहीणामिव वा नोपयोगो वर्तते । तथाच तददृष्टार्थत्वमेव । तथाच माहेन्द्रस्तोत्रादौ केवलेन्द्रिपदसत्त्वमपि न दोषाय । तथाच द्विविधान्यङ्गानि सन्निपत्योपकारकाणि आराදुपकारकाणि च । यानि कर्माङ्गद्रव्योद्देशेन विहितानि तानि सन्निपत्योपकारकाणि यथाऽवघातप्रोक्षणादीनि, यानि तु प्रकरणादिना साक्षात्प्रधानाङ्गानि तानि आरादुपकारकाणि । सन्निपत्य-एकत्र पतित्वोपकारकाणि आरात्-शीघ्रं तादृशपतनं विनोपकारकाणीति च सन्निपत्योपकारकारादुपकारकपदयोरर्थः । तत्र सन्निपत्योपकारकेभ्यो नात्मन्यपूर्वं आरादुपकारकेभ्यस्तु तदिति प्रधानापूर्वमिवाङ्गापूर्वमप्यवश्यमङ्गीकरणीयम् । अत्राध्याये केवलं स्तोत्रादितोऽप्यपूर्वमुत्पद्यते इत्येव निरूप्यते । अङ्गाङ्गिभावव्यवस्थादिकमुत्तराध्यायइति न दोषः । "अग्नीदग्नीन् विहरे" त्यादिमन्त्रास्तु केवलमभिधायका एव न विधायका इति मन्त्राणां प्रमाणान्तरप्राप्तार्थस्मारकत्वमेवेति न कर्मभेदोऽपूर्वभेदो वा तत्र भवति ॥

अथेदानीं प्रसङ्गात् को नाम मन्त्रः, किंच ब्राह्मणत्वमिति विचारयामः । मन्त्रत्वप्रकारकप्रसिद्धिविषयो मन्त्र इति मन्त्रलक्षणं "कपिंजलानालभते" इत्यादि विधिसाधारणमपि भवति, अन्यानि तु लक्षणानि न तत्साधारणानि भवन्ति इति मन्तव्यम् । तद्व्यतिरिक्तो वेदभागः सर्वोऽपि ब्राह्मणपदेन व्यवह्रियते । ब्राह्मणं विधिः चोदकवाक्यमित्यादीनि पर्यायपदानि । अर्थवादानां नामधेयानां निषेधानां सर्वेषां विध्येकवाक्यतयैव प्रामाण्यात् ब्राह्मण एवान्तर्भावः ॥

यस्तु "अग्नये जुष्टं निर्वपामी"ति आग्नेययागप्रकरणस्थस्य सौर्यविकृतियागेऽतिदेशेन प्राप्तस्य वैकृतसूर्यदेवताप्रकाशनार्थमग्निशब्दस्य स्थाने सूर्यायेतिपदनिक्षेपस्स ऊहपदेन व्यवह्रियते । स चोहः मन्त्रो वा नवेति विचारणायां सोऽपि मन्त्र एवेति पूर्वपक्षो भवति । तस्यायमाशयः-वैयाकरणानां तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति न्यायः प्रसिद्धो वर्तते, तेन न्यायेन मन्त्रमध्ये पतितोऽपि ऊहो मन्त्र एव युक्तः । अतएव "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" इति श्रुतौ मन्त्रपदप्रयोग उपपद्यते ॥

इदं हि वाक्य प्रवरनामधेयादिषु स्वरवर्णाद्यनपराधेनोच्चारणमेव बोधयति यथेन्द्रशत्रुः स्वरतोऽपराधादिति दृष्टान्तस्वारस्यात् । यथोहेषु स्वरवर्णाद्यपराधः संभाव्यते न तथा वैदिकेषु अध्ययनपरंपरया मात्रामात्रापरित्यागेन स्वरमात्रापरिहारेण च परिपाल्यमानेषु मन्त्रेषु संभाव्यते । तथाचोहप्रवरनामधेयानि तत्तत्प्रयोगे यजमानेन प्रयुज्यमानानि मन्त्र एवेति । तदिदं न सङ्गतम्, नोहादयो मन्त्रा भवितुमर्हन्ति । नहि गोमध्यपतितो गर्दभो गौर्भवितुमर्हति । तन्मध्यपतितः तद्ग्रहणेन गृह्यत इत्यस्य हि न्यायस्येदमेव तात्पर्यं, यत्र मध्यगतेन पूर्वतनस्वरूपाहानिः पूर्वतनस्वरूपबोधकेन पदेन सागमस्वरूपस्यापि तत्र ग्रहणमिति ॥ यथा अदश्शब्दावयवाकारत्वेनादकश्शब्दावयवाकारस्यापि ग्रहणमिति । तथाचोहादीनामपि मन्त्रावयवत्वं संभवत्येव । न तावता मन्त्रत्वम् । "मन्त्रो हीनः स्वरतो वर्णतो वेति" श्रुतौ मन्त्रपदं गौण्या वृत्त्या मन्त्रमेवोहं बोधयति । अतएव महाभाष्ये—मन्त्रहीन इति पदयोः स्थाने "दुष्टः शब्दः स्वरतो वर्णतो वेति" पाठो दृश्यते । तथाचोहादयो न मन्त्राः ॥ अतएव वैदिकानां तत्र मन्त्रत्वप्रसिध्यभाव उपपद्यते ॥

अनेन प्रसङ्गेनोपस्थितर्गादिस्वरूपमप्यत्रैव सूत्रकारा निरूपयन्ति । तत्र ऋङ्मन्त्राणां लक्षणमर्थवशेन व्यवस्थितपादविभागत्वमिति "तेषां ऋक्यत्रार्थवशेन पादव्यवस्थे"त्यत्र निरूपितम् ॥ गीतयस्तु सामपदेन व्यवह्रियन्ते । अतिरिक्ताश्च मन्त्रा यजुर्मन्त्राः । ऋग्वेदगता मन्त्रा ऋङ्मन्त्राः सामवेदगता मन्त्राः साममन्त्रा यजुर्वेदगता मन्त्रा यजुर्मन्त्रा इति लक्षणं तु न संभवति । सर्वेषु हि वेदेषु सर्वेऽपि मन्त्रा विद्यन्ते । अतएवो "चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्ना उच्चैर्निगदने"ति वाक्ये ऋगादिशब्दाः "अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद" इत्युपक्रमे वेदस्तुत्या विध्यर्थवादयोरेकविषयत्वनियमात् उपक्रमस्थार्थवादगतवेदपदानुसारेणर्गादिवेदपरा इति "वेदो वा प्रायदर्शनादि"त्यधिकरणे निरूपितं सप्रयोजनं भवति । अत्र हि पूर्वपक्षे वेदान्तरगतानामपि ऋङ्मन्त्राणामुच्चैरुच्चारणं सिद्धान्ते तु तत्तद्वेदस्वर इत्युपक्रमपराक्रमादौ व्यक्तम् । तथाच नायं नियमो यदृग्वेदे ऋङ्मन्त्रा एवेत्यृगादिमन्त्राणां पृथक् लक्षणकरणमुपपद्यत एव । ऋगादिविधिवाक्यानां लक्षणं तु तत्तद्वेदगतविधिवाक्यत्वमेवेति न दोषः ॥

यत्तु पूर्वोक्तेषु वाक्येषु मध्ये "उच्चैर्निगदेने"ति वाक्यं तत्र निगदशब्देन निगदो वेद इति चतुर्थो वेदो न विवक्ष्यते । निगदशब्दो हि उच्चैर्गद्यमानत्वगुणयोगेन यजुर्विशेषानेव बोधयति । तथाच न संज्ञाभेदेन वेदभेदो विवक्षितः । अयमेव न्यायो लौकिकस्य ब्राह्मणपरिव्राजकन्यायस्य मूलम् ॥

यथाहि 'ब्राह्मणमानय परिव्राजकं भोजये'ति संज्ञाभेदे धर्मभेदे च सत्यपि परिव्राजकशब्देनापि ब्राह्मणविशेष एव विवक्ष्यते नत्वब्राह्मण एवमत्रापि यजुर्विशेष एव निगदपदेन विवक्ष्यत इति न किंचिदनुपपन्नम् ॥ यस्तु लौकिकस्तक्रकौण्डिन्यन्यायः यथा 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याये'ति, अत्र ब्राह्मणविशेषस्यैव कौण्डिन्यशब्देनापि ग्रहणमिति तत्र कौण्डिन्याय दधि न देयमित्यभिप्रायोऽपि गम्यते, ब्राह्मणपरिव्राजकवाक्ये तु परिव्राजकस्यानयनं न कर्तव्यमिति न गम्यत इति ब्राह्मणपरिव्राजकन्यायाद्विलक्षणोऽयं न्यायः ॥

"उच्चैर्निगदेने"त्यत्र तु निगदानामुपांशुत्वस्याप्राप्त्या न तन्निषेधोऽत्राभिप्रेत इति ब्राह्मणपरिव्राजकस्यैवायं न्यायो मूलम् । अतएव भाट्टदीपिकायां निगदग्रहणं तु ब्राह्मणपरिव्राजकन्यायेनेत्युक्तम् । "प्रकल्प्य चापवादविधिमुत्सर्गोऽभिनिविशते" इति न्यायेनो "पांशु यजुषे"ति वाक्यं हि निगदव्यतिरिक्तानामेवोपांशुत्वं गमयतीति ॥

एतावता प्रबन्धेन ऋगादिमन्त्रलक्षणानि यानि निरूपितानि तैर्ऋगादिमन्त्रपरिमाणमप्यर्थात्सूचितम्, यजुर्मन्त्रपरिमाणं तु न सुगमं प्रश्लिष्टपठितसंहिताग्रन्थानामेव यजुर्मन्त्रत्वात् । तत्र चैकार्थत्वमेकमन्त्रत्वप्रयोजकमिति वर्णनीयम् । तत्र किं नामैकार्थत्वम्? न तावदेकविधेयकत्वम् । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति हि वाक्यस्यैकत्वं न सिद्ध्येत् । भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यं तदिति विवक्षणे यद्यपि नोक्तदोषः, अनेकेषामपि मुख्यविशेष्याणां तत्रैकप्रतीतिविषयत्वात् । तथापि "भगो वां विभजतु अर्यमा वां विभजत्वि"त्यादिमन्त्राणामेकत्वमापद्येत । बहवः खलु ते मन्त्राः । एतेनैकप्रयोजनकत्वं एकत्वमित्यपि परास्तम्; सर्वेभ्यो दर्शपूर्णमासौ इत्यस्य तदनापत्तेः । अतो भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्ये सति विभज्यमानसाकाङ्क्षत्वं एकवाक्यत्वम् ।

"स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि" इति मन्त्रे विभज्यमाने "तस्मिन् सीदामृते प्रतितिष्ठे"ति मन्त्रो यथा साकाङ्क्षः; तस्मिन्पदार्थानिर्णयात्, नैवं "भगो वां विभजतु" इत्यस्य विभागेन "अर्यमा वां विभजतु" इत्यस्य साकाङ्क्षत्वम् । अत्र साकाङ्क्षत्वपदेनापर्यवसितशाब्दबोधजनकत्वं विवक्षितम् । विभज्यमानसाकाङ्क्षत्वेऽपि "स्योनं ते" "तस्मिन् सीदे"ति मन्त्रयोर्भिन्नप्रतीतिविषयानेकमुख्यविशेष्यकत्वात् नैकमन्त्रत्वम् । तथाच वाक्याल्लिङ्गस्य बलीयस्त्वेन मन्त्रद्वयस्य व्यवस्थया सदनसादनयोर्विनियोगोऽपि वक्ष्यमाण उपपद्यते । यथा पदैकवाक्यतास्थले साकाङ्क्षत्वेनैकवाक्यत्वमेवं वाक्यैकवाक्यतास्थलेऽपीति प्रयोगविधिरपि श्रौत एव कल्प्यमानोऽपि भवति । तथाच विभ

ज्यमानसाकाङ्क्षत्वे सति भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यमेकवाक्यत्वम् । तत्र विशेषणदलं "भगो वां विभजत्वि"त्यादीनां एकवाक्यतानिवारणार्थम् । विशेष्यदलं तु 'स्योनं ते' 'तस्मिन् सीदे'तिमन्त्रयोरेकमन्त्रत्वनिरासार्थम् । यत्र तु "सर्वेभ्यो दर्शपूर्णमासावि"त्यादौ उक्तलक्षणलक्षितत्वं तत्रैकवाक्यत्वं संभतमेव । "इषेत्वोर्जेत्वे"त्यत्र तु आख्यातं यत्र न श्रूयते तत्रापी "षेत्वेति शाखामाच्छिनत्ती"त्यादिविनियोगविधिभेदानुसारेण च्छिनत्तीत्यादिपदाध्याहारात् विभिन्नप्रतीतिविषयानेकमुख्यविशेष्यकत्वात् प्रथमस्य छेदनार्थत्वात् द्वितीयस्य मार्जनार्थत्वाच्च परस्य साकाङ्क्षत्वाभावाच्च न विशिष्टस्य प्रयोजकस्य तत्र संभव इति मन्त्रभेद एव तत्र विवक्षितः ॥

यद्यपि द्विविधो विनियोगो दृश्यते—यथाद्यप्रतीकेनान्तप्रतीकेन च । यथे"मामगृभ्णन्नि"त्यादावाद्यप्रतीकेन । अन्तप्रतीकेन तु "अमृतमसि प्राणायत्वे"त्यत्र । अत्र ह्यमृतमसि प्राणायत्वेति प्रतीकस्य "आनः प्राण एतु परावत आन्तरिक्षाद्दिवस्परि । आपः पृथिव्या अमृतमसि प्राणायत्वे"ति मन्त्रोऽर्थः । तथाचेषेत्वोर्जेत्वेत्यनयोरेकमन्त्रत्वेऽपि "इषेत्वेति शाखामाच्छिनत्ति ऊर्जेत्वेत्यनुमार्ष्टि" इति विनियोगयोरुपपत्तिस्तु न संभवति । तत्रैवोक्तविधद्विविधविनियोगस्यादरः । यत्र लिङ्गवशेन मन्त्रैक्यावगमः यथोक्तस्थले । इषेत्वोर्जेत्वेत्यनयोस्तु न लिङ्गवशेन मन्त्रैकत्वमिति सर्वस्यापि मन्त्रभागस्य विनियोग एवे "षेत्वेतिशाखामाच्छिनत्ति" "ऊर्जेत्वेत्यनुमार्ष्टी"त्यनयोर्विवक्षित इति न दोषः ॥

यत्तु क्लृप्तिमन्त्रादौ क्लृप्तिप्रकाशन एव विनियोगस्तत्रापि "क्लृप्तीर्वाचयती"ति विनियोगविधौ क्लृप्तिपदार्थानां भेदस्याम्नानमित्वा "युर्यज्ञेन कल्पतामि"त्यादावपि मन्त्रभेद एव । तथाच विनियोगविध्यनुसारेणाख्यातरहितेष्वपि मन्त्रेषु आख्याताध्याहारादिना मन्त्रभेद एव विवक्षणीयः विभज्यमानसाकाङ्क्षत्वादिति निरूपितं भवति ॥

एतावता प्रबन्धेन यावतांशेनैकवाक्यत्वं तावदन्तो भाग एको यजुर्मन्त्र इति यजुःपरिमाणं निरूपितम् । तत्र यथा स्वार्थमाम्नातस्य विभागे साकाङ्क्षत्वमेकवाक्यताप्रयोजकमेवमन्यार्थमाम्नातस्य विभागेऽपि तत्त्वं तत्त्वप्रयोजकम् । अत एव "या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रंवचो अपावधीं त्वेषं वचो अपावधीं स्वाहे"ति मन्त्रार्थमाम्नातस्य तनूर्वर्षिष्ठेत्यादिभागस्य "या ते अग्ने रजाशया" इत्यनेनापि साकाङ्क्षत्वात् अत्रापि संबन्धेन "या ते अग्ने रजाशया तनूर्वर्षिष्ठोग्रं वचोऽपावधीन्त्वेषं वचोऽपावधीं स्वाहे"त्यस्यैव मन्त्रत्वं नतु "या ते अग्ने रजाशये"त्येतावन्मात्रस्य ॥

शब्दानामन्वये कारणमाकाङ्क्षा योग्यताऽऽसत्तिश्च नत्वनन्तरसमाम्नानम् । यत्र ह्यन्यार्थमाम्नातस्यान्येनान्वयो न संभवति तत्र तु यावदाम्नातं तावदेव यजुःपरिमाणम् तत्र पर्यवसितशाब्दबोधजनकत्वं तु अध्याहृतैर्योग्यैः पदान्तरैर्लौकिकैरिति ऊहस्थल इव न तस्यापि मन्त्रपरिमाणेऽन्तर्भावः । यथा "सं ते प्राणो वायुना गच्छतामि"त्येतदर्थमाम्नातं संगच्छतामिति पदं "सं यजत्रैरङ्गानी"त्यत्रान्वयायोग्यम् ॥

नहि अङ्गानीति बहुवचनं संगच्छतामित्येकवचनेनान्वेतीति तत्राध्याहारेणैकवाक्यार्थपर्यवसानम् । पूर्वत्रानुषङ्गोऽत्र तु अध्याहार इति निर्णयः । अस्य प्रयोजनमनुषङ्गे तत्सहित एव मन्त्रोऽध्याहारे तु तद्रहित इति विशेषः इति शास्त्रदीपिकायां व्यक्तम् । सर्वथा च मन्त्रलक्षणादीनामुपपन्नत्वात् मन्त्राणां चाभिधायकत्वेनाविधायकत्वात् लिङादिघटितवाक्यानामेव विधित्वात् तत्र च धात्वर्थस्यैव भावनायां साधनत्वेनान्वयात् उपपदार्थानां फलसाधनत्वाभावात् अपूर्वभेदो धात्वर्थभेदे एव भवति-नतु तदभेदे । यथा"ऽग्निहोत्रं जुहोति" "अग्निहोत्रं जुहुयात्स्वर्गकाम" इत्यादौ नापूर्वभेदः धात्वर्थस्य होमस्यैकत्वात् । यजति ददाति जुहोतीति विभिन्नधातुप्रतिपाद्यानां धात्वर्थानां तु भेदात् तत्रापूर्वभेद एवाङ्गीकरणीय इति धर्मभेदे प्रथमं निमित्तं शब्दान्तरम् ।

तच्च विभिन्नधात्वर्थकत्वं नतु भिन्नधातुकत्वमात्रम् । अतएव "तिस्र आहुतीर्जुहोती"त्यत्र संख्यया धात्वर्थभेदेनापूर्वभेदादिकमुपपद्यते । विभिन्नधात्वर्थो एकैव भावनात्र विवक्ष्यताम्, यथा दध्ना जुहोति पयसा जुहोतीत्यादौ दध्याद्यनेकद्रव्यानुरक्तैकैव भावना विधीयते, तथाच नानेकादृष्टकल्पना, अन्यथा "सोमेन यजेते"त्यादावपि सोमयागयोरुभयोरपि फलसाधनत्वापत्त्या प्रतिपदाधिकरणसिद्धान्तभङ्गापत्तिरिति शङ्का तु नात्र प्रसरति । यथैक एव होमः दध्यादिना भवति नैवमेकैव कृतिर्यागदानहोमादिभिर्भवति; विजातीयकृतिं विना विजातीयधात्वर्थस्वरूपासंभवात् । तथाच धात्वर्थभेदो भावनाभेदश्चावश्यं विवक्षणीय इति धात्वर्थभेदाद्भावनादिभेदादि युक्तम् ।

धात्वर्थभेदश्चाभ्यासेन संख्यया संज्ञया गुणात् प्रकारान्तरेण चैकधातुबोध्यत्वेऽपि भवति । क्वचित्तु धातुभेदेनेत्यन्यदेतत् । अत्रेदं चिन्त्यम्—यत् विभिन्नधात्वर्थकत्वं शब्दान्तरत्वमिति । अत एव संख्यया कर्मभेदस्य तिस्र आहुतीरित्युदाहरणम् । यथाऽभ्यासादिना धात्वर्थभेद एवमत्रापि शब्दान्तरात् धात्वर्थभेद एव निरूप्यते इत्युक्तिः संभवति । तथाच क्वचिद् भावनाभेदः क्वचित् धात्वर्थभेदो विचार्यत इति वैरूप्यमापद्यते । यद्यपि भावनैव प्रधानमिति तद्भेद एवाध्यायार्थ इति युक्तयः सन्ति; तथापि तदुपयोगितयैव धात्वर्थभेदोऽपि विचार्यते इति न दोष इति । अत्रेदं तत्त्वम्—

भावनाभेदोऽध्यायार्थः, अभ्यासेन हि प्रथमं भावनाभेद एव। एवं गुणेनापि; गुणस्य साक्षात् भावनायामेवान्वयात्। एवं प्रकरणान्तरेणापीति शब्दान्तराधिकरणेऽपि स एव निरूप्यते । संख्यासंज्ञयोस्तु धात्वर्थभेदकत्वेऽपि न विरोधः; तत्र गत्यन्तराभावादिति।

अत्राभ्यासात् कर्मभेदस्योदाहरणम्—"समिधो यजति" "तनूनपातं यजति" "इडो यजति" "बर्हिर्यजति" "स्वाहाकारं यजति" इति। अत्र यद्यपि न धातुभेदः, तथापि पंचस्वपि एक एव यागो यदि विवक्ष्यते न तर्हि किमपि प्रयोजनं संभवति । अतो विधिः पुनःश्रवणं भावनाभेदार्थम् । भावनाभेदश्च यागभेदमन्तरा न संभवतीति धात्वर्थभेदोऽप्येकधातुबोध्यत्वेऽप्यर्थसिद्ध एव। "समिधो यजति" "तनूनपातं यजति" "बर्हिर्यजति" "स्वाहाकारं यजति" "इडो यजति" इति पञ्चवाक्यानि दर्शपूर्णमासप्रकरणे विद्यन्ते। एतानि वाक्यानि तद्दर्शपूर्णमासयागोद्देशेन न समिदादिदेवताविधानार्थानि; आग्नेयादिवाक्यैरेव तत्राग्न्यादिदेवतानां शिष्टत्वेनोत्पत्तिशिष्टगुणावरोधे गुणान्तरावरोधो न न्याय्य इति न्यायविरोधात्, अतः कर्मभेद एवात्र विवक्षणीयः॥

तत्रच निमित्तं न गुणभेदाम्नानम्; समिदादिवाक्येषु समिदादिपदानां कर्मनामधेयत्वेन देवतापरत्वाभावात्। यथाह्य"ग्निहोत्रं जुहोती"त्यत्राग्निहोत्रपदं तत्प्रख्यन्यायेन नामधेयं एवं समिदादिपदमपि नामधेयमेव॥

दृष्टान्ते"ऽग्निर्ज्योतिर्ज्योतिरग्निःस्वाहे"ति मन्त्रलिङ्गादिवात्र "समिधः समिधोऽग्न आज्यस्य वियन्तु" "तनूनपादग्न आज्यस्य वेतु" "इडो अग्न आज्यस्य वियन्तु" "बर्हिरग्न आज्यस्य वेतु" इत्यादिमन्त्रलिङ्गादेव देवतायाः प्राप्तिसंभवः। समिदादिपदानामत्र नामधेयत्वेऽपि यजिसामानाधिकरण्येनैव शाब्दबोध इति समिदादिसंज्ञकस्यैव यागस्य विधाने प्रयोजनाभावादनन्यपरविधिपुनःश्रवणरूपाभ्यासेनात्र कर्मभेदः।

"अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योति"रित्यत्र ज्योतिरादिपदानां न "एतेन सहस्रदक्षिणेन यजेते"ति यजिसामानाधिकरण्येन शाब्दबोध इति यजिसामानाधिकरण्यं विनाऽऽम्नातानां नामधेयानामेवेदमेतदादिशब्देनानूदितानां कर्मभेदकत्वं निरूपयिष्यत इति न संज्ञयाऽत्र कर्मभेदः। येन न्यायेन समित्पदं नामधेयं तेनैव न्यायेन तनूनपातादिपदेनापि न देवताविधानमिति "दध्ना जुहोती"त्यादिवत् गुणविधित्वोपवर्णनमपि न भविता॥ प्रकरणान्तरन्यायस्तु नात्र भवति। अनुपस्थितौ हि प्रकरणान्तरम् । नचात्रानुपस्थितिः। तत्सिद्धं शब्दान्तरमिवाभ्यासोऽपि कर्मभेदमादधातीति । तथाच पञ्चप्रयाजजन्यानि पञ्चाङ्गापूर्वाण्यङ्गीकरणीयानि। "अग्निहोत्रं जुहोति" "दध्ना जुहोति" इति वाक्ययोस्तु नाभ्यासः; होमस्य द्रव्यापेक्षित्वेन द्रव्यविधानेन सार्थक्यात् अनन्यपरविधिपुनःश्रवणाभावात्। एतेन "दध्नेन्द्रियकामस्य जुहुयादि"त्यत्रापि न कर्मभेद इति सूचितम्॥

यथा "ग्निहोत्रं जुहोति" "अग्निहोत्रं जुहुयात्स्वर्गकाम" इति वाक्ययोर्न कर्मभेदः; प्रथमस्योत्पत्तिपरत्वेन द्वितीयस्याधिकारपरत्वेन चान्यपरत्वाद्विधिपुनःश्रवणस्य, तथा "दध्ना जुहोती"ति विहितस्य "दध्नेन्द्रियकामस्य जुहुयादि"त्यत्र फलसंबन्धेनान्यपरत्वान्नानन्यपरविधिपुनःश्रवणरूपाभ्याससंभवः॥

अनेनैव न्यायेन "य एवं विद्वान् पौर्णमासीं यजते" "य एवं विद्वानमावास्यामि"त्यत्र नाग्नेयादियागव्यतिरिक्तयागान्तरविधानम्; तेषामेव षण्णां यागानां पौर्णमास्यादिनामसंबन्धबोधनेनान्यपरत्वात्। नहि "य एवं विद्वानि"ति वाक्ये यागविधानं संभवति। तत्रैव यागस्य विधिर्यत्र स्ववाक्ये वाक्यान्तरे वा प्राकरणिके द्रव्यदेवतयोर्द्रव्यमात्रस्य वा विधिरस्ति। यथाऽ"ग्निहोत्रं जुहोति" "सोमेन यजेते"त्यादौ। अत्र तु स्ववाक्ये द्रव्यं देवता वा न श्रूयते। नापि वाक्यान्तरेण तयोस्सिद्धिः। तद्धि वाक्यं न "यदाग्नेयोऽष्टाकपालोऽमावास्यायामि"ति भवति। तत्राग्निदेवतायाः पुरोडाशस्य च प्राप्तकर्मोद्देशेन विधाने वाक्यभेदापत्त्या क्रियान्तरविधानं हि समापद्येत।

नापि "वार्त्रघ्नी पौर्णमास्यामनूच्येते" "वृधन्वती अमावास्यायामिति" विनियुक्तमन्त्रलिङ्गात् अग्निसोमयोर्देवतात्वस्य "सर्वस्मै वा एतद्यज्ञाय गृह्यते यत् ध्रुवायामाज्यमि"ति द्रव्यस्य च प्राप्तिः; वार्त्रघ्नीवृधन्वतीवाक्ययोरपेक्षितव्यवस्थामात्रपरत्वेनाविनियोजकत्वात्। "सर्वस्मै वे"त्यस्याप्युपांशुयागविषयत्वान्न प्रकृतोपयोगः।

अत्रेयमाशङ्का—"य एवं विद्वान्" इति वाक्यं क्रियान्तरविधिपरमेव। द्रव्यदेवतयोः प्राप्तिस्त्वतिदेशेन भविता। यथा हि सोमयागः स्वार्थचोदितदेवतारहित एवमयमपीति ज्योतिष्टोमस्यैतत्प्रकृतित्वाङ्गीकारे हि न दोषः । अतोऽपूर्वभेदोऽत्र विवक्षितः—इति।

तत्रेदं समाधानम्—ज्योतिष्टोमस्येष्टिपशुप्रयोगादिसंवलितत्वेनेष्टीनां दर्शपूर्णमासविकृतित्वेन दर्शपूर्णमासस्वरूपनिर्णयातित्पूर्वं सौमिकप्रयोगस्यैव निर्णयाभावेन "य एवं विद्वानि"तिवाक्यविहितस्य यागस्य ज्योतिष्टोमविकृतित्वासंभव इति। "य एवं विद्वान्" इति वाक्यद्वयविहितयागावेव हि दर्शपूर्णमासौ।

तथाचैकैकत्रिकानुवादेन तस्य पूर्णमासी अमावास्येति नामसंबन्ध एवात्र क्रियते। तत्र पौर्णमास्यां आग्नेययागः उपांशुयागः अग्निषोमीययाग इति त्रिकं, अमावास्यायां आग्नेययाग ऐन्द्रदधियागः ऐन्द्रपयोयागः इति त्रिकमिति विभागः। दर्शपूर्ण-

मासाभ्यामित्यत्रोत्पत्तिवाक्येन येषां कालसंबन्धोऽवगतस्तेषामेव ग्रहणमिति न प्रयाजादीनां ग्रहणम् । अमावास्या दर्श इति पर्यायपदे । एवं पौर्णमासीपूर्णमासपदेऽपि ।

अत्र च कल्पसूत्राण्येवं प्रमाणानि । तत्र "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" । "ऐन्द्रं दध्यमावास्यायां" "ऐन्द्रं पयोऽमावास्यायां" "ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" "तावब्रूतामग्नीषोमावाज्यस्यैव नौ उपांशु पौर्णमास्यां यजन्" इति वाक्यैः आग्नेयाग्नीषोमीयोपांश्वैन्द्रदधिपयोयागानां षण्णाममावास्यापौर्णमास्यन्यतरकालसंबन्धोऽवगत इति षण्णामेव यागानां समुदायद्वयरूपेण "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"त्यत्र विवक्षा । तथाच "य एवं विद्वानि"ति वाक्यद्वयेऽपि न यागान्तरं विधीयत इति न धात्वर्थभेदो न वा भावनाभेद इति सिद्धम् ।

अत्र केषांचिन्मतं उपांशुयागोत्पत्तिविधिः—"उपांशुयागमन्तरा यजती"तिवाक्यमिति, तन्मते पूर्णमासीसमुदाये तस्य ग्रहणं "शिरो वा एतद्यज्ञस्ये"त्यादिप्रधानक्रमे "हृदयमुपांशुयाग" इति तस्यापि ग्रहणमिति "प्रायदर्शनाच्चे"ति सूत्रानुसारिणी व्यवस्था पौर्णमास्यमावास्याशब्दयोः समुदायद्वयपरत्वे इति समुदायस्य प्रत्येकं पौर्णमास्यमावास्याकालसंबन्धः "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेते"ति वाक्यद्वयेन सिध्यतीति न तद्वाक्यं वितथम् ।

अत्राग्नेयोऽष्टाकपाल इत्यत्राग्नेयपदार्थस्यापि द्रव्यपरत्वात्सामानाधिकरण्येनाष्टाकपालपदार्थान्वयो व्युत्पन्न इति शास्त्रदीपिकाकाराः । खण्डदेवाचार्यास्तु—"तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः । देवताया विधिस्तत्र दुर्बलं तु परं पर"मिति वार्तिकात् "साऽस्य देवते"ति पाणिनिस्मृतेरपि तद्धितस्य देवताशक्तावेव तात्पर्यात्—द्रव्यदेवतयोरुभयोरपि यागं प्रति गुणत्वेन "गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यादि"ति न्यायेन परस्परान्वयस्याव्युत्पन्नत्वात् देवताया अपि भावनायामेवान्वय इति—वदन्ति ।

तत्र यद्यपि प्रथममते आग्नेयवाक्येन विद्वद्वाक्यापेक्षितरूपस्य विधौ नानेकविधानप्रयुक्तो वाक्यभेदः; तथापि आग्नेयाष्टाकपालयोः संबन्धः प्राक्, अनन्तरं च तयोर्यागसंबन्धो विधातव्य इत्यावृत्तिलक्षणो वाक्यभेदो भवेदेवेति शास्त्रदीपिकायामेवोक्तमिति न दोषः । अयमेव न्यायोऽग्नीषोमीयादिवाक्येष्वपि योजनीयः । सर्वथा च विद्वद्वाक्ये न यागान्तरविवक्षा । यथाचात्र यागविधानाभावेऽप्यपूर्वभेदो न निवार्यः; समुदायापूर्वस्याङ्गीकरणीयत्वात्, तथाऽन्यत्र विस्तरः ।

"उपांशुयाजमन्तरा यजती"तिवाक्यशेषतया समाम्नातानि "विष्णुरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायेति" वाक्यानि यानि, तान्यपि तव्यप्रत्ययघटितत्वात् यागान्तरविधायकानि, तेषामेवोपांशुयाजनामसंबन्ध "उपांशुयाजमन्तरा यजती"त्यत्र बोध्यत इति तु न संभवति; 'संभवत्येकवाक्यत्वे वाक्यभेदो न युज्यते' इति न्यायेन विष्ण्वादिदेवताकानेकयागविधाने वाक्यभेदापत्तेः, आग्नेयादिवाक्यानि तु न विद्वद्वाक्यशेषे समाम्नातानि, नवैकवाक्यतागमकमुपक्रमोपसंहारयोरैकरूप्यं तत्र विद्यते । अत्रहि "उपांशुयाजमन्तरा यजत्यजामित्वाये"त्युपक्रमे योऽजामिता (आलस्यपरिहार) उपक्षिप्तः, स एव "विष्णुरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाये"-त्युपसंहारेऽपि प्रतिवाक्यं निर्दिष्ट इति युक्तमेकवाक्यत्वं । तथाचोपांशुयाजार्थवाद एवेदं वाक्यजातम् ।

'अर्हे कृत्यतृचश्चे'ति अर्हार्थेऽपि तव्यप्रत्ययः स्मर्यते । अतएव "आत्मा वारे द्रष्टव्यः श्रोतव्य" इत्यादौ न विधिरिति भामतीसिद्धान्त उपपद्यते । येषां विवरणाचार्यादीनां मते श्रवणादौ विधिस्तेषामपि द्रष्टव्य इति तव्यप्रत्ययेन न विधिरिति संमतमेव ।

किंच यथा आग्नेयादियागसमुदाये पौर्णमासीनामसंबन्धस्य "पौर्णमास्यां पौर्णमास्या यजेते"त्यादिना गुणफलविधौ उपयोगो नैवमुपांशुयाजनामसंबन्धस्य किमपि प्रयोजनं विद्यतेऽसाधारणम् । एतेन विष्ण्वादिवाक्यैर्देवतामात्रं विधीयत इति शङ्कापि परास्ता; मन्त्रलिङ्गेनैव विष्ण्वादिदेवतासिद्धेस्तद्वैयर्थ्यात् । अत्र च विष्ण्वादिवाक्ये यागोऽपि प्राप्त इति विष्ण्वादिपदं तत्प्रख्यन्यायेन नामधेयमिति शङ्कापि न भवति; धात्वर्थविधावेव तत्प्रख्यन्यायप्रसरात् ।

अत्रेदं विचारणीयम्—पौर्णमास्यमावास्यापदे नामधेये इति यन्निरूपितं तत्र नामधेयत्वनिमित्तेषु किंवा निमित्तमत्र भवतीति । तत्र न तावद्गुद्भिदधिकरणं निमित्तम्; पौर्णमासीपदस्य रूढत्वात्, नाऽपि चित्राधिकरणम्; विशिष्टविधानेन वाक्यभेदाभावात्, नापि तत्प्रख्याधिकरणम्; प्रकृतकर्मणि कालप्रापकवचनान्तराभावात् । "पौर्णमास्यां पौर्णमास्या यजेते"ति वाक्येन तु न कालविधानम्; एतद्वाक्ये पौर्णमासीपदस्य नामत्वनिर्णयानन्तरमेव तत्रैतदनुवादसंभवात् । नवा तद्व्यपदेशाधिकरणम्; वाक्यशेषे पौर्णमास्या एवोपमानोपमेयभावाभावात् । वाजपेयाधिकरणवैश्वदेवाधिकरणयोरप्रवृत्तिः "सोमेन यजेते"तिवदत्र व्याख्याता । अतो निमित्तान्तरमेवात्र निरूपणीयम् ।

तत्र ज्योतिष्टोमपदं यथा वाक्यशेषे "एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा" इति निर्वचनेन नामधेयमेवमत्रापि "पौर्णमास्यां पौर्णमास्या यजेते"ति सिद्धवदनुवादान्यथानुपपत्त्या पौर्णमासीपदं नामधेयम् । तथाच पूर्वोक्तनिमित्तषट्कातिरिक्तेन निमित्तान्तरेणापि तत्सत्त्वनिर्णयात् न दोषः । नामधेयपादे तादृशनिमित्तान्तरानिरूपणे निमित्तं तु विधिघटकनामधे

यानामेव तत्र विचारः, अस्य चातथात्वमेव । "वैश्वदेवेन यजेते"त्यत्र तु सर्वांशेऽप्यनुवादेऽपि "यद् विश्वेदेवाः समयजन्त तद् वैश्वदेवस्य वैश्वदेवत्वमि"ति निर्वचनादेव वैश्वदेवशब्दो नामधेयमिति स्थितेऽपि कृत्वाचिन्तयैव वैश्वदेवाधिकरणप्रवृत्तिः। सर्वथा तु पौर्णमास्यमावास्यापदे नामधेये इति सिद्धम् । वस्तुतस्तु यत्र नामत्वं द्रव्यविधित्वं वा सन्दिग्धं तत्रैव पूर्वं निमित्तानि निरूपितानि, अत्र तु ज्योतिष्टोमादिपदमिव पौर्णमासीपदं नामतया वाक्यान्तरपर्यालोचनेन निर्णीतमेव वर्तत इति न दोष इति ।

उपांशुवाक्ये तु उपांशुयाजपदस्य नामत्वे नैकमपि निमित्तं वर्तते इति न कथमपि पौर्णमासीवदुपांशु याज इति युक्तम् । तथाच "विष्णुरुपांशु यष्टव्यः" इत्यादीनां विशिष्टविधित्वस्य गुणविधित्वस्य वाऽयोगात् अर्थवादत्वमेवेति सिद्धम् ॥

यत्र तूपक्रमोपसंहारयोरैकरूप्यं नास्ति तत्र विशिष्टविधित्वं संभवति चेदपि यदि गुणविधित्वे लाघवं तर्हि गुणविधिरेव तत्र भवति । यथा "अग्निहोत्रं जुहोती" त्यनन्तरमाम्नातेषु "दध्ना जुहोति" "पयसा जुहोति" "यवाग्वा जुहोति" इत्यादिषु । अत्र हि पूर्वोक्तनिमित्ताभावान्नैकवाक्यत्वं किं तु भिन्नवाक्यत्वमेव । तथापि सर्वेषामपि वाक्यानाम् यत्किञ्चिदप्राप्तांशविशिष्टभावनाविधानमेव, नतु "दध्ना जुहोती"त्यादिवाक्यविहितानां त्रयाणां यागानां 'अग्निहोत्रं जुहुयादि''ति वाक्यमनुवाद इत्यङ्गीकरणीयम् । तथा सति ह्यनेकापूर्वकल्पनाप्रसङ्गः ॥

"आग्नेयादिवाक्यैरनेकयागविधावपि "य एवं विद्वानि"ति वाक्ये तस्यानुवादेन पौर्णमासीनामसंबन्धस्य "पौर्णमास्यां पौर्णमास्या यजेते"ति पौर्णमासीकालस्य समुदायसम्बन्धसिद्धिरूपं प्रयोजनं यथा विद्यते, न तथा दध्यादिद्रव्यकयागसमुदायस्याग्निहोत्रमिति नामसंबन्धस्य किमपि प्रयोजनम् । यद्यपि त्रयाणामेव समुदायस्या''ग्निहोत्रं जुहुयात्स्वर्गकाम" इत्यत्र फलसंबन्धः प्रयोजनमत्र भवति; तथापि "य एवं विद्वानि"ति वाक्यस्य यागविधित्वे न यथा रूपलाभो न तथाऽत्र रूपालाभः; दध्ना जुहोतीत्यादीनां गुणविधित्वेन सार्थक्यादिति नाग्निहोत्रवाक्यमपि पौर्णमासीवाक्यसदृशम् ।

तथाच यत्र रूपरहिते वाक्ये प्रमाणान्तरेण रूपालाभः सन्निधिपठितान्यपराणि वाक्यान्यनेकगुणविधिपराणि तत्र पौर्णमास्यधिकरणम्, यत्र तु सन्निधौ एकरूपसमर्पकाणि वाक्यानि विद्यन्ते तत्रोपक्रमोपसंहारैकरूप्यायेकवाक्यतागमकसत्त्वे रूपाणां प्रमाणान्तरप्राप्तौ उपांशुयाजाधिकरणम्, तादृशरूपाणां प्रमाणान्तराप्राप्तौ तु गुणविधिरित्याघाराग्निहोत्राधिकरणं प्रवर्तते इति निष्कर्षः । एतेन—"वैश्वदेवेन यजेत" इत्यत्र यागविधिः "आग्नेयमष्टाकपालमि"ति वाक्येन गुणविधिरिति शङ्कापि—परास्ता; पौर्णमास्यधिकरणेन तस्यानुवादमात्रत्वात् । अत्र "यद् विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमि"तिवाक्यशेषानुसारेण वैश्वदेवशब्दो नामधेयमिति वैश्वदेवनामकयागविधाने हि तत्र रूपप्राप्तिः कथमपि न संभवति ।

तथाच यत्र यद्वाक्यसन्निधौ द्रव्यदेवतादिविशिष्टकर्मणां बहूनां विधिरस्ति, स्वस्य क्वचन द्रव्यदेवतादिविधित्वं न भवति, तत्र समुदायानुवादो यथा वैश्वदेवादिवाक्ये । यत्र तु अनन्तरश्रुतानां द्रव्यविधित्वाद्यभाव एकवाक्यता चावगम्यते, तत्र तेषामर्थवादत्वं यथा "यदष्टाकपालो भवती"त्यादीनाम्, अन्यथा तु गुणविधित्वादिकं यथा "दध्ना जुहोति" "पयसा जुहोती" त्यादीनामिति निष्कर्षः ॥

"सोमेन यजेते"ति विध्यनन्तरमाम्नातेषु "ऐन्द्रवायवं गृह्णाति" "मैत्रावरुणं गृह्णाति" "आश्विनं गृह्णाती"त्यादिषु "अग्नीषोमीयं पशुमालभेते"त्यनन्तरमाम्नातेषु "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस" इत्यादिवाक्येषु च यदि "दध्ना जुहोती"-त्यादिवत् गुणविधित्वं तर्हि "सोमेन यजेते"ति नानुवादः, यदि तु तेषां सर्वेषां यागविधित्वं तर्हि "सोमेन यजेते"त्यत्र समुदायानुवादः ॥

तत्र किं युक्तमिति जिज्ञासायां ऐन्द्रवायवादिवाक्ये देवताया अपि श्रवणात् वायव्यवाक्य इव यागविधानात् समुदायानुवाद एव सोमवाक्ये । एवं हृदयादिवाक्येष्वपि हृदयस्यावदेयत्वेन हविष्ट्वात् तेन यागानुमानात् यागविधिरिति समुदायानुवाद एवाग्नीषोमीयवाक्ये । तत्र च सोमवाक्ये सोमस्य गुणविधित्वं न संभवति, "सोममभिषुणोती"ति संस्कारान्यथानुपपत्त्यैव तस्य सिद्धत्वेन तत्प्रख्यन्यायेन सोमशब्दस्य नामत्वात् । एवं हृदयस्य हविष्ट्वेनार्थप्राप्तत्वात् पशोः पशुपदमपि नामधेयम् । अतएव "न तौ पशौ करोति न सोमे" इति पशुसोमशब्दयोर्यागनामत्वेन व्यपदेश उपपद्यत इति पूर्वपक्षिणो मन्यन्ते ॥

सिद्धान्तस्तु—ऐन्द्रवायवादिवाक्ये न देवतातद्धितः । तत्रैव हि देवतातद्धितः यत्र हविषोऽपि स्वशब्देनोपादानम्, यथा "वायव्यं श्वेतमालभेते"त्यादौ । अत्र तु "ऐन्द्रवायवं गृह्णाती"ति ग्रहणाख्यसंस्कारस्यैव देवतासंबन्धो विद्यते । स च ग्रहणकालिकोच्चारणविषयमन्त्रप्रतिपाद्यत्वेन देवतानां संभवत्येव । तथाच "बार्हस्पत्यश्चरुरि"ति वाक्यमिव नैतत् यागविधायकम्, किंतु सोमयागाङ्गभूते सोमग्रहणे इन्द्रवाय्वादिदेवताकमन्त्रोच्चारणपूर्वकत्वस्यैव विधायकम् ।

एवं हृदयादिवाक्येऽपि न हृदयादीनां हविष्ट्वं किंतु पशोरेव, तस्यैव हविष्ट्वं यस्य देवतासंबन्धः प्रत्यक्षः सति संभवे ।

"अग्नीषोमीयं पशुमालभेते"ति पशोरेव स प्रत्यक्षो विद्यते। अतो हृदयस्याग्रेऽवद्यतीत्यादिकं पशोरेवावदानाख्यसंस्कारविधायकं । पशुर्नाम हृदयाद्यवयवसमुदायविशेषवान् प्राणी । तत्र येन रूपेण हविष्ट्वं तेनैव रूपेण संस्कार इति वा येन रूपेण संस्कारस्तेनैव रूपेण विनियोग इति वा न नियम इति हृदयत्वेन संस्कारविधावपि न दोषः ।

व्यक्तं चैतत् भाट्टदीपिकाव्याख्यायां प्रभावल्यां ग्रहैकत्वाधिकरणे । अतएव "ग्रहं संमार्ष्टी"त्यत्रैकत्वविशिष्टग्रहस्य संमार्गसंस्कारविधिरिति पूर्वपक्ष उपपद्यते । अन्यथा "ग्रहैर्जुहोती"ति बहुत्वविशिष्टत्वेन विनियोगात्तदसाधुताप्रसङ्गात् । अतो हृदयादिवाक्यानामपि गुणविधित्वात् "दध्ना जुहोती"तिवत् "अग्नीषोमीयं पशुमालभेत" इत्यादिवाक्यं न समुदायानुवादरूपम् ।

तत्र यथोत्पत्तिवाक्ये द्रव्यदेवतादिभेदे कर्मभेद एवमुत्पत्तिवाक्ये द्वित्वादिसंख्याभेदावगमेऽपि कर्मभेद एव, नतु तत्रैकस्यैव कर्मणोऽभ्यासेन प्रयोगभेदमात्रम् । अतएव "तिस्र आहुतीर्जुहोति" "सप्तदश प्राजापत्यान् पशूनालभेत" इत्यादौ कर्मभेदः, "विराट्संपन्नमग्निहोत्रं जुहोति" "एकादश प्रयाजान् यजती"त्यादौ प्रयोगभेदमात्रमिति विवेकः ।

एवं नामधेयभेदोऽपि कर्मभेदे निमित्तम् । यथा"ऽथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते"त्यत्र ज्योतिरादिसंज्ञाभेदात् कर्मभेदः । "वसन्ते वसन्ते ज्योतिषा यजेते"त्यत्र हि यथा ज्योतिष्टोमप्रकरणमनुवर्तते, न तथाऽत्र 'तदिति नामैकदेशे नामग्रहणमिति न्यायेन नात्र ज्योतिष्टोमस्यैव ज्योतिःशब्देन ग्रहणम् । अत्र ह्यथशब्दः प्रकरणविच्छेदको वर्तते । नामैकदेशे नामग्रहणमिति न्यायः प्रकरणादितात्पर्यग्राहकप्रमाणसत्तायामेव प्रवर्तते । नह्येकस्यैव संज्ञाद्वयेन किंचित् प्रयोजनम् । तत्सिद्धं संज्ञाभेदात् कर्मभेद इति ।

अत्र ज्योतिरादिपदं नामधेयमित्यत्र यागसामानाधिकरण्यं विना ज्योतिरादिपदनिर्देश एव निमित्तमिति तत्रोद्भिदाद्यधिकरणं विनैव नामत्वनिर्णयो यथा भवति, न तथा "समिधो यजती"त्यादिष्विति न "समिधो यजती"त्यादौ संज्ञाभेदेन कर्मभेद इत्यादि पूर्वमेव निरूपितम् ।

यत्र धात्वर्थसमानाधिकरणमुपपदं तत्राभ्यासेनान्यथा वा कर्मभेदः । तत्राभ्यासेन कर्मभेद उपपदानां नामत्वे, उपपदानां उद्भिदाद्यधिकरणाप्रवृत्त्या नामत्वाभावेन गुणविधित्वे तु गुणानामुत्पन्नशिष्टत्वे न कर्मभेदः, किंतूत्पत्तिशिष्टत्व एव । तथाच "यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति" "ऐन्द्रं दध्यमावास्यायां" "ऐन्द्रं पयोऽमावास्यामि"त्यादौ भावनायां करणत्वेनान्वयसमय एव यद्युपपदेन द्रव्यं देवता वाऽवगम्यते, तर्हि न तस्य यागस्य पुनरपेक्षा विद्यत इति वाक्यान्तरेण सन्निधिश्रुतेनापि यागैक्यलाघवार्थं कथमपि पूर्वतनयागमनूद्य द्रव्यान्तरादिविधानं न युक्तम् । तथाच "वैश्वदेव्यामिक्षे"ति वाक्यविहिते यागे "वाजिभ्यो वाजिनमि"ति वाक्यान्तरेण द्रव्यान्तरमात्रविधानं न विवक्षितं किंतु वाक्यद्वयविहितं कर्मद्वयं भिन्नमेव । अत्र यद्यपि वाजिपदेन शब्दभेदात् देवतान्तरमेव गम्यते, तथापि वाजं अन्नं आमिक्षारूपमेषामिति व्युत्पत्त्या विश्वदेवानामेवात्र ग्रहणम् । वाजिपदं हि तद्धितान्तं विशेष्यं स्वान्वययोग्यं अपेक्षत इति सन्निधिश्रुतानां विश्वदेवानामेव तत्र ग्रहणमिति पूर्वपक्षाशयः । व्यक्तं चैतत् भामत्याम् । तथाचाऽऽमिक्षायागानुवादेन वाजिनरूपद्रव्यान्तरविधानं न विरुद्धम् । अत एव "यदग्नये च प्रजापतये च सायं जुहोति" इत्यादौ प्रमाणान्तरप्राप्ताग्निदेवतानुवादेन तत्समुच्चितप्रजापतिर्विधानम् । अन्यथा तत्रापि देवताभेदात्कर्मभेदः प्रसज्यत इति शङ्का तु न भवति ।

दृष्टान्ते अग्निदेवताप्रापकं नोत्पत्तिवाक्यं किंतु मन्त्रलिङ्गम् । अतोऽभ्यनुवादेन प्रजापतिसमुच्चय उपपद्यते, प्रकृते त्वामिक्षोत्पत्तिवाक्यावगतेति तत्समुच्चितवाजिनविधानं न संभवति । तथाच "वाजिभ्यो वाजिनमि"ति वाजिनप्रतिपत्तिकर्मैव विधीयते । तथाच तन्नाशे तल्लोप एव । पूर्वपक्षे तु पुनरपि दध्यानयनादिना तत्संपादनं कर्तव्यमापद्येतेति प्रयोजनभेदः स्पष्ट एव विद्यते ।

"दध्ना जुहोति" "पयसा जुहोति" इत्यादीनां तूत्पन्नशिष्टगुणविधित्वान्न तेषु कर्मभेदः, किंतु खलेकपोतन्यायेन सर्वेषामेकस्मिन्नग्निहोत्रे विनियोगः ।

"दध्नेन्द्रियकामस्य जुहुया"दित्यत्र तु यद्यपि न दधिरूपगुणविधानम्; "दध्ना जुहोति" इत्यनेन सिद्धत्वात्, नापि होमविधानम्; "अग्निहोत्रं जुहोति" इत्यनेन सिद्धत्वात्, नापि फलसंबन्धकरणम्; "अग्निहोत्रं जुहुयात्स्वर्गकाम" इत्यनेन सिद्धत्वात् । तत्र प्रथमपक्षे फलपदानर्थक्यं तृतीयकल्पे गुणविधानानर्थक्यं गुणसंबन्धस्य फलसंबन्धस्य च विधानेन वाक्यभेद इत्यादिकमपि दोषजातमत्रोहनीयमिति "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम" इतिवद्विशिष्टक्रियान्तरमेवात्र विवक्षितमिति शङ्का तत्रैवं समाधेया ।

नात्राग्निहोत्रहोमातिरिक्तक्रियान्तरं विवक्ष्यते, किन्तु तदाश्रयेणैव दध्न इन्द्रियरूपफलसंबन्धो बोध्यते । तत्र च सिद्धस्य दध्नः क्रियाश्रयं विना फलसाधनत्वाभावात्प्रकरणेनाश्रयतयोपस्थितहोमानुवादेन साधुत्वमात्रार्थं हुधातुरिति न दधिपदवैयर्थ्यं फलपदादिवैयर्थ्यं वा ।

अत्र प्राचीनाः दध्नो न विधानम् किंतु दधिकरणत्वस्य करणीभूतदध्नो वेति वदन्ति । दधिशब्दस्य दधिकरणत्वं करणीभूतं दधि वा लक्षणयाऽर्थः । दधिकरणत्वस्य करणीभूतदध्नो वा करणत्वेन विधाने धात्वर्थस्य यथाऽश्रयत्वेनैवान्वयो न तथा दध्नो विधाने । तदा हि होमस्य भाव्यत्वेनान्वयोऽपि संभाव्यते । केवलस्य हि दध्नः सिद्धस्वभावस्य यागादिवत्फलभावनायां करणत्वेनान्वयो न संभवति । कर्तृव्यापारविषयस्यैव हि करणत्वमिति दध्यादेः क्वचिद्धात्वर्थं प्रति करणीभवतः कर्तृव्यापारविषयता न स्वरूपेण यागादिवदित्यस्ति धात्वर्थविशेषाकाङ्क्षेति तदाशयः ॥

भाट्टदीपिकायां तु दध्न एव भावनायां करणत्वेनान्वयः, यथा यागस्य क्रियारूपस्यापि साक्षात् भावनाकरणत्वं न संभवति, एवमपि पारम्परिककरणत्वेन तस्य भावनायामन्वयः, एवं दध्नोऽपि होमद्वारमेव करणत्वमादाय भावनायां करणत्वेनान्वय इति यागवैषम्ये प्रमाणाभावः ॥

"दध्ना जुहोती" त्यनेन तु न नित्यप्राप्तिर्दध्नः, किंतु "पयसा जुहोती" त्यादिवाक्यात् विकल्पेनेति पक्षाप्राप्तस्यैव दध्नः करणत्वम् । यथाहि "दध्ना जुहोती" त्यत्र विभक्त्यर्थस्य करणत्वस्य भावनायामन्वयः एवं "दध्नेन्द्रियकामस्य जुहुयादि" त्यत्रापि दधिकरणत्वस्य करणत्वेनान्वये तु विभक्त्यर्थस्य भावनायां साक्षादन्वय इति सिद्धान्तो भज्येत । "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम" इत्यत्र धात्वर्थस्याप्राप्तत्वाद्विशिष्टकर्मविधिरिति प्रकृते प्रकरणप्राप्तहोमानुवादेन जुहोतेस्साधुत्वमात्रार्थत्वान्न विशिष्टहोमान्तरविधिरिति. सर्वं सुस्थमिति नात्रापूर्वभेद इति निरूपितम् ।

"एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इत्यत्र तु वारवन्तीयस्य रेवतीसंबन्धे फलसंबन्धे च बोध्यमाने यद्यपि न वाक्यभेदः, कृत्वेति क्त्वाप्रत्ययेन यजेतेत्याख्यातेन च भावनाद्वयस्यात्रावगमेनाख्यातावृत्त्याद्यनपेक्षणात्; तथापि वारवन्तीयस्य साम्नो न यागजनकत्वं लोकसिद्धं प्रमाणान्तरसिद्धं वेति न यागस्याश्रयत्वेनान्वयसंभव इति यजिपदवैयर्थ्यापत्तिः । साम्नः क्रियारूपत्वात् वस्तुत आश्रयापेक्षैव नास्ति। एतेन—वारवन्तीयसामोद्देशेन रेवतीविधानं तासामेव फलायापि विधानमिति पक्षोऽपि—परास्तः;

रेवतीनामपि यागस्याश्रयत्वायोगात् । गुणफलविधिस्थले तस्यैवाश्रयत्वेनान्वयः, यस्य गुणजन्यत्वयोग्यता प्रकरणादिनोपस्थितिश्च वर्तते इति गोदोहनेन पशुकामस्येत्यादावपि गुणफलविधित्वं व्याख्यातम्; अप्प्रणयने गोदोहनस्यापि जनकतायोग्यत्वात् सन्निधिनोपस्थापितत्वाच्च ।

प्रकृते तु रेवतीनां साम्नो वा स्तोत्रजनकत्वयोग्यत्वेऽप्यग्निष्टोमस्तोत्रमात्रस्य नोपस्थितिः; अतिदेशेन स्तोत्रान्तराणामप्युपस्थितत्वात् । वाक्येनैव संबन्धकल्पने च वाक्यभेदः । तथाचाऽत्र विशिष्टयागान्तरविधानमेव । एतस्यैवेत्येतच्छब्दस्तु पूर्वतनयागस्यास्य च प्रकृतिविकृतिभावं गमयति । तथाच यावन्ति पदानि वाक्ये श्रुतानि तेषां सर्वेषामपि वाक्यार्थेऽन्वयः सिद्धो भवति; अन्यथा यजेतेत्यस्य वैयर्थ्यापत्तेः ॥

अतएव "यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीते" ति वाक्ये क्रियात्मकस्यापि सौभरस्य स्तोत्राश्रयमेव करणत्वमिति स्तुवीतेत्यस्य सार्थक्यार्थं शास्त्रदीपिकायां निरूपितम् ।

तथाच यत्रोपपदार्थस्य साक्षाद्धात्वर्थजनकत्वयोग्यता विद्यते, धात्वर्थस्य च प्रकरणादिनोपस्थितिः, गुणफलपदे च भवतः, तत्रैव गुणफलसंबन्धविधिरिति रेवतीवाक्ये विशिष्टयागान्तरमेव विधीयते ।

यत्तु पूर्वनिर्दिष्टस्य "यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीते" ति प्रकृतस्य वाक्यस्यानन्तरमाम्नायते "हीषिति वृष्टिकामाय निधनं कुर्यात् ऊर्ग् इत्यन्नाद्यकामाय ऊ इति स्वर्गकामाये" ति वाक्यं तत्रापि न गुणफलविधिर्विवक्षितः; निधनस्य हीषूसंपाद्यत्वेऽपि तद्विशेषरूपस्योर्गादेरुपस्थित्यभावात् । स्तोत्रं तु प्रकरणेनोपस्थितमपि न हीषादिमात्रनिर्वर्त्यम् । तथाच वृष्ट्यादिसाधनत्वे निधनविशेषाणां नियमनमेवात्र क्रियते । तदिदं सिद्धं यत् शब्दान्तरादभ्यासात् संख्यया संज्ञया पूर्वतनवाक्यविहितकर्मान्वयायोग्यगुणान्तराद्वा कर्मभेद इति ॥

तत्राभ्यासात्कर्मभेदस्यापवादः दर्शपूर्णमासाधिकरणोपांशुयाजाधिकरणाधाराग्निहोत्राधिकरणपशुसोमाधिकरणैर्निरूपितः, गुणात्कर्मभेदस्यापवादस्तु द्रव्यविशेषानुक्तिसहितोत्पत्तिवाक्योत्तरगुणाधिकरणगुणकामाधिकरणसौभराधिकरणैरुपपादित इति सर्वमनवद्यम् ।

यत्र यत्र कर्मभेदस्तत्र तत्र वाक्यभेदोऽप्यपेक्षितः । तत्र शब्दान्तरात्कर्मभेदे वाक्यभेदः भिन्नप्रतीतिविषयानेकमुख्यविशेष्यकत्वेन । एवं गुणात्कर्मभेदेऽपि । अभ्यासेन संज्ञया वा कर्मभेदे तु एकमुख्यविशेष्यकत्वात् "भगो वा मां विभजत्वि" त्यादाविव विभज्यमानसाकाङ्क्षत्वाभावेनैव वाक्यभेदः । संख्यया कर्मभेदे तु बहुवचनाद्यनुसारेण वाक्यभेद एव कल्प्यते "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते" त्यत्रेवेति न दोषः ।

प्रकरणान्तरोदाहरणेष्वप्यनेकमुख्यविशेष्यकत्वमेव गमकम् । अयं भावः—एकवाक्यत्वे हि भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्ये सति विभज्यमानसाकाङ्क्षत्वं गमकम् । तत्रैकदलाभावे च वाक्यभेद एव । "अग्निहोत्रं जुहोति"

"दध्ना जुहोती"त्यनयोः विभज्यमानसाकाङ्क्षत्वं भिन्नप्रतीतिविषयैकमुख्यविशेष्यकत्वेन तादृशानेकमुख्यविशेष्यराहित्यं च विद्यते इति न वाक्यभेद इति न विरोधः । सर्वथाऽऽसति बाधके कर्मैक्यं सति तु बाधके कर्मभेद इति सिद्धम् ॥

अत्रेदं विचारणीयम्—यथा रेवतीवाक्ये भावनाद्वयेऽपि न वाक्यभेदः, एकस्या भावनया उपसर्जनत्वात्, एकस्या एव विशेष्यत्वाच्चेति, एवं "अन्नाद्यकामो भवती"त्यादिवाक्येऽपि न वाक्यभेदः; "योऽन्नाद्यकाम" इत्यादीनां फलमात्रसमर्पकत्वात् । तथाच यत्रावान्तरवाक्यं फलं गुणं वा समर्पयति तत्र न वाक्यभेद इति सिद्धमिति ।

तत्रावान्तरवाक्येन यत्र प्रमाणान्तरप्राप्तस्यानुवादः, तत्र यदि यदिशब्दाद्यभावस्तर्हि फलसमर्पणम्, यदिशब्दसत्त्वे तु यदि नैमित्तिके तन्निमित्तं संभाव्यते तर्हि निमित्तपरत्वम्, यदि न संभाव्यते तर्हि यदिशब्दस्तत्राविवक्षितार्थ इति गुणपरत्वमेव । यथा—"यो वृष्टिकाम" इत्यादौ फलस्य "यदि सोमं न विन्देत पूतीकानभिषुणुयादि"त्यत्र निमित्तस्य "यदि ब्राह्मणो यजेते"ति विचारयिष्यमाणवाक्ये गुणस्य च विवक्षेति ॥

तथाच पूर्वतनपादे यथा यदिशब्दरहितवाक्योपात्तात् गुणान्तरात्कर्मभेदो निरूपितः एवं कुत्रचन यदिशब्दसाहित्येऽपि कर्मभेदो भवत्येव । यदि यदिशब्दघटितवाक्योपात्तस्यार्थस्य निमित्तत्वेनान्वयो न संभवति । अन्यथा तु न तत्र कर्मभेदः, यथा "यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान्ग्रहान्गृह्णीयात्" "यदि बृहत्सामा मैत्रावरुणाग्रान्" इति वाक्ये रथन्तरसामत्वस्य निमित्तत्वेनान्वयः । नच ज्योतिष्टोमे रथन्तरसामत्वं नियतम्; बृहद्रथन्तरयोर्वैकल्पिकत्वात् । तथाच कादाचित्कस्यैव निमित्तत्वेऽपि न क्षतिः । सोमे रथन्तरसामत्वस्य विशेषणत्वं न सामान्तरयोगव्यावृत्त्या, किंतु बृहद्रथन्तरयोः पाक्षिकत्वेन स्वायोगव्यावृत्त्या ॥

विशेषणत्वं हि अन्ययोगव्यावृत्त्यैवाऽयोगव्यावृत्त्याऽपि भवति । यथा पार्थ एव धनुर्धर इत्यत्र नान्यो धनुर्धर इति ज्ञानम्, एवं शङ्खः पाण्डर एवेत्यत्र नान्यः पाण्डर इति न बोधः, किंतु शङ्खः पाण्डर एव नापाण्डर इति ॥

"यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा अभिघारयेत् यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवमि"ति वाक्ये तु यदिशब्दार्थो न विवक्षितः ।

इदं हि वाक्यं राजकर्तृके राजसूये प्रत्येकदक्षिणाम्नानपूर्वकं अवेष्टिसंज्ञकान् पञ्च यागान् विधाय तदवान्तरप्रकरणे समाम्नायते । अत्रानुसन्धेयानि वाक्यानि "आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो वही दक्षिणा-वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुं इत्यादीनि ॥

अत्र राजकर्तृकराजसूये ब्राह्मणादेरपि कर्तृतया कदाचित्प्राप्तौ "यदि ब्राह्मण" इत्यत्र यदिशब्दो विवक्षितार्थः, यदि तु न प्राप्तिस्तर्हि न विवक्षितार्थ इति प्रथममिदमालोचनीयं "राजा राजसूयेन स्वाराज्यकामो यजेते"ति वाक्यस्थराजशब्दस्य प्रजापालनकर्ता सर्वोऽप्यर्थोऽथवाऽभिषिक्तक्षत्रियमात्रमिति ॥

अत्रैवं पूर्वपक्षिणामाशयः—प्रजापालनकर्तैव राजशब्दार्थः; सर्वलोकप्रसिद्धत्वात् । क्षत्रियमात्रवचनो राजशब्द इति द्राविडप्रसिद्धिस्तु सर्वलोकप्रसिद्धिविरुद्धत्वादप्रमाणम् । अतएव हि "यदि ब्राह्मण"इति यदिशब्दसार्थक्यम् । तथाच सर्वलोकप्रसिद्धिः श्रौतयदिशब्दमूलापीति सूचितम् । यद्यपि राज्ञः कर्म राज्यमिति यग्विधायकं "पत्यन्तपुरोहितादिभ्यो यगि"ति सूत्रं द्राविडप्रसिद्धेर्मूलम्, तथापि श्रौतयदिशब्दविरुद्धत्वादप्रमाणमेवात्र व्याकरणमपीति मन्तव्यम् । तथाच राजसूयान्तर्गत एव प्रयोगविशेषोऽत्र विधीयते इति "एतयाऽन्नाद्यकामं याजयेदि"ति वाक्यं यद्यपि ब्राह्मणादिकर्तृकत्वे फलविशेषं बोधयति; तथापि तदन्यथानुपपत्त्या नैमित्तिकस्यैव फलार्थमेव बहिःक्रत्वनुष्ठानं सिध्येत्, नतु राजसूयान्तःप्रयोगोऽपि राजसूयफलार्थं ब्राह्मणादीनामपेक्षित इति कल्पनापि संभवति । तथाच ब्राह्मणरूपाद्गुणात्कर्मभेदो नात्र विवक्षितः; "उत्पत्तिशिष्टगुणावरोधे गुणान्तरावरोधो न न्याय्यः" इति ह्यामिक्षाधिकरणे निरूपितम् । नच ब्राह्मणादीनामुत्पत्त्यन्वयिगुणत्वम्; कर्तुः प्रयोगान्वयित्वात् । तथाच यदिशब्दः "यदि रथन्तरसामे"ति वाक्य इव विविक्षितार्थ एवेति ॥

सिद्धान्तिनस्तु मन्यन्ते—यदिशब्दो नात्र विवक्षितार्थः। यथाहि—"उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेदि"त्यत्र यदिशब्दार्थो न विवक्षितः, यथावा "शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्ये"त्यत्र यदिशब्दो न विवक्षितार्थः । नहि राजकर्तृके राजसूये ब्राह्मणादीनां कर्तृत्वं प्रमाणान्तरसिद्धम् । "राजा राजसूयेन स्वाराज्यकामो यजेते"त्यत्र हि राजशब्दः क्षत्रियमात्रवचनो नतु प्रजापालनकर्तृवाचकः । "राजानमभिषिञ्चेत्" इति श्रुतौ हि राजशब्दः क्षत्रियवचन एव, नतु प्रजापालनकर्तृवचनः । नह्यभिषेकात्पूर्वं प्रजापालनं विहितम्; "राजेत्येतानभिषिक्तानाचक्षते" इति तात्पर्यग्राहकालिङ्गात्तु राजसूयवाक्येऽभिषिक्तक्षत्रियस्यैव ग्रहणात् । एवंच न "यदि राजन्य" इति वाक्येऽपि यदिशब्दो विवक्षितार्थ इति सूचितम् । तथाच श्रौतनिरर्थकयदिशब्दमूला द्राविडप्रसिद्धिरपि नात्र प्रमाणम्, किंतु "राजानमभिषिञ्चेदि"त्यादिश्रुतिमूलव्याकरणस्मृतिमूला सर्वलोकप्रसिद्धिरेवात्र प्रमाणम् । एवंच "एतयाऽन्नाद्यकामो यजेत" इति फलश्रुतिरपि ब्राह्मणादिकर्तृकेष्टिप्रयोगान्तराभिप्रायैवेति बहिःक्रत्वेव ब्राह्मणादीनामुक्तविधावेष्टियागानुष्ठानम् ॥

अयमत्र निष्कर्षः—यववराहाधिकरणे म्लेच्छार्यप्रसिद्ध्योर्विरोध आर्यप्रसिद्धिरेव स्वीकरणीया, न म्लेच्छप्रसिद्धिरित्युक्तम्। अत्र तु म्लेच्छप्रसिद्धिरेव स्वीकरणीया नार्यप्रसिद्धिरित्युच्यते । कथमिदं न विरुद्धम् ? यथा पिकनेमादिशब्देषु आर्याणां प्रसिद्धिरेव नास्ति म्लेच्छानामेव सा विद्यते, न तथात्रार्याणां तदभावो येन म्लेच्छप्रसिद्धिरादरणीया भवेत् । पाणिनीयस्मृत्यनुग्रहस्तु प्रसिद्धिद्वयस्यापि समानः ॥

"यौवराज्येन संयोक्तुमैच्छत्प्रीत्या महीपतिः" इत्यत्र हि ब्राह्मणादिगणपठितस्य राजशब्दस्य ग्रहणम् । तेन राजशब्दात् ष्यञ्प्रत्यये निष्पन्नस्य यौवराज्यपदघटकराज्यपदस्य प्रजापालनादिकमेवार्थः, नतु क्षत्रियत्वम्; युवत्वक्षत्रियत्वसंयोगस्य सिद्धत्वेन विध्यनुपपत्तेः ।

यद्यपि "राजश्वशुराद्यत्" इति सूत्रे राजपदस्य क्षत्रियत्वमेवार्थः । नहि राजन्यपदस्य प्रजापालकब्राह्मणापत्ये प्रयोगो वर्तते, तथापि व्याकरणस्मृतौ कुत्रचन क्षत्रियार्थस्य कुत्रचन पालकस्य च ग्रहणमिति विनिगमनाविरहान्न स्मृत्यनुग्रहः केवलं द्राविडादिप्रसिद्धेः । यथा राज्ञः अधिकं रक्षणं सर्वभूतानामिति गौतमस्मृतौ राजशब्दः क्षत्रियवचनः, एवं "नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वर । रञ्जनात् खलु वै राजा प्रजानां पालनादपी"ति भारतादौ पालकेऽपि राजशब्दप्रयोगो दृश्यते । एतेन श्रुत्यनुग्रहोऽपि व्याख्यातः; उभयानुगुणस्य श्रुतिद्वयस्य पूर्वमेवोपक्षेपात् । तथाच कथमिदमुपपद्यते म्लेच्छप्रसिद्धिरेवात्रार्थसाधिकेति शङ्का प्रसरति ।

साचैवं परिहरणीया—यथाहि पुरोडाशादिशब्दानां लौकिकवैदिकप्रसिद्ध्योर्मध्ये वैदिकानां लौकिकप्रसिद्ध्यादरणस्यापि सत्त्वात् लौकिकप्रसिद्ध्या पुरोडाशत्वजातिपरत्वमेव नतु संस्कृतपुरोडाशत्वमिति बर्हिरधिकरणे व्यवस्थापितं तेन न्यायेन राजशब्दस्य पालके वैदिकप्रसिद्धेर्गौणत्वेनाप्युपपन्नत्वादत्र लौकिकप्रसिद्धिरेव स्वीकरणीया ।

यदा गौणार्थविषयत्वेन वैदिकप्रसिद्धिसाफल्यं तदापि शक्यार्थानुसन्धानेन लौकिकप्रसिद्धेरस्त्येवापेक्षा । पालकवाचिनः क्षत्रिय इव पालनयोग्ये गौणत्वं भवत्विति शङ्का तु नात्र भवति; सप्रतियोगिकौपाधिकपालकापेक्षयाऽखण्डोपाधिरूपक्षत्रियत्वजातिवाचित्वस्य लघुभूतत्वात् ॥

नहि पालनं राजशब्दार्थ इति संभवति। अस्ति हि पशुपक्ष्यादीनामपि पुत्रदारस्वशरीरादिपालकत्वम्। जनपदपरिपालनं तु राजशब्दप्रयोगानर्हे राजनियुक्ते जनपदाधिकारिण्यपि विद्यते । संम्राजाभिषिक्तानां देशविशेषराजानां राजपदार्हाणां तत्प्रयोगानापत्त्या तु स्वतन्त्रपरिपालनं न राजशब्दार्थः। किंच विनापि पालकत्वं श्रेष्ठत्वमात्रेणापि राजशब्दप्रयोगो मृगराज इत्यादिषु दृश्यते । तथाच लाघवात्क्षत्रियत्वं राजशब्दार्थमङ्गीकृत्यान्यत्र तत्प्रयोगो गौण्येति निर्वाह एव समीचीन इति न किंचिदनुपपन्नम् ॥

अत्र राजशब्दः क्षत्रियवचन इति द्राविडप्रसिद्धिरिति खण्डदेवपादा भाट्टदीपिकायां वदन्ति । वाचस्पतिमिश्रास्तु आन्ध्रप्रसिद्धिपदं तत्र प्रयुञ्जते । तत्र द्राविडपदेनान्ध्रपदेन च नैकेषां ग्रहणमिति केचन मन्यन्ते ॥ अपरे तु आन्ध्रभाषाया अपि द्राविडभाषाविभाग एवान्तर्भावः । इदानीमपि द्रविडभाषात्वेन आन्ध्रकर्नाटककेरलादिभाषाणां सर्वासामपि ग्रहणं वर्तत इति मन्यन्ते ।

तथाच "राजा राजसूयेने"ति वाक्ये राजशब्दश्रवणाद्ब्राह्मणादीनां राजसूयेऽधिकारस्याप्राप्त्या "यदि ब्राह्मण" इति विशिष्टक्रियान्तरविधिरेवेति सिद्धम् ।

"वसन्ते ब्राह्मणोऽग्नीनादधीते"त्यादौ तु यदि तेषामेवोत्पत्तिविधित्वं, न तर्हि ब्राह्मणादीनां निमित्तत्वेनान्वयः, यदि तु प्रमाणान्तरप्राप्ताधानोद्देशेन वसन्तादिकालविधानं, तदा ब्राह्मणादिपदार्थानां निमित्तत्वेनान्वयः । किमत्र युक्तम् ? "य एवं विद्वानग्निमाधत्ते"इत्यस्य "संभारेष्वग्निमादधीते"त्येतदर्थवादत्वात्प्रकारान्तरेण चाधानप्राप्त्यभावात् उत्पत्तिविधित्वमेव युक्तम्। यद्यप्याधानमिदमग्निसंस्कारार्थं अग्निश्च क्रतुविधिभिरेवाक्षिप्तः क्रतुविधयोऽग्निं विना क्रत्वनुष्ठानासंभवात् अग्निमाक्षिपन्तीति; तथाप्याक्षेपतः पूर्वं शास्त्रप्रवृत्त्यङ्गीकारेण वसन्तादिवाक्यमेवाग्निसंस्कारविधिद्वारा संस्कृतस्योत्तरत्र विनियोगापेक्षणात् क्रत्वपेक्षितमग्निमपि समर्पयन्ति ।

एवंच ब्राह्मणादीनामेवाधानसिद्धाग्निमत्त्वात्तेषामेव क्रतुष्वधिकारो न शूद्रादीनाम्; अन्यथा तु तेषामपि तदापत्त्या वक्ष्यमाणापशूद्राधिकरणविरोधापत्तिः । अयमेव न्यायः "अष्टवर्षं ब्राह्मणमुपनयीते"त्यादिवाक्येऽपि योजनीयः । नह्युपनयनमपि प्रमाणान्तरप्राप्तम् । अधिकं तु भाट्टदीपिकादिषु व्यक्तम् ।

एतदुदाहरणान्तरे ब्राह्मणादिनिमित्तत्वानङ्गीकरणस्यापि प्रयोजनम् अपशूद्राधिकरणसिद्धान्त एव । यद्यपि पूर्वमीमांसायामेवाग्निविद्ययोरभावेन शूद्राधिकारनिषेधे उत्तरमीमांसायामपशूद्राधिकरणं वितथम्; तथापि शूद्रेत्यामन्त्रणलिङ्गेनोपासना-

विशेषमात्रेऽधिकारो भवत्वित्यधिकाशङ्कानिरासेन तत्सप्रयोजनमेव। व्यक्तं चैतत्कल्पतरुपरिमले। यथाहि "वर्षासु रथकारोऽग्नीनादाधीते"ति सौधन्वनापरपर्यायरथकारस्याग्न्याधानविधानान्यथानुपपत्त्या त्रैवर्णिकेतरस्यापि तस्य तदपेक्षितवेदभागमात्राध्ययनमवश्यमङ्गीकरणीयम्, यथा वा स्त्रीणामाज्यावेक्षणमात्रोपयोगिनां मन्त्राणामध्ययनं न विरुद्धं, तथा शूद्रेत्यामन्त्रणलिङ्गेन शूद्रस्यापि तत्र विरुद्धमित्यधिका शङ्का ह्यवश्यमेवोत्तरमीमांसायां निराकरणीया। न हि कर्मसु अग्निविद्ययोरुभयोरप्याक्षेपकं आमन्त्रणादिलिङ्गं किमपि विद्यते। जानश्रुतिं शूद्रेति रैक्वो यथाऽमन्त्रयति स्म न तथाऽत्र किमपि विद्यते। एतेन मीमांसाद्वये देवताधिकरणद्वयमप्यधिकाशङ्कानिरासादिभिः पूर्वपक्षसिद्धान्तरूपादिभिर्वा सार्थकमिति सूचितम्।

तथाचापशूद्राधिकरणसिद्धान्तरूपप्रयोजनसिद्ध्यर्थमवश्यमूरीकरणीयं यद् "वसन्ते ब्राह्मणोऽग्नीनादधीते"त्यत्र विशिष्टाधानविधानमेव न ब्राह्मणादिनिमित्तेन वसन्तादिकालमात्रविधानमिति।

अत्रानुसंधेयानि वाक्यानि—"वसन्ते ब्राह्मणोऽग्नीनादधीत" "ग्रीष्मे राजन्यः" "शरदि वैश्यः" "वर्षासु रथकारः" इति च। तत्र सर्वेषु वाक्येषु विशिष्टाधानान्तराण्येव विधीयन्ते।

तत्र वाक्यत्रयेणाग्निसंस्काररूपस्याधानस्य विधिः, तुरीयेण तु अग्निविशिष्टाधानस्य विधानमदृष्टार्थं न तु संस्कारार्थम्। यथा त्रैवर्णिकानां क्रतुषु वेदाध्ययनसाध्यार्थज्ञानवत्त्वादधिकारः नैवं रथकारस्येति तत्कर्तृकेषु क्रतुषु नोपयोगो भवति। तथाच पूर्वमीमांसागतापशूद्राधिकरणे विद्याभावोऽप्येकं निमित्तमेव। तथाच कल्पतर्वादिष्वनभिलमेव पूर्वमीमांसागतापशूद्राधिकरणे मूलयुक्तिरित्युक्तिर्निरालम्बनैवेत्यादि परिमले व्यक्तम्। तथाच तुरीयवाक्ये "सक्तून् जुहोती"त्यत्रेव विनियोगभङ्गं स्वीकृत्याग्निविशिष्टाधानं स्वर्गार्थं विधीयत इत्येवार्थः॥

एतेन प्रपञ्चेन सति संभवे गुणविधिरन्यथा गुणात्कर्मभेदः, स च यदिशब्दसमभिव्याहारे क्वचिन्नैमित्तिकं क्वचिन्निमित्यादिकं निरूपितम्। इतः परमिदं निरूप्यते यत् स गुणो लोकप्रसिद्ध इति न नियमः, किंतु योगसिद्धो वैदिककर्ममात्रान्वययोग्योऽपि भवतीति। यथा "दाक्षायणयज्ञेन स्वर्गकामो यजेते"त्यत्र दाक्षायणपदार्थो न लोकसिद्धः तथापि दक्षस्य यजमानस्यायनमावृत्तिरिति योगसिद्धः सोऽर्थः कर्मान्वययोग्य इति तत्र फलार्थमावृत्तिविधानं विवक्ष्यते। तथाच नात्र कर्मभेदः। अतएव "द्वे पूर्णमास्यौ" "द्वे अमावास्ये" इति आवृत्तीयत्तासंख्यानमुपपद्यते।

"उद्भिदा यजेत पशुकामः" "वाजपेयेन स्वाराज्यकामो यजेते"त्यादिषु गुणफलसंबन्धे यथोत्पत्तिशिष्टसोमाद्यवरुद्धे खनित्रस्यान्वयायोग्यत्वात् तस्यापि विधानं करणीयमनन्तरं फलसंबन्धः करणीय इति वाक्यभेदो न तथात्र संभवति। न हि आवृत्तिविरुद्धानावृत्त्यादि दर्शपूर्णमासयोरुत्पत्तिशिष्टं वर्तते।

किंचोद्भित्पदवत् दाक्षायणपदं न गुणे कर्मणि च तुल्यवृत्तिकम्। यागस्य फलसाधनत्वस्येव दक्षयजमानसंबन्धस्यात्र प्रमाणान्तराप्राप्तत्वात्। तथाच दाक्षायणपदं न यौगिकं किंत्वश्वकर्णादिवत्केवलरूढमिति वर्णनीयम्। नचासति बाधके योगार्थबाधो युक्त इति प्रोक्षण्यधिकरण एव निरूपितम्।

योगाद्रूढिर्बलीयसीति न्यायस्तु रथकारादिपदस्येवानुशासनादिसत्त्व एव भवतीति पूर्वमेव निरूपितम्। दाक्षायणपदे णत्वानुशासनं तु "छन्दसि दृष्टानुविधि"रिति परिभाषया सिद्ध्यति साधकम्। नहि विशिष्य रथकारशब्द इव दाक्षायणपदनामत्वे किंचिदपि गमकं विद्यते।

एतेन—"साकं प्रस्थायीयेन यजेते"तिवाक्ये साकंप्रस्थायिपदमपि न नामधेयं किंतु गुणपरमेवेति न यागभेद इति सूचितम्॥

यत्र तु गुणविधित्वं गुणफलसंबन्धविधित्वं वा न भवति तत्र विशिष्टकर्मान्तरविधानमेव, यथा "वायव्यं श्वेतमालभेत भूतिकामः" "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम" इत्यादौ च। तथाहि दर्शपूर्णमासयो"रीषामालभते" "चतुरो मुष्टीन्निर्वपती-ति"च श्रुतम्; आभ्यां चेषालम्भचतुर्मुष्टिनिर्वापौ यौ विहितौ तयोरेव "वायव्यं श्वेतमालभेत सौर्यं चरुं निर्वपेदि"त्यत्र चालभतिनिर्वपतिभ्यामनुवादेन श्वेतचरुगुणयोः फलार्थविधानमिति न संभवति; वायव्यादिवाक्यस्यानारभ्याधीतत्वेन धात्वर्थस्याप्रकृतस्याश्रयत्वेनान्वयासंभवात्। प्रकरणोपस्थितं वाक्योपस्थापितं वैवाऽऽश्रयत्वेनान्वेति। यथा "दध्नेन्द्रियकामस्य जुहुयादि" त्यत्र "होमः गोदोहनेन पशुकामस्ये" त्यत्र "चमसेनापः प्रणयेद"तिवाक्योपस्थापितं प्रणयनं च। किंच "ईषामालभते" इत्यत्रालम्भतिशब्दस्य स्पर्श एवार्थः नतु यागः, वायव्यादिवाक्ये तु आलभ्यादेर्द्रव्यदेवतासंबन्धानुमितयागपरत्वमिति वायव्यादिवाक्यस्याऽऽलभतिनेषालंभानुवादो न सम्भवत्येव॥

यत्र देवतातद्धितान्तं पदं विद्यते तस्मिन्वाक्ये यजिधातोरश्रवणेऽपि धातुना याग एव लक्ष्यते॥ यथा "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति", "वायव्यं श्वेतमालभेत" इत्यादौ। "ईषामालभते" "औदु-

म्बरो यूपो भवति", "चतुर्मुष्टीर्निर्वपती"त्यादौ तु न भूधात्वादिभिर्योगो लक्ष्यते। द्रव्यस्य देवतायाश्च संबन्धो हि तद्धितावगतः स्वीकार्यस्वीकारभावो देवतोद्देशेन द्रव्यत्यागं विना न संभवति। देवतोद्देश्यकद्रव्यत्याग एव खलु यागः॥

यत्र तु न देवातातद्धितः षष्ठ्यादिविभक्तिर्वा तत्र तु न यागलक्षणम्। यथा "बृहस्पतेर्वा एतदन्नं यन्नीवाराः" इत्यादौ। चतुर्थ्यन्तपदबोध्यत्वं तद्धितान्तबोध्यत्वं मन्त्रवर्णगम्यत्वं वा देवतात्वम्,

तदुक्तं "तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः। देवताया विधिस्तत्र दुर्बलं तु परं परम्" इति। तथाच बृहस्पतेर्वेति वाक्ये बृहस्पतिशब्दस्य ब्राह्मण एवार्थं इत्यर्थवाद एवायम्। "चरुमुपदधाती"ति विधिशेषतया तैत्तरीयशाखायां "बार्हस्पत्यो वा एष भवती" त्याम्नानमपि तत एव व्याख्यातम्; विध्यन्तराशेषाणामेव विधित्वात्। "विष्णुरुपांशु यष्टव्य" इत्यादौ श्रूयमाणोऽपि विधिः प्रमाणान्तरावगतार्थवादत्वोपपत्त्यर्थं परित्यक्त इति स्थिते कथं विध्यश्रवणे तत्कल्पनं संभवति?

स च तद्धितावगतो द्रव्यदेवतासंबन्धोऽपूर्व एव यागकल्पकः, नतु पूर्वमवगतः प्रत्यभिज्ञातश्च। अत एव "त्वाष्ट्रं पात्नीवतमालमेत" इति वाक्येन द्रव्यदेवताविशिष्टं यागं विधाय श्रुते "पर्यग्निकृतं पात्नीवतमुत्सृजती"त्यत्रोत्सर्गस्यैव विधानं नतु विशिष्टयागान्तरविधानम्। "त्वाष्ट्रं पात्नीवतमि"ति पृथक् तद्धितश्रवणात् देवताद्वयमेवैकस्य पशोः प्रथमवाक्ये विवक्षितम्, नतु समुच्चितयोर्देवतात्वम्।

तथाचा"ग्नेयं चतुर्धा करोती"त्यत्रैन्द्राग्नपुरोडाशस्येवात्र पूर्वतनपशोर्न विवक्षेति न संभवति। यथाहि लोके डित्थडवित्थयोर्माता डित्थमातेति व्यपदिश्यते एवं त्वाष्ट्रपात्नीवतपशुः पात्नीवतपदेन प्रत्यभिज्ञातुं शक्यत एव। अत्र च वृत्तपर्यग्निकरणान्तत्वस्यातिदेशतः पूर्वं विधानादतिदेशप्रतिबन्धः फलम्। यथाहि "प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ती"त्यत्र क्तप्रत्ययश्रवणेन न प्रमाणान्तरप्राप्तिः प्रोक्षणस्य, किन्तु तेनैव वचनेन प्राप्तिः, तथा प्रकृतेऽपि न क्तप्रत्ययमहिम्नाऽतिदेशाप्रतिबन्धः। तथाच द्रव्यदेवतोभयसंबन्धोऽपूर्वो यागकल्पक इति सिद्धम्।

तत्र यथा केवलद्रव्यमात्रश्रवणे न यागविधिरेवं केवलदेवतामात्रश्रवणेऽपि न स इति "ऐन्द्रवायवं गृह्णाति" इत्यादौ ग्रहणमेव विधीयते न यागः।

द्रव्यदेवतासंबन्ध इवोपपदस्य नामधेयत्वमपि यागकल्पकमिति न संभवति। नामधेयं हि द्रव्यस्य संस्कारस्य वा संभवति, नतु प्रधानयागस्यैवेति नियमः। तथा चा"दाभ्यं गृह्णाति" "अंशुं गृह्णाति" इत्यादावपि ग्रहणादिसंस्कारस्यैव विधानम् नतु यागस्य। ग्रहणस्यापि देवतासंबन्धो भवत्येवेति पशुसोमाधिकरणे निरूपितम्। तत्रादाभ्यग्रहणस्य सोमोंऽशुग्रहणस्य प्रजापतिर्देवतेति मन्त्रलिङ्गात् सिध्यति। तथाच यद्विना यन्न संभवति तत्तस्य कल्पकम्। नामत्वं तु यागत्वं विनाऽपि संभवतीति न यागकल्पकम्।

"अथातोऽग्निमग्निष्टोमेनानुयजन्ती"त्यनुशब्दप्रयोगोऽपि अग्नेरयागत्वेऽप्युपपद्यते। यद्यपि देवदत्तमनुगच्छति यज्ञदत्त इत्यत्र तुल्यक्रियायोग एवानुशब्दो दृश्यते; तथापि पाकमनुभुङ्क्ते इत्यत्राभोजनेऽपि पाकेऽनुशब्दसमभिव्याहारोऽपि दृश्यते इति न किंचिदनुपपन्नम्। अत्र चाग्निशब्दस्य चयननिष्पादितस्थण्डिलवाचिनोऽग्निचयनमेवार्थः। तथाच "य एवं विद्वानग्निं चिनुते" इति वाक्येऽप्यग्निसंस्कारार्थचयनस्यैव विधानं नत्वग्निसंज्ञकयागस्य।

कौण्डपायिनामयने "मांसमग्निहोत्रं जुहोति" इत्याम्नायमाने वाक्ये नित्याग्निहोत्रे मासरूपगुणविधानमेव विवक्षितं नतु गुणात् कर्मभेदः। नहि नित्याग्निहोत्र उत्पत्तिवाक्येन मासविरुद्धो गुणः कोऽपि विहितः। दूरस्थस्यापि होमस्य हुधातुनाऽनुवादो हि "यदाहवनीये जुहोति" इत्यत्र दृश्यते। नेदमुपस्थानं उपादेयगुणस्यैव सत्त्वे नानुपादेयगुणस्येति विशेषे किमपि प्रमाणमस्तीति शङ्कानिरासेनात्र होमान्तरविधानमेवेति प्रकरणान्तराधिकरणसिद्धान्तः।

अयमाशयः—सर्वत्र विधिवाक्येषु एकमुपादेयं नियमेनापेक्षितम्। यथा"ऽग्निहोत्रं जुहोति" "अग्निहोत्रं जुहुयात्स्वर्गकामः" "दध्ना जुहोति" इत्यादिषु होमादिकं तादृशमेकं विद्यत एव। तथाचोपादेयगुणसत्त्वे विधेरेकविषयत्वलाघवार्थं दूरस्थस्यापि धातुनाऽनुवादेन गुणमात्रविधानमपि संभवति। यथा "यदाहवनीये जुहोति" इति।

यद्यपि "सायं जुहोति" इत्यत्रोपादेयगुणः कोऽपि नास्ति; तथाप्यत्र सन्निधिना प्रत्यभिज्ञानात् पूर्वतनहोम एवागत्या कालस्यैव विधानमङ्गीकृतम्। नचात्र दूरस्थकर्मोपस्थापकं सन्निध्यादिकं किमपि वर्तते। अग्निहोत्रमिति नाम्ना तु न होमस्योपस्थितिः, अग्निहोत्रपदेन ह्यग्निदेवताको होम उपस्थाप्यते, नतु पूर्वतनो विजातीयो वा। नहि नाम्नस्तादृशं सामर्थ्यं विद्यते। एकनामानो बहवो भिन्नभिन्ना दृश्यन्त एव लोके। तथाचानुपादेयगुणविशिष्टानुपस्थितिरूपात् प्रकरणान्तरात् कर्मभेद एवात्र विवक्षितः। अत एव सप्तमे नाम्ना नित्याग्निहोत्रधर्मातिदेश उपपाद्यमानः सङ्गच्छत इति भाट्टदीपिकादिसंमतः प्रकारः।

"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"त्यत्र बृहस्पतिसवोऽपि स्वतन्त्रबृहस्पतिसवान्तरात् उक्तन्यायेन भिन्न एव। तथाचान्यार्थं विनियुक्तस्यान्यार्थे विनियोग इत्यत्र खादिरत्वादिकमेव निदर्शनं पञ्चपादिकाविवरणानुसारिभिरूरीकरणीयम्, नतु

बृहस्पतिसव इति "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"त्यादौ यज्ञादीनां स्वतन्त्रफलार्थानां ज्ञानोपयोगोऽप्युपपन्न इत्यत्र बृहस्पतिसवनिदर्शनत्वमभ्युपेत्यवादेनैव न वस्तुगत्येति वेदान्तकल्पतरौ निरूपितम् ।

"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"त्यत्र तु यज्ञादिशब्देन यज्ञादिसामान्यस्योपस्थापनान्न प्रकरणान्तरन्यायेन भेदः । एतेन—"य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेते" त्यत्रापि न कर्मभेद इति—सूचितम्, यच्छब्दसमभिव्याहृतेनाख्यातेन कर्मणः सिद्धतयैवानुवादेनोपस्थिततया सायंजुहोतीतिवदनुपादेयगुणविधानस्यापि संभवात् ।

अत्र चानुपादेयगुणविशिष्टानुपस्थितिः प्रकरणान्तरमित्यङ्गीकारे पूर्वोक्तबृहस्पतिवाक्ये कर्मान्तरत्वं न स्यादिति उपादेयगुणसामान्याभावविशिष्टानुपस्थितिरेव प्रकरणान्तरम् । "वारुण्या निष्कासेन तुषैश्चावभृतं यन्ती"त्यत्रानेकोपादेयगुणस्थलेऽपि कर्मभेदस्य विवक्षितत्वात् उपादेयगुणसामान्याभावविशिष्टानुपस्थितिरनेकोपादेयगुणविशिष्टानुपस्थितिर्वा प्रकरणान्तरमिति शास्त्रदीपिकाव्याख्याने सोमनाथीये व्यक्तम् ।

अत्रेदं विचारणीयं प्रकरणान्तरेण किं धात्वर्थभेद उत भावनाभेदमात्रमिति । अत्र भाट्टदीपिकाकारा धात्वर्थभेदमेवाभिप्रयन्ति । अतएव सप्तमाध्यायतृतीयपादगतप्रथमाधिकरणे नामातिदेशेन नित्याग्निहोत्रधर्माणां कौण्डपायिनामयनगताग्निहोत्रे प्राप्तिरुपपद्यते । अन्यथोभयत्राप्युपदेशादेव धर्मसंभवात्तदधिकरणं निष्फलमापद्येत ।

यत्तु शास्त्रदीपिकायां "ननु नामधेयेन भवति पूर्वकर्मण उपस्थानम्, भवतु धात्वर्थस्य, भावना तु तेनानुपस्थानाद्भिद्यत एवेति भावनाभेद एव प्रकरणान्तरादि"त्युक्तं तत् सप्तमाध्याये शास्त्रदीपिकायामेव यत् "कौण्डपायिनामयने श्रूयते—"मासमग्निहोत्रं जुहोति" इति, तन्नैयमिकाग्निहोत्रात्कर्मान्तरमिति स्थिते" इति धात्वर्थभेदस्यैवानुवादात् पूर्वापरविरुद्धमिति न युक्तम् । इति ।

वेदान्तकल्पतरुपरिमलकारास्तु—"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"त्यत्र बृहस्पतिसवान्तरं न विवक्ष्यते, किन्तु पूर्वतनमेव; नाम्ना तस्योपस्थितत्वात् । अतएव "आज्यभागौ यजती"त्यत्र प्राकृताज्यभागविधानेन चोदकलोपस्तत्रेति सिद्धान्त उपपद्यते । अन्यथा तत्रापि आज्यभागान्तरविधानापत्त्या न चोदकलोप उपपद्यते । क्लृप्तोपकारप्राकृताङ्गरूपाज्यभागप्रत्ययविधिनैव नैराकांक्ष्यात् खलु तत्र चोदकलोप इष्यते । यद्यपूर्वमाज्यभागान्तरमेवात्र विवक्षितं स्यात्, तर्हि तस्याक्लृप्तोपकारकत्वेन विकृतिसन्निधौ उपहोमादिसत्त्वेऽप्यतिदेश इवात्राप्यतिदेशः समापद्येतैव । तथाच प्राकृताज्यभागयोरेव गृहमेधीयाङ्गतया विधानमिव स्वतन्त्रबृहस्पतिसवस्यैव वाजपेयाङ्गतया विधानमुपपद्यते । तथाच "मासमग्निहोत्रं जुहोति" इत्यत्रापि सत्राङ्गतया नित्याग्निहोत्रस्यैवाङ्गतया विधिसंभवान्न प्रकरणान्तरात् धात्वर्थभेदः, किन्तु भावनाभेद एव । सप्तमतृतीयाद्यधिकरणं तु नित्याग्निहोत्र इव मासाग्निहोत्रे देवताविधानकृताग्निहोत्रनाम्नः प्रवृत्तिनिमित्ताभिव्यक्तिः स्फुटं नास्तीत्यभिप्रायेणेति—वदन्ति ।

अस्मिन् पक्षे "प्रकरणान्तरे च प्रयोजनान्यत्वमि"ति सूत्रे प्रयोजनान्यत्वपदमपि स्वरसम् । अयमेवाशयः—"नाम्ना धात्वर्थमात्रं तु सन्निधाप्येत शक्तितः । भावना त्वनुपस्थानात् भिद्यमाना न वार्यते ॥" इति वार्तिकाद्युपष्टम्भेन सोमनाथीयेऽपि सप्तमतृतीयाद्यधिकरणे व्यक्तीकृतः । सर्वथा तु प्रकरणान्तरमपि भेदप्रमाणमिति सिद्धम् ।

उपादेयगुणसामान्याभावश्चानुपादेयगुणसत्त्वे कस्यापि गुणस्यासत्त्वे च भवति । तत्र के नामानुपादेयगुणाः ? देशकालनिमित्तफलान्यनुपादेयगुणाः । तत्र मासमग्निहोत्रं जुहोतीत्यत्र कालस्य, "सरस्वत्या दक्षिणेन तीरेणाग्नेयोऽष्टाकपालः" इत्यत्र देशस्य, "आग्नेयमष्टाकपालं निर्वपेत् रुक्कामः" इत्यत्र फलस्य चानुपादेयस्य श्रवणमस्तीति सर्वत्रापि प्रकरणान्तराद्भेद एव ॥

एतावता प्रपञ्चेन शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तरैः—कर्मोत्पत्तिभेदो निरूपितः, इदानीं तु "यावज्जीवं दर्शपूर्णमासाभ्यां यजेते" त्यत्र जीवनकालेन काम्यप्रयोगात् भिन्नं नित्यं प्रयोगान्तरं विधीयते । "अमावास्यायां यजेते"त्यादाविव नात्र वाक्ये जीवनं कर्मधर्मतयाऽन्वेति, किंतु यावज्जीवमिति णमुलन्ततया कर्तृधर्मतया । यावज्जीवपदेन हि जीवनक्रियाव्यापकत्वं यागस्य कर्तृसाध्यस्य गम्यते, नतु जीवनकालव्यापकत्वं यागस्य । तथाच जीवने निमित्ते दर्शपूर्णमासौ कर्तव्यावित्यर्थः; प्रकरणेनोपस्थापितेऽपि यागे जीवनकामस्याविधेयत्वात् । जीवने निमित्ते यागस्यैव प्रयोगान्तरविधानात् न सायं जुहोतीतिवदत्राभेदः । नैमित्तिकस्य चास्य प्रयोगस्य पापक्षयः फलमिति सर्वसंमतम् ॥

तत्र केचित् जन्मान्तरीयस्य संचितस्य पापस्यैव निवृत्तिः, नतु भाविनः पापस्येति वदन्ति । तेषामयमाशयः—विहितकर्मातिक्रमादेव प्रत्यवायात् प्रत्यवायाभावरूपफलान्वयात् पूर्वमेव विधिप्रवृत्तेरावश्यकत्वात्—सिद्धे विधौ विहितकर्मातिक्रमात् प्रत्यवयावगमः अवगतस्य च प्रत्यवायस्य परिहाराय विधिरित्यन्योन्याश्रय इति पूर्वतनपापक्षय एव फलमिति ।

अन्ये तु प्रत्यवायपरिहार एव नित्यनैमित्तिकयोः फलम्, नत्ववगतप्रत्यवायपरिहार इति विधिप्रवृत्तिसमकालमेव शास्त्रमहिम्ना प्रत्यवायपरिहारफलस्याप्यवगमो भवत्येव। स च प्रत्यवायोऽकरणनिमित्त एव नतु संचितः। नह्यत्र परिहारपदेन विनाशो विवक्षितः, येन प्रतियोगिसत्त्वमपेक्ष्यते, किन्तु प्रागभावपरिपालनमिति न कोऽपि दोष इति वदन्ति। सर्वथा प्रयोगभेदोऽत्र विवक्षित इत्यलं विस्तरेणेति प्रकृतमेवोपपादयामः। तत्सिद्धं शब्दान्तरादिभिः कर्मभेद इति।

शाखाभेदेन कलापाग्निहोत्रं काठकाग्निहोत्रमिति व्यपदिश्यमानो नामभेदः द्वादशकपालत्वैकादशकपालत्वादिगुणभेदः तत्तादृशेतिकर्तव्यताभेदः शाखाभेदेन पुनरभ्यासश्च न कर्मभेदापादकः। सर्वास्वपि शाखासु एकफलसंयोगेनैकद्रव्यदेवतादिगुणयोगेन च धात्वर्थानुरक्तभावना ह्येकैवाऽवगम्यते।

स्वाध्यायोऽध्येतव्य इति स्वपरंपराप्राप्तशाखाध्ययनस्यैव नियमितत्वात् इतरशाखाध्ययनानधिकारिणां तद्वाक्याध्ययनेन कर्मावबोधो न पुनरुक्तो भवति। काठकादिसंज्ञा हि उत्पत्तिवाक्यगता भेदिका, न हि काठकाग्निहोत्रमिति संज्ञोत्पत्तिवाक्यगता। तथाच संज्ञया न भेदः।

एवं "वाजिभ्यो वाजिनमि"त्यत्रेव गुणादपि न कर्मभेदः। तत्र ह्यामिक्षोत्पत्तिशिष्टा वाजिनं उत्पन्नशिष्टमिति गुणात्कर्मभेदः, प्रकृते तु द्वादशैकादशकपालयोरुभयोरपि शाखाभेदेन "अग्नीषोमीयमेकादशकपालम्" "द्वादशकपाल"मिति चोत्पत्तिशिष्टत्वात् न कर्मभेद इति विशेषः।

एतेनाभ्यासोऽपि व्याख्यातः। अनन्यपरविधिपुनःश्रवणं ह्यभ्यासः। नहि शाखान्तरीयमाम्नानमप्रयोजनम्; अधिकारिविशेषेण तदध्ययनादिसार्थक्यात्, नहि शाखान्तराध्ययनकाले पुनःश्रवणं वर्तते इति न दोषः।

यत्तु शाखाभेदेन गुणविशेषाणां शाखान्ताम्नातानां निन्दा प्रायश्चित्तादिकं चाम्नायते, तत्पूर्वोक्तरीत्या विकल्पाभिप्रायत्वान्न विरुद्धमिति शब्दान्तराभ्यास-संख्या-संज्ञा-गुण-प्रकरणान्तराणामेव कर्मभेदप्रयोजकत्वं नेतरस्येति स्पष्टमिदं सर्वेषाम्।

तथाच शाखाभेदेन कर्मणो भेदाभावात् शाखायामेकस्यामाम्नातानां शाखान्तरानाम्नातैरुपसंहारेणैवानुष्ठानं कर्तव्यम्; अनुक्तमविरुद्धमन्यतो ग्राह्यमिति न्यायात्। शाखाभेदेन विरुद्धमाम्नातयोर्विकल्पितयोश्च यथास्वशाखमनुष्ठानेन व्यवस्थितविकल्प एव, न दधिपयआदाविवाव्यवस्थितविकल्पः। "बह्वल्पं वा स्वगृह्योक्तमि"ति वचनं तु अशक्तं पुरुषमुद्दिश्येति भाट्टदीपिकायां व्यक्तमिति द्वितीयाध्यायः॥

---

## अथ तृतीयोऽध्यायः।

प्रथमेनाध्यायेन धर्मे प्रमाणानां विधिमन्त्रार्थवादस्मृतिनामधेयानां धर्मपर्यवसानक्रमो निरूपितः। द्वितीयेन च धर्माणां परस्परं शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तरैर्विभेदप्रकारो निरूपित इति भिन्नानां धर्माणां मध्ये कानि चनाङ्गानि कानि चनाङ्गीनि भवन्तीत्यङ्गाङ्गिभावनिरूपणमवसरप्राप्तम्।

क्रत्वर्थपुरुषार्थविचारः प्रयोगक्रमविशेषविचारोऽधिकारादिविचारश्च सर्वोऽपि अङ्गाङ्गिभावविचारानन्तरमेव संभवति। तदुक्तं तन्त्रवार्तिके—"प्रयोजकाः प्रयोक्तारः शेषाणामेव शेषिणः। क्रमोऽपि शेष एवैकप्रयोगवचनाश्रयः॥ अधिकारोऽपि यज्ञेषु कर्तुः शेषस्य चिन्त्यते। तथाऽनाम्नातशेषाणां शेषिणां सप्तमादिभिः॥ शेषसद्भावतद्रूपपरिमाणादिनिर्णयः" इति॥

तत्राङ्गं शेष इति च पर्यायपदे। योऽह्यन्यार्थो लोके भवति स शेष इति कथ्यते। यथा स्वामिनो गृहादिकं तस्यैव दासादयो वा। एवंच परार्थ एव शेषपदेन व्यवह्रियते। तत्र च सर्वमपि यद्यपि कथमपि परार्थं भवत्येवेति नाङ्गाङ्गिभावनिर्णय एतावन्मात्रेण सिध्यति। अतः सर्वं वाक्यं सावधारणमिति न्यायेन यः परार्थ एव नात्मार्थोऽपि स वात्र शास्त्रे शेषपदार्थः। यथा प्रयाजादयो दर्शपूर्णमासादीनां शेषाः। प्रयाजादयो हि क्रतुफलातिरिक्ते न कुत्रापि फल उपयुज्यन्ते, यथा दासादयः स्वकार्येष्वपीति युक्तमेव प्रयाजादय एव शेषपदार्थ इति। "शेषः परार्थत्वादि"ति सूत्रस्याप्ययमेवाशयः। नह्यन्योपकारकत्वमात्रमङ्गत्वम्। गृहदासादयोऽपि स्वामिनामुपकारका एव। यथा हि शेषाः शेषिणमुपकुर्वन्ति एवं शेषिणोऽपि शेषाणामुपकुर्वन्तीति सङ्कीर्येतैव शेषता।

एवंच परार्थत्वमेवाङ्गत्वमित्यपि न संभवतीति परार्थकृतिविषयविहितकारकत्वमङ्गत्वमिति परिष्करणीयम्। शास्त्राणि यत्फलसाधनमिति यानि बोधयन्ति तानि तस्याङ्गानि। यथा दधि होमस्य, अवहननं व्रीहीणां, आरुण्यादिकं क्रयादीनाम्। तानि हि "दध्ना जुहोति" "व्रीहीनवहन्ति" "अरुणया क्रीणाती"ति वाक्येन होमाद्यर्थतया विधीयन्ते। एवंच द्रव्यविधयः गुणविधयः संस्कारविधयश्चाङ्गाङ्गिभावबोधका भवन्तीति त एव विनियोगविधय इत्युच्यन्ते।

परोद्देश्यककृतिविषयविहितकारकत्वरूपमङ्गत्वं हि विनियोगविधिभिरेवमवगम्यते। तत्रहि पर-कृति-कारकाणि "दध्ना•

जुहोती"त्यादौ पदार्थविधया भासन्ते। फलकृत्योः उद्देश्यतानिरूपकत्वं कृति-कारकयोः स्वनिरूपितविधेयता च संसर्गविषया भासते। तथाच उद्देश्यताविधेयतारूपसंसर्गविशेषबोधकद्वितीयातृतीयादिविभक्तिघटितानि वाक्यानि विनियोगविधय इति युज्यते। द्वितीयातृतीयान्यतरविभक्त्यघटितवाक्ये किमुद्देश्यं किं च विधेयमिति संशयनिरासो हि स्पष्टमेव न भवतीति लिङ्गापरपर्यायययोग्यतया द्वितीयातृतीयादिविभक्तिकल्पनेनैव तत्र विनियोगविधित्वनिर्णयो भवतीति द्वितीयादिविभक्तिघटितानीव तदघटितान्यपि वाक्यानि "यस्य पर्णमयी जुहूर्भवती"त्येवमादीनि विनियोगविधय एव। तथाच "दध्ना जुहोती"त्यादि द्रव्यविधौ "व्रीहीन्प्रोक्षती"त्यादिसंस्कारविधौ "अरुणया क्रीणाती"त्यादिगुणविधावेव च तृतीयादिविभक्तिराम्नायत इति द्रव्यगुणसंस्कारा एव शेषाः, नतु यागः फलं पुरुषो वा शेषः इति बादरिमतं नात्रादरणीयम्।

यागफलयोः पुरुषयागयोश्चाप्युक्तप्रकारेणाङ्गाङ्गिभावावगमो हि संभवत्येव। तथाच "कर्मण्यपि जैमिनिः फलार्थत्वात्, फलं च पुरुषार्थत्वात्, पुरुषश्च कर्मार्थत्वादि"ति सूत्राण्येवात्रास्माकं प्रमाणमङ्गाङ्गिभावनिर्णय इति भाष्यकारादयो मन्यन्ते।

वृत्तिकारास्तु—नात्र जैमिनिबादरिमतयोः परस्परविरोधः। बादर्याचार्यो हि द्रव्यगुणसंस्काराणां द्वितीयादिघटितवाक्यैरेव विनियोगात् युक्तमङ्गत्वम्, यागफलपुरुषाणां तु न तथा विनियोग इति नाङ्गत्वमिति–वदन्ति। यथाच दध्ना होमो जन्यते, एवं स्वर्गोऽपि यागेन जन्यते, एवं यागोऽपि पुरुषेण जन्यत इति यागादिशेषत्वमुपपन्नमेव। सर्वथा श्रुतद्वितीयादिघटितं कल्पितद्वितीयान्तादिघटितं वा वाक्यं विनियोगविधिरिति विनियोगविधित्वविनिर्णयो द्वितीयादिविभक्त्यधीन इति विनियोगविधौ सहकारिप्रमाणं द्वितीयादिकारकविभक्तिः॥

इयमेव विभक्तिः श्रुतिपदेन व्यपदिश्यते। अङ्गत्वघटकोद्देश्यताकृतिकारकतयोरन्यतरस्य प्राधान्येन वाचकश्शब्दः श्रुतिरिति तस्या लक्षणमामनन्ति। तत्र यद्यपि द्वितीयादिविभक्तिरङ्गित्वमेव गमयति, नाङ्गत्वम्; तथापि एकतरनिर्णयेनोभयनिर्णयसंभवादङ्गित्वप्रमाणद्वितीयादिविभक्तिरपि श्रुतिरिति प्राचीना आशेरते॥

नवीनास्तु—उद्देश्यतातिरिक्तकारकताबोधकतृतीयादिविभक्तिरेवात्र श्रुतिपदार्थ इति मन्यन्ते॥

वार्तिककारास्तु—अङ्गत्वमेव तृतीयाध्यायार्थ इति निरूपयन्तोऽपि प्रथमे श्रुतिपादे "व्रीहीन्प्रोक्षती"ति वाक्यविचाराद-त्रोदासीना इव भान्ति॥

प्रथमाध्याये चत्वारः पादाः, द्वितीयेऽपि चत्वारः पादाः, तृतीये तु अष्टौ पादा इत्यस्याध्यायस्य शरभाध्याय इति नामान्तरमपि। अत्राष्टानामपि पादानामर्थसंग्रहेण तत्तत्पदार्थ एवमवगन्तव्यः॥

यथा—प्रथमे पादे तावत् श्रुतिविनियोगः, यत्किंच प्रासङ्गिकम्। द्वितीयपादे लिङ्गविनियोगः। तृतीयपादादौ तदेव प्रमाणद्वयमुपन्यस्योपक्रमोपसंहारद्वारेणैकवाक्यत्वेन सिद्धान्तव्यवस्थापनं वाक्यप्रकरणस्थानसमाख्याविनियोगबलाबलादिचिन्तादि च, श्रुतिलिङ्गवाक्यैः प्रकरणस्य विरोधाविरोधचिन्ता च क्रियते। चतुर्थादिषु क्रमसमाख्ययोः प्रमाणान्तरैर्विरोधाविरोधचिन्ता क्रियत इत्यध्यायार्थसङ्ग्रहः॥

तृतीयाध्यायस्य प्रथमे पादे हि पञ्चदशाधिकरणानि वर्तन्ते। तत्र प्रथमाधिकरणेनाङ्गत्वलक्षणस्य तत्स्वरूपस्य चोक्तत्वाद्द्वितीयाधिकरणादावङ्गत्वनिर्णयोपयोगिविचारकरणादङ्गाङ्गिभावस्य चात्र शास्त्रीयकर्मापरपर्यायधर्मगतस्यैव चिन्तनात् शास्त्राध्यायपादादिसङ्गतयो यथायथं भवन्त्येव।

यद्यपि तुरीयाधिकरणेनाङ्गितावच्छेदकविचार एव क्रियते। सच तृतीयाविभक्त्याऽङ्गनिर्णयाधीन इति "व्रीहीन्प्रोक्षती"त्यादौ धातूत्तरं तृतीयाविभक्त्यभावात् न सङ्गत इव भाति; तथापि आख्यातसमभिव्याहृतधातुना करणत्वविशिष्टधात्वर्थस्यैव लक्षणयाऽवगमात् विभक्तिश्रुतिरिव धातुरपि आख्यातसमभिव्याहृतोऽङ्गत्वबोधक इति कल्पनात् धात्वर्थाप्राप्तिस्थले धातोरपि फलाङ्गत्वमविवादमेवेति नाङ्गितावच्छेदकविचारोऽनुपपन्नः।

तथाच द्वितीयाविभक्तेरपि श्रुतित्वमिति मत इव तस्यास्तदभावमतेऽपि व्रीहीनवहन्तीत्यादिवाक्यार्थविचारः तृतीयाध्यायप्रथमपादतुरीयाधिकरणेनोपपन्न एव।

एवंच "शेषः परार्थत्वादि"त्यादिसूत्रैरेवाङ्गत्वे लक्षणप्रमाणादिनिरूपणादङ्गत्वनिर्णयानन्तरकालिक एव विचारः तेषामर्थाधिकरणादिभिः क्रियत इति तेषामर्थाधिकरणादिकं प्रासङ्गिकमेवेति न तदधिकरणानुपपत्त्या द्वितीयाविभक्तेरपि श्रुतित्वं युज्यते। द्वितीयायां श्रुतित्वव्यवहारो भाक्त इत्यादिग्रन्थानामपि द्वितीयान्तोपपदसमभिव्याहृतधातोः निरूढलक्षणया धात्वर्थकरणत्वपरत्वाद्धातोरेव तत्र श्रुतित्वेऽपि धातुश्रुतिनिर्णये द्वितीयाविभक्तिरपि निमित्तमिति कृत्वैव।

"द्रव्यगुणसंस्कारेषु बादरिः" इति सूत्रे द्रव्याणां गुणानां च "दध्ना जुहोति" "अरुणया क्रीणाती"त्यादौ धातूत्तरद्वितीयाद्यभावेऽपि विभक्त्यन्तकरणत्वावगमात् यथाङ्गत्वं श्रौतं एवं संस्कारस्यापि श्रौतमेवाङ्गत्वमिति गमयति। अत एव द्रव्यगुण-

संस्कारेष्विति सर्वेषां समप्रधानभावेन निर्देश उपपद्यते । यत्र तु यागादौ स्वर्गकामादिपदसमभिव्याहारः तत्र द्वितीयाविभक्तिरिव स्वर्गकामपदं धात्वर्थकरणत्वस्य निरूढलक्षणया बोधं संपादयतीति धात्वर्थकरणत्वं न द्वितीयाविभक्तिस्थल एव प्रतीयते इति वैषम्येणैव "कर्मण्यपि जैमिनिः फलार्थत्वादि"ति पृथक्सूत्रमप्युपपद्यते । तथाच यत्रोद्देश्यतायाः करणतापरपर्यायविधेयताया वा स्पष्टं प्रतीतिः तत्र सर्वत्रापि श्रौतो विनियोग इत्यत्र न संशयलेशोऽपि ॥

यत्तु न्यायप्रकाशे "व्रीहीन्प्रोक्षती"त्यत्र वाक्यीयो विनियोग इत्युक्तम्, तदेतच्चिन्त्योपपत्तिकमिति पश्यामः। प्रोक्षणादीनां व्रीह्यर्थत्ववदपूर्वार्थत्वमपि यत्तेषामर्थाधिकरणेन साधितं तदिदं वाक्यविनियोगपक्षे नोपपद्यते । वाक्यीयविनियोगो हि मुख्यार्थस्यैव भवति न गौणार्थस्य ।

तथाहि—"बर्हिर्देवसदनं दामी"त्यादीनां मुख्यबर्हिर्लवन एवोपयोगः न गौणोलपराजिदान इति हि निरूपयिष्यते । तत्र लिङ्गस्य गौणार्थाविनियोजकत्वे तदुपजीव्यप्रमाणताकवाक्यस्यापि गौणार्थविनियोजकत्वं लक्ष्यार्थविनियोजकत्वं वा न संभवतीत्यर्थसिद्धमेव । तथाच वाक्यीयविनियोगपक्षे व्रीहिप्रोक्षणादीनां अपूर्वार्थत्वं वा व्रीह्यर्थत्वं वा स्यात्, नोभयार्थत्वम् । तत्रचापूर्वमानुषङ्गिकं वैतुष्यं मुख्यमिति गौणार्थत्वमपि साध्यमानं श्रौतविनियोगपक्षमेव समर्थयति ॥

यत्तु ब्राह्मणवाक्यं लिङ्गादपि प्रबलं, तदप्यत एवोपपद्यते । अन्यथा "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति विनियोगोऽप्यफलः स्यादिति गर्दभरशनापरिसंख्यानार्थमिदं वाक्यमिति सिद्धान्तोऽपि भज्येत ॥

यत्तु उपक्रमोपसंहाराधिकरणे वाक्यीयविनियोगेऽ"प्युच्चै ऋचा क्रियते" इत्यादौ ऋगादिपदानां वेदपरत्वं साधितं न तु तद्गौण्या, किन्तु "लिङ्गाच्चेति" सूत्रात् रूढ्यैवेति शक्तिनिर्णये प्रचुरप्रयोगो नियामक इति न कादाचित्कप्रयोगमात्रेणार्थनिर्णयो युक्त इत्यभिप्रायम्। नहि गौणार्थविनियोगो लक्ष्यार्थविनियोगो वा वाक्येन कुत्रापि युक्तः। "यस्य पर्णमयी जुहूर्भवती"त्यादौ मुख्यार्थ एव विनियोगो वाक्यीयो दृश्यते । अत एवोत्तरत्र "द्वादशाहीनस्ये"त्यत्राहीनपदेन द्वादशाहस्यैव विवक्षा नतु अह्ना समाप्यमानत्वेन गौणाहीनज्योतिष्टोमस्येति निरूपयिष्यते । एवंच तेषामर्थाधिकरणं द्वितीयान्तस्थलेऽपि श्रौतविनियोगाङ्गीकार एवोपपद्यते ॥

श्रौतविनियोगस्थले विनियोज्यस्य गौणत्वं मुख्यत्वं वा न विवक्षितम् । "किमिव वचनं न कुर्यान्नास्ति वचनस्यातिभारः" इति न्यायेन गौणार्थविनियोगोऽपि श्रुत्या भवत्येव। अत एव—"ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यादौ ऐन्द्रमन्त्रस्यापि गौणस्य गार्हपत्ये विनियोगो वक्ष्यमाण उपपद्यते । तथाच न तेषामर्थाधिकरणन्यायेन प्रोक्षणादीनां केवलव्रीह्यर्थत्वं, किंतु क्रत्वर्थत्वमपीति युक्तम् ।

इदं हि तदधिकरणशरीरम् । दर्शपूर्णमासयोः श्रूयते—व्रीहीनवहन्तीत्यादि । तत्र व्रीहिपदेन व्रीहित्वविशिष्टं न विवक्षयितुं शक्यते, तदा हि केवलवैतुष्यार्थं अवघात इति स्यात्, तत्र च व्रीहीनवहन्तीतिविधिर्विफलः स्यात् । यद्यपि अवघातेनैव वैतुष्यं संपादयेदिति नियमविधिः, तथापि व्रीहिनियमापूर्वस्य व्रीहीणामिव यागस्वरूपनिष्पादन एवोपयोगात् तस्य च यागस्य नखविदलनादिजन्यवैतुष्येणापि संभवात् न फलविशेषः केवलवैतुष्यार्थत्वपक्षे । नह्यवघातजन्ये नखविदलनजन्ये च वैतुष्ये किमपि वैषम्यमस्ति । साधनभेदेन साध्यस्वरूपभेदकल्पनं ह्यदृष्टे युज्यते, न दृष्टे । अतोऽपूर्वार्थ एवावघातो न व्रीहिवैतुष्यमात्रार्थः । तथा चावघातेन वैतुष्यं संपाद्य तद्वाराऽपूर्वं संपादनीयमिति वाक्यार्थः । अत्र नियमापूर्वस्याप्युपयोगो भवत्येव । विस्तृतं चैतत् नवमाध्यायादौ । तथाच विधिसार्थक्यार्थमपूर्वार्थत्वस्याङ्गीकार्यत्वात् व्रीहिपदेन यत्किंचिदपूर्वसाधनव्यक्तिर्लक्षणया प्रतिपादनीयेति स्थिते संशयः—किं दर्शपूर्णमासजन्यपरमापूर्वसाधनत्वमत्र लक्ष्यं उत आग्नेयादियागजन्योत्पत्त्यपूर्वार्थत्वमिति । तत्र पूर्वपक्षे आज्यादीनामपि दर्शपूर्णमासपरमापूर्वोपयोगित्वादवघातः करणीयः । सिद्धान्ते तु व्रीहीणामेवेति फलभेदः स्पष्ट एव ।

तत्र पूर्वपक्षः—परमापूर्वसाधनत्वमेव व्रीहिपदार्थतावच्छेदकम् । परमापूर्वं हि फलं प्रति प्रत्यासन्नं नोत्पत्त्यपूर्वम् । वाङ्नियमन्यायो हि तत्रैव भवति यत्र प्रत्यासन्नस्यापूर्वस्य परमापूर्वजनकत्वं न संभवति, प्रकृते तु आग्नेयाद्युत्पत्त्यपूर्वस्य परमापूर्वजनकत्वात् न तन्न्याय इति परमापूर्वसाधनत्वमेव विवक्षणीयम् । एवंच प्रोक्षणादिसाध्यमेकमेवापूर्वमिति नानेकापूर्वार्थतापि । अन्यथा पुरोडाशयागजन्यानां दर्शपूर्णमासगतानां बहूनामपूर्वाणां प्रोक्षणादिप्रयोजकत्वे महद्गौरवं समापद्येत । एवंच सन्निपत्योपकारकाणामिवाराढुपकारकाणामप्येकापूर्वार्थत्वमेव सिद्धं भवतीति सिद्धम् । तथाच परमापूर्वसाधनत्वस्य परंपरयाऽविशेषात् उपांशुयाजाद्यङ्गाज्यदध्यादीनामपि प्रोक्षणं कर्तव्यमिति सर्वधर्मसंकर इत्यवघातादीनां न व्रीह्यङ्गत्वम्, किन्तु क्रत्वङ्गत्वमेवेति फलति ।

यद्यपि अस्मिन्मते व्रीहीनिति द्वितीयाया अवघातदृष्टार्थत्वस्य च बाधापत्त्या "यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत" इत्यधिकरणविरोधः, तथापि तस्यैवाधिकरणस्य विस्तरार्थमिदमधिकरणमिति न दोषः । सर्वथा चावघातादीनामाज्यादिसांकर्यं दुर्वारमेवेति ॥

सिद्धान्तस्तु व्रीहीनिति द्वितीयोपपत्त्यर्थं व्रीह्यर्थत्वमेव प्रोक्षणावघातयोरङ्गीकरणीयम् । अन्यथा सर्वेषामङ्गानां साक्षात्क्रतूपकारकतापत्त्या "तानि द्वैधं गुणप्रधानकर्माणी"ति सूत्रनिबन्धनसंनिपत्त्यारादुपकारकभावविभागो निरालम्बन एव स्यात् । तच्च व्रीह्यर्थत्वं व्रीहिसाध्यपुरोडाशजन्योत्पत्त्यपूर्वोपयोगेनैव युक्तं न तु केवलवैतुष्यार्थत्वेन, नापि केवलपरमापूर्वार्थत्वेन वेति व्रीहिपदोपस्थापितप्रकरणिकपुरोडाशयागजन्योत्पत्त्यपूर्वसाधनत्वमेवात्रोद्देश्यतावच्छेदकमिति यवनीवारादिसाधारण्यं प्रकृतौ, श्यामाकादिसाधारण्यं विकृतौ चावघातप्रोक्षणादीनां सिध्यतीति न यवादीनामवघाताभावः, नवाऽऽज्यादीनामपि प्रोक्षणावघातादिप्रसङ्ग इति सर्वमनवद्यम् ॥

व्रीहीणामाग्नेयाद्युत्पत्त्यपूर्वसाधनत्वं चाग्नेयोत्पत्त्यपूर्वसाधनपुरोडाशयागसाधनपुरोडाशरूपप्रदेयद्रव्यप्रकृतिभूततण्डुलप्रकृतितयेति तण्डुलनिर्वृत्तिप्रणाड्या पुरोडाशयागजन्यापूर्वसाधनत्वमेवात्रोद्देश्यतावच्छेदकमिति निष्कर्षः ।

तदिदं सिद्धं द्वितीयान्तोपपदसमभिव्याहारे तृतीयादिकारकविभक्त्यन्तसमभिव्याहारे वा श्रौत एव विनियोग इति साध्यसाधनभावयोग्ययोर्द्वयोः सामानाधिकरण्यमभेदो यत्रोभयोरपि प्रथमान्तपदबोध्यतया प्रतिभाति । यथा— "यस्य पर्णमयी जुहूर्भवति" "औदुम्बरो यूपो भवति" "धेनुर्दक्षिणे"त्यादौ, तत्रैव वाक्यीयो विनियोगः ॥

वाक्यीयविनियोगस्थले हि योग्यतयैव साध्यसाधनभावोऽवगन्तव्य इति जुह्वादिपात्रस्वरूपसंपादने प्रकृतिद्रव्यतया पर्णतादीनां योग्यता यथा लोकतोऽप्यवगम्यते न तथा स्फ्यकपालाग्निहोत्रहवणीशूर्पकृष्णाजिनादीनां यज्ञसाध्यसाधनभावप्रकारः प्रमाणान्तरेणावगत इति स्फ्येनोद्धन्तीत्यादिवाक्यमवश्यं पर्यालोचनीयमिति तेषामेव विनियोजकत्वं, नतु "दशयज्ञायुधानी"ति वाक्यस्येति संस्कारकर्मणां द्रव्यान्तरेष्विव स्फ्यादिद्रव्याणामपि नोद्धननातिरिक्तक्रियासाधारण्यमिति तुरीयपञ्चमाधिकरणयोर्विषयभेदमात्रं न प्रयोजनभेदः ।

एतावता प्रपञ्चेन "द्रव्यगुणसंस्कारेषु बादरि"रिति सूत्रोपक्षिप्तानां द्रव्यगुणसंस्काराणां द्रव्यसंस्कारयोः स्वयोग्योद्देश्यसमभिव्याहारे श्रौतोऽङ्गाङ्गिभाव इति निरूपितम् । तत्र गुणस्यापि शेषत्वं यत्प्रतिज्ञातं तत्तु द्रव्यनिरूपितं वा क्रियानिरूपितं वेति संशयो हीदानीमवश्यं निरसनीयः ॥

तत्रारुण्यादिद्रव्याणाममूर्तानां क्रयादिक्रियासाधनत्वाभावात् द्रव्यार्थत्वमिति केचन मन्यन्ते । एतेषां मते "अरुणयैकहायन्या सोमं क्रीणाती"त्यादौ अरुणयेत्यस्य पृथक्कारेणारुण्येन योग्यं द्रव्यं परिच्छिन्द्यादित्येव वाक्यार्थो भवति । अत्र शाब्दबोधे योग्यताज्ञानं कारणमिति ये न मन्यन्ते ते न परितुष्यन्ति । ते हि अयोग्यतानिश्चयाभावमात्रेण प्रथममारुण्यकरणिका क्रयभाव्यका भावनेति वाक्यार्थबोधे पश्चाच्च पार्ष्ठिकबोधे एकहायन्यादिस्वसमभिव्याहृतद्रव्यपरिच्छेदद्वारा क्रयसाधनत्वविनिर्णयो भवतीति गुणस्यापि द्रव्यस्येव क्रियाङ्गत्वमेव, न तु क्रियाया इव द्रव्यार्थत्वम् । एतादृशं द्रव्यगुणयोः साम्यमभिप्रेत्यैव द्रव्यदेवतादीनामपि मीमांसकैर्गुण इति व्यवहारः, दध्ना जुहोतीत्यादयो गुणविधय इत्यादिव्यवहारश्च वर्तते इति मन्यन्ते ।

यद्यप्यत्रारुणयेति तृतीयाविभक्त्याऽऽरुण्यस्याङ्गत्वं स्पष्टमवगतम्, एवमपि तस्य क्रयासाधनत्वेन न क्रयाङ्गत्वं सिध्यति । एवंच पूर्वतनाधिकरणद्वयेनेवारुणाधिकरणेनाप्युद्देश्यस्वरूपनिष्कर्ष एव क्रियते इति नासङ्गतिः ॥

तेषामर्थाधिकरणेनापूर्वसाधनत्वमुद्देश्यतावच्छेदकं स्फ्याधिकरणेनाप्युद्धननत्वादिकमुद्देश्यतावच्छेदकं यथा निरूपितमेवमत्र क्रयत्वं यद्युद्देश्यतावच्छेकं साध्यते तर्ह्येतदधिकरणं वितथं स्यात् । यथावघातादिकं विधिवैफल्यात् न व्रीह्यर्थम्, किन्तु अपूर्वार्थमेवमिदमपि न केवलक्रयार्थम्, किन्तु अपूर्वसाधनक्रयार्थमिति वर्णनीयम् । तत्रच व्रीहिपदेन पुरोडाशयागजन्योत्पत्त्यपूर्वस्येवात्र क्रयजन्यापूर्वस्य विवक्षणे वासःप्रभृतिक्रयसाधनानामप्यारुण्यप्रसङ्ग इति शङ्कायास्समाधानं ह्यवश्यं निरूपणीयमित्यरुणाधिकरणन्यायप्रवृत्तिः ।

अत्रेदं समाधानम्—यथा "व्रीहीनवहन्ती"त्यादौ व्रीहिपदेन तदन्वययोग्याग्नेयाद्यपूर्वमुपस्थाप्यते, तथा प्रकृते क्रीधातुना स्वजन्यापूर्वविशेष उपस्थाप्यत इति गुणभेदेन भिन्नभिन्नतत्तत्क्रयजन्यापूर्वसाधनत्वमेकहायन्यादिद्रव्याणामेवेति नारुण्यं वासःप्रभृतिसाधारणं भवति ।

अत्र दृष्टान्ते व्रीहीणां द्रव्यरूपत्वात् तज्जन्यमङ्गापूर्वमप्रसिद्धमिति स्वप्रकृतिकयागत्रयजन्यापूर्वसाधनत्वं विवक्षितम्, दार्ष्टान्तिके तु क्रयस्य क्रियात्वात्तज्जन्यमङ्गापूर्वमसाधारणं वर्तत इति तदपूर्वार्थत्वमेव विवक्षितमिति विशेषः ॥

एवंच द्रव्यपरिच्छेदद्वारा गुणस्यापि क्रयाङ्गत्वाद्द्रव्यगुणयोरुभयोरपि क्रयाङ्गत्वम्, क्रिया तु द्रव्यमात्रस्यैवाङ्गम्, नतु गुणस्येति विशेषस्तु ग्रहैकत्वाधिकरणसिद्धान्तगोचरः । द्रव्यस्य गुणस्य वा प्रमाणान्तरेण प्रकृतक्रियासाधनतया प्राप्तस्यैवोद्देश्यत्वात्तस्य चोभयस्य च प्राप्तस्यापि भावनाया एककर्मत्वसिद्धान्तभङ्गापत्त्योद्देश्यतयाऽन्वयायोगात् नोभयसंस्कारविधिः संभवतीति द्रव्यमात्रसंस्कार एव "ग्रहं संमार्ष्टी"त्यादौ विवक्षणीयः, नतु गुणसंस्कारोऽपि । नहि मूर्तद्रव्यमात्रसंस्कारविधिरिवामूर्तगुणमात्रसंस्कारविधिः संभवतीति न गुणाङ्गत्वं क्रियायाः कथमपि संभवति । द्वितीयान्तोपपदं विनाऽऽख्यातसमभिव्या-

हारं न कथमपि बोधकमिति द्वितीयान्तपदावगतैकत्वादिसंख्याया विधेयत्वेनान्वयोऽपि न संभवति; एकप्रसरताभङ्गापत्तेरिति ग्रहैकत्वाधिकरणेन गुणस्य द्रव्याङ्गत्वासंभवोऽपि सूचित एव ।

तथाचारुणाधिकरणं न द्रव्याङ्गत्वमारुण्यस्य निषेद्धुं प्रवृत्तं किन्तु स्वापूर्वसाधनक्रयस्योद्देश्यतानिरूपणार्थम् । तत्र चापूर्वसाधनक्रयविशेषे यथा क्रयत्वमपि विवक्षितमनतिप्रसङ्गात्, एवं "ग्रहं संमार्ष्टी"त्यत्र ग्रहत्वमपि विवक्षितमेव । व्रीहीनवहन्तीत्यत्र व्रीहित्वं तु न विवक्षितम् । अवघातस्याज्यादिव्यावृत्तेः, पुरोडाशयागजन्योत्पत्त्यपूर्वसाधनत्वस्योद्देश्यतावच्छेदकतयैव सिध्यावघातस्य यवादिसाधारण्यस्यान्यथासिद्ध्यसंभवात् । अतएव संमार्गस्य चमसादिव्यावृत्तिः । अन्यथा ग्रहपदेन ज्योतिष्टोमापूर्वसाधनमात्रस्य विवक्षायामुक्तदोषो ह्यपरिहरणीय आपद्येत ।

"ग्रहं संमार्ष्टी"त्यत्रैकत्वमपि यदि उद्देश्यतया विवक्ष्यते, तर्हि वाक्यभेद आपद्येत । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमेन ग्रहत्वविशिष्टव्यक्तेः कर्मताद्वारा भावनान्वयवत् एकत्वविशिष्टग्रहस्य कर्मताद्वारा भावनान्वयो हि न भवतीति ग्रहस्यैवैकत्वस्य कर्मताद्वारा पृथगेवान्वयोऽङ्गीकरणीयोऽप्रकृत्यर्थत्वादिति यावच्छक्ति उद्देश्यवाचकानां द्रव्यपदानां इतरव्यावृत्तस्वरूपपरत्वं साङ्कर्यपरिहारश्च यावताऽर्थेन विवक्षितेन भवति तावदर्थस्य वाक्यभेदाद्यभावेऽवश्यं विवक्षा करणीयेति सिद्धम् ।

अनेन चोद्देश्यस्वरूपविचारप्रसंगेन यत्रोद्देश्यबोधकं द्वितीयान्तपदं नास्ति तत्राव्यवहितस्वर्गकामादिपदैरेवोद्देश्यस्वरूपस्य बोध इति निरूपयितुं "सप्तदशारत्निर्वाजपेयस्य यूपो भवती"ति वाक्ये सप्तदशारत्नित्वस्योद्देश्यं वाजपेय एवाव्यवहितत्वादिति पूर्वपक्षय्य सप्तदशारत्नित्वस्य न वाजपेयरूपक्रियाङ्गत्वम्, नहि क्रियायां तत्संभवतीति वाजपेयाङ्गेषु अवतरत् सप्तदशारत्नित्वं यद्यूर्ध्वपात्रमात्राङ्गं स्यात्तर्हि यूपपदवैयर्थ्यम्, षष्ठ्या परम्परासंबन्धापत्तिश्च भवतीति यूपशब्देन यूपकार्यलक्षणया यूपपरिच्छेदद्वारैव तस्याङ्गत्वमिति सिद्धान्तितम् ।

अनेन चाधिकरणेन तदेवोद्देश्यं यत्फलप्रत्यासन्नं यच्चाव्यवहितमिति सूचनाद्यूपस्य साधनत्वं सप्तदशारत्निस्य साध्यत्वमित्यादिविपरीतशङ्का नात्र भवति । एवंच ज्योतिष्टोमादीनां स्वर्गादिकं फलमित्यादिसिद्धान्तोऽपि व्याख्यातः ।

"आनर्थक्यात्तदङ्गेषु" इति सूत्रं पूर्वपक्षानुगुणं सिद्धान्तानुगुणं च योजनाविशेषेण भवतीति तत्र तत्रास्य न्यायस्यो"चै ऋचा क्रियते" इत्यादौ सिद्धान्तेऽप्यनुसंधानं युक्तमेव । एवं च यत्रैतन्न्यायानुसन्धानेन विधेयस्य यद्विषयत्वं सिद्धं तत्र तद्विषयताबोधनार्थं यदि पदान्तरं स्यात्, तर्हि स न्यायोऽनङ्गीकरणीयोऽन्यथा तु तेनैव निर्णय इति न दोषः । एवंच यूपार्थमेव सप्तदशारत्नित्वं न वाजपेयार्थम् ॥

तदयं सङ्ग्रहः—संस्कारविधौ द्रव्यविधौ गुणविधौ च सर्वत्र तत्तज्जन्यापूर्वार्थत्वमेवोद्देश्यतावच्छेदकम् । तच्चापूर्वं क्वचिदुद्देश्यस्य वचनान्तरेण बहुकर्माङ्गत्वेऽवगते बहूनां च कर्मणां संस्काराणां चैकप्रकरणस्थत्वे तज्जन्यसर्वोत्पत्त्यपूर्वार्थत्वं यदि तदितरद्रव्यसाध्यकर्मान्तराण्यपि प्रकरणाम्नातानि वर्तन्ते, यथा व्रीहीनित्यत्र व्रीहिपदेन पुरोडाशयागजन्यापूर्वसाधनस्य लक्षणा । यत्र तु एकस्मिन् यागे बहूनि स्वसजातीयानि द्रव्याणि वर्तन्ते सर्वेषामेकापूर्वसाधनत्वं तत्रापूर्वसाधनतजातिविशिष्टव्यक्तिलक्षणा यथा "ग्रहं संमार्ष्टी"त्यादौ । क्रियोद्देशेन द्रव्यविधौ तु स्वजन्यापूर्वार्थत्वमेव, यदि स्ववाक्येनेतरविलक्षणता स्वयमेव गम्यते । यथा—"अरुणया क्रीणाती"त्यादौ इति ।

तत्र यथा द्रव्योद्देशेन क्रियाविधौ अपूर्वलक्षणा क्रियोद्देशेन द्रव्यादिविधौ चापूर्वलक्षणा, एवं क्रियोद्देशेन क्रियाविधावप्यपूर्वलक्षणा वर्तते नवेति तदपूर्वं किमिति च विशये केचिदत्र मन्यन्ते सत्यं क्रियोद्देशेन क्रियाविधावपि अपूर्वलक्षणा वर्तते इति ।

परंतु तदपूर्वं न क्रियोद्देशेनारुण्यादिविधाविव स्वापूर्वं, किन्तु स्वप्रकरणगतस्वसजातीयसर्वक्रियाजन्यमेव विवक्षणीयम् । एवं चा"भिक्रामञ्जुहोती"त्यत्र जुहोत्यर्थसर्वहोमार्थत्वं अभिक्रमणस्याङ्गीकरणीयम्, नतु अभिक्रमणं स्वसन्निधिपठितप्रयाजहोममात्राङ्गमिति शङ्का भवति ॥

सैवं परिहरणीया—यथा हि "दध्ना जुहोती"त्यादौ प्रकरणेन अग्निहोत्रमात्रस्योपस्थितिर्न जुहोत्यर्थहोमसामान्यस्य । अत एव "व्रीहीनवहन्ती"त्यादौ आग्नेयादिप्रकरणादाग्नेयापूर्वसाधनत्वमेवोद्देश्यतावच्छेदकम् । यदि हि साक्षात्फलसाधनपरमापूर्वसाधनस्य प्रकरणं तर्हि आग्नेयादिमात्राङ्गत्वं प्रकरणात् व्रीह्यवघातादीनां न सिध्येत् । अस्ति हि प्रयाजादीनामाग्नेयादीनां च प्रकरणादङ्गाङ्गिभावः । तथाच परमापूर्वसाधनसमुदायापूर्वसाधनानामाग्नेयादीनामिव आग्नेयोत्पत्त्यपूर्वसाधनानां तत्र समुदायापूर्वजननानुकूलयोग्यताधायकानां वा प्रयाजाद्यङ्गजातानामप्यस्त्येव प्रकरणमिति प्रयाजप्रकरणेनावान्तरप्रकरणाख्येन प्रयाजहोमस्यैवात्रोपस्थितिर्न होमसामान्यस्य ।

तत्र दर्शपूर्णमासप्रकरणेन महाप्रकरणाख्येन समुदायसाध्यपरमापूर्वोपस्थितावपि "व्रीहीन्प्रोक्षती"त्यत्र यथा व्रीहिश्रुतिसहकृतेनाग्नेयादिप्रकरणेनाग्नेयापूर्वसाधनत्वमात्रम्, एवमत्रापि पूर्वोत्तरवाक्यगतप्रयाजानुयाजादिश्रुतिसहकृतेनावान्तरप्रकरणेन प्रयाजहोममात्रस्योपस्थितिः । अत्र च महाप्रकरणादवान्तरप्रकरणस्य प्राबल्यं यत्सूचितं तत् श्रुतिप्रमाणसहकारनिबन्धनमिति श्रुतिपादेऽस्याधिकरणस्य नासङ्गतिः ॥

श्रुतिर्हि त्रिविधाऽभिधात्री विधात्री विनियोक्त्री च। तत्र च विधात्री श्रुतिः लिङाद्यात्मिका । अभिधातृश्रुतिपदाभिधेयधातुप्रातिपदिकयोः विनियोजकश्रुत्यपरपर्यायतृतीयादिविभक्तीनां च सहकारेणैव विनियोगविधिरिति व्यपदिश्यत इति धात्वर्थकरणत्वादिबोधस्थले सर्वत्र प्रातिपदिकमात्रोपस्थितस्यापि ग्रहणं युक्तमिति स्ववाक्यगेन स्वपूर्वोत्तरवाक्यद्वयगतेन वा प्रातिपदिकमात्रेणोपस्थितस्य ग्रहणं युक्तमेव । एवंचावान्तरप्रकरणत्वनिश्चयः पूर्वोत्तरवाक्यगतस्योद्देश्यतादिनिर्णयाधीन इति प्रातिपदिकश्रुतिमपेक्षत इति युक्तमस्याधिकरणस्यास्मिन्पादे विनिवेशः ।

अत्र चावान्तरप्रकरणस्य न विनियोजकत्वं निरूप्यते, किन्तु श्रुतिविनियोगप्रसङ्गेन तस्योद्देश्यस्वरूपविशेषनिर्णायकत्वमात्रमुच्यते, तृतीयपादे तु तस्य विनियोजकत्वमुच्यत इति विवेकः ॥

एवंच द्वितीयपादे प्रथमाधिकरणेन प्रकरणसहकृतलिङ्गेन "बर्हिर्देवसदनं दामी"त्यादीनां दर्शपूर्णमासीयलवनाङ्गत्वनिरूपणमप्युपपन्नम् । एवं चात्रापेक्षितस्य प्रकरणस्य स्वरूपं उभयाकाङ्क्षत्वमेव, न वक्ष्यमाणं "सन्निहितस्य फलवतोऽनवगताङ्गताकपदार्थविषये इतिकर्तव्यतात्वेनापेक्ष्यमाणत्वम् । तथाच वक्ष्यमाणप्रकरणस्य मन्त्रादिसिद्धपदार्थाविषयत्वेऽपि नानुपपत्तिः ॥

यत्तु न्यायप्रकाशे—अभिक्रमणस्य प्रयाजहोमाङ्गत्वमवान्तरप्रकरणादित्युक्तं तदवान्तरप्रकरणस्य द्व्यर्थत्वर्थनिर्णयमात्रार्थमेवात्रापेक्षितत्वादभिक्रमणप्रयाजहोमयोरङ्गाङ्गिभावस्य श्रौतत्वस्य वाक्यीयत्वस्य वाङ्गीकारान्न यथाश्रुतं सङ्गतं भवति । एवं च महाप्रकरणसहकृतश्रुत्या तादृशवाक्येन वाऽभिक्रमणस्य प्रयाजाग्नेयादिसर्वहोमार्थत्वं वोत प्रयाजहोममात्राङ्गत्वं वेति विचारस्यैव युक्तत्वान्न्यायप्रकाशे महाप्रकरणेनाभिक्रमणस्य न दर्शपूर्णमासाङ्गत्वमिति ग्रन्थः प्रयाजादिसाधारणसर्वहोमार्थत्वनिषेधाभिप्राय एव योजनीयः ।

तच्चावान्तरप्रकरणं तत्रैव भवति, यत्राङ्गोद्देशेनाङ्गविधानं न समाप्तम् । यथा प्रकृते—प्रयाजाङ्गे "समानयते जुह्वामौपभृतमि"ति प्रयाजाङ्गविधानस्य न समाप्तिः, किन्तूत्तरत्रापि प्रयाजाङ्गानि कानिचन विधीयन्ते "प्रयाजशेषेण हवींष्यभिघारयति" इत्यादिवाक्यैरित्यत्रावान्तरप्रकरणं वर्तते । "साकांक्षे त्वेकवाक्यं स्यात्" "असमाप्तं हि पूर्वेणेति"च सूत्रकारोप्यमुमेवार्थं सूत्रयति ॥

अङ्गाङ्गविधानस्य समाप्तिविनिर्णयः पुनरपि तदुद्देशेनैवाङ्गान्तरविधायकवाक्यानुपलम्भनिबन्धनः तदनङ्गविध्युपलम्भनिबन्धनो वेति स्वोद्देशेनाङ्गान्तरविधायकवाक्यान्तरं यदि वाक्यचतुष्टयानन्तरं वर्तते वाक्यचतुष्टये च मध्यगते कस्याङ्गमिति निर्णयो न भवति तर्हि तस्य पञ्चमवाक्यपर्यन्तं तदङ्गप्रकरणानुवृत्तिकल्पनादवान्तरप्रकारेण वाक्यचतुष्टयप्रतिपादितार्थानामपि तदङ्गत्वमेव ॥

अत्राधिकरणेऽवान्तरप्रकरणस्योद्देश्यस्वरूपविशेषनिर्णायकत्वमात्रमुक्तमिति मध्यगतवाक्यचतुष्टयप्रतिपादितार्थानामङ्गत्वनिर्णयस्तृतीयपादगतप्रकरणविनियोजकताऽधिकरणेनैव युक्तः । अङ्गसम्बन्धीतिकर्तव्यताकांक्षाया एवा वान्तरप्रकरणत्वात् यावदङ्गोद्देश्यकाङ्गविधिना महाप्रकरणस्य प्रतिबन्धादेवावान्तरप्रकरणस्य तत्र तत्र प्रबलता वर्ण्यते, नतु सन्निध्यादीनां प्रकरणकल्पनयेवावान्तरप्रकरणस्यापि महाप्रकरणकल्पनयेति विनियोजकस्य वाक्यकल्पकस्य प्रकरणस्य द्वैविध्यं न्यायप्रकाशोक्तं चिन्त्योपपत्तिकमेवेत्यामनहोमादावपि प्राकरणिक एव विनियोगो नत्ववान्तरप्रकरणाधीनः ॥

यदि तु पूर्वोत्तरवाक्यगतप्रयाजाद्युद्देश्यस्वरूपबोधकस्य पदस्यात्राप्यनुषङ्गेणाभिक्रमणादीनामिवामनहोमादीनामपि वाक्यीय एव विनियोग इति विभाव्यते, तदावान्तरप्रकरणस्य महाप्रकरणाद्बलीयस्त्वादिसिद्धान्तः सूत्रानुपबद्धो नाङ्गीकरणीयः॥

यत्र तु पूर्वं किंचिदुद्दिश्य किमप्यङ्गं विधाय मध्ये तदनङ्गानि कानिच विधाय पठित्वा वा प्रथममेवानूद्य पुनरङ्गान्तरं विधीयते न वा विधीयते तत्र तु नावान्तरप्रकरणेन विनियोगः प्रथमवाक्यश्रुतस्यैवोद्देश्यस्यानुषङ्गो वेति "संदिग्धे तु व्यवायाद्वाक्यभेदः स्या"दिति निरूपयन्सूत्रकारः उपवीतं न सामिधेन्यङ्गमिति बोधयति ।

उपवीतविधायकं हि वाक्यं "उपव्ययते देवलक्ष्ममेव तत्कुरुते" इति । तस्य वाक्यस्यानन्तरं हि "अन्तरानूच्यं स देवत्वाये"ति सामिधेनीगुणा आम्नायन्ते । पूर्वमपि "पञ्चदश सामिधेनीरनुब्रूयात्" इति सामिधेनीगुणा विहिताः । एवमपि "पञ्चदश सामिधेनीरनुब्रूया"दिति वाक्यस्यानन्तरं निविन्नाम्नां मन्त्रविशेषाणां सामिधेन्यनङ्गानां "एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्ये"ति काम्यसामिधेनीकल्पानां च विधानेन व्यवधानं वर्तत इति नोपवीतं सामिधेन्यङ्गमिति युक्तम् ।

गोदोहनादिभिः काम्यैरिव काम्यसामिधेनीकल्पैर्यद्यपि न प्रकरणस्य विच्छेदः संभवति; तथापि निविन्मन्त्रैस्तद्विच्छेदः संभवत्येव । पूषानुमन्त्रणमन्त्रानन्तरं दर्शपूर्णमासाङ्गानां बहूनामिव निविन्मन्त्रानन्तरं बहूनां सामिधेन्यङ्गानां पाठाभावान्न सामिधेनीप्रकरणानुवृत्तिकल्पनं संभवति ।

भाट्टदीपिकायां तु—अन्तरानूच्यमिति अनुवचनसामान्यस्यैव गुणो विहितः नतु सामिधेन्यनुवचनस्येति नोपवीतानन्तरं सामिधेनीगुणाम्नानमिति यद्वदन्ति तदिदं सूत्रभाष्यादिमतविरुद्धम् । यथाहि—"समानयते जुह्वामौपभृतमि"ति प्रयाजानुयाजोभयाङ्गविधानमुपक्रम्यान्ततः "प्रयाजशेषेण हवींष्यभिघारयती"ति प्रयाजहविरङ्गमात्रोद्देशेऽपि प्रयाजाङ्गत्वमभिक्रमणस्यैवं सामिधेन्यनुवचनसाधारणानुवचनसामान्यगुणविधावपि प्रकरणानुवृत्तिरुपपन्नैवेति न दोषः ॥

अयमत्र निष्कर्षः—यत्र स्वोद्देश्यस्यापूर्वव्यभिचारः यथा व्रीह्यादीनां तत्र व्रीह्यादिपदेनापूर्वसाधनत्वं लक्षणीयम्। तत्र च प्रकरणं तात्पर्यग्राहकम्। तच्चापूर्वं प्रधानापूर्वं, परमापूर्वं, अङ्गापूर्वमिति निर्णये व्रीह्यादिश्रुतिरप्युपयुज्यते। तच्चोद्देश्यं प्रातिपदिकार्थो धात्वर्थो वेति न विशेषः। सर्वथाऽपूर्वाङ्गत्वमेव द्रव्यगुणक्रियाणामङ्गीकरणीयम्।

यत्र तूद्देश्यमपूर्वार्थमेव तत्रान्तरेणापि प्रकरणमुद्देश्यपदेनैवापूर्वसाधनत्वं लक्ष्यते। यथा—"यस्य पर्णमयी जुहू"रित्यत्र जुहूपदेनापूर्वसाधनत्वमव्यभिचरितक्रतुसंबन्धाल्लक्ष्यते। इयान् विशेषः—प्रकरणानुप्रवेशे उद्देश्यत्वं विशेषे पर्यवसत्यन्यथा तु सामान्ये। 'अग्निक्रामं जुहोती' त्यत्र होमस्यापि प्रक्षेपरूपस्यापूर्वव्यभिचारित्वादवान्तरप्रकरणेनोद्देश्यविशेषो नियम्यत इति युक्तमेव।

तथाच "वारणो यज्ञावचर" इत्यादौ यज्ञस्य देवतोद्देश्यकद्रव्यत्यागरूपस्यापूर्वाभिव्यभिचारित्वान्न प्रकरणानुप्रवेश इति सर्वयज्ञार्थान्येव वारणादीनि। एवंच "वारणो यज्ञावचर" इत्यादीनामाधानप्रकरणे पठितानामप्याधानस्यायज्ञत्वादनारभ्याधीतवाक्यसदृशमेव "वारणो यज्ञावचर" इत्यादि वाक्यम्। तत्रापि यद्याधानाङ्गत्वं पवमानेष्टीनां पवमानेष्ट्यङ्गसन्दंशपतितत्वं वाऽस्य वाक्यस्य स्यात्तदाऽनर्थक्यात्तदङ्गेष्विति न्यायेनाग्निक्रमणन्यायेन वा विशेषे नियमनं संभवेत्, नचैतदस्ति। अतोऽभिक्रमणन्यायाभावाद्वारणादीनां जुह्वादीनामिव सर्वयज्ञार्थत्वमेवेति सति प्रकरणाद्यनुप्रवेशे उद्देश्यस्य नियमनमन्यथा तु नेति सिद्धम्॥

तत्र प्रकरणमिव लिङ्गक्रमावप्युद्देश्यस्वरूपविनिर्णयेऽपेक्ष्येते एव। अतएव "वार्त्रघ्नी पूर्णमासेऽनूच्येते" "वृधन्वती अमावास्याया"मित्यत्र पूर्णमासपदस्य न यागत्रयपरत्वं किंतु पूर्णमासाङ्गाज्यभागपरत्वं पूर्णमासकालिकाज्यभागपरत्वं वेति वार्त्रघ्नीवृधन्वत्योर्न दर्शपूर्णमासाङ्गत्वम्। एवंच "वार्त्रघ्नी पूर्णमासेऽनूच्येते" "वृधन्वती अमावास्याया"मिति वाक्ये केवलं व्यवस्थामात्रं बोधयत इति सिध्यति।

तथाच श्रुतिप्रमाणं स्वापेक्षया दुर्बलानामपि प्रमाणानां लिङ्गवाक्यप्रकरणस्थानसमाख्यानामवोधेनैव सत्यामुपपत्तौ प्रवर्तत इति लिङ्गवाक्यप्रकरणक्रमादिप्रमाणानुप्रवेशे सर्वत्र व्यवस्थैव नाव्यवस्थेति उद्देश्यस्वरूपमवगतं सामान्यरूपमेव लिङ्गाद्यभावे ग्रहीतव्यमिति करिष्यमाणसर्वहोमाङ्गानां हस्तावनेजनादीनां करिष्यमाणाङ्गप्रधानसाधारणसर्वकर्मार्थत्वमेव नानन्तराव्यवहितकर्मार्थत्वमात्रम्। संस्कृतस्य हि उत्तरत्र विनियोगोऽपेक्षित इति निमित्तेन कल्प्यमानमुत्तरं कर्मानन्तरमङ्गं वा प्रधानं वेति निर्णये न किमपि नियामकं वर्तत इति सर्वार्थत्वमेव युक्तम्॥

"आग्नेयं चतुर्धा करोती" त्यत्र तु अग्निदेवताकपुरोडाशत्वमेवोद्देश्यतावच्छेदकमिति तस्यान्यस्याभावात् व्रीहिपदेन पुरोडाशयागजन्यापूर्वसाधनत्वमिवात्रापि आग्नेययागजन्यापूर्वसाधनपुरोडाशत्वमेवोद्देश्यतावच्छेदकमिति नैन्द्राग्नपुरोडाशस्यापि चतुर्धाकरणमापद्यत इति तत्रापि व्यवस्थैव।

यद्यपि नात्र प्रकरणाद्यनुप्रवेशः, तथापि अपूर्वाव्यभिचार्याग्नेयत्वस्य यज्ञत्वस्येवान्यसाधारणत्वाभावान्नाव्यवस्थेति सर्वमनवद्यमिति श्रौते विनियोगेऽपेक्षितं व्यवस्थितं च प्रकरणाद्यनुप्रवेशतदभावाभ्यां सिद्धमिति श्रुतेरङ्गत्वप्रमाणतोपपन्नैव॥

यत्तूद्देश्यं क्रत्वादिकमर्थज्ञानमन्तरा न संभवति, तदर्थज्ञानं क्रतुसाधनमिति श्रुत्याऽबोधितमपि क्रतोरङ्गमिति स्वगतक्रतुसंपादनयोग्यतात्मकेन लिङ्गेन क्रतोरङ्गमिति श्रुतिरिव लिङ्गमप्यङ्गत्वे प्रमाणम्।

लिङ्गलक्षणं तु अङ्गत्वघटकपरोद्देश्यताकृतिकारकतयोरन्यतरपदकल्पनानुकूलपदपदार्थनिष्ठयोग्यतेति भाट्टदीपिकायां खण्डदेवाचार्या लिखन्ति। "सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते" इति वचनस्याप्ययमेवाशयः।

एवं चार्थज्ञानं क्रतुसाधनमिति जानन्पुरुषः अर्थज्ञानेन क्रतुं संपादयेदिति विधिं कल्पयित्वैवार्थज्ञानं क्रतोरङ्गमिति निश्चिनोतीति पदार्थगतयोग्यतायां लक्षणसमन्वयः।

पदगतयोग्यता तु नार्थज्ञानवत्स्वत एव स्वस्य कर्मविशेषाङ्गत्वमर्थविशेषबोधनद्वारा पदानां क्रत्वङ्गत्वं गमयितुमीष्टे। तथाहि—"बर्हिर्देवसदनं दामी"ति मन्त्रो हि लवनं प्रकाशयन् लवनस्याङ्गमिति निर्णयो हि न लिङ्गमात्रेण भवति। नह्यर्थज्ञानं विनेव क्रतुः मन्त्रं विना लवनं न भवतीति लवनस्वरूपे मन्त्रस्यानुपयोगादपूर्वसाधनलवनार्थत्वमङ्गीकरणीयम्। तच्चापूर्वसाधनलवनप्रकाशनेनैव भवतीति दामिपदेनापूर्वसाधनलवनस्मरणार्थं प्रकरणानुप्रवेशोऽवश्यमूरीकरणीय इति दर्शपूर्णमासादिप्रकरणेन सामान्यतो दर्शपूर्णमासाङ्गतयाऽवगतस्य लवनमन्त्रस्य लवनप्रकाशनद्वारा तदङ्गत्वनिर्णयो लिङ्गप्रकरणाभ्यां द्वाभ्यामेव भवतीति तत्रोभयस्य समप्राधान्यस्य प्रकरणप्रधानतायां वा बलाबलाधिकरणेन निरूपयिष्यमाणेन विरोधेनासंभवात् विशेषविषयलिङ्गप्रधानताया युक्तत्वाच्च प्रकरणादिसहिता पदगता योग्यता मन्त्राणां दर्शपूर्णमासाद्यङ्गतां बोधयतीति पदगतयोग्यतायामपि लक्षणसमन्वयः।

तथाच लवनादिप्रकाशकस्य मन्त्रविशेषस्य क्रतुविशेषप्रकरणे समाम्नातस्य योग्यतां दृष्ट्वा पुरुषः कल्पयति—अनेन मन्त्रेण दर्शपूर्णमाससंबन्धि लवनं प्रकाशयेदिति विना विनियोगविधिमिव उद्देश्यवाचकपदं अङ्गत्वबोधकतृतीयादिविभक्तिं वा कल्पयन् मन्त्रो लिङ्गमात्रेण क्रतुविशेषस्याङ्गं श्रुतिकल्पनाद्वारा भवतीति सिद्धम्।

लिङ्गं चात्र "सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते" इति वचनाद्धर्म्यविनाभूतः शक्तिविशेष एवेति कदाचित्कार्थविशेषप्रतिपादनशक्तिर्मन्त्रगता न लिङ्गपदाभिधेयेति मुख्यार्थ एव मन्त्रलिङ्गं विनियोजकं न गौणार्थे इत्यपि सिद्धमेव ।

पदानां हि शक्तिर्लक्षणा गौणी चेति वृत्तित्रयमर्थप्रतिपादनार्थमपेक्षितम् । तत्र लक्षणावृत्तिगौणवृत्तिस्थलेऽपि शक्त्यनुसंधानं प्रथमतोऽपेक्षितमेवेति शक्यार्थप्रकाशनेनैव मन्त्राणामङ्गत्वं मन्त्रलिङ्गवशेन । यदितु श्रुत्या लिङ्गानपेक्षया लिङ्गबाधेन स्वशक्येतरार्थे मन्त्राणां विनियोगः, तर्हि तत्र गौणार्थ प्रत्यपि मन्त्रोऽङ्गमेव, परंतु तदङ्गत्वं श्रुत्यैव न मन्त्रलिङ्गेनेति न विरोधः ।

यथैन्द्रमन्त्रस्य "ऐन्द्रया गार्हपत्यमुपतिष्ठते" इति गार्हपत्योपस्थाने श्रुत्या विनियुक्तस्य गौण्या लक्षणया वा इन्द्रादिपदेनापि गार्हपत्यबोधकस्यैन्द्रलिङ्गबाधेन श्रुत्या गौणेन्द्ररूपगार्हपत्याङ्गत्वम् ।

"बर्हिर्देवसदनं दामी"ति मन्त्रस्य तु श्रुत्या गौणबर्हीरूपोलपराजौ विनियोगाभावान्न लिङ्गमात्रेण गौणार्थाङ्गत्वं युक्तम् ।

ऐन्द्रमन्त्राणां हि लिङ्गेनैन्द्रीति तद्धितश्रुत्या चेन्द्रप्रकाशनार्थत्वमेवावगम्यते । यदि ह्यैन्द्रमन्त्राणां नेन्द्रदेवताप्रकाशनार्थत्वं स्यात्, अग्निदेवताप्रकाशनार्थत्वमेव स्यात्, तर्हि ऐन्द्रीत्यनुवाद एव नोपपद्येत । तथाचैन्द्रीत्युपक्रमस्थानुवादानुसारेण लिङ्गोपष्टम्भेनैव विनियोगवाक्यस्य प्रवृत्तत्वात् तदविरोधेनैवात्र विनियोगो वर्णनीय इति ऐन्द्रया इन्द्रमुपतिष्ठते इत्युद्देश्यवाचकपदाध्याहारेणैव वाक्यार्थबोधो वर्णनीयः । एवं गार्हपत्यमुपतिष्ठत इत्यंशेऽपि आग्नेय्येति विधेयाध्याहारेण वाक्यार्थो वर्णनीय इति वाक्यभेद एवात्र विवक्षितः । यदि त्वेकवाक्यत्वमेवात्राङ्गीकरणीयमित्याग्रहः, एवमपि गार्हपत्यमिति द्वितीयायाः सामीप्यलक्षणामङ्गीकृत्य गार्हपत्यसमीपे स्थित्वेन्द्रमुपतिष्ठेत इत्येवात्र वाक्यार्थ इति गौणार्थे मन्त्राणां कुत्रापि न विनियोग इति शङ्काऽत्र समापतति ।

इदमत्र समाधानम्—सत्यं "ऐन्द्रया गार्हपत्य"मित्यत्रैन्द्रीति तद्धितेन मन्त्रस्येन्द्रप्रकाशनार्थत्वमवगतं, नचैतदुपक्रमावगतं पाश्चात्यगार्हपत्योपस्थानविनियोगस्य विरुद्धम् । नहि "कदाचन स्तरीरसी"ति वाक्यगतेन्द्रादिपदानां मुख्यवृत्त्या इन्द्रप्रकाशकत्वमपि वयं वारयामः । मुख्यवृत्त्या इन्द्रप्रकाशकस्यैव तस्य मन्त्रस्य गौण्या वृत्त्याऽग्निप्रकाशनार्थत्वमेव वयं वदामः । गौणार्थविवक्षा हि मुख्यार्थानुपपत्त्यैव भवतीति मुख्यवृत्त्यनुसन्धानमप्यपेक्षामहे । एवंचास्य मन्त्रस्य गार्हपत्ये विनियोगो नैन्द्रीत्यनुवादाद्यनुपपत्त्या न संभवति । एतेन—"प्रयाजशेषेण हवींष्यभिघारयती"त्यत्र प्रयाजशेषत्वानुवादानुपपत्त्या प्रयाजशेषस्यान्यत्र विनियोगेन प्रयाजशेषं हविःषु अभिघारयतीति लक्षणाश्रयणवदत्रापि लक्षणाश्रयणमिति—प्रत्युक्तम् ॥

लिङ्गमात्रेणेन्द्रे विनियोगस्तु प्रबलश्रुतिविरोधान्न संभवति । यदि हि श्रुतितः पूर्वमेव लिङ्गेन श्रुतिमनपेक्ष्य विनियोगः क्रियेत, तर्हि कथमपि गार्हपत्यमिति द्वितीया सामीप्यं लक्षयेत्, नत्वेतदस्ति । शाब्दबोधे हि योग्यताज्ञानं न कारणं, किंतु योग्यतानिश्चयस्य प्रतिबन्धकत्वमात्रमिति अयोग्यतानिश्चयाभाव एव कारणमिति श्रुतिर्लिङ्गज्ञानं पुरोधायैव न विनियोजिका । तदुक्तं भामत्याम्—"लिङ्गज्ञानं पुरोधाय न श्रुतेर्विनियोक्तृता । श्रुतिज्ञानं पुरोधाय लिङ्गं तु विनियोजकमि"ति ॥ तथाच श्रुतिविरुद्धा स्मृतिरिव विनियोजकश्रुतिविरुद्धं लिङ्गं न प्रमाणमिति न दोषः ॥

अत्र भामतीकाराः—द्वितीयातृतीयाश्रुती हि कारकविभक्तितया क्रियां प्रति प्रकृत्यर्थस्य कर्मकरणभावमवगमयतः । क्रियां प्रति कर्मणः शेषित्वं करणस्य च शेषत्वमिति पदान्तरानपेक्षं विनियोगः श्रुतिमात्राद्गम्यते । सोऽयं सामान्यतोऽवगतो विनियोगः पदान्तरवशाद्विशेषेऽवस्थाप्यते । सोऽयं विशेषणविशेष्यभावलक्षणसंबन्धो वाक्यगोचर इति—वदन्ति ।

एवंच स्मृत्यादिगतया तृतीयादिविभक्त्या विनियोगोऽवगम्यमानः वाक्येन विशेषे व्यवस्थाप्यमानः तदैवास्माकमादरणीयो यदा विनियोगविधेः स्मृतिरूपायाः प्रामाण्यमपि निश्चितं स्यात् । तथापि स्मार्तविनियोगोऽप्रामाण्यशङ्काकलङ्कितः निश्चितप्रामाण्यकमन्त्रलिङ्गेन विरुध्यमानो न मन्त्रलिङ्गं बाधितुमीष्टे । एवंच स्मार्तश्रुतिमन्त्रलिङ्गयोर्विरोधे मन्त्रलिङ्गमेवादरणीयं न स्मार्तश्रुतिः । अत्रच सर्ववेष्टनस्मृताविवाप्रामाण्यं बाधितार्थत्वरूपं वाऽननुष्ठानलक्षणं वेत्यन्यदेतत् ॥

इदं च मन्त्रलिङ्गं प्रमाणान्तरेण क्रत्वङ्गतया निर्णीतार्थबोधकयत्किंचित्पदवत्त्वे सति क्रतुसमवेतार्थबोधकांशान्तरेणापि क्रतुसमवेतमेवार्थं प्रकाशयति, स्वघटकपदार्थस्य कस्यापि प्रमाणान्तरेण क्रतुसमवेतत्वेऽनवगते तु स्वयमेव स्वपदार्थं क्रतुसमवेतं प्रापयत्तं प्रकाशयति ।

यथा—"अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहे"ति मन्त्रोऽग्निहोत्रहोमेऽग्निदेवतां प्रापयति तां प्रकाशयति च ।

"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी"त्यादिषु क्रतुसमवेतं निर्वापमेव प्रकाशयति तदसमवेताश्विसवित्रादिपदैरपीति नात्र मन्त्रलिङ्गेनाग्नेययागेऽश्विसवित्रादीनामपि प्रापणं विवक्षितम् ।

मन्त्रलिङ्गेन तत्रैव स्वपदार्थस्य क्रतुसमवेतत्वमपि प्राप्यते यत्र क्रतोरपेक्षा वर्तते इति नादृष्टार्थानां जपमन्त्राणामपि पदार्थप्रापकत्वम् । येषां तु मन्त्राणां क्रतुसमवेतार्थबोधकत्वं मुख्यया वृत्त्या न संभवति समाख्यादिभिर्दुर्बलप्रमाणैरप्य-

न्यत्र संबन्धेन मुख्यया वृत्त्या तत्संभवस्तेषां प्रकरणादिबाधेनाप्युत्कर्ष एवाङ्गीकरणीयो यथा पूषानुमन्त्रणमन्त्राणां पूषदेवताकयागे समुत्कर्षः।

गौणार्थेऽपि मन्त्राणां विनियोगे हि पुष्यतीति पूषेति कथमपि वृत्त्यन्तरेण पूषादिपदानामप्यग्न्यादिबोधकत्वोपपत्त्या तदुत्कर्षसिद्धान्तोऽप्यसङ्गतः स्यात्। ये तु मन्त्राः श्रुत्याऽन्यत्र विनियुक्तास्तेषां तु गौण एवार्थे विनियोग इत्युक्तमेवेत्यधुनातनानां अन्यत्र विनियुक्तमन्त्रमुख्यार्थवशेनापि क्वापि क्वापि क्रियमाणा धर्माधर्मव्यवस्था न प्रमाणमिति सिद्धम्॥

अयं च गौणार्थे मन्त्रविनियोगः श्रौतोऽपि लिङ्गबाधेन तत्रैव भवति, यत्र केवलमन्यार्थस्यान्यविनियोगमात्रं विवक्षितम्, यथा—"ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यादौ। इदं हि वाक्यं ऐन्द्रीमन्त्रस्य गार्हपत्योपस्थाने विनियोगमात्रमवगमयति, नतु मन्त्रविशिष्टगार्हपत्योपस्थानम्।

यत्र तु लिङ्गाद्यबाधेन कालादिविधिः कोऽपि संभवति, तत्र तु न गौणार्थे विनियोगः। यथा—"हविष्कृदेहीति त्रिरवघ्नन्नाह्वयती"त्यत्र हविष्कृन्मन्त्रस्य लिङ्गप्राप्ताह्वानाङ्गस्य नावघाते विनियोगः, किंतु मन्त्रकरणकाह्वानकालमात्रविधिः।

यस्य हि मन्त्रस्य प्रकृते कर्मणि स्वलिङ्गवशेनानेकाङ्गत्वं प्रसक्तम्, यस्य वा प्रकृते कर्मणि कथमपि दृष्टद्वारेण नोपयोगः क्रियान्तरे च सामान्यसंबन्धबोधकसमाख्यादिकं नास्ति, तस्यैव प्रकृत एव कर्मणि इतरपरिसंख्ययाऽन्यथा वोपयोगः श्रुत्या क्रियते। यथा—"इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति अश्वरशनाग्रहणमात्रे विनियोगः। ऐन्द्र्या गार्हपत्यमित्यत्रापि चयनसंस्कार्यस्य गार्हपत्यस्यैवोपस्थानं न तदसंबन्धस्येन्द्रस्येति भाट्टदीपिकायां व्यक्तम्। एवंचावश्यकर्तव्यवैधाह्वानप्रकाशकतयैव मन्त्रपाठोपपत्तौ तद्बाधेनावघाते मन्त्रविधिरयं न सङ्गतः। अवघ्नन्निति शतृप्रत्ययेन कालोपलक्षणेन त्रिरभ्यासमात्रविधानेनैव "हविष्कृदेहीति त्रिरवघ्नन्नाह्वयती"ति विधिश्चरितार्थः।

"उत्तिष्ठन्नन्वाहाग्नीदग्नीन् विहरेति" वाक्यमपि नोत्थाने अग्नीन्विहरेतिमन्त्रस्य विनियोजकम्, किंतु मुख्येऽग्निविहरणादावेवेति। इयान् विशेषः—"हविष्कृदेहि" इति वाक्ये कालोऽपि प्राप्त इति अभ्यासमात्रविधिरत्र कालविधिरिति।

"व्रतं कृणुतेति वाचं विसृजती"त्यादावपि लिङ्गाबाधेनैव विनियोगः, इतिकरणस्य मन्त्रस्वरूपमात्रपरत्वमङ्गीकृत्य संसर्गविधया कालपरत्वं चाङ्गीकृत्य लिङ्गाबाधस्यैव युक्तत्वात्।

"प्रणीताः प्रणेष्यन् वाचं यच्छति तां सहविष्कृता विसृजती"ति वाक्ये तु हविष्कृन्मन्त्रस्य वाग्विसर्गे विनियोगः प्रतीयमानोऽपि नाङ्गीक्रियते। अत्र तृतीयाया इत्थंभूतलक्षणार्थत्वमङ्गीकृत्य हविष्कृन्मन्त्रपाठपर्यन्तं वाग्यमः करणीय इत्यर्थो युक्तः इति वाग्यमापेक्षितावधिसमर्पकत्वमेव युक्तमिति सत्यां गतौ लिङ्गबाधो न युक्तः।

ऐन्द्रीवाक्ये तु ऐन्द्र्या इति तृतीयायाः करणत्वमेवार्थः। उपतिष्ठत इति आत्मनेपदेन हि "उपान्मन्त्रकरण" इति सूत्रप्रापितेन मन्त्रकरणकोपस्थानप्रतिपादनेन हि तत्रापेक्षितं करणमेव नावध्यादिकं किमपीति लिङ्गबाधो गत्यन्तराभावादङ्गीक्रियते। एवंच तृतीयायाः करणत्वं इत्थंभूतलक्षणत्वं चोभयमप्यर्थश्चेदपि करणत्वस्य बोधोऽपेक्षितश्चेत्करणत्वमेवार्थ इति सिद्धम्।

"सूक्तवाकेन प्रस्तरं प्रहरती"त्यत्र तु "सूक्तवाक एव याज्या" इति वाक्यशेषात्सूक्तवाकस्य यागसाधनत्वावगमात् अपेक्षितसाधनताबोधकत्वमेव युक्तम्। एवंच वाक्यशेषानुसारेण प्रहरतिपदेनापि मान्त्रवर्णिकदेवताकल्पनया होम एव लक्ष्यत इति न दोषः। वाक्यशेषावगतसाधनतापरत्वमप्यत्र पूर्ववन्नैव लिङ्गबाधाभावान्न दोषाय। अत्र हि लिङ्गेन श्रुतेरुपष्टम्भ एव न श्रुत्या लिङ्गस्य बाध इति लिङ्गाबाधार्थं बहु यतितव्यमिति सिद्धम्॥

एवंच सूक्तवाकमन्त्राणां श्रुतिविनियुक्तानामपि यथालिङ्गं विभज्य विनियोगोऽपि व्याख्यातः। सूक्तवाक्य एव याज्येतिवाक्यशेषेण सूक्तवाकस्य यागसाधनत्वं यत्प्रतिपादितं तत्सति संभवे दृष्टविधयैवाङ्गीकरणीयमिति लैङ्गिकेष्टदेवताप्रकाशनार्थत्वमेवाङ्गीकरणीयम्। यथा प्रहरण एव विनियोगात् न प्रहरणाभावे सूक्तवाकस्यानुष्ठानं तथा विभज्य इष्टदेवताप्रकाशनार्थं विनियोगाल्लैङ्गिकेष्टदेवताप्रकाशनाभावेन न तस्यानुष्ठानम्। सूक्तवाकशब्दो हि सुष्ठु वक्तीति व्युत्पत्त्या इष्टदेवताप्रकाशकमन्त्रविशेषे यौगिको न तु तत्समुदाये रूढ इति सूक्तवाकेनेति वाक्ये नावयवे लक्षणा॥

यस्तु सूक्तवाकमधीयीतेत्यादौ सूक्तवाकशब्दस्य मन्त्रसमुदाये प्रयोगः, स तस्य तत्र निरूढलक्षणाङ्गीकारादुपपद्यते।

एवंच सत्यामबाधेनोपपत्तौ न बाधो युक्त इति सूक्तवाकेनेत्यत्र यथा श्रुतिलिङ्गाभ्यां व्यवस्था, एवं काम्ययाज्यानुवाक्याकाण्डसमाख्याविषयाः ये काम्ययाज्यानुवाक्याक्रमेण पठिताश्चैन्द्राग्न्यादिप्रकाशकानां तेषां मन्त्राणामपि क्रमसमाख्यानुसारेणैव लिङ्गेन व्यवस्था न तद्बाधेनेति श्रुतिलिङ्गाभ्यामिव लिङ्गक्रमसमाख्यानैरपि व्यवस्था भवत्येव।

लिङ्गानपेक्षं यस्या विनियोजकत्वं तया प्रबलया श्रुत्यैव लिङ्गाबाधे सामान्यसंबन्धबोधार्थमपेक्षितयोः क्रमसमाख्ययोः कथं लिङ्गेनाबाधे सति विरोधः। बलाबलाधिकरणेऽपि विरोधेनैकस्याप्रामाण्येऽवश्यं वक्तव्य एव दुर्बलस्य बाध्यत्वं प्रबलस्य बाधकत्वं चोक्तमिति न विरोधः।

नहि केवलं लिङ्गं विनियोजकम् । मन्त्रगतप्रयोजनाकाङ्क्षा तु सर्वमन्त्राणां वाचस्तोमे विनियोगान्नास्त्येव । मन्त्रलिङ्गस्य हि प्रकरणादिसहकारेण मन्त्रपाठकालोत्पन्नमन्त्रगतप्रयोजनाकाङ्क्षाविलयामनुपस्थितं वाक्यमिति सामान्यसंबन्धबोधकत्वं न वाक्यस्य, किंतु प्रकरणस्यैवेति दुर्बलस्यापि प्रकरणस्य वाक्यप्रमाणोपस्थितेः पूर्वमेव लिङ्गोपष्टम्भान्न लिङ्गसामान्यसंबन्धबोधकस्य प्रकरणस्य वाक्येन बाधः ॥

दुर्बलप्रमाणं प्रबलाश्रितं प्रबलमेव । तदुक्तम्—"अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः । दुर्बलैरपि बाध्यन्ते प्रबलैः पार्थिवाश्रितैः" इति ॥ वाचस्तोमे विनियोगो हि सामान्यतो वाक्यीयः तेषामेव मन्त्राणाम् लिङ्गेन तु मन्त्रविशेषाणामिति भिन्नविषयत्वात् । मन्त्रलिङ्गाद्ब्राह्मणवाक्यबलीयस्त्वमपि न विरुद्धम्; समानविषयवाक्यलिङ्गविषयत्वात्तस्य नियमस्य ॥

सामान्यसंबन्धबोधकस्य प्रकरणस्य स्वतन्त्रवाक्याबाध्यत्वमत्र निरूपितम्, न स्वतः वाक्यादिकल्पनया विनियोजकस्य प्रकरणस्येति न बलाबलाधिकरणविरोधो भविष्यति ॥

"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्य"मित्यत्र समानस्वभावानां श्रुतिलिङ्गादीनामेव बलाबलविचारः कृतो न विषमस्वभावानाम् । एतेन पूषानुमन्त्रणमन्त्रादौ समाख्यया प्रकरणबाधोऽपि व्याख्यातः । प्रबलविनियुक्तस्यापि दुर्बलेन विनियोगो भिन्नविषयत्वे भवत्येवेति मन्त्रगतप्रयोजनाकाङ्क्षानिवर्तकत्वेन समानविषययोः प्रकरणसमाख्ययोः पूषानुमन्त्रणमन्त्रस्य प्रबलोपष्टम्भात्समाख्यया पूषयागे विनियोगेन प्रकरणस्य बाध उपपन्न एव ।

एवंच विनियुक्तविनियोगस्य भिन्नविषयत्व एव संभवात् "आग्नेय्याऽऽग्नीध्रमुपतिष्ठते" इत्यत्र स्तोत्रादिविनियुक्तस्य प्रकृताप्रकृतमन्त्रसामान्यस्याग्नेयपदेन ग्रहणं प्राप्तमपि न वयमूरीकुर्मः । उपस्थानजन्यापूर्वार्थत्वं न मन्त्रसामान्ये प्राप्तं, किंतु प्रकृतानामेव स्तोत्रादिकार्यान्तरे विनियुक्तानामिति नाप्रकृतानामपि मन्त्राणां ग्रहणम् ।

एवंच मन्त्रलिङ्गमिव ब्राह्मणवाक्यमपि प्रकरणाबाधेनैव प्रवर्तत इति वाचस्तोमविनियोजकवाक्येन क्रमसमाख्यादिबाधो न भवत्येवेति इन्द्राग्निमन्त्राणां लिङ्गक्रमसमाख्यानैरेव व्यवस्थेति सिद्धम् ॥

"आग्नेय्याऽऽग्नीध्रमुपतिष्ठत" इति वाक्य इव चतुरो ब्राह्मणान्प्राशयेदित्यादावपि प्रकृतानामेव ब्रह्मौदनप्राशनादौ विनियोगो विवक्षितः ॥

"आत्रेयाय प्रथमं हिरण्यं ददाती"त्यत्र तु न ऋत्विज एवेति नियमः । नहि ऋत्विज आत्रेयत्वं नियमेन प्राप्यते । न ह्यात्रेय एक ऋत्विक् संपादयितव्य इति विधिरस्ति । सर्वथा चैकविषयत्वे वाक्येन प्रकरणस्य वाक्येन क्रमसमाख्ययोर्वा बाधायोगात् लिङ्गक्रमसमाख्यानैः श्रुतिलिङ्गाभ्यां चेन्द्राग्निमन्त्रादौ सूक्तवाके च व्यवस्था या कृता सोपपद्यत एव ॥

सूक्तवाके यो विभज्य विनियोगः कृतः स इष्टदेवतानां प्रकृतकर्मार्थत्वमपि प्रमाणान्तरसिद्धमिति कृत्वैव । यत्र मन्त्रेषु प्रमाणान्तरेण स्वप्रकाशितदेवतेतरदेवतानां प्राप्तिस्तेषामुच्चारणं केवलमदृष्टार्थं, यदि तु प्रमाणान्तरेण स्वेतरदेवताया अप्राप्तिस्तत्र मन्त्रलिङ्गेनैव देवताया अपि कल्पनमिति पूर्वमुक्तमिति मन्त्रसमुदायसमाख्यादीनामपि बाधेनैव लिङ्गेन विनियोगो मन्त्रार्थप्रकाशनद्वारेण यदि भवति तर्हि तथैवाङ्गीकरणीयमिति भक्षेहीत्यादिभक्षानुवाकमन्त्राणामपि ग्रहणावेक्षणादिप्रापणपूर्वकं तदर्थप्रकाशनेनैव भक्षणे विनियोगोऽङ्गीकरणीयः ।

यद्यपि ग्रहणावेक्षणादिप्रतिपादकानामप्यंशानां एकवाक्यतयैव भक्षण एवाविभज्य विनियोगोऽपि भवति; तथापि स्वतो निराकाङ्क्षयोराख्यातयोरेकवाक्यताकल्पनं न युक्तम् ॥

"स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि" "तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेधः सुमनस्यमानः" इति मन्त्रयोः सत्यपि विभज्यमानसाकाङ्क्षत्वेऽख्यातभेददर्शनात् न वाक्यैकत्वमिति विभज्य विनियोग इति हि वक्ष्यते । एवंच तत्रैवैकवाक्यताऽभावे निराकाङ्क्षयोः कथमेकवाक्यता ।

विध्यर्थवादयोस्तु स्वतो निराकाङ्क्षत्वाभावात् यथा पदैकवाक्यता न तथाऽर्थवादयोर्विध्योर्मन्त्रयोर्वा सा भवति । एवंच विध्यर्थवादयोरप्याख्यातभेदसत्त्वेऽपि भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यादेकवाक्यतायामपि मन्त्रयोः सा न भवति ।

मन्त्रलिङ्गेन च तस्यैव स्वार्थस्य क्रतुसमवेतत्वकल्पनम्, यस्योपादेयत्वम्, यथा द्रव्यदेवतयोर्ग्रहणावेक्षणादीनां वा । पुरुषकृतिसाध्यत्वरूपमुपादेयत्वं स्वतः स्वव्यापारद्वारा वेति देवताया अपि मान्त्रवर्णिकत्वं यथोपपन्नं एवं सम्यग्जरणस्यापि व्यापारद्वारा कृतिसाध्यस्य मान्त्रवर्णिकत्वमुपपद्यते ।

तस्मिन्नेवानुवाके मन्द्राभिभूतिरित्यादिमन्त्रप्रतिपाद्यकृत्यसाध्यतृप्त्यादीनां तु न मान्त्रवर्णिकत्वम् । सम्यग्जरणं वमननिमित्तप्रायश्चित्तविध्यन्यथानुपपत्त्या तत्पर्यन्तमेव भक्षणं विवक्षितमित्यवगतत्वाद्यथा कल्पितं नैवं तृप्तिपर्यन्तं भक्षणमिति प्रमाणान्तरप्राप्तं प्रत्युत "अल्पं भक्षयती"ति विधानात् तदपर्यन्तमेव तत्प्राप्तमिति न स्वव्यापारविशेषकल्पनमिति सम्यग्जरणवैषम्यं तृप्त्यादेः सिद्धमिति न दोषः । सर्वथा सति संभवे विभज्य विनियोग एव मन्त्राणां लिङ्गवशेनेति सिद्धम् ।

भक्षणानुवादकश्चायं भक्षणादिप्रतिपादनद्वारा तत्तत्प्रदानजन्यापूर्वार्थं वोत ज्योतिष्टोमापूर्वार्थं वेति विचारणायां केचन मन्यन्ते प्रोक्षणादिकं व्रीहिपदोपस्थिततत्तडुत्पत्त्यपूर्वार्थमिवायमपि स्वार्थभक्षणाद्युपस्थापितप्रदानजन्यापूर्वार्थमित्येव युक्तम् । अतएवेन्द्रपीतस्य नराशंसपीतस्ये"त्यादिपीतान्तपदमुपपद्यते । तत्रेन्द्रपीतशब्देना"ग्नेयं चतुर्धा करोती"त्यत्राग्नेयपदेनै-न्द्राग्नस्येव नेन्द्राग्निपीतस्य ग्रहणं न वा तत्पुरुषसमासनिष्पन्नेन तेन ज्योतिष्टोमस्य ग्रहणमिति ॥

अस्मिन्मते मैत्रावरुणादिप्रदानाङ्गभक्षणस्यापीन्द्रप्रदानविकृतित्वेन समन्त्रकत्वेन मित्रावरुणपीतस्येति तत्रोहोऽङ्गीकरणीयः । ऐन्द्रचमसहोमानन्तरं पुनरभ्युन्नयनेन मित्रावरुणादिभ्यो होमेन भक्षणे तु इन्द्रमित्रावरुणपीतस्येति पूर्वदेवताप्युपलक्ष्यते यदि इन्द्रादिपूर्वदेवतापन्नयो न प्रतीयते । यदि तु स प्रतीयते तर्हि स न लक्षणीयः । तत्र च प्रधानदेवतावाचकस्यैव तादृशशब्दस्योहेन पाठो नाप्रधानदेवताया इति पात्नीवतप्रदानाङ्गभक्षणे त्वष्टृदेवताया नोपलक्षम् । एवंच पात्नीवतयाज्या-मन्त्रप्रतिपाद्यत्रयस्त्रिंशद्देवानामपि न पत्नीवद्देवतया साकमूह इत्यादि सिद्धान्तोऽपि स्वीक्रियते ॥

कल्पसूत्रकारा अपीममेव पक्षमनुमन्यन्ते । जैमिनिमतं तु नैकस्मिन्कर्मणि प्रदानानां प्रकृतिविकृतिभाव इति यदीन्द्रपी-तपदं तत्पुरुषसमासान्तं स्यात्तर्हि प्रदानान्तराणाममन्त्रकमेव भक्षणं भवेत् , परंतु इन्द्रपीतपदस्य बहुव्रीहिसमासत्वस्यैव युक्तत्वात् सर्वेषां भक्षणानां समन्त्रकत्वमेवेति नेन्द्रपीतस्योह इति सर्वत्र प्रदानेष्वेक एव मन्त्रः पठनीय इति ॥

एवंच मन्त्रलिङ्गस्य विकृतिविशेषे बाधे ऊहेन मन्त्रपाठः । यदि तु एकक्रियाङ्गमन्त्रलिङ्गस्य क्रियान्तरे तदविकृतौ बाध-स्तर्हि न तत्र मन्त्रपाठः, अबाधे तु सर्वार्थोऽयं मन्त्रो विनियुक्तः पठनीय इत्यादि सिद्धमिति लिङ्गस्यापि समाख्यादिसामा-न्यसंबन्धबोधकप्रमाणापेक्षं तदनपेक्षं चाङ्गाङ्गिभावबोधकत्वं वर्तत इति श्रुत्या मन्त्रलिङ्गेन चाङ्गाङ्गिभावः ॥

धेनुर्दक्षिणा इति वाक्यं न मन्त्रोऽपितु विधिरेव; अप्राप्तार्थत्वात् । विधित्वं चास्य यद्यपि लिङाद्यभावान्न श्रौतम्; तथापि कल्प्यम् । तत्र च साध्यसाधनभावयोग्ययोः पदार्थयोः समानाधिकरणपदाभ्यां प्रतीतिस्तयोः शेषशेषिभावं विना नोप-पद्यत इति विधित्वकल्पनायां वाक्यं निमित्तमिति समानाधिकरणपदद्वयसमभिव्याहारः स्वपदार्थयोरङ्गाङ्गिभावयोग्यतां पुरस्कृत्य धेन्वा ऋत्विगानतिं कुर्यादिति विधिकल्पनयाऽङ्गताबोधको भवतीति शेषशेषिभावे श्रुतिलिङ्गे इव वाक्यमपि प्रमाणम् । "उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना, उच्चैर्निगदेने"त्यत्रापि वाक्यीय एव विनियोगोऽङ्गीकरणीयः । यत्र हि द्वितीयाविभक्त्योद्देश्यत्वं तृतीयाविभक्त्या विधेयत्वं वा स्पष्टमवगतं तत्रैव श्रौतो विनियोगः । उच्चैरित्यादौ तूच्चैष्ट्वस्य विधे-यत्वबोधिका तृतीयाविभक्तिर्नास्ति । ऋक्साध्यकर्मणो धातुबोध्यस्योद्देश्यत्वबोधिका द्वितीयापि नास्तीति लेद्रत्वनिश्चयेऽपि विनियोगो योग्यतां पुरस्कृत्यैव कल्पनीयः । द्वितीयादिविभक्त्यभावे हि किमुद्देश्यं किं विधेयमिति निर्णयो योग्यतयैव भवति । अन्यथा विनिगमनाविरहात् किमङ्गं किमङ्गीति निर्धारणासंभवादिति व्यर्थमेतादृशं वाक्यमापद्येत ।

यद्यपि वाक्यस्यापि विनियोगप्रमाणता स्पष्टं सूत्रकारैर्नोपनिबद्धा; तथापि "उच्चैर्ऋचा क्रियत" इत्यादौ श्रौतलिङ्गविनि-योगाभावस्थले विचारविशेषकरणाद्वाक्यस्यापि पारिभाषिकस्य विनियोजकत्वमर्थात्सूचितमेव ।

अत्रच वाक्यपदेनैकवाक्यत्वमर्थैकत्वापरपर्यायं विवक्षितम् । तच्च वाक्यं धेनुर्दक्षिणेत्यादौ एकस्य साध्यत्वमप-रस्य साधनत्वं च विनोभयोरपि साध्यत्वं साधनत्वं च नोपपद्यते इति साध्यसाधनभावरूपविनियोगप्रमाणतामर्हति । एवंच पूर्वोत्तरसंदर्भस्यैकवाक्यता तत्तदंशगतानां पदानां तदेकवाक्यता विरोधिपदार्थबोधकत्वं विना नोपपद्यत इति विध्यर्थ-वादयोर्भिन्नविषयत्वे तदनुपपत्त्या तदुपपत्त्यर्थं विधौ अर्थवादे वा लक्षणादिकमङ्गीकृत्यापि समानविषयत्वं संपादनीयम् ।

एवंच "अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद" इत्यर्थवादस्य "उच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्ने"ति विधीनां चैकवाक्यता अर्थवादगतऋग्वेदशब्दस्यर्ङ्मन्त्रपरत्वेन वा भवति उत विधिगतऋगादिपदानां ऋग्वेदादिपरत्वेन वेति विशयोऽत्र समापतति ।

तत्र "न विधौ परः शब्दार्थः" इति न्यायात्तदविरोधार्थमर्थवाद एव लक्षणा युक्ता । यद्यप्यर्थवाद उपक्रमस्थः; तथापि विधिशेषत्वादर्थवादस्य "गुणे त्वन्याय्यकल्पने"ति न्यायेनार्थवाद एव लक्षणा युक्तेति पूर्वपक्षिणो मन्यन्ते ॥

सिद्धान्तिनस्तु अर्थवादस्याप्युपक्रमस्थस्यासंजातविरोधिनः वेदपरत्वेनैव स्तुतिपर्यवसाने सति तदविरोधेन सत्यां गतौ विधावपि लक्षणाऽङ्गीकरणीयैव । अर्थवादेन वेदस्तुत्या वेदविधेस्तात्पर्यविषयत्वेऽवगते "सोमेन यजेत" इत्यादिवत् विधावपि लक्षणा न दोषाय । "न विधौ परः शब्दार्थ" इति न्यायस्य हि प्रत्यक्षादिप्रमाणान्तराविरोधार्थमर्थान्तरपरत्वं नाङ्गीकरणीय मित्येवाशयः ॥

वस्तुतस्तु नात्र लक्षणा—ऋगादिशब्दानां वेदेऽपि बहुतरप्रयोगेन निरूढलक्षणा शक्तिर्वा वर्तत इति जानीमः । अत्र पूर्वपक्षे सिद्धान्ते चोभयत्रैकवाक्यत्वं न विरुद्धमिति वाक्याविनियोजकत्वं नाभिमतमिति केचिदपरथाधिकरणशरीरं मन्यन्ते ॥

तत्र पूर्वपक्षः—अर्थवादस्य वेदविषयत्वात् विधेर्मन्त्रविषयत्वाच्च नात्र विधिविनिर्णयो न वा विनियोजकत्वमिति । सिद्धा-न्तस्तु—विध्यर्थवादयोरुक्तविधयैकवाक्यत्वात् विधित्वविनियोजकत्वयोर्न विरोध इति । एवं चैकवाक्यतानिर्वाहार्थमेवात्रो-

पक्रमप्राबल्यस्योपपादनायनैकवाक्यत्वं नापेक्षितं न वा संभवति तत्रोपक्रमप्राबल्यं न भवत्येवेत्युपसंहारप्राबल्यमपच्छेदाधिकरणसिद्धान्तितमुपपन्नमेव ॥

एतेन—"प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत् स पर्यदीर्यत, स एतं वारुणं चतुष्कपालमपश्यत् तन्निरवपत्, ततो वै स वरुणपाशादमुच्यत वरुणो वा एतं गृह्णाति, योऽश्वं प्रतिगृह्णाति, यावतोऽश्वान्प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान्निर्वपेदि"त्यत्रापि उपक्रमे दातुरिष्टेराम्नानात् तदेकवाक्यतापन्नोपसंहारेऽपि प्रतिगृह्णातिपदस्य प्रतिग्राहयतीत्यर्थमङ्गीकृत्य दातुरेवेष्टिराम्नायत इत्यपि—व्याख्यातम् । यथाचात्र ऋगादिपदस्य वेदेऽपि प्रचुरप्रयोगः न तथा प्रतिगृह्णातिपदस्य प्रतिग्राहयतीत्यर्थे स इति न पौनरुक्त्यम् ॥

तदिदं सिद्धं—"वेदो वा प्रायदर्शना"दिति न्यायेनो"च्चैर्ऋचा क्रियत" इत्यादौ ऋगादिपदस्य ऋग्वेदपरत्वमेव न तन्मन्त्रपरत्वमपि ।

तत्रेदं प्रसंगेन विचारयामः—"उच्चैर्ऋचा क्रियत" इत्यत्र क्रियत इति पदेन कोऽर्थो विवक्षितः? किमुत्पाद्यत इति किंवा प्रयुज्यत इति । एकमेव कर्मैकस्मिन्वेदे उत्पाद्यते अपरस्मिन्वेदे प्रयुज्यते विनियुज्यते वेति हि दृश्यते । एवं चोत्पत्तिवेदस्वरो वोत प्रयोगविधिवेदस्वरो वेति संशये विध्यर्थवादयोरिवैकवाक्यतयैवोत्पत्तिप्रयोगविध्योः प्रामाण्याभावात् तत्र च वाक्यैकवाक्यताया एवाश्रयणात् प्रयोगविधिस्वर एवेति सिद्धान्तमाचार्या मन्यन्ते ॥

यद्यपि प्रयोगविधिरङ्गप्रधानैकवाक्यताधीनो न क्लृप्तः कोऽपि वर्तते, किंतु कल्प्य एव सः; तथापि तत्प्रत्यासन्नविनियोगविधिवेदस्वर एव विवक्षित इत्यङ्गीकारात् न किंचिदप्यनुपपन्नम् । तत्र चैकस्मिन्वेदे उत्पत्तिः अपरत्र गुणार्थमाम्नानमिति निर्णयोऽङ्गबाहुल्यदर्शनेन करणीयः । सर्वथा च क्रियत इत्यनेन प्रयुज्यते विनियुज्यते वेत्यर्थो विवक्षितः, नोत्पाद्यत इति सिद्धम् ॥

तत्र यथा साध्यसाधनभावयोग्यपदार्थबोधकपदद्वयसमभिव्याहाररूपपदैकवाक्यता विनियोगे प्रमाणम्, एवं वाक्यैकवाक्यताऽपि विनियोगे प्रमाणमेव । स्वार्थबोधेऽसमाप्तानां पदानामेकवाक्यता पदैकवाक्यता, स्वार्थबोधे समाप्तानां तु पदानां परस्पराकाङ्क्षयैकवाक्यता वाक्यैकवाक्यता ॥

सा चाऽऽकाङ्क्षा एकस्य वाक्यार्थस्य किं प्रयोजनमित्यपरस्य कथं कर्तव्यमिति च प्रयोजनेतिकर्तव्यताविषयिण्येवेति सन्निहितं फलवच्च यत्कर्म तस्याङ्गं किमपि यदि नावगतं तर्हि तदपेक्षितस्याङ्गस्येतिकर्तव्यतारूपस्य येन वाक्येन समर्पणं क्रियते तयोरेव वाक्ययोर्वर्तते नेतरेषामितीतिकर्तव्यतात्वेनान्वययोग्यक्रियासमर्पकवाक्यस्य फलवाक्येनैकवाक्यतां संपाद्य लिङ्गादिद्वारेण शेषशेषिभावं गमयतीति वाक्यैकवाक्यताकल्पकं पारिभाषिकं प्रकरणमपि अङ्गत्वे प्रमाणम् ॥

यथा—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "समिधो यजती"त्यादीनां प्रकरणकल्पकवाक्यैकवाक्यतया प्रयाजादयोऽङ्गं दर्शपूर्णमासौ प्रधानमिति निश्चिनुमः । एवंच "समिधो यजती"त्यादीनामपि न स्वतन्त्रफलादिकल्पनागौरवम् ॥

विकृतियागसन्निधिपठितानां तु क्रियाणां विकृतौ प्राकृताङ्गैरेव शान्तायामाकाङ्क्षायामितिकर्तव्यतात्वेनान्वयः प्रकरणेन न भवति । एवमपि स्वतन्त्रफलांन्तरकल्पनागौरवभिया तादृशप्रकरणकल्पकतया क्रमाभिधानं प्रमाणान्तरमपि विकृतौ उपहोमादीनामितिकर्तव्यतात्वेनान्वयकल्पनाविधया विनियोजकमिति जैमिनिराचार्यो मन्यते । इतिकर्तव्यतात्वेनान्वयश्च क्रियाया एव न सिद्धरूपाणां मन्त्राणाम् । एवंच तेषामप्यङ्गत्वं क्रतुसंनिधिपाठमहिम्ना क्रमाख्येनैव भवति ।

यत्तु"बर्हिर्देवसदनं दामी"त्यादीनां प्रकरणेन दर्शपूर्णमाससंबन्ध इत्युक्तं तत्र तदुभयाकाङ्क्षत्वमात्रं नतूक्तविधमितिकर्तव्यतात्वप्रकारकापेक्षाविषयत्वमिति पूर्वमेवोक्तमिति न विरोधः ।

तदिदं सिद्धं श्रुतिलिङ्गवाक्यप्रकरणक्रमाभिधानैः पञ्चभिः प्रमाणैरङ्गाङ्गिभावोऽवगम्यते । अवगतप्रधानाङ्गभावानां कर्मणां कर्तारः किं नियताः आहो अनियता इति संशयो हि आध्वर्यवादिलौकिकवैदिकसमाख्याधीनः । आध्वर्यवमिति यजुर्वेदस्य या समाख्या सा यजुर्वेदविहितकर्मसु अध्वर्युः कर्तेति गमयति । सा च समाख्या क्रमप्रकरणवाक्यलिङ्गश्रुतिकल्पनयाऽङ्गत्वे प्रमाणमिति सिद्धम् श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याः षड् विनियोगप्रमाणानीति ।

लिङ्गवाक्यादीनां श्रुत्यादिपूर्वपूर्वकल्पनयैव विनियोगे प्रमाणतया उपजीव्यत्वेन श्रुतिर्लिङ्गादिभ्यः लिङ्गं वाक्यादिभ्यः वाक्यं प्रकरणादिभ्यः प्रकरणं क्रमसमाख्याभ्यां क्रमः समाख्यायाश्च प्रबल इति श्रुतिर्बाधिकैव, समाख्या बाध्यैव, लिङ्गादिकं तु स्वपूर्वदृष्ट्या बाध्यं स्वोत्तरदृष्ट्या तु बाधकम् ॥

अयं च बाध्यबाधकभावः एतेषां षण्णामपि प्रमाणानां परस्परं विरोध एव भवति नाविरोधे । स च विरोधो यथा एकस्य शेषस्य शेषिद्वये प्रमाणद्वयसत्त्वे, यथा ऐन्द्रीमन्त्रस्य श्रुत्या गार्हपत्याङ्गत्वे लिङ्गादैन्द्राङ्गत्वे च । एवं एकस्मिन् शेषिणि शेषद्वयविनियोजकप्रमाणद्वयसत्त्वेऽपि भवति । यथा गार्हपत्यश्रुत्या ऐन्द्रीमन्त्र आग्नेयः, लिङ्गादैन्द्रः ॥

यत्तु वाक्यप्रकरणाभ्यां वैमृधप्रयाजयोरेकदर्शपूर्णमासाङ्गत्वं तत्तयोर्द्वारभेदादविरोधेनोपपद्यते इति द्वारैक्ये सत्येवायं

बलाबलविभागः । ऐन्द्रीमन्त्रस्याग्नेयमन्त्रस्य च देवताप्रकाशनमेकमेव द्वारमिति विरोधात् श्रुत्या लिङ्गबाधेन गार्हपत्य एव विनियोग इति युक्तम् । वैमृधप्रयाजयोस्तत्तदपूर्वं द्वारम् । नहि वैमृधापूर्वं प्रयाजापूर्वं चैकम् ।

"अरुणया क्रीणाती"त्यादौ यद्यपि अपूर्वसाधनक्रयोपस्थित्यर्थं प्रकरणस्योद्देश्यज्ञानार्थं वाक्यस्य चापेक्षा वर्तते; तथापि श्रुतेरेव तत्र विनियोजकत्वं न वाक्यादीनामिति विनियोजकप्रमाणबलाबलविचारस्यैवात्र करणात् न तत्र प्रकरणाद्यनुसंधानं विरुद्धम् ।

तत्र श्रुतिलिङ्गविरोधे "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्युदाहरणं पूर्वमेव विवेचितम् ॥

लिङ्गवाक्यविरोधे तु "स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि" "तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेधः सुमनस्यमानः" इति मन्त्रयोरेकवाक्यतया समुच्चितस्य विनियोगो वाक्येन, लिङ्गेन विभज्य विनियोगो वेति संशये वाक्यापेक्षया लिङ्गस्य प्रबलतया विभज्यैव विनियोगः । यद्यपि तस्मिन् सीदेति तच्छब्दमहिम्ना पूर्ववाक्यार्थोऽप्याकाङ्क्षितः; तथापि अर्थैकत्वस्याभावादर्थैकत्वे सति विभज्यमानसाकाङ्क्षत्वस्यैवैकवाक्यताप्रयोजकत्वात् नात्र वाक्यप्रमाणस्यावसर एवेति मन्तव्यम् ।

अत्र पूर्वपक्षः—विभज्यमानसाकाङ्क्षत्वमात्रं वाक्यैकतायां प्रयोजकमिति प्रवृत्तः, सिद्धान्तस्तु अर्थैकत्वस्यापि तत्प्रयोजकत्वं मत्वेति विवेकः ।

"इन्द्राग्नी इदं हविरजुषता"मित्यत्र तु इन्द्राग्नी इत्यस्य विभागे साकाङ्क्षत्वमिवेदं हविरजुषतामित्याख्यातेनान्वययोग्यतयैकस्यैवाख्यातस्य श्रवणादर्थैकत्वमपि वर्तत इति दर्शपूर्णमासप्रकरणपठितस्याप्यस्य मन्त्रस्यैन्द्राग्नपुरोडाशयागमात्राङ्गत्वम्, नतु आग्नेयाद्यङ्गत्वमपीति तत् वाक्यप्रकरणयोर्विरोध उदाहरणतामर्हति ।

मन्त्राणां सिद्धरूपाणामपि अर्थप्रकाशनरूपक्रियाद्वारेतिकर्तव्यतात्वेनान्वयो भवत्येव । "इदं हविरजुषतामि"त्यस्यापि प्रकृतदेवतावाचकशब्दाध्याहारेण तैः साकमेवोच्चारणीयत्वात् अर्थप्रकाशनार्थत्वं वर्तत एव ॥

यत्तु मन्त्राणां प्रकरणग्राह्यत्वं नास्तीत्युक्तं तज्जपमन्त्रादिविषयमिति भाट्टदीपिकायां व्यक्तम् ।

एवंच सूक्तवाकानां अर्थप्रकाशनार्थानामपि न मुख्यप्रकरणग्राह्यत्वमिति यदुक्तं भाट्टदीपिकायां तत्पक्षान्तरमात्रमित्यन्यत्र विस्तरः । यदितु सूक्तवाकानां न प्रकरणग्राह्यत्वं तर्हि वाक्यप्रकरणयोर्विरोधे उदाहरणान्तरमेव वक्तव्यम् ।

तच्च "संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपती"ति वाक्यात् वैमृधस्य पौर्णमास्यङ्गत्वमेव, नतु प्रकरणाद्दर्शपूर्णमासाङ्गत्वमिति भाट्टदीपिकायां उदाहरणान्तरमुक्तम् ॥

यत्तु भाट्टदीपिकायां प्रकरणस्यात्रेन्द्राग्नीपदेन दर्शपूर्णमासापूर्वसाधनलक्षणनिमित्तस्य न संभव इत्युक्तं तदपि युक्तमेव । अरुणयेत्यादिश्रुतिविनियोगस्थले हि श्रुतेरेव विनियोजकत्वं वाक्यप्रकरणयोरुभयोरपि उद्देश्यविशेषसमर्पकमात्रत्वादेकविषयत्वेनाविरोधात् युक्तमिदं वाक्यप्रकरणयोर्विरोधेऽप्युदाहरणमिति तु परे मन्यन्ते । सर्वथा तु वाक्यप्रकरणयोर्विरोधे वाक्यमेव विनियोजकमिति सिद्धम् ॥

अत्र वाक्यप्रकरणविरोधोदाहरणद्वयेऽपि वाक्येन दर्शपूर्णमासैकदेशाङ्गत्वं प्रकरणेन तूभयाङ्गत्वमिति वाक्येन प्रकरणस्य नात्यन्तिको बाधः, किंतु अंशविशेष एव बाधः । सर्वात्मना वाक्येन प्रकरणबाधस्तु द्वादशोपसदां प्रकरणेन ज्योतिष्टोमाङ्गत्वे प्रसक्ते वाक्येन तद्बाधात् द्वादशाहाङ्गत्वेनेति । तत्रोदाहरणं "तिस्र एव साह्नस्योपसदो द्वादशाहीनस्ये" ति वाक्यमेवेति मन्तव्यम् । द्वादशाहीनस्येत्यत्राहीनपदं हि क्रतुसमूहवाचि, नतु न हीनोऽहीन इति नञ्समासेन सर्वाङ्गपूर्णज्योतिष्टोमपरम् । अन्यथा हि उपसदां त्रित्वस्य द्वादशत्वस्य च विकल्पे "तिस्र एव साह्नस्ये"ति एवकार इव प्रकरणेन तिसृणां द्वादशानां वोपसदां ज्योतिष्टोम एव निवेशोपपत्त्या साह्नाहीनपदे अपि वितथे भवेताम् । अतः प्रकरणाबाधेन वाक्येनैवात्र विनियोग इति भाष्यकारः ॥

वार्तिककारास्तु—नात्र प्रकरणवाक्ययोर्विरोध एव । द्वादशाहीनस्येति वाक्यं हि न विधिः, किं तु "तिस्र एव साह्नस्योपसदः" इत्यस्यार्थवादः । अत एव द्वादशाहप्रकरणे उपसदां द्वादशत्वविधानमपरं सार्थकं भवतीति—मन्यन्ते ॥

एतन्मते तु वाक्येन प्रकरणस्यात्यन्तबाधे "युवं स्थ स्वर्पती इतिद्वयोर्यजमानयोः प्रतिपदं कुर्या"दिति द्वियजमाननिमित्तकत्वेन विहितस्य प्रतिपन्मन्त्रस्य एकयजमानके ज्योतिष्टोमे प्रकरणेन प्रसक्तस्य द्वियजमानककुलायाहीनादौ वाक्येन विनियोग इत्युदाहरणान्तरमेवाङ्गीकर्तव्यम् ।

इदमुदाहरणमपि भाष्यकाराणां संमतमेव ॥

"जाघन्या पत्नीः संयाजयन्ति" इति पत्नीसंयाजप्रकरणे तु पश्ववयवजाघन्या अङ्गत्वेन विधानं, नतु तस्मिन् निमित्ते उद्देश्ये वा पत्नीसंयाजानां विधानमित्यापणस्थेन तदानीं संपादितेन तेन पत्नीसंयाजोऽनुष्ठातुं शक्यते । नहि निमित्तोद्देश्ययोरिव विधेयस्य प्राप्तिरपेक्षितोपपन्ना वेति नात्र वाक्यप्रकरणयोर्विरोधः ॥

एवंच सति संभवे वाक्येन प्रकरणस्य न बाधः, अन्यथा तु स इति "दीर्घसोमे संतृद्ये धृत्यै" इति विहितस्य संतर्दनस्यापि प्रकरणाविरोधेन ज्योतिष्टोमाङ्गत्वमेव ॥

इष्ट्याद्यपेक्षया दीर्घत्वेन सोमद्रव्यकत्वेन च दीर्घसोमपदस्य ज्योतिष्टोमोऽर्थो भवितुमर्हत्येव ।

अत्रच दीर्घस्य यजमानस्य सोमो दीर्घसोम इति उक्थ्यादिसंस्थान्तरयुक्ते ज्योतिष्टोमे सोमस्य यावदपेक्षं ग्रहणीयत्वेन दीर्घत्वेन दीर्घश्चासौ सोमश्च दीर्घसोम इति वा षष्ठीतत्पुरुषकर्मधारयपक्षावपि प्रकरणाविरोधसंपादनार्थं भाट्टदीपिकायां व्यवस्थापितौ । तथाच नात्रापि प्रकरणाविरोध इति भाष्यकारः ॥

वार्तिककारस्तु—अग्निष्टोमातिरिक्तविवृद्धस्तोमकविकृतावेव निवेशः । अयमाशयः—सोमग्रहणविवृद्ध्यादीनि संस्थाङ्गमेव न ज्योतिष्टोमाङ्गम् । अतः प्रकरणबाधेन वाक्येनैवात्र विनियोग इति—मन्यते ।

एवंच वचनात् दीर्घसोमत्वं अग्निष्टोमातिरिक्तसंस्थानामेव वर्तते नान्येषामिति संतर्दनं विकृतावेव निविशते, नतु प्रकरणोपस्थितेऽपि ज्योतिष्टोमे ॥

इदंच वाक्यं द्विविधं आरभ्याधीतं अनारभ्याधीतं चेति । तत्र अनारभ्याधीतं आरभ्याधीतात् दुर्बलम् । यथा प्रकृतौ पाञ्चदश्यावरुद्धायां अनारभ्याधीतसाप्तदश्यस्य न निवेश इति । "न प्रथमयज्ञे प्रवृञ्ज्यात्" इति निषेधे यदि प्रथमयज्ञपदस्य ज्योतिष्टोमोऽर्थः तर्हि ज्योतिष्टोमाङ्गत्वं प्रवर्ग्यस्य भवत्येवेति प्रकृते प्राकरणिकप्रवर्ग्यनिषेधस्यानारभ्याधीतप्रवर्ग्यविधेश्च भिन्नविषयत्वात् न विरोधः । तथाच सत्यां गतौ लिङ्गेन यथा वाक्यादीनां न बाधः यथा च न श्रुत्या लिङ्गस्य स एवं वाक्येनापि प्रकरणस्य स नास्त्येव ॥

दर्शपूर्णमासप्रकरणाम्नातेन "पूषा प्रपिष्टभागोऽदन्तको हि सः" इति वाक्येन विहितं पूषभागपेषणं कथमपि दर्शपूर्णमासयोरन्वयायोग्यमिति गत्यन्तराभावात् पेषणस्य प्रकरणबाधेन वाक्येन पूषयागाङ्गत्वमेवेति वाक्येन प्रकरणस्य तत्र बाध एव ॥

स च पूषभागः चरुरेव, नतु पुरोडाशादिकम् पशुहृदयादिकमपि वा ॥ यथाच पेषणेऽपि चरोराकारो न विनश्यति नैवं तेन पुरोडाशाद्याकारोऽपि न विनश्यतीति न दोषः ॥

अत्र भागपदार्थो यथा व्यवस्थितश्चरुरेव, तथा पूषयागोऽपि केवलपूषयाग एवात्र विवक्षितः, न तु इन्द्रपूषादियागोऽपीति सिद्धमिदं वाक्यस्य प्रकरणेन विरोधे प्रकरणबाधकत्वमिति ॥

तत्र वाक्यं प्रकरणाद्यविरोधेन सति संभवेऽन्यथा तद्बाधेनेव प्रकरणमपि स्थानाद्यबाधेन सति संभवेऽन्यथा तद्बाधेन विनियोजकम् । यथाऽभिषेचनीयसन्निधिपठितानामक्षविदेवनादीनां राजसूयाङ्गत्वमेव न त्वभिषेचनीयाङ्गत्वम् ॥

विकृतिसन्निधिपठितानामुपहोमादीनां क्रियारूपाणामपि विकृतीनां प्राकृताङ्गैरेव निराकाङ्क्षत्वात् तदितिकर्तव्यतात्वेनान्वयो नोत्थिताकाङ्क्षया भवति, किन्तूत्थाप्याकाङ्क्षयैवेति तेषां स्थानेनैव विनियोगः ।

अनिवृत्तायामेवेतिकर्तव्यताकाङ्क्षायां येषामन्वय उदुम्बरत्वादीनां तेषां वैकृतानामपि क्रियासंबन्धेनेतिकर्तव्यतात्वेनान्वयायोग्यानां प्रकरणेनैव विकृतावपि विनियोगः । एवं स्थानसमाख्ययोरपि स्थानेन समाख्यायाः बाधो द्रष्टव्य इति न्यायप्रकाशादिषु सर्वत्र बहु विस्तृतोऽयं विषयः ॥

विस्तरभयादुपरमन्तो वयमत्रेदमुपपादयामः यत् पूर्वमीमांसाशास्त्रेऽधिकरणानां सर्वेषामप्यन्यादृशः संबन्धो वर्तते । तेषामधिकरणानां पूर्वपक्षन्याया अपि सिद्धान्तन्यायाविरोधेन कुत्रचन विषयवाक्ये योज्यमाना निश्चायका भवन्त्येव । तत एव सूत्रकाराः पूर्वपक्षमपि तत्र तत्र सूचयन्ति, भाष्यकारादयः पूर्वपक्षमपि अधिकरणावयवमभिप्रयन्ति । एते च न्याया वैदिकवाक्येष्विव लौकिकवाक्येष्वपि धर्मविषयेषु मन्वादिकृतेष्वर्थनिर्णयार्थं योजनीयाः । न्यायानुमता एव स्मृतयो धर्मप्रमाणमिति कुत्र कुत्रचन न्यायविरुद्धाः स्मृतयोऽप्रमाणमेव भवन्ति । व्यक्तमिदं भाट्टदीपिकायां कल्पसूत्राधिकरणे । यथाचाऽत्र तृतीयाध्यायगत—निवीताधिकरणान्तस्य भागस्य सम्यगेव सङ्गतिरेवमुपरितनस्यापि भागस्य सा समस्त्येव । तथापि साऽवसरान्तरेऽस्माभिरुपपादयिष्यते । संप्रति प्रारब्धमिमं ग्रन्थविभागमत्रैव समापयामः ॥

**इति महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिचरणानां शास्त्ररत्नाकरश्रीवेंकटसुब्बशास्त्रिपादानां चान्तेवासिनो वेदान्तविशारदानन्तकृष्णशास्त्रिणः कृतिषु मीमांसाशास्त्रसारः समाप्तः ॥**



श्रीः ।

# श्रीमत्खण्डदेवविरचिता
# भाट्टदीपिका ।

श्रीखण्डदेवान्तेवासिकविमण्डनशंभुभट्टविरचित-

## प्रभावलीव्याख्यासंवलिता ।

### तत्र प्रथमाध्यायस्य द्वितीयः पादः ।

(१ अधिकरणम् ।)

विश्वेश्वरं नमस्कृत्य खण्डदेवः सतां मुदे । तनुते तत्प्रसादेन संक्षिप्तांभाट्टदीपिकाम् ॥ १ ॥

प्रभावली ।

(मङ्गलाचरणम्)

अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकम् ।
सर्वाभीष्टप्रदं नौमि श्रीरूपं सुन्दरं महः ॥ १ ॥
यो वेदशास्त्रार्णवपारदृश्वा यज्ञादिकर्माचरणेऽतिदक्षः ।
सदाशिवाराधनशुद्धचित्तस्तं वालकृष्णं पितरं नमामि ॥ २ ॥
श्रीखण्डदेवं प्रणिपत्य सद्गुरुं
मीमांसकस्वान्तसरोजभास्करम् ।
अत्यन्तसंक्षिप्तपदार्थतत्कृतौ
प्रभावलीटिप्पणमातनोम्यहम् ॥ ३ ॥
यद्यप्यत्र गुरोः कृतावपि मयाप्युद्भाव्यते काचना-
संभूतिस्तदपि प्रचारचतुरे नैषा पुरोभागिता ।
किंतु क्ष्मातिलकाः कुशाग्रधिषणाः सिद्धान्तवद्धादरा
मद्वाक्यं परिहृत्य तत्कृतिमलंकुर्वन्त्वियं मे मतिः ॥४॥

(टिप्पणारम्भप्रतिज्ञा)

अत्रेच यद्यपि वलावलाधिकरणसमाप्तिपर्यन्तं स्वकृतेन कौस्तुभग्रन्थेन व्याख्याततार्था भाट्टदीपिका भवतीत्यतस्तदन्तं विहाय टिप्पणं कर्तव्यमिति आज्ञा पूज्यपादानामासीदिति तदन्तग्रन्थटिप्पणं कर्तुं न युक्तम्; तथापि तत्संग्रहीतार्थानां मूलाक्षरारूढत्वज्ञापनाय लोकोपकाराय च कौस्तुभदर्शितमार्गेणैव आदितः टिप्पणमारभ्यते ।

(उपोद्घातविचारप्रतिज्ञा)

तत्र व्याख्यास्यमानार्थवादाधिकरणे यदुपोद्घातत्वेनावश्यापेक्षितं तत् किंचिदादौ निरूप्यते । तत्र तावत् पूर्वचरणे "अथातो धर्मजिज्ञासा" (जै. अ० १ पा० १ सू० १) इति शास्त्रारम्भसूत्रेण प्रमाणस्वरूपसाधनफलैः साभासैर्विचारयिष्यमाणः सकलो धर्माधर्मप्रमेयरूपः शास्त्रार्थः प्रतिज्ञातो महर्षिणा जैमिनिना ।

(विचारे वैधत्वोपपादनम्)

शास्त्रारम्भमूलं च "स्वाध्यायोऽध्येतव्यः" (तै० आ०१६) इत्यध्ययनविधिः; तत्राध्ययनरूपकरणविधानाद्विचारमन्त-

---

(१) अत्रावतरणग्रन्थे "अथातो धर्मजिज्ञासे 'त्यादिसूत्रार्थनिरूपणपूर्वकं स्वतन्त्रमेव प्रथमपादार्थं संगृह्णन्तः आदितः टिप्पणमारभ्यत इति प्रतिज्ञायापि अर्थवादपादमारभ्यैव टिप्पणमारचयन्तश्च शंभुभट्टाः प्रथमपादव्याख्येयं भाट्टदीपिकाग्रन्थं खण्डदेवाचार्यकृतं अविद्यमानमभिप्रयन्ति । तदत्र मैसूरनगरमुद्रापितभाट्टदीपिकापुस्तके प्रथमपादभाट्टदीपिकापि प्रकाशिता यद्दरीदृश्यते, यच्च तदनुसारीदानींतनानां मान्यमान्यानां महामहोपाध्यायानां श्रीमतां रामसुब्रह्मण्यशास्त्रिणां भाट्टकल्पतरुनामकं एकं प्रथमपादभाट्टदीपिकाव्याख्यानमप्युपलभ्यते, तत्र स्वतन्त्रं केनचनाऽन्येन कल्पिता भाट्टदीपिकैव सा न खण्डदेवाचार्यकृता सेति बहवो मन्यन्ते । कल्कत्तानगरमुद्रापितभाट्टदीपिकापुस्तके द्विनीयपादत एवारम्भोऽपि तेषां मतमुपोद्बलयति । मन्त्राधिकरणं नियमपरिसंख्यादिविधिलक्षणादिग्रन्थो यः कल्कत्तानगरमुद्रापितभाट्टदीपिकापुस्तके उपलभ्यते, स मार्कि एकपुटपरिमितः प्राचीनतालपत्रमयेष्वपि अस्माभिरुपलब्धेषु मन्त्राधिकरण एवोपलभ्यमानः प्रथमपादे समुद्धृत्य केनापि प्रकाशित इति ते वर्णयन्ति । तत्र किं प्रथमपादात्समुद्धृत्य मन्त्राधिकरणे घटनं, उत मन्त्राधिकरणात् प्रथमे पादे इति शङ्का तु मन्त्राधिकरण एव पूर्वतनानां खण्डदेवाचार्यप्रियान्तेवासिनां शंभुभट्टानां तेषां विवरणं दृश्यते इति नात्रावसरं लभते । अन्यानि च यानि द्वितीयपादत आरभ्यैव खण्डदेवाचार्यैः भाट्टदीपिका विरचिता, प्रथमपादस्य तु ततस्ततः खण्डदेवाचार्यवाक्यग्रहणेन स्वतन्त्रमेव कस्यकस्यापि वाक्यस्य रचनया च केनाप्यधुनातनेन पूर्वतनेन वा कल्पिताऽन्यैवेयं मैसूरनगरमुद्रापिता प्रथमपादभाट्टदीपिकेत्यत्र निमित्तानि तेषामभिमतानि, तानि अस्यैव पुस्तकस्य प्रकाशयिष्यमाणस्य भूमिकायां सूचयिष्याम इति विस्तरभयादुपरम्यते ।

रेण अर्थज्ञानानुत्पत्तेः विचाररूपेतिकर्तव्यतानुष्ठानाक्षेपेण तत्कर्तव्यताबोधनात् तस्याश्च तत्प्रतिपादकशास्त्राभावेऽसंभवात् शास्त्रारम्भतदध्ययनकर्तव्यताबोधनरूपफलस्याप्यर्थतो विधानात्। **तदुक्तम्**—"धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्तव्यताभागो मीमांसा पूरयिष्यते" इति ॥

**(अध्ययनानन्तर्यविवक्षाया गुरुकुलनिवृत्तिमात्रबाधफलकत्वम्)**

ततश्च साङ्गवेदाध्ययनेन विचारशास्त्राध्ययनपूर्वकानुष्ठानोपयोगिधर्माधर्मपरिच्छेदरूपपदार्थज्ञानफलं साधयेदित्यर्थकाध्ययनविधेः क्लृप्तदृष्टार्थत्वनिर्वाहाय अध्ययनाव्यवधानरूपानन्तर्यमपि विचारस्य सिद्ध्यति। एतत्पर्यन्तमपि तात्पर्यकल्पनायाः 'अधीत्य स्नायादि'ति स्मृतिबाधः फलम्, इतरथा अध्ययनानन्तरं समावर्तनमात्रानुष्ठानेऽध्ययनविधिबोधिताध्ययनस्यादृष्टार्थत्वापत्तेः। यद्यपि वा स्नाननियतनिवृत्तिरूपस्नानोपलक्षितसकलब्रह्मचारिधर्मनिवृत्तेरध्ययनानन्तर्यं स्मृत्या प्रतिपाद्यते; तथापि गुरुकुलनिवृत्त्यंश एव तद्बाधः, तस्यैव विचारविरोधित्वात्। **तदुक्तं वार्तिके**—"स्नानोपलक्षिता छात्रनिवृत्तिर्गुरुवेश्मनः। विरोधित्वेन बाध्येत नतु मध्वादिभक्षणम् ॥ तस्माद्गुरुकुले तिष्ठेन्मधुमांसाद्यवर्जयन्। जिज्ञासेताविरुद्धत्वाद्धर्ममित्यवगम्यते" इति ॥

**(अध्ययनानन्तरं समावर्तनोपपादनम् तत्र प्रयोगकाराणां विचारानन्तरमेव समावर्तनमिति सिद्धान्तखण्डनं च)**

तथाच साङ्गवेदाध्ययनानन्तरमपि गुरुकुलं वसतैवेतरब्रह्मचारिधर्मनिवृत्तिरूपसमावर्तने कृतेऽपि धर्माधर्मरूपविचारशास्त्राध्ययनं कार्यम्, नतु गुरुकुलवासस्यापि निवृत्त्याऽध्ययनानन्तरं सर्वत्याग इत्यर्थेऽविरुद्धे सति **यत्प्रयोगकारकृता**-"अधीत्य स्नायादि"ति स्मृतिरध्ययनविधेः दृष्टार्थावबोधफलकत्वे संभवति स्वर्गकल्पनानुपपत्तेः समावर्तने अध्ययनानन्तर्यक्रमस्य विधातुमशक्यत्वादध्ययने स्नानपूर्वकालमात्रेणोपपन्ना; इतरथा "वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति" इत्यादिना "तथा तेषु वर्तेथाः" इत्यन्तेन ग्रन्थेन तैत्तिरीये वेदाध्ययनान्ते वेदार्थेतिकर्तव्यतोपदेशानुपपत्तेः। अतोऽध्ययनानन्तरं धर्मजिज्ञासैवोचिता न स्नानम्—**इत्युक्तम्, तदपास्तम्**; समावर्तनानन्तरमेव क्रियमाणस्य शास्त्रविचारस्य अद्यावधि शिष्टसंप्रदायसिद्धस्यापलापप्रसङ्गात्, उपनयनाध्ययनब्रह्मचर्यादिनियमविधिबलादेवाध्ययनस्य स्नानपूर्वकालत्वसिद्धौ सर्वब्रह्मचारिधर्माणां मध्ये अध्ययनरूपकर्मानन्तर्यस्य समावर्तने कथमप्यप्राप्तस्य विधानाभावेन "अधीत्य स्नायादिति" स्मृतिवैयर्थ्यप्रसङ्गाच्च, अध्ययनविधिदृष्टार्थत्वानुरोधेन कल्प्यमानस्याध्ययनधर्मविचारयोः परस्परानन्तर्यस्य वेदाध्ययनसमाप्तिदिन एव समावर्तनानन्तरं शास्त्रारम्भेऽपि दृष्टार्थत्वाहानेरुपपन्नत्वेनाध्ययनस्नानयोः क्रमबाधे प्रमाणाभावाच्च, तत्रापि वेदाध्ययनसमाप्त्यनन्तरं विशिष्टगुर्वाद्यलाभे व्यवधानसंभवादावश्यकगणपत्यादिपूजनेनाव्यवधाने बाधस्यावश्यकत्वेनाव्यवहितत्वांशत्यागेनानन्तर्यमात्रबोधस्यैव विरुद्धव्यापारान्तरनिवृत्तितात्पर्यकतया वर्णनीयत्वेनाविरुद्धसमावर्तनानुष्ठाने तद्बाधाभावात्, प्रत्युत भिक्षाचर्यादेर्विचारविरोधित्वेन तन्निवृत्तेस्तदुपकारकत्वाच्च। अतएव बाधकसत्वेऽव्यवहितत्वांशत्यागेनाध्ययनहेतुत्वासंभवमभिप्रेत्याथशब्दबलादेव स्नानविधिबाधः प्रकाशकारैः श्रुतिपदाद्यधिकरणे साधितः। तस्मात् येन विनाऽध्ययनविधेर्विचारेतिकर्तव्यताकार्थज्ञानरूपदृष्टफलहानिस्तावन्मात्रमेव स्नानविध्युक्तं बाधनीयम्। तच्च गुरुकुलवासनिवृत्तिरूपं विचारविरोधीति तदेवाध्ययनानन्तर्यं विदधता विधिना बाध्यते, नतु तदतिरिक्तं विधिना विहितं पदार्थतयाऽऽचमनादिवत् प्रबलं स्नानमात्रमपीत्येव कल्पनं निरस्तदोषं साधु। तमिममध्ययनविधिना श्रुत्यर्थाभ्यां सिद्धमर्थं मूलीकृत्यैव महर्षिणा "**अथातो धर्मजिज्ञासा**" इति सूत्रेणारब्धं शास्त्रम् ॥

**(जिज्ञासासूत्रार्थवर्णनम्)**

**सूत्रार्थस्तु—अथ** साङ्गवेदाध्ययनानन्तरम्। यतस्तन्मात्रेण विचारमन्तरा तत्फलमनुष्ठानोपयोगिपरिच्छेदरूपं धर्माधर्मरूपार्थज्ञानं न जायते, **अतः** अध्ययनस्यार्थज्ञानरूपदृष्टप्रयोजनकत्वाद्धेतोः तादृशधर्माधर्मज्ञानेच्छा कर्तव्या, इच्छाविषयस्तादृशज्ञानं कर्तव्यमिति यावत्। विचारं चान्तरेण तत्कर्तव्यतानुपपत्तेः प्रमाणस्वरूपसाधनफलैः तद्विचारः कर्तव्य इत्यर्थ इति ॥

**(धर्माय जिज्ञासेति तादर्थ्यविवक्षाप्रयोजननिरूपणेन धर्मजिज्ञासेत्यत्र षष्ठीसमासप्रतिष्ठापनम्)**

अत्रच धर्मजिज्ञासेति पदे धर्माय जिज्ञासेति तादर्थ्याख्यसंबन्धविशेषपरतया षष्ठी व्याख्याता भाष्यकारादिभिः। तत्र विषयित्वार्थकषष्ठीपरतां विहाय तादर्थ्यपरत्वव्याख्याने प्रयोजनं विचारस्य धर्मानुष्ठानोपयोगित्वज्ञापनमेव। तथाच धर्मानुष्ठानायायं विचारः कर्तव्य इति चार्थिकम्, नतु तादर्थ्यचतुर्थीसमासप्रदर्शनपरम्; वार्तिककारमते कदाचिदश्वघासादिपदे इव तत्संभवेऽपि महाभाष्यकारेण तन्मतप्रत्याख्याने अश्वघासादिशब्देऽपि षष्ठीसमासाश्रयणात् तद्वदेवेहापि तदौचित्यात्। **अतएव**—भट्टपादैः धर्माय जिज्ञासेति भाष्यकारवचनं षष्ठीसमासलब्धार्थिकार्थप्रदर्शनपरम्, नतु विग्रहप्रदर्शनपरम्; तस्य ज्ञातुमिच्छेदिति निगमवाक्ये षष्ठीसमासविभावनात् इति—**व्याख्यातम्**। अतः षष्ठीसमास एव युक्त इति ध्येयम् ॥

**(जिज्ञासापदार्थः)**

जिज्ञासापदे च विचारलक्षणा। **अथवा**—विचारकर्तव्यताया अर्थादेव सिद्धेः श्रुतिपदाद्यधिकरणे वार्तिकोक्तरीत्या नैव लक्षणा, किंतु यथाश्रुतपरमेवेति ध्येयम् ॥

**(अथशब्दप्रयोजनम्)**

इदं च सूत्रं अध्ययनविध्यर्थसिद्धाध्ययनानन्तर्यं विचारे

अथशब्देन बोधयत् तस्य श्रौतक्रमसिद्ध्यर्थम्; यत्र हि पाठादेव हृदयाद्यवदानानामानन्तर्यक्रमसिद्धिः, तत्राथशब्दस्यानुवाद्यत्वेऽपि प्रमाणान्तरावधृतयोः पदार्थयोर्विधिना विधानाभावेऽथशब्दस्यानन्तर्यरूपक्रमविधायकत्वेन प्रकृतेऽपि स्वाध्यायविधिनाऽध्ययनस्य विचारस्य च कर्मानुष्ठानोपयोगित्वेन प्राप्तत्वात् सूत्रस्थाथशब्देन क्रममात्रविधिपरत्वप्रतीतेः । सूचितं चेदं पञ्चमे वार्तिकतन्त्ररत्नयोः ॥

**( केषांचिन्मतेन वेदार्थो धर्मपदार्थ इति विवेचनेन स्मृत्यादिविचारस्यापि प्रतिज्ञाविषयत्वोपपादनम् )**

**अत्र च**—वेदार्थज्ञानार्थमेव वेदाध्ययनानन्तरं विचारकर्तव्यतोक्तेः वेदार्थत्वेनैव वेदार्थो जिज्ञास्यः, नतु धर्मत्वेन, सूत्रस्थं धर्मपदं वेदार्थमात्रपरमिति—**केचिदाहुः** ॥ **नच**—अस्मिन् मते वेदाध्ययनस्य वेदार्थविचारहेतुत्वेऽपि न स्मृत्याद्यर्थविचारहेतुत्वं यथा, तथा स्वाध्यायपदोपात्तैकशाखाध्ययनस्यापि न शाखान्तरार्थविचारहेतुत्वं संभवतीति कथमध्ययनस्य कृत्स्नवेदार्थविचारहेतुत्वम्? इति—**वाच्यम्**; अध्ययनविधेर्विचाराक्षेपकत्ववदेकशाखाप्रयोगविध्यर्थनिर्णयस्य शाखान्तरीयाङ्गत्वबोधकवाक्यविचाराधीनत्वेन तद्विचाराक्षेपपर्यन्तफलकत्वाङ्गीकारेण तद्धेतुत्वोपपत्तेः । अतएव श्रौतानामिव स्मार्ताचारप्राप्ताङ्गानामप्याचरणं कुर्वतां प्रयोगविधीनामर्थज्ञाननिर्णयाय अध्ययनविधिना स्मृत्यादिविचारोऽप्यनुष्ठाप्यत इति तस्यापि प्रतिज्ञाविषयत्वं युक्तमेव । अतो युक्तैव वेदार्थत्वेन तस्य विचारविषयता—**इति** ॥

**( स्वसिद्धान्तेन धर्मपदार्थविवेचनादिकम् )**

**वस्तुतस्तु**—वेदार्थविचारस्य प्रवृत्तिनिवृत्त्युपयोगाभावे निष्प्रयोजनत्वाल्लोके च प्रेक्षावतां सुखप्राप्तिदुःखनिवृत्त्यर्थिनां तज्जनकधर्माधर्माणां च क्षणानाचरणादर्शनात् तत्वेन तद्विचार एव कर्तव्यत्वेनोपदिश्यते इति युक्तम्; अतएव स्मार्ताचारप्राप्तधर्मविचारोऽपि अग्रे करिष्यमाणो नासङ्गतो भवति । **नच**—अथशब्देन वेदाध्ययनानन्तर्योक्तेः स एव मुख्यः, अन्यस्तु प्रसङ्गत इति—**युक्तम्**; अथशब्दस्य पूर्ववृत्तापेक्षणेऽपि स्मृत्यध्ययनापेक्षयाप्युपपत्तेः वेदाध्ययनानन्तर्यवाचित्वे मानाभावात् । अतएव सूत्रे धर्मजिज्ञासेत्येव प्रतिज्ञातम् । यद्यपि च न कृत्स्नवेदाध्ययनस्य धर्माधर्मविचारहेतुत्वम्, उपनिषदध्ययनस्य तद्धेतुत्वाभावात्; तथापि चिकीर्षितविचारैकदेशे हेतुत्वेनाप्यानन्तर्यं उपपद्यत एवेति न बाधकम् ॥

**( धर्मपदस्याधर्माद्युपलक्षणत्वम् )**

सूत्रेच यद्यपि धर्मजिज्ञासेत्येवोक्तम्; तथापि धर्मप्रतिपादकवेदाध्ययनस्य धर्मविचारप्रयोजनं विना निष्फलत्वापत्त्या धर्मविचारहेतुत्वात् कृत्स्नवेदान्तर्गतनिषेधाध्ययनरूपकारणोपलक्षणत्वे धर्मपदमधर्मादीनामप्युपलक्षणं द्रष्टव्यम् । इतरथा धर्ममात्रस्यैव विचारविषयत्वे विधिसन्निहितार्थवादादीनां विध्येकवाक्यतया धर्मविचारोपयोगित्वसंभवेन तदध्ययनस्य दृष्टार्थत्वस्येव निषेधाभ्यनुज्ञाद्यभावे तदध्ययनस्यादृष्टार्थत्वस्यैवापत्तेः । उपलक्षकधर्मशब्दस्यैव साधारण्येन प्रयोगे प्रयोजनं तु बहुविषयसंक्षेपतया आवश्यकत्वं धर्मविचारस्येति ज्ञापनमेव । अभ्यनुज्ञाविधिविषयः क्वचिद्धर्माधर्मव्यतिरेकप्रदर्शनार्थं विचार्यमाणोऽपि नासङ्गत इत्येव युक्तम् । अतएव जिज्ञासा सूत्रे प्रतिज्ञा, तत्र प्रमाणमात्रनिरूपणस्य प्रथमाध्यायार्थत्वं, द्वादशाध्यायानां च जिज्ञासासूत्रपरिकरत्वं चाभिप्रेत्य "सोऽरोदी"दित्यादिनिषेधार्थवादानां प्रथमाध्यायेऽधर्मप्रामाण्यविचारः, षष्ठाध्यायादौ च "न कलञ्जं भक्षयेत्" इत्यादिवाक्यार्थाधर्मविचारोऽपि कृतो नासंगतः । एतदभिप्रायेणैव तत्र द्वादशलक्षण्यां धर्माधर्मौ जैमिनिना विचारितौ **इत्युक्तम्—पूज्यपादैर्भाट्टरहस्ये** ॥

**( अधर्मजिज्ञासेत्यकारप्रश्लेषखण्डनमण्डने )**

**यत्तु**—अधर्मविचारस्याथसूत्रप्रतिज्ञाविषयत्वोपपत्तये अधर्मजिज्ञासेत्यकारप्रश्लेषः **शास्त्रदीपिकायामेतत्सूत्रव्याख्याने कृतः**, स वाक्यावृत्तिदोषापत्तेरयुक्तः; वाक्यावृत्तिरूपवाक्यदोषापेक्षया पदगतलक्षणाङ्गीकारस्य "जातपुत्रः कृष्णकेश" इत्याद्याधानवाक्ये सर्वैरप्युक्तत्वाच्च ॥ अस्तु वा सूत्रे वाक्यावृत्तेरलंकाररूपत्वेनादुष्टत्वादकारप्रश्लेषेणाधर्मस्यापि तद्विषयत्वम् ॥

**( धर्मप्रतिस्पर्धितयाऽधर्मस्य विचार्यत्वमिति-भाट्टालंकारमतखण्डनम् )**

**यदपि**—भाट्टालंकारकृता अधर्मस्य क्वचिद्धर्मप्रतिस्पर्धितया निरूपणीयत्वेऽपि शास्त्रविषयत्वं धर्मस्यैव—**इत्युक्तम्**, **तद्विधिसन्निहितपठितानां** "वायुर्वै क्षेपिष्ठे"त्यर्थवादानां यथा धर्मप्रामाण्यविचारः, तथैव निषेधसन्निधिपठितानां सोऽरोदीदित्यादीनामधर्मप्रामाण्यविचारस्यापि भाष्यकारादिभिः प्रदर्शितत्वात् प्रतिस्पर्धित्वस्य दुर्वचत्वाच्चायुक्तम् । नञ्भेदे भेदाभावरूपतया भेदप्रतिस्पर्धितत्वस्येवाधर्मे धर्माभावरूपतया तद्युज्यते; तथात्वे भोजनादौ धर्मत्वाभावेन अधर्मत्वापत्तेः, तस्माद्धर्माधर्मौ तुल्यतयैव प्रथमसूत्रे प्रतिज्ञातौ स्वरूपप्रमाणफलैः साभासैरुत्तरत्र शास्त्रे विचार्येते इत्येव सम्यक् ॥

**( धर्मो यागादिरिति निरूपणम् )**

धर्माधर्मपदस्य काणादमते यद्यप्यपूर्वाभिधायित्वम्; "धर्मः क्षरति कीर्तनात्" इत्यादावपि तथैव व्यवहारदर्शनात्, तथा-च यद्यपि अपूर्वस्य प्रत्यध्यायं विचाराभावेन न शास्त्रप्रतिज्ञाविषयत्वं तद्विचारस्य युज्यते; तथापि यागादिकर्म कुर्वति तत्रापूर्वज्ञानशून्यैरपि धार्मिकपदप्रयोगात् "धर्मं चर" इति श्रुतौ भागवतादिषु च "धर्मस्स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः । नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्" इत्यादौ "इज्याचारदयाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्" इति स्मृतौ 'एषां मध्येऽयं परमो ब्राह्मण' इत्यत्र षष्ठ्यन्तपदनिर्दिष्टानां ब्राह्मणत्ववदिज्यादीनां धर्मत्वप्रतीतेरदृष्टे च विहितनिषिद्धधर्माधर्मरूपपदार्थजन्यत्वसंबन्धेन

लक्षणयापि प्रयोगोपपत्तेर्नादृष्टवाचि धर्माधर्मपदम्, अपितु तज्जनकविहितनिषिद्धक्रियागुणद्रव्यादिष्वेव शक्तमिति क्रियादिरूपमेव विचारप्रतिज्ञाविषयः प्राधान्येन । युक्तमेव तत्। स्वरूपभेदप्रमाणे च प्रथमाध्यायद्वयेन तृतीयादिभिश्च तत्साधनादीनि निरूप्यन्ते इति सर्वमपि शास्त्रं जिज्ञासापरिकर एव ॥

धर्माधर्मस्वरूपं च प्रमाणनिवेशमन्तरा लक्षणकरणेनाशक्यमिति एकनाल्यैवान्ययोगायोगव्यावृत्तिभ्यां प्रमाणस्वरूपे ज्ञातुं द्वितीयसूत्रम्—**चोदनालक्षणोऽर्थो धर्मः इति** ॥

**( चोदनापदस्य वेदपरत्वेन मन्त्रादिकल्प्यविधिविधेयस्यापि धर्मत्वलाभः )**

अर्थ्यते फलजनकत्वेन प्रार्थ्यते यः स चोदनाप्रमाणको धर्मः, चोदनाप्रमाणकेष्टसाधनताक इति यावत् । **तत्र ये**—जिज्ञासासूत्रे धर्मप्रमाणमात्रस्य प्रतिज्ञानात् "वेदोऽखिलो धर्ममूलम्" इत्यादिस्मृत्या च वेदस्यैव तत्प्रमाणत्वावगतेश्चोदनासूत्रेऽपि चोदनापदस्य प्रवर्तकत्वपर्याप्त्यधिकरणमन्त्रार्थवादनामधेयोपेतविधिवाक्यवाचित्वेन सर्ववेदविषयत्वात् अर्थवादादीनामपि चाग्रे धर्माधर्मप्रमाणत्वेन निरूपणात् वेदाध्ययनस्यानन्तर्यप्रतियोगितयाऽन्वयात् वेदपरत्वमेव । अतएव चोदनानिर्दिष्टो यः प्रमाणपरिग्रहः सप्रकारः स आद्येन लक्षणेन प्रपञ्चित इति **बृहट्टीकायाम्** । "सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः । विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते" इति **वार्तिकेऽपि** तथैव दृश्यते । तेन चोदनैव प्रमाणमिति नियमेऽपि अर्थवादप्रमाणनिरूपणमग्रे नासंगतमिति—**मन्यन्ते, तेषां** मतरीत्या धर्माधर्मलक्षणे वेदस्यैव प्रमाणत्वेन निवेशः सुस्थिर एव । अतो मन्त्रार्थवादादिकल्प्यविधिविधेये वेदप्रमाणकत्वाद्धर्मत्वलाभः ॥

**(चोदनायाः साध्यसाधनेतिकर्तव्यताबोधकपदसमुदायपरत्वमिति पार्थसारथिमिश्रमतनिरूपणम्)**

**येषां तु मते**—जिज्ञासासूत्रे धर्माधर्मविषयप्रमाणमात्रे प्रतिज्ञातेऽपि "चोदनासूत्रे चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः" इति प्रमाणत्वमिह प्रसिद्धमुक्त्वेह धर्मं प्रति चोदनाया इत्याद्यनेकभाष्यवार्तिकस्वारस्यात् अवयवव्युत्पत्तिवशाच्च विध्युद्देशापरपर्यायसाध्यादिविशिष्टक्रियाप्रतिपादकपदसमूहात्मकवाक्यपरत्वमेव, सैव प्रमाणमित्येव च नियमः, प्रवर्तकत्वपर्याप्त्यधिकरणमन्त्रार्थवादनामधेयोपेतविधिवाक्यवाचित्वे कथंचिदर्थवादनिरूपणस्याद्यलक्षणसंगतत्वेऽपि तद्बहिर्भूतस्मृत्यादिविचारस्यासङ्गतत्वापत्तेः । नच तवापि चोदनातिरिक्तस्यापि प्रमाणस्य निरूपणेन चोदनैवेति नियमव्याकोपः; नियमानां तुल्यकक्ष्यन्युदासफलत्वप्रसिद्धेरर्थवादस्मृत्यादीनां च तच्छेषत्वेन तन्मूलत्वेन च प्रमाणस्य चोदनातुल्यकत्वाभावात् । अतएव इतिकर्तव्यतास्थानीयस्यार्थवादस्मृत्यादेः चोदनाप्रामाण्यप्रतिज्ञयैव प्रामाण्यस्य प्रतिज्ञाततत्वात्समस्तस्याद्यलक्षणस्य चोदनासूत्रपरिकरत्वमाचार्यैरुक्तम् "चोदनासूत्रनिर्दिष्टो य" इत्यादिना । तच्च प्रशस्तत्वादेतन्मन्त्रोपकृतेनानेन कर्मणा स्वर्गादि साधयेदित्येवंरूपायां धर्मप्रमायां चोदनया जन्यमानायां अर्थवादानां प्राशस्त्यरूपपदार्थोपस्थापकतया मन्त्राणां पदार्थस्मारकतया नामधेयानां करणविशेषनिर्धारकतया सहकारिभूतानां स्मृत्यादीनां चोपस्थापकतया चोदनाप्रामाण्यप्रतिज्ञाविषयत्वं परिग्रहशब्दोपादानात्प्रतीयते । नह्येतावता चोदनाप्रामाण्यप्रतिपादनमेव; अनुपपत्तेः । संभावितमात्रस्य तु तथात्वे सर्वस्मिन् अध्याये तस्यैव करणात् प्रवृत्तिनिवृत्तिसद्भावात् स उपपद्यते । तस्मात् जिज्ञासासूत्रे यावद्धर्माधर्मप्रमाणजातमुपक्षिप्तं, तत्र त्र्यंशभावनाविषयप्रवर्तनाप्रतिपादकपदसमुदायमात्रवचनं चोदनाशब्दमङ्गीकृत्य तस्यैव प्रधानभूतस्य धर्माधर्मप्रामाण्यं चोदनासूत्रे प्रतिज्ञातं, तदेव प्रथमपादे कात्स्न्र्येन निरूपितम् । चोदनातिरिक्तानामर्थवादादीनां वेदभागादीनां स्मृत्यादीनां चाप्रधानभूतानामपौरुषेयवेदतुल्यत्वात्परिग्रहदार्ढ्याच्च संभावितत्वात् जिज्ञासितं प्रथमसूत्रप्रतिज्ञातं प्रामाण्यं निरूप्यते प्रसंगेनेति पार्थसारथिमिश्राभिप्रेतमेव युक्तम्—**इति** ॥

**(उक्तमतखण्डनेन पूर्वोक्तमतव्यवस्थापनम्)**

**तेषां मते** विध्युद्देशापरपर्यायरूपैव चोदना तल्लक्षणघटिका । अतएव विधितात्पर्यविषयीभूतेष्टसाधनताकत्वमित्याद्येव तल्लक्षणं साधनिकैः क्रियते । तथापि लौकिकचोदनाविषयीभूतेष्टसाधनताकेऽतिव्याप्तिवारणाय अवश्योपादीयमाने वैदिकपदे लाघवाद्विधिपदं विहाय वेदपदमेव केवलं दातुमुचितम् । यद्यपि वा लौकिकलिङादिप्रयोगेऽज्ञातज्ञापकत्वाभावात् न विधित्वमिति विधिपदेनैव तद्वारणम्; तथापि मन्त्रार्थवादमूलकेष्टसाधनताबोधविषये अर्थवादानामेव प्रमाणत्वात् तत्साधारण्यलाभाय वेदपदमेवं प्रवेशनीयमित्यभिप्रेत्य वेदघटितमेव लक्षणं पूज्यपादैर्भाट्टरहस्ये उक्तम्—**वेदबोधितश्रेयःसाधनताकत्वं धर्मत्वम्—वेदबोधितानिष्टसाधनताकत्वमधर्मत्वम्—इति** ॥

**( दलप्रयोजननिरूपणपूर्वकं भाट्टरहस्योक्तधर्मलक्षणस्य लक्ष्येषु समन्वयः )**

अस्ति चेदं ज्योतिष्टोमकलञ्जभक्षणादौ; तयोरिष्टानिष्टसाधनत्वस्य वेदबोधितत्वात् । वेदबोधितत्वं ब्रह्मस्वर्गनरकादावपि **इत्युत्तरदलम्;** तेषामिष्टानिष्टरूपत्वेन तत्साधनत्वाभावात् । अन्नविषभक्षणादौ तृप्तिमरणरूपेष्टानिष्टसाधनत्वसत्वात्तद्वारणा**याद्यम्**; तत्साधनत्वस्य लोकत एवावगतत्वात् । वेदबोधितत्वं च वेदजन्याज्ञातज्ञानरूपाबाधितप्रतीतिविषयत्वं, तेना "ग्निर्हिमस्य भेषजम्" "तरति शोकमात्मवित्" इत्यादिवाक्यजन्यशोकशब्दवाच्याविद्यानिवृत्तिसाधने आत्मज्ञाने हिमनिवृत्तिजनके चाग्नौ नातिव्याप्तिः; तत्साधनत्वस्य प्रमाणान्तरज्ञातत्वात् । एतादृशाज्ञातज्ञापनत्वलाभार्थमेव वेदबोधितत्वं वेदातिरिक्तप्रमाणेन स्वातन्त्र्येणाबोध्यत्वे सति वेदबोध्यत्वमित्यादिना तत्रैव विवृतं पूज्यपादैः । अतएव अज्ञातत्वमपि स्वा-

नुपजीविमानान्तरकृतं द्रष्टव्यम् । तेन प्रत्यक्षदृष्टश्रुतिमूलकस्मृत्यादिबोध्येष्टसाधनताके नाव्याप्तिः, आपातप्रतिपन्नेष्टानिष्टसाधनत्वस्यापि वेदबोधितत्वात् तत्रातिव्याप्तिवारणायाबाधितेति । वेदपदं च न पारायणविधाविव मन्त्रब्राह्मणग्रन्थपरम्; असंभवापत्तेः, नापि तदन्तर्गतवाक्याभिप्रायम्; लिङ्गादिकल्प्याश्रुतवाक्यप्रतिपाद्ये तदनापत्तेः, अपित्वपौरुषेयवाक्यपरम् । **नच**—ब्रह्मणोऽपि जगत्कारणत्वेन श्रेयःसाधनत्वात् तस्य च "यतोवे"त्यादिवेदैकगम्यत्वेन तत्रापूर्वलक्षणस्यातिव्याप्तिरिति—**वाच्यम्**; लक्षणे तच्छ्रेयस्त्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वस्य विवक्षितत्वात् । श्रेयःपदं चात्र स्वयंप्रथितफलपरम्, अतो न क्रतूपकारफलमादाय प्रयाजाद्यङ्गेषु होमादिनिवृत्तिफलमादाय द्रव्यदेवतादौ चातिव्याप्तिः । "नानृतं वदेत्" इति क्रतुप्रकरणगतनिषेधेन नरकरूपानिष्टजनकत्वाबोधेऽपि क्रतुवैगुण्यजनकत्वबोधनमात्रेणापि अनृतवदनादावधर्मत्वमुपपद्यत इति न तत्राव्याप्तिः । अङ्गेषु धर्मत्वाभावव्यवहारश्च भाष्ये को धर्मः ? कानि साधनानि ? इति स्वरूपजिज्ञासतः पृथक्साधनजिज्ञासया स्पष्टं प्रतीयते । वाजपेयानुष्ठानं जानतां तदनुष्ठातरि धार्मिकोऽयमिति व्यवहारस्तु प्रधानभूतवाजपेयधर्मत्वस्य साधने उपचारात्, वाजपेयानुष्ठानमजानतां तदेकदेशानुष्ठातरि तद्व्यवहारस्तु विहितक्रियात्वसादृश्याल्लाक्षणिकएव; अवयविनि प्रयुज्यमानस्य शब्दस्यावयवेऽपि लोके बहुशः प्रयोगदर्शनात् । विवाहार्थानृतवदनविधिना च निषेधातिक्रमनिमित्तदोषाजनकत्वमात्रमेव बोध्यते, नत्विष्टजनकत्वमिति धर्मलक्षणाभावान्न तत्रातिप्रसङ्गः । "नातिरात्रे षोडशिनं गृह्णाति" इति निषेधेन च ग्रहणविध्यविरोधायानिष्टसाधनत्वानाक्षेपादेतदभावेऽपीतराङ्गैः क्रतूपकारसिद्धेरेवाक्षेपान्न षोडशिग्रहणस्य निषेध्यत्वेऽप्यधर्मत्वम् ॥

## ( आत्मज्ञानधर्मत्वसमर्थनम् )

**यद्वा**—"इज्याचारदयाऽहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्" इत्येवमादावात्मज्ञानेऽपि धर्मशब्दप्रयोगात् श्रवणमनननिदिध्यासनादिसहकृतात्मदर्शनस्यानाद्यनिर्वचनीयभावरूपाज्ञाननिवृत्तिजनकत्वस्य केनापि प्रमाणेनाऽज्ञातत्वात् योगजन्यात्मज्ञानस्यैव विशिष्टवेषेण परमधर्मत्वोक्तेः ज्ञानेऽपि धर्मत्वमेवेति युक्तम् ॥ **नच**—"तरति शोकमात्मवित्" इत्याद्युपनिषद्वाक्यानां अर्थवादरूपत्वेऽपि तत्कल्प्यादात्मज्ञानं साधयेदित्याद्यात्मज्ञानविधेरुत्पत्तिप्रतीतेः कथमबाधितत्वम्? इति—**वाच्यम्**; तथाविधवाक्यानामर्थवादरूपत्वेऽपि तत्कल्प्यादात्मज्ञानं साधयेदित्याद्यात्मज्ञानविधेरुत्पत्तिप्रतीतेरबाधितत्वात् । तद्विधिविषयस्यात्मज्ञानस्य फलजिज्ञासायां "तरति शोकमात्मवि"दित्यार्थवादिकशोकापरपर्यायानाद्यविद्यानिवृत्तिरूपफलप्रतीतेरप्यबाधितत्वात् लक्षणसंभवेन धर्मत्वोपपत्तेः । अस्ति च श्रवणादिविधिप्रायपाठे "आत्मा वा अरे द्रष्टव्यः" इति स्पष्टो विधिरिति न तत्कल्पनाक्लेशोऽपि । नच ज्ञाने प्रमाणवस्तुपरतन्त्रत्वेन विध्यनुपपत्तिः; ज्ञानस्य स्वतोऽविधेयत्वेऽपि कालाकाशादीनां आश्रयाविष्टत्वेनेव तदनुकूलमनःप्रणिधानादिव्यापाराविष्टत्वेन विधेयत्वोपपत्तेः । इतरथा श्रवणादीनामप्यन्ततो ज्ञानरूपत्वेन तत्रापि श्रोतव्य इत्यादिविध्यनुपपत्तेः । **एतेन**—ज्ञाने विध्यनुपपत्तेः द्रष्टव्य इति तव्यप्रत्ययस्यार्हार्थत्वमङ्गीकृत्य विहितनिषिद्धत्वाभावेनात्मज्ञानस्य धर्माधर्मबहिर्भूतत्वमेव । अतएव कर्मोपासनाकाण्डद्वयात् ज्ञानकाण्डं भिन्नम् । "अयं तु परमो धर्म" इत्यत्र दर्शनशब्दः करणल्युडन्तः । तथाच सविकल्पसमाध्यन्तेन योगेनात्मज्ञानसाधनभूतो निर्विकल्पसमाधिरेवात्मदर्शनपदेनोच्यते इति तस्यैव धर्मत्वम्, नात्मज्ञानस्य । भावल्युडन्तत्वाऽग्रहे तु सर्वकर्मफलानां ज्ञानफले अन्तर्भावात् ज्ञानस्य परमधर्मत्वोक्तिः प्रशंसारूपैवेति कस्यचिदुक्तं—**अपास्तम्**; अनाद्यविद्यावासितान्तःकरणानां संसारनिमग्नानां कथमप्यात्मज्ञानवार्तामप्यकुर्वतां नराणामात्मज्ञानविधायकपरतयोपदेशपरत्वे संभवति निरर्थकप्रायार्हार्थकत्वकल्पनाया अन्याय्यत्वात्, उपासनानां धर्मत्वेऽपि विचार्यतावच्छेदककिंचिद्रूपभेदमादाय कर्मकाण्डाद्भेदस्येव ज्ञानस्य धर्मत्वेऽपि कर्मोपासनाकाण्डद्वयाद्भेदस्योपपत्तेश्च, स्वरसतः प्रतीयमानात्मज्ञानरूपफलपरत्वमपहाय दर्शनपदस्य करणल्युडन्तत्वकल्पनया साधनपरत्वकल्पने निमित्ताभावाच्च, निर्विकल्पसमाध्यन्तयोगस्य योगशब्दार्थत्वात्तदेकदेशे प्रमाणाभावाच्च । नहि हास्यादिव्यङ्ग्यार्थज्ञापनाभावे "एषामयं परमो ब्राह्मणः"इतिवाक्यमब्राह्मणे शूद्रादौ प्रयुज्यते । प्रकृते ऋषीणां व्यङ्ग्यार्थज्ञापने तात्पर्याभावात्, प्रत्युत परमो ब्राह्मणः इत्यनेन इतरस्य ब्राह्मणत्वोक्त्या षष्ठ्यन्तनिर्दिष्टानां ब्राह्मणत्वप्रतीतिवत् अस्मिन्वाक्येऽपि ज्ञानस्य धर्मत्वोक्त्या इज्यादीनां धर्मत्वप्रतीतेरेव हेतोर्योगादिक्रियाणां धर्मत्वस्य भाट्टालंकारैः प्रसाधनाच्च । अतो युक्तमेवात्मज्ञानस्य धर्मत्वम् ॥

## ( नित्यनैमित्तिकानामपि पापक्षयसाधनत्वेन धर्मत्वसमन्वयः । तत्र न्यायसुधाकृन्मतोपपादनं च )

**नच**—नित्यनैमित्तिककर्मविधिषु फलाश्रवणात् कथमेतेषां पूर्वोक्तलक्षणविषयत्वेन धर्मत्वम्? इति—**वाच्यम्**; तत्रापि सर्वाशक्त्यधिकरणे मिश्राद्युपपादितरीत्या "पूर्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति" इत्यादिस्मृतिभ्यो, "यद्रात्र्या पापमकार्षम्" इत्यादिमन्त्रैश्च पापक्षयरूपफलकल्पनावश्यंभावेन पूर्वोक्तलक्षणसत्वेन धर्मत्वोपपत्तेः । यद्यपि न्यायसुधाकृतो नैतन्मतम्, यथोक्तं यावज्जीवाधिकरणे तेन—"संध्योपासनमात्राद्धि सर्वपापक्षये सति । अग्निहोत्राद्यनुष्ठाने कः प्रवर्तेत बुद्धिमान्? । एकस्य तु क्षये कस्येत्यवगन्तुं न शक्यते" इति; तथापि तेन स्वकाले क्रियमाणानां नित्यादीनामकरणजन्यदोषाभावफलकत्वस्य तत्कालेऽन्यकरणस्य वा पापजनकत्वेन तत्क्षयस्य फलत्वेनाभ्युपगमात् उक्तस्मृतिमन्त्रेभ्यश्चातिक्रान्तेऽपि काले विहिताकरणोत्पन्नदोषनाशाय कर्तव्यत्वाभ्युपगमात् संभवत्येव तन्मतेऽपि तेषां उक्तविधं धर्मत्वम् ॥

## ( दध्यादिद्रव्याणां धर्मत्वमिव रजतादीनामधर्मत्वमिति व्यवस्थापनम् )

एवंच यथैव "दध्नेन्द्रियकामस्य" "यदि वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुयात्" "षष्टे अन्नाद्यकामस्ये"त्यादिविधिबोधिततत्तच्छ्रेयःसाधनताकेषु द्रव्यगुणकालादिषु पूर्वोक्तलक्षणसत्त्वाद्धर्मत्वम्, तथैव 'बर्हिषि रजतं न देयं' इत्यादिनिषेधबोधितानिष्टसाधनताकरजतादिद्रव्येषु अधर्मत्वमपि युक्तमेव ॥ नचात्र निषेधवाक्येन दक्षिणादानासाधनत्वमात्रमेव बुध्यते, नत्वनिष्टसाधनत्वमपि, तथात्वेऽभ्युपेत्यानिष्टं रजतदातुः क्रतुवैगुण्यानापत्तेरिति कस्यचिद्भ्रान्तस्योक्तं युक्तम्; प्रत्यक्षतो दक्षिणादानसाधनत्वेनावगते रजते प्रस्तरे यजमानाभेदस्येव विधिशतैरपि तदसाधनताबोधस्य कर्तुमशक्यत्वात्। नह्यत्र पुरुषार्थनिषेधवत् नरकसाधनत्वं निषेधवैयर्थ्यपरिहारायाक्षिप्यते; बर्हिःपदोपादानवैयर्थ्यापत्तेः, किंतु क्रतुप्रकरणे "नानृतं वदेत्" इति निषेधवत् क्रतुवैगुण्यजनकत्वमेव, तद्यदि दक्षिणादानक्रियामात्रे बोध्यते, तदा सुवर्णादिदानस्यापि वैगुण्यजनकत्वापत्तिः। तथाच यथाश्रद्धं दक्षिणां ददातीति विधिप्राप्ते यज्ञसंबन्धिदाने दक्षिणात्वेन प्राप्तरजतकरणत्वमेव क्रतुवैगुण्यजनकमित्येवमाक्षिप्यते होमे दधिकरणत्वस्येन्द्रियफलजनकत्ववत्। एतावतैव च दध्यादौ धर्मत्वव्यवहारे सर्वसंप्रतिपन्ने सति केन वा विशेषेण रजतादिद्रव्ये नाधर्मत्वं वदतीति विशेषमालोचयन्तु सुधियः। तस्मादेतदभिप्रायेणैव "नहि फलार्थगुणानुष्ठातॄणां यज्ञे रजताद्यनुष्ठातॄणां च धार्मिकोऽधार्मिक इति व्यवहाराभाव" इत्युक्तं भाट्टरहस्ये पूज्यपादैः। अतएव निषेधावगतानिष्टसाधनताकस्य रजतस्य "सोऽरोदीत्" इत्यर्थवादेनाप्राशस्त्यं बोध्यते। एतादृशज्ञापकाभावे च विशिष्टक्रियाया एव निषेधादनिष्टजनकत्वं यथा कलञ्जभक्षणादावित्युक्तम् ॥

## ( अधर्मलक्षणस्याविद्याद्वैतवासनादावतिव्याप्तिनिरसनम् )

यद्यपि अधर्मलक्षणं "असूर्या नाम ते लोका अन्धेन तमसा वृताः। तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः" इत्याद्युपनिषद्वाक्यबोधितानिष्टसाधनताके अविद्याद्वैतवासनादावतिव्याप्तम्; तथापि तस्यात्मज्ञानप्रशंसापरस्य लक्षणया आत्मज्ञानप्राशस्त्यपरत्वेन आपातप्रतीतशक्यार्थज्ञानस्य लक्षणोत्तरबाधाद्बाधितप्रतीतिविषयानिष्टसाधनताकत्वाभावान्नातिव्याप्तिः। यदि त्वेतादृशनिन्दया द्वैतवासनां त्यजेत् तद्दोषपरिहारार्थमिति विधिः कल्प्येत, तदा तत्र त्यागस्य विहितत्वाद्धर्मत्वमेवेति नानुपपत्तिः। अतो युक्तमेव वेदबोधितश्रेयस्साधनताकत्वं धर्मत्वं, तद्बोधितानिष्टसाधनताकत्वमधर्मत्वमित्येवं लक्षणद्वयम् ॥

## ( धर्मलक्षणे वेदबोधितत्वपरिष्कारः )

**अत्रेदमवधेयम्**—यदि वेदबोधितत्वं वेदजन्याबाधितप्रतीतिविषयत्वं, तद्यदि शाब्दबोधरूपप्रतीतिमादाय, तदा विधेयस्य स्वर्गादिपदसमभिव्याहाराद्यागस्वर्गसाध्यसाधनभावस्य शाब्दबोधविषयत्वेऽपि निषेधस्थले भवन्मते अनिष्टादिवाचकपदसमभिव्याहाराभावे अनिष्टसाधनत्वस्य आक्षेपादेव बोधस्वीकारात् निषेध्यगतानिष्टसाधनत्वस्य कथं वेदजन्यशाब्दबोधरूपप्रतीतिविषयत्वम्? यदि वेदप्रयोज्यप्रतीतिविषयत्वम्, तदा कथं तद्ब्रह्मस्वर्गनरकादावपीत्युक्तं येनोत्तरदलं कृतमिति भाट्टरहस्ये पूज्यपादोक्तं घटते। अतो धर्मलक्षणावैरूप्यादधर्मलक्षणमपि वेदप्रयोज्यानुमितिविषयानिष्टसाधनताकत्वमित्येव कर्तुं युक्तम्। आत्मज्ञानेऽपि यदि "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इति विधिः, तदा तद्विधिप्रयोज्यानुमितिविषयाज्ञाननिवृत्तिरूपेष्टसाधनत्वाविघातान्नाव्याप्तिः। यदा तु न तस्य विधित्वमिति, तदा आत्मज्ञानस्य मास्तु धर्मत्वम्। "अयं तु परमो धर्म" इत्यत्र क्रियारूपयागस्यैव धर्मत्वं विवक्षितम्, नत्वात्मज्ञानस्येत्यपि शक्यं वक्तुमिति न दोषः ॥

## ( श्येनधर्मत्वपक्षः )

उभयविधलक्षणस्यापि च श्येने सत्त्वाद्धर्मत्वमेव। अधर्मत्वं तु श्येनफलस्य हिंसात्मकाभिचारस्यैवेति चतुर्थे व्यक्तीकरिष्यते ॥

## ( अनिषेध्यत्वेन श्येनधर्मत्वस्य बलवदनिष्टानुबन्धित्वेन तदधर्मत्वस्य चोपपादनम् )

**यत्तु भाट्टालंकारकृता**—बलवदनिष्टाननुबन्धित्वमपि धर्मत्वलक्षणे प्रवेश्य श्येनस्य विहितत्वात् कथं न हिंस्यादितिनिषेधविषयत्वाभावे बलवदनिष्टानुबन्धित्वमित्याशङ्क्य वैरिमरणं मया कर्तव्यमिति संकल्पस्य रागतः प्राप्तस्य विध्यसंस्पृष्टस्य निषेध्यत्वात्, **अथवा**—श्येनफलस्य वैरिमरणानुकूलव्यापारस्य दृष्टोपायेनेव श्येनादिनाऽनुष्ठातृजनस्य निषेधातिक्रमसत्त्वात् तदुपपत्तेरित्युक्त्वा नचास्याधर्मपदवाच्यतापत्तिः; अनिष्टानुबन्धित्वेऽपि स्वरूपेण निषेध्यत्वाभावात्, निषेध्यस्यैवाधर्मत्वात्, यदितु स्वयमनिषेध्येऽपि परम्परयाऽनिष्टानुबन्धिन्यधर्मपदं प्रयुज्यते लोके, तदा भवतु श्येनादेरधर्मत्वम्—इत्युक्तम् ॥

## ( अभिचारनिषेध्यत्वोपपादनं श्येनाधर्मत्वपक्षखण्डनं च )

तत्र वैरिमरणं मया कर्तव्यमिति संकल्पस्य विध्यसंस्पृष्टत्वमुक्तमयुक्तम्, संकल्पस्य श्येनाचरणपूर्वभावित्वेन कर्मणो विहितत्वे तत्पूर्वभाविनः तस्यापि कर्मविधायकशास्त्रेण शास्त्रान्तरेण वा विधेरावश्यकत्वात्, विधेयत्वाभावेऽपिवा कर्माविनाभूतत्वेनावर्जनीयत्वाच्च, इतरथा अग्नीषोमीयादिपशुहिंसायामपि पशुमारणं मया कर्तव्यमिति संकल्पस्य निषेध्यत्वेन बलवदनिष्टानुबन्धित्वापत्तेः। संकल्पस्य निषेधविषयत्वेन श्येने विहिते बलवदनिष्टानुबन्धित्वस्य संभवद्वृत्तिकत्वाच्च। दृष्टोपाये निषेधविषयत्वेऽपि विहिते श्येने निषेधातिक्रमस्य वक्तुमशक्यत्वाच्च। स्वरूपेण निषेध्यत्वाभावेनाधर्मत्वाभावे स्वरूपेण विहितत्वेन धर्मत्वाङ्गीकारे बाधकाभावाद्बलवदनिष्टाननुबन्धित्वप्रवेशे प्रयोजनाभावाच्च। **नच**—परंपरयाऽनिष्टानुबन्धित्वादधर्मत्वमेवास्तु इति—**वाच्यम्**; का-

न्यकर्मणां कामनापरित्यागेन विविदिषाद्यर्थमुपयोगस्येव श्येनस्याप्यभिचाररूपफलांशपरित्यागेन विविदिषाद्यर्थोपयोगस्य धर्मत्वफलस्य सत्त्वात्, श्येनादौ सर्वथा बलवदनिष्टानुबन्धित्वाभावे कथमपि प्रवृत्तिकारणाभावात्तद्विषयप्रवृत्तेरनुपपत्तेश्च ॥ अतः श्येनस्य धर्मस्य सत एव परंपरयाऽनिष्टानुबन्धित्वेनाधर्मत्वं वाच्यम् । तस्मात्परंपरयानिष्टानुबन्धित्वेनाधर्मत्वस्यायुक्तत्वाद्धर्मलक्षणे च बलवदनिष्टाननुबन्धित्वप्रवेशे प्रयोजनाभावाच्च श्येनादौ धर्मत्वमेव । अधर्मत्वं तु श्येनफलस्य हिंसात्मकाभिचारस्यैवेत्येव युक्तम् । समर्थितं चैतदेव चोदनासूत्रे शास्त्रदीपिकायाम् ॥

### ( वचनान्तरानुसारेण श्येनाधर्मत्वस्यापि उपपादनम् )

कथं तर्हि "व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च । अभिचारमहीनं च त्रिभिः कृच्छ्रैर्विशुध्यति" इति प्रायश्चित्ताम्नानं शिष्टानां विगर्हणं चोपपद्यते? "परस्योत्सादनार्थं यत्तामसं तदुदाहृतं" इत्यादिवचनालोचनेन तामसत्वनिन्दोन्नीतनिषेधबलेन साक्षादेव नरकसाधनत्वावगमेनाधर्मत्वस्यापि सत्त्वात्तदुपपत्तेः ॥

### ( श्येननिन्दाया नहिनिन्दान्यायविषयत्वाभावः )

**नच**—उदितानुदितहोमविषयप्रत्यक्षविधिविरोधापत्तेरिव सन्निधिपठितानामपि निन्दोन्नीतनिषेधकल्पनमेव न संभवति इति—**वाच्यम्; तत्र नहिनिन्दान्यायेन** विधेयस्तुत्यर्थतया विरोधपरिहारसंभवेऽपि प्रकृते त्रिविधकर्मोपदेशप्रस्तावात् परस्परस्तुत्यभावेन निन्दावैयर्थ्यापत्तेर्निषेधकल्पनस्यावश्यकत्वात् । तथा यज्ञादीनामपि सत्त्वादिगुणभेदेन त्रिविधत्वप्रतिपादनं इह राजसतामसताबुद्ध्या कथं तु नाम परित्यजेत्? सात्त्विकानेवानुतिष्ठेत् इत्येवमर्थमाहेति भाष्यकारैः "परिहारस्त्वपि सर्वस्ये"ति श्लोकावतरणिकायां निषेधविधिकल्पनस्य अनुमोदितत्वाच्च, **आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्** इति न्यायेन स्मार्तस्यापि प्राबल्याच्च, निन्दोन्नीतनिषेधकल्पने तामसस्यापि कर्मणो विहितत्वात् सर्वदा शिष्टानामनुष्ठेयत्वापत्तेश्च । इतरथा तामसयज्ञादीनामपि निषेधविषयत्वानापत्तेः, विहितस्यैव कर्मणः त्रिविधत्वोक्तेः, तामसत्वकथनस्य श्येनादिविषयत्वस्यैवाकामेन वक्तव्यत्वाच्छ्येनादौ तदप्रवृत्तेर्वक्तुमशक्यत्वाच्च ॥ **नच**—इदं भगवद्वचनत्रीविधतया त्रैविध्यकथनपरमेव पूर्वप्रस्तावात् दृश्यते, "विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते" इत्यादिना पाकयज्ञादीनां तामसत्वे कारणान्तराभिधानात् कथं तद्वचनस्य श्येनादियागविषयत्वं युक्तम्? इति—**वाच्यम्**; कथंचित्सात्त्विकादित्रिविधविहितक्रमोपदेशमात्रे भगवत्तात्पर्येऽपि परस्परासंकीर्णलक्षणकरणे तात्पर्याभावेन तमोमात्रस्य नियन्तुमशक्यत्वात्, अन्यथा विधिहीनामन्त्रकजपतपोदानहोमानामतामसत्वापत्तेः, यज्ञगततामसत्वकारणं विनाऽनुष्ठिताभिचारार्थयज्ञस्य तामसत्वानापत्तेश्च । तपसस्तामसत्वकारणस्य परपीडाजनकत्वस्य तपसीव तथाविधयज्ञदानादावपि सत्त्वे भगवतापि तामसत्वाभावस्य दुरुपपादत्वाच्च, "यः स्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नतु" इत्यादिस्पष्टनिषेधैरपि स्वर्गातिरिक्तादृष्टमात्रफलकलोकविद्विष्टधर्मसाधनस्य यागदानहोमतपआदिरूपस्य नरकसाधनत्वावगमात् । एतेनाभिचारजनकश्येनादाविव यत्रापि साक्षा"द्वैरिमरणकामो यजेते"त्येवमभिचाररूपयागस्यैव विधिस्तत्र विहितत्वेन हिंसानिषेधाप्रवृत्तेः परंपरयापि चानिष्टाजनुत्पादकस्य धर्मस्यापि यागस्याधर्मत्वमुपपादनीयम् ॥ **नच**—परस्योत्सादनार्थमिति वाक्ये करणल्युडन्तोत्सादनशब्देन परोत्सादनानुकूलव्यापारोक्तेः तदर्थकर्मणः श्येनादेरेव तामसत्वं प्रतीयते, नतु साक्षादभिचाररूपस्य यागस्येति कथं तामसत्वेन निन्दाविषयत्वम्? इति—**वाच्यम्**; अभिचारजनकश्येनादेस्तामसत्वकथने अर्थादेव साक्षादभिचाररूपस्य कर्मणस्तामसत्वस्य कैमुतिकन्यायसिद्धत्वात् । अतएव तुल्ययोगक्षेमतया निन्दितयोरुभयोरभिचारतज्जनककर्मणोरभिचारमहीनंचेत्यत्राभिचारपदेन संग्रहः क्रियते ॥ नचात्राभिचारपदं लौकिकाभिचारपरम्; विहितयज्ञदानाहीनान्त्यकर्मसमभिव्याहारेण विहिताभिचारपरत्वस्यैवावगतेः । अस्तु वा उभयविधाभिचारपरं, तावतापि न क्षतिः । अत उपाधिरूपयोर्धर्मत्वाधर्मत्वयोः महाभारतीययुद्धे इवैकश्येनादावङ्गीकारे बाधकाभावात् विधिसार्थक्याय नरकन्यूनत्वस्य च कल्पनाद्युक्तमेव पूर्वोक्तधर्माधर्मलक्षणानुसारि धर्मत्वमधर्मत्वं च श्येनादाविति दिक् ॥

### ( वेदाप्रामाण्यनिरासः )

एतादृशपूर्वोक्तलक्षणाभ्यां धर्माधर्मस्वरूपे सिद्धे तत्प्रमाणं तावत् "वेदोऽखिलो धर्ममूलम्" इति वचनाद्वेद एवेति पूर्वोक्तलक्षणयोर्न वेदबोधितत्वासंभवः । वेदस्य च स्वतोऽपौरुषेयत्वेन निर्दोषत्वादबाधितार्थप्रतीतिजनकत्वमपि नासंभवि । बाधितार्थप्रतीतिजनकत्वमप्रामाण्यम् । तच्च द्वेधा । साक्षात् कारणदोषज्ञानाद्वा । वेदजन्यज्ञाने साक्षादन्यथात्वं ज्ञाने तावन्नास्त्येव । तद्धि अबोधकत्वादधिगतबोधकत्वात् बोध्यस्य तथाभूतत्वाभावाद्वा । तत्र न तावदबोधकत्वं वेदे वक्तुं शक्यम्; आकाङ्क्षादियुक्तेभ्यो गृहीतसंगतिकेभ्यो वैदिकपदेभ्यो वाक्यार्थबोधस्यानुभवसिद्धत्वात् । नाप्यधिगतार्थबोधकत्वम्; यागादिस्वर्गसाध्यसाधनभावे प्रत्यक्षादिविषयत्वाभावस्य प्रत्यक्षसूत्र एव निराकरणात् । बोध्यस्य तथाभूतत्वाभावो हि द्वेधा स्यात् अर्थक्रियाकारकत्वादिगुणजन्यज्ञानविषयत्वादिसाधकाभावाद्वा-धकमानाद्वा, तत्र न तावदाद्यः, विषययाथार्थ्येनोत्पन्नस्य ज्ञानस्यार्थक्रियाकारित्वादिगुणपेक्षायां प्रयोजनाभावात्, अतथाभूतस्यापि स्वप्नार्थस्यार्थक्रियाजनकत्वदर्शनेन तथाभूतस्यातथाभूतत्वप्रयोजकत्वे व्यभिचाराच्च । बाधकं मानमपि मिथ्या तदिति ज्ञानं, दुष्टकरणज्ञापितत्वं वा । नच वेदार्थमिथ्यात्वप्रत्ययः संभवति; स्वर्गफलविधिषु क्षणिककर्मणः आमुष्मिकफलकत्वानुपपत्तेरपूर्वावान्तरव्यापाराङ्गीकारेण निरस्तत्वात्,

चित्रादिषु चानन्तरफलानुपलम्भस्य तदर्थसत्वत्वेऽपि चातुर्थिकन्यायेन ऐहिकामुष्मिकत्वेन बाधकाभावात्, कारीरीफलस्य तु ऐहिकस्वभावस्यापि वैगुण्यादनन्तरमनुपलम्भसंभवे तत्रापि बाधकाभावात् ॥

**( वेदापौरुषेयत्वस्य तत्पौरुषेयत्वानुमाने प्रमाणान्तरमूलत्वादिना सोपाधित्वनिरूपणपूर्वकं व्यवस्थापनम् )**

दुष्टकरणज्ञापितत्वमपि न संभवति; यतः शब्दे स्वतः कस्यापि दोषस्यासंभवात् पुरुषदोष एव भ्रमादिस्तद्धेतुर्वाच्यः, सच पदतदर्थसंबन्धस्य पुरुषकृतत्वे तदाश्रितस्य भ्रमादेः तद्बोधाधीनपदार्थज्ञानहेतुकवाक्यार्थप्रमाणेऽपि संक्रान्तितः स्यात्, वेदस्यैव वा पौरुषेयत्वे । तत्र पदपदार्थसंबन्धस्य तावत्प्रतिपाद्यप्रतिपादकभावरूपस्याभिधानक्रियागर्भस्यापि **पदार्थसंबन्धः सर्वोऽन्यस्मात्प्रतिपद्यते, मद्यवहारव**दिति न्यायेन स्वरूपतो ज्ञापितत्वात् प्रवाहानादित्वान्न पौरुषेयत्वम् । तथा वेदस्यापि वेदार्थस्यालौकिकत्वेन तद्विषयस्य वाक्यस्य समूलस्य कर्तृज्ञानस्यासंभवान्न पौरुषेयत्वम् । यदि वेदस्यापि पौरुषेयत्वं तदा योगमहिम्ना सर्वज्ञानां स्वभावतः सर्वज्ञस्येश्वरस्य च ज्ञानप्रामाण्याविशेषेण तदुभयवचसो विशेषस्य वक्तुमशक्यत्वेन मन्वादिस्मृतितुल्यत्वमेव स्यात् ॥ **ननु**—वेदः पौरुषेयः, वाक्यत्वात्, कालिदासादिवाक्यवत्, इत्यनुमानात् काठकादिसमाख्यादर्शनात् "त्रयो वेदा अजायन्ते"ति श्रुतेश्च वेदस्य कथं न पौरुषेयत्वम्? **युक्तंचैतत्**; अन्यथा मन्त्रार्थवादसिद्धप्रलयस्य सत्वेन तदानीमध्येतॄणां वेदस्यापि नाशात् मन्त्रार्थवादाधिगमासंभवेनेतरपदार्थवत् ज्ञानासंभवापत्तेः, अत इतरसृष्टिवद्वेदस्यापि पुरुषकर्तृकत्वमेव । अतएव वक्त्रा यत्प्रतीतिमुद्दिश्य यद्वाक्यमुच्चरितं, तस्य तत्परत्वमिति लोकसिद्धतात्पर्यस्यापि पौरुषेयवाक्ये संभवेन उपक्रमोपसंहारादेर्वेदवाक्यगततात्पर्यनिर्णायककल्पनमपि नापद्यते, सुतरां च शब्दज्ञानप्रामाण्यस्याप्तवाक्याधीनत्वेन शब्दोत्थज्ञानस्याप्रामाण्यानापत्तिश्च । समाख्यानस्य च सिद्धान्त्यभिमतप्रवचननिमित्तत्वेनोपपादने तस्य कुपुरुषसाधारण्येन असाधारणव्यपदेशानुपपत्तिस्तदवस्थैव । अतः पौरुषेय एव वेदः, तथात्वेऽपि "तद्विदां च स्मृतिशीले" इत्युक्तत्वाद्वेदवित्प्रणीतवैषम्यमात्रेणैव स्मृतितुल्यत्वानापत्तिः इति—**चेत्, न**; पौरुषेयत्वे पौरुषेयवाक्यप्रामाण्यस्य तत्कर्तृप्रत्ययाधीनसिद्धिकत्वादवश्यस्मर्तव्यरूपकर्तुर्नियमेनास्मरणात्तदभावप्रतीतेः । नच छन्दोगप्रसिद्धस्य योनिग्रन्थस्य कर्तृस्मरणेन पौरुषेयत्वापत्तिः; तस्य पौरुषेयत्वे साम्न उत्तरमूहग्रन्थस्य पाठेनैव प्राप्त्या "यद्योन्यां तदुत्तरयोर्गायती"तिवचनवैयर्थ्यापत्त्यैवापौरुषेयत्वसिद्धेः । वाक्यत्वहेतुकानुमानमपि प्रमाणान्तरमूलत्वेन सोपाधिकमित्यप्रयोजकम्; पौरुषेयवाक्यं तथैव सत्त्वात्, वेदार्थस्य प्रत्यक्षाद्यग्राह्यत्वात् । "त्रयो वेदा अजायन्ते"त्यादि तु "उच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्ने"ति विधिशेषत्वेनार्थवादरूपत्वान्न स्वार्थे प्रमाम् । यदि चैते विधयः कर्त्रपेक्षाः स्युः, ततः स्वर्गकामविध्यपेक्षितस्वर्गस्वरूपबोधकार्थवादवदिदमपि स्वार्थे प्रमाणं भवेत् विध्यपेक्षितकर्तृप्रतिपादकत्वेन, नत्वेतदस्ति । **एतेन** मन्त्रार्थवादेभ्यः सृष्टिप्रलयसिद्धि**र्निरस्ता**; तेषामपि विध्यन्तरशेषत्वेन स्वार्थे प्रामाण्याभावात्, काठकादिसमाख्याया अपि कठादिषु विशेषवृत्तिप्रवचनातिशयेन केनाप्युपपत्तेः, कठैः परम्परयाऽधीयमानत्वेन वा तत्संभवाच्च । नच मानवादिसमाख्यानामपि प्रवचननिमित्तत्वाप्त्त्या स्मृत्यादेरपि तथात्वापत्तिः; आद्यन्तनामावलिस्मरणरूपदृढकर्तृस्मरणेन तासां कर्तृपरत्वात् । अतएव 'वासिष्ठस्य आर्षे विश्वामित्रस्याऽऽर्षे' इति प्रतिवाक्यं कर्तृस्मरणमपि ऋषिदर्शनादिस्मरणात् सृष्ट्यादौ तत्र वाक्यदर्शनमात्रेणैवोपपन्नमिति न वसिष्ठादिकर्तृत्वसाधकम्; "त्रयो वेदा अजायन्ते"ति श्रुतिबलादग्न्यादिकर्तृकत्ववादिना एतादृशयोगेनैव काठकादिसमाख्यानामुपपादनीयत्वाच्च, कर्त्रजन्यत्वेऽपि यत्प्रतीत्यर्थं यद्वाक्यं तत्परं तदिति तादर्थ्यरूपतात्पर्यस्य वेदेऽप्युपपन्नत्वेन तदनुपपत्त्यापादनस्यायुक्तत्वाच्च, प्रामाण्यघटितयावत्पदार्थानां अर्थाववोधकत्वानधिगतार्थबोधकत्वादिरूपाणां वेदेऽपि संभवेनाऽऽप्तवाक्यजन्यत्वाभावेऽपि तदुपपत्तेश्च । अस्तुवा अर्थवादादिप्रमाणकम् सृष्टिप्रलयादिकं वेदादिनाशश्च; तथापि संसारस्यानादित्वेनैककल्पसमुत्थितं वेदं कल्पान्तरे ईश्वरः सर्वज्ञत्वादुपदिशतीत्येव कल्पनालाघवेनोपपत्तौ प्रतिकल्पं रचनाकल्पनागौरवस्याग्राह्यत्वेन नेश्वरकर्तृकत्वकल्पनं युक्तम् । संसारस्य सादित्वे हि अभिनवानुपूर्वीविरचनमवश्यं अभ्युपेयं स्यात् । नच तत्संभवति; सृष्टेः पूर्वं वेदाभावात् वेदैकसमधिगम्यधर्माधर्माभावे तदनुष्ठानाभावात् कल्पान्तरोत्पन्नप्राणिनां सुखदुःखोत्पत्त्यनुपपत्तेः, वाक्यरचनस्य जन्यज्ञानपूर्वकत्वदर्शनेन ईश्वरे जन्यज्ञानकल्पनाप्रसंगापत्तेश्च, नित्यज्ञानस्य वेदप्रामाण्याधीनसिद्धित्वेनेतरेतराश्रयात्, 'सति वेदप्रामाण्ये तद्बोधितनित्यज्ञानवत्त्वेन ईश्वरस्य तत्कर्तृत्वं, तत्कर्तृत्वेन च वेदप्रामाण्यमिति । **एतेन**—क्षित्यादिकं सकर्तृकं, कार्यत्वात्, इत्यनुमानेन नित्यज्ञानवदीश्वरसिद्धौ तदीयज्ञानमूलकत्वेन वेदस्य प्रामाण्यम् इति—**परास्तम्**; तावताप्यनित्यज्ञानवत एव क्षित्यादिकर्तृसिद्धौ तदीयज्ञानस्यापि मूलप्रमाणं विना प्रामाण्यासिद्धेः । अतएव "यस्य निःश्वसितं वदा" इति श्रुतिरपि निःश्वासवदप्रयत्नसिद्धत्वं वदति; वेदस्य चास्मर्यमाणकर्तृकत्वेनाजन्यत्वस्यैव प्रतीतेः । आनुपूर्वीविशेषविशिष्टवर्णात्मकस्य वेदस्य वर्णस्वरूपेण नित्यत्वेऽपि आनुपूर्वीविशेषस्योच्चारणसामग्रीजन्यत्वेनानित्यत्वम् । सगकाले च तज्जातीयानुपूर्वी काचिदस्तीति कार्यरूपेणानादित्वेनैव नित्यत्वं, न गगनादिवत् स्वरूपेणानादित्वेनेत्यर्थे सिद्धे कथमप्यप्रामाण्यकारणाभावे स्वत एव निर्दोषादवाधितप्रतीत्युत्पत्तिसंभवाद्युक्तमेव पूर्वोक्तं धर्माधर्मलक्षणद्वयम् ॥

**आम्नायस्य ॥ "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयती"त्याद्यर्थवा-**

**( प्रथमपादेन त्रिपाद्याः द्वेधा प्रसंगेनाक्षेपेण च संगतिनिरूपणम् )**

जिज्ञासासूत्रे च धर्माधर्मस्वरूपं यथा प्रतिज्ञाविषयः, तथा यावत्तत्प्रमाणजातमपि प्रतिज्ञातम्। तदेवाग्रे निरूप्यते । तत्र विधिनिषेधार्थवादमन्त्रनामधेयात्मको वेदो मन्वादिस्मृतिशिष्टाचाराश्च धर्माधर्मयोः प्रमाणानि । तत्र पूर्वपादे समस्तस्यैव वेदस्य पौरुषेयत्वाशङ्कया तदवयवभूतानां चोदनानामपि पौरुषेयत्वद्वारा प्राप्तमप्रामाण्यं पूर्वोक्तयुक्तिभिः प्रसाधितापौरुषेयत्वेन निराकृत्य त्र्यंशभावनाविषयप्रवर्तनानिवर्तनाप्रतिपादकपदसमुदायरूपविधिनिषेधापरपर्यायचोदनाया धर्माधर्मप्रमोत्पत्तेः प्राधान्येनैव चोदनासूत्रे तयोर्धर्माधर्मप्रामाण्यं साधितमिति तदवयवत्वेनोपस्थितानां चोदनातिरिक्तार्थवादादिवेदभागादीनां स्मृत्यादीनां चाप्रधानभूतानां अपौरुषेयत्वादितुल्यत्वात् परिग्रहदार्ढ्याच्च संभावितत्वाज्जिज्ञासितं प्रथमसूत्रप्रतिज्ञातं चोदनाप्रसक्तं धर्माधर्मप्रामाण्यमस्ति न वेति प्रसङ्गेन निरूपितम् ॥ **अथवा**—चोदनार्थमप्युक्तेनापौरुषेयत्वेन समस्तस्यापि सिद्धप्रायं प्रामाण्यं चोदनांशे धर्माधर्मविषयप्रवृत्तिजनकेष्टानिष्टसाधनत्वानुमापकप्रवर्तनानिवर्तनारूपानधिगतार्थबोधकत्वान्निर्वाहेऽपि तदतिरिक्तेषु स्पष्टं तदनुपलम्भात् कथमुक्तप्रामाण्यं युज्यते? इत्याक्षेपनिरासेन स्थिरीकर्तुं त्रिपादीमारब्धवान् महर्षिः "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते" इत्यादिना ॥

**( तत्र शास्त्रदीपिकादृतविचारप्रकारखण्डनपूर्वकं वायुर्वै इत्यादि भाट्टदीपिकावतरणम् )**

अत्र पूर्वोक्तप्रसंगाक्षेपसंगतिद्वयेनापि विध्यतिरिक्तानां सर्वेषामेवैकदा सामान्यतोऽप्रामाण्यं धर्माधर्मविषयं प्रतिपाद्यते । **अतदर्थानां** अक्रियार्थानां अर्थवादादीनां **आनर्थक्यं** पुरुषार्थपर्यवसाय्यभिधेयार्थराहित्यम् धर्माधर्मप्रमितिरूपप्रयोजनशून्यत्वम् । कुतः ? **आम्नायस्य क्रियार्थत्वात्** अंशत्रयान्वितभावनारूपक्रियाभिधायित्वेन तेनैव रूपेण धर्माधर्मप्रमाणत्वात्। अतः नित्ययोः विधिप्रतिषेधयोरुक्तं धर्माधर्मप्रामाण्यं तत्कारि न भवति; नित्यक्रियावाचकपदसमूहातिरिक्तमर्थवादादीत्यर्थकाद्यसूत्रे तथैव प्रतीतेः । अतः सामान्यतः सर्वेषामप्रामाण्यं पूर्वपक्षीकृत्य अध्ययनविधिना दृष्टार्थत्वानुरोधेन सकलस्य वेदस्य पुरुषार्थपर्यवसाय्यर्थपरत्वबोधनात् तेषामप्यध्ययनविधिविषयत्वात् एकस्यैवाध्ययनविधेः विध्यंशे दृष्टार्थत्वं अर्थवादांशे अदृष्टार्थत्वमिति कल्पने वैरूप्यापत्तेः किंचित्पुरुषार्थपर्यवसाय्यर्थपरत्वेनास्त्येव तद्विषये तेषामपि प्रामाण्यमिति सामान्यतः सिद्धान्तयितव्यम् ॥ नच—अध्ययनविधिदृष्टार्थत्वव्युत्पादनं जिज्ञासासूत्रे कृतमिति नात्र साधयितव्यम् इति —वाच्यम् "दृष्टो हि तस्यार्थः कर्मावबोधनं नामे"ति न्यायेन विधिनिषेधभागमात्रस्यैव तत्सिद्धेः, तावन्मात्रेणापि च अथशब्दोक्तस्य धर्मजिज्ञासायां अध्ययनानन्तर्यस्योपपत्तेः । 'अतोऽत्रैव विधिनिषेधातिरिक्तानां सर्वेषामपि सामान्यतः तादृशार्थपरत्वं साधनीयम् । नहि स्तुतिनिन्दाद्वारेण अर्थवादानां क्रियार्थत्वं नामधेयमन्त्राणां तत्र द्वारविशेषव्युत्पादनेन तदर्थत्वं वा अध्ययनविधेः समस्तवेदविषयपुरुषार्थपर्यवसाय्यर्थप्रसाधनं विना युज्यते । अतस्तत्प्रसाध्य अध्ययनस्य दृष्टार्थत्वेऽपि अर्थवादेभ्यः पुरुषार्थपर्यवसाय्यर्थप्रतीत्यभावे अध्ययनविधिबोधितं दृष्टार्थत्वमपि न संभवतीति पुनः आम्नायस्येति सूत्रावृत्त्या अर्थवादमात्रविषयमप्रामाण्यं पूर्वपक्षीकृत्य स्तुतिनिन्दारूपविशेषद्वारा तत्साध्यते । एवं स्मृतिपरिच्छेददरूपद्वारेण मन्त्रनामधेययोरपीति सामान्यतः सर्वेषां विध्यतिरिक्तानां प्रामाण्याप्रामाण्यचिन्ता पूर्वं कर्तव्येति मिश्राभिमतं शास्त्रदीपिकायां प्रतिभाति ॥

तथा सूत्रेणैवावृत्त्या भिन्नभिन्नोपपत्तिकविचारद्वयप्रतिपादने लोकवेदाधिकरणवदत्राप्यधिकरणद्वयव्यवहारापत्तेर्भाष्यवार्तिकयोः विशेषविचारपूर्वपक्षशेषत्वेन सामान्यविचारपूर्वपक्षस्य तत्सिद्धान्तशेषत्वेन तत्सिद्धान्तस्य च संकीर्णतयैव वर्णनदर्शनादावश्यकेन विशेषविचारेणैव सामान्यविचारस्यार्थादेव सिद्धेः, सूत्रस्य विशेषविचारेऽप्यर्थसंगतेस्त्वय्यैवोपपादितत्वात् निष्प्रयोजनं सामान्यविचारमुपेक्ष्य मन्त्राद्यपेक्षया पदैकवाक्यतया इतिकर्तव्यतारूपेण च चोदनाप्रत्यासत्तिमभिप्रेत्य "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इति सूत्रकृता अर्थवादविषयसिद्धान्तस्यैव अभिधानात् भाष्यकारेणाप्यर्थवादमात्रोदाहरणेन धर्माधर्मप्रामाण्यविचारस्यैव कृतत्वात्तमेव विशेषविचारं "विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः । प्रयोजनं च पञ्चाङ्गं शास्त्रेऽधिकरणं विदुः ॥" इत्यभियुक्तप्रसिद्धविषयसन्देहपूर्वपक्षसिद्धान्तप्रयोजनरूपं पञ्चावयवमधिकरणमारचयन् प्रतिजानीते—**वायुर्वै क्षेपिष्ठेत्यादिना** ॥ वायुः **क्षेपिष्ठा** शीघ्रगामिनी देवतेति लोके प्रसिद्धम्, अतः क्षिप्रगामिनीं वायुदेवतां वायूचितेन श्वेतपशुरूपेण भागेन यजमानस्तोषयति, सच तुष्टो वायुरेनं भागप्रदं यजमानमैश्वर्यं प्रापयत्येवेत्येवकारस्य अवहितान्वयेन अर्थवादार्थः ॥

**(वायुर्वै क्षेपिष्ठेतिग्रहणस्य सोऽरोदीदित्युपलक्षणत्वम्)**

**इत्याद्यर्थवादानामिति** । आदिशब्देन न केवलं विधिसन्निहिता एतादृशा एवार्थवादा ग्राह्याः, अपितु "सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रवशीयत तद्रजतमभवत् पुराऽस्य संवत्सरात् गृहे रुदन्ति" इत्यादयः "तस्माद्बर्हिषि रजतं न देयम्" इत्यादिनिषेधसमभिव्याहृता अप्यर्थवादा ग्राह्याः; तद्विषयकाधर्मप्रामाण्यस्याप्यग्रे विचारसत्त्वात् । अत्र स इति त-

दानां विधिप्रतिषेधवदेव कर्तृस्मरणाभावादपौरुषेयत्वे पूर्वाधिकरणेन सिद्धे संप्रति तद्वदेव धर्माधर्मयोः प्रामाण्यमस्ति न वेति विचार्यते ॥ तत्र विधिप्रतिषेधवाक्याभ्यां शक्त्या साध्यसाधनेतिकर्तव्यताविशिष्टभावनाविषयकविधिप्रतिषेधयोः प्रतिपादनात् अर्थाच्च विधिप्रतिषेधविषययागादेरिष्टानिष्टसाधनत्वाक्षेपाद्युक्तं तयोरिष्टानिष्टसाधनरूपधर्माधर्मप्रमाजनकत्वम्, अर्थवादानां तु शक्त्या सदसद्रूपसिद्धार्थबोधकत्वान्न धर्माधर्मयोः प्रामाण्यसंभवः । नच शक्त्या तदसंभवेऽपि लक्षणाध्याहारादिना तत्प्रतिपादनम्; यथा—श्रुतार्थप्रतिपादनेनैवोपपत्तौ अन्वयानुपपत्त्यभावेन तदसंभवात् । नच तात्पर्यानुपपत्त्या तत्कल्पनम्; तात्पर्यग्राहकाभावेन तस्या अप्यसंभवात् । नहि शब्दः प्रमाणमात्रं वा प्रयोजनवद्विषयमेवेत्येवं नियमे प्रमाणमस्ति, येन स एव तात्पर्यग्राहकः शङ्क्येत; निष्प्रयोजनानामपि बहुशो दर्शनेन व्यभिचारात् । नच—स्वाध्यायोऽध्येतव्य इति स्वाध्यायविधिरेवार्थज्ञानोद्देशेनाध्ययनं विदधन्निष्प्रयोजनार्थज्ञानस्य भाव्यत्वानुपपत्तेरर्थस्य प्रयोजनवत्त्वमाक्षिपतीति—वाच्यम्; अर्थज्ञानजनकत्वेनाध्ययनस्य लोकसिद्धत्वेनाविधेय-

---

च्छब्देन "तदग्निर्न्यकामयत" इति पूर्वोपक्रान्तोऽग्निः परामृश्यते । इतरत् स्पष्टार्थम् । विधिप्रतिषेधवदेवेत्युक्त्या जिज्ञासासूत्रे अर्थवादादिधर्मप्रमाणमात्रं उपक्षिप्तम् **इति—सूचितम्** ॥

**( कर्तृस्मरणाभावेन विधितुल्यन्यायतयाऽर्थवादानां प्रामाण्यनिरूपणम् )**

**सिद्धे इति ।** तथाच चोदनार्थमप्युक्तेन कर्तृस्मरणाभावादिहेतुकापौरुषेयत्वेन अर्थवादादीनामपि सामान्यतस्तुल्यन्यायतया प्रामाण्यं पूर्वमेव सिद्धमित्यर्थः ॥ **एतेन**—सामान्यतः प्रामाण्यानुक्तौ स्तुत्यादिरूपद्वारविशेषाकाङ्क्षानुदयात्तदावश्यकत्वम्—**अपास्तम्; अनेन**—पूर्वमुपपादितं प्रसंगाक्षेपरूपसंगतिद्वयम्—**दर्शितम् ।** धर्माधर्मयोरिति विषयसप्तमी । **विधिप्रतिषेधयोरिति। विधिप्रतिषेधौ** प्रवर्तनानिवर्तनापरपर्यायौ । **अर्थादिति ।** अनन्यलभ्यस्य शब्दार्थत्वात् अनुमानेनैव इष्टसाधनत्वादेर्बोधसंभवे न नैयायिकमत इव तत्र शक्तिः कल्पनीया । तदनुमानप्रकारस्तु भाट्टरहस्ये पूज्यपादैः प्रदर्शितः ॥

**( सदसद्रूपेत्यस्य विवरणम् )**

**सदसद्रूपेति । अनेन च**—वायुक्षेपिष्ठत्वादीनां मानान्तरप्राप्तत्वेन अनधिगतार्थगन्तृत्वरूपप्रामाण्यस्य "ग्रावाणः प्लवन्ते" इत्यादौ याथार्थ्यलक्षणस्यापि असंभवे सुतरां सिद्धार्थप्रतिपादकतया भाव्यधर्माधर्मप्रामाण्यं न संभवति **इति—सूचितम्** ॥

**( लक्षणाविपरिणामादिस्वरूपस्य सोदाहरणं निरूपणम् )**

**लक्षणाध्याहारादिनेति ।** विपरिणामगुणकल्पनाद्यादिशब्देन संगृहीतम् । **तदुक्तम्**—"अध्याहारोऽश्रुताक्षेपो व्यत्यासो व्यवधिः पदैः । मतो विपरिणामोऽसौ प्रकृतिप्रत्ययान्यथा । वाक्यान्यथात्वकरणं व्यवधारणकल्पना" इति ॥ यथा छिनत्तीत्यध्याहारः । **व्यत्यासो** व्यवहितकल्पना, यथा—या ते अग्ने रजाशयेत्यत्र व्यवहितस्य तनूर्वर्षिष्ठेत्यनेनान्वयकल्पना । **विपरिणामो यथा** प्रतितिष्ठन्तीत्यत्र प्रतिष्ठाकामा रात्रीरुपेयुरित्यादिः । **व्यवधारणकल्पना यथा**—यावतोऽश्वान् प्रतिगृह्णीयादित्यत्र प्रतिग्राहयेदिति । गुणकल्पना यथा—यजमानः प्रस्तर इत्यत्र । लक्षणोदाहरणानि सिद्धान्तिनाऽङ्गीक्रियमाणाः प्राशस्त्याप्राशस्त्यलक्षणाः ॥

**( वाक्यलक्षणासमर्थनम् )**

सा किमेकस्मिन् पदे, किं वा प्रत्येकं सर्वेषु, उत मिलितेषु, **नाद्यः**, विनिगमकाभावात्, इतरपदानामानर्थक्यप्रसङ्गाच्च । **नापरः**; एकैकपदस्य प्राशस्त्याप्राशस्त्यसंबन्धाभावात्, अप्रतीतेश्च । **नान्त्यः**; मिलितानामेकार्थाभावात् शक्यसंबन्धस्यैव लक्षणात्वात् । ततश्च वाक्ये साङ्गीकर्तव्या; तत्रापि कारणाभावात् वाक्यस्यैकशक्यार्थाभावाच्च सा न संभवति, इत्याह **—यथाश्रुतार्थेति । तात्पर्यग्राहकाभावेनेति ।** धर्माधर्मतात्पर्यकत्वस्य प्रमाणान्तरेणासिद्धेरिति भावः । **तस्या अपीति ।** तात्पर्यानुपपत्तेरित्यर्थः । **प्रयोजनवद्विषयमिति ।** प्रवृत्तिनिवृत्तिरूपप्रयोजनोपयोग्यर्थविषयमित्यर्थः । **निष्प्रयोजनानां** आख्यायिकारूपाणाम् । **भाव्यत्वानुपपत्तेरिति ।** विधिना पुरुषार्थभूतस्यैव भाव्यतयाऽपेक्षणात् अतादृशस्य भाव्यत्वानुपपत्तिरित्यर्थः ॥

**( गुणकर्मत्वप्रधानकर्मत्वकृतवैरूप्यवारणार्थं अध्ययनस्यार्थज्ञानार्थत्वपक्षोपपादनम् )**

**अर्थस्य प्रयोजनवत्त्वमिति ।** ततश्च चोदनांशे तावदध्ययनभावनाया दृष्टमर्थज्ञानमेव प्रयोजनम् । तथैव सर्वांशेऽपि तस्या दृष्टेनैव प्रयोजनेन भाव्यं अन्यथा यदंशे दृष्टार्थत्वं तमंशं प्रत्यध्ययनस्य गुणकर्मत्वात् यदंशे चादृष्टार्थत्वं तमंशं प्रति तस्य प्रधानकर्मत्वात् वैरूप्यापत्तेः । अतस्तदनुरोधेन सर्वांशेऽपि दृष्टार्थत्वं बोधितं प्रवृत्तिनिवृत्त्युपयोगिप्राशस्त्याप्राशस्त्यलक्षणां विना न निर्वहतीति सिद्धान्त्याशङ्कार्थः । स्वाध्यायाध्ययनविधेः अध्ययनविध्यर्थत्वे सति तत्फलं दृष्टमदृष्टं वा गवेषणीयं स्यात्, तदेवानुपपन्नमिति पूर्वपक्ष्याह—**अविधेयत्वादिति** ॥

**( अर्थज्ञानोद्देशेन क्रत्वपूर्वोद्देशेन वाऽध्ययननियमविधिशङ्कापरिहारौ )**

नच—अर्थज्ञाने उपायान्तरस्यापि पक्षे प्राप्तत्वादध्ययननियमांशे विधेरर्थवत्ताऽस्तु इति—वाच्यम्; अध्ययने

त्वात् । तन्नियमस्य चार्थज्ञानेऽनुपयोगात् अव्यभिचरितक्रतुसंवन्धाभावेन क्रतुं यावदुपयोगकल्पनानुपपत्तेश्च न विधेयत्वम् । अतः स्वाध्यायविधिना स्वर्गाद्यर्थमेवाध्ययनं विधीयते । लोकतः पूर्वप्रवृत्त्यङ्गीकारेण यथाश्रुतार्थज्ञानार्थं वा । अध्ययनमेव वा भावनायां भाव्यमस्तु । नचैवमिष्टभाव्यकत्वाभावात्प्रवृत्त्यनुपपत्तिः; अनधीयाना व्रात्या भवन्तीति वचनेनाकरणे प्रत्यवायबोधनेनापि प्रवृत्तिसिद्धेः । अतस्तस्य वेदत्वावच्छेदेन प्रयोजनवद्विपयत्वानाक्षेपकत्वान्नार्थवादेषु तद्बलेन लक्षणादिसिद्धिरित्यप्रमाणमर्थवादा धर्माधर्मयोरिति प्राप्ते—

अभिधीयते—न स्वाध्यायविधिः स्वर्गाद्यर्थमध्ययनं विधत्ते; दृष्टे संभवत्यदृष्टफलकल्पनाया अन्याय्यत्वात् । नापि यथाश्रुतार्थज्ञानार्थम्; तथात्वे व्रात्यताबोधकवाक्येनाध्ययनस्यावश्यकत्वाद् गृहीतपदतदर्थसङ्गतिकस्य "स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थं"मित्यादि वचनाच्च ज्ञानस्याप्यावश्यकत्वेन यथाश्रुतार्थज्ञानस्यानुपङ्क्तिकतयापि

---

स्पष्टं तदुपयोगस्याभावात् ॥ 'अध्ययनकार्यं हि दृष्टमर्थज्ञानं तेनानुष्ठीयमानकर्मजन्यमपूर्वं वा यत् तत्रोभयत्रापि उपयोगो नास्तीत्याह—**तन्नियमस्य चेति** । क्रतुजन्यापूर्वोपस्थितिर्हि प्रकरणादथवा पर्णतादिवदव्यभिचरितक्रतुसंवन्धाद्वा भवेत् । तत्राध्ययनविधेरनारभ्याधीतत्वेन प्रकरणाभावः स्पष्ट एव । अर्थज्ञानस्य क्रतुं विनाप्यध्यापनादिद्वारा द्रव्यार्जने उपयोगसंभवेन अव्यभिचरितक्रतुसंवन्धोऽपि न संभवति । अतो नियमस्य न विधेयत्वम्; नियमस्य निषिद्धकर्मण्युपयोगाभावाच्च ॥

## ( अध्ययनस्यादृष्टार्थत्वोपन्यासः )

**स्वर्गाद्यर्थमिति** । विश्वजिन्न्यायेन स्वर्गकल्पनापेक्षया रात्रिसत्रवदर्थवादाभावे "अनधीयाना व्रात्या भवन्ती"ति स्मृतिमूलश्रुतिकल्पनालाघवानुरोधेन व्रात्यतापरिहारार्थमेव तद्विधानमस्त्विति द्योतनायादिशब्दः । नचाध्ययनविधेः पूर्वोपपादितवैरूप्यापत्तिः; हुंफडाद्यंशे तदध्ययनस्यादृष्टार्थताया-स्त्वयापि स्वीकरणीयत्वेन तद्वैरूप्यायैतदर्थत्वकल्पनस्यैवोचितत्वात्, स्वशक्त्यैव विधीनां प्रयोजनवदर्थप्रमापकत्वेन धर्मप्रामाण्यजनकत्वेऽपि तदध्ययनस्यादृष्टार्थत्वेऽपि वाधकाभावात् ॥

## ( लोकतः पूर्वं शास्त्रप्रवृत्तेः पारायणादौ शूद्राधिकारव्यावृत्तिप्रयोजननिरूपणम् )

अध्ययनविधेर्दृष्टार्थत्वेऽप्याग्रहं प्रत्याह—**लोकत इति** । लोकतः पूर्वप्रवृत्तेः प्रयोजनं तु पारायणे शूद्रानधिकारसिद्धिः । अन्यथा अध्ययनं विनाऽपि पारायणसंभवेन तद्विधिना तदाक्षेपणे शूद्रस्याप्यधिकारापत्तेः, सतित्वस्मिन् विधाने एतद्विधिसिद्धाध्ययनवत एवाधिकारिणो लाभे तदाक्षेपाभावान्न तस्याधिकारः । एवं चैकशाखापारायणमप्युपपन्नम्—**इति** ॥ **अध्ययनमेव वेति** । यथाश्रुतार्थज्ञानापेक्षया समानपदोपात्तत्वप्रत्यासत्त्या तस्य भावनायां सन्निहितत्वात् तस्यैव भाव्यत्वं युक्तमित्यर्थः ॥ **लक्षणादिसिद्धिरिति** ॥ आदिपदेन च यथा लक्षणाया असिद्धिः, तथा लक्षणीयार्थस्य प्राशस्त्याप्राशस्त्यादेरपि दुर्निरूपत्वादसिद्धिः सूच्यते ॥

## (प्राशस्त्याप्राशस्त्ययोर्गुणदोषवत्त्वरूपत्वखण्डनम्)

स हि न गुणदोषवत्त्वमात्रम्; अतिप्रसङ्गात्, न तदतिशयौ; अतिशयस्यापेक्षिकत्वेनानवस्थितत्वात्, अर्थवादमात्रप्रतिपाद्ययोर्गुणदोषयोरनिरूपणाच्च, विशिष्टेष्टानिष्टफलत्वस्य विशिष्टेतिकर्तव्यताकत्वस्य नित्यनिर्दोषवैधविधिनिषेधविषयत्वस्य वा विधिनिषेधाभ्यामेव प्रतिपन्नत्वेनार्थवादानपेक्षत्वात् । नचेष्टानिष्टगते फलवत्त्वे गुणदोषौ; तयोरपि विधिनिषेधाभ्यामेवावगमात्, इष्टानिष्टसाधनत्वेनैव तद्गतफलवत्त्वेनापि विना बुद्धिपूर्वकारिणां प्रवृत्तिनिवृत्त्योरभावात्, श्येनाद्यर्थवादेषु तदनुपपत्तेश्च । तत्र श्येनादेरनर्थत्वेन तज्जन्यस्येष्टस्यानिष्टाद्बलवत्त्वाभावात् । नच तत्तदर्थवादप्रतिपाद्यस्य क्षेपिष्ठत्वादेरेव गुणदोषतया प्राशस्त्याप्राशस्त्यरूपत्वम्; अननुगमाल्लाक्षणिकत्वानुपपत्तेश्च । तस्मात्तस्य दुर्वचत्वादपि तद्बोधकत्वेनापि नार्थवादानां धर्माधर्मप्रमापकत्वम् इति ॥

## ( अध्ययनविधेरक्षरावाप्तिफलकत्वपक्षोपपादनम् )

**एतेन** व्रात्यताबोधकवचनेनैवाध्ययनविधिलाभेन ॥ **स्यादेतत्**—यद्यध्ययनविधेरादावर्थज्ञानं फलं स्यात्, तदा तस्य वैयर्थ्यापत्त्या तत्प्रयोजनवत्त्वाक्षेपपर्यन्तमपि व्यापारः कल्प्येत । नच तत्कल्पने किंचिदपि मानमस्ति; प्राप्यकर्मार्थप्रत्ययेन फलतयोपनीतायाः स्तोभभागाध्ययने फलत्वेन क्लृप्ताया अर्थज्ञानप्राग्भाविन्या अर्थज्ञानार्थत्वपक्षेऽपि तन्निर्वाहकतया प्रथममपेक्षितायाः स्वाधीनोच्चारणरूपाक्षरावाप्तेर्दृष्टाया एव फलत्वसंभवेनाध्ययनविधिवैयर्थ्याभावात्, विचारसाध्यार्थज्ञाननिरूपिताध्ययनगतकारणत्वस्य अक्षरावाप्तिं विनाऽनिर्वहणीयत्वात् । अस्तुवा अर्थज्ञानं फलम् । तदाप्यर्थज्ञानार्थत्वस्य अन्यतः प्राप्तत्वेन विधेर्वैयर्थ्यपरिहारार्थं अध्ययनगृहीतवेदार्थज्ञानवतामेवानुष्ठानमभ्युदयकारीत्येवमादिरूपस्यैव नियमफलस्याङ्गीकारे अध्ययनसंध्यावन्दनाद्यनुष्ठानात् फलानुपपत्तिः; तद्विधीनामध्ययनात्प्रागुपायान्तरेण ज्ञानेऽध्ययननियमविध्यतिक्रमदोषापत्तेः, तज्ज्ञाने अध्ययनादिष्वप्रवृत्त्या तदकरणप्रयुक्तप्रत्यवायप्रसङ्गात् ॥

## ( अर्थज्ञानफलकाध्ययनविधेः शूद्राधिकारव्यावृत्तिप्रयोजनशङ्का तत्समाधानानि )

नच—अध्ययननियमस्याध्ययनगृहीतवेदार्थज्ञानवतामेवानुष्ठानमभ्युदयकारीत्येवं न फलं कल्प्यते, अपितु शूद्रानधिकारसिद्धिः, कर्मविधयो ह्यनुष्ठेयार्थज्ञानवदधिकारिसापेक्षा

**सिद्धेः स्वाध्यायविधिवैयर्थ्यप्रसङ्गात् । एतेन—अध्ययनभा-**

स्वाध्यायाध्ययनविधेरर्थज्ञानफलकत्वे तद्विधिप्रापितानुष्ठेयार्थज्ञानेषु त्रैवर्णिकेष्वेवाधिकारिषु लब्धानुष्ठाना न शूद्राणां ज्ञानमाक्षिपन्ति । तस्यार्थज्ञानफलकत्वाभावे तु कर्मविधय एव तदनुष्ठानमाक्षिप्य तानप्यधिकारित्वेन गृह्णीयुः, अतः शूद्रानधिकारफलत्वसिद्धिरेवार्थज्ञानार्थत्वे फलमिति युक्तम् इति—वाच्यम्; अध्ययननियमसद्भावेऽपि शूद्राधिकारापत्तेरनिवार्यत्वात्, त्रैवर्णिकानामपि "स्वाध्यायोऽध्येतव्य"इति पितृपितामहादिपरंपरागतस्वशाखामात्र एवाध्ययनस्य विहितत्वेन शाखान्तरागताङ्गमन्त्रोपसंहारेण कर्मानुष्ठानार्थं क्रतुविधिभिः शाखान्तरगततद्वाक्यार्थग्रहणाक्षेपोपपत्तेः । नच—शूद्रस्य कर्मानुष्ठानापेक्षितं ज्ञानं कार्त्स्न्येनापेक्षणीयम्, त्रैवर्णिकानां तु शाखान्तराम्नातमात्रगोचरमित्याक्षेपलाघवात् कर्मविधयस्त्रैवर्णिकानेवाधिकुर्युर्न शूद्रम् इति—वाच्यम्; एवं तर्हि यस्य कर्मणो यस्यां शाखायां भूयसामङ्गानां च विधानं "भूयस्त्वेनोभयश्रुती"तिन्यायेन प्रधानस्यापि तत्र विधानं, शाखान्तरे तु स्वल्पाङ्गविधानं, तत्र कर्मणि तच्छाखाध्यायिन एवाधिकारापत्तेः । अतस्त्रैवर्णिकानामर्थज्ञानाक्षेपावश्यंभावात् शूद्रानधिकारे तस्य वेदतदर्थग्रहणायानुष्ठाननिषेध एव हेतुर्वाच्य इति नासावर्थज्ञानफलकस्याध्ययननियमविधेः फलमित्यक्षरावाप्तेरेव तत्फलत्वं युक्तमाश्रयितुम् ॥

## ( विशिष्टार्थावबोधोद्देश्यकोच्चारणस्यार्थपरत्वप्रयोजकत्वतन्निरासौ )

नच—शब्दानामर्थपरत्वस्य विशिष्टार्थप्रतीत्युद्देश्यकोच्चारणाधीनत्वं लोके सर्वत्र क्लृप्तमिति वेदेऽप्यर्थपरत्वार्थं अर्थावबोधोद्देश्यकोच्चारणाक्षेपेण लोक इव रागप्रयुक्तस्य तस्यासंभवात् अध्ययनविध्यतिरिक्तस्य विध्यन्तरस्यादर्शनात् अर्थज्ञानमूलकस्वाध्यायविषयगुरूच्चारणानूच्चारणात्मकाध्ययनविधिबोधितमेवोच्चारणं समर्पणीयमित्यवश्यमर्थज्ञानमेव फलं कल्पनीयमिति मदभिहितमेव युक्तमिति—वाच्यम्; विशिष्टार्थावबोधोद्देश्यकोच्चारणस्यार्थपरत्वप्रयोजकत्वे मौनिना लिखित्वा दत्ते परेणाप्येकेनैव लिखितं दृष्ट्वा मनसाऽनुसंहिते श्लोकादौ उच्चारणाभावेनार्थपरत्वानापत्तेः ॥

## (विशिष्टार्थप्रतीत्युद्देश्यकव्यापारत्वस्यार्थपरत्वप्रयोजकत्वनिरासौ )

**अथापि**—विशिष्टार्थप्रतीत्युद्देश्यकव्यापारत्वमेव अर्थतात्पर्यनिर्णये प्रयोजकम्, मौनिश्लोके च लिखित्वा दानरूप एव व्यापारस्तत्प्रयोजकः, वेदे चापौरुषेये कर्तृव्यापाराभावात् तदनुकूलव्यापारोऽध्ययनरूपादुच्चारणादन्यो न संभवतीति तस्यार्थवत्वनिर्वाहार्थमध्ययनविधेरर्थज्ञानफलकत्वमवश्यमास्थेयमित्युच्येत, यदि शब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य कारणत्वं स्यात् ,तथात्वे निस्तात्पर्यकाच्छुकादिवाक्यात्तदनापत्तिः । अतो नैकार्थबोधकपदजन्यशाब्दबोधत्वावच्छिन्न एव तस्य

**व्यक्तत्वपक्षोऽपि—निरस्तः। अतो वैयर्थ्यपरिहारार्थं प्रयोजन-**

कारणत्वम् । शाब्दबोधत्वावच्छिन्नं प्रत्यपि वा कारणत्वे शुकादिवाक्यस्थले शब्दगतमेव तात्पर्यं कल्पनीयम्, तथैव वेदेऽपीति नाध्ययनविधिसिद्धव्यापारापेक्षा; शब्दस्वभावेनैव तात्पर्यमनुमायार्थपरत्वोपपत्तेः ॥

## ( विचारस्यार्थपरत्वप्रयोजकत्वनिरूपणपूर्वकाध्ययनाक्षरावाप्तिफलकत्वोपसंहरणम् )

अस्तुवार्थप्रतीत्युद्देश्यकव्यापारत्वमर्थनिर्णये प्रयोजकम्, तथापि अध्ययनादन्यः कृत्स्नस्वाध्यायार्थप्रतीत्युद्देशेनाध्ययनानन्तरं कर्तव्यो विचार एव तत्प्रयोजकोऽस्तु । नहि विचारं विना कस्यापि क्रतूपासनोपयुक्तो वेदार्थनिर्णय संभवति । अतस्तस्यैव वेदानामर्थपरत्वे प्रयोजकत्वोपपत्तौ नाध्ययनस्य तत्प्रयोजकत्वनिर्वाहार्थं तव्यप्रत्ययस्वारस्यादिप्राप्तामक्षरावाप्तिमतिलङ्घ्यार्थज्ञानस्यापि तत्फलत्वं कल्पनीयमित्याशङ्कानिवृत्तिफलकं सिद्धान्त्यभिमतं वाक्यार्थं वर्णयति—**अतो वैयर्थ्यपरिहारार्थमिति** ॥

## ( अध्ययनस्यार्थपरत्वप्रयोजकत्वम् )

**अयं भावः**—सत्यं शुकादिवाक्यार्थप्रतीत्यर्थं शब्दगतमेव तात्पर्यमङ्गीकर्तव्यम्; तथापि उपक्रमोपसंहारमध्यपरामर्शैरित्थमेव शब्दस्य तात्पर्यमित्ययं निर्णयस्तु वेदे अध्ययनादिनैवेति तद्विधिरेव तत्र निर्णायकः । स्वेच्छया हि वेदवाक्यानि पठताऽङ्गवाक्येष्वपि फलपदमुच्चार्येत, योऽध्वर्युः स होता ये ऋत्विजस्ते यजमानाश्चेत्याद्यप्यर्थप्रतीतिः स्यात् । नच अध्ययनानन्तरं क्रियमाणो विचार एव तन्निर्णायकः, अध्ययनस्यार्थज्ञानार्थत्वाभावे विचारकर्तव्यताक्षेपस्यैवाभावात् विचारस्यैवाप्राप्तेः ॥

## (विचारस्य लिङ्गकल्प्यश्रुतिसिद्धत्वशङ्कासमाधाने)

नच—अध्ययनसंस्कृतस्वाध्यायस्योपयोगापेक्षायां स्वाध्यायस्यार्थज्ञानजनकत्वरूपलिङ्गकल्प्यश्रुत्याऽर्थज्ञाने विनियोगकल्पनात् तस्य च विचारमन्तरेणाऽनुपपत्तेः विचारप्राप्तिरिति—वाच्यम्; अध्ययनसंस्कृतस्य स्वाध्यायस्यार्थज्ञानार्थत्वविनियोगकल्पनायाः पूर्वमेव पारायणादिविनियोगविधिना नैराकाङ्क्ष्येण लिङ्गकल्प्यश्रुतेरप्रसरात् । लिङ्गस्य च यथाश्रुतार्थज्ञानजनकत्व एव दर्शनात् तत्कल्प्यश्रुत्या अपि तदर्थस्यैवापत्तौ तत्र विचारसापेक्षत्वाभावाच्च, हुंफडाद्यंशे स्वाध्यायस्यार्थज्ञानजनकत्वाभावेन तज्जनकत्वसामर्थ्यस्य व्यभिचारग्रस्तत्वाच्च ॥

## ( अध्ययनस्याक्षरावाप्तिफलकत्वनिरासपूर्वकार्थज्ञानार्थत्वव्यवस्थापनम् )

**किंच** अक्षरावाप्तेः स्वत अपुरुषार्थायाः फलत्वानुपपत्त्या अर्थज्ञानसाधनत्वविशेषेण तदुपपादने अर्थज्ञानस्यापि स्वतःपुरुषार्थत्वानुपपत्तेस्तुल्यत्वात् कर्मानुष्ठानौपयिकार्थज्ञानसाधनत्वविशेषेणैव तस्य फलत्वं स्वीकार्यम् । नहि स्वाध्यायाक्षराणां अर्थज्ञानद्वारा कर्मानुष्ठानोपयोगित्वेन पुरुषार्थपर्यवसायित्वं लिङ्ग-

मात्रेण शक्यं विज्ञातुम्; हुंफडार्थवादाद्यक्षरेभ्योऽर्थज्ञानानुत्पत्तेः, केभ्यश्चित्तदक्षरेभ्योऽर्थज्ञानोत्पत्तावपि व्यभिचारात्। तत्र च तस्य सामान्यसंबन्धकारिप्रमाणसापेक्षत्वात् । अतश्चान्ततो गत्वा कर्मानुष्ठानौपयिकार्थज्ञाने स्वाध्यायाक्षरग्रहणस्यावश्यकल्पनीये उपयोगे लाघवात् तस्यैव फलत्वं कल्प्यतां, नत्वनन्तरदृष्टत्वमात्रेणाक्षरावाप्तेः; साक्षात्प्रणालीसाधारणपुरुषार्थमात्रस्यैव विहितफलत्वयोग्यतया ज्ञातस्यैवान्वयबोधोपयोगित्वात्, अर्थज्ञानस्य तु तेन विना कथमपि कर्मानुष्ठानासंभवाल्लिङ्गेनैवौपनिषदस्य देहादिभिन्नात्मज्ञानस्य सांपरायफलकर्माङ्गत्वज्ञानस्येव कर्माङ्गत्वज्ञानोपपत्तेः ज्ञातस्य तस्यैव फलत्वमुचितम्; इतरथा वितुषीभावरूपद्वारस्यैव फलत्वापत्तौ अवघातादीनामप्यपूर्वार्थत्वानापत्तेः ॥

## ( अर्थज्ञानरूपभाव्योपस्थितिप्रकारः )

नच—अर्थज्ञानमनुपस्थितं कथमध्ययनभावनायां भाव्यत्वेनान्वेति ? इति—वाच्यम्; विधिना स्वविषयस्य समीहितसाधनताऽऽक्षेपात् लोके च शब्दोच्चारणगोचरप्रवृत्तौ व्यवहारौपयिकार्थज्ञानस्यैवोद्देश्यत्वेन क्लृप्तत्वादध्ययनस्य शब्दोच्चारणरूपत्वस्वभावादेव तदुपस्थितिसंभवात्, "स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्" इत्यनेन अक्षरावाप्तिमात्रार्थाध्ययनवतः स्थाणुत्वसंकीर्तनेन अपुरुषार्थपर्यवसायित्वस्य स्पष्टं प्रतीतेश्च ॥

## ( प्रथमापेक्षितस्यापि अपुरुषार्थस्य द्वारतयैवोपयोगनिरूपणम् )

**किंच** अध्ययनस्य फलाकाङ्क्षायां विधिवशात् पुरुषार्थपर्यन्तालोचनावश्यंभावे साक्षात्तस्य तदनन्तरप्रत्यासन्नस्य च यागादेः प्रमाणाभावेन साधनताकाङ्क्षत्वेन च भाव्यत्वातिक्रमेऽपि तदेकान्तरप्रत्यासन्नस्य कर्मज्ञानस्यैवातिक्रमहेत्वभावाद्भाव्यत्वं युक्तं, नतु तेनातिव्यवहितस्याक्षरग्रहणस्य; तथासति तेन तदुत्तरैश्च पदावधारणादिभिः स्वतन्त्रैः पुरुषार्थस्यातिव्यवधानप्रसङ्गात्, ज्ञानभाव्यकत्वेतु तेषां द्वारमात्रत्वेनाव्यवधायकत्वात् । **एतेन**—प्रथमापेक्षितत्वादक्षरावाप्तेः फलत्वं—**निरस्तम्**; द्वारभूतार्थगतप्राथम्यापेक्षायाः पुरुषार्थपर्यवसायिफलत्वसाधकत्वाभावात् । अन्यथाऽसाधितस्य करणत्वानुपपत्तेर्भाव्यत्वस्यावश्यं प्रथमापेक्षितत्वेन योग्यत्वात्समानपदोपात्तप्रत्यासत्त्या यागस्यैव स्वर्गद्वारभूतस्यार्थभावनाभाव्यत्वापत्तेः । अतः प्रथमस्याप्यपुरुषार्थस्य विध्यवगतसमीहितसाधनत्वानुरोधेन न भाव्यत्वं यागादेरिवाक्षरावाप्तेरपीति समानमेव । अतो यावत्संभवं पुरुषार्थपर्यवसाय्यर्थज्ञानमेव दृष्टं फलत्वेन कल्प्यते, नत्वक्षरावाप्तिः ॥

## ( अर्थज्ञानार्थाध्ययनस्य स्वविधिप्रयुक्तत्वं, न तु क्रतुविधिप्रयुक्तत्वं, शाखान्तरगतस्वप्रमोपजीव्यज्ञानाक्षेपकत्वंच )

एवंच क्रतुविधीनामर्थज्ञानाक्षेपकत्वमपि नापद्यते इति शूद्रस्याप्यनधिकारः तेषु सिध्यति । अन्यथा अर्थज्ञानं विना कर्मानुष्ठानाशक्तेः तज्ज्ञानार्थमुपायान्तराक्षेपापत्तेः । नच—शाखान्तरगताङ्गवाक्यार्थज्ञानार्थं क्रतुविधीनामाक्षेपकत्वं कल्पनीयमेवेति—वाच्यम्; तत्रापि स्वपरंपरागतशाखाध्ययनेऽपि अध्ययनविधिः स्वस्य दृष्टार्थत्वनिर्वाहाय स्वशाखागतवाक्यार्थप्रमायाः शाखान्तरगतवाक्यार्थज्ञानाधीनत्वेन तावन्मात्राध्ययनमप्याक्षिपतीति तत्प्रयुक्ताध्ययनसिद्धार्थज्ञानलाभे क्रतुविधीनां तदाक्षेपकत्वकल्पने मानाभावात् । **अतएव** यत्रापि "भूयस्त्वेनोभयश्रुती"तिन्यायेन बह्वङ्गाम्नानबलेन यस्यां शाखायां प्रधानविधिः स्वाधीतशाखायां स्वल्पानामेवाङ्गानां विधानम्, तत्राङ्गप्रमारूपतद्विधायकवाक्यार्थज्ञानस्य प्रधानविधिवाक्यार्थज्ञानाधीनत्वेन अध्ययनविधिनैव स्वदृष्टार्थतानिर्वाहाय तत्प्रधानविधिवाक्याध्ययनपूर्वकमर्थज्ञानं आक्षिप्यत इति न क्वापि क्रतुविधीनामर्थज्ञानाक्षेपकत्वम् ॥

## ( अध्ययनस्य स्वर्गाक्षरावाप्त्यर्थत्वे दोषस्यार्थज्ञानार्थत्वेन तन्नियमवर्णनप्रयोजनस्य शूद्रानधिकारस्य च वर्णनपूर्वकं अर्थज्ञानार्थत्वपक्षोपसंहारः )

तस्मादध्ययनस्य स्वर्गाद्यर्थत्वे सर्वौषधावघातवत्सकृदुच्चारणेनापि शास्त्रार्थसिद्ध्यापत्तेः स्वाध्यायगतकर्मत्वनिर्देशेन प्रतीतसंस्कारकर्मत्वबाधापत्तेः, तन्निर्वाहार्थमक्षरावाप्तेः फलत्वाङ्गीकारे क्रतुविधिष्वर्थज्ञानविचाराक्षेपगौरवापत्तेः स्वाध्यायस्वरूपे आनर्थक्याचानारभ्याधीतत्वेन क्रत्वपूर्वस्येव पारायणजन्यादृष्टस्यापि स्वाध्यायपदेन लक्षयितुमशक्तेरर्थज्ञानस्यैवाक्षरावाप्तेः कर्माद्यविनाभावाभावेनाव्यभिचरितक्रतुसंबन्धस्याप्यभावात् क्रत्वनुपस्थितेर्न तत्फलत्वम्, अपितु अर्थज्ञानादेरेव । तच्च पुस्तकपाठाभिज्ञोपदेष्टृवचनाद्युपायान्तरेण यावत्क्रतुभिराक्षेपणीयम्, ततः पूर्वमेवाध्ययनविधिप्रवृत्तेर्नियमस्य तन्निवृत्तिः फलं कल्प्यते । तत्प्रयोजनं च त्रैवर्णिकाधिकारनियमः । विनाऽर्थज्ञानं क्रत्वनुष्ठानासंभवात् क्रतुविधीनामर्थज्ञानापेक्षां जानतः साङ्गाध्ययननियमविशिष्टार्थज्ञानस्य प्रयोजनापेक्षां च पश्यतः पुरुषस्य च लिङ्गकल्प्यश्रुत्या "यदेव विद्यया करोती"ति श्रुत्या वा तादृगर्थज्ञानं क्रत्वङ्गमिति बोधे जनिते तादृग्ज्ञानवत एव क्रतुष्वधिकार इति बोधावश्यंभावात् ॥

## ( भाट्टालंकारसंमतस्याध्ययननियमस्य क्रतौ प्रायश्चित्तापूर्वे च यथायथमुपयोगनिरूपणम् )

अस्तुवाऽऽधानस्यानङ्गत्वेऽपि तज्जन्यापूर्वविशिष्टाग्नीनां क्रत्वङ्गत्ववदध्ययनस्यानङ्गत्वेऽपि तन्नियमादृष्टविशिष्टार्थज्ञानस्य पूर्वोक्तलिङ्गकल्प्यश्रुत्या कर्माङ्गत्वेन्न ज्ञापनादाहवनीयवन्नियमादृष्टस्यापि परंपरया क्रत्वपूर्वोपयोग इति भाट्टालंकारकारोक्तरीत्या नियमस्य क्रतावेवोपयोगः, एवंच क्रत्वर्थनिषेधेषु अध्ययननियमस्यार्थवत्त्वात्पुरुषार्थनिषेधेष्वपि अध्ययनावाप्तनिषेधेनैव स्वानुष्ठितकर्मणो दोषजनकत्वं ज्ञात्वा तन्निवृत्त्यर्थकृतप्रा-

वदर्थज्ञानोद्देशेन स्वाध्यायाध्ययनं विधीयते प्रयोजनवदर्थ-

यश्चित्तात्तन्निवृत्तिः भवतीत्येवंप्रकारेण प्रायश्चित्तापूर्वे उपयोगः कल्प्यत इति न बाधकम् ॥

(नित्यविधीनामर्थज्ञानानाक्षेपकत्वनिराकरणम्)

नच—अध्ययनस्य नित्यमनुष्ठाने प्रमाणाभावेन नित्यविधीनामर्थज्ञानाक्षेपकत्वापत्तिरिति—वाच्यम्; नित्यानामपि क्रतुविधीनां लाघवेन परप्रयुक्ताग्निविद्योपजीवित्वे प्रमिते स्वविधिसिद्धाग्निविद्यावतोऽधिकारसत्त्वात्तदकरणे प्रत्यवायानुत्पत्तावपि तद्रहितस्यानधिकारादेव तदुत्पत्तौ प्रमाणाभावेन अग्निविद्याक्षेपकत्वानुपपत्तेः। यथाचैवंसति क्रतुविधीनां नित्यत्वात् आधानादिविधीनामपि फलतो नित्यत्वमिति पार्थसारथ्युक्तिः, सा षष्ठे ब्राह्मणस्येत्यादिकाधिकरणे पूज्यपादैरेव निरसिष्यते। **एतेन**—नित्याद्यनुष्ठानस्य अध्ययनविधिसिद्धार्थज्ञानमन्तरेणासंभवात् सिद्धमध्ययनस्य फलतो नित्यत्वमिति भाट्टालंकारोक्तिः—**अपास्ता**। आधानस्य तु अनाहिताग्नितापयुक्तप्रायश्चित्ताम्नानादेव नित्यत्वमूह्यम्। एवंच नित्येषु अध्ययनाधानसिद्धाग्निविद्यावत एवाधिकारात् न नित्यक्रतुविधीनां तदाक्षेपकत्वापत्तिः॥

(संध्यादिविधीनामाचार्योपदेशाद्याक्षेपकत्वनिरूपणम्)

अतएव येषां तावत् गायत्र्युपदेशानन्तरमेवाध्ययनविधिप्रवृत्तेः पूर्वं प्रवृत्ताः संध्यावन्दनादिविधयः, तेषामर्थज्ञानस्याध्ययनविधिप्रयुक्तत्वसंभवात् नियमाविषयाणामस्त्येवार्थज्ञानसाधनीभूताचार्योपदेशाद्याक्षेपकत्वम्। यथा निषादस्थपतीष्ट्यादिविधीनामिति॥

(अर्थज्ञानार्थत्वपक्षेऽध्येतव्य इति तव्यप्रत्ययोपपत्तिः मिश्रभवदेवादिमतेन)

नच—अर्थज्ञानस्य भाव्यत्वे कथं स्वाध्यायगतकर्मत्वबोधकतव्यप्रत्ययोपपत्तिः? इति—वाच्यम्; आर्थिकसंस्कार्यत्वमादाय तदुपपत्तेः। **तथाहि**—"स्वाध्यायोऽध्येतव्य"इत्यत्र "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे"ति स्मृत्या प्रैषार्थे तव्यप्रत्ययविधानात् प्रैषस्य च प्राप्तविषयकत्वप्रवर्तनात्मकत्वसमुदायरूपत्वात् ब्राह्मणे च प्राप्तविषयत्वासंभवात् समुदायासंभवेऽपि तदेकदेशलक्षणया तव्यप्रत्ययेन प्रवर्तनोच्यते। **यथोक्तम्** "प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते। अप्राप्तप्रैषणे सर्वं विधित्वं प्रतिपद्यते" इति। तस्याश्च प्रवृत्त्यनुकूलव्यापाररूपत्वात् प्रवृत्तिरूपार्थीभावनापि तेनैवाक्षिप्यते। तस्याश्च पष्ठाद्यन्यायेन प्रयोजनवदर्थज्ञानमेव यावत्संभवं भाव्यत्वेन स्वीक्रियते। ततः करणापेक्षायां भावार्थाधिकरणन्यायेन सन्निकर्षादध्ययनं करणम्। तत्र अध्ययनस्याशब्दरूपस्यार्थज्ञानसाधनत्वानुपपत्तेः शक्त्यनुसारेण स्वाध्यायावाप्तिद्वारेण तद्भवति। स्वाध्यायस्य च अर्थज्ञानसाधनत्वं विना अध्ययनस्य तत्साधनत्वे तदवाप्तिद्वारत्वानुपपत्तेः तस्यापि तत्सा-

ज्ञानादिसाधनीभूतस्वाध्यायोद्देशेन वाऽध्ययनमात्रम्; त-

धनत्वमर्थात्प्रतिपादितं भवति। साम्नां स्तुतिसाधनत्वे ऋचामपि साधनत्ववत्। ततश्च शाब्दबोधे सक्तुन्यायेन विनियोगभङ्गं प्रकल्प्य स्वाध्यायस्य गुणत्वेऽपि तदवाप्तिद्वारत्वात् अर्थात् प्राप्यकर्मत्वाश्रयत्वमप्यस्तीति न तव्यप्रत्ययोक्तकर्मत्वस्य सर्वथाऽनुपपत्तिः। उपपद्यते च स्वाध्यायस्योपादेयत्वेन तद्गतैकत्वविवक्षेत्यर्थज्ञानार्थमेवाध्ययनं अर्थकर्मैवेति न्यायरत्नमालोपपादितरीत्या मिश्रभवदेवादिमताभिप्रायेण प्रयोजनवदर्थज्ञानाद्युद्देशेन स्वाध्यायाध्ययनं विधीयत इत्येकः पक्ष उक्तो मूलकृता। **तदुक्तम्**—फलवद्व्यवहाराङ्गभूतार्थप्रत्ययाङ्गता। निष्फलत्वेन शब्दस्य योग्यत्वादवधार्यते" इति॥

(हुंफडादिसाधारणसर्वाध्ययनस्य दृष्टार्थत्वम्)

आदिपदेन च साम्नां ऋगक्षराभिव्यञ्जकत्वेन तदध्ययनस्यार्थज्ञानार्थत्वेऽपि यत्र हुंफडादिस्तोभभागांशे सर्वथा तदसंभवः, तत्रापि नियतकालपूरणं दृष्टं प्रयोजनमपि संगृह्यते, तेन नाध्ययनविधेर्वैरूप्यम्। नच वाक्यभेदः; न केवलार्थविज्ञानसिद्धिरस्य प्रयोजनम्। "दृष्टं यच्छक्यते कर्तुं तत्सर्वं फलमिष्यते" इति न्यायरत्नमालायां मिश्राद्युपपादितरीत्या दृष्टत्वमुपलक्षणीकृत्य यदेव किंचिद्विध्यन्तरोपयोगि स्वाध्यायाध्ययनेन भावयितुं शक्यं, तत्सर्वं भावयेदित्येकयैव वचोभङ्ग्या सर्वार्थत्वलाभेन वाक्यभेदाप्रसरात्। **अतएव**—पाठक्रमोऽध्ययनविध्यवगत एवेति वक्ष्यते पञ्चमे। **अतएव**—राजन्यविशां ब्राह्मणादिकर्तृककर्मप्रतिपादके वेदभागेऽप्यध्ययनजन्यार्थज्ञानात् स्वातिरिक्तकर्तृकत्वे बुद्धे तद्बोधितकर्मण्यप्रवृत्तिरेव दृष्टं प्रयोजनमिति न तत्रापि वैरूप्यापत्तिः। **यत्तु**—शास्त्रदीपिकाटिप्पणे भाट्टभास्करे चैतादृशे विषये जपपारायणाद्युपयोग्यक्षरग्रहणमेव दृष्टं प्रयोजनम् इति—**कैश्चिदुक्तम्**; तत् क्वचिदवश्यकल्पनीयेऽक्षरग्रहणस्य फलत्वे सर्वत्राप्यैकरूप्येण तस्यैव फलत्वापत्त्याऽर्थज्ञानफलकत्वानुपपत्तेरुपेक्षणीयम्॥

(अध्ययनस्य संस्कारकर्मत्वमिति जरन्मीमांसकमतस्यार्थज्ञानार्थत्वपक्षाविरोधेन समर्थनम्)

**वस्तुतस्तु**—तव्यप्रत्ययेन कर्मतया अभिहितस्य स्वाध्यायस्य गुणत्वेनान्वये प्रतीतप्राधान्यबाधापत्तेः स्वाध्यायस्य चान्यरूपेण कर्मत्वासंभवेऽपि प्राप्यकर्मत्वेन तदन्वयोपपत्तेः स्वाध्यायस्वरूपे आनर्थक्ये प्राप्ते अध्ययनस्य शब्दोच्चारणरूपत्वात् उच्चारणस्य अर्थज्ञानजनकत्वक्लृप्तेर्विधेयसामर्थ्यानुरोधेन स्वाध्यायस्योद्देश्यस्यापि अर्थज्ञानजनकत्वयोग्यत्वादर्थज्ञानस्योपस्थितेः पुरुषार्थपर्यवसाय्यर्थज्ञानादिसाधनस्वाध्यायलक्षणां स्वाध्यायपदे स्वीकृत्य तदुद्देशेनैवाध्ययनविधानमुचितम्। ततश्च संस्कारकर्मत्वमेवेति जरन्मीमांसकमतमेव युक्तमिति द्योतयितुं द्वितीयपक्षमाह—**प्रयोजनवदिति**॥

## ( अध्ययनेन स्वाध्यायं भावयेदित्यापाततोऽध्ययनविध्यर्थनिरासः )

**यत्तु**—भाट्टालंकारादिभिरध्ययनेन स्वाध्यायं भावयेदित्यापाततो बोधयन्नध्ययनविधिः स्वाध्यायप्रयोजनाकाङ्क्षायां अधीतेन स्वाध्यायेन प्रयोजनवदर्थज्ञानं भावयेदिति विपरिणामेन बोधयति; स्वाध्यायस्य उपयोगयोग्यतया सक्तुवैलक्षण्यात्—**इत्युक्तं, तन्न**; तथात्वे अक्षरावाप्तेरपि फलत्वे पूर्वोपपादितरीत्याऽर्थज्ञानजनकत्वरूपस्वाध्यायगतसामर्थ्यकल्प्यश्रुत्यैवार्थज्ञानसाधनत्वोपपत्तौ प्रस्तुतविधेर्विपरिणामकल्पनेऽपि गौरवापत्तेः परमतोक्ताक्षरावाप्तेरेव फलत्वापत्तेः । अथ तत्रापि नियोगाकाङ्क्षया यावल्लिङ्गकल्प्या श्रुतिः कल्प्या, तावत् पारायणादिप्रत्यक्षविनियोगविधिनैव नैराकाङ्क्ष्यमित्युच्यते, तदा प्रकृतेऽपि दीयतां दृष्टिः । तत्रापि तेन नैराकाङ्क्ष्ये विनियोजकविपरीतवाक्यतदर्थकल्पनाप्रसरात् ॥

## ( स्वाध्यायोद्देश्यत्वेऽपि अर्थज्ञानोद्देश्यत्वपर्यवसानम् )

अतः पारायणादिविधितुल्यतापत्त्या प्राधान्यनिर्वाहार्थं व्रीह्यादिपदेऽपूर्वसाधनत्वलक्षणावत् स्वाध्यायपदे तादृशलक्षणयैव तदुद्देशेनैव प्रत्यक्षविधिना अध्ययनं विधीयते । अतश्च यथाऽवघातादेरपूर्वसाधनीभूतव्रीहिवितुषीभावरूपसंस्कारकस्यापूर्वार्थत्व एव विधेस्तात्पर्यं, तथाऽध्ययनस्यापि अर्थज्ञानादिसाधनस्वाध्यायाक्षरग्रहणरूपसंस्कारसाधनस्य अर्थज्ञानाद्यर्थत्व एव विधेस्तात्पर्यमित्यर्थज्ञाने फलत्वपर्याप्तिः, नतु द्वारभूताक्षरग्रहणे इत्यावेदितमेव प्राक् ॥

## ( स्वाध्यायोद्देश्यत्वपक्षेऽप्येकशाखाध्ययननियमोपपत्तिः )

नचास्मिन् पक्षे स्वाध्यायस्य संस्कार्यत्वेनोद्देश्यत्वात्तद्विशेषणैकत्वादेरपि विवक्षापत्तेः शाखान्तराधिकरणव्युत्पादितैकशाखाध्ययनविरोधप्रसङ्गः; एकत्वाविवक्षायामपि स्वाध्यायपदे स्वशब्देन स्वकीयवाचिना पित्रादिपरंपरया आगतायाः शाखायाः कर्मव्युत्पत्त्या वाच्यत्वावधारणादनेकशाखाध्ययने स्वशब्दवैयर्थ्यापत्तेरेकशाखाध्ययननियमस्य नक्षत्रवादावल्युक्तत्वात् प्रयोजनवदर्थज्ञानादिसाधनस्वाध्यायोद्देशेन प्रत्यक्षस्वाध्यायाध्ययनविधिना अध्ययने वाक्यार्थमर्यादया विहिते स्वाध्यायस्य यथाश्रुतार्थज्ञानजनकत्वसामर्थ्येऽपि विधेरर्थवत्तार्थं पुरुषार्थपर्यन्तस्याप्यर्थज्ञाने आक्षेपादार्थेनाध्ययनगृहीतेन स्वाध्यायेन पुरुषार्थ एव पर्यवसाय्यर्थज्ञानं संपादयेदिति विधिकल्पने स्वाध्यायस्योपादेयत्वस्यापि प्रतीतेश्च । उपादेयत्वप्रतीतिश्च आर्थिकविधिकल्पनया । नह्येतावता एकदा स्वाध्यायसंस्कारार्थत्वं विधाय पुनः विपरिणामेन तस्यैवावृत्त्याऽधीतेन स्वाध्यायेनार्थज्ञानं भावयेदिति वाक्यार्थान्तरकल्पना केषांचिदुक्ता युक्ता; आवृत्तिलक्षणवाक्यभेदापत्तेः । विपरिणामकल्पने प्रमाणाभावाच्चेत्यर्थज्ञानाय पूज्यपादैः प्रयोजनवदर्थज्ञानादिसाधनीभूतस्वाध्यायोद्देशेन वेति समस्तपदप्रयोगेणोद्देश्यसमर्पणं प्रदर्शितम् ॥

## ( व्रीहिपदवदुद्देश्यसमर्पकस्यापि स्वाध्यायपदस्य स्वार्थाविवक्षाविवक्षाभ्यां वैषम्यम् )

नच—व्रीह्यादिपदेष्विव लक्षणया प्रयोजनवदर्थज्ञानादिसाधनस्वाध्यायस्योद्देश्यत्वे व्रीह्यादिवत् स्वाध्यायस्याप्यविवक्षाप्रसक्तिरिति—वाच्यम्; तदविवक्षायां पुरुषार्थपर्यवसाय्यर्थज्ञानस्यैवोपस्थापकमानान्तराभावेनोद्देश्यत्वानुपपत्तेः, "वेदाङ्गानि समस्तानि कृष्णपक्षेषु संपठेत्" इत्यादिविधिवैयर्थ्यापत्तेश्च, प्रतिनियतोद्देशन्यायेन स्वाध्यायत्वविवक्षायां बाधकाभावात् । तस्मादङ्गानां वेदार्थज्ञानसाधनत्वेनाङ्गतया तदध्ययनस्येव तत्समभिव्याहृतवेदाध्ययनस्यापि अर्थज्ञानसाधनत्वमेवाश्रयितुं युक्तमिति दिक् ॥

## ( अध्ययनस्याध्यापनविधिप्रयुक्तत्वमतनिरूपणम् )

अतो वैयर्थ्यपरिहारार्थमित्यनेन मूलकृता मतान्तरमपि निरस्तं वेदितव्यम् । **तथाहि**—"अष्टवर्षं ब्राह्मणमुपनयीत" इत्यात्मनेपदं तावत् "संमाननोत्संजनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः" इति सूत्रादाचार्यकरणविहितमित्याचार्यहेतुत्वं उपनयने प्रतीयमानं केन द्वारेणेत्यपेक्षायां उपनेयप्रत्यासत्तिरूपदृष्टद्वारा अध्यापनापेक्षितेन तत्कर्तृकेणाध्ययनेनाध्ययनं निवर्तयितुं शक्यते इत्यध्ययनद्वारेणेत्येवमाचार्यकर्तृकमध्यापनं तत्र द्वारमिति कल्प्यते । तच्चाध्यापनं "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" इत्यादिस्मृत्या आचार्यकामः शिष्यमुपनीय वेदमध्यापयेदिति श्रुत्युन्नयनेनाचार्यत्वसिद्धिरूपफलार्थमिति प्रधानं उपनयनरूपाङ्गप्रयोजकं सदुपनेयव्यापारस्याध्ययनस्यापि प्रयोजकम् । अतश्च एतेनैवाध्ययने प्रयुक्ते श्रुताधिकारिस्वाध्यायाध्ययनविधेर्न स्वातन्त्र्येणार्थज्ञानजनकत्वेनाध्ययनप्रयोजकत्वं कल्पनीयम्; गौरवात् । अतएव "उपनीय तु" इति स्मृतौ क्त्वाप्रत्ययेन समानकर्तृकत्वाभिधानात् तस्य च प्रयोगैक्यं विनाऽनुपपत्तेरुपनयनाध्यापनयोः अङ्गाङ्गिभावेनैव तन्निर्वाहो युज्यते । यद्यप्याचार्यत्वं आधाननिष्पाद्याहवनीयत्वादिवदलौकिकातिशयरूपं न स्वतः पुरुषार्थः; तथापि "अचार्याय दक्षिणा देये"त्यादिस्मरणात् दक्षिणादानादिहेतुत्वेन भवत्येव गौणः पुरुषार्थ इति तत्साधनीभूतमध्यापनमपि भवत्येव पुरुषार्थं इति प्रधानम् । "तमध्यापयीते"ति तच्छब्दपरामृष्टोपनीतस्याध्यापनसंबन्धनात् "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा" इत्यत्र सेति तच्छब्देन दध्यानयनसंस्कृतस्य पयसो वैश्वदेवयागाङ्गत्ववदिहापि तच्छब्दश्रुतेरुपनयनस्य पूर्वोक्तरीत्याऽध्यापनाङ्गत्वस्यापि प्रतीतेश्च ॥ **ननु**—"उपनयीते"ति श्रुतेः "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते"तिवत्कालसंबन्धेनाप्युपपन्नत्वेनाङ्गाङ्गिभावसंबन्धे प्रमाणाभावः, तच्छब्दबलेनापि समभिव्याहृतक्रियामात्राङ्गत्वप्रतीतावपि णिजन्तधातुना अध्यय-

नाध्यापनरूपप्रयोज्यप्रयोजकव्यापारद्वयोपस्थितौ उपनयनस्याध्यापनाङ्गत्व एव प्रमाणाभावेनाध्ययनाङ्गत्वस्याप्यापत्तिः। आत्मनेपदेन आचार्यकरणे विहितेनाङ्गाङ्गिभावबोधनस्याशक्यत्वाच्च॥ नच—उपनयने अध्यापनफलाचार्यसंबन्धबोधनं तस्याध्यापनाङ्गत्वं कल्पयेत् इति—वाच्यम्; आधानद्वारा अग्निहोत्रपूर्णमासादिसर्वकर्मोपकारकस्वविधिसिद्धाधानाङ्गपूर्णाहुतौ "पूर्णाहुत्या सर्वान् कामानाप्नोति" इति तदुपकार्यसर्वकर्मफलव्यपदेशदर्शनेनेहापि अध्ययनद्वारेणोपनयनोपकार्यस्वाध्यायस्य फलमुपकारके व्यपदिश्यत इत्यस्याप्युपपत्तेः इति—**चेत्, न;** दर्शपूर्णमासयोः सोमयागस्य च स्वातन्त्र्येण पृथक्फलसाधनतया वाक्यान्तरावगतत्वेन पृथक्प्रयोगसत्त्वेन पौर्वापर्यमात्रबोधकक्त्वाप्रत्ययस्य प्रयोगैक्यं विनापि कर्तृकारकाधिष्ठानैक्यावलम्बनतया कथंचिदुपपन्नत्वेऽपि प्रकृते वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेत्यत्रेव प्रयोगैक्यनिर्वाहायाऽङ्गाङ्गिभावसंबन्धबोधन एव तत्तात्पर्यकल्पनौचित्यात्, तच्छ्रुतेरपि क्रियाद्वयस्य समभिव्याहारेऽपि प्रधानक्रियाया अभ्यर्हितत्वेन तत्रैवान्वयस्योचितत्वेन अध्यापनाङ्गत्वबोधने प्रामाण्याच्च। अङ्गप्रमाणभावेन साक्षात्संबन्धिनोऽध्यापनस्य फलं उपनयने निर्दिश्यते इति वक्तुं शक्ये परंपरासंबन्धकल्पने तदुपपादनस्य निरर्थकत्वाच्च। अतोऽध्यापनविधिप्रयुक्तमेवाध्ययनं नार्थज्ञानसाधनत्वेन स्वाध्यायाध्ययनविधिप्रयुक्तम्—**इत्याहुः॥**

### (अध्ययनस्याध्यापनविधिप्रयुक्तत्वनिरासः तत्रोपनयनस्यैवाध्यापनविधिप्रयुक्तत्वाभावे सुतरां अध्ययनस्य तत्प्रयुक्तत्वाभाव इति निरूपणम्)

**तन्न;** तथात्वेऽध्यापनविध्यन्यथानुपपत्त्यैव प्रयोज्यव्यापाररूपाध्ययनस्य प्राप्तत्वेन स्वतन्त्रस्वाध्यायाध्ययनविधेरानर्थक्यापत्तेः॥ **किंच** "वसन्ते ब्राह्मणमुपनयीत" इत्यादिविधिभिर्ब्राह्मणाद्यर्थत्वेन प्रतीयमानमुपनयनं तदीयकार्याध्ययनाङ्गत्वेनैव निर्वाह्यम्, नत्वन्यदीयकार्याध्यापनाङ्गत्वेन; उपनयनजन्याचार्यप्रीतिरूपदृष्टसंस्कारस्य विनियोगाकाङ्क्षायां अध्ययनस्योपनेयगतत्वेनान्तरङ्गत्वात्, उपनेयस्य सर्वकर्माधिकारार्थं उपनयनजन्यादृष्टरूपसंस्कारस्यावश्यकल्पनीयोपनेयकार्यार्थत्ववत्तज्जन्यत्वाविशेषेणोपनयनजन्याचार्यप्रत्यासत्तिरूपस्यदृष्टस्याप्युपनेयकार्यार्थत्वस्यैवोचितत्वात्। **अपिच** उपनयनस्य बीजगर्भसमुद्भवैनोनिबर्हणद्वारा माणवकसंस्कारार्थत्वं स्पष्टमेव "गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः। बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते। एवमेनः प्रयात्याशु बीजत्वगर्भसंभव" मित्यादिस्मृतिषु प्रतीयते। **अतएव**—कर्मानधिकृतयोरपि मूकोन्मत्तयोरेनोनिबर्हणार्थत्वेनोपनयनावश्यंभावमभिप्रेत्यैव मूकोन्मत्तौ संस्कार्याविति—**केचित्प्रचक्षते।** "कर्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः" इति मनुना उपनयनाभावपक्षः केषांचित्पक्षत्वेनोपन्यस्तः। अतः स्वतन्त्रफलार्थस्योपनयनस्याध्यापनाङ्गत्वे प्रमाणाभावादुपनयनस्यैवाध्यापनविधिप्रयुक्तत्वाभावे सुतरां तद्द्वारप्रविष्टस्याध्ययनस्य न तद्विधिप्रयुक्तत्वम्॥

### (उपनयनाश्रितवयोविशेषादीनामिवोपनयनस्याप्युपनेयार्थत्वम्)

अतएव "सप्तमे ब्रह्मवर्चसकामं" "अष्टमे आयुष्काम"-मित्यादिगुणविधिभिरुपनयनाश्रितवयोविशेषलक्षणगुणानां उपनेयार्थत्वादुपनयनस्यापि तदाश्रयस्य तदर्थत्वमेव युक्तम्; प्रधानगुणफलयोरेकाश्रयत्वस्योत्सर्गसिद्धत्वस्य तथा कामोऽर्थसंयोगादित्यधिकरणे दर्शितत्वात्। अतएव "यदि कामयेत वर्षुकः पर्जन्यः स्यादि"ति वाक्ये सदोमानकर्तुरध्वर्योः कामनां विहाय यजमानस्यैव कामना विवक्षिता संगच्छते। नहि गीतिक्रियारूपसामसंस्कार्यत्वेन तत्प्रधानभूतामेवर्चं द्वारीकृत्य साम्नो गुणिनिष्ठगुणाभिधानरूपस्तुतिसाधनत्वेन स्तोत्राङ्गत्वस्यापि "साम्ना स्तुवीते"ति वचनेन बोधनवदिहाध्ययनाङ्गस्यापि उपनयनस्याध्यापननिवर्तनद्वाराऽध्ययनाङ्गत्वस्य बोधने किंचिद्वचनमस्ति, येनोभयाङ्गत्वं स्यात्॥

### (उपनीय तु इत्यादीनां आशौचादिनिमित्तस्वमरणवदाचार्यस्वरूपपरत्वम्)

"उपनीयतु यः शिष्यम्" इति स्मृतेः, "न विद्यया केवलया तपसा वापि पात्रता। यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते" इति स्मृतेश्च। त्रिभिः पात्रत्वकथनमात्रार्थत्ववत् नाध्यापनमात्रेणाचार्यो भवति, किंतु उपनयनेनापि इत्येतावन्मात्रकथने तात्पर्यात्। तत्फलं च यथा दानादौ तादृशपात्रस्यैव संप्रदानत्वम्, एवं तादृशाचार्यस्यैव स्वमरणनिमित्ताशौचादेः शिष्येणाचार्ये नातिचरितव्यमित्यादिशास्त्रसिद्धतदनतिक्रमादेश्च प्रयोजकत्वमेव। अन्यथा—"निषेकादिकर्माणि यः करोति यथाविधि। संभावयति चान्नेन स विप्रो गुरुरुच्यते। स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति"॥ इत्यादिस्मृतिबलात् निषेकादिचौलान्तकर्मणां अध्यापनाङ्गत्वापत्तेः। यथाचैवंसत्यकर्तृगामिफलविवक्षया विशेषसूत्रेण विहितादात्मनेपदादेव माणवकादिसंस्कारद्वारा अध्ययनाङ्गत्वं तथोपपादितं—**नक्षत्रवादावल्याम्॥**

### (नित्यस्योपनयनस्य काम्याध्यापनाप्रयुक्तत्वम्)

एवं सप्ताष्टवर्षत्वादेरुद्देश्यविशेषणस्य विवक्षा उपपादयिष्यते पूज्यपादैराधानाधिकरणे। अतस्तमध्यापयीतेति तच्छब्दपरामृष्टस्योपनयनस्य प्रयोज्यभूताध्ययनव्यापार एवान्वयात् आत्मनेपदस्य चाध्ययनस्याध्यापनोपकारकत्वमात्रेणाप्युपपादयितुं शक्यत्वात् "अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः। सावित्रीपतिता व्रात्या भवन्त्यर्थविगर्हिताः। योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः"। इत्यादिस्मृतिभिरुपनयनाध्ययनयोः नित्ययोः काम्याध्यापनविधिप्रयुक्तत्वायोगादर्थज्ञा-

नार्थाध्ययनविधिप्रयुक्तमेवाध्ययनम् । तत्रैव यावत् वेदसमाप्त्याचार्याधीनत्वस्य "तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः । वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना" इति स्मृत्युक्तधर्माणां गुरुशुश्रूषादीनां अन्येषां च निर्विघ्नपरिसमाप्तिद्वारा इतिकर्तव्यतात्वेनान्वयः । **यत्तु**—एतादृशाङ्गविशेषाणां केवलार्थज्ञानरूपदृष्टार्थोपयोगासंभवात् यूपत्वादिवदलौकिकसंस्कारगर्भं स्वाध्यायत्वमङ्गीकृत्य तत्रैवोपयोग इति—**कैश्चिदुक्तं**, तच्छिष्टाकोपाधिकरणे कौस्तुभे पूज्यपादैर्दूषितं तत्रैव द्रष्ट-

(१) **अत्राध्वरमीमांसाकुतूहलवृत्तिकाराः**—स्वाध्यायविधिरक्षरग्रहणार्थ एव, अर्थावबोधस्तु गृहीतपदतदर्थसङ्गतिकस्य स्वत एव भवति, नतु तत्राध्ययनविधेर्व्यापारः; अन्यथा धर्मावबोधार्थत्वे कृत्स्नाध्ययनाभावप्रसङ्गात् । नहि राजसूयाद्यनधिकारिणां ब्राह्मणादीनां तदध्ययनार्थज्ञानादिकं प्रयोजनवत् । **अतएवोक्तं वेदभाष्ये**—"बोधान्तत्वेऽध्ययनाकात्स्न्र्यम्" इति । पित्राद्युपदेशजन्यार्थज्ञानेन यथा संध्योपासनादावधिकारः, एवं क्रतुष्वपीति सिद्धे तस्मिन् न कामना संभवति । किंचाग्निहोत्रादिवाक्यानामनन्तत्वान्न विशिष्य तदर्थोद्देशसंभवः, सामान्याकारेणोद्देशे तु सामान्यतः ज्ञानमेवाध्ययनफलमिति न विचारसिद्धिसंभवः । वेदवाक्यानां स्वार्थे तात्पर्यावगमस्तूपक्रमादिलिङ्गैर्भविष्यतीति न किंचिदनुपपन्नम् । एवंचार्थज्ञानार्थाध्ययनविधौ न स्वाध्यायविधेस्तात्पर्यम् । अतएव "ब्राह्मणेन निष्कारणो वेदोऽध्येयो ज्ञेयश्चे"ति ज्ञानविधिरप्युपपद्यते; अन्यथा तदानर्थक्यात् । नहि सर्वेणापि गृहीतपदतदर्थसङ्गतिकेन भाव्यमिति नियमः; अव्युत्पन्नानामपि बहुशो दर्शनेन व्यभिचारात् । अस्तुवा नियमः, एवमप्यतिगहनस्य वेदार्थस्य विचारमन्तरा न सिद्धिरिति विचारविधिरर्थवानेव। कृत्स्नवेदार्थज्ञानस्याध्ययनविधिप्रयुक्तत्वाभावादेव कल्पसूत्रादिप्रणयनमर्थवत् । ब्रह्ममीमांसायां तृतीयचतुर्थाद्यधिकरणे "शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः" इति सूत्रेणात्मज्ञानं कर्मशेषभूतकर्तृद्वारा पर्णतादिवत्कर्माङ्गम् । "तरति शोकमात्मवित्" इति फलश्रुतिस्तु अपापश्लोकश्रवणवदर्थवादः इति जैमिनिमतं पूर्वपक्षतयोद्भाव्य "तद्वतो विधानादि"ति सूत्रान्तरेण "आचार्यकुलाद्वेदमधीत्ये"ति श्रुत्या सकलवेदार्थज्ञानवतः कर्मविधानादपि लिङ्गात् कर्माङ्गमात्मविद्येति स्वयं युक्त्यन्तरमुद्भाव्य "अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनादि"ति सिद्धान्तमुपक्षिप्य "अध्ययनमात्रवतः" इति सूत्रेण "आचार्यकुलाद्वेदमधीत्ये'ति वाक्ये अध्ययनमात्रस्य श्रावणादध्ययनमात्रवतः कर्माधिकारो नत्वर्थज्ञानवत इत्युक्तत्वात् नार्थज्ञानप्रयुक्तमध्ययनमिति स्पष्टमेवावगम्यते । "अध्ययनमात्रवतः कर्माधिकार इत्यध्यवस्यामः" इति भगवत्पादभाष्यादिकमप्यत्र प्रमाणम् । वाचस्पतिमिश्रादिभिरप्ययमर्थः सम्यगुपपादित इति तत एव द्रष्टव्यम् । एवंचार्थवादविषये स्वाध्यायविधितः फलवदर्थपर्यवसानालाभात् तेषां विध्युद्देशाकाङ्क्षानुत्थानात् न परस्पराकाङ्क्षाया विध्यर्थवादयोरेकवाक्यत्वम्, किन्तु रक्तः पटो भवतीत्यत्र केवलरक्तपदाकाङ्क्षयेव विध्युद्देशमात्राकाङ्क्षयाऽर्थवादानां तदेकवाक्यतेति भाष्यानुयायी सुगमः पन्था इति—**निरूपयन्ति**॥

**परमार्थतस्तु**—अधीतेन स्वाध्यायेनैवार्थज्ञानं संपादयेत् इति नियमविधिरेवात्र विवक्षितः; नापूर्वविधिः, येन तत्राध्ययनविधिव्यापारवैफल्यमाशङ्क्येत । अध्ययनसंपादितराजसूयाद्यर्थज्ञानस्यापि ब्राह्मणानां याजनादावुपयोगो विद्यते । अन्येषां तु ब्राह्मणादिमात्राधिकारिककर्मावबोधादिकमदृष्टार्थं भविष्यतीति न कृत्स्नाध्ययनाभावप्रसङ्गः । वेदभाष्योदाहृतं तु वचनं पूर्वपक्षिणो न सिद्धान्तविघातायालं भवति । साधितंहि तत्रैवार्थज्ञानार्थत्वमध्ययनस्येति तद्दर्शिनां विशदमेव । पित्राद्युपदेशजन्यार्थज्ञानेनतु न क्रत्वधिकारसिद्धिः; नियमविध्याश्रयणात् । तत्तद्वाक्याध्ययनसमनन्तरसंजातापातज्ञानेन विशिष्य तत्तदर्थज्ञानोद्देशोऽपि संभवत्येव । एवंच प्रयोजनवदर्थज्ञानार्थमेवाध्ययनमत्र विधीयते । नह्यन्यथा वेदवाक्यानां सर्वेषां धर्मप्रामाण्यं निर्वहति । ब्राह्मणेन निष्कारण इत्यत्र तु न ज्ञानविधिः; ज्ञानस्य वस्तुतन्त्रस्याविधेयत्वात्, भवदुपपादितरीत्या पित्राद्युपदेशत एव संध्योपासनादाविवार्थज्ञानस्य क्रतुष्वपि प्राप्त्या षडङ्गाध्ययनस्यापि विहितत्वेन सर्वेषामपि गृहीतपदतदर्थसङ्गतिकत्वावश्यकत्वेन "स्थाणुरयं भारहारः किलाभूदि"ति निश्चयात्मकज्ञानस्यापि प्राप्तत्वेनच विचारविधेरप्ययोगात् । नियमविधिनातूपपत्तिः स्वाध्यायवाक्येऽपि संभवतीति तत्रैव विचारव्यापारोऽपि । केवलाध्ययनस्यानधीयाना व्रात्या भवन्तीत्यनेनैव प्राप्तत्वात् । ज्ञेयश्चेति अध्ययनविध्यपेक्षितेतिकर्तव्यतासमर्पणार्थमेव नतु अध्ययनस्यार्थज्ञानप्रयुक्तत्वं वारयति । अथवाऽनुवाद एवायमिति पश्यामः । "तेन किमित्यपेक्षिते यच्छक्यतेइत्युपबन्धात् अक्षरग्रहणमित्यापतति । तस्याप्यपुरुषार्थत्वात्तेन किमिति पदावधारणमित्युपतिष्ठते । तेनापि पदार्थज्ञानं तेन वाक्यार्थज्ञानं तेनानुष्ठानमनुष्ठानेन स्वर्गादिफलप्राप्तिरित्येतावति निराकाङ्क्षीभवति" इत्यादिभिर्वाक्यैर्वार्तिककारा हि कण्ठत एवार्थत्वज्ञानार्थमध्ययनस्य नत्वक्षरावाप्त्यर्थत्वमिति प्रतिपादयन्ति । अर्थज्ञानार्थत्वपक्षेऽपि कल्पसूत्रादिसार्थक्यं कल्पसूत्राधिकरणादौ व्यक्तम् । शेषत्वात्पुरुषार्थवाद इति अर्थज्ञानार्थत्वपक्षमेव जैमिनिसंमतमनुवदन् बादरायणोऽपि अत्र हस्तावलम्बयति । अध्ययनमात्रवत इत्यत्रोपनिषदंशमात्रेऽर्थज्ञानानपेक्षा बोध्यते, नतु अर्थावबोध इति स्पष्टमेव तस्मिन्नेव सूत्रे भाष्यभामत्यादिष्वर्थज्ञानार्थत्वपक्ष एव सम्यगुपपादित इत्यहो स्वासिनैव स्वाङ्गुलिच्छेदः । एवंचार्थज्ञानार्थत्वपक्ष एव सकलप्रामाणिकमीमांसकसंमतो नाक्षरग्रहणार्थत्वपक्षः । अन्यथाऽर्थज्ञानानन्तरं स्नानेऽधीत्य स्नायादिति क्रमविरोधापत्तेः । नह्यन्यथाऽर्थवादानां प्राशस्त्यलक्षकत्वमुपपद्यते । रक्तपटन्यायस्तु भाष्ये निरर्थवादस्थल इव विधेरेव प्राशस्त्यलक्षकत्वशङ्कानिरासार्थं इत्यादि वार्तिकादौ स्पष्टमिति अर्थज्ञानार्थत्वमेवाध्ययनस्य स्वाध्यायविधिना बोध्यते इति न्यायसुधाभाट्टदीपिकादिकृतां हृदयम्—**इति**॥ **एतेन**—अध्ययनविधेरक्षरग्रहणपर्यन्तत्वमेवेतिसेश्वरमीमांसादिसिद्धान्तोऽपि—**पराहतः**; वार्त्तिकादिविरोधात् । विचारानित्यत्वाद्यापत्तेश्चेति मन्तव्यम्.

व्यप्रत्ययेन स्वाध्यायस्य[1] कर्मत्वाभिधानात् । अतश्च स्वाध्यायार्थस्य प्रयोजनवत्त्वसिद्धौ तात्पर्यग्राहकवशेन[2] लक्षणा अर्थवादेषु । लक्षणीयश्चार्थः सन्निहितविधिनिषेधापेक्षितत्वात् स्तुतिनिन्दारूपः ।

**तथाहि—**लिङाद्यर्थो लोके पुरुषाशयः । वेदे तदभावाल्लिङादिशब्दनिष्ठ एव कश्चिद्धर्मः । वाच्यतावच्छेदकं

---

व्यम् । नहि यावद्वेदसमाप्त्याचार्याधीनेन स्मृत्युक्तशुश्रूषादिनियमैः तदुपासनपरेण स्वतः सर्ववर्णादिभ्रंशराहित्येन क्लेशसाध्यमध्ययनं अन्यपुरुषानत्याचार्यकरणरूपफलार्थं कथमप्यनुष्ठातुं शक्यते । तस्माद्द्रव्यार्जनोपायत्वेन प्रतिग्रहादिवदध्यापनमपि प्राप्तम् ॥

**( अध्ययनस्य स्वविधिप्रयुक्तत्वोपसंहारः )**

अध्यापनस्यैव विध्यभावे तत्प्रयोजकस्वाध्यायाध्ययनासंभवात् उपनीतस्य प्रयोजनवदर्थज्ञानार्थं स्वाध्यायाध्ययनविधिना अध्ययनं प्रयुज्यत इति सिद्धे अर्थवादेषु शक्यार्थमादाय तदसंभवे यावत्संभवं प्रयोजनवत्त्वलाभार्थं लक्षणाध्याहारादि कृत्वा धर्माधर्मप्रयोजकत्वं निर्वाह्यम् इति ॥

**( एकवाक्यत्वानुपपत्तेर्लक्षणाबीजत्वनिरासः )**

**तात्पर्यग्राहकवशेनेति । एतेन—**शक्यार्थान्वयेन विध्येकवाक्यत्वासंभवे तदनुरोधेन प्राशस्त्यादिलक्षणा, तया एकवाक्यत्वमित्यन्योन्याश्रयापत्तिः—**परिहृता;** तात्पर्यग्राहकवशेन तदङ्गीकारे एकवाक्यत्वानुपपत्तेरत्र बीजत्वाभावादित्यर्थः ॥

**( लिङर्थभावनाया लोके पुरुषाशयत्वसमर्थनम् )**

सन्निहितविधिनिषेधापेक्षितं अर्थं लक्षयितुं विधिनिषेधार्थकथनव्याजेन लक्षणीयार्थापेक्षां दर्शयति—**तथाहीत्यादिना ।** लिङ्लोट्तव्यास्तावदज्ञातभावनाज्ञापकाः तदनुष्ठापकाश्च । भावना च भाव्यतेऽनयेति व्युत्पत्त्या अन्यभवनानुकूलो धात्वर्थातिरिक्तो व्यापारः; यजेतेत्यादिश्रवणोत्तरं यागानुकूलं व्यापारं कुर्यादित्यादिरूपेण भावनाविषयाज्ञातज्ञापनस्य प्रवर्तनापरपर्यायानुष्ठानस्य च प्रतीतेः । अतएव भावनाविधायकत्वेन मुख्यं विधित्वं लिङादीनां, तद्युतानां स्वर्गकामो यजेतेत्यादिवाक्यानां अज्ञातभावनांशत्रयज्ञापकत्वाद्द्विशिष्टभावनानुष्ठापकत्वाद्विधित्वव्यवहारः, तत्रावापोद्वापाभ्यां आचार्यप्रेरितोऽहं गामानयामि मत्प्रवृत्त्यनुकूलव्यापारवानयं इत्यादिव्यवहारात् प्रवृत्त्यनुकूलव्यापारे शक्तिर्लिङादीनाम् । सच व्यापारो गुर्विच्छयाऽहं प्रवृत्तो न तु स्वेच्छयेति व्यवहाराल्लोके इच्छैवेत्यभिप्रायेणाह—**लोके पुरुषाशय इति ॥**

**( लोकवेदसाधारण्येनेष्टसाधनत्वमभिधा वा भावनेति मण्डनपार्थसारथिमतनिरूपणम् )**

अपौरुषेये वेदेऽपि मत्प्रवृत्त्यनुकूलव्यापारवानयं विधिरिति व्यवहारात् तेषां च विध्यादीनां अचेतनत्वेन तादृशेच्छाया असंभवात् यागादिगतेष्टसाधनत्वस्य प्रवृत्त्यनुकूलत्वेन ज्ञातत्वात्तस्यैव प्रवर्तनात्वेन रूपेण बोध इति मण्डनमिश्राः । पार्थसारथिस्तु षष्ठाद्यधिकरणे वेदे शब्दकर्तृकस्य अर्थप्रतिपादनरूपस्य व्यापारस्य प्रवर्तनत्वमित्याह ॥

**( विधिज्ञानमेव भावनेति केषांचिन्मतम् )**

अस्मिन् मते कोऽसौ व्यापारः । इत्यपेक्षायां **केचिदाहुः—**प्रवर्तनादिः प्रवृत्तिहेतुर्व्यापारः विधिशब्दस्य चाख्यातत्वेन दशलकारसाधारणेनोपाधिना पुरुषप्रवृत्तिरूपार्थभावनां प्रति वाचकत्वम् । तज्ज्ञानहेतुत्वमिति यावत् । सा च ज्ञातैवानुष्ठानशक्येति तद्धीहेतोरपि शब्दस्य तद्धेतुत्वं परम्परया भवत्येव । तत्र च विधिशब्दस्य पुरुषप्रवृत्तिरूपभावनाज्ञानहेतुर्व्यापारः तद्वाचकशक्तिमत्तया विधिशब्दज्ञानं स एव च तस्य प्रवृत्तिहेतुर्व्यापार इति प्रवर्तनाभिधानीयकं लभते । ज्ञानद्वारेणैव शब्दस्य प्रवृत्तिजनकत्वात् ज्ञानजनकव्यापारातिरिक्तव्यापारकल्पने मानाभावात् । ज्ञानजनकश्च व्यापारः तस्य स्वज्ञानं शक्तिज्ञानं शक्तिविशिष्टस्वज्ञानं च । तत्राद्ययोरन्यतरस्य शब्दभावनात्वं, तृतीयस्य तु तत्र करणत्वमिति विवेकः । एवं स्थिते नियमेन विधिना स्वज्ञानं जन्यते प्रवर्तनात्वेन अभिधीयतेऽपीति विधिज्ञानमेव शाब्दभावना—**इति ॥**

**( भावनाया इष्टफलत्वाभिधानम् अर्थभावनाभिधानानुकूलाशक्तिः, अलौकिकधर्मएवच शाब्दभावनेतिभाट्टभास्करादिमतनिरूपणम् । )**

**भाट्टभास्करे तु—**"अंशत्रयविशिष्टभावनाप्रतिपादनं चास्य व्यापारः । तत्र यदि भाव्यांशे पुरुषार्थ उपनीयते ततस्तत्प्रतिपादनं प्रवृत्तिहेतुर्भवति नान्यथा; तेन शब्दकर्तृकस्यार्थप्रतिपादनरूपस्य व्यापारस्य प्रवर्तनारूपत्वं संपादयितुं तद्विषयीभूताया भावनायाः पुरुषार्थभाव्यत्वं निश्चीयते" इति तत्रत्यशा-

---

(१) कर्मत्वेनच स्वाध्यायस्य संस्कार्यत्वावगमात् संस्कृतस्यच तस्यार्थज्ञानविनियोगस्यार्थसिद्धत्वाद्युक्तं स्वाध्यायपदेनार्थज्ञानसाधनस्वाध्यायलक्षणम् । पूर्वस्मिंश्च पक्षे सक्तुवद्विपरिणामेन मत्वर्थलक्षणयाच स्वाध्यायविशिष्टाध्ययनेनार्थज्ञानं भावयेदिति वाक्यार्थोऽवगन्तव्यः । तव्यप्रत्ययस्त्वौपचारिकं कर्मत्वमवगमयति । अधीतेन स्वाध्यायेनार्थज्ञानं भावयेदिति तु पर्यवसितार्थः । साम्ना स्तुवीतेत्यत्र ऋक्संस्कारकतया वचनान्तरेणाविनियोगेऽपि यथा तत्संस्कारता स्वाभाविकी न हीयते, तथात्रापीत्यादिन्यायरत्नमालायां स्पष्टम्.

(२) शाब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य कारणत्वात् स्वाध्यायविधिरेव सकलस्य वेदस्य प्रयोजनवदर्थतात्पर्यग्राहक इति भवदेवः । तात्पर्यज्ञानस्य शुकादिवाक्ये व्यभिचाराच्छाब्दबोधत्वावच्छिन्नं प्रत्यकारणत्वेन लोकतः पूर्वं शास्त्रप्रवृत्त्या प्रयोजनवदर्थावगम इति कौस्तुभकाराः.

चोभयसाधारणं व्यापारत्वं, नतु प्रवृत्तिनिवृत्तिप्रयोजकत्व-

न्त्रदीपिकाग्रन्थात् इष्टफलकत्वाभिधानं यत् भावनायाः सर्वत्र वेदे शब्दभावना लोकेच या प्रतीयत इतिप्रवृत्तिरूपार्थभावनाया इष्टफलत्वाभिधानं विधिशब्दगतं सैव शब्दभावना प्रवर्तनात्वेन वेदे लिङाद्यर्थ इत्युक्तम् ॥ अंशत्रयविशिष्टभावनाप्रतिपादनं चास्य व्यापार इत्युक्तेरर्थभावनाभिधानानुकूला शक्तिरेव प्रवर्तनात्वेन वेदे तदर्थ इति तु पूज्यपादाः प्रकाशकाराश्च । **तदुक्तमाचार्यैः** "अभिधाभावनामाहुरन्यामेव लिङादयः । अर्थात्सा भावनात्वन्या सर्वार्था तेषु गम्यते" **इति** ॥ सर्वमतेऽपि परस्परं विनिगमनाविरहस्य स्फुटत्वाल्लोकेऽपि तथात्वापत्तेः **क्लृप्तेषु विनिगमनाविरहेण कल्प्यमन्यत् सिध्यतीति**न्यायेन अतिरिक्तो विधिशब्दनिष्ठोऽलौकिको धर्म एव प्रवर्तनात्वेन वेदे तदर्थ इति न्यायसुधाकृन्मतमेव युक्तमित्यभिप्रेत्याह—**कश्चिदिति** । अनेन अलौकिकत्वमुक्तम् । एवकारेण च मतान्तरनिरासः ॥

### ( अलौकिके शब्दधर्मे शक्तिग्रहोपपादनग्रन्थः )

**ननु** य एव लौकिकाश्शब्दास्त एव वैदिकाः य एव तेषामर्थस्त एवामीषामर्थ इति न्यायात् लोके विधिशब्दस्य यत्र शक्तिर्गृहीता, वेदेऽपि तदर्थकेनैव भवितव्यम् । लोके च प्रेषणादिपुरुषधर्मवाचित्वं क्लृप्तमिति वेदे तदभावेन शक्तिग्रहाभावे कथमलौकिकधर्मोपस्थितिरित्याशङ्कानिराकरणायाह—**उभयसाधारणमिति** । प्रवर्तना हि प्रवृत्त्यनुकूलो व्यापारः । तत्र लोके आवापोद्वापाभ्यां व्यापारत्वेनैव सखण्डेनाखण्डेन वा शक्तिग्रहात् यद्धर्मावच्छिन्ने यस्य शब्दस्य शक्तिग्रहो जातः, तद्धर्मप्रकारके बोधे तेन शब्देन जनिते सति तद्धर्माश्रयव्यक्तीनां विशेष्यत्वानुपपत्तौ अप्रसिद्धव्यक्तिमाक्षिप्यैव बोधः पर्यवस्यतीति । अपूर्वात्मककार्यविध्यर्थवादिमते लोके प्रसिद्धस्य न्यायस्य पार्थसारथिमतेचोक्तशब्दभावनायामप्यवश्यसंचारणीयस्य अलौकिकप्रेरणावादिमते योजनेन तदुपपत्तेरित्यर्थः ॥ **आख्यातार्थप्रवृत्तीति** । एतच्च दशलकारवृत्त्याख्यातत्वरूपं लत्वं शक्ततावच्छेदकीकृत्य प्रवृत्तेरन्यलभ्यत्वोपपादनं परमताभिप्रायेणेति आख्यातार्थेत्यनेन सूचितम् ॥

### ( आख्यातत्वशक्ततावच्छेदकत्वखण्डनेन तिबादितत्वव्यवस्थापनम् )

स्वमतेतु तदंशे शक्ततावच्छेदकभेदेन नान्यलभ्यत्वं प्रतिपाद्यते, किन्तु दशलकारसाधारणाख्यातसामान्यार्थकतिबादिपृथक् शक्तिमात्रेण । अतएव आख्यातत्वं तिबाद्यादेशेष्वेव वर्तते; तच्छ्रवण एवाख्यातमिति प्रतीतेः । भावनाप्रवर्तनादीनां तत्तदादेशेभ्य एव तिबादिभ्य उपस्थितेस्तत्तदादेशत्वमेव शक्ततावच्छेदकम्, नतु दशलकारवृत्तिलत्वरूपमाख्यातत्वम्; आदेशैः लकारोपस्थितिमन्तरापि तत्तदर्थोपस्थितेरनुभवसिद्धत्वात्, य-

मपि; तस्यान्यलभ्यत्वात् । तत्र नञोऽभावे आख्यातार्थप्रवृ-

थाकथंचिदुपस्थापितलकारादपि तद्बोधापत्तेश्च । नाप्यादेशोपस्थापितं तत्; शतृशानजादेशोपस्थितादपि तस्मात्तद्बोधापत्तेः ॥ नच अनेकशक्ततावच्छेदकस्वीकारे गौरवम्; प्रतीयमानार्थानुरोधेन गौरवस्यापि प्रामाणिकत्वात्, अन्यथा घटपटादिगतद्रव्यत्वस्यैव लघुभूतस्य घटपटरूपार्थशक्ततावच्छेदकत्वापत्तेः, वारिणीतीकारादेशस्य रामाविद्यादौ स्वातन्त्र्येणार्थबोधकतया क्लृप्तौकारस्मारकतया बोधकत्ववदिह लकारस्य स्वातन्त्र्येणार्थबोधकत्वस्याक्लृप्तेश्च । अतः श्रूयमाणतदादेशत्वमेव शक्ततावच्छेदकम् । अतएव पचतीति समभिव्याहारे ति इत्येतन्मात्रस्यैव भावनावर्तमानकालैकत्वादिरूपनानार्थकत्वम्, पचेदिति समभिव्याहारे त् इत्येतन्मात्रस्यैव प्रवर्तनाभावनैकत्वादिरूपनानार्थकत्वम्, एवमन्यत्रापि । इष्टसाधनत्वकृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वरूपविध्यर्थत्रयवादिमते पदार्थत्रयबोधवत् पुष्पवन्तपदे पृथक्शक्तिकल्पनेन पदार्थद्वयबोधवदिहाप्यनेकार्थस्य बोधः, नत्वेतावता प्रवर्तनाशक्ततावच्छेदकं लिङ्त्वादिकम्; पूर्वन्यायेन तदुपस्थितिं विनापि बोधस्यानुभवसिद्धत्वात् ॥

### (आख्यातत्वशक्ततावच्छेदकत्वे भाट्टालंकारमतनिरूपणम् )

**यत्तु**—भाट्टालंकारकृता भावनाया धातुवाच्यत्वे अनेकवर्णसमुदायात्मकेषु धातुषु धातुत्वजातेरसंभवात् तत्तद्धातुत्वस्य शक्ततावच्छेदकत्वस्वीकारे गौरवापत्तेः यागदानादिशब्देभ्योऽपि तत्प्रतीत्यापत्तेः आख्यातान्तधातुवाच्यत्वस्वीकारे च लाघवादाख्यातवाचित्वमेवाङ्गीकर्तुमुचितम्; आख्यातत्वं च दशसु लकारेषु विद्यमानं लत्वमेव । तदेवच शक्ततावच्छेदकम् । यथाचैकवर्णात्मकाकारादयो विष्ण्वादिषु शक्तास्सन्तोऽपि न तान् सदा बोधयन्ति, नाप्यकारादिपदोपस्थापिताः, श्रौतलिप्यन्यपदजन्योपस्थितेरेव तेषु शब्देषु तत्तदर्थबोधान्वयफलोपधानावच्छेदकत्वात् , तथा 'लः कर्मणि'त्यादेर्वेदाङ्गान्तःपातित्वेन वैदिकपरिगृहीतपाणिनीयवचनत्वाच्च लत्वेन शक्तिग्रहे जातेऽपि तिबाद्यादेशजन्योपस्थितेरेव फलोपधानावच्छेदकत्वात् न स्वरूपेणोच्चारितात् शतृशानज्भ्यां स्मारिताद्वा लकारात् भावनाप्रतीत्यभावो दोषाय ॥ **नच**—स्वयमशक्ताः शक्तशब्दान्तरस्मरणेन अर्थबोधनार्थं प्रयुक्ताः अशक्तिजत्वेन कैश्चिद्व्यवहृतास्तिबादयः कथं नाशक्तिजगाव्यादितुल्याः स्युरिति—**शङ्क्यम्**, स्वसमभिव्याहारे स्वोपस्थित्यनपेक्षगवादिस्मरणेनार्थबोधकत्वेन गाव्यादीनामशक्तिजत्वरूपापभ्रंशत्वेप्यत्र तदसंभवात् । नहि गाव्यादिशब्दोपस्थितिमनपेक्ष्य गवादीनामिव तिबाद्युपस्थितिमनपेक्ष्य लकारस्यार्थबोधकत्वमस्ति । येन तद्वदेवाशक्तिजत्वं तिबादिषु वक्तुं शक्येत । यद्यप्यौकारस्यास्ति स्वातन्त्र्येण बोधकत्वम्; तथापि तत्र स्वसम-

**त्तिप्रयोजकत्वं, तत्सत्त्वे तु तदर्थप्रवृत्त्यभावप्रयोजकत्वं संसर्ग इति विशेषः । प्रयोजकत्वं चात्र प्रवृत्तितदभावकारणीभूते-**

भिव्याहारे आदेशस्मारितस्यैव तस्य बोधकत्वात् । अतएव पूर्वोक्तापभ्रष्टत्वाभावे स्वसमभिव्याहारे स्वोपस्थित्यनपेक्षार्थबोधकशब्दस्मरणं विनैव यः शब्दो यमर्थं बोधयति स तत्र साधुरिति साधुत्वलक्षणसत्वात् गवादीनामिव तिवादीनां साधुत्वं निराबाधमिति लत्वमेव साधारणं भावनाशक्ततावच्छेदकम् । प्रवर्तनायास्तु असाधारणं लिङ्त्वं—इत्युक्तम् ॥

## (आख्यातत्वशक्ततावच्छेदकत्वपरभाट्टालंकारसिद्धान्तखण्डनम्)

**तन्न**; अनेकवर्णसमूहात्मकधातुत्वजातौ प्रमाणाभावेन धातुत्वेन रूपेण भावनाया धात्ववाच्यत्ववत् लत्वस्याप्यनेकस्य जातिरूपत्वे मानाभावात् तद्वाच्यत्वस्याप्यनुपपत्तेः, आख्यातान्तधातुवाच्यत्वपक्षेऽपि लाघवादाख्यातवाच्यत्वापादनवत्तिबादिवाच्यत्वमेव युक्तमित्यापादनस्य भवन्मतेऽप्यापत्तेश्च । "लः कर्मणी"त्यादिसूत्रे दशानामपि लकाराणां लत्वेन संग्रहात् लत्वं नामाखण्डोपाधिरूपमस्तीति चेत्, "भूवादयो धातव" इत्यत्र भूवादीनामपि धातुत्वेन संग्रहात् तस्याप्यखण्डोपाधिरूपस्य धातुत्वस्य शक्ततावच्छेदकत्वस्वीकारे बाधकाभावेन तद्वाच्यत्वेऽपि बाधकाभावः । तिबाद्यादेशानां आदेशिलकारोपस्थितिं प्रति कारणत्वकल्पनायाः भावनोपस्थितिं प्रति च तिबाद्यादेशगतानन्तशक्तिभ्रमाणां कारणत्वकल्पनायाश्च गौरवग्रस्तत्वेन तदपेक्षया भावनाद्युपस्थितिमात्रं प्रत्येव तेषां कारणत्वकल्पने लाघवाच्च, कर्तृकर्मादिरूपशक्यार्थनिरूपितत्वेन व्याकरणात् प्रतीयमानस्य लत्वे शक्ततावच्छेदकत्वस्यान्ततो गत्वा तवापि हेयत्वाच्च, लत्वरूपाख्याततत्वस्य भावनाशक्ततावच्छेदकत्वे 'लःकर्मणी'त्यनुशासनस्य प्रमाणत्वेनोपन्यसनस्य सकलपूर्वोत्तरग्रन्थविरुद्धत्वेनोपहासास्पदत्वाच्च, भवदुपपादितपूर्वोक्तापभ्रष्टत्वसाधुत्वलक्षणयोर्द्विरेफादिपदेषु अव्याप्त्यतिव्याप्तिदूषणग्रस्तत्वाच्च । अतो न लत्वं शक्ततावच्छेदकम्, अपितु तत्तदादेशत्वमेव; तैरेव पचति "पाकं करोती"ति विवरणे धात्वर्थव्यतिरिक्तत्वेन प्रतीयमानाया भावनायाः प्रतीतेः । साच यत्नार्थकेन व्यापारसामान्यार्थकेन वा करोतिना विव्रियमाणत्वाच्च यत्नरूपा व्यापारसामान्यरूपा वेति मतभेदो भाट्टरहस्यादौ द्रष्टव्यः ॥

## (भावनांशे लडादीनां पृथक्शक्तिकल्पननिरूपणमन्यलभ्यत्वोक्तेस्संसर्गाभिप्रायत्ववर्णनं च)

**नच**—प्रवर्तनाभावनयोर्भिन्नशक्ततावच्छेदकाभावे कथमन्यलभ्यत्वोक्तिः पूज्यपादानाम्? इति—**वाच्यम्**; भावनांशे लडाद्यादेशानां पृथक्शक्तेरावश्यकत्वात्, तथैव पृथक्शक्त्या लिङादेशैरपि बोधसंभवात्, विशिष्टशक्तिकल्पने गौरवात्, प्रयोजकत्वादिसंसर्गाभिप्रायेणैवान्यलभ्यत्वस्योपपादनीयत्वात् । अन्यथा तिबाद्यादेशोपस्थापितस्यैव लिङादेर्लिङ्त्वांशे प्रवर्तनावाचित्वं, तेषामेवादेशविशेषाणां साक्षात् भावनावाचित्वमित्येव वैषम्येणान्यलभ्यत्वोपपादने प्रवर्तनाबदैकरूप्येणैव सर्वत्रैवादेशोपस्थापितलत्वं शक्ततावच्छेदकीकृत्य भावनावाच्यत्वोपपत्तेर्गुरुभूतत्वेन लत्वस्य शक्ततावच्छेदकत्वदूषणेन आदेशविशेषाणामेव भाट्टरहस्यादौ अत्र च भावार्थाधिकरणे स्थापितस्य शक्ततावच्छेदकत्वस्य निर्युक्तिकत्वापत्तेः । अतो लडादिसाधारणशक्त्यन्तरेणैव तल्लाभे न प्रवृत्तिप्रयोजकव्यापारत्वं गुरुभूतं शक्यतावच्छेदकमङ्गीकृत्य विशिष्टार्थे शक्तिकल्पनं युक्तमित्येवंविधया संसर्गांश एव अन्यलभ्यत्वोपपादनं युक्तम् ॥

## (आख्यातार्थप्रवृत्तिप्रयोजकत्वं संसर्ग इति भाट्टदीपिकावाक्यस्य भावनामुख्यविशेष्यत्वेनाविरोधोपपादनम्)

**संसर्ग इति** । इदंच संसर्गोपपादनं लिङर्थस्येच्छादेः कालादेश्चैककार्यकारणभावानुरोधेन प्रवृत्तावेव स्वविषयज्ञानजन्यानुमितिजन्यत्वतादृशज्ञानजन्यानुमितिप्रयोज्याभावप्रतियोगित्वसंसर्गेण प्रकारतयाऽन्वयस्य मूलकृता तत्र तत्रोपपादितत्वात् समानसंवित्संवेद्यत्वेन यत्प्रवर्तनादिरूपार्थे प्रवृत्तिनिवृत्तिप्रयोजकत्वमर्थात्संसर्गविधयावगतं तदादाय ज्ञेयम्, नत्वेतावता प्रवृत्तिं प्रति प्रवर्तनाया विशेष्यत्वे तात्पर्यं पूज्यपादानाम् ॥

## (भावनामुख्यविशेष्यत्वव्यवस्थापनम्)

'भावप्रधानमाख्यात'मिति स्मृत्या अनेकेष्वाख्यातार्थेषु मध्ये कस्य प्राधान्यमित्यपेक्षायां परिसंख्यार्थं प्रवृत्तया भावनाविशेष्यत्वस्यैव लडादिसाधारणस्यैककार्यकारणभावलाघवसहकारेण प्रतीतेस्तद्विशेष्यत्वस्यैव युक्ततमत्वात्, करणफलनिरूपितप्रवृत्तिविशेष्यत्वे उपस्थित एव प्रवर्तनानिरूपितत्वमात्रकल्पने लाघवाच्च । **यथाहुः**—"प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययौ यदा । प्राधान्यात् भावना तेन प्रत्ययार्थोऽवगम्यते । तथा क्रमवतोर्नित्यं प्रकृतिप्रत्ययांशयोः । प्रत्ययश्रुतिवेलायां भावनात्मावगम्यते" इति ॥

## (प्रवर्तनामुख्यविशेष्यत्वमतोपपादनम्)

**यत्तु**—अत्र भाट्टालंकारकृता प्रकृतेर्लिङाद्यर्थे प्रकारत्वेनान्वयार्थं लिङ्त्वावच्छिन्नशक्तिविषयत्वमेव प्रवर्तनावदावश्यकम्; अन्यथा आख्यातत्वावच्छिन्नशक्तिविषयत्वे लडादिष्विव तस्याः प्राधान्यापत्तिरिति मतमुपपाद्य एकप्रत्यये द्विर्भावनाभिधानेऽतिगौरवात् सर्वाख्यातेषु धात्वर्थनिरूपितभावनाप्राधान्यकथनेन स्मृत्युपपत्तेः निरपेक्षशक्यताशालिन्योर्विधिभावनयोर्युगपदेकशब्दोपस्थापितयोस्संख्याकारकन्यायेनैकविशेष्यत्वेऽवश्यवाच्ये मूलोपन्यस्तप्रतीतिमनुसृत्याख्यातार्थस्य लिङर्थं प्रति प्रकारत्वौचित्याच्च । नहि पुष्पवन्तादिपदं प्रति

ष्टानिष्टसाधनताज्ञानजनकज्ञानविषयत्वम् । अभावकारणता

सूर्याचन्द्रमसोरिव मिलितयोर्विधिभावनयोः शक्यतेति वक्तुं शक्यम्; लडादिषु भावनाया अप्रतीतिप्रसक्तेः । नाप्यनेकार्थाक्षादिपदमिवोभयप्रत्ययं प्रत्ययः क्रमेण जनयति । नाप्येकशेषवल्लुप्तानेकशब्दसहितः, येन तत्तद्दृष्टान्तेन अन्विताभिधानं तयोः प्रसज्येतेति दूषितम् ॥

## ( प्रवर्तनामुख्यविशेष्यत्वखण्डनम् )

**तदयुक्तम्**, एकप्रत्ययेन शक्ततावच्छेदकभेदेन द्विरभिधानस्यैव शक्ततावच्छेदकैक्येऽपि द्विरभिधाने बाधकाभावात्, प्रत्युतैकैकादेशेभ्यः समकालप्रतीयमानानेकार्थानां तत्तत्स्थानिगतलत्वैकवचनत्वाद्यनेकोपस्थितिसापेक्षत्वकल्पने तत्तत्कार्यकारणभावकल्पनागौरवस्य भवन्मत एवापत्तेः । लट्त्वस्यापि जातिरूपत्वासंभवेनान्ततो गत्वा लडादिदशकान्यतमत्वस्यैव वक्तव्यत्वाद्वर्तमानकालादिबोधार्थं तिबाद्यादेशैर्लट्त्वेन रूपेण लडुपस्थितेरावश्यकत्वेन तत एव भावनोपस्थितेरपि अनुभवसिद्धाया अवर्जनीयत्वात्, तदतिरिक्तलत्वस्य शक्ततावच्छेदकत्वकल्पन एव अतिगौरवापाताच्च, केवलं प्रयुक्तेभ्यो दिवाकरनिशाकरादिशब्देभ्यः परस्परनिरपेक्षतया तत्तदर्थप्रतीत्या पृथगर्थवाचित्वेऽपि पुष्पवच्छब्दान्मिलितयोस्तयोरर्थयोः प्रतीत्या मिलितार्थवाचित्वस्य तच्छब्द इव लडादिषु केवलं भावनाप्रतीतावपि लिङादिषूभयार्थस्यैव प्रतीत्या लिङादिष्वपि तादृशार्थवाचित्वस्य कल्पने बाधकाभावाच्च, एकशक्ततावच्छेदकावच्छिन्नेनैव लिङा बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वकृतिसाध्यत्वादिरूपार्थानां प्रत्येकमभिधानस्य तार्किकादिभिः स्वीकाराच्च, धात्वर्थनिरूपितप्राधान्यमादाय भावप्रधानमिति स्मृत्युपपादने तादृशार्थस्य सुबर्थवत् "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः तयोस्तु प्रत्ययः प्राधान्येने"ति स्मृत्यैव सिद्धत्वेन विशेषत आख्यातपुरस्कारेण भावनाप्राधान्यकथने स्मृत्यन्तरस्य वैयर्थ्यापत्तेश्च, मत्प्रवृत्त्यनुकूलव्यापारवानयमितिवदाचार्यनिष्ठव्यापारजन्यप्रवृत्तिमानहमिति प्रतीतेरपि प्रवर्तनासाधकतया मूलप्रतीत्यविशेषात् तदनुरोधेन प्रवृत्तिविशेषणकप्रवर्तनाबोधमात्रेण प्रवर्तनाविशेष्यत्वकल्पनायां मानाभावाच्च । अतः स्वसमभिव्याहारसाधारण्येन क्लृप्तकार्यकारणभावानुरोधेनान्यत्र क्लृप्तं भावनाविशेष्यत्वमेव युक्तमिति प्रवर्तनैव विशेषणं तस्याम् । ततश्च प्रवर्तनायाः स्वविषयकज्ञानजन्यानुमितिजन्यत्वतादृशानुमितिप्रयोज्याभावप्रतियोगित्वसंबन्धाभ्यां नञस्सत्वेऽसत्वेवा क्रमेण प्रवृत्तावेवान्वयः । स्वपदं च लिङर्थपरम् । तद्घटकानुमितिप्रकारस्तु भाट्टरहस्यादौ द्रष्टव्यो विस्तरभयान्नोच्यते । प्रयोजकत्वं चात्रेत्यादिना मूलेऽर्थसिद्धं प्रवर्तनाप्रयोजकत्वमादायान्यलभ्यत्वोपपादनं कृतम्, नतु तात्पर्यविषयीभूतशब्दबोधोपयोगित्वेन तत्कथनमिति दिक् ॥ **योगक्षेमेति** । अलब्धलाभो **योगः** । लब्धस्य परिपालनं **क्षेमः** ।

च योगक्षेमसाधरणी । तत्त्वं च प्रवृत्तिसामग्रीविघटकत्वमि-

तथाच अनिष्टसाधनत्वानुमित्या लब्धप्रवृत्तिसामग्रीविघटनं प्राप्य तेन सिद्धप्रवृत्त्यभावरक्षणं क्रियत इत्येवं अभावकारणत्वमित्यर्थः । यदातु भाट्टसोमेश्वरमतेन मयैतत्कर्तव्यमिति संकल्पात्मिका भावनातो भिन्नैव प्रवृत्तिः, तद्द्वारेणैव भावनाया विधिभाव्यत्वमिति स्वीक्रियते, तदा तस्या आख्यातान्तरेष्वप्रतीतिः, एवमेवोक्तं भावनाविवेके महामुद्गलभट्टैः । यदि लिङ एव तत्र पृथक्शक्तिकल्पनेऽपि आख्यातार्थभावनायां स्वर्गादिभाव्यस्येव प्रवर्तनाभाव्यास्यात्मनोऽस्तु विशेषणत्वं प्रवर्तनां प्रतीति, अस्तु तदाऽन्यलभ्यत्वम् ॥

## (निषद्धस्थले निवर्तनाप्रतीतिप्रकाराणां निरूपणम्)

**ननु** प्रवृत्तेराख्यातवाच्यत्वेनान्यलभ्यत्वेपि निवृत्तेरन्यत्राप्रतीतेः तदंशे लिङादेः शक्तिकल्पनमावश्यकमिति कथमन्यलभ्यत्वमित्याशङ्कानिराकरणायाह—**तत्त्वंचेति** । **अयमर्थः**—"न कलञ्जं भक्षयेत्" इत्यादौ तावत् श्रुतो लिङादिः न प्रवर्तनावत् निवर्तनामभिधत्ते, किन्तु नञो द्योतकत्वात् नञ्समभिव्याहृत एव । तथाच नञः तात्पर्यग्राहकस्य सत्व एव निवर्तनायां शक्तिः । **अथवा**—व्यापारत्वेन प्रवर्तनानिवर्तनोभयसाधारण्येन व्यापारमात्रे लिङ्शक्तिः । नञ्प्रवृत्त्यभावप्रयोजकत्वरूपतत्संसर्गविशेषतात्पर्यग्राहकः । **अथवा**—प्रवर्तनात्वेन प्रवर्तनायामेव शक्तिः । नञ्समभिव्याहारे निवर्तनायां लक्षणा द्रष्टव्या । तथाच कलञ्जभक्षणप्रवृत्तिं आख्यातार्थभावनारूपां रागतः प्राप्तामुद्दिश्य लिङा तन्निवृत्तिरूपव्यापारफलकव्यापाररूपनिवर्तना विधीयते । शुद्धप्रवृत्तेश्चोद्देश्यत्वासंभवात् हविरार्तिन्यायेन धात्वर्थकारकादीनां उद्देश्यान्तर्गत्या कृतिविशेषणत्वस्य व्युत्पत्तिसिद्धत्वाद्वा विवक्षायामपि कर्तृकर्मादिकारकनिष्ठलिङ्गसंख्यादिविशेषणानामविवक्षोद्देश्यविशेषणत्वादुपपन्ना ॥

## (नञो निवर्तनाबोधकत्वमतदेकदेशिनोःखण्डनम्)

**यत्तु**—कैश्चिन्नञोऽभाववाचकस्यापि लिङादिसमभिव्याहारे सति निवर्तनावाचित्वम्, नतु लिङः; प्रवर्तनावाचित्वेन क्लृप्तस्य तत्रापि शक्तिकल्पने गौरवात् । तथाच रागाद्यर्थप्राप्तां कलञ्जभक्षणप्रवर्तनां लिङादिनोद्दिश्य नञा निवर्तना विधीयत इति वाक्यार्थवर्णनं—**कृतम्, तत् न**; रागादिनिष्ठप्रवर्तनावाचित्वस्य लोके वेदे वाऽक्लृप्तत्वेनानुवादायोगात्, स्वनिष्ठप्रवर्तनायाश्चाप्राप्तत्वेन लिङादिना अननुवादात्, विधानेच वाक्यभेदविकल्पाद्यापत्तेः । **एतेन**—भक्षणगतेष्टसाधनताया अनिष्टानुबन्धित्वेन गृहीतायाः प्रवर्तनात्वभ्रमे सति लिङा तामनूद्य तस्या निषेधो बोध्यते, यदन्नभोजनादाविव कलञ्जभक्षणेऽपि इष्टहेतुत्वं प्रवर्तकत्वेन ज्ञातं तन्न, कलञ्जभक्षणप्राप्येष्टस्यानिष्टानुबन्धित्वादिति वाक्यार्थवर्णनं भाट्टालंकारकृतोक्तम्—**अपास्तम्**; मीमांसकमते भक्षणगतेष्टसा-

त्यन्यत्र विस्तरः। स च लिङाद्यर्थो विधिवाक्ये प्रवर्तनाप्रेरणाविध्यपरपर्यायः, निषेधवाक्ये च निवर्तनानिवारणानिषेधप्रतिषेधापरपर्यायः। इयं च द्विविधाऽपि शाब्दी भावना। तस्याश्च भाव्यं यथायोगं प्रवृत्तिनिवृत्ती। शाब्दभावनाज्ञानं करणम्। करणत्वं चात्र भावनाभाव्यनिष्पादकत्वम्। इति-

---

धनत्वरूपप्रवर्तनायाः लिङादिभ्यः शक्तिग्रहाभावे कथमप्यप्रतीतेरतिरिक्तशक्तिकल्पने गौरवापत्तेः। अतः पूर्वोक्त एव वाक्यार्थो युक्तः। तेन च निषेधेन निवर्तनाबोधे सति प्रवर्तनाविषयत्वेन यागादीष्टसाधनत्वस्येव निषेधविषयेषु निवर्तनाविषयत्वेन अनिष्टजनकत्वस्यापि भाट्टरहस्योपपादितरीत्याऽनुमित्या भाने च सति बलवदनिष्टानुबन्धित्वज्ञानरूपप्रवृत्तिप्रतिबन्धकज्ञानसंपादनद्वारा तादृशप्रतिबन्धकाभावरूपप्रवृत्तिसामग्रीविघटनेन यत्रापि इष्टसाधनत्वभावानुमितिः तत्र पूर्वगृहीतेष्टसाधनताज्ञाने प्रामाण्यनिश्चायकतया प्रवृत्तिसामग्रीविघटनेन च यः प्रवृत्त्यभावः, तत्प्रतियोगित्वं प्रवृत्तौ बुध्यते। तथाच निवर्तनायाः प्रवृत्ताबन्वये स्वविषयकज्ञानजन्यानुमितिप्रयोज्याभावप्रतियोगित्वसंसर्गस्य संसर्गविधया भाने यः प्रवृत्त्यभावः तद्घटकस्स एव निवृत्तिपदार्थो न तु निवृत्तिर्नामातिरिक्तः पदार्थो, येनान्यलभ्यत्वं न स्यादिति ॥

## ( प्रेषणाध्येषणानुज्ञास्वरूपविवेचनम् )

लिङाद्यर्थप्रवर्तना हि उत्कृष्टस्य निकृष्टं प्रति, सा आज्ञा प्रेषणा इति चोच्यते। निकृष्टस्योत्कृष्टं प्रति सा अध्येषणा, समस्य समं प्रति उत्कर्षापकर्षौदासीन्येन सा अनुज्ञा अनुमितिरितिच व्यवह्रियते। एतादृशविशेषस्य प्रकृतानुपयोगात् तंविशेषमपहाय उपयुक्तं भेदव्यवहारं दर्शयति—**सचेति। शाब्दीभावनेति** ॥

## ( शाब्दीभावनांशत्रयापेक्षानिरूपणम् )

वेदगतविधिनिषेधवाक्येषु अलौकिकधर्मरूपायास्तस्याः लिङादिशब्दनिष्ठत्वात् यद्यपि यजेतेत्यादिविधिषु निषेधेषु च उभयविधाया अपि शब्दभावनायाः तद्विषयकप्रवर्तनान्तराभावेन न कर्तव्यताप्रतीतिः, येनार्थभावनाया इव करणेतिकर्तव्यतयोः भाव्यस्य चापेक्षयान्वयः तेषामुच्येत; तथापि अधीतो वेदः पुरुषस्य यादृशमुपकारं कर्तुं शक्नुयात्तमुपकारं कुर्यादित्यध्ययनविधितोऽवगमेन तद्वेदभागशक्त्यालोचनायां विधिनिषेधांशे तावदीदृश्यवगतिर्भवति—पुंकर्तृकाध्ययनविषयीकृतो यजेतेत्यादिलिङ्प्रत्ययः स्वयमेवाख्यातांशे संबन्धस्मरणेन विज्ञानेन वा करणेनेष्टसाधनविशिष्टार्थभावनारूपवाक्यार्थज्ञानं कृत्वा पुंप्रवृत्तिं कुर्युरिति। यदपि वार्तिके एतदधिकरणे अध्ययनसंस्कृतलिङो विधिज्ञानेन इष्टसाधनतयाऽर्थं ज्ञापयेयुरित्यर्थप्रदर्शनं कृतम्, सा प्रवृत्तिपर्यन्तज्ञापनारूपायाः प्रवर्तनायाः भाव्ये साधने प्राशस्त्येचापेक्षाया अभावात्तस्यामेव तदुपयोगात्तत्पर्यन्तोक्तिः। तत्र केन कथं किमुद्दिश्य प्रवर्तना निवर्तनाच कर्तव्येत्येवमंशत्रयवैशिष्ट्येन बोधितशब्दभावना-
कर्तव्यतापेक्षांशत्रयसमर्पणार्थमुच्यमानांशत्रयमध्ये प्रकृते इतिकर्तव्यतात्वेन अपेक्षितं प्राशस्त्यं निरूपयितुं भाव्यकरणे अनुवदति—**तस्याश्चेति**। समानाभिधानश्रुत्यवगतभावनाया एव भाव्यत्वं युक्तमिति भावः ॥

## ( शाब्दभावनाकरणत्वंनार्थवत्तया ज्ञातशब्दस्य किंतु प्रवर्तनाज्ञानस्येति निरूपणम् )

अत्र पुरुषप्रवृत्तिवाचकशक्तिमत्तया ज्ञातस्य विधिशब्दस्य करणत्वम्, सर्वेलिङ्जन्यज्ञानानामादिभूतमुपजीव्यं यदयं लिङ् प्रवर्तनाभिधायीति संबन्धज्ञानं तदेव करणमिति मतभेदनिरासाय शब्दभावनाज्ञानं करणमित्युक्तम्। अर्थोपस्थितिमन्तरेण शब्दतदर्थसंबन्धानां प्रवृत्तिं प्रति कारणत्वाभावात् विप्रकृष्टशब्दाद्यपेक्षया प्रत्यासन्नार्थज्ञानस्यैव करणत्वं युक्तमित्यर्थः। तादृशज्ञानस्य प्रवर्तनां प्रति स्वतः करणत्वासंभवेऽपि यागादेरर्थभावनायां स्वभाव्यस्वर्गादिस्वरूपनिष्पादकत्वेन पारिभाषितकरणत्वस्येवेहापि तथैव ग्राह्यत्वम् इत्याह—**करणत्वंचेति। भावना** शाब्दीभावना, तस्या **भाव्यं** पुरुषप्रवृत्तिः तन्निष्पादकत्वमित्यर्थः ॥

## ( प्राशस्त्यज्ञानादेर्वृत्त्याऽनुपस्थितस्यापि शाब्दबोधविषयत्वमतम् )

अत्र च करणेतिकर्तव्यतयोः विधिनिषेधज्ञानप्राशस्त्याप्राशस्त्ययोरपि शाब्दबोधे अन्वय इत्येवं केचिद्वर्णयन्ति ॥ विधिशब्दस्तावत् श्रवणेनोपस्थापितः। तस्य पुरुषप्रवृत्तिवाचकशक्तिरपि स्मरणेनोपस्थापिता। तदुभयनिष्ठज्ञातता च मनसेति तन्निष्ठवाचकशक्तिमत्तया ज्ञातो विधिशब्द उपस्थापित एव। अनेन च यच्छक्नुयात् तद्भावयेदिति स्वाध्यायविधितात्पर्यात् शब्दातिरिक्तेनोपस्थापितमपि शाब्दबोधे भासत एव। यथा ज्योतिष्टोमादिनामधेयम्। यथा वा लिङ्गविनियोज्यो मन्त्रः। **तदुक्तमाचार्यैरुद्भिदधिकरणे**—अनुपस्थितविशेषणा विशिष्टे बुद्धिर्न भवति, नत्वनभिहितविशेषणेति। एवमर्थवादानामुपस्थितिः श्रोत्रेण प्राशस्त्यस्य तु तैरेव लक्षणया तदुभयनिष्ठज्ञाततायास्तु मनसेत्यर्थवादैः प्रशस्तत्वेन ज्ञातेवेतीतिकर्तव्यतान्वयोऽपि उपपन्न एवेति ॥

## ( करणस्यानन्वयः इतिकर्तव्यतायास्त्वन्वय इति स्वसिद्धान्तः )

**वस्तुतस्तु**—वृत्त्योपस्थापितार्थस्यैव परपदार्थान्वयबलादेव सर्वत्रोहादिषु पदकल्पनायाः स्वीकारादशाब्दस्यान्वयानुपपत्तेः करणस्य करणत्वेन व्यवहारमात्रम्, नत्वन्यत्र प्रकारतया तस्यान्वयः। एवं प्राशस्त्याप्राशस्त्ययोरेवार्थवादादिलक्षितयोर्वृत्त्युपस्थापितत्वादन्यत्र ज्ञानद्वाराऽन्वयः, तथाच प्रा-

कर्तव्यता च यथायोगं स्तुतिनिन्दे । स्तुतिनिन्दाज्ञानस्य हि प्रवृत्तिनिवृत्तिप्रयोजकसहकारित्वं रुच्यरुच्युत्पादनद्वारा लोकसिद्धम् । स्तुतिनिन्दापदवाच्ये प्राशस्त्याप्राशस्त्यापरपर्याये बलवदनिष्टाननुबन्धित्वानुबन्धित्वयोर्यत्स्वरूपे । ते च य-

---

शस्त्याप्राशस्त्ये एव स्वरूपेणेतिकर्तव्यतेत्यभिप्रायेणाह—**स्तुतिनिन्देति । ननु** विधित एव समीहितसाधनताज्ञानात् प्रवृत्तिसिद्धेर्निषेधत एव अनिष्टसाधनताज्ञानान्निवृत्तिसिद्धेः प्राशस्त्याप्राशस्त्ययोः क्वोपयोगः? तथाच आभ्यामेवैतदुभयसिद्धेस्तदुभयवैयर्थ्यमित्यत आह—**स्तुतिनिन्दाज्ञानस्यहीति** ॥

**( स्तुतिनिन्दयोर्ज्ञानद्वारा प्रवृत्त्युपयोगनिरूपणम् )**

'इयं गौः क्रेतव्ये'त्यतः समीहितसाधनतावगत्या प्ररोचितेऽपि गोक्रये व्ययायासदर्शनात् प्रवृत्तिप्रतिषेधकामस्य पुंसस्ततो भवति स्थगितता । बहुक्षीरादिगुणकथनेन तु सा निवर्तते इत्यनुभूयमानस्थगिततानिवृत्तिजननद्वारा तज्ज्ञानस्योपयोगः । **तदुक्तम्**—"नहि तत्करणं लोके वेदे वा किंचिदीदृशम् । इतिकर्तव्यतासाध्ये यस्य नानुग्रहार्थिता" **इति** ॥ एवंच विधिनिषेधाभ्यां प्रवृत्तिनिवृत्त्योर्जनने सहकारीदमुभयमिति न तयोर्वैयर्थ्यमिति भावः । यत् ज्ञानं रुच्यरुच्युत्पादनद्वारा प्रवृत्तिनिवृत्त्युपयोगि, तज्ज्ञानविषयं दुर्निरूपमित्युक्तम् । तत्परिहारार्थं परैर्निरुक्तं प्राशस्त्यमप्राशस्त्यं च न संभवतीति द्योतयन् स्वयं तत्स्वरूपनिर्वचनव्याजेनाह—**बलवदनिष्टेत्यादिना ।** विधिनिषेधाभ्यां हि इष्टानिष्टसाधनत्वाक्षेपात् प्रवर्त्यनिवर्त्ययोः प्रवृत्तिनिवृत्तिहेतुभूतेष्टानिष्टोत्पत्तावपि तात्कालिकेष्टानिष्टसाधनत्वस्यापि प्रत्यक्षेणावगमात् द्वेषोत्साहसंभवेन प्रवृत्तिनिवृत्त्यभावप्रसंगात् तदपनायकापेक्षायाम् लोके तदपनयशक्तित्वेन बहुक्षीरा सदपत्या जीवद्वत्सा, अत इयं गौः क्रय्येति समभिव्याहारेऽवगतस्य स्तुतिनिन्दाज्ञानस्यानुग्राहकत्वं परिकल्प्यते, स्तुतिनिन्दयोश्च रुचिद्वेषोत्पादकत्वं प्रत्यक्षसिद्धम् । तयोश्च प्रतिपादकापेक्षायां फलादिप्रतिपादकत्वेन च निवृत्तापेक्षाणां फलपदघटितपदादीनां तत्कल्पने गौरवापत्तेः तदपेक्षया प्रयोजनापेक्षिणां अर्थवादानामेव तल्लक्षकत्वं कल्प्यते । स्तुतिनिन्दे एवच प्राशस्त्याप्राशस्त्यापरपर्याये ॥

**(गुणदोषयोः प्राशस्त्याप्राशस्त्यरूपत्वनिरूपणम् )**

तच्च गुणवत्त्वं दोषवत्त्वं च । यथाच ज्ञानजननस्वभावे शब्दे ज्ञानगतयाथार्थ्यात्मकातिशयप्रयोजकाप्तोच्चरितत्वादिधर्मः परैर्गुण इत्युच्यते, एवं फलगतक्षिप्रत्वाद्यतिशये प्रयोजकं विधेयगामि क्षिप्रदेवताकत्वादि गुणपदेन विवक्षितम् । तेनैव रूपेण तं तं गुणं विधेयगामिनं अर्थवादो बोधयति । शक्यते च वक्तुं उदुम्बरत्वपर्णतादिविशिष्टं काष्ठं पापश्लोकाश्रवणादिविशिष्टं क्रतुफलं जनयतीत्येवं **केचिदाहुः** ॥

**( पूर्वमतखण्डनम् )**

**तदयुक्तम्;** तथात्वे तादृशगुणानां शक्त्यैव प्रतिपादनात् लाक्षणिकत्वानुपपत्तेः, "एतानि वै दश यज्ञायुधानि" "एकं वृणीते" इत्याद्यर्थवादेषु तादृशगुणासंभवाच्च ॥

**( प्रकारान्तरेण गुणदोषयोः प्राशस्त्याप्राशस्त्यरूपत्वव्यवस्थापनम् )**

**केचित्तु**—गुणत्वं प्रवृत्तिप्रतिबन्धकद्वेषालस्यभङ्गहेतुज्ञानविषयत्वं, दोषत्वमपि निवृत्तिप्रतिबन्धकरागभङ्गहेतुज्ञानविषयत्वम्, एतच्चानुगमकमात्रम् । ज्ञाने विषयतया तत्तद्भङ्गहेतुताप्रयोजकत्वंतु प्रत्यर्थवादं तेन तेनैव रूपेण । अतएव तेषामनुष्ठातृगततापेक्ष्यते; तादर्थ्येन ज्ञातानामतथात्वाभावात् । तथा यस्य यदा यज्ज्ञानार्थं प्रवृत्तिः निवृत्तिर्वा, तं प्रति तदा तस्य गुणत्वं दोषत्वं च व्यवस्थितं द्रष्टव्यम् । तेन श्येनादिषु विधिनिषेधयोरुभयोरपि शेषभूतानामर्थवादानां च प्रामाण्यम् । तस्मात्तत्तदर्थवादप्रतिपाद्यानां गुणदोषाणामेव प्राशस्त्याप्राशस्त्यरूपत्वम् । यथार्थगुणदोषज्ञानस्यैव च यथार्थप्रवृत्तिनिवृत्तिहेतुत्वादर्थवादैः श्रुत्या प्रतिपादितानां चापापश्लोकश्रवणसंवत्सरपर्यन्तरोदनादीनां प्रमाणाभावेनावास्तवत्वात् वास्तवगुणदोषप्रतिपादनार्थं लक्षणोपासनम् । **नच**—एवं प्रकृतार्थवादे भूतिगमकत्वस्य यजमानगोचरत्वात् वास्तवत्वाच्च श्रौततज्ज्ञानादेव प्रवृत्तिसिद्धेः क्षिप्रत्वांशानुपयोगात् व्यर्थं तदुपासनम् इति—**वाच्यम्;** वायुक्षेपिष्ठत्वोक्त्या क्षिप्रत्वविशिष्टे तत्र तात्पर्यात् । अन्यथा श्रौते अर्थेऽनुपयोगात्तदानर्थक्यापत्तेः तत्प्रतीत्यर्थं लक्षणापेक्षणम् । **इयांस्तु विशेषः**—अत्र तस्यैव अतिशयमात्रं लक्ष्यम्, अन्यत्र तु वास्तवं गुणान्तरमेव—**इत्याहुः** ॥

**( यथार्थगुणदोषज्ञानस्य प्राशस्त्याप्राशस्त्यज्ञानरूपत्वाभावसमर्थनम् )**

**अत्रेदमवधेयम्**—यथार्थगुणदोषज्ञानस्यैव यथार्थप्रवृत्तिनिवृत्तिहेतुत्वे वायुर्वैक्षेपिष्ठेत्याद्यर्थवादलक्ष्यफलगतक्षिप्रत्वरूपातिशयज्ञानस्यापि यथार्थत्वाभावात् कथं प्रवृत्त्युपयोगित्वम्? नहि जुह्वां पर्णतानुष्ठाने पापश्लोकाश्रवणादेः तत्कालमनुत्पद्यमानत्वेन तद्विषयकशक्यार्थज्ञानस्य अयथार्थत्ववदिहापि कर्मकरणाव्यवधानेन क्षिप्रं भूतिफलानुत्पत्तौ अर्थवादलक्ष्यस्यापि तदतिशयज्ञानस्य संभवद्यथार्थत्वं नास्तीति वक्तुं शक्यते; जन्मान्तरे तादृशफलोत्पत्तेरुभयत्र तुल्यत्वात् । **किंच** भ्रमात्मकबलवदनिष्टाननुबन्धित्वादिज्ञानादपि यथार्थप्रवृत्तेरानुभविकत्वस्य सर्वसंप्रतिपन्नत्वेन यथार्थज्ञानस्यैव यथार्थप्रवृत्तिं प्रति कारणत्वं तु दुरुपपादमेव । तथात्वेऽपि वा यतः कारणस्य प्रायेण स्वधर्मानुरूपधर्माधायकत्वं दृष्टमिति कर्मसाधनी-

---

(१) स्वतःकर्मानुष्ठाने तन्निवृत्तौ चोत्पन्नरुचिके पुरुषे रुच्युत्पादकत्वस्य फलोपहितस्याभावायोग्यत्वदलम्.

भूतस्य वायोः क्षिप्रकारित्वात् तत्साध्यस्य कर्मणोऽपि क्षिप्रकारित्वम् अतोऽयं प्रशस्तो यागः कार्यः इत्यादिप्रतीत्यनुरोधेन क्षिप्रत्वरूपकालगतातिशयापेक्षया अन्यस्यैव प्राशस्त्यस्य प्रवृत्तिहेतुत्वं अपापश्लोकश्रवणातिरिक्तस्य प्राशस्त्यस्यैव प्रतीयते। **किंच** यज्ज्ञानात्प्रवृत्तिप्रतिबन्धकाऽऽलस्यनिवृत्तिः, तज्ज्ञानविषयगुणानामनन्तानां प्रतिपुरुषमालस्यभेदेन भिन्नतयैकरूप्याभावे नियमतः तदर्थलक्षणासंभवेनार्थवादानां पदैकवाक्यतानुपपत्तिः स्फुटैव ॥

**(क्रियाजन्यदुःखसुखाधिकेष्टानिष्टसाधनत्वस्य प्राशस्त्याप्राशस्त्यरूपत्वम्)**

अत उक्तविधं प्राशस्त्यमप्राशस्त्यं च न संभवतीत्यभिप्रायेणैव केचिदेवमाहुः। क्रियाजन्यदुःखापेक्षयाऽधिकेष्टसाधनत्वं प्राशस्त्यम्। तज्जन्यसुखापेक्षयाऽधिकानिष्टसाधनताकत्वमप्राशस्त्यम्। नह्ययमर्थोऽन्यतस्सिद्धः; विधिनिषेधाभ्यां इष्टानिष्टसाधनत्वमात्रस्यैवाक्षेपात्। अतएव यत्र नार्थवादः पठितः, तत्र विधिना तदाक्षिप्यत एव। यद्यप्येतादृशप्राशस्त्याप्राशस्त्यज्ञानस्य नान्वयव्यतिरेकविधया प्रवृत्तिनिवृत्तिकारणत्वसंभवः; तथापि तज्ज्ञानस्य रुच्यरुच्युत्पादनद्वारा प्रवृत्तिनिवृत्त्योरुपयोगमात्रत्वमस्त्येव—**इति** ॥

**(पूर्वोक्तमतखण्डनम्)**

**तदपि न**; "हुतायां वपायां दीक्षितस्यान्नमश्नीयात्" "नातिरात्रे षोडशिनं गृह्णाति" इत्यभ्यनुज्ञाविधिनिषेधार्थवादेषु विधिनिषेधावगतसुखदुःखापेक्षया तृप्तिदुःखयोराधिक्यस्य वक्तुमशक्यत्वेनैकरूप्येण तस्य निर्वक्तुमशक्यत्वात्। नहि तात्कालिकदुःखापेक्षया अभिचारफलाधिक्यं बोधनीयम्, तदा "न हिंस्यादि"ति निषेधेनानिष्टजनकत्वस्य तत्र बोधने प्रवृत्तिप्रतिबन्धकसामग्रीसत्वेन प्रवृत्तेरसंभवात् तज्ज्ञानस्य कथं तदुपयोगित्वम्? नवा श्येनप्रयोज्यनरकादिदुःखापेक्षया तदाधिक्यबोधनम्; तदपेक्षयापि "नहिंस्यादि"ति निषेधेन नरकादावाधिक्यस्य बोधितत्वात्। अतो नोक्तविधमपि तद्द्वयम्, किन्तु बलवदनिष्टाननुबन्धित्वं प्राशस्त्यं तज्जनकत्वमप्राशस्त्यमित्येव दीक्षितमधुसूदनस्वामिसंमतं तल्लक्षणं युक्तम् ॥

**(इष्टानिष्टयोर्बलवत्त्वस्योत्कटरागद्वेषविषयत्वरूपत्वनिर्वचनेन पूर्वोक्तसर्वदोषनिराकरणम्)**

अत्रानिष्टे बलवत्त्वमुत्कटद्वेषविषयत्वम्, नत्वाधिक्यम्; स्वर्गन्यूने तात्कालिकदुःखे प्राचीनकर्मवशेनोत्कटद्वेषोदयात्। अतएव नैव तदा यागादौ प्रवर्तते; नरकन्यूनेपि च तात्कालिके सुखे प्राचीनकर्मवशेनोत्कटरागोदयात्। अतएव ह्यभिचारादौ प्रवर्तत एव। अत एव यागादौ कदाचिदेव प्राचीनशुभकर्मवशात् बलवदनिष्टाननुबन्धित्वम्, निषेधेषु तज्जनकत्वमिति बलवदनिष्टाननुबन्धित्वयोग्यत्वं प्राशस्त्यम्, तज्जनकत्वयोग्यत्वं अप्राशस्त्यं चैकरूपं सर्वत्र। तज्ज्ञानस्यच येन पुरुषेण सर्वदा यागादौ बलवदनिष्टाननुबन्धित्वं बुद्धं तं प्रति तद्वृत्तिज्ञानाप्रामाण्यसंपादकतया प्रवृत्तावुपयोगः; अप्रामाण्यज्ञानानास्कन्दितबलवदनिष्टाननुबन्धित्वज्ञानस्य प्रवृत्तिप्रतिबन्धकत्वात्। यत्र उभयत्रापि स्वत एव विधिनिषेधावगतिमात्रेणोभयविधज्ञानाभावः, तत्र प्रतिबन्धकस्यैवाभावात् तज्ज्ञानस्यानुपयोगेऽपि पुरुषविशेषं प्रत्येव तदुपयोगमात्रेणार्थवादप्रामाण्यमुपपद्यत एव। अतएव प्रतिबन्धकसत्वे तदभावसंपादकतया प्रवृत्तिनिवृत्तिं प्रत्युपयोगमात्रम्, नत्वन्वयव्यतिरेकविधया नियमेन तयोस्तत्करणत्वमित्यभिप्रेत्यैव नियमेन बलवदनिष्टाननुबन्धित्वस्य यागादावभावात् न नियमतस्तत्र लिङादीनां शक्तिरिति तार्किकमतं दूषितं भाट्टरहस्ये पूज्यपादैः। संभवति चैतादृशं प्राशस्त्यमभ्यनुज्ञाविध्यर्थवादे; वपाहोमोत्तरदीक्षितान्नभोजनस्य निषेधप्रयुक्तानिष्टाननुबन्धित्वबोधनात्, विधिना द्वेषाभावजनकत्वेन तदाक्षेपेऽपि द्वेषाभावजनकत्वयोग्यताबोधस्यार्थवादाधीनत्वात्। एवं षोडशिग्रहणनिषेधार्थवादेऽपि अप्राशस्त्यम्; ग्रहणजन्ये तात्कालिके स्वल्पेपि दुःखे सामानाधिकरण्येन उत्कटद्वेषविषयत्वाख्यस्य बलवत्वस्य बोधनात्। एवं श्येनेऽपि धर्मत्वोपपादनरीत्या बलवदनिष्टाननुबन्धित्वयोग्यत्वस्य सत्त्वात् तदर्थवादेनापि तद्बोधनं सुलभमेव; इतरथा कदापि प्रवृत्त्यनुपपत्तेः। अतएव तामसधर्मत्वस्य स्थापनात् बलवदनिष्टाननुबन्धित्वयोग्यत्वरूपाप्राशस्त्यस्यापि संभवान्निषेधार्थवादेन बोधितमप्राशस्त्यमपि नैव विरुध्यते ॥

**(विधेरेव प्राशस्त्याक्षेपकत्वमतम्)**

**एतेन**—यत्कैश्चित्पूर्वोक्तं प्राशस्त्यमप्राशस्त्यं च खण्डितम्—श्येनाद्यनर्थविधिशेषभूतानां अर्थवादानां असङ्गतिप्रसङ्गात्, विधिभिरेव विशिष्टाक्षेपसंभवाच्च, तादृशस्यैव बुद्धिपूर्वकारिप्रवृत्तिविषयत्वात् निषेधेष्वपि अनिष्टजनकत्वमात्रस्य कष्टंकर्मेति न्यायादेव सिद्धेः बलवदनिष्टजनकत्वाक्षेपस्यैव निषेधैः करणात् अर्थवादसापेक्षत्वानुपपत्तेरित्यादिना—**तदपास्तम्** ॥

**(विधेः प्राशस्त्याक्षेपकत्वखण्डनम्)**

विधिभिः बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाक्षेपस्येव अप्राशस्त्यस्यापि तैरेवाक्षेपसंभवेन भवन्मतेऽप्यर्थवादानपेक्षस्यैव निषेधैःकरणादर्थवादानपेक्षत्वस्य दुष्परिहरत्वाच्च, निषेधेषु लोकसिद्धानिष्टजनकत्वबोधने वैयर्थ्येन तत्परिहारार्थं नरकजनकत्वमात्राक्षेपेऽपि तद्गतबलवत्वाक्षेपपर्यन्तव्यापारकल्पने प्रमाणाभावाच्च, सर्वत्रापि सन्निहितविधिनिषेधार्थवादैरेव तल्लाभात् तत्तद्विधिनिषेधानां तावत्पर्यन्तकल्पने गौरवाच्च, अर्थवादोन्नेयविधिनिषेधाभ्यां प्रागेव प्राशस्त्याप्राशस्त्यबोधस्य तदर्थवादैरवश्याभ्युपगन्तव्यत्वेन नियमेन विधिनिषेधैः तदाक्षेपस्य कर्तुमशक्यत्वाच्च। अतएव यत्र सन्निधौ अर्थवादाम्नानं, तत्र तेषां प्रयोजनाकाङ्क्षालब्धप्राशस्त्याप्राशस्त्यज्ञानसंभवेन विधिनिषेधाभ्यां न तत्परत्वमपि कल्पनीयम्; गौरवात् ॥

थायोगं विधिनिषेधापेक्षितत्वात्तत्समभिव्याहृतार्थवादैर्लक्षणया प्रतिपाद्येते ।

### ( निरर्थवादविधेः तदाक्षेपकत्वाङ्गीकारः )

यत्र तु "वसन्ताय कपिञ्जलानालभेत" इत्यादयोऽर्थवादशून्याः विधयः, तत्र अगत्या तेषां तत्परत्वमपि । यथाच तत्रापि वचनातिदेशनामातिदेशाभ्यामिव अतिदेशेनैव प्राशस्त्यस्य प्राप्तेर्न विधिव्यापारकल्पनम्, किंतु यत्रोपदेशातिदेशयोः अभावो यथा दर्विहोमादिषु तत्रैव विधिव्यापारकल्पनम्, तथोपपादितं कौस्तुभे पूज्यपादैः विस्तरभयान्नोच्यते । तत्सिद्धं बलवदनिष्टाननुबन्धित्वयोग्यत्वं प्राशस्त्यं तज्जनकत्वयोग्यत्वमप्राशस्त्यम् इति ॥

### ( विध्यर्थवादयोः परस्पराकाङ्क्षानिरूपणम् )

**विधिनिषेधापेक्षितत्वादिति ।** एतच्चोपलक्षणम्—अर्थवादापेक्षाया अपि। यथैव विधिनिषेधयोः पूर्वोपपादितरीत्या प्रवृत्तिनिवृत्तिरूपफलजनने तत्प्रतिबन्धविगमद्वारा अर्थवादकृतं साहाय्यमपेक्षितम्, एवं अर्थवादानामपि शक्त्या गौण्या वा वृत्त्या भूतमर्थं वदतामपि स्वाध्यायविध्यापादितदृष्टप्रयोजनवत्त्वलाभार्थं विधिसाहाय्यमपेक्षितम् । ततश्च यद्विधिनाऽपेक्षितं प्राशस्त्यज्ञानं तदर्थवादैः यच्चार्थवादैः तद्विधिनेति अर्थवादैः लक्षणया तज्ज्ञानं सुलभमेव । लक्षणाघटकश्च संवन्धः स्वार्थप्रतीतिजन्यप्रतीतिविषयत्वरूपो ज्ञानघटित एव । तत्तत्समभिव्याहृतेत्यनेन पूर्वोपपादितोभयाकाङ्क्षया प्रशस्तत्वात् कर्तव्यमित्येवंरूपा विध्यर्थवादयोरेकवाक्यता सूचिता । **तथाच सिद्धान्तसूत्रम्**—"विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" **इति । विधिना** स्तुत्याकाङ्क्षेण प्रयोजनसाकाङ्क्षाणां अर्थवादानामेकवाक्यत्वात् **विधीनां** विधेयानां **स्तुत्यर्थेन** स्तुतिरूपप्रयोजनेन स्तुतिरूपेण लाक्षणिकेन आनर्थक्याभावादर्थवादा धर्मे प्रमाणानि स्युरिति तदर्थः ॥ विधिनेत्यादिपदत्रयं निषेधादीनामप्युपलक्षणम् ॥

### ( वाक्यलक्षणासमर्थनम् )

अत एव इयं वाक्ये लक्षणा, नैकस्मिन् पदे; इतरपदानां वैयर्थ्यापत्तेः, तेषां तात्पर्यग्राहकत्वे च विनिगमनाविरहात्, कारणानुरूपत्वात् कार्यस्य क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीत्येवंविधया सर्वेषामेव पदानां स्तुत्युपपादकत्वप्रतीतेश्च । अतः पदसमूहात्मकवाक्य एव लक्षणा । यद्यपि तद्भूताधिकरणवार्तिकोक्तरीत्या वाक्यस्य न वाक्यार्थे अतिरिक्ता शक्तिरस्ति, येन तच्छक्यार्थसंवन्धेन इह वाक्ये लक्षणा युज्येत; तथापि स्वार्थसंवन्धमात्रेणैवेह लक्षणास्वरूपाङ्गीकारेण वाक्ये लक्षणोपपादनं नायुक्तम्; अनुभवस्यैव प्रमाणत्वादितिध्येयम् ॥

तत्र "वायुर्वै क्षेपिष्ठे"त्यादौ स्वशक्यक्षेपिष्ठत्वादिगुणैरेव लक्षणा । यजमानः प्रस्तरः इत्यादौ तु गौणीगम्यस्वकार्यकर्तृ-

### ( शक्त्याऽसत्यार्थोपस्थापकानामपि येनकेनचिदालंबनेन सत्यार्थोपस्थापकतावश्यकता )

अर्थवादाश्च केचन सत्यार्थस्यैव शक्त्योपस्थापकाः, केचनासत्यार्थस्य तयोपस्थापकाः । यत्र एष शक्यार्थः सत्यः, तत्र स्वार्थस्य यथार्थस्यैव संवन्धाल्लक्षणा । यत्रासत्यार्थः, तत्रासत्यार्थज्ञानादपि सत्यस्तुतिनिन्दाबुद्धेः उदयात्तात्पर्यविषयीभूतस्तुतिनिन्दारूपसत्यार्थप्रतिपादकत्वेन प्रामाण्यमुपपद्यत एवेति नार्थसत्यत्वापेक्षणम्, किन्तु प्रमाणं विना अर्थस्य सत्यत्वासंभवात् शब्दस्य च तत्र प्रमाणत्वादसतश्चार्थस्याभिधानासंभवात् सर्वधियां याथार्थ्यस्यौत्सर्गिकत्वात् स्तुतिनिन्दासिध्यर्थं अर्थवादस्यार्थसत्यत्वानपेक्षणेऽपि अभिधानसिध्यर्थमेव कथंचिद्येन केनापि आलम्बनेन अर्थसत्यत्वमुपपाद्य तदर्थसंवन्धाल्लक्षणेति विवेकं दर्शयितुमुदाहरणभेदं दर्शयति—**तत्रेत्यादिना ॥** कारणस्य हि प्रायेण कार्ये स्वधर्मानुरूपधर्माधायकत्वं दृष्टमिति कार्यसाधनीभूतवायोः क्षिप्रकारित्वज्ञानात् तत्साध्यकर्मणि यत् क्षिप्रफलकारित्वरूपसत्यवाक्यार्थज्ञानं जायते तद्विषयीभूतवाक्यार्थेनैव प्राशस्त्यलक्षणा वायुर्वैक्षेपिष्ठेत्यादौ ॥

### ( सोऽरोदी दिति वाक्ये आलम्बनार्थनिरूपणेन निन्दारूपार्थपर्यवसानम् )

एवं सोऽरोदीदित्यर्थवादेषु स इति तच्छब्देन "तदग्निर्न्यकामयते"ति पूर्वोपक्रान्तोऽग्निः परामृश्यते । तद्रजतमित्यत्र तच्छब्देनाश्रु । अत्र "पुराऽस्य संवत्सरादिति रजतदाननिन्दा । तदुपपत्तिश्च "सोरोदीदित्यनेन । तत्रापि कारणानुरूपत्वात् कार्यस्य रोदनप्रभवरजतदानाद्रोदनं भवतीति निन्दारूपमप्राशस्त्यं रोदनप्रभवाश्रुजन्यं, तज्जन्यरोदनकारित्वादिदोषरूपस्वार्थेर्लक्ष्यते । रुद्रे रोदनं तत्प्रभवत्वं च रजते प्रमाणाभावादनुपपन्नं केनचिदालम्बनेनोपपादनीयम् । तत्प्रकारश्चान्यत्र द्रष्टव्यः ॥

### ( यजमानः प्रस्तर इत्यत्र तन्निरूपणम् )

एवं "यजमानः प्रस्तर" इत्यादावयोग्यतानिश्चयसत्त्वे न प्राथमिकवाक्यार्थपर्यवसानम्; यजमानाभेदस्य प्रस्तरे बाधितत्वात्तत्र यजमानपदं यजमानकार्यकारित्वसमानजातीयकार्यकारित्वरूपगुणयोगेन प्रस्तरे गौणमङ्गीकृत्य "यजमानः प्रस्तर" इति वाक्यजन्यबोधोत्तरं स्वकार्यकर्तृत्वरूपवाक्यार्थसंवन्धात् तेन वाक्येन पश्चात् लक्षणेति वक्ष्यते—**तत्सिध्यादिसूत्रे ॥**

### ( आपो वै शान्ताः, यदभिघारयेत् गवीधुकयवाग्वावेत्याद्यर्थवादानां तन्निरूपणम् )

एवं विधेयस्य यथा क्वचित् साक्षात् स्तुतिः तथा क्वचि-

त्वादिगुणैरिति वक्ष्यते। अतः सिद्धं भावनान्वितस्तुति-

द्विधेयापरसंबन्धिस्तुत्या विधेयपरसंबन्धिस्तुतिर्लक्ष्यते। यथा वेतसशाखयाऽवकाभिश्चाग्निं विकर्षतीति विधिसन्निहितैः "आपो वै शान्ताः शान्ताभिरेवास्य शुचं शमयति" इत्यर्थवादैः। तत्रापां स्तुत्याऽब्जन्यानां वेतसावकानां स्तुतिर्लक्षितलक्षणया। क्वचिदसंबद्धस्यापि अविधेयस्य स्तुतिः तन्निन्दासहकृता विधेयस्य प्रशस्ततरत्वं लक्षयति, यथा गवीधुकस्तुतिः पयसः। एवमभिघार्या त्र्यम्बका नाभिघार्या इति मीमांसन्ते यदभिघारयेत्तत् रुद्रायास्ये पशून्निदध्यात् यन्नाभिघारयेन्न तद्रुद्रायास्ये पशून्निदध्यादथो खल्वाहुः अभिघार्या एवेति विधेयाभिघारनिन्दा तत्प्रतियोग्यनभिघारणस्तुतिनिन्दासहकृता अभिघारणविध्येकवाक्यतया त्र्यम्बकपुरोडाशदेवताभूतरुद्रास्यनिन्दानापादकाभिघारणस्तुतिं लक्षयति॥ क्वचिदन्यविधेयप्राशस्त्यं लक्षयति यथोदितनिन्दा॥

### (केषांचनार्थवादानां स्तुतिफलोभयार्थत्वनिरूपणम्)

प्रतिष्ठारूपवत्वादिकं च प्रथमतस्तद्भावभावित्वमात्रेण प्रतीतं साध्यत्वाप्रतीतौ वास्तवगुणत्वाभावात् "असत्यं नामैतत् किमप्यन्यदवाप्स्यामी"ति वार्तिकोक्तन्यायेन प्राशस्त्यं लक्षयित्वा किंचिच्छ्रुतविध्येकवाक्यतया किञ्चिद्विध्युन्नायकतयाप्युपयुक्तमपि पुनराकाङ्क्षया फलार्थमपि भवति। अष्टाकपालादिस्तुतिः पूतत्वादिगुणकथनस्योपपादनेन सालम्बनत्वकरणाय। एवमर्थवादेष्वन्येष्वपि विधिनिषेधसमभिव्याहृतेषु विचित्रगतित्वं मूले आदिशब्देन संगृहीतं द्रष्टव्यम्॥

### (यन्न दुःखेनेत्यस्याः स्तावकत्वनिरूपणम्)

एवंच यत्र सुखनरकादिरूपे फले निसर्गत एव रुच्यरुची, तत्र प्रयोजनाभावात्तत्प्रतिपादकानां "यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्"। इत्यादीनां न प्राशस्त्याप्राशस्त्यलक्षकत्वम्, किंतु विधिनिषेधापेक्षितस्वर्गनरकादिस्वरूपपरत्वमेव॥

### (उपनिषदामपि यथायथं कर्मण्युपयोगनिरूपणम्)

एवं दूरस्थानामपि विनाशिदेहव्यतिरिक्तनित्यकर्तृभोक्तृरूपात्मप्रतिपादकानामुपनिषदां परलोकफलककर्मविध्यपेक्षितोक्तरूपात्मपरत्वमेव; उक्तविधज्ञानस्यानारभ्याधीतस्यापि मिश्रमते सामर्थ्यात्सामान्यसंबन्धबोधकप्रमाणाभावेऽपि विनियोजकत्वात् न्यायसुधाकारमते "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती"ति वाक्याद्वा क्रत्वङ्गत्वम्। असंसारिसगुणनिर्गुणात्मप्रतिपादकानामुपनिषदां उभयविधोपासनाविध्यपेक्षितत्वेन स्वार्थपरत्वमेवेति ज्ञेयम्॥ **ननु** एवमर्थवादानां प्राशस्त्याप्राशस्त्यज्ञापकत्वेऽपि कथं धर्माधर्मप्रतिपादकत्वम्? इत्यत आह—**अतः सिद्धमिति**॥ तथाच या विशिष्टभावनारू-

निन्दाविषयकप्रमाजनकत्वेनार्थवादानां धर्माधर्मयोः प्रा-

पधर्मप्रमा विधिभिः क्रियते, तस्यामेव प्राशस्त्यरूपविशेषणप्रतिपादनद्वारा द्रव्यदेवतादिपदवदर्थवादानामपि तत्प्रमां प्रति कारणत्वं युक्तम्। एवं निषेधार्थवादानामपीत्यर्थः॥

### (अर्थवादानां विधिना साकं पदैकवाक्यतानिरूपणम्)

अत्रचाक्ताधिकरणवार्तिकोक्तरीत्या विध्यर्थवादानां स्वस्वार्थबोधे सामर्थ्याभावात् पदैकवाक्यतैव। अर्थापेक्षतया हि स्वार्थपर्यवसितस्य वाक्यार्थान्तरेण सहैकवाक्यतायामेव अङ्गप्रधानविध्योरिव वाक्यैकवाक्यतानियमात्। **तदुक्तम्—अक्ताधिकरणवार्त्तिके॥** "स्वार्थे परिसमाप्तानां अङ्गाङ्गित्वाद्यपेक्षया। वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते"। इति॥ **एतेन**—अधिकरणमालादिष्वर्थवादविध्योर्वाक्यैकवाक्यतोक्तिः—**अपास्ता**॥

### (शाब्दभावनाया इतिकर्तव्यताकाङ्क्षाऽभावः)

यद्यपि प्राशस्त्यस्य शाब्दभावनेतिकर्तव्यतात्वादर्थभावनेतिकर्तव्यतावत्कथमित्याकाङ्क्षोत्तरं इत्थमितीतिकर्तव्यतान्वयः संभवति, नह्येवं शब्दभावनायाः प्रतिविधि कर्तव्यताबोधः; तद्विषयकप्रवर्तनान्तराप्रतीतेः, किंतु अर्थभावनायामेव सः; अध्ययनविधावेवत्वर्थात् तस्याः कर्तव्यत्वबोधः, प्रतिविधि त्वानुष्ठानावस्था॥

### (केषांचिन्मतेन प्राशस्त्यस्य शाब्दभावनायामन्वयः)

तत्रच प्राशस्त्यस्याज्ञातस्य प्रवृत्तिं प्रति कारकत्वासंभवात् कारणापेक्षयैव प्रशस्तत्वादित्येवान्वयो युक्तः। परंतु तेनापि रूपेण स्वविषयज्ञानजन्यप्रवृत्तिनिवृत्तिजनकज्ञानविषयत्वसंबन्धेन शब्दभावनायामेवान्वयः केषांचिन्मते॥

### (स्वमतेन प्राशस्त्यादीनामपि परंपरासंबन्धेनार्थभावनायामन्वयः)

स्वमते तु अन्यसुबन्तार्थवदेककार्यकारणभावलाघवानुरोधेन स्वविषयज्ञानजन्येष्टविषयकोत्कटरागजन्यत्वसंबन्धेन प्राशस्त्यस्य स्वविषयकज्ञानजन्यानिष्टविषयकोत्कटद्वेषजन्यत्वसंबन्धेनाप्राशस्त्यस्यचार्थभावनायामेवान्वय इति मतभेदज्ञापनाय संमुग्धाकारेण—**भावनान्वितस्तुतिनिन्देत्युक्तम्**। तेनच स्वरूपसंबन्धेन तयोर्धात्वर्थे एवान्वय इति केषांचिन्मतं तु अतीव निरस्तं वेदितव्यम्; अन्वयमूलभूतायाः सहकार्यपेक्षायाः कारणे कार्ये वाऽन्वयेनैव शमनात्॥

### (अर्थवादानां प्राशस्त्यप्रतिपादकतया धर्मोपयोगोपसंहारः)

तस्मात् स्वाध्यायविधिनाऽर्थवादस्यापि पुरुषार्थपर्यवसानबोधनात् परंपरयापि दृष्टफललाभे स्वर्गादिकल्पनानुपपत्तेर्भूतार्थमात्रस्याप्रयोजनत्वात् प्राशस्त्याप्राशस्त्यपरत्वं लक्षणयाऽऽ-

माण्यमिति । प्रयोजनं पूर्वपक्षे अर्थवादानुपस्थितप्राशस्त्यज्ञानादपि प्रवृत्तौ फलसिद्धिः, सिद्धान्ते तु मन्त्रवदर्थवादानामेव प्ररोचकत्वनियमात्तदुपस्थितप्राशस्त्यज्ञानादेव प्रवृत्तौ सेति द्रष्टव्यम् ॥१॥ इति प्रथममर्थवादाधिकरणम् ॥

( २ अधिकरणम् । )

विधिर्वा ॥ "औदुम्बरो यूपो भवत्यूर्ग् वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै" इत्याद्यर्थवादेषु न स्तुतिलक्षणा; शक्त्यैव पशुरूपफलसंबन्धविधायकत्वेन प्रामाण्योपपत्तेः। पशूनिति द्वितीयया ऊर्जोऽवरुध्या इति चतुर्थ्या वा पशूनां साध्यत्वेऽवगते साधनापेक्षत्वादौदुम्बरत्वं

श्रित्य तयोर्यथायोगं विधिनिषेधवाक्योपात्तभावनायामन्वयेन विशिष्टभावनारूपधर्माधर्मप्रयोजनकत्वं सिद्धम् ॥

**( अर्थवादप्रामाण्यविचारस्य साधारणासाधरणप्रयोजनद्वयनिरूपणम् )**

अर्थवादप्रामाण्यव्युत्पादनप्रयोजनं च सन्दिग्धार्थनिर्णयफलादिसिद्धिरूपमसाधारणं तत्तदर्थवादेषु तत्तदधिकरणेषु ज्ञास्यत एवेति तद्विहाय साधारणं प्रयोजनमाह—**प्रयोजनमिति ॥**

**( आक्षेपिक्यादिसंगतिस्वरूपनिरूपणम् )**

अथ संगतिः शास्त्राध्यायपदाधिकरणैस्तावत् चतुर्धा । तत्रापि अधिकरणसंगती राशीकरणेन षोढा सप्तधा वा ॥ पूर्वमाक्षिप्यते यत्र तत्र साऽऽक्षेपिकी मता । पूर्वन्यायात्ययो यत्र प्रत्युदाहरणा तु सा ॥ प्रसंगात् चिन्त्यते यत्र तत्र प्रासङ्गिकी मता । बुद्धिस्था चिन्त्यते यत्र बुद्धिस्थानारिमका तु सा । कृत्वा यत्राधिकां शङ्कां पूर्वमेवातिदिश्यते । तत्रातिदेशिकी प्रोक्ता संगतिर्न्यायवेदिभिः । चिन्तां प्रकृतिसिध्यर्थामुपोद्धातं प्रचक्षते । इति । यदा षोढा तदा प्रसंगसंगतावेवोपोद्धातस्यान्तर्भावो ज्ञेयः । तदेवंविधं संगत्यादिकं प्रत्यधिकरणं सुधीभिः शक्यमेवोहितुमिति विस्तरभिया पूज्यपादैर्न दर्शितमिति मयापि न विशिष्य प्रदर्श्यते ॥

इति प्रथममर्थवादाधिकरणम् ॥

---

**( पूर्वाधिकरणेन संगतिनिरूपणम् )**

पूर्वाधिकरणे सर्वेष्वर्थवादेषु स्तुत्यर्थत्वेनानर्थक्याभावे साधिते संप्रति केषुचिदर्थवादेषु अन्यविधयापि तदभावोपपत्तेर्न व्यर्थप्रायस्तुतिपरत्वमाश्रयणीयम् इत्याक्षिप्य समाधीयत इत्येवमाक्षेपिकीं संगतिं पूर्वपक्षोपसंहारे सूचयिष्यते । तदर्थं "सोमापौष्णं त्रैतमालभेत पशुकाम" इति वैकृतयागप्रकरणगतमर्थवादविशेषोदाहरणं दर्शयति—**औदुम्बर इति ॥**

**( विषयवाक्यार्थनिरूपणम् )**

औदुम्बरो यूपो भवतीति विधिरयम् । ऊर्गवा उदुम्बर इत्ययमंशोऽर्थवादः । वाशब्दो वैशब्दार्थः । उदुम्बरशब्देनान्नमुच्यते । उदुम्बरो हि पक्वफलद्वाराऽन्नमयः, पशवो ह्यन्नमया इति लोके प्रसिद्धम् । अत औदुम्बररूपं यूपं यो भावयति यजमानाय पशून् धारयति सोऽध्वर्युः इत्यर्थवादार्थः । **इत्यादीति ॥** आदिपदेन "न स पापं श्लोकं शृणोति"इत्यादीनां पर्णमयीत्वादिविध्यर्थवादानां संग्रहः । अत्रच प्रकृतोदाहरणे सिद्धान्ते ऊर्जोऽवरुध्यै इत्यन्तोऽर्थवादः, यागफलमेव फलम् ॥ पूर्वपक्षेतु ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै"इत्यस्य फलबोधकत्वेन न स्तावकत्वम् । 'यस्तूर्वा उदुम्बरः' इति वेदभागः, स साध्यसाधनभावौचित्यप्रदर्शनद्वारा प्रशंसार्थो भवत्येवेति विवेकः ॥ **शक्त्यैवेति ॥** ततश्च तात्पर्यग्राहकमानान्तरसापेक्षत्वेन लक्षणाया दौर्बल्यान्न प्राशस्त्यलक्षणाऽङ्गीकार्येत्यर्थः । **विधायकत्वेनेति ॥** यद्यपि फलांशे रागत एव प्रवृत्तेर्नाप्रवृत्तप्रवर्तनरूपविधिः संभवति; तथाप्यज्ञातज्ञापकत्वांशेन विधायकत्वोक्तिः । तथाचौदुम्बरत्वस्य फलं अज्ञातं पशुरूपं तद्बोधकत्वेनेत्यर्थः । **ननु** कामपदाद्यभावे कथं पशूनां फलत्वप्रतीतिः येन तद्बोधकत्वेन प्रामाण्यमुच्यत इत्यत आह—**पशूनिति ॥** पशूनिति द्वितीयया साध्यत्वांशमात्रावगमेऽपि योग्यतयेप्सितत्वस्याप्यवगमात् भाव्यत्वसिद्धिरित्यर्थः । **साध्यत्वेऽवगते इति ॥**

(१) प्रयोजनवदर्थावगमस्य यदेव विद्यया करोतीति वाक्येन क्रतुसंबन्धः सिद्ध इति अर्थज्ञानप्रयुक्तमप्यध्ययनं क्रतावेव पर्यवस्यतीति नियमविधित्वोपपत्तिरित्युपायान्तरव्यावृत्तिफलको नियमविधिरिति कौस्तुभे । न्यायरत्नमालायांतु पुरुषार्थेष्वपि द्रव्यार्जनादिषु नियमविध्युपलम्भात् न क्रत्वर्थेष्वेव नियमविधिरिति नियम इति नियमविधेरर्थवत्त्वमुपपादितम् ।

(२) रात्रिसत्रे प्रतिष्ठा स्यात् अज्ञाने घृतसंस्थितिः ।
तथा श्येनादिवाक्यानां नामता भेदकारणम् ॥ १ ॥
वारुणेष्ट्यां तथा दानं वमनं वैदिकं तथा ।
सोमयागपरत्वं च ज्योतिष्टोमपदस्य यत् ॥ २ ॥
निवेशनं च धाय्यानां मध्यमानऋगुत्तरम् ।
स्थानापत्तिरिरादीनां रुद्रे रोदनवाच्यपि ॥ ३ ॥
उत्तराणां त्रिधाधिक्यं ऋत्विक् च ब्राह्मणो भवेत् ।
सोमविद्याप्रजादीनां नित्यत्वं षष्ठसंस्थितम् ॥ ४ ॥
द्वयोः प्रणयनं मध्यपर्वणोः सप्तमोदितम् ।
अर्थवादगतैर्लिङ्गैः प्रकृतित्वं तथाष्टमे ॥ ५ ॥ इति कौस्तुभे ।

साधनम्; सन्निधानात्, ऊर्जेति तृतीयाश्रवणाच्च भवतीत्याख्यातेन च लक्षणया शक्त्यैव वा भावनाभिधानाद् भूधातोश्च यूपोत्पादकच्छेदनाद्यनुवादकत्वादप्राप्तार्थत्वेन च लेट्त्वनिश्चयात् उभयविशिष्टभावनाविधायकत्वोपपत्तिरित्याक्षेपे प्राप्ते—

यूपकर्तृकभावनाक्षिप्तायां भावनायां यूपस्यैव भाव्यत्वौचित्यात् सन्निधानाच्च यूपोद्देशेनैवौदुम्बरत्वविधिः, नतु फलोद्देशेन; कामशब्दाद्यभावेन फलत्वस्य तथाऽनुपस्थितेः। किंच भवन्मते गुणफलसंबन्धोऽयम्। नचासौ संभवति; आश्रयालाभात्, "सोमापौष्णं त्रैतमालभेत पशुकाम" इति प्रकृतस्य यागस्याश्रयत्वे हि यूपग्रहणानुपपत्तिः। यूपस्य तु अप्रकृतत्वादेवाश्रयत्वानुपपत्तिः। अतिदेशेन तस्योपस्थितिस्तु जुह्वादिपात्रान्तरसाधारणीति तेषामप्याश्रयत्वे तथैव यूपग्रहणानर्थक्यम्। वाक्येनाश्रयदाने च वाक्यभेदः। त-

(औदुम्बर इति विकारप्रत्ययस्यान्यथासिद्धत्वाद्द्वितीयाचतुर्थीश्रुतिभ्यां पशुफलत्वनिरूपणम्)

**एतेन**—औदुम्बर इति विकारार्थतद्धितेन यूपतात्पर्यग्राहकबलात् यूपरूपविशेषोक्तेः यूपपदोपात्तप्रत्यासत्याच्च यूपार्थैव स्यात् इति—**निरस्तम्**; तदपेक्षया बलीयस्या द्वितीयाचतुर्थीश्रुत्या पश्वर्थताया बोधने सति नान्तरीयकतया प्राप्तयूपरूपाश्रयजनकत्वेन तद्धितोपपत्तेः समानपदश्रुतेरन्यथासिद्धत्वादित्यर्थः॥

(यजेत स्वर्गकाम इत्यादाविव सन्निधानात् उदुम्बरसाधनतानिरूपणम्)

**सन्निधानादिति**॥ यथैव "यजेत स्वर्गकामः" "सर्वेभ्यो ज्योतिष्टोम" इत्यादौ तृतीयाद्यभावेऽपि स्वर्गादिगतसाध्यत्वप्रतीत्या सन्निधानमात्रेण यागस्यापेक्षितसाधनतावगतिः, तद्वदिहापीत्यर्थः। यद्यपीह ऊर्जेति तृतीययापि साधनतावगतिः सुलभा; तथापि पर्णतादौ तदभावात् सन्निधानमात्रस्यैव तद्धेतुत्वेनोक्तिः॥

(सन्निधानावगतेष्टसाधनतयैव प्रवृत्तिसिद्धेर्विधिवैयर्थ्यपूर्वपक्षादिरूपप्राचीनैतदधिकरणशरीरम्)

अत्र प्राचीनैः सन्निधानादेवौदुम्बरत्वस्य साधनतावगतौ तेनैवेष्टसाधनताज्ञानमात्रेण प्रवृत्तिसिद्धेः नार्थो विधिनेत्येतत्पर्यन्तमपि पूर्वपक्षं कृत्वा विध्यभावे औदुम्बरसाधनताक्षिप्ताया भावनायाः सैव भाव्या स्यात्, न फलम्; विप्रकृष्टत्वात्, विधौ च सति पुरुषप्रवर्तनात्मकत्वात्, अपुरुषार्थे च पुंसः प्रवर्तनाऽयोगाद्यागस्येवौदुम्बरताया भाव्यतां परित्यज्य फलस्यैव पुरुषार्थभूतस्य भाव्यत्वमुपपद्यते। अतोऽवश्यमपेक्षितं विधित्वमर्थवादतो विधेयस्यैव स्तुत्यर्थत्वनियमात् तदनुपपत्त्या लेट्त्वकल्पनयोन्नेयम्। नच फलपरत्वे अर्थवादता संभवति। नहि स्तुतित्वेन विधिशक्तिमुपजनय्य पुनस्तेनैव. फलकल्पना संभवति; वाक्यावृत्तिरूपवाक्यभेदापत्तेः। अतोऽर्थवादत्वमेवेति सिद्धान्तितम्॥

(प्राचीनमतखण्डनेन विधित्वाङ्गीकारेण पूर्वपक्षनिरासः)

**तदयुक्तम्**; विध्येकवाक्यतां विनाऽर्थवादत्वानिश्चयेन तस्य विधिनिश्चयकत्वायोगाद्वसन्ताय कपिञ्जलानित्यर्थवादाभावेऽप्यप्राप्तार्थतया लेट्त्वनिश्चयस्येवेहापि तदुपपत्तेरर्थवादत एव निश्चयग्रहेऽपि "ऊर्गा उदुम्बर ऊर्जैवास्मा ऊर्ज" इत्यन्तस्य पूर्वपक्षेऽपि स्तावकताङ्गीकारात् तेनापि तदुपपत्तेः विध्युत्खातपर्यन्तपूर्वपक्षस्य तन्निराकरणसिद्धान्तस्य च करणे प्रयोजनाभावादित्यभिप्रेत्य विधित्वमङ्गीकृत्यैव पूर्वपक्षे वाक्यार्थमाह—**भवतीत्याख्यातेनेति**॥

(मतभेदेन भवतीत्याख्यातेन लक्षणया शक्त्यैव वा भावनाभिधानम्)

साध्यसाधनसंबन्धस्य क्रियागर्भत्वाद्दण्डेन घटो भवतीतिवच्च क्रियामात्रसंबन्धे पुरुषप्रवर्तनाऽविषयत्वेन विधिवैयर्थ्यापत्तेरवश्यं पुरुषनिष्ठो यः कश्चन प्रवर्तनासाध्यो व्यापारो वाच्यः। तस्य च प्रयोज्यव्यापारार्थकधातुषु यद्यप्याक्षेपेण बोधः संभवति; तथापि तस्य विध्यन्वयाय शाब्दत्वे वक्तव्ये येषां मते करोतिविक्रियमाणं तिङ्त्वादिकं शक्ततावच्छेदकं तेषां मते इह शक्त्याख्यातादप्रतीतेः लक्षणया भानम्। येषां तु मते केवलं तिङ्त्वादिकमेव तत्, तेषां मतेतु शक्त्यैव तदभिधानमिति विवेकः॥ तथाच उदुम्बरत्वेन भावयेत्, किमित्यपेक्षायां आर्थवादिकं पशुरूपफलमन्वेति। अतः पशुकर्मकोदुम्बरकरणको व्यापारः प्रवर्तनासाध्यतयाऽवगम्यते इति भावः॥ उक्तस्यापि प्रयोजकव्यापारस्य प्रवर्तनासाध्यत्वानवगतौ इष्टभाव्यकत्वानिश्चयान्नेष्टसाधनताज्ञानमित्यर्थः॥

(कामपदाद्यभावेन रात्रिसत्रन्यायाप्रवृत्त्या च पशूनाप्नोतीत्यस्य फलसमर्पकत्वनिरासः)

**तथाऽनुपस्थितेरिति**॥ द्वितीयाया जन्यत्वमात्राभिधायकत्वेनेप्सिततत्वसमानाधिकरणभाव्यत्वस्य कामशब्देनेवानुपस्थितेः। यद्यपिवा कथंचिदुपपद्येत; तथापि पशूनाप्नोतीति वर्तमाननिर्देशात् वर्तमानफलस्यानुपलब्ध्या बाधात् भविष्यत्काललक्षणापत्तिरित्यर्थः। **अत एव**—अपूर्वसाधनतयेप्सितार्थतयेव नैराकाङ्क्ष्यात् न रात्रिसत्रन्यायोऽपि **इति—पर्णमय्यधिकरणे वक्ष्यते**॥

(एतदधिकरणेन पर्णमय्यधिकरणपौनरुक्त्यपरिहारः)

एवं चात्र फलमात्रपरतानिराकरणेन स्तुतिपरत्वे स्थिरीकृते तत्र रात्रिसत्रवदर्थवादस्यैव सतः फलपरत्वं अवश्यं नि-

स्याद् "ऊर्ग्वा उदुम्बर" इत्यादिरर्थवाद एवौदुम्बरत्वस्येति सिद्धम् । प्रयोजनं यागफलात् फलान्तरकामनायामौदुम्बरो यूप इतरथा खादिरः पूर्वपक्षे, सिद्धान्ते तु औदुम्बर एवेति ॥ २ ॥ इति द्वितीयं विधिवन्निगदाधिकरणम् ॥

( ३ अधिकरणम् । )

**हेतुर्वा** ॥ चातुर्मास्येषु "शूर्पेण जुहोती"ति शूर्पकरणकं होमं विधाय श्रुतेन "तेन ह्यन्नं क्रियते" इत्यर्थवादेन न स्तुतिलक्षणा, अपितु होमसाधनत्वे साध्ये अन्नकरणहेतुत्वं विधीयते । नह्यत्र पूर्वत्र भाव्यत्व इव किंचित् कल्पनीयमस्ति । हिशब्दश्रुत्यैव हेतुत्वाभिधानात् । हेतुश्च व्याप्तिमन्तरेणानुपपन्नो यद्यदन्नकरणं तेन तेन होतव्यमिति व्याप्तिवचनं

राकरिष्यते इत्यपौनरुक्त्यमपि । चतुर्थ्याः फलपरत्वेऽपि स्ववाक्योपात्तयूपार्थतयैव नैराकाङ्क्षयात् न तदुपात्तफलपरत्वम् । बलवतोऽप्याकाङ्क्षाभावेऽन्वयप्रयोजकत्वासंभवात् इत्याशयः ॥ **दूषणान्तरमाह—किंचेति** ॥ स्पष्टार्थमेतत् ॥ **उदुम्बरत्वस्येति** ॥ यत् प्रधानफलं पशुरूपं तदुपकारकतयोर्ग्वा उदुम्बर इत्यादिनोचितं उदुम्बरत्वं प्रशस्तमिति स्तुतिसंपादकतयार्थवादत्वमित्यर्थः ॥

**इति द्वितीयं विधिवन्निगदाधिकरणम् ॥**

---

**हेतुर्वा ॥ चातुर्मास्ये इति ।** तदन्तर्गतवरुणप्रघासे इत्यर्थः ॥ **होमं विधायेति ॥** तैत्तिरीये "करम्भपात्राणि जुहोतीत्यनेनेति भावः । करम्भपात्राणि जुहोती"ति वचने भाष्यालिखितेऽपि कौस्तुभे लिखितत्वात् प्रामाण्याश्वासः । तदत्र शूर्पकरणकमित्यर्थसिद्धम् । तेन फलतः शूर्पकरणत्वं विधायेत्यर्थः । एतच्चाप्राप्तार्थत्वेन विधित्वनिश्चयार्थमुक्तम् । **एतेन**—"तेन ह्यन्न"मित्यस्यार्थवादत्वाभावे विधित्वस्यानिश्चयात् निर्विषयो हेतुः इति—**निरस्तम् । अत एव**—तेनेति स्तावकत्वेनाभिमतस्यैव इहोदाहरणत्वम् । इदंतु पूर्वपक्षे साध्यप्रदर्शनार्थं सिद्धान्ते स्तुत्यप्रदर्शनार्थम् **इत्यपि ध्येयम् ॥ विधीयते इति ॥**

**( हिशब्दावगतहेतुत्वान्यथानुपपत्त्या व्याप्तिकल्पनानिरूपणम् )**

अज्ञातं ज्ञाप्यते नह्यत्रानूयाजा इत्यत्रेवेत्यर्थः ॥ **ननु** लोके पूर्वं व्याप्त्यवगमेनैव हेतुत्वावगमस्य दृष्टत्वात् इह तदभावे कथं तदवगम इत्यत आह—**हेतुश्चेति** ॥ यथैव धूमो वह्निज्ञानजनकः इत्याप्तोपदेशादेव व्याप्त्यनुमानमेवमिहापि वेदावगतहेतुत्वान्यथानुपपत्त्या "अर्थाद्वा कल्पनैकदेशत्वा"दिति न्यायेन श्रुतशब्दैकदेशभूतं शूर्पस्य होमसाधनत्वं अन्नकरणत्वात् हेतोरतो यदन्नकरणं शूर्पमन्यद्वा तेनापि होतव्यमिति श्रुतानुमिताभ्यां एकदेशावयवाभ्यां निष्पन्नं विधिवाक्यं कल्प्यत इत्यर्थः ॥ **व्याप्तिवचनमिति** ॥ व्याप्तिपूर्वकवचनमित्यर्थः ॥ **ननु** हेत्वनपेक्षविधित एव शूर्पहोमसंबन्धविधानोपपत्तेरर्थवादत्वे इव वैयर्थ्यं हेतुत्वबोधनेऽपीत्यत आह—**ततश्चेति ॥ पिठरं** मृद्भाण्डं । ततश्च यद्यदन्नकरणं तेन तेन होतव्यमिति कल्पितविधिना सर्वेषां होमसाधनतालाभस्तत्प्रयोजनमित्यर्थः ॥

**( आपेक्षिकस्य दर्वीपिठरादिसाधारणस्य साधकतमत्वस्य निरूपणम् )**

नच—पाकस्यैव साधकतमत्वेनान्नकरणत्वं न दर्व्यादीनामिति—युक्तम्; कृष्टलाङ्गलाद्यपेक्षया साधकतमत्वोपपत्तेः, इतरथा शूर्पेऽपि तदभावेन तत्स्तुत्यालम्बनत्वेनोच्यमानस्यापि तस्यानुपपत्तेः **इति ॥ ननु** सर्वेषां होमसाधनत्वे शूर्पस्यैवेह विधानं व्यर्थं तत्परिहाराय च तस्यैव मुख्यतयाश्रयताकल्पने प्रत्यक्षश्रुत्यैव नैराकाङ्क्ष्येण आनुमानिकतत्साधनत्वकल्पनानवसर

---

(१) पर्णमय्यधिकरणन्यायेनास्याधिकरणस्य पौनरुक्त्याशङ्का हि वार्तिककारैरेवं बहुभिः प्रकारैः निरसिता (१) यथा अनेन गतार्थत्वात् तदेव पुनरुक्तमिति शङ्का स्यान्नतु पुनरिदं पुनरुक्तमिति, (२) इहार्थवादताबोधनम्, तत्र फलविधित्वनिराकरणमात्रम्, (३) इहाविशेषेण द्रव्यगुणक्रियादिविधिसरूपविषयत्वं तत्र फलविधिसरूपाणामिति, (४) सर्वविधिसरूपाणां केवलं विधित्वनिराकरणेनार्थवादत्वमत्र, तत्र तु अर्थवादस्यैव सतः फलविशेषसंबन्धोऽपीत्यधिकाशङ्केति, (५) फलविधावेव यत्र भेदेन स्तुतिफलपदानि सन्ति तदत्र विषयः, यत्र पुनस्तावन्मात्रेणैव फलं स्तुतिर्वा वक्तव्या तेषां चतुर्थे विषयत्वम्, (६) विज्ञातपारार्थ्यानां तत्रात्रातादृशानां विषयत्वमिति वा । (७) साधनांशयोग्यविचारमनादृत्याभ्युपेत्य वा केवलसाध्यांशविचारस्तत्रात्र पुनः साध्यांशविचारमनादृत्याभ्युपेत्य वा केवलसाधनांशविचारः इति वा—इति.

**कौस्तुभकारास्तु**—शिष्यबुद्धिवैशद्यार्थमधिकरणान्तरारम्भ इति वदन्ति.

**सेश्वरमीमांसाकृतस्तु**—"ऊर्ग्वा उदुम्बर"इत्यादीनां प्रतीयमानार्थविधायकत्वनिरासेन स्तावकत्वमत्रोपपाद्यते, तत्रतु अर्थवादस्यैव सतः फलसमर्पकत्वमात्रं निषिध्यते इति न पौनरुक्त्यशङ्कापीति वर्णयन्ति । तदेतदर्थवादाधिकरणेनैव गतार्थत्वात्तदीयमधिकरणशरीरं न युक्तमिति तु बहवो मन्यन्ते । सर्वथाच न पुनरुक्तमिदमधिकरणमिति मन्तव्यम्.

कल्पयति । ततश्च शूर्पादन्यस्यापि दर्वीपिठरादेर्होमसाधनत्वप्रतीतेर्विधौ शूर्पपदमुपलक्षणमवयुत्यानुवादो वा । **यद्वा** तच्छब्देन शूर्पस्यैव परामर्शात्तद्गतमेवान्नकरणत्वं हेतुः । तेन[१] विशिष्यैव व्याप्तिकल्पनादन्नकरणासमर्थशूर्पव्यावृत्तावपि न विधिस्थं शूर्पपदं अन्यथा नेयमिति पूर्वः पक्षः ।

सिद्धान्तस्तु क्रियत इति लडन्तनिर्देशाद्वर्तमानान्नकरणत्वस्य हेतुत्वं वाच्यम् । नच होमकाले अन्नकरणत्वं संभवति । अतो लटा भूतभविष्यत्कालान्तरलक्षणा विधौ तवाप्यावश्यकी । यद्यपि चेयं प्राशस्त्यलक्षणोपयोगिगुणघटकतया ममाप्यावश्यकी; तथापि अनुवादस्थत्वात् प्राशस्त्यपोषकत्वाच्च सा न दोषः, वर्तमाननिर्देशं विना तदप्रतीतेः । किंचापेक्षितप्राशस्त्यपरत्वे संभवति नानपेक्षितहेतुपरत्वाङ्गीकारो युक्तः । अतः सिद्धं सर्वेषामर्थवादानां स्तावकत्वेन प्रामाण्यम् ॥३॥ **इति तृतीयं हेतुवन्निगदाधिकरणम् ।**

---

इत्यत आह—**शूर्पपदमिति** ॥ अर्थवादप्रतीतान्नकरणमात्रवृत्तिहोमसाधनत्वानुरोधेन शूर्पपदं लाक्षणिकम् । जुहोतीतिपदं तु साध्यनिर्देशप्रदर्शनद्वारा होतव्यमिति विधिकल्पकत्वान्न व्यर्थम् । **अथवा**—यद्यदन्नकरणं तेन तेन जुहोतीत्येवं विधयैकवाक्यतापन्नं सत् विधायकमेवेत्यर्थः ॥ **अवयुत्यानुवादो वेति** ॥ अनेकप्राप्तावेकं पृथक्कृत्य "एकं वृणीते" इत्यादिवदनुवाद इत्यर्थः । एतद्दोषद्वयापत्तेः प्रकारान्तरेण पूर्वपक्षमाह—**यद्वेति** ॥

**( अन्नकरणसमर्थशूर्पमात्रगतकरणत्वविवक्षयाऽपि न्यायसुधामतखण्डनेन पूर्वपक्षनिरूपणम् )**

यत्तु—अत्र हिशब्दोपात्तहेतुत्वविधौ तृतीयोपात्तकरणत्वस्योद्देश्यत्वात्तस्य च प्रतिपादकोपात्तेन शूर्पेण विशेष्टुमशक्यत्वान्न तद्गतान्नकरणत्वस्य हेतुत्वमिति न्यायसुधायां विशिष्टोद्देशे वाक्यभेदापादनसूचनं, तत्तच्छब्दार्थस्य शूर्पस्य प्रकृत्यर्थत्वेन तृतीयोपात्ते करणत्वेऽन्वयव्युत्पत्तेर्विशिष्टान्वयप्रयुक्तवाक्यभेदाप्रसक्तेरयुक्तमिति यद्यदन्नकरणं शूर्पं तेन तेन होतव्यमिति विशिष्यैव व्याप्तिकल्पनात् युक्तोऽयं पूर्वपक्षः **इति** ॥

**( तेनहीत्यत्र स्तुतिप्रतीतौ स्वारस्यनिरूपणम् )**

**तदप्रतीतेरिति** ॥ अर्थवादत्वपक्षेऽवर्तमानाप्यन्नक्रिया वर्तमानेव लक्षणया रुच्यर्थमुच्यते । नहि भूते भाविनि वा तादृशी प्रीतिर्यादृशी वर्तमाने, नवा वर्तमाने शक्तिस्तादृशी यादृशी फलोपहिते अतो वर्तमानशक्तिकं स्तोतुं कृतं करिष्यमाणं वा स्तोतुमस्मत्पक्षे क्रियत इति निर्देशोपपत्तिः । हेतुविधिपक्षेतु प्रमाणान्तरसिद्धार्थानुवादकत्वाभावाद्यथाश्रुतादेतदन्यथाकल्पनं दोष एवेत्यर्थः ॥

**( नह्यत्रानूयाजेत्यत्रतु हिशब्दस्य हेतुपरत्वम् )**

अत एव यत्र नैतादृशलक्षणादिदोषापत्तिस्तत्र "नह्यत्रानूयाजानी"त्यत्र भवत्येव हेतुपरत्वम् । प्रकृतौ हि प्रयाजानुयाजयोर्द्वे चतुर्गृहीते । उपभृतितु "अष्टावुपभृति गृह्णाती"त्यष्टत्वसंख्याम्नानात् प्राप्तमपि प्रयाजानुयाजसाधनार्थमष्टगृहीतद्वयमेकमेव वाऽष्टगृहीतं न कार्यम् । अपितु एकं प्रयाजार्थे चतुर्गृहीतमपरं अनूयाजार्थे इत्येवं चतुष्कद्वयलक्षणया चतुर्गृहीतद्वयमेव ॥ कुतः? आतिथ्यायां चतुर्गृहीतान्याज्यानि भवन्ति । नह्यत्रानूयाजानीत्याम्नानात् । अत्रच चतुर्गृहीतानीति बहुवचनश्रवणात् त्रीणि चतुर्गृहीतानि विधातुं अनुयाजाभावस्य हेतुत्वमुच्यते । तेनानुयाजसामान्याभावहेतुकचतुर्थचतुर्गृहीतनिर्वृत्तिफलकत्रित्वविधिस्तदोपपद्यते । यद्यष्टपदे चतुष्कद्वयविधानं प्रकृतौ भवेत्, अन्यथा चतुर्गृहीतद्वयस्यैवाप्राप्तेस्तदनुपपत्तेः । अत एतत्प्रयोजनसिध्यर्थं हेतुत्वबोधनेऽपि नात्र कथंचिदपि लक्षणादिप्रसक्तिः **इति ॥ नानपेक्षितेति ॥**

**( तृतीयया निरपेक्षकारणत्वावगमादिविरोधेन पूर्वपक्षोपमर्दनेन सिद्धान्तोपसंहारः )**

अर्थवादत्वे विधिनाकाङ्क्षितः संबन्धो भवति, हेतुविधेस्तु स्वत एव निरपेक्षतया विधेः विधायकत्वोपपत्तेः नाकाङ्क्षा, प्रत्युत दर्व्यादीनां साधनत्वे विकल्पापत्तेः समुच्चयपक्षे तृतीयावगतनिरपेक्षकारणतावाधापत्तेः तत्स्वारस्यभङ्ग[२] एवेति भावः । यथाच तृतीयादिभिः निरपेक्षकारणत्वाद्यभिधानं तथा कौस्तुभादौ द्रष्टव्यम् । प्रयोजनं स्पष्टत्वान्नोक्तम् ॥

**इति तृतीयं हेतुमन्निगदाधिकरणम् ॥**

---

(१) तेनेति तच्छब्दस्य शूर्पपरत्वेऽपि तत्करणत्वस्य विशिष्टस्योद्देश्यत्वासंभवाद्ग्रहैकत्वाधिकरणन्यायेन केवलहोमसंवन्ध एवोद्देश्य इति न दोषः.

(२) समर्थः पदविधिरित्यस्य स्रुवादिविधावपि प्रवृत्त्यावश्यकया शूर्पस्येवेतरेषामपि करणत्वे सापेक्षत्वलक्षणासामर्थ्येन स्रुवनुपपत्तिरिति शूर्पमात्रकरणत्वम्.

( ४ अधिकरणम् । )

**तदर्थशास्त्रात्** ॥ मन्त्राणां धर्माधर्मयोः प्रामाण्यमस्ति न वेति चिन्तायां न तावद्विधित्वेन प्रामाण्यम्; तस्य द्वितीये निराकरिष्यमाणत्वात् । नापि स्तावकत्वेनार्थवादवत्; तेषां हि सन्निहितेन विधिना पदैकवाक्यत्वाद्युक्तं स्वसमर्पितप्राशस्त्यान्वितभावनाविषयकशाब्दप्रमाजनकत्वम् । मन्त्राणां तु दूरस्थत्वेन पदैकवाक्यत्वानुपपत्तेर्न तद्विधया प्रामाण्यसंभवः । नापि प्राशस्त्यं स्वातन्त्र्येण वाक्यार्थः; पदार्थविधयोपस्थितत्वात् । नापि अर्थस्मारकत्वेन प्रामाण्यम्, अनधिगतार्थबोधकत्वाभावेन तदसंभवात्, साममन्त्राणामर्थाभावेन याथार्थ्यस्याप्यनुपपत्तेश्च । न च प्रामाण्याभावेऽपि स्मारकत्वादिना प्रयोजनवत्त्वमात्राङ्गीकारः; ध्यानाद्युपायान्तरेणापि स्मृतिसिद्धेर्नियतमन्त्राम्नानवैयर्थ्यात्, प्रयोगासमवेतार्थस्मारकेषु स्मृतिवैयर्थ्याच्च । अतोऽधिकाराख्यप्रकरणादिनाऽवगततत्तत्क्रत्वङ्गभावानां मन्त्राणामुच्चारणमात्रमदृष्टार्थं विधीयते । स्वाध्यायविधिश्चोच्चारणोपयोगिप्रयोगप्राशुभावफलकतयैवाध्ययनं विधत्ते इति न कश्चिद्दोषः इति प्राप्ते—

---

**( मन्त्राणामिति मूलावतरणम् )**

वेदावयवभूतानां चोदनानामाद्यपादेन धर्मप्रामाण्यं प्रसाध्य तदवयवत्वेनोपस्थितानां मन्त्रार्थवादानां अर्थवादानां मन्त्रापेक्षयाऽन्तरङ्गत्वेनेह पादाद्याधिकरणे तत्र प्रामाण्यमाक्षेपसमाधानाभ्यामुक्त्वा तथैवोपस्थितानां मन्त्राणां तत्र प्रामाण्यं चिन्त्यते इत्यभिप्रेत्याह—**मन्त्राणामिति** ॥

**( नामधेयपादात् पूर्वं अर्थवादपादप्रवृत्त्युपपत्तिनिरूपणम् )**

यद्यप्यर्थवादतोऽप्यन्तरङ्गता विधौ नामधेयस्य, किमु वक्तव्यं मन्त्रेभ्य इति ततः पूर्वं तत्प्रामाण्यचिन्ता युक्ता कर्तुम्; तथापि श्येनाग्निहोत्रादिपदेषु नामत्वस्य अर्थवादोपात्तोपमानाधीनत्वात् मन्त्रगततत्प्रख्यन्यायाधीनत्वाच्च तत्प्रामाण्योपजीवित्वावगतेः ततः पूर्वं एतत्प्रामाण्यसाधनं युक्तमेवेति भावः । वेदावयवभूतानां प्रकारद्वयेन तत्प्रामाण्यं साधितम्, तस्य चेहासंभवात् अन्यत्रोपलब्धप्रकारान्तरासंभवात् अप्रामाण्यं पूर्वपक्षयितुं उक्तप्रकारद्वयासंभवमुपपादयति—**न तावदिति** ॥ **द्वितीय इति** ॥ यच्छब्दामन्त्रणोत्तमपुरुषघटितेषु तेषु यच्छब्दादिभिः विधिशक्तिप्रतिबन्धान्न विधायकत्वमित्येवं द्वितीये भावार्थपादे विधिमन्त्रयोरैकार्थ्यमेकशब्दादित्यधिकरणे निराकरिष्यमाणत्वादित्यर्थः ॥ स्तावकत्वेन प्रामाण्यं द्वेधा, पदैकवाक्यतया वाक्यैकवाक्यतया वा ॥ तत्राद्यं दूषयति—**तेषामिति** ॥ **अनेनच**—अर्थवादप्रामाण्यसाधकहेत्वसंभवेन पूर्वपक्षकरणात् प्रत्युदाहरणात्मिका संगतिः—**सूचिता** ॥ प्रकरणान्तरत्वादनन्तरसंगत्यभावेऽपि न दोषः ॥ **द्वितीयं दूषयति—नापीति** ॥

**( पदार्थविधयोपस्थित्या वाक्यैकवाक्यऽताभावनिरूपणम् )**

**पदार्थविधयेति** ॥ अनेकपदार्थान्वितैकविशेष्यताशाली हि वाक्यार्थो भवति । तस्मिंश्च स्वार्थे समाप्तानां वाक्यानां इतरवाक्येनान्वये वाक्यैकवाक्यता भवति । यथा अङ्गप्रधानवाक्यानाम्, प्रकृते तु प्राशस्त्यस्य लक्षणया बोधेऽपि इतरान्वितत्वेनावोधात् तस्मिंश्चार्थे समाप्तत्वाभावात् न सा संभवतीत्यर्थः । सिद्धान्तयुक्तिमनूद्य निराकरोति—**नापीति** ॥ **मन्त्राम्नानवैयर्थ्यादिति** ॥ वाचकमन्त्रशब्दस्मरणस्यार्थस्मरणाधीनत्वाच्चेत्यर्थः । **प्रयोगासमवेतेति** ॥ प्रोत्साहनानुमन्त्रणादिमन्त्राणां कर्मसमवेतार्थाभिधायित्वेऽपि प्रयोगेऽनुष्ठेयार्थकत्वान्न तत्र स्मरणस्योपयोग इति न तत्प्रयोजकत्वमपि युक्तमिति भावः ॥

**( उच्चारणद्वारा मन्त्राणां क्रतावुपयोगनिरूपणम् )**

अतः स्मारकत्वेनोपयोगासंभवात् अध्ययनसंस्कृतानामेषामुपयोगापेक्षायां प्रकरणपठितानामनारभ्याधीतानां च यथासंभवं श्रुतिवाक्याधिकाराख्यप्रकरणक्रमसमाख्यादिभिः प्रधानाङ्गत्वेनावगतानां प्रधानविधिना मन्त्रस्वरूपमेवाङ्गीक्रियते, नतु ब्राह्मणवाक्यवदर्थोऽपि; अनुपयोगात् । यद्यपि मन्त्रस्य स्वरूपेण न प्रधानोपकारित्वं संभवति; तथापि प्रमाणावगतमन्त्रस्वरूपाङ्गत्वनिर्वाहायोच्चारणक्रियाद्वारेण कारकत्वेन च सोऽङ्गीक्रियते । नह्यर्थप्रत्यायनस्य पुरुषकृत्यसाध्यस्य व्यापारत्वं संभवति । अत उच्चारणमेव व्यापारः । तस्य च दृष्टप्रयोजनासंभवे परं अदृष्टार्थत्वं मन्त्रनियमस्य सिद्धान्ते इवेत्यभिप्रेत्य पूर्वपक्षे फलितमाह—**अत इति** ॥ स्वाध्यायाध्ययनविध्यवगतदृष्टार्थताभङ्गं परिहरति—**स्वाध्यायेति** ॥

**( क्रत्वनपेक्षितस्य मन्त्रानिष्ठस्योच्चारणस्य व्यापारत्वासंभवेनार्थप्रत्यायनस्यैव तत्त्वेनच सिद्धान्तोपक्रमः )**

यद्यपि उच्चारणं प्रति विषयतासंबन्धेन मन्त्राणां कारणत्वात् तज्जन्यत्वेन तस्य व्यापारत्वं संभवति; तथापि तस्य क्रत्वनपेक्षितत्वेन अदृष्टार्थत्वकल्पनापेक्षया दृष्टमेव पदार्थाभिधानस्य कर्मानौपायिकतया सामर्थ्यात् वाक्यार्थाभिधानं व्यापारत्वेन कल्पयितुमुचितम्; उच्चारणस्य पुंव्यापारत्वेन मन्त्र-

---

(१) अनन्विततया स्वरूपमात्रेण पदशक्त्यधीनज्ञानविषयत्वात्.

अभिधीयते; दृष्टे सम्भवत्यदृष्टकल्पनाऽनुपपत्तेः प्रयोगसमवेतार्थस्मृतिरेव संभवतां मन्त्राणां प्रयोजनम्, असंभवतांतु कामं भवत्वदृष्टं प्रयोजनम्। शक्यते तु तत्रापि मन्त्रा अर्थप्रकाशनार्थाः, प्रकाशनं परमदृष्टार्थमिति वक्तुम्। साम्नांतु अक्षराभिव्यक्तिरेव दृष्टं प्रयोजनमर्थाभावेऽप्यव्याहतम्। अनृक्साम्नांतु अदृष्टार्थत्वमेवेत्यन्यत्र विस्तरः, न त्वेतावता सर्वत्रैवादृष्टार्थत्वम्। न च मन्त्राणां नियमेन पाठवैयर्थ्यम्; तद्बलेन मन्त्रैरेव स्मर्तव्यमिति नियमकल्पनात्। तस्य चादृष्टफलकत्वेऽपि न दोषः। न च—एवं सामर्थ्यादेव तत्र तत्र मन्त्राणां विनियोगसिद्धौ पुनस्तेषां क्वचिद्विनियोग-

निष्ठत्वाभावादित्यभिप्रेत्य सिद्धान्तमाह—**दृष्टे इति** ॥ अनुष्ठेयार्थप्रतिपादकानां मन्त्राणां तावत् अनुष्ठानहेतुभूतस्मृतिजनकत्वादर्थाभिधानद्वारा प्रधानोपकारित्वमित्याह—**प्रयोगसमवेतेति** ॥ **संभवतामिति** ॥

**( इतिकरणविनियुक्तानुमन्त्रणफलमन्त्राणां दृष्टविधया प्रयोगसमवायनिरूपणम् )**

करणमन्त्राणामित्यर्थः । यत्रापि मन्त्रात् स्वरसतो नानुष्ठेयार्थावगतिः, इतिकरणादिना च मन्त्रो विनियुज्यते "इषे त्वेति शाखां छिनत्ती"त्यादौ तत्रापि अर्थाभिधानं विना दृष्टविधयाऽन्यद्वारा कारणत्वासंभवात् अध्याहारादिनाप्यर्थाभिधानस्यैव व्यापारत्वम्। क्रियमाणानुवादिषु "युवासु वासा" इत्यादिष्वर्थाभिधानं न कर्मविध्यपेक्षितम्; कर्मणः उपक्रान्तत्वेनैव स्मृतत्वेन तद्वैयर्थ्यात्; तथापि यूपपरिव्याणादिक्रियाया अनेकक्षणव्यासक्ततया कदाचिन्मध्येऽपि बुद्धिविच्छेदे सति स्मृतिदार्ढ्यार्थं तदपेक्षोपपत्तेर्दृष्टविधयैवोपयोगो नासुलभः। यत्राप्यश्वादानादौ मन्त्राणां समुच्चयः, तत्राप्येकेनैव स्मृतिसिद्धेरितरवैयर्थ्यं द्वादशे जपमन्त्रादिरीत्या परिहरिष्यते। येऽप्यननुष्ठेयकर्मसमवेतार्थाभिधायकाः अगन्म सुवरित्यादयः प्रोत्साहनमन्त्राः, तेषामपि श्रद्धाजननार्थमननुष्ठेयस्यापि कर्मसमवेतफलादेः स्मृतेः श्रद्धातिशयो जायते इति तदर्थत्वेन दृष्टार्थत्वं ज्ञेयम् । अनुमन्त्रणमन्त्राणां अकृतत्वशङ्कापरिहाराय स्मृतिदार्ढ्यार्थं तदपेक्षोपपत्तेः युक्तमेव तदर्थत्वम्। **यत्तु** अनुमन्त्रणमन्त्राणामदृष्टार्थत्वेन समुच्चयाभिधानं तन्त्ररत्ने पञ्चमे **तदयुक्तमिति** तत्रैव वक्ष्यते। कौस्तुभे चात्र द्रष्टव्यम् ॥

**( असंभवद्दृष्टार्थानामदृष्टार्थत्वाङ्गीकारः )**

धुङ्क्ष्व पूङ्क्ष्वेति जपमन्त्रेषु दृष्टप्रयोजनासंभवाददृष्टार्थत्वमित्याह—**असंभवतामिति** ॥ "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह"इत्यादिलिङ्गदर्शनात् स्वरयुक्तजपादिमन्त्राणामपि करणमन्त्रवदर्थाभिधायकत्वावगतेः निरुक्तव्याकरणादिना तेषामर्थबोधकत्वोपपत्तेः प्रकाशनस्य कर्मानुष्ठानानौपयिकत्वाद्दृष्टस्मृतिरूपप्रयोजनार्थत्वासंभवे काममदृष्टार्थत्वमपीति पक्षान्तरमाह—**शक्यते त्विति** ॥ एवं स्थिते यद्द्वादशे जपादिमन्त्राणां अदृष्टार्थत्वमुक्तं, तन्मन्त्रसाध्यार्थाभिधानस्यादृष्टार्थत्वाभिप्रायादिति भावः ॥

**( साम्नां दृष्टार्थत्वनिरूपणम् )**

साममन्त्राणां गीत्यात्मकत्वेनार्थाभावात् तदभिधानद्वारा उपयोगासंभवेऽपि ऋगक्षराभिव्यक्त्यर्थत्वं नवमे यन्निरूपयिष्यते तदेव दृष्टं प्रयोजनमित्याह—**साम्नांत्विति** ॥

**( अनृक्साम्नां अदृष्टार्थत्वनिरूपणम् )**

यानि तु स्तोभाक्षराधिरूढानि तेषामृगक्षराभिव्यक्त्यर्थत्वाभावाददृष्टार्थत्वमेव ॥ अत एव रथन्तरादिसाम्नां आश्रयिकर्मत्वमित्यपि द्रष्टव्यम् ॥ यानि त्वनृक्सामानि प्रजापतिहृदयादीनि, तेषां स्तोभाक्षराधिरूढत्वात् स्तोभानां चार्थशून्यत्वस्य नवमे वक्ष्यमाणत्वात् नार्थाभिधानरूपस्तोत्रकरणत्वं इत्यगत्या सामविनियोगानुरोधेनोच्चारणमात्रद्वाराऽदृष्टार्थत्वमेवेत्याह—**अनृक्साम्नांत्विति** ॥

**( प्रयोगप्रत्यायनार्थत्वेनानृक्साम्नामुपयोगनिराकरणम् )**

यत्तु भाट्टालंकारकृता अनृक्साम्नां यत्र कर्मणि तानि विनियुक्तानि तदपूर्वेणापेक्षितस्य स्वविशिष्टत्वेन प्रयोगविधिप्रयोगप्रत्यायनस्य तैरपि संपादनादर्थप्रत्यायनार्थत्वमुक्तम्, तदेव रूपमादायान्यत्रापि तस्यैव प्रयोजनत्वापत्तेरुपेक्षितं पूज्यपादैः ॥

**( मन्त्राणां प्रयोगसमवेतस्मारकत्वपक्षे तां चतुर्भिः इमामगृभ्णन् उरुप्रथस्वेत्यादिविनियोगवैयर्थ्यनिरूपणम् )**

**न दोष इति** ॥ **नच**—आवश्यकादृष्टकल्पना प्राथम्यावश्यकत्वादिनोच्चारणादेव युक्तेति—**वाच्यम्**; दृष्टेन निराकाङ्क्षस्य अदृष्टकल्पनानिमित्तभूताकाङ्क्षाभावे प्राथम्यादिमात्रस्याप्रयोजकत्वादिति भावः। **क्वचिद्विनियोगकरणमिति** ॥ यथा "तां चतुर्भिरादत्ते" "इत्यश्वाभिधानीमादत्ते" "उरु प्रथस्वेति पुरोडाशं प्रथयति" इत्यादयो विनियोगविधयः तेषां वैयर्थ्यमित्यर्थः । **आद्ये** तावत् चयनसाधनीभूतेष्टकासिध्यर्थमावश्यकतया प्राप्तस्य मृद्ग्रहणस्य खनित्रेण खननं विनाऽसंभवात् अर्थप्राप्ते खननद्वाररूपाभ्र्यादाने "देवस्य त्वा सवितु"रित्याद्याम्नातानां चतुर्णां मन्त्राणामर्थप्रकाशकत्वरूपलिङ्गकल्प्यश्रुत्यैव मन्त्रविनियोगप्राप्तौ तद्विधिवैयर्थ्यम् । **द्वितीये** तस्या मृदोऽश्वगर्दभोपर्यानयनार्थं तयोर्बन्धनार्थं रशनादाने अर्थप्राप्ते 'इमामगृभ्णन्'निति मन्त्रस्य लिङ्गकल्प्यश्रुत्या गर्दभरशनादान इवाश्वरशनादानेऽपि प्राप्तेस्तद्विधिवैयर्थ्यम् । **तृतीये** पुरोडाशे अष्टसु कपालेषु संस्कृतत्वार्थप्राप्ते प्रथने मन्त्रस्य लिङ्गकल्प्यश्रुत्यैव प्राप्तेस्तद्विधिवैयर्थ्यम् । मन्त्राणाम-

करणं व्यर्थमिति—वाच्यम्; गुणपरिसङ्ख्याद्यर्थत्वेन सार्थक्यात्। **तथाहि**—अर्थप्राप्ते अभ्र्यादाने विकल्पेन चतुर्णां मन्त्राणां लिङ्गेन प्राप्स्यमानानां प्रापकप्रमाणात् पूर्वमेव प्रवृत्तेन तां चतुर्भिरादत्ते इति वचनेन मन्त्रसङ्ख्योभयविशिष्टादानभावनायां विहितायां एतद्वचनाभावेऽपि मन्त्राणामादानस्य च प्राप्तिसम्भवे एतद्वचनप्रवृत्तिफलजिज्ञासायां समुच्चयफलकचतुःसङ्ख्यारूपगुणप्राप्तिरिति निश्चीयते । तथा लिङ्गादेवाग्निचयनाङ्गभूताश्वरशनाऽऽदाने प्राप्स्यमानस्य मन्त्रस्य ततः पूर्वप्रवृत्तेन इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते इत्यनेन वचनेन मन्त्रविशिष्टादाने अश्वरशनाङ्गत्वेन विहिते पूर्ववत् फलजिज्ञासायां गर्दभरशनानिवृत्तिरूपशेषिपरिसङ्ख्या फलम् ।

न च फलतः परिसङ्ख्यायां स्वार्थहानिः परार्थकल्पना प्राप्तबाध इति त्रैदोष्यम्; अश्वाभिधानीसंबन्धरूपस्वार्थस्यैव विधेयत्वात्, अन्यनिवृत्तिरूपपरार्थस्यार्थसिद्धत्वेनाकल्पनीयत्वात्, प्रापकप्रमाणस्याप्रवृत्ततया प्राप्तबाधाभावाच्च । अतएव यत्र प्रापकप्रमाणप्रवृत्त्युत्तरमेव परिसङ्ख्याशास्त्रस्य प्रवृत्तिः, यथा पञ्च पञ्चनखा भक्ष्या इत्यादौ रागप्राप्तपञ्चनखभक्षणे पञ्चातिरिक्तपरिसङ्ख्याकरणे, तत्रैव तत् । यत्रापि च श्रौती

---

दृष्टार्थत्वे तु यत्र कुत्राप्युच्चारणे प्राप्ते तत्र लिङ्गेनाविनियुक्तानां विनियोजकतयोच्चारणनियमार्थत्वेन सार्थक्यमित्याशङ्काग्रन्थार्थः॥

### ( चतुःसङ्ख्याविशिष्टमन्त्रविशिष्टादानविधित्वावश्यकतानिरूपणम् )

अत्रैतदाशङ्कापरिहारार्थानि "गुणार्था वा पुनः श्रुतिः" "परिसङ्ख्या" "अर्थवादो वे"ति त्रीणि सूत्राणि । तदर्थमनुसन्धाय परिहरति—**गुणेति** ॥ अत्र चार्थप्राप्ताभ्र्यादानोद्देशेन लिङ्गप्राप्तमन्त्रपरिच्छेदद्वारा चतुःसङ्ख्याविधाने आदानभावनाया मन्त्राणां च विधानाभावात् अरुणैकहायनीवदेकक्रियावशीकारासंभवेनैककर्म्यानुपपत्तेर्मन्त्राणामपि विधाने उभयविधानप्रयुक्तवाक्यभेदापत्तेः तदर्थं लिङ्गकल्प्यश्रुतेः पूर्वं चतुःपदोपात्तचतुःसङ्ख्याविशिष्टमन्त्रविधानेऽपि विशिष्टोद्देशे वाक्यभेदस्य सर्वथाऽपरिहारात् मन्त्रविधानस्यैवाक्षेपतः पूर्वप्रवृत्त्याऽऽदानस्यापि विधानोपपत्तिः विशिष्टविधिगौरवाश्रयणेनापि धात्वर्थविधानस्य युक्तत्वादित्यश्वाभिधानीमित्यत्रत्यवार्तिककारमत इवेहापि विशिष्टभावनाविधानमेव युक्तमित्यभिप्रेत्याह—**तथाहीति** ॥ **निश्चीयत इति** ॥ यद्यप्येतचतुःसङ्ख्यामन्त्रोभयविधानमात्रस्यैव फलं, नादानविधेः; तथाप्ययमर्थः—चतुःपदं ह्यत्रारुणादि पदवद्गुणमात्रपरम्, विशेष्यं तु प्रकरणप्राप्तमपि भावनान्वयार्थं मन्त्रैरित्यध्याहृतपदेनैव समर्प्यते । तयोश्च परस्परान्वयाभावेन परिच्छेद्यपरिच्छेदकभावानुपपत्तेः तदर्थमुभयोरपि भावनान्वयेन विशिष्टभावनाविधानमावश्यकम् । पार्ष्ठिक एव च तयोः परिच्छेद्यपरिच्छेदकभावबोधः । अतः समुच्चयफलकमन्त्रपरिच्छेदकचतुःसङ्ख्यारूपगुणप्रापणमादानविधेः फलं नायुक्तमिति । एवंच "गुणार्थावे"ति सूत्रे गुणार्थत्वं गुणविशिष्टभावनाविधाने फलतो गुणार्थत्वेन व्याख्येयमिति भावः ॥

### ( अश्वाभिधान्यादानाङ्गत्वेन मन्त्रविधानमिति भाष्यस्य मन्त्रविशिष्टादानं अश्वरशनाङ्गत्वेन विधीयते इति भाट्टदीपिकायाश्चाविरोधसमर्थनम् )

**मन्त्रविशिष्टादाने इति** ॥ यद्यपि भाष्यकारेणाश्वाभिधान्यादानाङ्गत्वेन मन्त्रविधानमेवोक्तम्; तथापि पूर्ववद्वार्तिककारमताभिप्रायेण विशिष्टादानमुक्तं ज्ञेयम् । अश्वरशनाङ्गत्वेनेत्यनेन वार्तिककारमते विशिष्टादानविधिपक्षे अश्वाभिधानीपदस्यापि विशिष्टविध्यन्तर्गतत्वोपपादनेनानुद्देश्यपरत्वात् न तत्पदेऽपूर्वीयत्वलक्षणावश्यकीति विधिरसायनगतोदाहरणाक्षेपद्वितीयश्लोकोपपादितस्योद्देश्यांशे विध्यनन्तर्गतत्वस्य अनुक्तिसहत्वान्निरासो द्वितीयाश्रुत्या लिङ्गबाधश्च सूचितः । यद्यपि-चेति कारणस्थले वाक्यरूपतया लिङ्गवाक्ययोर्विरोध इति केषांचिन्मतम्; तथाप्यस्य ब्राह्मणवाक्यत्वेन लिङ्गापेक्षया यद्यप्यन्यदेवत्य इत्यस्येव प्राबल्यात् लिङ्गबाध्यत्वोपपत्तिः । **एतेन**—वाक्यीयविनियोगपक्षे वाक्यस्यैव लिङ्गेन बाधापत्तिदूषणं न्यायप्रकाशोक्तं—**अपास्तम्** ॥ **तत्रैव तदिति** ॥

### ( पञ्च पञ्चनखा भक्ष्या इत्यस्यार्थपरिसङ्ख्यात्वसमर्थनम् )

अत्र ब्रह्मक्षत्रेण राघव । शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चम इत्युत्तरं पादत्रयं रामायणे वालिवाक्यगतं ज्ञेयम् । अत्रच न भक्षणं विधेयम्; रागतः प्राप्तत्वात् । नापि रागप्राप्तेः पूर्वप्रवृत्त्या विधेयत्वम्; फलकल्पनापत्तेरभक्ष्यप्रक्रमविरोधापत्तेश्च । नापि पञ्चपञ्चनखभक्षणस्य समुच्चयेन; प्राप्तेः पाक्षिकत्वाभावात्, कदाचित्पाक्षिकप्राप्तावपि अभक्ष्यप्रक्रमविरोधापत्तेश्च, अतः परिसङ्ख्यैवेयम् ॥ तथाच पञ्चातिरिक्तपञ्चनखभक्षणनिवृत्तेरेव लक्षणया विधानमिति स्वार्थहान्यादिदोषत्रयमित्यर्थः । अत्र दोषद्वयं शब्दनिष्ठम्, अन्तिमस्त्वर्थनिष्ठ इति विवेकः ॥

### ( नञ्घटितवाक्यस्थल एव श्रौतपरिसङ्ख्यात्वनिरूपणम् )

पूर्वोक्तपरिसङ्ख्याया लाक्षणिकत्वेन तस्याः श्रौतीत्वमाह—**यत्रापि श्रौतीति** ॥ तत्र नञैव निवृत्तिबोधनस्य शक्त्यैव संभवात् स्वार्थहानिपरार्थकल्पनयोरभावान्न दोषद्वयम्, प्राप्तबाधत्वं त्वस्त्येवेत्याह—**न तदिति** ॥ एकसत्त्वेऽपि द्वयोरभावेन त्रैदोष्याभावोपपत्तेर्न तदिति नासंगतम् । **यत्तु**—

परिसङ्ख्या यथा नानृतं वदेदित्यादौ, तत्रापि न तत्। अतएव शब्दतः फलतो वा यस्य शास्त्रस्यान्यनिवृत्तिर्विषयः स परिसङ्ख्याविधिः । अत्र चैतद्विध्यभावे प्रायश औत्सर्गिकी तत्र चान्यत्र च प्राप्तिर्न तु साऽपि लक्षणघटिकेति ध्येयम्। अतएवैकस्मिन् कार्येऽनृतस्य सत्येन सह पाक्षिकप्राप्तावपि नानृतं वदेदिति परिसङ्ख्यैवेयम्, न तु नियमविधिः। अत-

---

श्रौतपरिसङ्ख्योदाहरणम् "अत्र ह्येवावपन्ती"ति पार्थसारथ्यादिभिर्दर्शितं, तत् एवकारस्य अन्ययोगव्यावृत्त्यर्थत्वे न तौ पशौ करोतीत्यत्रेव विकल्पापत्तेरयुक्तम्, किंत्वत्र फलतःपरिसङ्ख्यात्वमेवेति दशमे वक्ष्यते ॥

**(एवकारघटितस्थले परिसङ्ख्यात्वनिरूपणपरवार्तिकस्य श्रौतनियमपरत्वोपपादनम्)**

यत्त्वस्मिन् सूत्रे "सर्वत्र हि परिसङ्ख्याशब्दादेवकाराद्वा श्रुत्या परिसङ्ख्या नियमो वोच्यते"इत्यादिना वार्तिक एवकारस्थले श्रौतपरिसङ्ख्यात्वमभिहितम्, तद्रागप्राप्तार्थसमभिव्याहृतैवकारपरतया नेयम्। यदप्येतद्वार्तिकस्वारस्यादेवकारस्थले श्रौतो नियम इति न्यायसुधायामुक्तम्, तत्सत्यमेवेत्येतादृशे विषये पाक्षिकप्राप्तिसत्त्वादयोगव्यावृत्त्यर्थकत्वाभिप्रायेण। यत्र तु नियता शास्त्रतः प्राप्तिः, तत्र तु फलतः परिसङ्ख्यैवेति कौस्तुभे व्यक्तम् ॥

**(प्रथमतः परिसङ्ख्यालक्षणकथने निमित्तनिरूपणम्)**

यद्यपि "विधिरत्यन्तमप्राप्ते"इत्यादिना वार्तिकेऽपूर्वविधिक्रमेण तल्लक्षणान्यभिहितानि; तथापि उभयविधपरिसङ्ख्यानिरूपणेन प्रथमत उपस्थितत्वात् अथवा नियमपरिसङ्ख्यातिरिक्तफलकविधित्वरूपस्यापूर्वविधिलक्षणस्य स्वयमभिधास्यमानत्वात् प्रतियोगिप्रसिद्ध्यर्थमवश्यं कर्तव्यतौचित्याद्वा तदुक्तक्रममुपेक्ष्यादौ परिसङ्ख्यालक्षणमाह—**अतएवेति** ॥

**(तत्रचान्यत्रचेत्यस्य तच्चान्यच्च यत्रेत्येतदर्थोपलक्षणत्वलक्षणाघटकत्वयोरुपपादनम्)**

अत्र "तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते" इति वार्तिकं शेषिपरिसङ्ख्याभिप्रायेण लक्ष्ये निवेशितमपि शेषान्तरपरिसङ्ख्यासंग्रहाय तच्चान्यच्च प्राप्तं यत्रेत्यर्थस्यापि उपलक्षणम्। तेनाज्यभागौ यजतीति परिसङ्ख्यायां शेषद्वयप्राप्तौ नाव्याप्तिः। तथाप्येतन्न लक्षणघटकत्वेन विवक्षितम्; "नानृतं वदेत्" इति श्रौतपरिसङ्ख्यायामव्याप्तेः, किंत्वौत्सर्गिकत्वेन स्वरूपकथनमात्रार्थत्वमित्याह—**अत्रेति** ॥

**(पाक्षिकप्राप्तावपि नञ्घटितवाक्येषु परिसङ्ख्याविधित्वनिरूपणेन दीक्षितो न ददातीत्यादीनामपि लक्ष्यत्वनिरूपणम्)**

**प्राप्तावपीति** ॥ अपिना कदाचिदत्र समुच्चयेन प्राप्तौ सत्यां परिसङ्ख्यात्वोपपत्तावपि पाक्षिकप्राप्तावपि अत्र निषेधप्रवृत्तेः परिसङ्ख्याविधित्वमन्यथा न सिध्यति । अनेनैव न्यायेन "पञ्च पञ्चनखा भक्ष्या" इत्यत्र कदाचित्पाक्षिकप्राप्तावपि परिसङ्ख्याविधित्वं निर्दुष्टं भवतीति च सूचितम् ॥ अनेन चोदाहरणेन निषेधरूपेषु "दीक्षितो न जुहोति "न तौ पशौ करोति"त्यादिषु निवृत्तिफलकत्वात् पाक्षिकनियमप्राप्त्यभावेऽपि परिसङ्ख्याविधित्वे सूचिते यत्तेषामपूर्वनियमविधित्वे आपाद्य परिसङ्ख्यालक्षणातिव्याप्त्यापादनं विधिरसायनकाराणां तदपास्तमिति द्रष्टव्यम् ॥ नच परिसङ्ख्यात्वेन व्यवहाराभावः; पर्युदासप्रतिषेधत्वेन व्यवहारसिद्धौ तत्त्वेन व्यवहाराभावेऽपि क्षत्यभावस्य न्यायसुधायामेव दर्शितत्वात् ॥

**(अभावस्य निवृत्तिप्रतियोगिनिरूपणेनावघातविधेरपि फलतः परिसङ्ख्यात्वे न दोष इति निरूपणम्)**

अत्रच निवृत्तिप्रतियोगी न केवलं भावरूप एव विवक्षितः, किंत्वभावरूपोऽपि । अतएव "पत्नीसंयाजान्ता प्रायणीया संतिष्ठते" "नानूयाजान् यजती"त्यत्र प्रायणीयातिथ्ययोः पत्नीसंयाजप्रयोगविधिना सर्वेषामुत्तराङ्गानां निवृत्तिसिद्धौ पुनर्न पत्नीर्नानूयाजानिति निषेधद्वयं व्यर्थं सदितराङ्गाभावपरिसङ्ख्यार्थमिति दशमे पूर्वपक्षे उपपादितं सङ्गच्छते। एवंच अवघाताभावनिवृत्तिफलके नियमोदाहरणेऽवघाताभावप्रतियोगिनिवृत्तिफलकत्वेन परिसङ्ख्यालक्षणसत्त्वेऽपि साङ्कर्ये बाधकाभावान्न क्षतिरित्यवधेयम् । अतएव यद्धर्मावच्छिन्नप्रतियोगिकाभावनिवृत्तित्वेन यत्र शास्त्रतात्पर्यविषयता तत्र नियमः, यत्र तु तत्प्रतियोगिकनिवृत्तित्वेन सा, तत्र परिसङ्ख्येत्येतावतैव तयोर्भेदः ॥

**(निवृत्तिविधिः परिसङ्ख्येति विवक्षायां विधिरसायनोक्तदूषणपरिहारः)**

**अत्रच** शब्दतः फलत इत्यस्यायमर्थः। यत्र वैयर्थ्यप्रतिसन्धानं विनैव निवृत्तिः प्रतीयते, सा शब्दतः, यत्र तत्प्रतिसंधानेन सा तात्पर्यविषयीभूता तत्र फलत इति। **एवंच**—निवृत्तिफलो विधिः परिसङ्ख्येति लक्षणविवक्षायां अग्निहोत्रविधावतिव्याप्तिरकरणनिवृत्तिफलत्वादिति विधिरसायनोक्त्यतिव्याप्त्यापादनं—**परास्तम्**; अकरणनिवृत्तेः शब्दतः फलतो वा तात्पर्यविषयत्वाभावात्, अग्निहोत्रानुष्ठानविधायकत्वेन वैयर्थ्याभावात्। **अतएव**—एतादृशार्थविवक्षया पदद्वयमेतल्लक्षणघटकमेवेति—**ध्येयम्**। तथाच यद्विध्यभावे यस्य प्राप्तौ संभावितायां तस्य शब्दतः फलतो वा निवृत्तिः शब्दतात्पर्यविषयभूतेत्युपादानान्नियमविधौ विदलनादिनिवृत्तेः फलत्वेऽपि नातिव्याप्तिः ॥

(परिसङ्ख्यालक्षणघटकैतद्विध्यभावः तन्मात्रप्रतियोगिकः तदितराप्रवृत्तिसहिततद्विधिप्रतियोगिकश्च विवक्षणीय इति निरूपणम्)

अत्रच एतद्विध्यभाव एतन्मात्रप्रतियोगिको विध्यन्तराप्रवृत्तिसहितैतद्विधिप्रतियोगिकोवा वक्ष्यमाणनियमविधिघटकपाक्षिकायोगवदवसेयः। इतरथा गृहमेधीयगते "आज्यभागौ यजती"ति विधौ परिसङ्ख्यात्वलक्ष्ये आज्यभागविधिमात्राभावे "अग्नये स्विष्टकृते समवद्यति" "इडामुपह्वयस्वे"त्यादिप्राकृताङ्गपुनर्विधानेनेतराङ्गपरिसङ्ख्यालाभेनाज्यभागसाधारण्येनेतराङ्गप्राप्त्यभावे तन्निवृत्तिफलकत्वासङ्गेनाव्याप्त्यापत्तेस्तत्र विध्यन्तराप्रवृत्तिसहिताज्यभागविध्यभावमादायैव आज्यभागयोस्तदितराङ्गानां च प्राप्त्या लक्षणं नेयम्। एवमन्यत्राप्यूह्यम्॥

(अपबर्हिषः प्रयाजानित्यत्र परिसङ्ख्यालक्षणातिव्याप्तिनिरूपणपरविधिरसायनखण्डनम्)

विध्यन्तरं चात्र प्रकृतविधेर्विवक्षितफला या विधेयता तत्प्रतिबन्धकरूपं विवक्षितं, नान्यत्। अस्तिच यवविधिस्ताद्दशोऽग्नये स्विष्टकृते इत्ययं चेति नानुपपत्तिः। **एतेन**—अष्टमश्लोकविवरणे आज्यभागपुनर्विधानेन गृहमेधीयवदपूर्वेऽवभृते "अपवर्हिषः प्रयाजान् यजति अपवर्हिषावनूयाजौ यजती"ति वर्हिर्व्यतिरिक्तप्रयाजानूयाजप्राप्त्यर्थेऽपूर्वविधौ विध्यन्तराप्रवृत्तिसहितैतद्विध्यभावे वर्हिःसंज्ञकप्रयाजानूयाजयोस्तद्व्यतिरिक्तप्रयाजानूयाजानां च नियतप्राप्तिसत्त्वेन तन्निवृत्तिफलकत्वात् परिसंख्यालक्षणस्यातिव्याप्तिर्विधिरसायने आपादिता—**परास्ता**; आज्यभागविधेरनूयाजप्रयाजादिविधेयताप्रतिबन्धकत्वाभावेन विध्यन्तरपदेनाग्रहणात्। अतस्ताद्दशस्य विध्यन्तरस्याभावात् नायं तस्य विषयः। एतद्विधिमात्राभावे तु आज्यभागविधिना परिसंख्याततत्वात् वर्हिःसंज्ञकप्रयाजानूयाजयोः तद्व्यतिरिक्तप्रयाजानां च नैव नियता प्राप्तिरिति नैव लक्षणानुप्रवेशः। अनेनैव न्यायेन "बृहत्पृष्ठं भवती"ति वैकृतनियमविधौ एतद्विधेः प्राकृतबृहद्रथन्तरविकल्पविधेश्चाप्रवृत्तौ प्रकृतितो "बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवती"ति वाक्यद्वयबलात् बृहद्रथन्तरयोः समुच्चित्य प्राप्तिसत्त्वात्परिसङ्ख्यालक्षणस्यातिव्याप्तिरपि तदापादिता निरसनीया; अनयैव रीत्यै तत्सदृशोदाहरणेषु तदापादितातिव्याप्त्यादिदूषणानि निरसनीयानि। इतोऽप्यधिकं कौस्तुभे द्रष्टव्यम्॥

(अश्वाभिधानीशब्देनापूर्वसाधनत्वलक्षणायामपि अश्वाभिधानीत्वविवक्षाऽवश्यकतानिरूपणेन धर्मसांकर्यापादनपरविधिरसायनखण्डनम्)

**ननु**—अस्त्वेवमुभयसाधारण्येन परिसङ्ख्यालक्षणं, तथापि "अश्वाभिधानीमादत्ते" इत्यत्राश्वाभिधान्युद्देशेन मन्त्रविशिष्टादानविधौ अश्वाभिधानीस्वरूपे आनर्थक्यपरिहारार्थं अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात्तद्रूपस्यचैकापूर्वसाधनत्वेन गर्दभाभिधान्यामपि सत्त्वेन व्रीहिधर्माणां यवेष्विव धर्मसांकर्यस्यानिराकरणात् कथं गर्दभाभिधान्यां मन्त्रनिवृत्तिः फलं लभ्यते? इत्युदाहरणाक्षेपे विधिरसायनोक्तदूषणान्न मुक्तिः **इति—चेत्**, धर्मसांकर्यस्य लिङ्गकल्प्यश्रुत्यैव प्राप्तत्वेनापूर्वसाधनत्वमात्रलक्षणायां विधिवैयर्थ्यापरिहारेण तद्वैयर्थ्यानुपपत्त्या गुरुभूतस्याप्यश्वाभिधानीत्वस्य उद्देश्यतावच्छेदककोटिप्रविष्टत्वाङ्गीकारेण तदनापत्तेः॥ अतएव "प्रतूर्तं वाजिन्नाद्रवेत्यश्वमभिदधाति" "युञ्जाथाꣳ रासभं युवमिति गर्दभं प्रतिष्ठापयति"इति तत्तद्वर्गविधौ प्रतिनियतनिर्देशोऽप्युपपद्यते॥

(अश्वाभिधानीमित्यत्राश्वसंबन्धाविवक्षापरविधिरसायनखण्डनम्)

यदपि अश्वाभिधान्युद्देशेन मन्त्रस्य तद्विशिष्टादानस्य वा विधाने विशिष्टोद्देशे वाक्यभेदापत्त्याऽश्वविशेषणस्याविवक्षया गर्दभाभिधान्यां मन्त्रप्राप्तिरनिवार्येति विधिरसायने उक्तम्, तन्न; समासे परस्परान्वयव्युत्पत्त्या विशिष्टस्य व्युत्पन्नत्वेन विशिष्टोद्देश्यताखीकारेऽपि तदप्रसक्तेः। नह्य "ध्वर्युयजमानौ वाचं यच्छत" इत्यत्र नानेकोद्देश्यता, नवा प्रयाजशेषस्य संस्कार्यत्वेऽपि प्रयाजसंबन्धाविवक्षेति स्पष्टम्। विधिवैयर्थ्यापरिहारार्थमेव न ब्राह्मणं हन्यादित्यत्रेव विशिष्टानुवादस्याप्यगत्याऽङ्गीकाराच्च, अपूर्वसाधनत्वलक्षणायां अपूर्वविशेषणस्येव विशिष्टलक्षणया तस्यापि विवक्षोपपत्तेश्च। **नच**—अत्र "उरु प्रथस्वेति पुरोडाशं प्रथयती"त्येत्रवार्थप्राप्तस्य प्रथनस्याध्वर्युकर्तृकत्वनियमप्राप्तिफलकतयाऽऽदानविधानेन वैयर्थ्यं सुपरिहरमिति तदुक्तं युक्तम् **इति—वाच्यम्**; त्वदुक्तरीत्या तावतापि विशिष्टानुवादानुपपत्तेः। नहि विधिवैयर्थ्यापत्त्या त्वया विशिष्टानुवादः शक्यते परिहर्तुम्। अश्वरशनाग्रहण इव गर्दभरशनाग्रहणेऽपि अध्वर्युकर्तृनियमाय विध्युपपत्तेः, मन्त्रादनयोः समानकर्तृकत्वलाभाय मन्त्रांशे विधिसंभवेऽनुवादत्वकल्पनस्यायुक्तत्वाच्च। नहि स्वकर्तृकमन्त्रपाठेनैव स्वकर्तृककर्मस्मृतिरिति नियमे प्रमाणमस्ति; होतृकर्तृकमन्त्रपाठेनापि यजमानाध्वर्युकर्तृकयागप्रक्षेपस्मृतेर्जायमानत्वात्। अतएव मन्त्रकल्पसूत्रादितौल्येनोपद्रष्ट्रादिवचनस्य अनुष्ठेयार्थस्मरणोपायत्वेन पक्षप्राप्तिः सर्वत्रोक्ता। एवंच मन्त्रविधाने सति समानतत्परिसङ्ख्यारूपं फलं नैव वारयितुं शक्यम्। **वस्तुतस्तु**—मन्त्रस्याऽऽध्वर्यवकाण्ड एव समाम्नानात् "प्रतूर्तं वाजिन्नाद्रवेत्यश्वमभिदधाति" इति प्रत्यक्षविधानात् तत्रैव बन्धनविधानाच्च बन्धनस्याध्वर्युकर्तृकत्वनियमसिद्धौ तदर्थादानेऽपि अध्वर्युकर्तृकत्वनियमसिद्धेः सर्वथा परिसङ्ख्याफलकत्वाभावे विधिवैयर्थ्यमेवेत्यावेदितमेव कौस्तुभे पूज्यपादैः॥ यदित्वनेन न्यायेनाभ्यादानस्यापि द्वाभ्यां खनतीत्यत्र खनननियमविधेरावश्यकत्वेन त-

त्राध्वर्युकर्तृकत्वसिद्धावादानेऽपि तत्कर्तृकत्वप्राप्तेः न प्रत्यक्षविधाने फलमित्युच्यते, तदोभयत्रापि विशिष्टोद्देशे वाक्यभेदपरिहारार्थमेवादानपर्यन्तविध्याश्रवणमित्यवधेयम् । यथा चात्र न याजुर्वैदिकप्रायश्चित्तप्राप्तिरप्यादानश्रेषे फलं तथा कौस्तुभे द्रष्टव्यम् । प्रथनमन्त्रेतु वक्ष्यते इत्यलं विस्तरेण । प्रस्तुतमनुसरामः ॥

### ( उपसंहारविधिषु केषांचिन्मतेन परिसङ्ख्यात्वसमर्पणम् )

**ननु**—एवमिदं परिसङ्ख्यालक्षणमनारभ्याधीतस्य अन्यस्य वा येन सहोपसंहारः तत्रान्यनिवृत्तेः फलतः शास्त्रतात्पर्यविषयत्वादतिव्याप्तम् इति—**चेत्, अत्र केचिदिष्टापत्त्यैव परिजह्रुः ॥ अतएव**—अष्टमश्लोकावतरणिकायां मित्रविन्दादिप्रकरणगतानां वाक्यानां परिसङ्ख्यात्वमङ्गीकृतं दीक्षितैरिति ॥

### ( प्रकाशकारमतेनोपसंहारविधीनामपरिसङ्ख्यात्वोपपादनम् )

**तदेतत् प्रकाशकारा न क्षमन्ते।** इत्थं हि विधिरसायनखण्डने तैरुपपादितम् ॥ यद्युपसंहारस्य परिसङ्ख्यात्वं, तदा "आग्नेयं चतुर्धा करोती"त्यस्यापि परिसङ्ख्यात्वापत्तेरुपसंहारो दत्तजलाञ्जलिरेवाऽऽपद्येत । अतएव गृहमेधीयाधिकरणे भाष्यकारादिसर्वसंमता अष्टौ पक्षा उपपद्यन्ते । अन्यथा पञ्चमस्य परिसंख्यात्वात् सप्तमस्यापि पक्षस्योपसंहाररूपस्य परिसङ्ख्यात्वान्तर्गतेः पक्षगताष्टत्वानुपपत्तिः ॥ **किंच** "भावादतिरात्रस्य गृह्यते"इत्यधिकरणे ननूपसंहारःपरिसङ्ख्या वा षोडश्युत्तरवाक्यमिति भाष्यं द्वयोरभेदेऽनुपपन्नं स्यात् । अत उपसंहारपरिसङ्ख्ययोर्भेद एव । कथमनयोर्भेद इति चेत्, शृणु; "सामान्यविधिरस्पष्टः संह्रियेत विशेषतः । स्पष्टस्यतु विधेर्नान्यैरुपसंहार इष्यते"इति वार्तिके पूर्वार्धार्थविषय एवोपसंहार इति वदतार्थादुत्तरार्धार्थविषयैव परिसङ्ख्या न कदाचित् पूर्वार्धविषयेति सूचनात् स्पष्ट एव भेदः । तद्यथा अवयविनोऽवयवेषु व्यासज्यवृत्तेः सामान्यरूपत्वाभावादवयविविधिः स्पष्टोऽवयवविशेषविधिभिर्नोपसंह्रियते इति । यागहोमयोरैक्यं भाष्यकारासंमतमभ्युपेत्यापि "चतुरवत्तं जुहोती"त्यनेन आग्नेयविधेर्नोपसंहारः इत्युत्तरार्धविषयः । एवं हृदयस्याग्रेऽवद्यतीत्येकादशावदानगणचोदकसामान्यविधिर्नोपसंह्रियते इति प्राप्तपरिसङ्ख्याया असौ विषयः । एवं तावत्प्राप्तपरिसङ्ख्यायां तावन्नान्तर्भावः, नाप्यप्राप्तपरिसङ्ख्यायाम्; सामान्यविधेः प्रत्यक्षत्वात् । एवं "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत् यदुपभृति (गृह्णाति) प्रयाजानूयाजेभ्यस्तदिति सामान्यशास्त्रयोः "अतिहाये डो वर्हि"रित्यौपभृताज्यसमानयनकालविधितोऽर्थलभ्योपसंहार एव नतु परिसङ्ख्या । अतएव—**"समानयनं तु मुख्यं स्याल्लिङ्गदर्शना"दिति** चातुर्थिकाधिकरणे शास्त्रदीपिकायां 'प्रयाजानूयाजेभ्य'इत्यविशेषश्रवणं "अतिहाये डो वर्हि"रिति कालविधिबलादुपरितनप्रयाजद्वयविषयमुपसंह्रियते इति ग्रन्थेन उपसंहारत्वमेवोक्तम् । एवं पत्नीसंयाजान्ता प्रायणीया सन्तिष्ठते इत्यादावप्यतिदेशसामान्यविधेरस्पष्टत्वात् समुपस्थतिष्ठतिवाच्यार्थोपरमाख्यसंस्थाविध्यर्थलभ्योपसंहार एव ॥ एतेनैतादृशेषु उदाहरणेषु परिसङ्ख्यात्वोपपादनं दीक्षितानामयुक्तमेव । अस्तुवैवम् । विधेः सर्वत्रार्थान्तरविध्यर्थलभ्यान्यव्यावृत्तिः, नतु सा प्राप्तपरिसङ्ख्येति व्यवह्रियते; श्रुतविधीनामेव अपूर्वनियमपरिसङ्ख्याव्यपदेशात् । नहि परम्परया वर्जनबुद्धिफलको परिसङ्ख्याविधिः; नियमविधेरपि तथात्वापत्तेः । ततश्चावघातादिविधौ परम्परयोपायान्तरपरिसङ्ख्याफलत्वे साक्षान्नियममात्रं फलमिति नियमविधित्वेनैव व्यपदेशः । एवं षान्तडान्तसङ्ख्याविध्यादिष्वपि साक्षादप्राप्तपारिभाषिकसङ्ख्यादिप्रापकत्वमेवेत्यपूर्वविधित्वेनैव व्यपदेशो युक्तः । नच एतद्विध्यन्यथानुपपत्त्या विध्यन्तरं कल्प्यते, यस्य प्राप्तपरिसङ्ख्यात्वव्यपदेशः स्यात्, किंतु औपभृदाज्यविनियोजकविधिगतोद्देश्यसमर्पकप्रयाजपदेन विशेषलक्षणैव लभ्यते । अतोऽपि न तेषु युक्तं परिसङ्ख्यात्वम् इति ॥

### ( प्रतीयमाने फलत्रये यत्परत्वेन वाक्यसार्थक्यं तद्विधित्वव्यपदेशोपपादनादिना सामान्यविधिरित्यस्योपसंहारपरिसङ्ख्ययोर्वैलक्षण्यमात्रप्रदर्शकत्वोपपादनेनच प्रकाशकारमताद्वैलक्षण्यनिरूपणम् )

**अत्रेदमवधेयम्**—अनेन स्पष्टरूपविषयभेदप्रदर्शनेन परिसङ्ख्यालक्षणे स्पष्टविधितत्प्राप्त्यपेक्षत्वं विवक्षितमिति गम्यते । उपसंहारेच तदभावान्नातिव्याप्तिरिति भवतो मतम् । तत्र भवन्मते अतिदेशविधेः स्पष्टत्वमस्पष्टत्वं वेति वक्तव्यम् । **आद्ये**—पत्नीसंयाजान्ता प्रायणीयेत्यादावप्युपसंहारानापत्तिः, गृहमेधीयगतसप्तमपक्षोपसंहारानापत्तिश्च । **द्वितीये** पञ्चमपक्षोपपादितप्राप्तपरिसङ्ख्यायामव्याप्तिः ॥ **किंच** विधिगतं स्पष्टत्वमस्पष्टत्वमपि दुर्वचम्, कुतोवाऽऽग्नेयविधिः स्पष्टः अस्पष्टश्च "पुरोडाशं चतुर्धा करोती"त्ययमिति न प्रतीमः । यदप्यस्तुवैवंविधेत्यादिनान्यनिवृत्तेरर्थलभ्यत्वेऽपि श्रुतविधेरप्राप्यप्रापकत्वेनापूर्वविधित्वेनैव व्यपदेशान्न परिसङ्ख्याविधित्वमिति, तदप्यसत्; तथात्वे अर्थप्राप्तेः पूर्वप्रवृत्त्या प्रवृत्तेऽश्वाभिधान्यादानविधावप्यप्राप्तप्रापकतयाऽपूर्वविधित्वस्यैवापत्तौ "परिसङ्ख्यावे"ति सूत्रोक्तपरिसङ्ख्यात्वव्यपदेशानापत्तेः । अतोऽत्रैवं परिहर्तव्यम् । यत्र द्वित्रिफलकत्वेन प्रतीयमानेषु येन स्ववैयर्थ्यं परिह्रियते, तेषु तत्फलकविधित्वेन व्यपदेशः । तादृग्व्यपदेशमादायेमानि लक्षणानि । तत्फलं सन्निकृष्टं विप्रकृष्टं वास्तु । अतएव फलत इत्यस्य वैयर्थ्यप्रतिसन्धानसापेक्षत्वमर्थ इत्युक्तं प्राक् । अतएव तत्तत्फलसं-

एव यस्य शब्दतः फलतो वा पाक्षिकायोगव्यावृत्तिरूपो नियमः शास्त्रस्य विषयः स नियमविधिः । यथा सत्यमेव वदेत् व्रीहीनवहन्तीत्यादौ; अत्र नियमस्यैवायोगव्यावृत्त्यर्थकेन एवकारेण विधेयत्वात्, आक्षेपतः पूर्वप्रवृत्तस्यावघातविधेर्नियमफलकत्वाच्च । नियमे पाक्षिकायोगश्च तन्मात्रविध्यप्रवृत्तिनिमित्तको विध्यन्तराप्रवृत्तिसहितैतद्विध्यप्रवृत्तिनिमित्तकश्चेत्यादिप्रकारेण बोध्यः । व्रीहीनवहन्ति उत्तरेऽहन्द्विरात्रस्य गृह्यत इत्यादावाद्यः; एतद्विध्यभावे आक्षेपेणातिदेशेन चावघातस्य षोडशिग्रहणस्य च पक्षप्राप्तत्वात् । व्रीहिभिर्यजेतेत्यादौ द्वितीयः; यवविध्यभावसहितैतद्विध्य-

बन्धबोधकविधिषु विश्वजित्सिद्धान्तन्यायप्राप्तस्वर्गनिवृत्तेः प्रतीतावपि तत्तदप्राप्तफलसंबन्धबोधकत्वेनापि वैयर्थ्यपरिहारात्तत्फलकापूर्वविधित्वेनैव व्यपदेशः । एवं वैकृतवाक्येष्वतिहाये ड इत्यादिष्वपि अपूर्वविधित्वेनैव सः । यत्र ह्यादाने वाक्यस्यार्थप्राप्तत्वेन नाप्राप्तप्रापकतामादाय सार्थक्यसंभवः, तत्र विप्रकृष्टाया अप्यन्यनिवृत्तेः फलत्वेनैव तद्वैयर्थ्यपरिहारात् तत्फलकपरिसङ्ख्यात्वेनैव व्यपदेशः । अत एव नियमविधावपि अयोगव्यावृत्तिमादायैव तद्वैयर्थ्यपरिहारात् तेनैव व्यपदेशो नतूपायान्तरनिवृत्त्या परिसङ्ख्यात्वेन ॥ एवमुपसंहारेऽपि क्वचित्परिसङ्ख्यात्वं क्वचिदपूर्वविधित्वमिति नैकरूप्यमेव । अनारभ्यविहितसाप्तदश्यस्य क्लृप्तोपकारपाञ्चदश्येन बाधितस्य मित्रविन्दादिप्रकरणगतवाक्यैः प्रतिप्रसवविधया तत्तत्क्रतुसंबन्धबोधनेन परिहृतवैयर्थ्यैः फलतो विकृत्यन्तरनिवृत्तिबोधनेऽपि न परिसङ्ख्यात्वेन सः । यदा तु तार्तीयाधिकरणगतपूज्यपाददर्शितरीत्या शरैः कुशानामिवौपदेशिकत्वेन निरवकाशतया साप्तदश्येन पाञ्चदश्यबाध एव प्राप्नोतीति न प्रतिप्रसवविधित्वमित्यालोच्यते, तदापि मित्रविन्दादिप्रकरणगतवाक्यानां उद्देश्यविशेषसमर्पकतया स्वर्गकामवाक्यवदपूर्वविधित्वमेव परिसङ्ख्याफलकम्—**इति—ध्येयम्** । यत्रत्वाग्नेयं चतुर्धा करोतीत्युपसंहारे सामान्यविधित एवाग्नेयेऽपि चतुर्धाकरणप्राप्तेः नान्यनिवृत्तिमन्तरेण वैयर्थ्यं सुपरिहरम् । तत्राप्यन्यनिवृत्तेरेव फलत्वेन तत्परिहारात् परिसङ्ख्यात्वं श्रुतिपादाद्याधिकरणे कौस्तुभोक्तमिष्टमेव । अतएव उपसंहारवाक्ये उपसंहारत्वं नाम सामान्यविधेः श्रुतस्याध्याहृतस्य वैकवाक्यतया स्वविषयार्थापादकत्वम्, सामान्यविधेरस्पष्टत्वं नाम अनिर्धारितविशेषतया विशेषान्वययोग्यत्वं, तदभावश्च स्पष्टत्वम् । अत एव "सामान्यविधिरस्पष्ट" इति वार्तिकोत्तरार्धेन परिसङ्ख्याविषयः प्रदर्श्यते । तथात्वे लिङ्गकल्प्यश्रुतेरुभयसाधारणतया "पुरोडाशं चतुर्धा करोती"त्यस्यैव अस्पष्टत्वात् परिसङ्ख्यात्वानापत्तेः । अतः केवलं पूर्वार्धप्रतिपादितोपसंहारव्यतिरेकप्रदर्शनमात्रं । तस्य च "न हिंस्यात् सर्वा भूतानि" "सर्वतीर्थेष्वयं विधि"रिति विषयः ॥ अत्र चानयोः "न ब्राह्मणो हन्तव्यः" "प्रयागे हननं कुर्या"दिति वचनाभ्यां नोपसंहारः; सर्वपदोपादानेन स्पष्टत्वात् । अतएव गृहमेधीयसप्तमपक्षोपसंहारे नैव परिसङ्ख्याफलकत्वम् । येन परिसङ्ख्यापक्षादभेदेनाष्टत्वानुपपत्तिः शङ्क्येत? अपितु अभ्युदयशिरस्कत्वफलकत्वेनैव विशेष इति पूज्यपादैरभिधीयते । अतएव "अभावादतिरात्रेषु गृह्यते"इत्यधिकरणगतषोडश्युत्तर इत्युपसंहारः परिसङ्ख्यावेति भाष्योक्तिरेतादृशफलभेदकल्पनयैव नेया ॥ एतादृशोपसंहारपरत्वं अश्वाभिधान्यादानादिवाक्येषु कदाचित् प्रसक्तमपि गृहमेधीयाष्टमपक्षोपपादनप्रकारेणैव निरसनीयम् । एवंच शब्दतो वैयर्थ्यप्रतिसंधानेन वा शास्त्रतात्पर्यविषयीभूता निवृत्तिः फलं यत्र तत्र परिसङ्ख्याविधित्वमिति लक्षणे सिद्धे यत्रेदं लक्षणमनुप्रविशति तत्र परिसङ्ख्याविधित्वाङ्गीकारे नैव किंचिद्बाधकमित्यलं गुरुकृपामाहात्म्यविस्तारप्रदर्शनेनेति दिक् ॥ "नानृतं वदे"दित्यत्र न तु नियमविधिरित्युक्तम्, अतः तद्व्यावृत्तनियमविधिलक्षणमाह—**अतएवेति** ॥ अनृतवदनस्य पाक्षिकतायोगेऽपि तस्यैव वर्जनेन तदयोगव्यावृत्तिफलकत्वाभावान्न नियमविधिरित्यर्थः ॥

### ( परिसङ्ख्यात्वनिरसनेन एवकारघटितवाक्येषु नियमविधित्वनिरूपणम् )

**यथा सत्यमेवेति** ॥ यद्यप्यत्र अन्ययोगव्यावृत्त्यर्थमादाय परिसङ्ख्यात्वमेव शक्यते वक्तुम्, नह्यत्र रागतः प्राप्तौ विकल्पप्रसक्तिरस्ति, नवा परिसङ्ख्यालक्षणे भवन्मते तत्रचान्यत्र च प्राप्तिः समुच्चयेन विवक्षिता, येन पाक्षिकप्राप्तिसत्त्वेन तदसंभव उच्येत; तस्या औत्सर्गिकत्वेन स्वयमेवाभिहितत्वात्, अतः परिसङ्ख्यात्वेऽपि न बाधकम्; तथापि अयोगव्यावृत्त्यर्थतामादाय विधेयगामिफलत्वे संभवति नान्ययोगव्यावृत्त्यर्थतामादाय तदङ्गीकारो युक्त इत्यभिप्रेत्य लक्षणसमन्वयं दर्शयति—**अत्रेति** ॥ परिसङ्ख्याविधित्वं नाश्रयणीयमिति नियमस्यैवेत्येवकारेण सूचितम् । **नियमफलकत्वाच्चेति** ॥ **एतेन**—लघुभूते विधेयगतफलत्वे संभवति व्रीहिपदेऽपूर्वसाधनत्वलक्षणायां व्रीहित्वस्यापि गुरुभूतस्य प्रवेशेन यवपरिसङ्ख्यापरत्वेन सार्थक्यं तथाध्वर्युकर्तृकत्वनियमप्राप्त्या वा सार्थक्यं विधिरसायनोक्तं—**परास्तम्**; अवरक्षो दिवः वध्यासमग्नये वो जुष्टं प्रोक्षामि इति मन्त्रयोरुत्तमपुरुषेण प्रतीयमानमन्त्रोच्चारयितृकर्तृकत्वप्रतीत्यैव तयोस्तन्नियमस्य प्राप्तत्वाच्च । **अतएव**—नैवंविधं अध्वर्युकर्तृकत्वप्राप्तौ मन्त्रलिङ्गम् । यथा प्रथने । तत्र मन्त्रस्य आध्वर्यवत्वेऽपि प्रथने तन्नियमप्रापकतया विधिरिष्ट एवेति भावः ॥

### ( पाक्षिकत्वाननुगमेन नियमविध्यननुगमाक्षेपः )

**ननु** पाक्षिकत्वभेदेन तदयोगस्यापि भेदाल्लक्षणाननुगमः;

भावे व्रीहीणामाक्षेपेण पक्षप्राप्तत्वात्। एवंविधभेदसत्त्वेऽपि चायोगव्यावृत्तिमात्रस्यैव लक्षणे प्रवेशान्न कोऽपि दोषः।

कार्योपायद्वयपाक्षिकत्वपरत्वे एकैकनियमेऽव्याप्तेः, कार्यस्यैवोपायस्यैववा पाक्षिकत्वपरत्वेऽन्यतरनियमाव्याप्तेः, कार्योपायद्वयमनुगमय्य विध्युपात्तस्य पाक्षिकत्वपरत्वे विध्यनुपात्तनियमाव्याप्तेः, उपात्तमनुपात्तंचानुगमय्य नियम्यस्य पाक्षिकत्वोक्तौ नियम्यप्रतिद्वन्द्विनामेव पाक्षिकत्ववति नियमविधावव्याप्तेः, नियम्यस्यान्यस्यवा यस्य कस्यचित् पाक्षिकत्वपरत्वोक्तौ पाक्षिकत्वमात्ररहितेषु नियमविधिष्वव्याप्तेः। एवंच हेतुः कुत्रापि कार्यमिति श्लोके विधिरसायनदर्शिततदुदाहरणाव्याप्तिभ्यः कथं मुक्तिरित्यत आह—**एवंविधभेदसत्वेऽपीति**॥ एतन्निष्कर्षश्च कौस्तुभे द्रष्टव्यः॥

## (दृष्टार्थत्वं नियमविधिलक्षणमिति विधिरसायनखण्डनम्)

एवमाचार्यकृते नियमविधिलक्षणे स्वयं विधिरसायनकृता नानाविधाव्याप्त्यतिव्याप्तीः प्रदर्श्य तल्लक्षणायुक्ततां मत्वा दृष्टार्थत्वं नियमविधिलक्षणं सिद्धान्तितम्। तद्यपि दृष्टफलबोधकेषु कारीर्यादिविधिषु अतिव्याप्तम्; तथाप्यदृष्टाद्वारकत्वे सतीति विशेषणान्नातिव्याप्तमित्युपपादितम्, तदनूद्य दूषयति—**यत्त्विति**। स्पष्टोऽर्थः। इत्यादावित्यादिपदेन वैकृते "बृहत्पृष्ठं भवती"ति नियमविधावप्यव्याप्तिःसूचिता॥ **किंच** विधिविषयस्य दृष्टार्थत्वविवक्षायां मन्त्रपरिसङ्ख्याविधावतिव्याप्तिः। विधितात्पर्यविषयीभूतफलस्य तद्विवक्षायां असंभवो नियमस्यादृष्टार्थत्वादित्यपि दूषणं ऊह्यम्॥

## (अयोगव्यावृत्तिफलत्वलक्षणस्य प्रतीकविधौ समन्वयीकरणम्)

यद्यपीदं "यदि सोमं न विन्दे"दिति प्रतीकनियमविधावव्याप्तम्; सुसदृशन्यायेन अत्यन्तविसदृशानां प्रतीकानां सर्वदैवायोगसत्वेन पाक्षिकायोगाप्रसक्तेः; तथापि सोमाभावे कर्मचोदनयाऽनियतयत्किंचिद्द्रव्याक्षेपे प्राप्ते यावन्न्यायेन सुसदृशं नियन्तुमुपक्रम्यते ततः पूर्वमेव प्रतीकविधेः प्रवृत्त्यङ्गीकारेण तस्यां दशायां प्रतीकसाधारण्येन पक्षप्राप्तेरुपपत्तेर्न दोषः॥

## (पत्नीसंयाजान्तान्यहानि संतिष्ठन्त इत्यत्रापि शङ्कानिराकरणपूर्वकसमन्वयीकरणम्)

**ननु**—सर्वत्र कथंचित् लक्षणान्वयेऽपि "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते" इति नियमविधौ पत्नीसंयाजान्तत्वस्य पाक्षिकायोगाभावः; अह्नां द्वादशानां सहत्वसिध्यर्थं हारियोजनपर्यन्तस्यैव सुत्याग‌तद्वादशत्वानुरोधादावर्तनीयस्य तत्रैव अवस्थानप्राप्तिः, **अथवा** सुत्याकालीनानामैष्टिकपशुकर्मणां साङ्गानां तत्र तत्राहनि भेदेनानुष्ठानस्य एकादशे वक्ष्यमाणत्वात् कात्स्न्र्येनैष्टिकपाशुकप्रयोगसमाप्त्यनन्तरमेव तत्प्राप्तेः तदुत्तरभाविपत्नीसंयाजादीनां कथमपि पक्षे प्राप्त्यभावः, अतः पत्नीसंयाजान्तोऽग्नीषोमीयः सन्तिष्ठते इतिवदपूर्वविधित्वस्यैव आपत्तिः—**इति चेत्**, परिहृतमेतद्विधिरसायनखण्डने प्रकाशकारैः॥ न हि सुत्याकालीनत्वेन सर्वेषामावृत्तिः तदधिकरणविषयः, किंतु सुत्यान्तर्गतानामेवेति तेन हारियोजनान्तस्यैव पार्थक्यनियमे तदुत्तरेषां सौमिकानां ऐष्टिकानां च आवृत्त्यनियमे किमुत्तरस्य सर्वस्यैव सहत्वसिध्यर्थं तन्त्रत्वमुताावृत्त्यानुष्ठाने प्रसक्ते किं तन्त्रत्वं दशानां पञ्चदशानां विंशतीनां वेत्याद्यनियमप्रसक्तौ पत्नीसंयाजान्तता नियम्यत इति॥

## (हिरण्यगर्भः समवर्ततेति वाक्यस्य विधिरसायनोक्तनियमविधित्वखण्डनेनापूर्वविधित्वव्यवस्थापनम्)

अतएव तत्र "हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयती"त्यादौ हिरण्यगर्भप्रकाशकस्य मन्त्रस्य कथमप्यैन्द्राद्याघारे इन्द्रलिङ्गरहितत्वात्प्राप्त्यसंभवः तत्र सत्यपि क्लृप्तनियमादृष्टजनकत्वेनोत्तराघारे मन्त्रविधावपूर्वविधित्वमेवेति कौस्तुभे द्रष्टव्यम्। एवंच तत्र नियमविधित्वव्यवहारः परं क्लृप्तनियमादृष्टजनकत्वमात्रेण गौण एव। अनयैव रीत्या "उत्करे वाजिनमासादयति" "परिधौ पशुं नियुंजीत" इत्यादिविधिषु उत्करपरिध्यंशे पक्षप्राप्त्यभावेनापूर्वविधित्वमेवेष्टव्यमिति विधिरसायनोक्ताव्याप्तिपरिहारो द्रष्टव्यः। यत्तु विधिरसायनीयपञ्चदशश्लोकखण्डने हिरण्यगर्भमन्त्रस्य लिङ्गादङ्गत्वेन प्राप्त्यभावेऽपि विदलनादिवत् लौकिकध्यानादिसाधारण्येन गौण्यादिना यादृच्छिकीं प्राप्तिमादायाऽस्य नियमविधित्वमुपपादितम्, तत् विदलनादिषु वितुषीभावजनकतासामर्थ्यस्य लोकतोऽवगतिमादाय यादृच्छिकप्राप्तेः कथंचित्संभवेऽपि इह प्रजापतिमन्त्रस्य ऐन्द्रलिङ्गरहितस्य तदीयस्मरणार्थतयाऽक्लृप्तसामर्थ्यस्य बाधनिश्चये सति कथमपि यादृच्छिकप्राप्तेरसंभवात् गौण्याश्रयणोत्तरमेव कल्प्यत्वादयुक्तमित्युपेक्षितं पूज्यपादैः॥

## (अप्राप्तांशपरिपूरणफलत्वरूपनियमविधिलक्षणस्य विधिरसायनखण्डने स्वीकारनिरूपणम्)

यदपि विधिरसायनगताष्टादशश्लोकेऽनिर्धारिताप्राप्तांशस्य पूरणं यत्, तत्फलको विधिः नियमविधिरिति नियमविधिलक्षणमाशङ्कितम्, तदेव तदुक्तातिव्याप्तिपरिहारेण निर्दोषतया विधिरसायनखण्डने अङ्गीकृतम्, तत्राप्राप्तांशपूरणफलकत्वमात्रविवक्षायां सर्वकाम्यवाक्येऽतिव्याप्तिः; तत्रापि स्वर्गवाक्येन स्वर्गप्राप्तौ तदितराप्राप्तफलान्तररूपांशपूरणफलकत्वात्, अतो**ऽनिर्धारितपदोपादानम्**। तत्रच सर्वकाम्यविधौ स्वर्गांशः प्राप्तः तदितरांशस्तु अप्राप्त इति निर्धारणसद्भावान्नानिर्धारितत्वम्। व्रीह्यादिषु अवहननाद्यप्राप्तांशस्य इदन्तया निर्धारणाभावात् नासंभव इति॥

यत्तु दृष्टार्थत्वं नियमविधिलक्षणं कैश्चिदुक्तम्, तदुत्तरेऽह-न्द्विरात्रस्य गृह्णत इत्यादावव्याप्तत्त्वादुपेक्षितम्; षोडशि-ग्रहयागाभ्यासस्यादृष्टार्थत्वात् । अतएव नियमपरिसङ्ख्याऽ-तिरिक्तफलकविधित्वमपूर्वविधित्वमिति तल्लक्षणमपि सुस्थम् ।

## ( नियमविधौ विधिरसायनतत्खण्डनयोरुभयो-रप्ययुक्तत्ववर्णनम् )

**तदयुक्तम्** ॥ उपहव्येऽश्वः श्यावो दक्षिणेति दक्षिणां विधाय श्रुते स ब्रह्मणे देयः इति विधौ औदुम्बरश्चमसो दक्षिणे-ति दक्षिणां विधाय ऋतपेये श्राविते 'स प्रियाय सगोत्राय ब्रह्म-णे देय' इति विधौ आयुष्कामेष्टिप्रकरणश्रुते सर्वं ब्रह्मणे परि-हरतीति विधौ च परिसङ्ख्यारूपेऽतिव्याप्तेः । सर्वत्विक्साधार-णेष्वश्वचमससोमहविःशेषेषु अयं ब्रह्मणे अयमन्येषामिति नि-र्धारणासंभवात् अनिर्धारिताप्राप्तांशपूरणफलकत्वादिति । यदपि विधिरसायने एतेषामपूर्वविधित्वमुक्तं, यच्च तत्खण्डने नियम-विधित्वमेवेत्युक्तम्, तदुभयमप्यसत्; आचार्योक्तयथाश्रुत-लक्षणानुसारेण ब्रह्मसंबन्धस्य तदितरर्त्विक्संबन्धस्य विधेयता-वच्छिन्ने प्राकृतदीक्षणीयस्थानापन्ने नित्यप्राप्तत्वेन परिसङ्ख्या-त्वस्यैवापत्तौ तल्लक्षणासंभवात्, सर्वे द्रव्यविधयो नियमविधय इति प्रवादमात्रेणैतेषां नियमविधित्वाङ्गीकारे गुणकामवि-धीनामपि नियमविधित्वापत्तेः । स्वकृतलक्षणप्रवेशमात्रेण त-त्तद्विधित्वाभ्युपगमे सर्वकाम्यविधावपि तत्स्वीकारे बाधका-भावादनिर्धारितपदप्रवेशवैयर्थ्यापत्तेश्च । अतो नेदं लक्षणं युक्तं इत्यभिप्रेत्यैवायोगव्यावृत्तिघटितं नियमविधिलक्षणमुक्तं पूज्यपादैः । "स ब्रह्मणे देय" इत्यत्र परिसङ्ख्यात्वंच दर्श-यिष्यते ॥

## ( अपूर्वविधिलक्षणनिरूपणम् )

एवं परिसङ्ख्यानियमविधिलक्षणं प्रदर्श्य तद्भेदघटितं अ-पूर्वविधिलक्षणमाह—**अतएवेति** ॥ नियमातिरिक्तत्वविशे-षणात् न पूतीकवाक्येऽतिव्याप्तिः न वा परिसङ्ख्यातिरिक्त-त्वविशेषणाद्गृहमेधीयगताज्यभागविधावतिव्याप्तिः । लक्षण-समन्वयोऽग्निहोत्रादिवाक्ये स्फुट एव ॥

## ( आज्यभागविधेरश्वरशनाग्राह्मणस्य न परिस-ङ्ख्यात्वमिति खंडनमतनिरूपणम् )

**यत्तु**—अत्र खण्डनकारैः आज्यभागविधेः सिद्धान्ते न परिसङ्ख्यात्वम्; कस्मिन्नपि मीमांसाग्रन्थेऽस्य परिसङ्ख्यात्वेन व्यवहारादर्शनात्, वेदान्तग्रन्थेष्वपि तददर्शनाच्च, किंतु अपूर्वता चोदकलोप इति व्यवहारदर्शनात् अपूर्वविधित्वमेव । इमामगृभ्णन्नित्यत्र तु अन्यप्राप्त्यभावेन योऽर्थस्तद्विषयत्वसा-म्यात्परिसङ्ख्यात्वभ्रमो दीक्षितानाम् । अतएव च "तत्र चान्यत्रचे"ति सप्तम्याः प्राप्त इति सप्तम्या सामानाधिकर-ण्यपक्षे, यथा गृहमेधीयाज्यभागविधौ वार्तिककृता पञ्चम एव पक्षे परिसङ्ख्यात्वमुक्तम्, नाष्टमपक्ष इति । भाष्यकारे-णापि दशमे सप्तमपादे आज्यभागवद्वेति सूत्रे आज्यभागव-द्वेति दृष्टान्तं व्याकुर्वता यथा गृहमेधीये पञ्चमे पक्षे इत्युक्तम् । न यथाऽष्टमे पक्षे इति । **किंच** गृहमेधीयाज्यभागश्रवणस्य सिद्धान्ते परिसङ्ख्यात्वे गृहमेधीयाधिकरणादेकान्तरितोत्तरा-धिकरणे "स्विष्टकृतिप्रतिषेधः स्या"दित्यत्र गृहमेधीय एव प्रा-कृताङ्गपुनःश्रवणं कृत्वाचिन्त्यत इति भाष्यादौ कृत्वाचिन्ता-त्वोक्तिरयुक्ता स्यात् । सिद्धान्त एव चिन्तोपपत्तेः । **नच**—परिसङ्ख्यालक्षणसत्त्वे कुतो न परिसङ्ख्यात्वम्? इति—**वा-च्यम्**; तत्रान्यत्रच प्राप्तेरभावात् । **अयंच तत्र प्राचां ग्रन्थः**—आज्यभागयोर्हि प्रकृतौ श्रुतयागरूपव्यतिरेकेण प्र-करणाम्नानकल्प्यं स्वापूर्वद्वारेण यागगतव्यापाररूपमस्ति, तद्रू-पलक्षणार्थं चेदमाज्यभागपुनराम्नानम् । अन्यथा आनर्थक्या-दिति । अनेन चानर्थक्यबलात् प्राकृत एव करणोपकारः । तत्रानेकाङ्गजन्योऽपि इह शक्यसंबन्धात् आज्यभागमात्रवि-शिष्टतया जहत्स्वार्थलक्षणया लक्षितमुपदिश्यते इति तेनैव गृहमेधीयः करणोपकारापेक्षो जात इत्यपूर्वतेति सिद्धान्त उ-पपादितः । अतः प्राकृतस्यैवोपकारस्य आज्यभागविशिष्टस्य विधानात् तत्र चान्यत्रचेति विधेयबाध्ययोः भेदगर्भे परिस-ङ्ख्यालक्षणं नास्तीत्यपूर्वविधित्वमेवेत्युक्तम् ॥

## ( आज्यभागादिविधेः परिसङ्ख्यात्वसमर्थनपूर्वक-तत्खण्डनखण्डनम् )

**अत्रेदमवधेयम्**—आनर्थक्यबलात् खलु भवतां लक्ष-णाश्रयणं, तच्चातिदेशतः प्राप्तेः पूर्वं प्रवृत्त्या आज्यभागवि-धानेन फलतोऽङ्गान्तरनिवृत्तिरूपफलपरतया सार्थक्योपपत्तौ कथमिवेति न विद्मः । यापिचानर्थक्याल्लक्षणोक्तिः प्राचां सापि न विध्यानर्थक्यमूला, किंतु आज्यभागक्रियामात्रविधानान-र्थक्यमूलिकेत्येव तद्ग्रन्थेषु प्रतीयते । **तथाहि**—भाष्ये ता-वन्नैवेयं लक्षणोपपादिता, तन्त्ररत्ने तु उपमितया प्रकृत्या लक्षणाद्वारा विध्यन्तरप्राप्ताज्यभागाभ्यां गृहमेधीय एकवा-क्यतां गतः । तस्मादानुमानिकेन प्रकृतिशब्देन न संबध्यते गृहमेधीयस्तेन अपूर्व इत्यपूर्वतामुपपाद्य नन्वेवं प्रत्यक्षैरुपहो-मादिभिर्नैराकाङ्क्ष्यात् नक्षत्रेष्ट्यादीनामपूर्वत्वं स्यादित्याशङ्को-त्तरत्वेन भाष्यं विवरीतुं ग्रन्थः ॥ **इदमाकूतं**—कथमिति प्रकाराख्यो यागगतव्यापारविशेषोऽपेक्षितः, तेन यः प्रकार-विशेषसमर्पकः शब्दः स एव तदाकाङ्क्षापूरणेनैकवाक्यता-मुपगन्तुमलम् नान्यत् । नच क्रियान्तरं स्वरूपेणैव क्रियान्त-र्गतव्यापारो भवति, प्रकारसंपादनंतु तद्गतव्यापारः स्यात्, न हि क्रिययोः स्वरूपेण संभवति संबन्धः, किंतु द्वारविशेष-माश्रित्य । नच उपहोमादिषु क्लृप्तं द्वारमस्ति । येन यागगत-व्यापारतामश्नुवीरन् । प्रकृतिवच्छब्दस्तु प्राकृतसाङ्गावान्तर-कार्यसंपादनाख्यं प्रकारं प्रतिपादयन् एकवाक्यतां मुखेन

याति। पश्चात्तु सन्निहितान्नानानर्थक्यात् द्वारकल्पनया तैरपि एकवाक्यता भवति। यत्तु—आज्यभागादिकं प्राकृतमङ्गं, तत्प्रकृतावेव लब्ध्वा अवान्तरोपकारं तत एव लब्धप्रधानसंबन्धं विकृतौ श्रूयमाणं लक्षणया स्वीयावान्तरकार्यसंपादनाख्यं प्राकृतप्रकारमुपस्थापयति। तल्लक्षणार्थं चेदमाज्यभागौ यजतीति वचनम्; स्वरूपपरत्वे आनर्थक्यापत्तेः। तल्लक्षणया तु शक्नोति प्रधानकथंभावपूरणेन तदेकवाक्यतां गन्तुम्। तेन च पूर्णे कथंभावे नैराकाङ्क्ष्याधीनात्मलाभश्चोदको लुप्यते इत्यपूर्वत्वमिति। अनेन चोपहोमवैलक्षण्यं दर्शयता कथंभावाकाङ्क्षापूरणसमर्थशब्देन प्रधानैकवाक्यतासंभवोपपादनार्थं आज्यभागपदेन केवलं न क्रियास्वरूपविधानं, अपितु लक्षणया स्वजन्यप्रकारसंपादनाख्यव्यापारविशेषस्य प्रकृतावगतस्य विधानम्। उपहोमे तु तादृशप्रकारसंपादनस्य पूर्वमनवगतस्य नैव लक्षणा संभवतीति न लक्षणयाप्युपहोमविधिरेकवाक्यतामुपगन्तुमलमित्युक्तं संभवतीति कुत्रेतराङ्गजन्यकरणोपकारलक्षणा, पूर्वलिखितशास्त्रदीपिकाग्रन्थेऽपि आज्यभागगतमेव यत्स्वापूर्वद्वारेण यागगतव्यापाररूपमस्ति, तत्रैव लक्षणेति प्रतीयत इति मद्वतापीतीयं ग्रन्थव्याख्यानभ्रान्तिर्भवतीति न खेदयेच्चेत आज्यभागजन्यप्रकारविधाने। यत्तु विधिवैयर्थ्यं, तत्तु अपूर्वताप्रतिपादकपूर्वतनग्रन्थेन परिसङ्ख्याङ्गीकारेण प्रागेव तन्त्ररत्ने परिहृतम्॥

**किंच** एतादृशपरार्थलक्षणायां पञ्चमपक्ष इव स्वार्थहानिपरार्थकल्पने कथं नापद्येताम्? **अपिच** इतराङ्गजन्योपकारार्थत्वे आज्यभागयोरप्राकृतकार्यार्थत्वापत्तेः तदङ्गीकारेण अपूर्वविधित्वापेक्षया स्वोपकारविशिष्टानामेव विधिमङ्गीकृत्य फलतः परिसङ्ख्यात्वमेव युक्तमाश्रयितुम्। **अपिच** इतराङ्गजन्योपकारार्थत्वेनाज्यभागविधानेऽपि आकाङ्क्षाधीनात्मलाभचोदकलोपः आकाङ्क्षोच्छेदादेव वाच्यः; अन्यथा समुच्चयेनेतराङ्गानां अनुष्ठानापत्तेः अनिवार्यत्वात्। तादृशस्याकाङ्क्षोच्छेदस्य स्वोपकारविशिष्टाज्यभागमात्रविधिनैव सिद्धेर्निरर्थकमेव तावत्पर्यन्तलक्षणाश्रयणम्। अत एव ततोऽपि यावदुक्तमित्युत्तराधिकरणे बहुषु प्राकृतेषु श्रुतेषु एकैकस्यैव क्लृप्तोपकारकत्वेन प्रधानाकाङ्क्षापूरणे सामर्थ्यात् विकल्पं मन्यत इति तन्त्ररत्नादिग्रन्थेषु क्लृप्तोपकारत्वमेव आकाङ्क्षापूरणसामर्थ्ये हेतूकृतम्। यत्तु भाष्यवार्तिकग्रन्थविरोधोद्भावनं, तत्र या स्विष्टकृदधिकरणे भाष्यकारस्य पञ्चमपक्षमाश्रित्य कृत्वाचिन्तोक्तिः तदाशयः तन्त्ररत्न एव दर्शितः। गृहमेधीये ह्याज्यभागाभ्यां सजातीययागान्तरोपस्थापनात्तन्निवृत्तिरेवेति विधेयाशेषकार्याणां अनिवृत्तौ सत्यां चिन्त्यते किं स्विष्टकृद्विधानं शेषकार्याणां परिसङ्ख्यार्थं नवेति तन्त्ररत्ने उक्तम्। नह्ययं विचारोऽष्टमे पक्षे उपपद्यते। तदा हि चोदकलोपात्सर्वेषामेव निवृत्तेर्विचारायोगात्॥ अतोऽयं विचारः शेषकार्याणां अनिवृत्त्युपजीव्यः पञ्चमपक्षस्य कृत्वा चिन्तयैव घटते इति सिद्धान्त एव चिन्तोपपत्तेः इत्ययुक्तं वचः। यच्च वार्तिके पञ्चमपक्षोदाहरणप्रदर्शनं, तत् तत्र चान्यत्रचेति सप्तम्योः प्राप्ते इति सप्तम्या सामानाधिकरण्यपक्षे प्राप्तिपूर्वकान्यनिवृत्तिप्रदर्शनायोदाहरणे प्रदर्शनीये स्पष्टत्वादेव। हेतोः स्पष्टत्वं तर्कतः प्रास्यपेक्षया शास्त्रतः प्राप्तौ सुलभमेवेति न साधकम्। यदपि दशमसप्तमपादद्वितीयाधिकरणगताज्यभागवद्वेति दृष्टान्तविवरणपरभाष्यविरोधोद्भावनं, तदपि मन्दम्; तत्राज्यभागवद्वानिर्देशात् परिसङ्ख्या स्यादिति सूत्रे निर्देशात् परिसङ्ख्यात्वमुच्यते, निर्देशश्च एकादश वै पशोरवदानानीत्युक्तो भाष्ये विवृतश्च। तत्र प्राप्तत्वादेवैषामेव विधिर्न संभवति। आनर्थक्यान्नानुवादो निर्गुणं च पुनःश्रवणमितरेषां अश्रुतानां परिसङ्ख्यापकं भवतीति। न ह्यत्र आकाङ्क्षानिवृत्तिमूला निवृत्तिरष्टमपक्षन्यायेन संभवति; एकादशानामवदानविधानेन इतरावयवानामवदानाकाङ्क्षानुपरमात्। अतः आज्यभागवदिति दृष्टान्तोपादानं भाष्यकारेण पञ्चमपक्षपरतया व्याख्यातम्। तस्मिन्नेव पक्षे एकादशव्यतिरिक्तानि नेत्यर्थलाभात् तदुत्तरसूत्रे तस्यां त्रैदोष्यमापाद्य निर्देशस्य अन्यथोपपत्तिरापादिता। अतस्तत्र अगत्या पञ्चमपक्षपरतया विवरणे कृतेऽपि नैतावता आज्यभागवाक्येऽष्टमपक्षे फलतः परिसङ्ख्यात्वं दुष्यतीत्यभिप्रेत्यैव गृहमेधीयाधिकरणे स्पष्टमेव परिसङ्ख्यात्वमष्टमे पक्षे अभिधास्यते पूज्यपादैः। दीक्षितैरप्युक्तम्। **यत्तु**—सिद्धान्तलेशग्रन्थे दीक्षितैः परिसङ्ख्योदाहरणं "आज्यभागौ यजतीति प्रदर्श्य गृहमेधीयाधिकरणपूर्वपक्षरीत्या इदमुदाहरणम् **इत्युक्तम्**; तद्द्वयोः शेषिणोरेकस्य शेषस्य वैकस्मिन् शेषिणि द्वयोः शेषयोर्वा नित्यप्राप्तौ शेष्यन्तरस्य शेषान्तरस्य वा निवृत्तिफलकस्तृतीय इति पूर्वोक्तपरिसङ्ख्यालक्षणे नित्यप्राप्तिविवक्षया प्राप्तपरिसङ्ख्याप्रदर्शनार्थं, नत्वेतावता प्राप्तपरिसङ्ख्यात्वाङ्गीकारेण विरुद्धमिति नापूर्वविधिलक्षणं तत्र। **यत्तु**—मीमांसावेदान्तग्रन्थेषु परिसङ्ख्यात्वेन व्यवहारो न दृष्ट इति, तत्रोत्तरं क्व वा कर्मसिद्धान्तवाक्ये भवदुपपादितोपसंहारव्यवहारो दृष्टः? तथा ब्रह्मसंबन्धवाक्ये भवदुपपादितनियमविधिव्यवहारो वेति वक्तव्यम्। व्यवहारस्य येन केनचिद्रूपेण सामान्यतः करणेऽपि न्यायतः प्राप्तं तत्तद्विधित्वं आपतन्नैवापह्नोतुं शक्यमिति चेदिहापि अपूर्वतादिशब्देनैव व्यवहारसिद्धावपि परिसङ्ख्यात्वं नापह्नोतुं शक्यमिति तुल्यम्। नह्यत्र अपूर्वताशब्देन अपूर्वविधित्वं विवक्षितम्, किंतु प्रकृतिपूर्वत्वाभाव इति न किंचिदेतत्। प्रस्तुतमनुसरामः॥

## (अदृष्टार्थत्वं अपूर्वविधित्वमिति मतखण्डनम्)

**यत्तु**—दृष्टार्थो विधिः नियमविधिरिति दीक्षितैः कृतं नियमविधिलक्षणमित्यर्थाददृष्टार्थविधिरपूर्वविधिरिति लक्षणं अपूर्वविधेरभिप्रेतमिति वर्णयन्ति—**इति। तन्न**; उत्तरेऽहन् द्विरात्रस्य गृह्यते इत्यत्रातिव्याप्तेः॥ **किंच** अदृष्टार्थत्वं किमदृष्टरूपमुद्देश्यं फलमादाय, उतादृष्टद्वारमादाय। **नाद्यः**;

एतेषांचोपाधीनां क्वचिदुदाहरणे साङ्कर्येऽपि न दोष इति

दृष्टफलार्थे कारीर्यादिविधौ अव्याप्तेः । **नान्त्यः**; स्तुत्यर्थत्वप्रापके साम्ना स्तुवीतेतिविधावव्याप्तेः । तत्र ऋगक्षराभिव्यक्तिरूपद्वारस्य अदृष्टत्वाभावादतो नेदं लक्षणं युक्तम् ॥

### ( खंडनकारीयापूर्वविधिलक्षणम् तद्घटकदलप्रयोजनानि च )

**यत्तु**—खण्डनकाराणां प्रकृतविधेः यद्यदुद्देश्यतावच्छेदकं अपूर्वीयत्वान्यत् तेन रूपेणोद्देश्ये यत्प्रकृतविध्यभावेऽतिदेशान्यप्रकृतविधिसमानशाखीयविधितोऽसंभवत्प्राप्तिकं विधेयं भावरूपं तद्विषयो विधिरपूर्वविधिरित्यपूर्वविधिलक्षणं, तत्रापूर्वीयत्वेन रूपेण व्रीहिष्वत्यन्ताप्राप्तमवघातं प्रापयत्यवघातविधावतिव्याप्तिवारणायापूर्वीयत्वान्यदिति विशेषणम् । तदन्यदुद्देश्यतावच्छेदकं अवघातादिविधौ व्रीहित्वं, तेन रूपेण च तादृशपुरोडाशविधितोऽवघातस्य संभवत्प्राप्तिकत्वान्नातिव्याप्तिः । तादृशोद्देश्यतावच्छेदकरूपेणेति विवक्षणात् गवामयनाद्यहर्गतैयोर्वायवाग्रताविध्योः दार्शिकस्वर्गकामविधौ च नाव्याप्तिः; तत्र त्र्यनीकाविधितः प्रथमभागत्वेन रूपेण ऐन्द्रवायवाग्रतायाः प्राप्तिसत्वेऽपि स्वोद्देश्यतावच्छेदकाहस्त्वरूपेण प्राप्त्यभावात् सार्वकाम्यविधिकाम्यमानत्वेन रूपेणोद्देश्ये स्वर्गे प्राप्तिसंभवेऽपि स्वर्गत्वेन रूपेण तदभावान्नाव्याप्तिः । **अतिदेशभिन्नेति** विवक्षणात् वैकृतेषु प्रतिग्राह्यविधिषु द्वादशाहत्र्यनीकान्तर्गताग्रताविध्योश्च अतिदेशतः प्राप्तिसंभवेन नाव्याप्तिः ॥ **समानशाखीयेति** विशेषणात् शाखान्तरविधितः संभवत्प्राप्तिकशाखान्तरगताग्निहोत्रादिविधिषु नाव्याप्तिः । यत्र यदुपकारजनकतया यद्विधिस्थितं तत्र तदुपकारजनकतया तस्य यादृच्छिक्या अप्यनुष्ठानयोग्यतापत्त्यपरपर्यायाः प्राप्तेरभावस्य विवक्षितत्वान्न हिरण्यगर्भमन्त्रपूतीकनियमविध्योरतिव्याप्तिः । भावपदोपादानादप्राप्तनिवृत्तिप्रापके परिसंख्याविधौ नातिव्याप्तिः । एवमेव विधिरसायनापादिताव्याप्त्यतिव्याप्तिपरिहारेण सुधीभिरिदं लक्षणं सर्वत्र योजनीयं **इति** ॥

### ( खण्डनकारसंमतापूर्वविधिलक्षणनिरसनम् )

**तदयुक्तम्**; विधितोऽसंभवत्प्राप्तिकयोः गौण्या यादृच्छिकप्राप्तिमादाय भवदुपपादितयोर्हिरण्यगर्भपूतीकनियमविध्योः तथाभूतविधितोऽसंभवत्प्राप्तिकत्वेनातिव्याप्तेः । यदितु यादृच्छिकप्राप्त्यभावोऽपि लक्षणे पृथग्विवक्षितः, तदा स्वर्गकामविधावव्याप्तिः । योगसिद्धिन्यायेन स्वर्गकामविधिमनपेक्ष्यैव सार्वकाम्यविधिबलादवश्यं स्वर्गत्वेन रूपेण स्वर्गमुद्दिश्य पुरुषः प्रवर्तते । ततश्च भवदुक्तप्रकारायास्तादृशानुष्ठान-

(१) अत्रत्याश्च विषयाः सर्वेऽपि विधिरसायनद्वितीयश्लोकव्याख्यादर्शनेन स्फुटमेव भवेयुरिति नास्माभिरत्रोपपाद्यन्ते ॥ वि. पु. १०.

न विधिरसायनोक्तलक्षणदूषणावकाशः । विस्तरेण चैतदस-

योग्यतापत्तेः प्रकृतविधिमन्तरेण पूतीकवत्संभवात् । **किंच** पृष्ठद्वयवादिमते वैकृते रथन्तरं पृष्ठं भवतीत्यादिनियमविधावतिदेशतः प्राप्तिसंभवेऽपि तदन्यसमानशाखीयविधितोऽसंभवत्प्राप्तिकत्वादतिव्याप्तिः । **वस्तुतस्तु**—अष्टाकपालादिविधिः प्रकृतिद्रव्यवैतुष्यं विनाऽनुपपद्यमानो लौकिकव्रीहिपरिजिहीर्षया उद्देश्यत्वावच्छेदकगौरवस्य यवेष्वाक्षेपान्तरगौरवस्यच परिजिहीर्षया पुरोडाशप्रकृतिद्रव्यत्वावच्छेदेनैव प्रापयतीति प्रसिद्धोदाहरण एव अतिव्याप्तमिदं लक्षणमित्ययुक्तमिति तैरेव भाट्टालंकारे दूषितमित्युपेक्षितं पूज्यपादैरिति ॥

### ( उदाहरणविशेषेषु यथासंभवं विधिद्वयाङ्गीकारेऽपि न दोष इति निरूपणम् )

एवमुपपादितेषु त्रिविधविधिलक्षणेषु यत्र द्वाभ्यां त्रिभिर्वा विधिफलैरप्यानर्थक्यं सुपरिहरम् । तत्र केन व्यपदेश? इत्यपेक्षायामाह—**एतेषां चेति ॥ क्वचिदुदाहरणे इति** ॥ तानि चोदाहरणानि विधिरसायनगतनवमश्लोकावतरणिकायां उक्तानि तत्रैव द्रष्टव्यानि ॥ यथावा वार्तिकोक्ते "व्रीहीन् प्रोक्षति" "व्रीहीनवहन्ती"त्युदाहरणद्वये । तत्र चाद्ये "अग्नये वो जुष्टं प्रोक्षामी"त्येतन्मन्त्रकल्प्यविधितः पूर्वप्रवृत्तेरप्राप्तप्रोक्षणप्रापकत्वम् । तत्र तर्कितततप्राप्त्यालोचनोत्तरंत्वभ्युदयशिरस्कत्वं प्रायश्चित्तप्राप्तिरध्वर्युकर्तृकत्वनियमफलकत्वं च कल्प्यते । द्वितीये तर्किततन्मन्त्रकल्प्यावघातनियमप्राप्त्यालोचनयाऽभ्युदयकारित्वं प्रायश्चित्तप्रापकताऽध्वर्युकर्तृकत्वनियमपरता वेति । एवं फलत्रयसांकर्येऽप्युदाहर्तव्यम् । एतादृशफलादिसंभवेऽपि यत्र न गौरवादिदोषस्तत्र सर्वत्र शास्त्रस्य तात्पर्यमस्त्येव । अन्यथा तदर्थानुष्ठाने वैगुण्यानापत्तेः । यथाऽऽज्यभागविधौ परिसंख्याङ्गीकारे । यत्र तु गौरवादिदोषः प्रोक्षणादिवाक्ये व्रीहित्वादेः प्रवेशे, तत्र नैव यवपरिसंख्याफलकत्वमित्युक्तम् । अत एव क्वचिदेव नियमविधित्वसंभवे न अपूर्वविधित्वमङ्गीक्रियते यत्र गौरवापत्तिः, यथा हीषादौ व्यवस्थार्थत्वसंभवे गुणफलसंबन्धस्यादृष्टान्तरकल्पनापादकस्य । यत्र तु न तदापत्तिः, यथा पुरोडाशं प्रथयतीत्यादौ, तत्र अध्वर्युकर्तृनियमफलकत्वेऽपि याजुर्वैदिकप्रायश्चित्तफलकत्वेनापूर्वविधित्वमिष्यत एव । एवंच सर्वेष्वेव वाक्येषु विषयभेदेन विषयैक्येन वा क्रमेण यौगपद्येन वा नैकफलतात्पर्यकत्वेनोपधेयसंकरेऽपि अन्तरङ्गतया क्वचित् केनचित् व्यवहारस्यैच्छिकत्वेनोपाधीनां लक्षणानामसांकर्यान्न दोष इत्यर्थः । **ननु** एतादृशसांकर्याङ्गीकारे दैक्षादन्योऽपि दण्डः प्रैषकार्ये प्रसक्तः स्यात् पक्षे स्तोत्रसाम्नां क्रतुनिकरजुषामुत्तरास्वेव गानमिति विधिरसायनगतनवमश्लोकोत्तरार्धानिष्ठापादनं च न संगच्छते इत्यत आह—**विस्तरेणचेति** ॥ तत्र हि क्रीते सोमे इ-

(२) एतत्पदार्थः विधिरसायनपुस्तके द्वादशे पुटे व्यक्तम्.

त्कृते मीमांसाकौस्तुभे द्रष्टव्यम्। तदेवं मन्त्राणामर्थस्मारकत्वेऽपि न विनियोगवैयर्थ्यम्। न चैवमपि प्रामाण्यायोगः; याथार्थ्यलक्षणस्य तस्याविघातात्। सामादिसर्वमन्त्रसाधारण्येन तु पदार्थविधया। यथा हि शाब्दबोधं प्रति कारणीभूतज्ञानविषयत्वाच्छब्दः प्रमाणमिति सर्वदर्शनसम्मतं, तथा पदार्थज्ञानस्यापि कारणत्वात् पदार्थोऽपि

---

त्वस्य दण्डीत्वस्य चोभयोरभावे दीक्षितदण्डस्य यजमानधारण एव विनियोगात् लौकिकस्यैव दण्डस्य दण्डीत्ययं नियमविधिः। दण्डीत्वस्यैवाभावे दीक्षितदण्डस्य मैत्रावरुणाय दत्तस्य प्रयोजनापेक्षायां आलम्बनतया कार्यमात्रे समुच्चित्य प्राप्तौ दण्डीत्ययं प्रैषातिरिक्तकार्यान्तरपरिसंख्याविधिः संपद्यते। अतश्च तत्सांकर्याङ्गीकारे लौकिकदण्डस्याऽपि ग्रहणापत्तिरिति दूषणमुक्तम्। नहि तत्तर्कितफलानेकत्वेऽपि वस्तुतः क्रीतवाक्येन मैत्रावरुणार्थत्वेन विनियुक्तस्यैव प्रयोजनापेक्षायां दण्डीत्यनेन कार्यविधाने सति अन्यस्याप्रसक्तेर्युक्तमिति कौस्तुभे द्रष्टव्यमित्यर्थः। **वस्तुतस्तु**—विध्यन्तराप्रवृत्तिसहितस्यैत्येव लक्षणे निवेशेन अनेकविध्यप्रवृत्तेरनिवेशात् विध्यन्तरत्वस्य पूर्वोक्तरीत्या विवक्षणान्नात्र यत्किंचिद्विध्यप्रवृत्तिमादाय तत्तल्लक्षणसमावेशोऽपीति न सांकर्यप्रसक्तिः **इति —ध्येयम्**॥

## (विनियोगविधिवैयर्थ्यपरिहारोपसंहारः)

तदेवमुपपादितं विनियोगविधिवैयर्थ्यपरिहारमुपसंहरति **—तदेवमिति** ॥ **यत्तु**—प्रथनमन्त्रविनियोगवैयर्थ्यापादनं तद्यज्ञपतिमेव प्रजया पशुभिश्च प्रथयतीत्यर्थवादोपात्तयज्ञपतिप्रथनफलकत्वरूपस्तुत्यालम्बनोपपादनार्थं। मन्त्रे हि पुरोडाशं प्रत्यध्वर्युर्ब्रूते उरु ते यज्ञपतिः प्रथताम् **इति**। यश्चैवं ब्रूते स प्रथयत्येव। अतोऽध्वर्योराशीर्दानकर्तृत्वं यज्ञपतिप्रथनोत्पादनकर्तृत्वेनोपचर्य पुरोडाशप्रथनस्तुतिरिति यज्ञपतिप्रथनफलकत्वेन पुरोडाशप्रथनं स्तोतुं मन्त्रोपादानमिति गुणपरिसंख्याद्यर्थत्वेनेत्यादिपदेनोपात्तम्। **नच**—प्रथनस्यार्थप्राप्तत्वेनाविधेयत्वात् विधिशेषत्वाभावेन अर्थवादत्वस्यैवानुपपत्तिरिति—**वाच्यम्**; प्राप्तस्यापि अध्वर्युकर्तृकत्वप्राप्त्यर्थतया विधानोपपत्तेः। यथाचैवं सति न रात्रिसत्रवदर्थवादस्य पुरोडाशप्रथनफलत्वज्ञापनार्थत्वेन मन्त्रोपादानानुपपत्तिः तथा कौस्तुभे द्रष्टव्यम्॥

## (मन्त्राणां याथार्थ्यलक्षणप्रामाण्यम्)

एवमपि अनधिगतार्थगन्तृत्वरूपप्रामाण्यासंभवमुक्तमनुवदति—**नचैवमिति** ॥ विहितार्थानुवादकत्वेऽपि मन्त्राणां तात्पर्यविषयीभूते लवनादिस्वरूपे याथार्थ्यरूपमेव प्रामाण्यं स्मृतिवत्। तात्पर्यंच विनियोजकश्रुत्यादिना ज्ञेयम्। गार्हपत्य इवैन्द्र्याः। सान्नांत्वर्थपरगंक्षराभिव्यक्तिद्वाराऽर्थपरता परम्परया, नतु साक्षात् प्रामाण्यम्, गीत्यात्मकत्वेनाबोधकत्वादिति केपांचिदुपपादितेन परिहरति—**याथार्थ्यलक्षणस्येति** ॥ अनृक्सामसु परंपरया याथार्थ्यलक्षणस्याप्यसंभवात् पक्षान्तरमाह—**सामादीति** ॥ "प्रमाणं चाथशब्दे वा तद्भानं वा निरूप्यते ॥ पदार्थास्तन्मतिर्वा स्यात् वाक्यार्थाधिगमेऽपि वे"ति चोदनासूत्रगतकारिकावार्तिकोक्तं, तथा —"अत्राभिधीयते यद्यप्यखिमूलान्तरं मनः। पदार्थानांतु मूलत्वं दृष्टान्तोद्भावभावतः। साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्। वर्णास्तथापि नैतस्मिन् पर्यवस्यन्ति निष्फले। वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्। पाके ज्वालेव काष्ठानां पदार्थप्रतिपादन"मिति वाक्याधिकरणगतवार्तिकोक्तं च पदार्थज्ञानमवान्तरव्यापारः तद्द्वारा पदार्थानामेव शब्दप्रमाकरणत्वमिति मतान्तरमवलम्ब्याह—**यथाहीति** ॥

## (पदार्थप्रामाण्यनिरूपणम्)

भूतभाविपदार्थानां स्वरूपेणाविद्यमानानामपि ज्ञानविषयत्वेन सत्त्वात् ज्ञाततायामिव शाब्दबोधं प्रत्यपि कारणत्वोपपत्तेर्न दोषः। नचैवं व्रीह्यादीनामपि पदार्थविधया प्रामाण्यापत्तिः; इष्टत्वात्। नच चोदनैव प्रमाणमिति नियमव्याकोपः; तस्य प्राधान्यपरतयाप्युपपत्तेरितरप्रामाण्यावाधकत्वादित्यर्थः। **अतएव**—"तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वा"दिति सूत्रे अर्थस्येत्याद्यवयवव्याख्यानं कुर्वता भाष्यकारेणोक्तम्—"पदानि हि स्वंस्वमर्थमभिधाय निवृत्तव्यापाराणि, अथेदानीं पदार्था अवगताः सन्तो वाक्यार्थं गमयन्ति" **—इति** ॥

## (प्रकाशकारमतरीत्या याथार्थ्यलक्षणप्रामाण्यासंभवशङ्कातन्निराकरणे)

**यत्तु**—प्रकाशकाराः कल्पसूत्रप्रामाण्यसाधनाधिकरणे इत्थं प्रामाण्यप्रकारमाहुः। याथार्थ्यलक्षणप्रामाण्यस्वीकारे ज्योतिष्टोमः स्वर्गसाधनमिति लौकिकवाक्येऽहिंसादिप्रतिपादकशाक्यादिवचनेऽपि तदापत्तेर्न तद्विधया प्रामाण्यम्। अपितु यतोऽवगतस्य कर्मणो धर्माख्यश्रेयस्साधनता, तदेव धर्मे प्रमाणम्। तदवगतिरेव धर्मप्रमेत्युच्यते। अस्तिचेदृशं धर्मप्रामाण्यं स्मृत्यादीनाम्। मन्वादेः तत्प्रणेतुर्धर्मप्रवर्तकत्वाभ्यनुज्ञानात्, मन्त्राणामपि स्मारकत्वेन नियमनात्। तज्जन्याया एव स्मृतेः श्रेयस्साधनतोपयोगित्वात्। मन्त्राभावे ध्यानाद्युपायान्तराणामुपयोगित्वेऽपि विहितत्वघटिताङ्गत्वाख्याश्रेयस्साधनताभावान्नातिव्याप्तिप्रसंगः। **अतएवोक्तम् वार्तिके**— "तस्माद्यान्येव शास्त्राणि वेदमूलानतिक्रमात् ॥ अवस्थितानि तैरेव ज्ञातो धर्मः फलप्रदः।" तथा—"वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता ॥ नित्यानामभिधेयानां मन्वन्तरयुगादिषु। तेषां विपरिवर्त्तेषु कुर्वतां धर्मसंहिताः। वचनानि प्रमाणानि

तथेति शक्यते वक्तुम् । अतश्च मन्त्रविनियोगविधौ मन्त्राणामपि पदार्थत्वाद्युक्तं प्रामाण्यमिति । अस्तु वा प्रामाण्याभावेऽपि प्रयोजनवत्त्वमात्रम्; तावतैवाध्ययनविधेरुपपत्तेः । प्रयोजनमर्थवादवदेव स्पष्टम् ॥ ४ ॥ इति चतुर्थं मन्त्रप्रामाण्याधिकरणम् । इति भाट्टदीपिकायां खण्डदेवकृतौ प्रथमाध्यायस्य द्वितीयः पादः ।

( १ अधिकरणम् । )

**धर्मस्य** ॥ शिष्टत्रैवर्णिकपरिगृहीतानां मन्वादिप्रणीतस्मृतीनां धर्माधर्मयोः प्रामाण्यं न वेति सन्देहे सन्मू-

नान्येषामिति निश्चयः ।" इतीति, तत्तदधिकरणकौस्तुभ एव दूषितं द्रष्टव्यम् । अत्र मतान्तरनिरासः कौस्तुभे द्रष्टव्यः । तस्मिन् पूर्वोक्तमते अनाश्वासात् पक्षान्तरमाह-**अस्तुवेति** ॥ नचैवं प्रामाण्याभावेऽध्यायासंगतिः; अर्थवादोपयोगप्रसंगादध्यायासङ्गतस्याप्यर्थस्य निरूपणे बाधकाभावात् सांगवेदोपयोगस्यैव वा जिज्ञासितत्वेन अध्यायार्थत्वाङ्गीकाराद्वा मन्त्राधिकरणस्योपयोगमात्रविचारविषयत्वोपपत्तेरित्यर्थः ॥ **प्रयोजनमिति** ॥ यथा—अर्थवादावगतमेव प्राशस्त्यं धर्मप्रवृत्त्युपयोगितयाभ्युदयकारि, तथेहापि मन्त्रजन्यस्मृतिरेवाभ्युदयकारिणीति प्रयोजनमित्यर्थः । तथा—"अग्निहोत्रपदं नामाधारे यागकल्पनम् । मुख्यार्थे विनियोगोऽयं आमिक्षा पय एवचे"त्यादिनोक्तानि प्रयोजनान्तराणि कौस्तुभे द्रष्टव्यानीति ॥

**इति श्रीमत्पूर्वोत्तरमीमांसापारावारधुरीणश्रीखण्डदेवान्तेवासिकविमण्डनबालकृष्णसुतशंभुभट्टविरचितायां भाट्टदीपिकाप्रभावल्यां प्रथमाध्यायस्य द्वितीयः पादः ॥**

---

## अथ प्रथमाध्यायस्य तृतीयः पादः ।

### ( पूर्वतनपादद्वयेन स्मृतिपादस्य संगतिः नामधेयपादतः पूर्वं स्मृतिपादप्रवृत्तिबीजनिरूपणादिकंच )

"अथातो धर्मजिज्ञासा" इति शास्त्रारम्भसूत्रेण धर्माधर्मस्वरूपजिज्ञासाप्रतिज्ञाया इव तद्विषयकप्रमाणमात्रजिज्ञासाप्रतिज्ञाया अपि कृतत्वात् प्रथमेऽध्याये प्रमाणमात्रनिरूपणार्थे प्राधान्यात् प्रथमतः तत्प्रमाणभूतचोदनायाः प्रथमपादे प्रामाण्यं निरूप्य तदवयवत्वेनोपस्थितानां अर्थवादमन्त्राणामपि द्वितीये पादे प्रामाण्यं विध्येकवाक्यतया नामधेयापेक्षयाऽन्तरङ्गत्वेन नामधेयानामर्थवादमन्त्रादिमूलकतयाच निरूप्यार्थवादमन्त्रप्रामाण्यसाधनानन्तरं स्मृत्यादिप्रामाण्यविचारस्यावसरसंगत्याऽऽयातत्वेन करिष्यमाणः स्मृत्यादिप्रामाण्यविचारो नाध्यायासंगतः; क्वचिदपि स्मृत्यादीनां नामधेयमूलत्वादर्शनात्, विध्युद्देशान्तर्गतया चार्थवादमन्त्रादिवत् स्वतन्त्रवेदावयवरूपवाक्यत्वस्य नामधेयेऽभावात्, चोदनाप्रामाण्यसाधनेनैव तत्प्रामाण्यस्य सिद्धत्वाच । अतः प्रागारम्भोऽपि नासङ्गतः । अत एव अधिकरणारम्भे "एवं तावत्कृत्स्नस्य वेदस्य प्रामाण्यमुक्त"मित्युक्तं भाष्यकारेण । चोदनैव प्रमाणमिति नियमस्य प्राधान्यपरतयाप्युपपत्तेः उपस्तरणाभिघारणयोराज्यनियमस्येव पुरोडाशे व्रीहिनियमस्येव च तुल्यजातीयस्वतन्त्रप्रमाणान्तरव्यावृत्त्यर्थत्वादर्थवादमन्त्रयोश्चैकदेशोपयोगित्वेन प्रामाण्ये इव नैव व्याकोपः; चोदनामूलत्वेनैव स्मृत्यादिप्रामाण्यसाधनादित्यर्थं अनुसंधाय स्मृत्यादिप्रामाण्यविचारमारभते—**शिष्टेति**॥ पौरुषेयत्वेनाप्रामाण्यस्यैव निश्चये सति तत्प्रामाण्यकोटिः किं संभावनयेति शङ्कानिरासाय—**शिष्टेत्याद्युक्तम्** ॥

### ( विद्यास्थानान्तर्गतपुराणविभागस्तन्नामनिर्देशश्च )

अत्रच स्मृतीनामिति पदं सदाचाराणां वेदातिरिक्तधर्मस्थानानां चोपलक्षणम् । तानि च "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ॥ वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशे"ति याज्ञवल्क्येनोक्तानि । तत्र सर्गप्रतिसर्गमन्वन्तरवंशानुचरितप्रतिपादकानि भगवता बादरायणेन कृतानि **पुराणानि** ब्राह्मं पाद्मं शैवं भागवतं नारदीयं मार्कण्डेयं आग्नेयं भविष्यं ब्रह्मकैवर्तं लैङ्गं वाराहं ब्रह्माण्डं वायुपुराणं स्कान्दं वामनं कौर्मं मात्स्यं गारुडं चेति क्रमेणाष्टादश । अष्टादशानामप्युपपुराणानां पुराणत्वेनैव संग्रहः ॥ **न्यायो** गौतमप्रणीत आन्वीक्षकी पञ्चाध्यायी, कणादप्रणीता दशाध्यायी च ॥

### (मीमांसापदार्थविवेचनम्)

**मीमांसा**—"अथातो धर्मजिज्ञासा"इत्यादिना जैमिनिप्रणीता द्वादशाध्यायी संकर्षणकाण्डात्मिका चतुरध्यायी च कर्ममीमांसा, "अथातो ब्रह्मजिज्ञासा" इत्यादिना व्यासप्रणीता चतुरध्यायी शारीरकमीमांसा च ॥

### ( धर्मशास्त्रपदार्थः, स्मृतिकर्तॄणां नामानि च )

**धर्मशास्त्रं तु** वर्णाश्रमधर्मविशेषाणां विभागेन प्रतिपादकं तत्तत्स्मृतिप्रवर्तकप्रणीतम् । तेच मन्वत्रिविष्ण्वङ्गिरोहारीतयाज्ञवल्क्ययमापस्तम्बसंवर्तकात्यायनबृहस्पतिपराशरव्यासशङ्खलिखितदक्षगौतमशातातपवसिष्ठादयो धर्मशास्त्रप्रवर्तका इति याज्ञवल्क्योक्ताः, तथा "तेषामप्यङ्गिरोव्यासगौतमात्र्युशनोयमाः । वसिष्ठदक्षसंवर्तशातातपपराशराः । विष्ण्वापस्तम्ब-

लकत्वनिश्चायकाभावादप्रामाण्यम् । न ह्यत्र प्रत्यक्षादि मूलम्; तेषां धर्माधर्मयोरप्रवृत्तेः, वेदस्य च प्रत्यक्षपठितस्यानुपलम्भात्, उपलम्भे वा स्मृतिप्रणयनवैयर्थ्यात्, प्रत्यक्षपठितस्येदानीमुच्छेदस्य च वैदिकैर्यथापरिगणनं शाखानां मात्रामात्रापरित्यागेन पाल्यमानतया कल्पयितुमशक्तेः । नापि नित्यानुमेयो वेदो मूलम्; स्मृतेर्मूलसामा-

---

हारीतः शङ्खः कात्यायनो गुरुः । प्रचेता नारदो योगी बोधायनमनू तथा । सुमन्तुः काश्यपो बभ्रुः पैठिनो व्याघ्र एव च । सत्यव्रतो भरद्वाजो गार्ग्यः कार्ष्णाजिनिस्तथा । जाबालिर्जमदग्निश्च यौगाक्षिर्ब्रह्मसंभवः । इति धर्मप्रणेतारः षट्त्रिंशदृषयः स्मृताः । इति पैठिनोक्ताश्च ज्ञेयाः । महाभारतरामायणसांख्यपातञ्जलपाशुपतवैष्णवादीनां च धर्मशास्त्र एवान्तर्भावः । **सांख्यशास्त्रं** षडध्यायं भगवता कपिलेन प्रणीतम् । तथा **पातञ्जलं** पादचतुष्टयात्मकं पतञ्जलिना प्रणीतम् । **पाशुपतं** भगवता पशुपतिना पञ्चाध्यायं प्रणीतम् । शैवमन्त्रशास्त्रस्य पाशुपत एवान्तर्भावः । एवं वैष्णवं नारदादिभिः कृतम् । पाञ्चरात्रस्यात्रैव वैष्णवमन्त्रशास्त्रे अन्तर्भावः । वामागमादिकंतु शास्त्रबाह्यमेवेति बहवः । तदेवं पुराणादिचतुष्टयं वेदानामुपाङ्गमिति व्यवह्रियते ॥

## (वेदाङ्गनिरूपणम्)

**अङ्गानिच** शिक्षाकल्पव्याकरणछन्दोनिरुक्तज्योतिरादयः षट् । तत्र सर्ववेदसाधारणी "अथ शिक्षां प्रवक्ष्यामीत्यादिपञ्चखण्डात्मिका पाणिनिप्रणीता, अन्यैश्च मुनिभिः प्रतिवेदशाखं भिन्नरूपतया प्रातिशाख्यसंज्ञया प्रणीता च **शिक्षा । कल्पाः** शाखान्तरीयाङ्गोपसंहारेण वैदिकानुष्ठानक्रमविशेषज्ञानाय बोधायनापस्तम्बादिमुनिभिः प्रणीताः । वैजावाप्याश्वलायनद्राह्यायणादिमुनिप्रणीतानां सूत्राणामत्रैवान्तर्भावः । **तदुक्तम्—वार्तिके—**"सिद्धरूपः प्रयोगो यैः कर्मणामनुगम्यते" । **इति** ॥ "कल्पा लक्षणार्थानि सूत्राणीति प्रचक्षते" **इति** ॥ व्याकरणमष्टाध्याय्यात्मकं महेश्वरप्रसादाद्भगवता पाणिनिना प्रणीतं माहेश्वरम् । कौमारादिव्याकरणानि न वेदाङ्गम्; लौकिकपदमात्रसाधुत्वान्वाख्यानपरत्वात् ॥ **निरुक्तं** भगवता **यास्केन** समाम्नायः समाम्नात इत्यादिना त्रयोदशाध्याय्यात्मकं प्रणीतम् । निघण्टुसंज्ञकपंचाध्यायात्मकस्य ग्रन्थस्य यास्कप्रणीतस्य तदितरकोशानां चैवात्रैवान्तर्भावः । **ज्योतिषं च** भगवता आदित्येन गर्गादिभिश्च प्रणीतम् । छन्दस्तु भगवता पिङ्गलेन अष्टाध्याय्यात्मकं प्रणीतम् ॥

## (सर्वेषामपि विद्यास्थानानां स्मृत्यधिकरणविषयत्वोपपादनम्)

तदेवं दशभिः सहिता ऋग्वेदयजुर्वेदसामाथर्वणाख्याश्चत्वारो वेदा इति चतुर्दश धर्मस्थानानि । एतान्येवायुर्वेदधनुर्वेदगान्धर्वार्थशास्त्रसंज्ञैरुपवेदैः सहितान्यष्टादश वा । यद्यपि वेदवदाचारात्मतुष्टीनामपि धर्मे प्रामाण्यं वक्ष्यते; तथापि तेषामशब्दरूपत्वात् शब्दरूपपुराणाद्यभिप्रायेयं संख्येति न विरोधः ।

तत्र वेदानां प्रामाण्यस्य पूर्वमेव साधितत्वात् तद्व्यतिरिक्तानि प्रत्यक्षमूलदृष्टार्थव्यतिरिक्तानि अदृष्टार्थतया यानि धर्मस्थानत्वेन परिगृहीतानि वेदमूलकतया साधयितव्यप्रमाणताकानि तानि सर्वाणीहोदाहरणमिति भावः ॥

## (स्मृतीनां मूलापेक्षायां मूलस्यच प्रत्यक्षादेरसंभवादप्रामाण्यनिरूपणम्)

स्मृतयस्तावत् दृढकर्तृस्मरणेन पौरुषेयत्वादवश्यं तत्प्रणेतृभिः अष्टकाखर्गयोः साध्यसाधनभावं केनचित् प्रमाणेनावधार्य प्रणीताः । अत एव स्मृतिसमाख्याप्युपपद्यते । तच्च साध्यसाधनभावावधारणं प्रत्यक्षादिना न संभवतीत्याह—**नह्यत्रेति** ॥ शब्दमूलत्वकल्पने च कृतकस्य तस्य प्रामाण्यानिश्चयान्मूलत्वानुपपत्तेः वेदशब्दस्यैव तद्वक्तव्यम्, तदप्यनुपलम्भादयुक्तमित्याह—**वेदस्यचेति** ॥

## (उत्सन्नश्रुतिमूलत्वशङ्कातन्निराकरणे)

**नन्वसदादिभिः** अनुपलम्भेऽपि मन्वादिभिः प्रत्यक्षपाठेनोपलब्धः इदानीं च पुरुषप्रमादादुत्सन्नः देशान्तरे वा कैश्चित्पठ्यमानोऽपि नास्माभिरुपलभ्यते, अस्माभिरपिवा पठ्यमानोऽपि परप्रकरणादिपठितत्वात् नास्माभिः स्मृतिमूलत्वेन ज्ञायते इति यथासंभवं कल्पनोपपत्तेः कथं नित्यशब्दासद्भावनिश्चय इत्यत आह—**उपलम्भेऽपिवेति** ॥ उत्सन्नश्रुतिमूलत्वं निरस्यति—**इदानीमिति** ॥ मात्रामात्रात्यागिनामध्येतॄणां अनेकस्मृतिमूलभूतानेकश्रुतिवाक्यत्यागानुपपत्तेः । एकविंशत्यध्वयुक्तं ऋग्वेदं ऋषयो विदुः । सहस्राध्वा सामवेदो यजुरेकशताधिकम् ॥ नवाध्वाऽथर्वणाख्येति प्राहुः पञ्चदशाध्वकम् ॥ इति सद्गुरुशिष्येण तत्तद्वेदीयशाखानां परिगणनात् तासां च सर्वासामेकस्मिन् देशेऽपाठेऽपि देशान्तरे पाठसंभवादुत्सादकल्पना न युक्ता । देशान्तरपठ्यमानश्रुतिमूलत्वकल्पनापि तासामेव मन्वादिभिरध्यापनोपपत्तौ स्मृतिप्रणयनवैयर्थ्यापत्तेरेवायुक्तेत्यर्थः । अध्वा देवगतिः शाखा इति पर्यायवाचका इति ॥

## (नित्यानुमेयवेदमूलकत्वनिरासः)

यदत्र गुरुणोच्यते—"न केवलमस्माकमेव लिङ्गैनैवानुमेयाः श्रुतयः, किंतु मन्वादीनामपि स्मृत्यन्तरेणानुमेयाः, एवं ततः परमपि; नतु केनापि दृष्टा इति नित्यानुमेयश्रुतिमूलत्वं इति, तदपि निरस्यति—**नापीति** ॥ पौरुषेयस्य स्मृत्यन्तरस्य सामान्यतो यत्किंचिन्मूलप्रमाणव्याप्तस्यापि श्रुत्यैकान्तिकत्वाभावेनानुगमानुपपत्तेः यत्किंचिन्मूलकत्वाङ्गीकारे अनवस्थानादन्धपरंपरापत्तिः । लिङ्गादीनांतु अपौरुषेयत्वेन अन्यमूलकत्वायोगात् श्रुतिकल्पकत्वाविरोध इति वैषम्यमित्यर्थः ॥

न्यव्याप्तत्वेऽपि वेदव्याप्तत्वाभावेनानुमानानुपपत्तेः, मनोरप्यनुमेयत्वकल्पने अन्धपरम्परापत्तेश्च। अतश्च सन्मूलत्वासम्भवाद् भ्रान्त्यादिमूलत्वेनाप्रामाण्यमिति प्राप्ते—

शिष्टानामद्ययावदविगीतपरम्परया ज्योतिष्टोमादिष्विवाष्टकाकलञ्जभक्षणादिष्वपि धर्मत्वेनाधर्मत्वेन च परिग्रहान्मन्वादीनां त्रैवर्णिकत्वेन वेददर्शनसंभवाच्च तन्मूलत्वमेव युक्तम्, न तु भ्रान्त्यादिमूलत्वम्; तत्कारणस्याद्ययावत्तदज्ञानस्य च कल्पने गौरवाच्च। श्रुतिश्च प्रत्यक्षपठितैव तन्मूलम्। न च स्मृतिप्रणयनवैयर्थ्यम्; शाखान्तरोपसंहारेणार्थवादोपोद्धारेण न्यायसिद्धार्थकथनेन च स्मृतिप्रणयनसार्थक्यात्। अतो मूलश्रुत्युपस्थापकतयैव धर्माधर्मप्रमाप्रयोजकत्वं स्मृतीनामिति सिद्धम्॥ १॥ **इति प्रथमं स्मृत्यधिकरणम्।**

**( भ्रान्त्यादिमूलत्वेनाप्रामाण्योपसंहारः )**

एतेनाक्षेपकाभावात् दृष्टार्थापत्तिरपि निरसनीया; भ्रान्तिप्रतारणादिमूलत्वस्यापि संभवात्, एवमाचारानुष्ठानस्यापि ज्ञानपूर्वकत्वात् पूर्वानुष्ठातॄणां ज्ञानकरणजिज्ञासायां प्रमाणमूलत्वासंभवात् भ्रान्त्यादिमूलकत्वमेवेत्यभिप्रेत्य अप्रामाण्यपूर्वपक्षमुपसंहरति—**अतश्चेति**॥

**( सिद्धान्तसूत्रेऽनुमानशब्देनार्थापत्तेरेव ग्रहणमिति निरूपणपूर्वकं स्मृतिप्रामाण्यप्रतिज्ञा )**

**तन्मूलकत्वमेव युक्तमिति**॥ दृढसकलत्रैवर्णिकशिष्टपरिग्रहान्यथानुपपत्तिप्रसूतदृष्टार्थापत्त्या श्रुतिमूलत्वमेव तेषां कल्पयितुं युक्तमित्यर्थः। **यत्तु**—"अपिवा कर्तृसामान्यात् प्रमाणमनुमानं स्या"दिति सूत्रगतानुमानशब्दस्वारस्यात् वैदिकशब्दानुमानपरिग्रहेण मन्वादिस्मृतिः धर्मे प्रमाणं वेदार्थानुष्ठातृभिः अनुष्ठीयमानार्थकत्वात् वेदवदित्यनुमानेन प्रामाण्यं स्मृत्याचारौ वेदमूलौ वैदिककर्तृकत्वात् धर्मत्वस्मृतित्वाद्वा अस्मदादिगताग्निहोत्रस्मृतिवदित्यनुमानेन च श्रुतिमूलत्वं केचित्साधयन्ति। अङ्गीकुर्वन्ति। च प्रकाशकारास्तथैव, तदर्थकामानुसारिस्मृत्याचारेषु व्यभिचाराद्युक्तम् **इति**॥ अत एव दूषितं कौस्तुभे विस्तरेणोपपादितं तत्रैव द्रष्टव्यम्॥ अतः सूत्रभाष्यगतानुमानोक्तिरर्थापत्तिरेव। अतः सैव श्रुतिमूलत्वसाधने प्रमाणमिति भावः॥

**( अनुपलम्भनिमित्तोपपादनपूर्वकप्रत्यक्षपठितश्रुतिमूलत्वव्यवस्थापनम् )**

श्रुतिमूलकत्वे सिद्धे सा श्रुतिः प्रत्यक्षपाठेनैवावधारिता मन्वादिभिः। अस्माकमनुपलम्भस्तु स्वाध्यायाध्ययनवाक्ये स्वाध्यायपदमहिम्ना एकशाखाध्ययनस्यैव शाखान्तराधिकरणे साधयिष्यमाणत्वेन शाखान्तराधीतानामध्ययनाभावादेव। अध्ययनं विनैवोपायान्तरेणावधारणेऽपि तत्तद्देशीयपुरुषान्तराधीतशाखानां प्रमादालस्यादियुक्तैः पुरुषैः तत्तद्देशगमनेन श्रोतुमप्यशक्तेरुपलम्भायोग्यत्वादेव नानुपपन्नः। एकशाखाधीतानामपि च श्रुतीनां क्रतुप्रकरणगतानां तद्धर्मं बाधित्वा पुरुषधर्मस्य पुरुषधर्माधिकृतानां पुरुषधर्मत्वबाधेन क्रतुधर्मत्वस्य मन्त्रार्थवादादिकल्प्यविधीनां चेदानीन्तनैः पुरुषैर्निर्णेतुमशक्तेरुपलम्भायोग्यत्वम्। मन्वादीनांतु सर्वज्ञत्वेन प्रत्यक्षपाठेनावधारणसंभवात् प्रत्यक्षपठितैव श्रुतिर्मूलमित्यभिप्रेत्याह—**श्रुतिश्चेति**॥ दृश्यन्ते च स्पष्टमेव मन्त्रार्थवादाः प्रत्यक्षपठिता एव तत्तत्स्मृतिमूलम्। यथा "यां जना इति मन्त्रोऽष्टकास्मृतेः। **यथा** तर्ह्यर्थवादो मनुष्यराज आगतेत्यस्मिन्नु क्षणं वेहतं(?) वाक्षदंत" इति अर्थवादः—महोक्षं महाजं वेति स्मृतेः। एवमितरासामपि। एवं गुर्वनुगमनाद्याचाराणां "तस्माच्छ्रेयांसं पूर्वं पापीयान् पश्चादन्वेती"ति चयनप्रकरणगतार्थवादो मूलम्। एवमन्यत्राप्यूह्यमित्यर्थः॥

**( स्मृतिप्रणयनसार्थक्योपपादनम् )**

तेषां श्रुतिप्रत्यक्षे स्मृतिप्रणयनवैयर्थ्यमाशङ्क्य निराकरोति **—नचेति**॥ **अर्थवादोपोद्धारेणेति**॥ अविधिस्वरूपार्थवादत्यागेन विधिमात्रोपसंहारस्येदानीन्तनैः कर्तुमशक्तेस्तेषां ज्ञानार्थं तत्प्रणयनसार्थक्यमिति भावः॥

**( स्मृतिप्रामाण्यव्यवहारस्य गौणत्ववर्णनपूर्वकोपसंहारः )**

**ननु** स्मृत्याचाराणां श्रुत्यनुमापकत्वेनोपक्षीणानां कथं धर्माधर्मप्रमाजनकत्वम्? तस्य वेदैकगम्यत्वेन तद्गम्यत्वासंभवात्, इत्यत आह—**अत इति**॥ एवंच तत्प्रामाण्यव्यवहारो लिङ्गादीनामिव भाक्तः। धर्माधर्मप्रमाणनिरूपणप्रतिज्ञाप्यायसूत्रे मुख्यभाक्तसाधारण्येनेति भावः॥ **यत्तु**—भाष्यकारेण प्रपाकरणादिस्मृतीनां परोपकाररूपदृष्टार्थत्वेन तथा गुर्वनुगमनाद्याचाराणां गुरुप्रीतिरूपदृष्टार्थत्वेन प्रामाण्यमुक्तम्, तद्वार्तिक एव निरस्तं द्रष्टव्यम्। यानि च पूर्वोक्तानि धर्मस्थानानि तेषुच यस्तावद्दृष्टोऽर्थः स प्रत्यक्षादिमूल एव। तत्र यथायथं दृष्टादृष्टप्रयोजनविभाग आकरे द्रष्टव्यः। विस्तरभयान्नोच्यते **इति**॥

**इति प्रथमं स्मृत्यधिकरणम्॥**

( २ अधिकरणम्। )

**विरोधे** ॥ श्रुतिविरुद्धानामपि औदुम्बरी सर्वा वेष्टितव्येत्यादिस्मृतीनां श्रुतिमूलकत्वाविशेषात् प्रामाण्यम्। नचौदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुतिविरोधात्तदनुपपत्तिः; परस्परविरुद्धार्थकानामपि ग्रहणाग्रहणादिश्रुतीनां बहुशो दर्शनेन विरोधे सत्यपि तत्कल्पने बाधकाभावात्, तद्वदेव विकल्पेन विरोधस्य परिहर्तुं शक्यत्वाच्च। न ह्यत्र प्रत्यक्षश्रुत्या स्मृतेर्मूलाकाङ्क्षा निवर्त्तते, येन कल्पनामूलोच्छेदाद्विरुद्धप्रत्यक्षश्रुत्या लिङ्गस्येव स्मृतेर्बाधः स्यात्। न वा शैत्यौष्ण्ययोरिवात्र विषययोरत्यन्तविरोधः, येन औष्ण्यप्रत्यक्षेणेव शैत्यानुमानस्य प्रकृते प्रमेयापहारलक्षणो बाधः स्यात्। न त्वेतदस्ति; विकल्पेन द्वयोः संभवादिति प्राप्ते—

भाष्यकारेणैवं सिद्धान्तितम्—सर्वत्रानुमानेऽनुमेयजिज्ञासायाः कारणत्वात् प्रत्यक्षश्रुत्या च स्पर्शविधानेनावेष्टितत्वरूपेणौदुम्बर्याः परिच्छिन्नत्वाज्जिज्ञासाऽभावेन नौदुम्बरीवेष्टनविषयकश्रुत्यनुमानसम्भवः।

तथा प्रत्यक्षश्रुतिविरोधाभावेऽपि यत्र लोभादिदर्शनं, यथा वैसर्जनहोमीयं वासोऽध्वर्युः परिगृह्णातीत्यादौ तत्रापि न श्रुतिकल्पनं क्लृप्तहेतोरेव मूलत्वोपपत्तेः इति।

---

**( पूर्वाधिकरणेनापवादिकसंगत्युपपादनम् )**

"विरोधे त्वनपेक्षं स्यात् असति ह्यनुमान"मिति सिद्धान्तसूत्रगततुशब्दनिरसनीयत्वेन सूचिततत्सूत्रपूर्वपक्षेणाधिकरणविचारं दर्शयितुमुदाहरणमाह—**श्रुतिविरुद्धानामपीति** ॥ अपिशब्देन यदि शिष्टत्रैवर्णिकपरिग्रहानुपपत्तिप्रसूतश्रुतिमूलकत्वेन मन्वादिस्मृतीनां प्रामाण्यं, तर्हि विरुद्धानामपि आसामुक्तहेतोरस्तु प्रामाण्यम् इत्याक्षेपनिरासात् आपवादिकी संगतिः सूचिता ॥

**( आदिपदेन अष्टाचत्वारिंशदित्यादिस्मृतिद्वयसंग्रहनिरूपणम् )**

आदिपदेन यथौदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुतिविरुद्धायाः सर्ववेष्टनस्मृतेरुदाहरणत्वं, तथा "जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इति श्रुत्या विरुद्धाया "अष्टाचत्वारिंशद्वर्षपर्यन्तं वेदब्रह्मचर्य"मि"ति स्मृतेः, तथा "न दीक्षितस्यान्नमश्नीयात्" इति निषेधापेक्षितावधिसमर्पिकयाऽग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यमिति श्रुत्या विरुद्धायाः "क्रीतराजको भोज्यान्न"इति स्मृतेरप्युदाहरणत्वं संगृहीतम् ॥ सदोमण्डपे उदुम्बरवृक्षस्य काष्ठमूर्ध्वतया यजमानसम्मितं निखन्य स्थाप्यते। तदौदुम्बरीशब्दस्यार्थः। **विकल्पेनेति** ॥

**( स्पर्शनवेष्टनयोः प्रयोगभेदेन विकल्पनिरूपणम् )**

वह्नौ शैत्यौष्ण्ययोर्विकल्पासंभवात् परस्परात्यन्ताभावसमानाधिकरणयोस्तयोः विरोधस्य प्रत्यक्षसिद्धत्वात् प्रत्यक्षबाधितत्वेन न शैत्यानुमानं संभवतीति युक्तः प्रमेयापहारलक्षणो बाधः, इह तु स्पर्शनवेष्टनयोः परस्परात्यन्ताभावसमानाधिकरणयोः प्रयोगभेदेन विकल्पेन निवेशस्य संभवात् युक्तं प्रामाण्यमित्यर्थः। **सर्वत्रेति** ॥ धूमादिदर्शनानन्तरं व्याप्तिस्मरणे सत्यपि जिज्ञासाभावेऽनुमित्यनुदयात् परोक्षज्ञाने अथवाऽनुमित्यर्थापत्त्योरेव तस्याः कारणत्वमित्यर्थः ॥

**( वैसर्जनहोमीयमिति विषयान्तरगवेषणप्रयोजनम् )**

अत्र "हेतुदर्शनाच्चे"ति पूर्वसूत्रानन्तरसूत्रम्। तत्र यदि प्रत्यक्षश्रुतिमूलकत्वासंभवः, तदा स्मृतेर्मूलाकाङ्क्षायां भ्रान्त्यादिमूलकत्वमेव युक्तं कल्पयितुम्। तत्र वेष्टनस्मृतेरुद्गात्रे दानेन वस्त्रलोभः, अष्टाचत्वारिंशत् ब्रह्मचर्यस्मृतेः नपुंसकत्वप्रच्छादनम्, राजक्रयावधिस्मृतेः बुभुक्षेवेति। संभवतिचेदं दृष्टं कारणमिति पौरुषेयत्वादिहेत्वन्तरप्रदर्शनपरतयैकदा भाष्यकारः पूर्वशेषतया व्याख्याय अधिकरणान्तरपरतया पक्षान्तरेण व्याचख्यौ। तत्र प्रत्यक्षश्रुतिविरोधेनैव मुख्यहेतुना पूर्वत्राप्रामाण्यसिद्धौ लोभादिहेतोः दृष्टस्यान्वाचयभूतस्य कथने प्रयोजनाभावेनापरितोषात् द्वितीयव्याख्यानं कृतम्, तदेव युक्तमिति तन्मते उपपादयति—**तथेति** ॥ **वैसर्जनहोमीयमिति** ॥

**( वैसर्जनहोमीयपदार्थः आदिपदेन यूपहस्तिवाक्यसंग्रहश्च )**

अग्नीषोमीयपशोः तन्त्रे प्रक्रान्ते अग्नीषोमप्रणयनार्थं यजमानं पत्नीपुत्रान् भ्रातॄंश्चाहतेन वाससा संछाद्य वाससोऽन्ते स्रुचमुपनिबध्य जुहोतीति शालामुखीयाग्नीध्राहवनीयेषु चतुर्गृहीतेनाज्येन चत्वारो वैसर्जनहोमा विहिताः। तद्वासो वैसर्जनहोमीयमित्यर्थः ॥ आदिपदेन यूपहस्तिनोदानमाचरन्तीति स्मृत्यन्तरग्रहणम्। यूपो हस्त्यते वेष्ट्यते येनेतिव्युत्पत्त्या यूपवेष्टनार्थं वासो यूपहस्तिपदस्यार्थः। तच्च सप्तदशभिर्वासोभिः यूपं वेष्टयतीति वेष्टनविधानात् वाजपेये आम्नातम् ॥

**( भाष्यकृत्संमतस्योक्ताधिकरणद्वयस्य वार्तिककारमतरीत्या खण्डनम् )**

एवं भाष्यमतेनाधिकरणद्वयं व्याख्यातम्। तद्वार्तिककारेण दूषितम्। **तथाहि**—प्रत्यक्षश्रुतिविरोधे स्मृतीनां मूलभूतश्रुत्यभावः किं साधकाभावात् बाधकसत्त्वाद्वा। **नाद्यः**; महर्षिप्रणीतत्वादेः शिष्टत्रैवर्णिकपरिग्रहादेश्चेतरस्मृतिष्विवेहापि श्रुतिसाधकस्याविशेषात्। **नान्त्यः**; विरुद्धश्रुतिदर्शनरूपस्य बाधकस्य व्रीहियवादिषु श्रुतिषु बहुशो दर्शनेन व्यभिचारात्, विप्रकीर्णशाखान्तरगतश्रुतीनामसदादिभिः अनुपलम्भेऽपि मन्वादीनां महत्तरत्वेनानुपलम्भरूपबाधकस्यापि अभावाच्च।

**वार्त्तिककारस्तु**—न जिज्ञासाया अनुमित्यङ्गत्वम्; अन्यायजिज्ञासायामपि तदुदयात्, सत्यपि वा तस्याः कारणत्वे अनुमितिविषयश्रुतेर्जिज्ञासितत्वाच्च। प्रत्यक्षश्रुतिविरोधाभावे वा लोभादिमूलकत्वाङ्गीकारे अष्टकादिस्मृतेरपि तदापत्तेः। अतश्च प्रत्यक्षश्रुतिविरोधेऽपि स्मृतेः शिष्टत्रैवर्णिकपरिग्रहाविशेषेण श्रुतिमूलत्वकल्पनोपपत्तेर्युक्तमेव प्रामाण्यम्, परंतु यावच्छ्रुतिनिश्चयं वेष्टनं नानुष्ठेयम्, अर्थवादाद्युन्नीतविधिमूलकत्वस्यापि स्मृतिषु दर्शनेन प्रकृतेऽपि तन्मूलकत्वस्य संभावितत्वात्तस्य चोन्नयनस्य प्रत्यक्षश्रुतिविरोधे आभासत्वसंभवात्। अतश्च यावच्छ्रुतिनिश्चयं अननुष्ठानलक्षणमप्रामाण्यमित्यभिप्रायं सूत्रमिति—**प्राह।**

---

अतः परप्रत्यक्षस्याप्यात्मप्रत्यक्षसमत्वात् तद्दृष्टश्रुतीनां मूलत्वसंभवान्न भाष्यकारोक्तं सर्वथाऽप्रामाण्यं सिध्यति॥

### ( वेष्टनस्मृतिमूलप्रत्यक्षश्रुतिनिरूपणम् )

**किंच** जैमिनिः स्वकृते छान्दोग्यानुपदे ग्रन्थे—"वेष्टुतं वै वासः श्रीर्वासः श्रीः सामेति स्तोत्रीयापरिगणनार्थानामौदुम्बरीणां प्रादेशमात्राणां कुशानां स एकया स तिसृभिः स एकयेत्यादिविष्टुत्युपाख्यगतप्रकाराभिव्यञ्जकतया विष्टुतिशब्दवाच्यानां स्थापनार्थं वास उक्त्वा तत्प्रसंगेनौदुम्बरीवेष्टनवाससोऽपि तामूर्ध्वदेशेन परिवेष्टयतीति शाट्यायनशाखाब्राह्मणगतप्रत्यक्षश्रुतिमूलत्वमेव औदुम्बरीप्रकरणे शाट्यायनिनां तामूर्ध्वदेशेनोभयत्र वाससी दर्शयतीति ग्रन्थेन दर्शितवानिति प्रत्यक्षैव श्रुतिः एवमष्टाचत्वारिंशद्वर्षब्रह्मचर्यस्मृतेरपि "अष्टाचत्वारिंशद्वर्षं स वै वेदब्रह्मचर्यमिति राणकोदाहृताथर्ववेदपठिता प्रत्यक्षैव श्रुतिश्च मूलमित्युदाहरणान्यप्ययुक्तानि॥

### ( अष्टाचत्वारिंशदिति स्मृतिमूलप्रत्यक्षश्रुतिनिर्देशः )

यथाचात्र विरोधोऽपि नास्ति तथा आकरे द्रष्टव्यम्। कौस्तुभे च। अतो न युक्तं प्रथमाधिकरणम्॥

### ( वार्तिककारमतावतरणपूर्वकतन्मतोपपादनम् )

द्वितीयाधिकरणमप्यविरुद्धानामपि लोभमूलत्वकल्पने दानादिस्मृतेरपि तदापत्तेरयुक्तम्। नहि "अपिवा कारणाग्रहणे प्रयुक्तानी"ति अधिकरणेन दृष्टमूलासंभवमात्रेणाचारप्रामाण्यं साधयिष्यते। येन तद्व्यतिरेकेण दृष्टमूलत्वसंभवहेतुनेहाप्रामाण्यं साध्येत, किंतु धर्मबुध्यानुष्ठीयमानत्वेनैव। अन्वाचयहेतुमात्रंतु दृष्टमूलासंभव उपन्यस्त इति तमिममधिकरणद्वयभङ्गं आचार्यकृतमभिप्रेत्य मतान्तरतया दर्शयति—**वार्तिककारस्त्विति॥ वेष्टनंचानुष्ठेयमिति॥** अत्रच वेष्टनादिस्मृतीनां प्रत्यक्षपठिततत्तच्छ्रुतिमूलत्वस्य प्रागेवोक्तत्वात् यावच्छ्रुतिनिश्चयं नानुष्ठेयमित्यनुपपत्तेः वेष्टनपदमजहत्स्वार्थलक्षणयाऽदृष्टमूलस्मृतिविषयपरतया व्याख्येयम्। **अत एवोक्तं न्यायसुधायां**—उदाहरणभाष्यमपि अदृष्टमूलावस्थस्मृतिविषयतया नेतव्यम् **इति॥**

### ( यावच्छ्रुतिनिश्चयमननुष्ठानलक्षणमप्रामाण्यमित्यस्य सूत्रारूढत्वोपपादनम् )

**ननु**—अदृष्टमूलस्मृतीनां विप्रलम्भमूलकत्वाभावेनात्यन्तवाध्यत्वासंभवात् यथाश्रुतमूलानिश्चयेन अत्यन्तेतरस्मृतितुल्यत्वायोगेऽपि कथंचित्प्रामाण्याङ्गीकारे "विरोधेत्वनपेक्ष"मित्यप्रामाण्यप्रतिपादकसूत्रविरोध इत्यत आह—**अतश्चेति॥** मूलभूतश्रुतेः परप्रत्यक्षत्वेऽपि स्वप्रत्यक्षत्वाभावात् स्वप्रत्यक्षस्य तु मूलानुसन्धानसापेक्षत्वाद्यतो दुर्बला, अतस्तयोः विरोधे यदनपेक्षं श्रौतं विज्ञानं तदेव **प्रमाणमादरणीयं** स्यात्। **असति** हि श्रौतार्थे**ऽनुमान**मनुमितश्रुतिमूलमादरणीयमिति पूर्वसूत्रगतानुषक्तप्रमाणपदस्यानुष्ठानलक्षणप्रामाण्यपरतया सूत्रार्थ इत्यर्थः॥

### ( विरोधेत्विति सूत्रे पाठभेदः योजनाभेदश्च )

अत्र सूत्रेऽनपेक्षमनपेक्ष्यमिति यकाररहिततत्सहिततया पाठभेदः। यदा यकारसहितस्तदा यस्य वान्यदपेक्ष्यं नास्तीत्यर्थः। तद्रहितस्तु व्याख्यात एव॥

### ( अत्रादृतवार्तिकसिद्धान्तस्य वार्तिकश्लोकैः संवादः )

**तदुक्तमाचार्यैः**—"यावदेकं श्रुतौ कर्म स्मृतौ चान्यत्प्रतीयते। तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते। अतश्चैवं श्रुतिस्मृत्योर्विशेषो नोपदर्श्यते। नात्यन्तमेव बाध्यत्वं नचाप्यत्यन्ततुल्यता।" इति॥ यदा तु विरुद्धस्मृतिमूलभूता श्रुतिः स्वस्य प्रत्यक्षा, तदा द्वयोरपि विकल्पेन व्यवस्थया वा आदरः कार्य इत्यर्थसिद्धोऽर्थः॥

### ( वार्तिकमते हेतुदर्शनाच्चेति सूत्रयोजनाप्रकारः )

यच्च हेतुदर्शनाच्चेति सूत्रं तत् प्रत्यक्षश्रुतिविरुद्धस्मृतिप्रसंगगताचारमूलेदानीन्तनस्मृत्योर्विरोधे यथाऽस्पर्श्यादिस्पर्शदूषितजगन्नाथनिवेदितान्नभक्षणादौ तत्र संभवन्मूलान्तराया अनादरप्रदर्शनार्थत्वेन व्याख्येयमिति दिक्॥

### ( वार्तिककारीयवर्णकान्तरविवरणम् )

एवं तद्व्याख्यायां सर्वत्र च प्रयोगात् सन्निधानशास्त्राच्चेत्यधिकरणेन गतार्थत्वम्। तत्रहि प्रत्यक्षसूत्रार्थोपसंहारकल्पसूत्रवचसां श्रुतिविरोधेऽनादरणीयत्वे सुतरां स्मृतिष्वनादरसिद्धेरित्यपरितोषेण यद्वर्णकान्तरं कृतमाचार्यैस्तदनुसंधत्ते—**यद्वेति॥**

### ( शाक्यादिस्मृत्यप्रामाण्यवर्णनस्याधिकरणान्तरैरगतार्थतानिरूपणम् )

अपिवा कर्तृसामान्यादि"ति पूर्वाधिकरणसिद्धान्तसूत्रोपात्तकर्तृसामान्यहेतोः शिष्टत्रैवर्णिकदृढपरिग्रहरूपमुख्यहेतूपलक्ष-

यद्वा—शाक्यादीनामपि क्षत्रियत्वप्रसिद्धेर्वेददर्शनसंभवेन तत्प्रणीतस्मृतीनामपि वेदमूलत्वं, तन्मूलो वेदश्चेदानीं प्रलीन इति प्राप्ते—शिष्टत्रैवर्णिकानां धर्मत्वेन परिग्रहस्य पूर्वाधिकरणमुख्यहेतोरभावात् प्रत्युत अप्रमाणत्वे-

णत्वात् तेन पूर्वं प्रामाण्ये अभिहिते स यत्र नास्ति तत्राप्रामाण्यमुच्यते इत्येवमस्य प्रत्युदाहरणसंगतिमन्यत्र प्रत्यक्षसूत्रे प्रत्यक्षादिमूलत्वेनाप्रामाण्योक्तावपि कल्पसूत्राधिकरणे स्वातन्त्र्येण प्रामाण्याभावे उक्तेऽपिच वेदमूलकतया प्रामाण्यशङ्कानिरासस्यान्यत्राकृतत्वादगतार्थतां प्रमाणाभासनिरूपणेनाध्यायसंगतिंचाभिप्रेत्य विषयप्रदर्शनपूर्वं पूर्वपक्षमारभते—**शाक्यादीनामिति** ॥

## ( शाक्यादिस्मृत्यप्रामाण्यवर्णनस्योपयोगः )

नचैषामाभासत्वकथनस्यानुपयोगः; "यदि ह्यनादरेणैषां न कथ्येताप्रमाणता ॥ अशक्यैवेति मत्वाऽन्ये भवेयुः समदृष्टयः । शोभासौकर्यहेतूक्तिकलिकालवशेन च । यज्ञोक्तपशुहिंसादित्यागभ्रान्तिमवाप्नुयुः । अनिराकृत्य तान् सर्वान् धर्मशुद्धिर्न लभ्यते । इत्यादिवार्तिकोक्तरीत्या तत्कथनस्यावश्यकत्वात् । अतश्च यद्यपि शाक्यादिभिः स्वग्रन्थानां वेदमूलत्वेन प्रामाण्यानङ्गीकारान्नैव तन्निरासे प्रयोजनम्; तथापि वैदिकानामेव वेदमूलत्वभ्रान्तेः प्राप्ताया निराकरणद्वारा आभासत्वनिरूपणार्थत्वेनायमारम्भो युक्त इति भावः ॥

## ( शाक्यपदस्य पाशुपतपाञ्चरात्रादिकर्त्रुपलक्षणतानिरूपणम् )

अत्रच शाक्यादिपदं यानि त्रयीविद्भिः न परिगृहीतानि किंचित्तन्मिश्रधर्मकंचुकच्छायानि लोकोपसंग्रहलाभख्यातिपूजाप्रयोजनपराणि त्रयीविपरीतासंबद्धदृष्टशोभादिप्रत्यक्षानुमानोपमानार्थापत्तिप्राययुक्तिमूलोपनिबद्धानि सांख्ययोगपाञ्चरात्रपाशुपतनिर्बन्ध्यपरिगृहीतधर्माधर्मनिबन्धनानि, यानि च बाह्यतराणि म्लेच्छाचारमिश्रकभोजनाचारनिबन्धनानि तत्प्रणेतॄणामुपलक्षणम् ॥

## ( मन्वादिस्मृतीनामिव शाक्यादिस्मृतीनामपि प्रामाण्यशङ्का )

श्रुतिस्मृतिसंवादिकतिपयाहिंसासत्यदमदानदयादिनिबन्धनदर्शनेन तन्मध्यपतितचैत्यवन्दनादीनामपि युक्तं धर्मत्वमित्यभिसंधाय पूर्वपक्षे हेतुं दर्शयति—**क्षत्रियत्वप्रसिद्धेरिति** ॥ स्मृतीनामपि इत्यपिना त्रैवर्णिकतया संभावितवेदसंयोगमन्वादिप्रणीतस्मृतीनां वेदमूलकतया प्रामाण्यं, एवमासामपीति दृष्टान्तोक्तिः सूचिता ॥ तेन तद्वदेव मूलानुमानस्यानुपलब्धिविरोधः । प्रत्यक्षश्रुतिमूलत्वपक्षेण तावत्परिहृतो ज्ञापितः । अधुना मलिनशाखामूलत्वपक्षे तु विरोधशङ्कैव नास्तीत्यभिप्रेत्य तत्पक्षं दर्शयति—**तन्मूलेति** ॥ एवंच यावत् किंचित् कियन्तमपि कालं कैश्चिदाद्रियमाणं प्रसिद्धं गतं तत्प्रत्यक्षशाखाविसंवादेऽप्युत्सन्नशाखामूलम् । तेनास्मिन् पक्षे यस्मै यद्वोचते स तत् प्रमाणीकुर्यादिति दोषो नापद्यत इति भावः ॥

## ( शाक्यादिस्मृत्यप्रामाण्यव्यवस्थापनम् )

**तेषां स्मरणादिति** ॥ "या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृता" इत्यादिना मन्वादिभिः अप्रमाणत्वेनैवैषां ग्रन्थानां स्मरणात् इत्यर्थः ॥

## (शाक्यादिस्मृत्यप्रामाण्यस्य सूत्रारूढत्वनिरूपणम्)

**सूत्रार्थ इति** ॥ सूत्रयोरर्थ इत्यर्थः । वेदविद्वेषरूपे विरोधे त्रयीबाह्यमेवंजातीयकं अनपेक्ष्यमप्रमाणम् । **अथवा**—शाक्यस्य क्षत्रियत्वप्रसिद्धेस्तस्यच प्रवक्तृत्वप्रतिग्रहीतृत्वनिषेधात् शाक्यस्य तदनुष्ठातृत्वात् स्वधर्मविरोधे तदुक्तमनपेक्ष्यमित्याद्यसूत्रार्थः ॥

## ( शाक्यमनुस्मृत्योः साम्यशङ्कानिराकरणेन वैषम्यनिरूपणम् )

नचैवं मनोरपि क्षत्रियत्वेन प्रवक्तृत्वानुपपत्तिः; "यद्वै किंच मनुरवदत्तद्भेषजम्" इतिश्रुत्या तस्य तदभ्यनुज्ञानात् । शाक्यादिभिश्च स्वप्रतिपाद्यार्थेषु बहूनामसद्धेतूनामेवोपादानान् कस्यापि सद्धेतोरदर्शनाच्चानपेक्ष्यम् । मन्वादीनांतु हेतूपन्यासाभावात् क्वचित्सत्त्वेऽपि वा "वेद एव द्विजातीनां निःश्रेयसकरः पर"; इत्यादिना प्राधान्येन वेदमूलत्वस्यैव धर्मेऽभिधानात् हेत्वधिकरणन्यायेनार्थवादमात्रत्वान्न दोषः । अत एव शाक्यादीनां हेतुकत्वात् "हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्" दित्यादिनाऽसंभाष्यत्वमुक्तमिति द्वितीयसूत्रार्थः । **वेदमूलकत्वकल्पनानुपपत्तेरिति** पदं हेतुदर्शनस्याप्युपलक्षणं द्रष्टव्यम् ॥

## ( पाञ्चरात्राद्यप्रामाण्यवर्णनम् )

यस्तु सांख्ययोगपाञ्चरात्रादिषु शिष्टत्रैवर्णिकपरिग्रहः, स न तन्मूलः, किंतु नृसिंहरामतापनीयोपनिषच्छ्रुत्यगस्त्यादिसंहितामूल एव । अत एव शिष्टत्रैवर्णिकापरिगृहीतवामागमप्रतिपादकानां तेषां अप्रामाण्यम् । यत्तु तत्रेतरागमसंवादि तच्छाक्यानामिवाहिंसादि वामागमपरिग्रहभक्त्युद्भवाभिप्रायमेवेति तदनुष्ठानमपि न तन्मूलम् । शिष्टानामपि तु पूर्वेषां तदसदागममूलमेवेति न दोष इति सर्वथाऽप्रामाण्यमिति बहवः ॥

## ( श्रुत्यविरुद्धांशे पाञ्चरात्रादीनामपि प्रामाण्यमितिश्रुतिमूलकतत्सिद्धान्तनिरूपणम् )

पूज्यपादैस्तु यत्प्रत्यक्षश्रुतिमूलं दृश्यमानशिष्टत्रैवर्णिकपरिगृहीतं तदंशे प्रामाण्यमुक्तं कौस्तुभे । अत एव "सांख्यं योगः

नैव तेषां स्मरणाद्वेदाप्रामाण्यवादिभिरेव च तत्प्रामाण्यस्वीकाराद्वेदमूलत्वकल्पनानुपपत्तेरप्रामाण्यमिति—सूत्रार्थः ॥ २ ॥ ६ ॥ इति द्वितीयं विरोधाधिकरणम् ।

( ३ अधिकरणम् । )

शिष्टाकोपे ॥ स्मार्तानामाचमनादीनां श्रौतैः क्रमकालपरिमाणादिभिर्विरोधे श्रौतत्वात्क्रमादीनामेव प्राबल्यात् तद्विषयस्मृतीनामप्रामाण्यम् । न हि "क्षुते आचामेदि"ति विहितस्य स्मार्तस्याचमनस्य वेदवेदिकरणमध्येऽनुष्ठाने "वेदं

पाञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः" इति महाभारतवचनेन प्रामाण्यमुक्तं, तथापि "यो यदंशेन मार्गाणां वेदेन न विरुध्यते। सोंऽशः प्रमाणमित्युक्तं केषांचिदधिकारिणामि"ति मुक्तिखण्डगतचतुर्थाध्यायवचनेनाधिकारिविशेषपरतया उपसंहृतमिति दर्शितं माधवेन । यथाचैवं सत्यविरुद्धानां शाक्यादिप्रमाणानां प्रामाण्यं तदग्रे निरसिष्यते ॥

**( स्मृत्यधिकरणगतस्य प्रामाण्यवर्णनस्याधिकारिविशेषपरतया योजनम् )**

यत्तु स्मृत्यधिकरणे सांख्यादीनां बाह्यग्रन्थानां चोपयोगप्रतिपादनं, तत् धर्ममोक्षसाधनज्ञानोपयोगिवैराग्यादिप्रतिपादकयुक्तिकथनपरतया न धर्माद्युपदेशपरतयेति न विरोधः । एवंसति यद्यपि तापनीयादिप्रत्यक्षश्रुतिमूलस्य वामागमस्य प्रत्यक्षश्रुतिविरुद्धस्य वा प्रामाण्यं दुर्निवारम्; तथापि "पाञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम् । वेदभ्रष्टान्तसमुद्दिश्य कमलापतिरुक्तवान्" । तथा "अत्यन्तस्खलितानां हि द्विजानां वेदमार्गतः । पाञ्चरात्रादयो मार्गाः कालेनैवोपकारकाः" । तथा "शापाद्वा गौतमादीनां पापाद्वा महतो नराः । ये गता वेदबाह्यत्वं ये च संकीर्णयोनिजाः । तेऽधिक्रियन्ते तन्त्रादौ स्त्रीशूद्राश्च यथायथम्" इत्यादिपुराणवचनेभ्यः अधिकारिविशेषपरतयेष्टमेव तत्प्रामाण्यं, नतु वैदिकाधिकारिविषयम् । **अतएव**—तेषु न शिष्टत्रैवर्णिकपरिग्रह इत्यलं विस्तरेण ॥

**इति द्वितीयं विरोधाधिकरणम् ॥**

---

**( विरोधाधिकरणेन द्वेधा संगतिनिरूपणम् )**

एवं पूर्वाधिकरणे भाष्यकारमते श्रुतिविरुद्धानां पुरुषार्थक्रत्वर्थस्मृतीनां स्वरूपेणैवाप्रामाण्ये साधिते वार्तिककारमते च अननुष्ठानलक्षणाप्रामाण्ये साधिते संप्रति प्रत्यक्षश्रुतिविरोध एव क्वास्ति क्व नास्तीत्येवं बलाबलाधिकरणोत्तरमहीनाधिकरणप्रभृतिष्विव विचारकरणेन कोष्ठशोधनिकारूपेणास्य संगतिं **अथवा** श्रुतिविरोधे सत्यपि स्मृतिप्रमेयस्य पदार्थत्वात् प्राबल्येन प्रामाण्यमित्यपवादकरणादापवादिकीं सङ्गतिं वा स्पष्टत्वात् तथा सूत्रदर्शितामपि सिद्धान्तोपक्रमतां प्रयोजनाभावाच्चोपेक्ष्य विषयं प्रदर्शयन् पूर्वपक्षमेवाह—**स्मार्तानामपि** ॥ "आचान्तेन यज्ञोपवीतिना कर्तव्यं" "दक्षिणाचारेण कर्तव्यं" इत्यादिस्मृतिविहितानामित्यर्थः । अन्तिमस्मृतौ दक्षिणेन हस्तेन आचरणेन कर्तव्यमित्यर्थात् "लोहितोष्णीषा" इत्यत्रेव अप्राप्तदक्षिणहस्तविधानं ज्ञेयम् ॥

**( शाखान्तराधिकरणगतार्थताशङ्कानिरासः स्मृतिपदेनेतिनिरूपणम् )**

शाखान्तराधिकरणसमाप्तौ "अपि वा क्रमसंयोगात् विधिपृथक्त्वमेकस्यां व्यवतिष्ठेते"ति सूत्रेण क्रमकालपरिमाणविरोधात् शाखान्तरीयपदार्थानुपसंहारमाशंक्य "विरोधिनां त्वसंयोगादैककर्म्ये तत्संयोगाद्विधीनां सर्वकर्मप्रत्ययः स्यात्" इति सूत्रेण पदार्थानां क्रमादिबाधकत्वं वक्ष्यते इति न तेन गतार्थता, तत्रोभयोः श्रौतत्वेन अन्यतरसमवायाभावात् युक्तं पदार्थानां बाधकत्वम्, इह तु प्रामाण्यदौर्बल्यादस्तु बाध्यत्वमिति शङ्कोत्थानसूचनेन परिहर्तुं—**स्मृतीनामित्युक्तम्** । आचारप्रापितानामित्यस्योपलक्षणम् । तत्रत्यस्यैव प्रमेयबलस्य प्रमाणबलाबलबाधायोपन्यासात् नानेनापि तस्य गतार्थत्वमिति भावः ॥

**( आचमनादिभिः क्रमस्य विरोधसमर्थनम् )**

**विरोधे इति** ॥ यद्यपि भोजनादिनिमित्तकस्याचमनस्य पुरुषार्थत्वात् सर्वप्रयोगादौ क्रियमाणस्यापि तस्य मध्ये प्रसक्तेरविरोधः; तथापि द्वयोः पदार्थयोः मध्ये क्षुतादिनिमित्ताचमनस्य क्रत्वर्थस्य प्रसक्तेर्भवत्येव सः । अतएव विततैकपदार्थकरणमध्यप्रसक्तस्य क्षुतादिनिमित्तस्य प्राप्तौ यद्यपि नाचमनविधानं, किन्तु "क्षुते निष्ठीवने चैव परिधानेऽश्रुपातने । न तु कर्मस्थ आचामेद्दक्षिणं श्रवणं स्पृशेत्" इतिस्मृतिविहितदक्षिणकर्णस्पर्शेऽस्त्येव विरोध इति तस्याप्युदाहरणत्वम् । एवं यज्ञोपवीतस्यापि "सदोपवीतिना भाव्यम्" इति स्मृतौ सदाशब्दसंयोगात् पुरुषार्थत्वेनैव विधानेऽपि "अनुपवीतश्च यत्करोति न तत्कृतम्" इत्युत्तरार्धेन कर्तव्यकर्ममात्राङ्गत्वेन विधानात्स्वरूपेण तस्य विरोधाभावेऽपि स्रस्तस्य पुनस्समीकरणे नष्टस्य पुनर्धारणे वाऽस्त्येव सः । एवं शिखाबन्धनेऽपि इत्युदाहरणत्वम् । एवं दक्षिणवाक्येऽपि भोजनादौ पुरुषार्थत्वेन विहितस्य दक्षिहस्ताचरणस्य विरोधाभावेऽपि क्रत्वर्थस्य तस्यास्त्येव विरोधः । हस्तद्वयेनानुष्ठानेऽविलम्बापरपर्यायप्रयोगप्राशुभावस्यैकेन हस्तेनानुष्ठाने बाधापत्तेः । अतो युक्तं सर्वेषां उदाहरणत्वं विरोधप्रसक्त्येति भावः ॥

कृत्वा वेदिं करोती''ति श्रुतिबोधितः क्रमोऽनुष्ठातुं शक्यते। स्मार्तपदार्थानांच बहुत्वात् पूर्वाह्णादिः कालः प्रयोगविध्यवगतंच परिमाणं न शक्यतेऽनुग्रहीतुम्। नच श्रौतत्वेऽपि

## ( वेदकरणवेदिकरणपदयोरर्थः )

पूर्वपक्षसाधकं श्रुतिविरोधं दर्शयितुं श्रौतैः इत्युक्तम्। तमेव विरोधं दर्शयति—**नहीति** ॥ **वेदं कृत्वेति** ॥ वेदो नाम सम्मार्जनसाधनदर्भमुष्टिः। तस्य करणं नाम बन्धनाग्रपरिवासनादिसंस्कारः। वेदिर्नाम गार्हपत्याहवनीययोर्मध्ये चतुरङ्गुलखाता भूमिः। तत्करणं नाम वेदेन सम्मार्जनमुद्धननादिसंस्कारश्चेति वेदवेदिकरणशब्दयोरर्थः॥

## ( आचमनादीनां प्रयोगविध्यसंग्रहेण गौणक्रमविरोधसमर्थनम् )

**श्रुतिबोधित इति** ॥ एतच्च श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यपाञ्चमिकषट्प्रमाणगम्यक्रममात्रस्योपलक्षणम्; अर्थादिक्रमस्यापि प्रयोगविधिविधेयत्वात्। प्रत्यक्षश्रुतप्रधानविधेरेव अङ्गविध्येकवाक्यतामात्रकल्पनया प्रयोगविधिव्यपदेश्यत्वात् प्रत्यक्षश्रुतिविहितत्वाविरोधः। एवंच स्मार्तानां क्षुतादिनिमित्तकाचमनादीनां भेदेन होमवत् वैदिकैस्सह क्रमनियमे मानाभावात् वैदिकानामेवाङ्गानां क्रमावधारणात् प्रयोगविधिना च नियतक्रमकाणामेव पदार्थानां विधानात् तद्बहिर्भूताचमनादीनां नैव प्रयोगविधिसंभव इत्यर्थः॥

## ( मध्ये आचमनानुष्ठाने पूर्वाह्णप्रयोगप्राशुभावादिबाधापत्तिनिरूपणम् )

**पूर्वाह्णादिरिति** ॥ आदिपदेनाग्निहोत्राङ्गसायंप्रातःकालयोरपि संग्रहः। यथैव ''पूर्वाह्णो वै देवानामि''ति श्रुत्या पूर्वाह्णकालो विहितः, तथैव प्रयोगविधिना अङ्गप्रयोगविशिष्टभावनाविधानेन युगपदनुष्ठानाक्षेपादत्यन्तयौगपद्याशक्तेश्चाङ्गप्रधानानामङ्गानां च परस्परं प्रत्यासत्तिलक्षणः प्रयोगप्राशुभावलक्षणश्च कालो बोध्यते। तयोरपि मध्ये स्मार्तपदार्थानुष्ठाने बाधः स्यादेवेत्यर्थः॥

## ( परिमाणस्यापि प्रयोगविध्यवगमनिरूपणम् )

**प्रयोगविध्यवगतं चेति** ॥ किं कश्चित् पदार्थो विस्मृतः? कृतं वा सर्वमिति सन्देहेन वैगुण्याशङ्कोदये ''यदेव श्रद्धया करोति तदेव वीर्यवत्तरं भवती''ति वचनावगतातिशयफलजनकफलावश्यंभावनिश्चयात्मकश्रद्धाविरहात् फलानुत्पत्तेर्दैवात् सकलवैदिकपदार्थानुष्ठाने कृतेऽपि संपूर्णफलप्राप्तये कृताकृतसन्देहस्यावश्यापनेयत्वात् तस्य चानुष्ठेयपदार्थसंख्यासंपत्तिपर्यालोचनं विनैव निराकर्तुमशक्यत्वात् प्रयोगवचनेन श्रुत्यादिविनियोज्यानां प्रचयसिद्धेयत्तावदवधारणस्यार्थादाक्षेपमभिप्रेत्यावगतं चेत्युक्तम्। ततश्च प्रथमावधृतस्य परिमाणस्य प्रथमापरिकल्पितपश्चादागतस्मार्तपदार्थानुष्ठानेन भ्रंशात् पुनः तत्कृताकृतानिरूपणादनिवृत्तवैगुण्याशङ्कस्य सम्यक्कृतत्वादिति-

क्रमादेः पदार्थधर्मत्वात् पदार्थभूतेभ्यः आचमनादिभ्यो दौर्बल्यम् प्रमाणपूर्वकत्वात् प्रमेयावगमस्य प्रथमावगतप्रमाणबलाबलापेक्षया प्रमेयबलाबलस्य दौर्बल्यादिति प्राप्ते—

मित्तसंस्कारपाटवाभावात् अपूर्वदौर्बल्येन न्यूनफललाभप्रसंग इत्यर्थः। **तदुक्तं वार्तिके**—''तच्चातिशयवत्सर्वं सार्थवादाद्विधेर्गतम्। न्यूनत्वाक्षमयावश्यं विरुद्धां बाधते स्मृतिमि''ति॥

## ( अङ्गगुणविरोधेचेतिन्यायविरोधस्य पूर्वपक्षे प्रसक्तस्य परिहरणम् )

**यत्तु**—सिद्धान्ते ''अङ्गगुणविरोधेच तादर्थ्यादि''ति द्वादशिकन्यायेनाङ्गभूतानां इष्ट्यादीनां प्रधानभूतसोमकालानुरोधेन ''य इष्ट्ये''ति वाक्यबोधितपर्वकालबाधवदिहापि पदार्थत्वेन प्रधानभूताचमनाद्यनुरोधेन तदङ्गक्रमादेरेव विरोधे सत्यपि युक्तो बाध इत्युच्यते, तदनूद्य दूषयति—**नचेति** ॥ **प्रथमावगतेति** ॥ तेन प्रथमावगतेन प्रमाणबलाबलेनाचमनादिभ्यः क्रमादीनां बलीयस्त्वे निर्णीते निराकाङ्क्षत्वान्न पश्चादवगतं प्रमेयबलाबलमादर्तव्यमित्यर्थः॥

## ( आचमनादिभिः स्मार्तैः क्रमकालादेरविरोधेन सिद्धान्तः, तस्य सूत्रारूढत्वंच )

अत्रच ''अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्'' इति सिद्धान्तसूत्रं वार्तिककृता विरोधे सत्यपि प्रमेयगतबलाबलेनाचमनादीनां प्रामाण्यपरतया यथापठितावधिनैकदाऽवतार्य पुनरप्यविरोधप्रदर्शनं सूत्रारूढं कर्तुं ''तेष्वदर्शनात् विरोधस्य समा विप्रतिपत्तिः स्यादि''त्युत्तरसूत्रगतस्य ''तेष्वदर्शनात् विरोधस्ये''त्यंशस्यानुषङ्गं कृत्वा विरोधप्रदर्शनपरतया अनुषक्तद्वितीयावधिनाऽवतारितम्। तत्र विरोधे सत्यपि प्रमेयबलाबलस्य प्राबल्यहेतोस्तुष्यतु दुर्जन इति न्यायेनोपपादनीयतया मुख्यत्वाद्विरोधाभावस्यैव मुख्यहेतुतया तत्प्रदर्शनपरत्वेन सूत्रार्थं प्रथमतोऽनुसंधाय सिद्धान्तमाह—**पदार्थेति** ॥ क्रत्वपूर्वस्यानिर्ज्ञाताङ्गपरिमाणतया श्रौताङ्गमात्रेण नैराकाङ्क्ष्याभावाद्यथा विरोधाभावे बलाबलमनादृत्य श्रुत्यादिसमाख्यापर्यन्तैस्सहानारभ्यवादेन प्रापितान्यङ्गानि समुच्चित्य गृह्यन्ते, एवं स्मृत्याचारप्राप्तान्यपि; सर्वेषां करणोपकारसाधनानां अन्वयोत्तरमनुष्ठानाय प्रयोगविधेरनुष्ठानात्मनः प्रवृत्तेः। तेन च बोधितप्रयोगवेलायामेव पदार्थानामपेक्षितं क्रमकालादि प्रयोगावच्छेदकतया अन्वीयमानं यावत्प्रमाणप्रापितपदार्थप्रयोगविरोधेनैवावच्छेदकतया कल्प्यते; कालादीनां प्रयोगविध्यन्वयित्वस्यैकादशे वक्ष्यमाणत्वेनाङ्गप्रधानसाधारण्यात्। नच स्मार्तानां वैदिकैस्सह क्रमे नियामकाभावः; भेदनहोमवन्निमित्तसन्निपातादेवोपस्थित्या स्थानादेव तन्नियमोपपत्तेः। श्रुतिक्रमेण प्रबलेनापि पदार्थबाधापत्त्या बलवत्पदार्थाश्रितस्य स्थानस्य बाधायोगात्॥

पदार्थग्राह्यपेक्षत्वात् क्रमादेरुत्तरकालिकस्य यावत्प्रमाणगम्यपदार्थाविरोधेनैव कल्पनीयत्वान्न तावत्पदार्थविरोधित्वम् । परिमाणंतु न कस्यचिच्छास्त्रस्यार्थ इति न तस्य श्रौतत्वम् । विरोधेऽपि आचमनादीनां पदार्थत्वात् प्राबल्यमेव । प्रमाणानां हि न स्वरूपतो विरोधोऽपि तु प्रमेयविरोधनिबन्धनः । तद्यदैव प्रमेयविरोध आलोच्यते तदैव तद्गतेन बलाबलेन निर्णीते शास्त्रार्थे न प्रमाणबलाबलस्य नियामकत्वमिति प्रमाणमेव तत्स्मृतिः ।

**यद्वा**—यच्छाक्यादिग्रन्थेषु वेदाविरुद्धं दानादिवचनं तस्य भवतु प्रमाणतेत्याशङ्क्य, "स्वाध्यायोऽध्येतव्यः", "वेदोऽखिलोधर्ममूलं तद्विदाञ्च स्मृतिशीले" । "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" । इत्यादिवचनैर्नियतप्रमाणप्रतिपाद्यानामेव धर्मत्वप्रमि-

## ( स्मार्तानां केषांचन पदार्थानामन्तेऽनुष्ठानम् )

**अत्रैवमवधेयम्**—यत्र स्थलविशेषपुरस्कारेणैव स्मार्तपदार्थविधिः तत्र स्थलान्नानादेव तस्य क्रमः, परंतु श्रुतिविहितक्रमविरोधे तस्य बाधेनान्ते पदार्थानुष्ठानम् । यत्रतु स्मृतौ पदार्थमात्रस्यैव क्रत्वङ्गतया विधानं न स्थलविशेषस्य, तत्रागन्तूनामन्ते निवेशात्स्यादेवान्तेऽनुष्ठानम् इति—**ध्येयम्** । इहतु "आचान्तेन कर्तव्यमि"ति स्मृतिसहकृतस्थानादेव तेषां क्रम इति न बाधकम् । परिमाणस्य तु साक्षात् शास्त्रेण विध्यभावात् पूर्वोक्तरीत्या कथंचित्तदाक्षेपेऽपि क्रमकालवत् प्रयोगवेलायामेवाकाङ्क्षणात् प्रयुज्यमानपदार्थाङ्गतयैव तत्प्रवृत्त्युत्तरकालमाकस्मिकभेदनहोमप्रायश्चित्तादिसमवायावधारणेनेव स्मार्ताचमनादिपदार्थावधारणेनापि कल्पनीयस्य सर्वपदार्थावच्छेदकतयैव प्रयोगवचनोपसंग्रहान्न विरोध इत्यर्थः ॥

## ( आचमनक्रमयोर्विरोधाङ्गीकारेणापि आचमनरूपप्रबलपदार्थाश्रितत्वात् आचमनस्मृतिप्रामाण्यनिरूपणम् )

अधुना तुष्यतु दुर्जन इति न्यायेन विरोधमङ्गीकृत्यापि प्रामाण्यं साधयति—**विरोधेऽपिचेति** ॥ तदेवोपपादयति—**प्रमाणानांहीति** ॥ प्रमाणयोरश्वमहिषवत्स्वरूपेण विरोधाभावेन विरुद्धप्रमेयप्रमापकत्वेनैव तस्य प्रतीतेः प्रथमं प्रमाणस्वरूपालोचनेऽपि प्रमेयस्वरूपालोचनं विना तदप्रतीतेः तत्स्वरूपालोचनोत्तरं विरोधप्रतिसन्धाने तद्गतेन धर्मिधर्मरूपप्रमेयबलाबलेनासंजातविरोधिनाऽऽचमनादेर्बलीयस्त्वनिश्चये सति न क्रमाद्यनुग्रहः संभवति । यद्यपि वा प्रमेयविरोधानुसन्धानोत्तरक्षणे तद्गतबलाबलोपस्थितिकाले विरुद्धप्रमेयप्रतिपादकत्वेन प्रमाणयोरपि विरोधोपस्थितिः स्यात्; तथापि तत्र प्रमेयबलाबलोपस्थित्युत्तरक्षणेऽसंजातविरोधित्वान्निर्णये सति तन्निर्णयवेलायां न प्रमाणगतबलाबलोपस्थितिरिति इतरस्य निर्णयपदवीमनागतस्य श्रुतिलिङ्गादिवदेवोत्तरभाविनो दौर्बल्यम् ॥ नच श्रुतेरत्यन्तबाधः; आचमननिमित्तोपनिपाताभावे सार्थक्यात् । आचमनादेः श्रुत्यर्थत्वेनोत्तरपदार्थाङ्गत्वेनाङ्गीभूतवेदिकरणव्यवधायकत्वायोगाच्च तदनापत्तेरिति भावः । **तदुक्तम् वार्तिके**—"शौचयज्ञोपवीतादेर्न स्वतन्त्रपदार्थता । सर्वं ह्यङ्गप्रधानार्थं तेन न व्यवधायकम्"—**इति** ॥ अत आचमनादेर्दुर्बलत्वात् श्रुत्या बाधाभावात् प्रामाण्यमुपसंहरति—**इति प्रमाणमेवेति** ॥

## ( वार्तिककृता भाष्यकारीयाधिकरणान्तरपरत्वस्यखण्डनं वार्तिकमतातिरिक्तन्यायसुधाकारमतसूचनंच )

अत्र वार्तिककृता पूर्वोक्तरीत्या विरोधस्य स्फुटत्वात् पूर्वपक्षायोगात् अत एव अभ्युपेत्य विरोधं प्रमाणबलपूर्वपक्षस्याप्ययोगात् यज्ञोपवीतस्य "उपव्ययते देवलक्ष्ममेव तत्कुरुते" इति दर्शपूर्णमासप्रकरणगतवाक्येन प्रकृतावतिदेशतो विकृतावपि श्रुत्यैव विधानादस्य वासोविन्यासपरत्वेऽपि "यज्ञोपवीत्येवाधीयीत" इति काठकवाक्येन ब्रह्मसूत्रस्यापि श्रुत्यैव विधानात् अन्याभिश्च श्रुतिभिः आचमनदक्षिणहस्तादीनामपि प्रत्यक्षत एव विधानात् स्मार्तत्वानुपपत्तेरुदाहरणत्वायोगाच्च भाष्यकारीयाधिकरणान्तररचनां प्रदूष्य अधिकरणान्तरत्वव्याख्यानस्यायोगात् विरोधाधिकरणसाधितशाक्यादिग्रन्थाप्रामाण्याक्षेपसमाधानपरतया तच्छेषत्वेनाद्यं सूत्रद्वयम् तृतीयन्तु स्मृत्यधिकरणसाधिताचारप्रामाण्याक्षेपसमाधानपरतया तच्छेषतयैव व्याख्येयम् **इत्युक्तम्**, तदनुसंधाय वर्णकान्तरमाह—**यद्वेति** ॥ यथाचात्र यज्ञोपवीतादीनां श्रौतत्वं वार्तिककारोक्तं अभ्युच्चययुक्तिमात्रं तथा न्यायसुधायां कौस्तुभे च द्रष्टव्यम् । विस्तरभयात्तु नेह प्रपञ्च्यते ॥

## ( शाक्यादिनिबद्धदानादिप्रामाण्यम् )

**दानादीति** ॥ विहारासनवैराग्यध्यानसत्यदमदानदयाऽहिंसादीनां आदिपदेन संग्रहः ॥

## ( निषेधादिवाक्यानामपि धर्मपर्यवसानोपपादनम् )

**वेदोऽखिल इति** ॥ यद्यपि अखिलस्य वेदस्य न धर्ममूलत्वसंभवः; श्येनादिवाक्यानां निषेधवाक्यानां च तन्मूलत्वायोगात्, तथापि धर्ममबोधयतामपि तद्वाक्यानां पारायणब्रह्मयज्ञादिनिर्वर्तनद्वारा धर्मं प्रति कारकत्वात् प्रायश्चित्तविध्यपेक्षितनिमित्तसमर्पकत्वेन विद्वद्वाक्यवत्परंपरया धर्मप्रमोपयोगसंभवाच्च न दोषः । **स्मृतिशीले इति** ॥ **शीलं** आचारः । **इत्यादिवचनैरिति** ॥ आदिपदेन "आयुर्वेदो धनुर्वेदो गान्धर्वं चेति तत् त्रयम् । अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु ।" इत्यस्य संग्रहः ॥

तैरन्यतः प्रमितस्य फलसाधनत्वाभावात् तेषामप्रामाण्यमिति

## ( शाक्यादिनिबद्धदानाद्यप्रामाण्यम् )

**अप्रामाण्यमिति** ॥ अतश्चाहिंसाद्यर्थस्य शिष्टपरिग्रहेऽपि तस्य वेदमूलकत्वेनाप्युपपत्तेः तद्विषयशाक्यादिवचनानां शिष्टैः प्रामाण्यानभ्यनुज्ञानात् शिष्टापरिग्रहात् न ततो ज्ञातं सदनुष्ठितं श्रेयस्साधनं भवतीति न तद्विषयतद्वचसां प्रामाण्यमित्यर्थः । **तदुक्तं वार्तिके**—तथाच प्रायश्चित्तादिदानकाले यो वाक्यमात्मीयं अन्यकविकृतं वा श्लोकं सूत्रं वोच्चार्य मन्वादिसंवादिप्रायश्चित्तं "दद्यान्न तत् कश्चिदपि धर्मार्थं प्रतिपद्यते। वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता । नित्यानामभिधेयानां मन्वन्तरयुगादिषु । तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताः । वचनानि प्रमाणानि नान्येषामिति निश्चयः"। **इति**॥ **तथा**—"स्मर्यते च पुराणेषु धर्मविप्लुतिहेतुषु । कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति" । अतस्सन्मूलमप्यहिंसादिवचनं श्वदृतिप्रक्षिप्तक्षीरवदनुपभोग्यं अविस्रम्भणीयं चेति॥

**इति तृतीयं शिष्टाकोपाधिकरणम्** ॥

## ( वर्णकान्तरावतरणम् )

**अथवा**—अत्रोत्सूत्रमथवा "न शास्त्रपरिमाणत्वादि"तिपूर्वतनसिद्धान्तसूत्रस्येहपूर्वपक्षत्वमभिप्रेत्य सौत्रं पूर्वपक्षं विषयप्रदर्शनपूर्वकमाह—**अनिबद्धानामिति** ॥

## ( आचारात्मतुष्ट्योरप्रामाण्यपूर्वपक्षः )

निबद्धाचारविषयवचनानां स्मृतित्वेनैव प्रामाण्यात् तस्य च वक्ष्यमाणाक्षेपहेतोरसंभवात् अनुदाहरणत्वं सूचयितुं अनिबद्धानामित्युक्तम् । वसन्तोत्सवादीत्यादिपदेन तत्तद्देशभिन्नाचारमात्रस्य तथा 'भोजनव्यतिरेकेण जलं न पास्ये' इत्यादि श्रुतिस्मृत्यविरुद्धसंकल्पविषयायाः शिष्टात्मतुष्टेश्च संग्रहः । **इत्यादिनेति** ॥ आदिपदेन "श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक् संकल्पजः कामो धर्ममूलमिदं स्मृतम्" । "यस्मिन् देशे य आचारः" "आचारश्चैव साधूनाम्" इत्यादीनां संग्रहः । **निश्चयादिति** ॥ एतच्च क्रियारूपाणामाचाराणां अशब्दरूपत्वात् पुरुषहितबोधकत्वानुपपत्तेरप्युपलक्षणम् । एवं स्मृत्यधिकरणसाधितप्रामाण्याक्षेपमुपसंहरति—**अप्रामाण्यमिति** ॥

## ( धर्मबुद्ध्याऽनुष्ठाननिबन्धानाचारप्रामाण्यसिद्धान्तः )

**धर्मबुद्ध्येति** ॥ एतद्व्यावर्त्यं स्वयमेव स्फुटीकरिष्यते । धर्मबुद्ध्या शाक्यादिभिः अनुष्ठीयमानाचारप्रामाण्यव्यावृत्तये—**वैदिकैरि**त्युक्तम्। साक्षात् परंपरया वा वेदविहितकारित्वलक्षणशिष्टत्वगुणैरित्यर्थः । **स्मृतिवदेवेति** ॥

## ( श्रुतिस्मृतिविरुद्धाचाराप्रामाण्यनिरूपणम् )

शिष्टैस्त्रैवर्णिकपरिग्रहो नासति वेदमूलत्वेऽवकल्पते इति लोभादिकारणाभावे स्मृतिवदेव वेदमूलत्वमित्यर्थः । अत एव श्रुतिस्मृतिविरुद्धाचरणेषु सत्यपि धर्मत्वस्मरणे मातुलकन्यापरिणयादौ श्रुतिविरोधादेव विरोधाधिकरणन्यायेन श्रुतिमूलत्वाकल्पनम् । स्मृतिविरोधे तु वक्ष्यते । अतश्च श्रुतिस्मृत्यविरुद्धानां लोभादिदृष्टमूलतयाऽसंभावितानां सदाचाराणां वेदमूलत्वम् । अत एव स्मृतौ "श्रुतिस्मृत्यविरुद्धो यस्स सदाचार उच्यते" **इत्युक्तम्** इत्यर्थः ॥

**॥ ३ ॥ इति तृतीयं शिष्टाकोपाधिकरणम् ।**

## ( धर्मव्यतिक्रमादिनाऽऽचाराप्रामाण्यशङ्का )

अत्रच सकलसदाचारमूलभूताया एकस्या एव श्रुतेर्मूलत्वकल्पनं **अथवा** भिन्नानामित्यत्र निर्णयः कौस्तुभे द्रष्टव्यः । एवंच अशब्दरूपाणां आचाराणां आत्मतुष्टेश्च मूलभूतशब्दानुमापकत्वेन प्रामाण्यप्रयोजकत्वे स्मृत्यधिकरणेन सिद्धेऽपि केषांचित् शिष्टैरिन्द्रवसिष्ठादिभिर्धर्मव्यतिक्रमादनुष्ठीयमानानां अहल्यागमनरूपब्रह्महत्योपक्रमरूपसाहसादीनामपि प्रामाण्यापत्तिः। तथात्मतुष्टेरपि "कस्यचिज्जायते तुष्टिरशुभेऽपीह कर्मणि । शाक्यस्य वा कुहेतूक्तिर्वेदब्राह्मणदूषणे । पशुहिंसादिसंबद्धयज्ञे तुष्यन्ति हि द्विजाः । तेभ्य एव तु यज्ञेभ्यः शाक्याः कुध्यन्ति पीडिताः । शूद्रान्नभोजनेनापि तुष्यन्त्यन्ये द्विजातयः । स्वमातुलसुतां प्राप्य दाक्षिणात्यश्च तुष्यति । अन्येतु सव्यलीकेन चेतसा तन्न कुर्वते ।" इत्यादिवार्तिकोक्तरीत्याऽनवस्थितत्वात् वेदमूलकत्वासंभवात् प्रामाण्यानापत्तिरित्याशङ्कां निराकर्तुमाह—**व्यतिक्रमेति** ॥

## ( धर्मबुद्ध्याऽनुष्ठानाभावेन व्यतिक्रमाद्यप्रामाण्येऽपि इतरेषां सदाचाराणां प्रामाण्यमेवेति निरूपणम् )

इन्द्रवसिष्ठादीनां पूर्वोक्ताचरणस्य "श्रुतिसामान्यमात्राद्वा न दोषोऽत्र भविष्यति । मनुष्यप्रतिषेधाद्वा तेजोबलवशेन च । यथावा नाविरुद्धत्वं तथा तद्गमयिष्यते" । इतिवार्तिकोक्तप्रकारेण कौस्तुभाद्युपपादितेन विरोधपरिहारसंभवात् नैव विरुद्धत्वम् । धर्मबुद्ध्या अनुष्ठीयमानत्वाभावाच्च न सदाचारत्वमपि । अतस्तेषां लोभकामादिरूपदृष्टमूलत्वान्नैव प्रामाण्यम्। एवमात्मतुष्टेरपि यत्र तन्मूलत्वसंभवः, तद्विषये अप्रामाण्येऽपि श्रुतिस्मृत्यविरुद्धात्मतुष्टेः संभवत्येव तत् । अतएव आत्मतुष्टेर्धर्मजनकत्वसन्देहे निर्णायिकायाः "यदेव किंचनानूचानोभ्यूहत्यार्षं तद्भवती"ति वेदेनैव प्रामाण्याभ्यनुज्ञानात् धर्मत्वज्ञापकत्वस्य स्मृतावप्युक्तेः धर्मे ज्ञाते ज्ञापकतयापि प्रामाण्यमव्याहतमेवेत्यर्थः । **एतेन**—नित्यानुमेयत्वस्य पूर्वमेव निराकरणात् प्रत्यक्षश्रुत्यनुभवस्य स्वस्मिन् प्रत्यक्षबाधितत्वात् श्रुत्यनुमापकत्वासंभवात् अप्रामाण्यम् **इति—निरस्तम्**; "यदेवे"तिश्रुतेरेव प्रत्यक्षपठिताया इच्छाविषयस्य धर्मत्वबोधिकायाः स्वस्यानुभवसंभवेन तन्मूलकत्वोपपत्तेः । अत्र मतान्तरनिरासः कौस्तुभे द्रष्टव्यः ॥

**इति चतुर्थं आचारप्रामाण्याधिकरणम्** ॥

( ४ अधिकरणम्। )

**अपि वा कारणाग्रहणे** ॥ अनिबद्धानां वसन्तोत्सवाद्याचाराणां प्रामाण्यं न वेति सन्देहे एतेषां वेदमूलत्वे अष्टकादिवन्मन्वादिभिर्निबन्धनापत्तेः सामान्यतस्तद्विदाञ्च स्मृतिशीले इत्यादिना निबन्धनेऽपि च विशेषतोऽनिबन्धनेन तेषां श्रुतिदर्शनाभावनिश्चयादप्रामाण्यमिति प्राप्ते—धर्मबुद्ध्या वैदिकैरनुष्ठीयमानत्वात् स्मृतिवदेव वैदिकत्वम्। विशेषतोऽनिबन्धनं तु गौरवभिया न दोषः। व्यतिक्रमसाहसदर्शनं तु धर्मबुद्ध्याऽननुष्ठीयमानत्वात् न वैदिकम्। नचैतावता सर्वस्याप्यवैदिकत्वम्। अत आचाराणामपि धर्माधर्मयोः प्रामाण्यम् ॥ ४ ॥ **इति चतुर्थं आचारप्रामाण्याधिकरणम्।**

( ५ अधिकरणम्। )

**तेष्वदर्शनात्** ॥ अत्र शब्दप्रयोगरूपस्याचारस्य यत्रार्यम्लेच्छयोः परस्परमर्थविप्रतिपत्तिः, यथा पीलुशब्दस्य वृक्षविशेषे आर्याणां हस्तिन्यन्येषां, तत्र तयोस्तुल्यबलत्वम्; व्यवहारे आर्याणामिव म्लेच्छानामप्यभियुक्तत्वाविशेषात्, अवध्यस्मरणस्योभयत्रापि समानत्वाच्चेति प्राप्ते—

शक्यतावच्छेदकभेदेनानेकशक्तिकल्पनाप्रसङ्गात् एकत्रैव शक्तिर्नोभयत्र। नच विनिगमनाविरहः; आर्यप्रसिद्धेरेव नियामकत्वात्। आर्या हि शब्दैकसमधिगम्यधर्माधर्मयोरविप्लुतिलिप्सया शब्दार्थतत्त्वं विविच्य परिपालयन्ति, न म्लेच्छाः; दृष्टार्थव्यवहारस्य यथाकथंचिदपि सिद्धेः। अतस्तत्प्रसिद्ध्या वृक्षविशेष एव शक्तिः। गजप्रतीतिस्तु लक्षणया शक्तिभ्रमाद्वा। यत्र तु नियामकाभावस्तत्रागत्याऽक्षादिशब्दयोरेव शक्तिः।

( तेष्वदर्शनादितिसूत्रे भाष्यकृद्रचिताधिकरणशरीरसंग्रहः )

अत्र भाष्यकारेण व्याकरणाधिकरणे साधुशब्दप्रयोगनियमस्मृतेः वेदमूलत्वाभिधानादनादिवाचकाख्यसाधुशब्दप्रयोगस्य धर्मबुद्ध्यानुष्ठीयमानत्वाविशेषात् साधुशब्दप्रयोगस्य साक्षाद्धर्मतया तदन्तर्वर्तिपदानां पदार्थप्रतिपत्तिमुखेन धर्माधर्मोपयोगितया धर्मप्रामाण्यसंभवेन धर्मप्रमाणजिज्ञासोपपत्तेः अध्यायसंगतिं, शिष्टाकोपाधिकरणे स्मृत्यधिकरणसिद्धस्मृत्याचारप्रामाण्यस्य विरोधाधिकरणेनापादितस्य प्रतिप्रसवकरणेनाचारप्रामाण्यस्यापि प्रस्तुतत्वादनन्तरसंगतिं चाभिप्रेत्य यत्र "यवमयश्चरुः" "वाराही उपानहौ" "वैतसे कटे प्राजापत्यान् संचिनोति" इत्यादौ प्रयुक्तानां यववराहवेतसशब्दानामर्थप्रयोगाचारविप्रतिपत्तिः, यथा—बहुभिः यवादिशब्दाः प्रियंगु–वायस–जम्बुवृक्षेषु प्रयुज्यन्ते, कैश्चित्तु दीर्घशूक–सूकर–वंजुलेषु, तत्र प्रयोगप्रत्यययोरुभयत्राविशेषात् उभयत्र वाचकत्वकल्पनेनार्थद्वयस्यापि विकल्पेन ग्रहणं इति पूर्वपक्षं प्रापय्यानेकत्र शक्तिकल्पने गौरवादेकत्र शक्तिरपरत्र गौणी। तत्रापि यवपदस्य यवमयकरम्भपात्रविधिशेषतया "यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ती"त्याम्नानात् दीर्घशूक एव शक्तिः; फाल्गुनेऽन्यौषधिम्लानतायामपि प्रियंगूणां मोदाभावात्, वर्षासु तेषां मोदसत्त्वेऽपि अन्यौषधीनां म्लानाभावात् दीर्घशूकानां फाल्गुनेऽन्यौषधिम्लानतायामेव मोदसंभवेन तदुपपत्तेः। अत्र च वाक्यशेषस्य सत्त्वेप्यन्यत्राश्ववालादौ शक्तिग्राहकत्वे यवादिशब्दस्थले तन्निश्चायकत्वमात्रमेव लाघवात् कल्प्यते। शक्तिग्रहस्तु प्रयोगादेव। अत एव फाल्गुनादौ गोधूमादेर्मोदमानत्वेऽपि अप्रयोगादेव वाच्यत्वाप्रसक्तिः। एवं "वराहं गावोऽनुधावन्ति" "अप्सुजो वेतसः" इत्यर्थवादाभ्यां वराहवेतसशब्दयोरपि सूकरवंजुलयोरेव शक्तिः। गवामयत्वबुद्ध्या खेचरवायसानुधावनासंभवेन जम्बूवृक्षस्य स्थलाधिकरणस्य अप्सुजन्यत्वस्यासंभवेन तदनुपपत्तेः। अतश्च वाक्यशेषानुगृहीतार्यप्रसिद्धिरेव बलीयसीति सिद्धान्तितम् ॥

( वार्तिककारसंमताधिकरणशरीररचनापूर्वकं मूलकृता वार्तिकारीयाधिकरणशरीरपरिग्रहे निमित्तनिरूपणम् )

वार्तिककृता तु यववराहवेतसशब्दानां प्रियंगुवायसजम्बूरूपेष्वर्थेषु कस्मिन्नपि देशे शिष्टैरप्रयोगात् विप्रतिपत्त्यभावेन "सारस्वतं मेष"मित्यत्र "वाग्वै सरस्वती"ति वाक्यशेषेण सरस्वतीशब्दप्रकृतिनिर्णयस्येवेहापि "सन्दिग्धेषु वाक्यशेषादि"त्यनेन गतार्थत्वाद्वाक्यशेषाभावेनाभियुक्तप्रसिद्धेस्तुल्यबलत्वापत्तेश्च नोदाहरणत्वसंभवः। नवैतत्सदृशं वाक्यशेषनिर्णेयाभिधेयं त्रिवृदादिशब्दरूपं संभवत्युदाहरणम्; तत्र त्रैगुण्य एव लोकप्रयोगेनार्थविप्रतिपत्त्यभावात्। अतो भाष्यकारीयामधिकरणरचनामयुक्तां मत्वा पिकनेमाधिकरणे वक्ष्यमाणम्लेच्छप्रयोगाचारप्रामाण्यालोचनेन प्रासङ्गिकीं संगतिं चाभिसंधायार्यम्लेच्छविप्रतिपत्तिविषयशब्दप्रयोगरूपाचारोदाहरणेनापि आर्यप्रसिद्धेर्बलीयस्त्वं सिद्धान्तितम्। तद्वदेव भाष्यकारकृतं विचारं स्वयमप्युपेक्ष्य यथावार्तिकमेव विचारं दर्शयति—**तत्रेति**॥ "पैलवौदुम्बरौ दण्डौ वैश्यस्ये"तिगौतमस्मृतावित्यर्थः। **अवध्यस्मरणस्येति** ॥ अस्मादयं व्यवहारः प्रवृत्त इत्येवंरूपावधेरस्मरणस्येत्यर्थः ॥

( आर्यप्रसिद्धेरर्थनिर्णायकत्वम् तयोर्विरोधे वाक्यशेषस्येति निरूपणम् )

**आर्या हीति** ॥ आर्यपदं रसवीर्यविपाकवैचित्र्यज्ञानसिध्यर्थं यतमानानां वैद्यानामप्युपलक्षणम्। यथाकथंचिदपि सिद्धेरित्यस्याग्रे परिपालयन्तीत्यनुषङ्गः। **लक्षणयेति** ॥ पी-

ब्देषु उभयत्रापि शक्तिः; आर्याणामेवोभयत्र प्रयोगात् । तत्रापि क्वचिद्वाक्यशेषस्य नियामकता—यथा "यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ती"त्यनेन यवशब्दस्य दीर्घशूक एव शक्तिः । प्रियङ्गुषु तु लक्षणादिरिति ॥ ५ ॥ **इति पञ्चमाधिकरणे आर्यप्रसिद्धिनियामकतापरं प्रथमवर्णकम् ।**

**एवं वा**—यत्र मातुलकन्यापरिणयादौ स्मृत्याचारयोर्विरोधस्तत्रोभयोरपि श्रुतिकल्पकत्वात्तुल्यबलत्वमिति प्राप्ते—

स्मृतीनां सम्प्रत्ययप्रणीतत्वात् स्मृतिषु कर्तव्यतावाचिविधिप्रत्ययश्रवणाच्च बलीयस्त्वम् । आचारेषु तु आचरितॄणां जनानां मन्वाद्यपेक्षया तथा प्रत्ययितृतरत्वाभावादितस्ततो विप्रकीर्णपरप्रकरणादिगतश्रुत्यवगमस्याशक्यत्वात् कर्तव्यतावाचिविधिप्रत्ययस्यावश्यकल्पनीयत्वाच्च दौर्बल्यम् । अत एवेदानीन्तनाचारदर्शनेन श्रुतिद्रष्टुः स्मृतिं तदुपदेशं वा कल्पयित्वा श्रुतिकल्पनम्, स्मृतीनान्तु साक्षादेवेति

---

लुत्रक्षाधिकरणकबन्धनसंबन्धेन लक्षणया यत्र तु कथंचिदपि न शक्यसंबन्धलाभः, तत्र शक्तिभ्रमाद्वेत्यर्थः । **नियामकेति** ॥ यत्रार्याणामेवोभयत्र प्रयोगस्तत्र "अभियुक्ततरा ये ये बहुशास्त्रार्थदर्शिनः । ते ते यत्र प्रयुञ्जीरन् स सोर्थस्तत्त्वतो भवेत्" इतिवार्तिकदर्शितरीत्या निर्णयः । **अतएव**—असति वाक्यशेषेऽपि नक्षतिः । यत्र त्वेतयोरेवोभयत्र प्रयोगस्तत्र वाक्यशेषस्य नियामकतेत्यर्थः । **यवशब्दस्येति** ॥

**( संभवद्विप्रतिपत्तिकानामप्युक्ताधिकरणविषयत्वम् )**

एतच्च पूर्वोक्तरीत्या वार्तिकमते यवशब्दस्यार्थप्रयोगविप्रतिपत्त्यविषयत्वात् भाष्यकारदर्शितसंभवद्विप्रतिपत्तिविषयत्वेन कथंचिदुक्तमपि संभवद्विप्रतिपत्तिकोदाहरणान्तरोपलक्षणार्थत्वेन व्याख्येयमिति ध्येयम् ॥

**( विप्रतिपत्त्यधिकरणप्रयोजननिरूपणम् )**

प्रयोजनं पूर्वपक्षे गजदन्तप्रकृतिको विकल्पेन, सिद्धान्ते वृक्षमय एव विकल्पो न। तथा पीलुशब्दस्य पूर्वपक्षे हस्तिवाचकत्वेनापशब्दत्वाभावात् आहिताग्नेर्हस्त्यभिप्रायेण तच्छब्दप्रयोगे सारस्वतीष्टिः प्रायश्चित्तं न, सिद्धान्ते तु भवत्येवेति स्पष्टत्वान्नोक्तम् ॥

**( वार्तिककारीयवर्णकान्तरद्वयनिरूपणम् )**

विषयव्यावृत्त्यर्थं वार्तिककृता कृतं वर्णकान्तरद्वयम्, तत्राद्यमाह । **एवंचेति । परिणयादाविति** ॥ आदिपदेन पैतृष्वस्रीयादिपरिणयस्यानुपनीतेन भार्यया च सहभोजनस्य पर्युषितभोजनादेश्च संग्रहः ।

**स्मृतिविरुद्धाचारस्य प्रथमवर्णकविषयत्वोपपादनम् )**

सोऽयमाचारः आन्ध्रदेशे विद्यमानो "मातुलस्य सुतामूढ्वा मातृगोत्रां तथैवच । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत्" इति शातातपस्मृत्या तथा "पैतृष्वस्रीयभगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुरात्मजां गत्वा चान्द्रायणं चरेत्" इति मनुस्मृत्या च विरुद्धस्तत्र विचार इत्यर्थः ॥

**( आचारस्मृत्योः समबलत्वाचारप्राबल्ययोश्च निरूपणम् )**

धर्मत्वेन शिष्टत्रैवर्णिकपरिग्रहस्य श्रुतिकल्पकत्वस्योभयत्र तुल्यत्वात् विकल्पेन प्रामाण्यमिति पूर्वपक्षमाह—**तत्रोभयोरिति** ॥ एतच्च तुल्यबलत्वं "समा विप्रतिपत्तिः स्यादि"ति सूत्रानुरोधेनोक्तम् ॥ **वस्तुतस्तु**—प्रत्यक्षश्रुत्या विरुद्धस्मृतेर्मूलश्रुत्यनुमितिप्रतिबन्धलक्षणबाधासंभवेऽपि यथाश्रुतमूलनिश्चयादननुष्ठानरूपफलापहारलक्षणबाधस्येवेह स्मृतिविरोधेऽनुष्ठानात्मकस्याचारस्य फलापहारलक्षणस्य बाधस्यासंभवात् स्मृतेर्वाक्यात्मकत्वेन प्रत्यक्षश्रुत्यविरुद्धार्थप्रतिपादकश्रुतिकल्पनेन यथाश्रुतार्थत्यागलक्षणबाधसंभवेऽपि इहाचाराणां अवाक्यात्मकत्वेन अन्यथात्वस्यापि कल्पयितुमशक्यत्वात् तदसंभवे मिथ्यात्वलक्षणः परं बाधो वाच्यः । नचासौ संभवति; शिष्टत्रैवर्णिकपरिग्रहस्य दृष्टत्वात् । अतस्तेष्वाचारेषु स्मृत्यपेक्षया शीघ्रमेव मूलश्रुतिकल्पनया लब्धात्मकेषु बलवद्विरोधदर्शनात् बलीयस्त्वात् स्मृतेरेवाचारेण फलापहारलक्षणबाधसंभव इति न विकल्पोपीति ध्येयम् ॥

**( स्मृतिविरोधे आचारस्य श्रुत्यादिकल्पकत्वायोगेनाप्रामाण्यनिरूपणम् )**

सिद्धान्तमाह—**एवमिति ॥ स्मृतीनामिति ॥ अयं भावः**—मन्वादीनां "साक्षात्कृतधर्माण ऋषय" इति स्मृतेः सकलतत्त्वज्ञानसंपन्नत्वात् तत्प्रणीतस्मृतेः वेदविरोधेऽपि श्रुतिमूलत्वाविरोधे सुतरामाचारविरोधे तन्मूलत्वविरोधासंभवात् न तावन्मूलश्रुतिकल्पनप्रतिबन्धसंभवः, आचारस्य तु मन्वादिगतस्य अस्मदादिभिः अनुपलंभादर्वाचीनानां च सकलधर्मतत्त्वज्ञानाभावात् प्रमादादिसंभवेन चाविश्वसनीयत्वात् तदाचारस्य श्रुतिमूलत्वकल्पने श्रुतिविरोधवत् स्मृतिविरोधेऽपि भवत्येवानुष्ठानलक्षणफलापहाररूपबाधसंभवेन प्रतिबन्धः । शिष्टाचारो हि पूर्वपूर्वाचार्यगतस्सन्नुत्तरोत्तरान् प्रति स्वकर्तव्यतां प्रमापयन् स्वानुष्ठानफलकतया प्रामाण्यं लभते । संभवति च तस्योत्तरोत्तरानुष्ठानलक्षणफलापहाराद्बाधः ॥

**( आचारस्य श्रुतिकल्पने स्मृत्यपेक्षया विप्रकर्षनिरूपणम् )**

**किंच**—आचारस्य नित्यानुमेयश्रुतिमूलकत्वनिरासात् प्रत्यक्षानुभूतश्रुतिमूलत्वं कल्पनीयम्। नच इदानीन्तनानामनुष्ठातॄणां इतस्ततो विप्रकीर्णशाखान्तरगतश्रुतिदर्शनं संभवति । अतोऽर्वाचीनाचारान् दृष्ट्वा न झटित्येव श्रुतिविषयानुभवक-

विशेषः । अतः स्मृतिविरोधे आचारस्य यावच्छ्रुतिदर्शनं अनुष्ठानम् ॥ ६ ॥ इति पञ्चमाधिकरणे स्मृतिविरुद्धाचाराप्रामाण्यपरं द्वितीयवर्णकम् ।
एवं वा—त्रिवृच्चर्वश्ववालादिशब्देषु यत्र लोकवाक्यशे-

ल्पनम् वाधितत्वात् इति मन्वादिभ्यः मन्वाद्युपदेशेनैवाद्ययावदर्वाचीनपर्यन्तमेतदाचारानुष्ठानकल्पनमिति श्रुत्यधिगमकल्पनं यावदनुष्ठानमिति मन्वादेरनुष्ठानदर्शनेन वा अद्यतदनुष्ठानदर्शनकल्पनं वा मन्वादिभिस्तु परं एतदाचारमूलश्रुतिर्दृष्टेति कल्प्यते; तेषां सकलवेदार्थतत्त्वदर्शनवत्त्वात्, अतो मन्वादिभिरेवैतदाचारमूलं श्रुतिमुपलक्ष्य स्मृत्वा तदानीन्तनेभ्य उपदिश्य तदानीन्तनैरेव वा मन्वाद्याचारं दृष्ट्वा अनुष्ठितं इत्येवं परम्परयाऽद्ययावदर्वाचीनाचारपर्यन्तं आचारानुष्ठानमित्येवं पूर्वपूर्वाचारकल्पनया स्मृतिं प्रकल्प्य पश्चात् श्रुतिकल्पनमिति ब्यन्तरितप्रामाण्याद्विप्रकर्षः । मन्वादिनिवद्धस्मृतीनां तु मन्वादिष्वेव श्रुत्युपलंभपूर्वकं तदर्थस्मृतिकल्पनेन निवन्धनोपपत्तेरर्थकल्पनद्वारा झटित्येव श्रुतिकल्पनात् सन्निकर्ष इति लिङ्गवाक्यादिवदेवार्थविप्रकर्षादप्याचारस्य दौर्वल्यम् ॥

## ( परप्रकरणपठितेषु वाक्येष्विदानींतनानां यत्किंचिदाचारादिमूलत्वाध्यवसानाभावनिरूपणम् )

यद्यपि कतिपयाचारमूलभूतश्रुतीनामर्वाचीनानां दर्शनं भवति, यथा "नयनं दक्षिणं दीक्षितः पूर्वमङ्क्ते सव्यं हि मनुष्या आञ्जते" इति श्रुतेर्मनुष्यकर्तृकप्राक्सव्याक्ष्यञ्जनाचारमूलभूतायाः, एवमन्या अपि श्रुतय उदाहर्तव्याः; तथापि परप्रकरणपठितत्वविध्यन्तशेषत्वादिनेदानीन्तनैस्तासामाचारमूलत्वानध्यवसानादाचारपरंपरया मन्वादिनिष्ठाध्यवसायकल्पनमावश्यकमेव ॥ **किंच** आचारे कर्तव्यस्य स्वरूपमात्रं क्लृप्तं, नतु कर्तव्यता; सा तु धर्मवुद्ध्यादिना अर्थसुखादिरूपहेत्वन्तरासंभवपरिशेषसहकृतया कल्प्या, स्मृतौ तु लिङादिशब्देनैव साऽवगम्यते इति वैषम्यात् प्रकृते श्रुतिविरोधरूपवलवद्बाधकवलादनुपलभ्यमानमपि कामादिहेत्वन्तरं स्फुटतरमेव कस्यचिन्मूलानुष्ठातुः पुंस इति परिशेषासंभवेन श्रुतिकल्पनायोगात् तत्र धर्मवुद्धिर्भ्रम एव । अन्येषामपि तदनुयायिनामधर्मे एव धर्मवुद्धिरिति निष्प्रमाणकं तन्मूलश्रुतिकल्पनम् ॥

## ( विकल्पापत्त्यापि निषिद्धविषयकाचारादेः श्रुतिकल्पकत्वायोगः )

**किंच**—स्मृतिमूलश्रुत्या निषेधरूपया मातुलकन्यापरिणयादेः प्रत्यवायजनकत्ववोधनात् आचारमूलश्रुत्या इष्टसाधनत्ववोधनस्य वस्तुनि विकल्पायोगेनैकस्यैव तदुभयविरोधः । षोडशिग्रहणनिषेधेन तु षोडशिग्रहणाभावेऽपीतराङ्गैः क्रतूपकारसिद्धेरेवाक्षेपात् युक्तो विकल्पः ॥

## ( आत्मतुष्टेः श्रुतिमूलत्वशङ्कानिराकरणपूर्वकं स्मृत्याचारमूलत्वव्यवस्थापनम् )

एवमात्मतुष्टेरपि स्मृतिविरोधे दौर्वल्यादप्रामाण्यमवसेयम् । **नच**—आत्मतुष्टेः "यदेव किंचनानूचानोऽभ्यूहत्यार्षं तद्भवती"ति प्रत्यक्षश्रुतेरेव मूलतयोपलभ्यमानत्वेन परंपराकल्पनाभावात् दौर्वल्यस्याचारवदनुपपत्तिरिति—**वाच्यम्**; यदेवेत्यस्या श्रुतेः सामान्यविषयत्वेन विशेषविषयस्मृत्याचारैः शिष्टाकोपाधिकरणन्यायेनाविरुद्धविषये संकोचोपपत्तेः । अत आचारवत् शिष्टात्मतुष्टेरपि स्मृत्याचारयोर्विरोधे दौर्वल्यमिति ॥

## ( मातुलकन्यापरिणयादेः देशभेदेन वोधायनवचनानुसारेणाधर्मत्वव्यवस्थापनम् )

सप्रत्ययेतिमूले **प्रत्ययो** विश्वासः तत्त्वज्ञानं चोपात्तं, ताभ्यां सहिता **सप्रत्ययाः** मन्वादयः तैः प्रणीतत्वादित्यर्थः ॥ यत्तु "येषां परंपराप्राप्ताः पूर्वजैरप्यनुष्ठिताः । त एव तैर्न दुष्यन्ति आचारैर्नेतरे जनाः" । "इतर इतरस्मिन्न दुष्यति देशप्रामाण्यात्" इत्यापस्तम्वादिवचनेभ्यो देशभेदेन प्रामाण्यव्यवस्थापनं तद्दुर्वलविगीताचारानुरोधेन वलवत्स्मृतिसंकोचस्यान्याय्यत्वात् वोधायनेनापस्तम्वमतमुपन्यस्य "मिथ्यैतदिति गौतमः" "शिष्टस्मृतिविरोधादि"त्युक्तेश्चापस्तम्ववचनस्य गर्हामात्रनिराकरणार्थत्वमभिप्रेत्य सिद्धान्तमुपसंहरति—**अत इति** ॥

## ( मातुलकन्यापरिणयादेः प्रत्यक्षश्रुतिमूलत्वपरस्मृतिचन्द्रिकादिखण्डनसूचनम् )

अत्रच "गर्भे नुनौजनिता दम्पतीदं पती कर्देवस्त्वष्टा सविता विश्वरूप" इत्यादिप्रत्यक्षश्रौतलिङ्गावष्टब्धत्वान्मातुलकन्यापैतृष्वस्रेयीपरिणयाचारस्य स्मृतितोऽपि प्रावल्यादनुदाहरणत्वं न्यायसुधाकृता वलावलाधिकरणे उक्तम् । तदनुसारेण स्मृतिचन्द्रिकाकारादयोप्येवमेवाङ्गीकुर्वन्ति । तेषामुपपादनपूर्वकं निराकरणं कौस्तुभे द्रष्टव्यम् ॥

## ( त्रिवृच्चर्यश्ववालादिशब्दानामर्थविशेषे लोकवेदयोर्विप्रतिपन्नानामुक्तवर्णकविषयतानिरूपणम् )

वार्तिककृता कृतं द्वितीयं वर्णकान्तरमाह—**एवंवेति** ॥ "त्रिवृत् वहिष्पवमान"मित्यत्र पठिते त्रिवृच्छब्दे लोकतस्त्रिभिर्वृत्यत इति व्युत्पत्त्या "त्रिवृद्रज्जुस्त्रिवृद्ग्रन्थि"रित्यत्र त्रैगुण्यमर्थः प्रतीयते । वेदे तु तदुपक्रम्य "उपास्मै गायता नर" इत्यादितृचत्रयानुक्रमणात् "नवभिःस्तुवन्ती"ति श्रुत्यन्तराच्च स्तोत्रीयानवकम् । तथा चरुशब्दस्य लोके स्थालीवचनत्वं, वेदे तु "आदित्यः प्रायणीयः पयसि चरुरि"ति विधायाज्यस्यैनं चरुमभिपूर्य चतुराज्यभागान् यजति पथ्यां स्वस्तिमिष्ट्वा अग्नीषोमौ यजति अग्नीषोमाविष्ट्वा सवितारं यजत्यदितिमोदनेनेति क्रमपरवाक्ये सिद्धवदोदनानुवादादोदनपरत्वम् । तत्रापि याज्ञिकप्रसिध्याऽनवस्रावितान्तरूष्मपक्वौदनविशेषपरत्वम् । तथा

पयोरर्थविप्रतिपत्तिस्तत्र पदपदार्थसम्बन्धे लोकात् वेदस्याधिक्ये प्रमाणाभावात्तुल्यबलत्वमिति प्राप्ते—

विषयैक्याभावे विधिस्तुल्योरेकवाक्यताऽनुपपत्तेर्विधिवाक्यशेषस्यैव शक्तिग्राहकत्वमनुमन्यते। अतश्च लौकिकप्रमाणावगतेऽर्थे शक्तिकल्पनाभिया न शक्तिरपि तु लक्षणादिनैव बोधः। अतएव यत्र वाक्यशेषो नास्ति तत्रापि त्रि-

---

अश्ववालशब्दः लोकेऽवयवयोगेनाश्वस्य केशरूपोऽर्थः, वेदेतु "अश्ववालः प्रस्तरः" इत्यत्र वाक्यशेषे "यज्ञो ह वै देवेभ्यः अश्वो भूत्वोऽपाक्रामत् सोऽपः प्राविशत् स वालधौ गृहीतः स वालान्मुक्त्वा विवेश ह ते वालाः काशतां प्राप्ता" इति श्रवणात् काशरूपोर्थः, एवं विप्रतिपत्तिविषयमुदाहरति—**त्रिवृदिति** ॥ आदिपदेनैक्षवी विधृतीत्यत्र लोकावगतयोगबलेनेक्ष्ववयवपर एक्षवीशब्दः, वार्तिकलेखनोन्नीतवाक्यशेषात्तु वेदे काशमूलपरः। तथा स्तोमशब्दो ब्राह्मणस्तोम इति लोके समुदायवचनः, वेदेतु स्तुतेर्मानं स्तोम इति याज्ञिकप्रसिध्या स्तोमे डविधिः पञ्चदशाद्यर्थ इति व्याकरणेन चानुगृहीतेन 'त्रिवृदेव स्तोमः' 'पञ्चदशस्तोम' इति सामानाधिकरण्यनिर्देशेन स्तोत्रीयासंख्याकृतस्तुतिसंख्यापर इत्यनयोरपि विप्रतिपत्तिविषययोः संग्रहः ॥

## (लौकिकवैदिकप्रसिद्ध्योरसमबलत्वेन विकल्पपूर्वपक्षः)

**ननु**—लोकप्रसिद्धेर्धर्मे प्रत्यनङ्गत्वात् वेदप्रसिद्धिरेव बलवतीत्याशङ्कां "नैतदेवं पदार्थेषु न हि वेदो विशिष्यते। अदृष्टहेतुवाक्यार्थे लोकात्स ह्यतिरिच्यत" इति वार्तिकोक्तरीत्या परिहरति—**तत्रेति** ॥ **तुल्यबलत्वमिति** ॥ **नच**—एकत्र शक्तिकल्पने परत्र तत्सादृश्येन प्रयोगोपपत्तेर्नानेकशक्तिकल्पनं युक्तमिति—**वाच्यम्**; अर्थद्वयस्याप्यत्यन्तवैलक्षण्येन सादृश्याभावात्, विनिगमनाविरहाच्च। अतोऽनन्यथासिद्धप्रमाणद्वयबलेनोभयोरपि वाच्यत्वावगमात् तुल्यबलत्वेन विकल्पः। तथाच "त्रिवृद्बहिष्पवमानमि"त्यत्रैका ऋक् त्रिगुणितेत्येकः तृचः कर्तव्यो लौकिकार्थग्रहणपक्षे, तृचान्तरात्रानन्तु पाक्षिकत्वेन ज्ञेयम्। एवं चरुशब्देनानदनीयस्यैव स्थालीद्रव्यस्य कृष्णलवद्विधानं, पयसस्त्वदृष्टद्वाराऽधिकरणत्वम्, अर्थवादस्तु पाक्षिकानुवाद इति। एवमन्यत्राप्यूह्यमिति भावः ॥

## (लोकप्रसिद्धेः वैदिकप्रसिद्ध्यपेक्षया बलवत्त्वपक्षनिरूपणम्)

तुल्यबलत्वं च लोकप्रसिद्धेर्बलवत्त्वपूर्वपक्षस्याप्युपलक्षणम्। **तथाहि**—विरोधे लोकप्रसिद्धेरन्यनैरपेक्ष्येणात्मलाभात् "कार्पाससमुपवीतं स्यात् विप्रस्योर्ध्वं वृतं त्रिवृत्। त्रिवृता ग्रन्थिनैकेने"ति मनुवचने रज्ज्वारंभकेषु नवतन्तुषु नवसङ्ख्यासद्भावेऽपि उपवीतारंभिकायां रज्ज्वां त्रैगुण्यविध्यर्थत्वदर्शनात्, वेदेऽपि "त्रिवृद्रशनाभवती"ति त्रैगुण्यविषययाज्ञिकप्रसिद्धेरपि सत्वाच्च त्रिवृच्छब्दे मनुवैदिकप्रसिध्यनुगृहीतत्वाच्चानुपसंजातविरोधित्वेन वैदिकप्रसिद्धेर्लोकप्रसिद्धपदान्तरसामानाधिकर-

---

ण्याधीनसिद्धिकत्वेन विलम्बितत्वात्तदपेक्षया दौर्बल्यमिति तदर्थस्यैव ग्रहणम्। अर्थवादानान्तु प्ररोचनामात्रत्वेन "यजमानः प्रस्तर" इत्यादिवद्गौणत्वेनाप्युपपत्तेर्नावश्यं संज्ञासंज्ञिसंबन्धप्रतिपादनपरत्वमित्यानर्थक्याभावात् नानर्थक्यप्रतिहतत्वेनापि तदर्थस्य ग्रहणमिति नार्थद्वयग्रहणेन विकल्पोऽपि। एवंच साम्यपक्षे विकल्पेनार्थवादस्य पाक्षिकानुवादत्वम्, प्राबल्यपक्षे लोकप्रसिद्धार्थस्यैव विधौ ग्रहणादर्थवादस्यौदनादिपदानां ओदनसंबन्धेन स्थाल्यादिलक्षकत्वं कल्प्यत इति सिद्धम् ॥

## (लौकिकवैदिकप्रसिद्ध्योः समबलत्वविषमबलत्वपक्षद्वयेपि सार्थवादविधिस्थलेऽविवादात् निरर्थवादघटकपदाभिप्रायत्वम्—इति

**प्रकाशकारास्तु**—पक्षद्वयेऽपि प्रकृतोदाहरणेऽर्थवादेनौदनविषय एव विधेस्तात्पर्यग्रहात् सिद्धान्तवत् "गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम्। वेदोऽयमाश्रयत्यर्थं को नु तं प्रतिकूलयेत्" इति वार्तिकोक्तरीत्या ओदनस्यैव ग्रहणापत्त्या नानुष्ठाने कश्चन विशेषः, तथापि यत्र "सौर्यं चरुमि"त्यत्र नार्थवादस्तत्रेदं प्रयोजनम्—**इत्याहुः**। **तन्न**; विधावर्थवादानुरोधेन चरुशब्दे लक्षणापेक्षयाऽर्थवाद एव स्थालीलक्षणाया न्याय्यत्वात् लक्षणादिना बोध इति ॥

## (त्रिवृच्छब्दार्थनिर्णयः)

**तत्रायं विवेकः**—त्रिवृदादिशब्दानां तृचत्रयानुक्रमणवशात् स्तोत्रीयानवके शक्त्यावधारितायां यत्र स्तोत्रसंबन्धस्तत्र स एवार्थो ग्राह्यः। अन्यथा बहिष्पवमाने तृचत्रयविधानादेव स्तोत्रीयानवकसिद्धौ "त्रिवृद्बहिष्पवमानमिति" त्रिवृच्छब्दोपादानवैयर्थ्यापत्तेः। अतः स्तोत्रीयानवके इव त्रैगुण्येऽपि त्रिवृत्पदवाच्यत्वेनैव तत्सार्थक्यात् यत्र नास्ति "त्रिवृदग्निष्टुदग्निष्टोमः" इत्यादौ तृचत्रयानुक्रमणं, तत्र तस्यैव रूढ्या क्लृप्तया योगबाधेन विधानम्। यत्र तु न सा बाधिका, यथा— "त्रिवृता यूपमि"त्यादौ तत्र लोकप्रसिद्धत्रैगुण्यस्य ग्रहणेऽपि न लौकिकार्थे त्रैगुण्ये शक्यसंबन्धाभावाल्लक्षणा। अतश्च स्तोत्रीयानवकमात्रे शक्तस्येह नवकमात्रे ग्रहणेऽपि लक्षणापत्तेः क्लृप्तावयवयोगेनैवार्थप्रतीत्युपपत्तौ लाक्षणिकार्थत्वे प्रमाणाभावात् शक्यार्थस्यैव ग्रहणमिति लोकसिद्धार्थेऽपि शक्तिरेवेति नानार्थत्वमेव। **अत एव**—बहिष्पवमान एव तृचत्रयानुक्रमणाद्बहिष्पवमानगतस्तोत्रीयागतनवक एव रूढिः—**इत्यप्यपास्तम्**; तथात्वे त्रिवृद्ग्रहणवैयर्थ्यापत्तेस्तदवस्थत्वात्। न हि तदा अग्निष्टुति सर्वस्तोत्रेषु नवकं विधातुं शक्यते; "त्रिवृता यूप"मित्यत्रैव लाक्षणिकत्वापत्तेः। त्रैगुण्यरूपशक्यार्थस्यैव

वृदादिपदार्थो वैदिक एव ग्रहीतव्य इति वक्ष्यते । अतश्च त्रिवृच्छब्दस्य स्तोत्रगतमृङ्नवकं शक्यं न तु तत्त्रैगुण्यम् । चरुशब्दस्यौदनो न तु स्थाली । अश्ववालशब्दस्य काशाः नाश्वकेशाः । वाक्यशेषाश्च कौस्तुभे द्रष्टव्याः ॥ ७ ॥ **इति तृतीयवर्णकम् ।**

**चोदितन्तु ॥** यत्र पिकनेमसततामरसादिशब्दानां नार्याणां अर्थविशेषे प्रसिद्धिः, म्लेच्छेषु तु पिकः कोकिलः, नेमः अर्द्धं, सतं वृहत्पत्रं दारुमयं शतच्छिद्रं परिमण्डलं, तामरसम् कमलं इत्येवं प्रसिद्धिः, तत्र तत्प्रसिद्धार्थस्यैव ग्रहणं न तु निगमनिरुक्तादिना तत्कल्पनम् । नच म्ले-

---

ग्रहणापत्तेस्तत्रातिदेशेनैव स्तोत्रीयानवकप्राप्तेश्च विधिवैयर्थ्याच्च तत्र त्रिवृत्पदवैयर्थ्यापत्तेरनिवारणात् । अतः स्तोत्रीयानवके इव त्रैगुण्येऽपि शक्तिः । एवं मानववाक्येऽपि स्तोत्रीयानवकवत् लोकप्रसिद्धत्रैगुण्यपरत्वमेव ॥

### ( त्रिवृच्छब्दस्य स्तोत्रीयानवकवाचित्वे आकृत्यधिकरणविरोधपरिहारौ )

नच स्तोत्रीयानवकवाचित्वे आकृत्यधिकरणविरोधः; यत्र विशेषणमात्रे शक्तौ कल्पितायां तदविनाभावात् विशेष्यप्रतीतिर्युज्यते तस्याकृत्यधिकरणन्यायविषयत्वेऽपि पुत्राविनाभावाभावेन स्नुषादिशब्दानां पुत्रभार्यादिविशिष्टवाचित्वस्येवेहापि विशिष्टवाचकत्वस्य स्वीकारे तद्विरोधाभावात् ॥

### ( चरुशब्दार्थनिर्णयः )

चरुशब्दस्यापि वाक्यशेषवलात् समानविषयत्वानुरोधेन ओदने रूढिस्वीकारात्, ऐकान्तिकसंवन्धाल्लोकप्रसिद्धस्थाल्यां लक्षणैवेति नानेकार्थत्वम् । अतएवेह शक्ताववधारितायां यत्र न वाक्यशेषः—"यथा सौर्यं चरु"मित्यादौ तत्रापि लाक्षणिकार्थग्रहणे मानाभावादोदनस्यैव ग्रहणम् । यद्यपि याज्ञिकैः कपाले कटाहे वा श्रपितस्य चरुत्वानभ्युपगमात् स्थालीस्थौदन एव च प्रयोगात् स्थालीस्थौदनपरत्वे आकृत्यधिकरणन्यायेन स्थालीमात्रवाचित्वमेव युक्तम् । अतएव ऐकान्तिकसंवन्धादोदन एव लक्षणेति प्राप्नोति; तथापि अर्थवादानुरोधेन गौणार्थस्यैव ग्रहणे सिद्धे श्येनोपमानेनोपमितयागपरतया निर्णीतश्येनशब्देन यागस्य गौण्याऽपि वृत्त्या ग्रहणे सिद्धे तत्प्रावल्यात् "समानमितरच्छ्येनेने"त्यादौ तद्ग्रहणस्येव सौर्यमित्यादावपि तस्यैव युक्तं ग्रहणम् । याज्ञिकानामपि चरुशब्दस्यौदने पाकविशेषमात्रनिमित्तत्वेऽपि तस्य स्थालीमन्तरेणानुपपत्तेरर्थाक्षेपेपि स्थालीस्थौदनवाचित्वानङ्गीकारेणाकृत्यधिकरणन्यायाविषयतया स्थालीवाच्यतायाः अप्रसक्तेश्च । यद्यपि चरुशब्दे याज्ञिकप्रसिद्ध्या लोकप्रसिद्धेर्वाधादेव निर्णयस्संभवतीति न वाक्यशेषमात्रनिर्णेयाभिप्रायत्वम्; तथापि क्वाचित्कयाज्ञिकप्रसिद्धेरेव लाक्षणिकत्वोपपत्त्या वहुतरतत्प्रसिद्धिवाधायोगात् वाक्यशेषस्यैव याज्ञिकप्रसिद्धिमूलत्वेनाङ्गीकार्यत्वे "तद्धेतोरेवे"ति न्यायेन निर्णायकत्वम् इति ध्येयम् ॥

### ( अश्ववालशब्दार्थनिर्णयः )

एवमेवाश्ववालशब्दयोरपि अवयवयोगेन शक्त्यैवावयवार्थश्वकेशरूपार्थयोर्वेदे अश्ववालानामेव काशरूपेण परिणामाभि-

धानात् प्रकृतिविकारयोश्च सलक्षणत्वदीर्घत्वादिना सादृश्येन यद्यपि गौणः प्रयोगः संभवति; तथापि सर्वत्र वाक्यशेषाभावेऽपि श्येनशब्द इव पूर्वोक्तरीत्या ग्रहणं युक्तम् । **वस्तुतस्तु**—अश्ववालशब्दस्य गौणत्वाभ्युपगमे गौणतायाः पदान्तरसामानाधिकरण्यसापेक्षत्वेन असामर्थ्यापत्तेः आश्ववाल इति तद्धितानुत्पत्तिप्रसंगात् नैव गौणत्वम्, अपितु वैदिकप्रसिद्ध्या वलीयस्याऽवयवार्थप्रसिद्धिवाधात् अश्वकर्णशब्द इव काशेषु रूढ्यवगमादिह शक्यार्थस्यैव ग्रहणेऽपि अवयवयोगेनापि शक्त्यवधारणात् नानार्थत्वमेव । **एतेन**—अर्थवाद एव काशपदं केशरूपवाललक्षणार्थमस्तु, कृतं शक्यान्तरकल्पनेन इति—**निरस्तम्**; 'ते वालाः काशतां प्राप्ता' इत्यनन्वयापत्तेः ॥

### ( स्तोमशब्दार्थनिर्णयः )

एवं स्तोमशब्दस्यापि स्तोत्रीयासङ्ख्याकृतस्तुतिसङ्ख्यावाचित्वम् वैदिकसामानाधिकरण्यादिना । **अथवा** न्यायसुधाकारोक्तरीत्या स्तोत्रीयासमुदायमात्रवचनत्वमवगन्तव्यम् । लोकप्रसिद्धसमुदायपरत्वं तु लक्षणया शक्त्या वेति दिक् ॥ **वक्ष्यते इति॥** दशमे इति शेषः ॥ तेनैतदधिकरणप्रयोजनमात्रकथनार्थत्वान्न पौनरुक्त्यमिति भावः । वाक्यशेषाश्चेति ग्रन्थो व्याख्यातचरः ॥ **यत्तु** "सन्दिग्धेषु वाक्यशेषादि"त्यनेन गतार्थत्वम्, **तत् न**; तस्य वाक्यशेषान्वयात्प्राक् सन्दिग्धार्थविषये निर्णायकत्वेऽपि इह तदन्वयात्प्राक् विपरीतार्थनिश्चयेन सन्दिग्धार्थत्वाभावेन अनिर्णायकतयाऽप्रवृत्तेरिति ॥

### ॥ इति चतुर्थं शास्त्रप्रसिद्धपदार्थप्रामाण्याधिकरणम् ॥

---

### ( पिकनेमादिपदार्थनिर्णये सिद्धान्तेनोपक्रमे निमित्तनिरूपणम् )

अत्र यद्यपि भाष्ये आर्यम्लेच्छप्रसिद्धेर्वलावलचिन्ता भाति; तथापि सा म्लेच्छप्रसिद्धेः क्वचिदपि प्राक् प्रामाण्यस्यानिरूपणादयुक्तेति मत्वा प्रामाण्याप्रामाण्यचिन्तैवात्र क्रियते । वलावलचिन्तातु शिष्टाकोपाधिकरणे व्युत्पादितप्रमाणवलावलन्यायेनैव सिद्धा प्रसंगात् फलीभूतत्वेन दर्शितेति वार्तिकसूचितमभिप्रेत्य विरोधे म्लेच्छप्रसिद्धेः दौर्वल्येऽपि अविरोधे तस्या एव प्रमाणत्वेन ग्रहणात् निरुक्तादिद्वारकशास्त्रप्रसिद्धेस्सिद्धान्ते ग्रहणादापवादिकीं संगतिं स्पष्टत्वात्तथाशास्त्रस्थप्रसिद्धग्रहणपूर्वपक्षस्य निर्युक्तिकतया च तामप्रदर्श्यैव विषयप्रदर्शनपूर्वकं

च्छेषु शब्दार्थयोर्विप्लुतिदर्शनेन तत्प्रसिद्धेरविस्रम्भणीयता; पिकादिशब्दानां वेदएव दृश्यमानत्वेनाविप्लुतत्वात्। अतश्च तेषां वाच्याकाङ्क्षायां तत्प्रसिद्धेरपि क्लृप्ततया ग्राहकत्वम्। अतएव निगमादिप्रसिद्धेरपि तत्प्रसिद्धित्वेन प्राबल्येऽपि कल्प्यत्वेन दौर्बल्यम्। म्लेच्छप्रसिद्धेश्च म्लेच्छप्रसिद्धित्वेन दौर्बल्येऽपि क्लृप्तत्वेन प्राबल्यम्; प्रमाणबलाबलापेक्षया प्रमेयबलाबलबलीयस्त्वस्य स्थापितत्वात्। अतएव नात्र विशेषतः पूर्वपक्षः कथितः ॥ ८ ॥ **इति पिकनेमाधिकरणम्।**

**प्रयोगशास्त्रम्॥ सर्वस्मृतीनां कल्पसूत्राणां वा पद-**

---

सिद्धान्तमाह—**यत्रेति**। आदिपदेन पश्ववयवविशेषवाचिनां क्लोमादिशब्दानां धौतकौशेयवाचिनः पत्रोर्णशब्दस्य कञ्चुकवाचिनो वारवाणशब्दस्य च संग्रहः॥

**(पिकाद्यर्थनिर्णये स्वरूपतो म्लेच्छप्रसिद्धिदौर्बल्यनिराकरणपूर्वकतत्प्रामाण्यव्यवस्थापनम्)**

काशादिषु साधिताप्रमाणभावम्लेच्छप्रसिद्धेरग्रहणात् **नार्याणामित्युक्तम्।** आर्येष्वर्थविशेषप्रसिद्धेः स्वरूपतोऽसत्त्वेऽपि तन्मूलत्वेनासिद्धाया अपि निरुक्तादिना साधयितुं शक्यत्वात् तस्यां प्रयोक्तृबलीयस्त्वं स्वरूपेण बलीयस्त्वम्। म्लेच्छप्रसिद्धौ तु प्रयोक्तृदौर्बल्यं स्वरूपेण दौर्बल्यमितिसन्देहकारणमपाकुर्वन् निश्चयं दर्शयति—**तत्र तत्प्रसिद्धार्थस्येति॥** तथाच म्लेच्छप्रसिद्धेरेवाभिधेयनिर्णये प्रामाण्यमित्यर्थः। **पिकादिशब्दानामिति॥** शब्दान्तरेषु विप्लुतिशङ्कानिराकरणाशक्तावपि "पिकमालभेत" "सोमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकाम"इत्यादिवैदिकचोदनासु पिकादिशब्दानां प्रयुक्तत्वेनाविभक्तिकम्लेच्छप्रयोगेऽपि प्रातिपदिकमात्रस्याविप्लुतिनिश्चयान्नित्यवेदप्रयुक्तत्वेन च जात्यादिरूपनित्यार्थवाचित्वकल्पनावश्यंभावे सति मुख्यार्थान्तराप्रसिद्ध्या तत्सदृशे कोकिलादौ गौणत्वायोगात् स्वसमानार्थककोकिलादिशब्दासादृश्याच्च गाव्यादिशब्दवत्तन्मूलकस्य शक्तिभ्रमस्याप्यसंभवेनार्थस्याप्यविप्लुतिनिश्चयादनादिम्लेच्छव्यवहारस्यापि वाचकत्वकल्पनाऽविघातः। नह्यदृष्टार्थेषु शाक्यादिभ्यो मन्वादीनामिव पदस्वरूपज्ञाने इतरेभ्योऽर्थनिर्णयेऽन्यस्य बलीयस्त्वं किंचिद्विरुद्धमस्ति, प्रत्युताकाङ्क्षितपदार्थज्ञाने साधकमेवेति भावः। अभ्युपेत्यापितु विरोधं शास्त्रप्रसिद्धेः दौर्बल्यं दर्शयति—**अतएवेति॥ स्थापितत्वादिति॥** नहि—तत्र स्वरूपबलाबलापेक्षया तत्संबन्ध्यन्यप्रमाणगतबलाबलमात्रं दुर्बलमुक्तम्, नत्वाश्रयबलाबलमिति—युक्तम्; स्वरूपबलाबलापेक्षया तत्संबन्ध्यन्यगतबलाबलमात्रदौर्बल्यस्य प्रतिपादितत्वात्। तत्संबन्ध्यन्यच्च यथा प्रमाणं तथा आश्रयोऽपीति न दोषः। एतच्च भाष्यकारमतेनोक्तम्; वार्तिककारमते शिष्टाकोपाधिकरणभङ्गेनान्यथासूत्राणां योजनात्, प्रमेयबलाबलज्यायस्त्वस्य तत्र पूर्वमनिरूपणादिहैव आश्रयगतबलाबलापेक्षया प्रमेयबलाबलस्य विचार्यत्वात्॥

**(वार्तिकमते अस्यैवाधिकरणस्य विषयविशेषे म्लेच्छप्रसिद्धिप्राबल्यसाधकतेति निरूपणम्)**

अतो वार्तिकमते म्लेच्छप्रसिद्धेः प्रामाण्याप्रामाण्यविचारस्यैव तद्गतबलाबलविचारस्यापि इहैव कर्तव्यत्वादुपजीव्यतयेदमधिकरणं पील्वादिवर्णकात् प्राक् अर्थतो द्रष्टव्यम्। एवंचास्मिन् मते प्रमेयबलाबलज्यायस्त्वस्थापनस्यात्र पूर्वपक्षाकथनं प्रति हेत्वाकाङ्क्षा संभवति; तथापि विरोधे म्लेच्छप्रसिद्धेरप्रामाण्ये उक्तेऽर्थादेवाविरोधे प्रामाण्यहेतोः पूर्वपक्षसाधकस्यासंभवात् सूत्रकृतापि स्वातन्त्र्येण तदकथनादेव चात्र तदकथनमिति ज्ञेयम्॥

**॥ इति पञ्चमं म्लेच्छप्रसिद्धिप्रामाण्याधिकरणम्॥**

---

**(कल्पसूत्रप्रामाण्यपरभाष्यकारीयाधिकरणशरीरस्य स्मृत्यधिकरणेन पौनरुक्त्यपरिहारार्थं स्वतःप्रामाण्यपरतया वार्तिककारमतानुसारेण तद्योजनम्)**

अत्र भाष्यकृता सूत्रानुरोधेन कल्पसूत्राण्युदाहृत्य प्रामाण्याप्रामाण्यचिन्ता कृता। सा न युक्ता; स्मृत्यधिकरणे वेदातिरिक्तविद्यास्थानमात्रस्य वेदमूलकतया प्रामाण्यस्य साधितत्वेन तद्विरुद्धत्वात्। अतस्सिद्धान्ते सूत्रद्वयेन स्वरनियमवाक्यशेषाभिधानेन वेदवैलक्षण्यप्रतिपादनात् स्वतःप्रामाण्यनिराकरणप्रतीतेः पूर्वपक्षे स्वातन्त्र्येण प्रामाण्यमभ्युपेत्य स्मृत्यधिकरणसाधितवेदमूलकत्वहेतुकप्रामाण्याक्षेपेण पूर्वपक्षमुपवर्ण्य तस्यैवेह सिद्धान्ते निराकरणद्वारा स्मृत्यधिकरणसाधितस्य स्थिरीकरणेन भाष्यगतप्रमाणाप्रमाणशब्दयोः स्वातन्त्र्यास्वातन्त्र्यव्याख्यायां आक्षेपहेतोस्सर्वत्राविशेषेण स्मृत्यादिष्वपि तदाक्षेपसमाधानयोस्संभवात् कल्पसूत्रपदं भाष्यगतं उपलक्षणमभिप्रेत्य म्लेच्छाचाराणां केषांचिदनादित्वेन शिष्टाचारतुल्यतया स्वतन्त्रप्रामाण्येऽभिहिते इहापि वेदत्वेन वेदतुल्यतया वा स्वतः प्रामाण्योपपत्तेर्नैषां वेदमूलत्वं तद्विरोधेन वा नाप्रामाण्यं युक्तमित्यनन्तराधिकरणव्युत्पादितप्रामाण्योपजीवनेन स्मृतिविरोधाधिकरणद्वयाक्षेपादाक्षेपिकीं संगतिं स्पष्टत्वादप्रदर्श्यैवोदाहरणानि दर्शयति—**सर्वस्मृतीनामिति॥**

**(कल्पानां सूत्राणां च स्मृत्यधिकरणविषयत्वेन तदाक्षेपपराधिकरणविषयत्वयोगेन कल्पसूत्रयोः लक्षणादिनिरूपणम्)**

न केवलं स्मृत्यधिकरणे मन्वादिस्मृतिमात्रमुदाहरणं, येन तावन्मात्रविषय एवायमाक्षेपो भवेत्, अपितु वेदातिरिक्तानां सर्वेषामेवोदाहरणत्वात् कल्पसूत्रादिविषयस्यापि तस्याक्षेपं सूचयितुमाह—**कल्पसूत्राणां वेति॥** कल्पाश्च सू-

ङ्गानामेव वा शाक्यादिग्रन्थानां वा वेदत्वं वेदतुल्यत्वं वा भवतु; श्रुत्यादिमूलकत्वे गौरवात्, नित्यब्रह्मयज्ञविधिविषयत्वानुपपत्तेश्च, षडङ्गानां तु "षडङ्गमेके"—इति स्मृतेरपि

त्राणि चेति विग्रहः । कल्पा नाम प्रयोगं कल्पयन्तीति व्युत्पत्त्या सिद्धरूपप्रयोगप्रतिपादका ग्रन्था बोधायनवाराहमाशकादिप्रणीताः, सूत्राणि तु सूचयन्तीति व्युत्पत्त्या ऋचं पादग्रहणं एतत्तीर्थमित्याचक्षते इत्यादिस्वपरिभाषास्वसंज्ञाभिर्युतानि प्रयोगविशेषोन्नायकलक्षणप्रतिपादका आश्वलायनवैजावापकात्यायनादिकृता ग्रन्था इति भेदः । **तदुक्तं वार्तिके**—"सिद्धरूपः प्रयोगो यैः कर्मणामनुगम्यते । तत्कल्पा लक्षणार्थानि सूत्राणीति प्रचक्षते" **इति** ॥ **अन्यत्रापि**—"लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च । सर्वतस्सारभूतानि सूत्राण्याहुर्मनीषिणः" **इति** ॥

## ( शाक्यादिग्रंथानां कल्पसूत्राधिकरणविषयत्वोपपादनम् )

**शाक्यादीति** ॥ यद्यपि स्मृत्यधिकरणे शाक्यादिग्रन्थानां न प्रामाण्यं साधितं, येनाक्षेपविषयतोच्येत; तथापि विरोधाधिकरणे वार्तिककृता तेषां वेदमूलत्वासंभवेनाप्रामाण्यस्य प्रतिपादितत्वादिहाक्षेपसाधितहेतोः स्वातन्त्र्यस्याप्रामाण्याक्षेपेऽपि प्रवृत्तेः सिद्धान्तानुपयोगेऽपि विचारविषयत्वमुपपद्यते इति भावः ॥ अत्र सर्वत्र वाशब्दो न पक्षान्तरद्योतकः, किन्तु अनास्थाद्योतकः सन् सर्वेषूदाहरणत्वज्ञापक एव ॥

## ( वेदत्वेन वेदतुल्यत्वेन वा लाघवात् कल्पसूत्राणां प्रामाण्यपूर्वपक्षः )

अत एव वार्तिके "एवमेतानि चत्वार्यपि विद्यास्थानानी"त्युक्तम् । **गौरवादिति** ॥ यथैव स्मृत्यधिकरणे भ्रान्त्यादिमूलत्वकल्पनातो वेदमूलत्वकल्पनाया लघुभूतत्वात् वेदमूलत्वमेवाश्रितम्, तथैव दृढतरशिष्टत्रैवर्णिकपरिग्रहेण अवश्यवक्तव्ये प्रामाण्ये वेदमूलत्वकल्पनापेक्षयापि अपौरुषेयत्वकल्पनाया लघुभूतत्वात्तदेव युक्तमाश्रयितुम् इत्यपौरुषेयत्वसाम्यात् मन्वादिनिबन्धनानि, वेदाः, धर्ममूलत्वात्, विधिवदित्यनुमानेन वेदत्वम् । यदातु तानि अवेदाः, वेदमुद्राराहितत्वाद्वेदत्वेनाभियुक्तप्रसिद्ध्यभावाद्वा काव्यवदिति सत्प्रतिपक्षानुमानपराहतत्वमुपन्यस्येत; तदा वेदतुल्यत्वं वेत्यर्थः ॥

## ( प्रत्यक्षवेदार्थसंग्राहकत्वेन प्रणयनवैयर्थ्यापत्त्या वेदत्वेन प्रामाण्यनिरूपणम् )

**किंच** मन्वादिस्मृतीनां तिरोहितप्रायवेदार्थनिबन्धनत्वात् कथंचिदर्थवत्त्वेऽपि कल्पसूत्राणां विस्पष्टं सकलजनप्रत्यक्षवेदार्थोपनिबन्धनात् प्रणयनानर्थक्यापत्तेः शाखान्तरवदेवापौरुषेयत्वेन वेदत्वं युक्तम् । नहि सकलजनप्रत्यक्षवेदवाक्यार्थविषयमर्थं वदतामेषां पुरुषैः प्रणयनं संभवति । तथात्वे वा-

वेदत्वम् । बुद्धबोधायनमशकादिभिस्तु समाख्या कठादिवत्प्रवचननिमित्तत्वेनाप्युपपन्नेति प्राप्ते—

दृढकर्तृस्मरणात्कठादिवत्प्रवचननिमित्तत्वानुपपत्तेर्नैषां वे-

ऽमीषां विधायकोपस्थानमात्रेण चरितार्थत्वात् धर्मप्रमाजनकत्वानुपपत्तेर्धर्ममूलस्मरणानुपपत्तेरिति भावः ॥

## ( अनादिब्रह्मयज्ञविधिविषयत्वेन स्मृतीनां स्वतःप्रमाणधर्माधर्मप्रमितिजनकत्वेन शाक्यादिग्रन्थानां च प्रामाण्यनिरूपणम् )

**नित्यब्रह्मयज्ञेति** ॥ "अहरहः स्वाध्यायमधीयीते"त्युपक्रम्य "यदृचोऽधीते यद्यजूꣳषि यद्ब्राह्मणानीतिहासान्पुराणानि कल्पानि"ति **नित्यो**ऽनादिसिद्धो ब्रह्मयज्ञविधिः । नहि कल्पादीनामाधुनिकत्वे स उपपद्यत इत्यर्थः ॥ यद्यपि न शाक्यादिग्रन्थानां नित्यब्रह्मयज्ञविधिविषयत्वम्; तथापि शाक्यादिग्रन्थेभ्यो धर्माधर्मावगतेः स्वसंवेद्यत्वात्तस्याश्च स्वतःप्रामाण्यस्य तर्कपादे स्थापितत्वादाप्तोक्तत्वलक्षणगुणाभावेऽपि प्रामाण्याविघातः । नच—मीमांसकैः प्रामाण्यानभ्युपगमेऽपि शाक्यैः परतःप्रामाण्याभ्युपगमात् आप्तोक्तत्वलक्षणगुणाभावे कथं प्रामाण्योपपत्तिः ? "उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषां धर्मनित्यते"ति शाक्येन प्रवाहनित्यत्वेन कूटस्थनित्यत्वेन वा धर्मनित्यत्वस्योक्तत्वात्, तत्र नित्यत्वस्य च तत्प्रतिपादकागमनित्यत्वमन्तरेणानुपपत्तेः नित्यानां चागमानां अस्वतस्त्वे प्रामाण्यानिर्वाहात् स्वतस्त्वाभ्युपगमेऽपि अपसिद्धान्तानापत्तेः । एवं सत्यपि यदि स्वकर्तृकत्वमभ्युपगम्येत, तदा कर्तृदोषेण प्रामाण्यावगतिर्बाध्येतापि, नतु तदभ्युपगमो युक्तः; गौरवात् । एवंच यद्यपि वेदमूलकत्वे निराकृते वेदत्वं वेदतुल्यत्वं वा दूरेणापास्तम्; तथापि "शाक्यादिश्चोरः स्वागमप्रामाण्यग्रामं प्रत्यक्षादिमूलत्वेनान्यद्वारेण प्रवेष्टुमुद्यतोऽतीन्द्रियार्थदर्शनासामर्थ्यवेदमार्गबाह्यत्वलक्षणन्यायदण्डपाणिभिर्मीमांसकैः वारितो वरं न प्रविशेत्, संप्रति तु मीमांसकानुमतेनापौरुषेयत्वेन महापथेनैव प्रकटं प्रवेष्टुं इच्छती"ति वार्तिकोक्तरीत्या संभवत्येवाप्रामाण्याक्षेपेण स्वातन्त्र्येण प्रामाण्यमिति भावः ॥

## ( षडङ्गवेदत्वनिरूपणप्रकारः )

अङ्गानान्तु वेदत्वे स्पष्टमेव हेतुमाह—**अङ्गानान्त्विति** ॥ "मन्त्रब्राह्मणयोर्वेदनामधेयं षडङ्गमेक" एति गौतमस्मृतेः स्पष्टमेव वेदत्वमित्यर्थः । अपौरुषेयत्वे बोधायनबौद्धमाशकादिसमाख्यानुपपत्तिं काठकादिसमाख्यावदुपपत्त्या परिहरति—**बुद्धेति** ॥ एतादृशसमाख्यामूलिकैवैषु लोकानां पौरुषेयत्वभ्रान्तिरित्यर्थः ॥

## ( दृढकर्तृस्मरणेन स्मृत्यादिपौरुषेयत्वव्यवस्थापनम् )

दृश्याभावसाधकस्य दृश्यादर्शनस्येवेह कर्त्रभावसाधकस्य

दत्वं वेदतुल्यत्वं वा । प्रतिमन्वन्तरञ्चैवंविधानां ग्रन्थानां सत्त्वान्नित्यब्रह्मयज्ञविधिविषयत्वोपपत्तिः । एकग्रहणात्तु "षडङ्गमेके" इति परमतोपन्यासः । तस्मादेषां स्मृत्यधिकरणन्यायेन वेदमूलकत्वमेव । शाक्यादिग्रन्थानां तु तदसम्भवात् आभासत्वमेव ।

प्रयोजनं कल्पादीनां वेदत्वे तत्तुल्यत्वे वा यत्र प्रत्यक्षश्रुतिविरोधस्तत्र विकल्पः । यत्र वा प्रत्यक्षश्रुतिविरोधाभावेऽपि न्यायाभासोपन्यासपूर्वकं वचनं, तत्रापि वचनत्वादेव तदनुष्ठानं, न्यायोपन्यासस्तु हेत्वधिकरणन्यायेनार्थवादः ।

स्मर्तव्यांस्मरणस्याभावेन वेदवदकर्तृकत्वानुपपत्तेः पौरुषेयत्वेऽपि प्रामाण्यस्य लाघवमात्रेण तत्साधने कालिदासादिवाक्येष्वपि तदापत्तेः तस्य प्रामाण्योपष्टम्भकत्वेन स्वतःप्रमाणत्वाभावाच्च नापौरुषेयत्वसिद्ध्या वेदत्वं वेदतुल्यत्वं वेत्यभिप्रेत्य सिद्धान्तमाह—**दृढेति** ॥ अतश्च स्मर्तव्यास्मरणहेतुना वेदापौरुषेयत्वे न्यायतः स्वरवाक्यशेषादिमुद्रादिभिश्च सिद्धे काठकादिसमाख्यायाः तदनुरोधेन प्रवचननिमित्तत्वाङ्गीकारेऽपीह कर्त्रभावसाधकप्रमाणाभावेन प्रत्युत तत्साधकप्रमाणसत्त्वेन प्रवचननिमित्तत्वेन न तत्तत्समाख्या नेतुं युक्ता । एवं सत्यपि यदि त्रैवर्णिकानां धर्मत्वस्मरणं अपौरुषेयत्वं विना नोपपद्येत, ततः कल्प्येतापि तत्, तत्तु वेदमूलत्वेनाप्युपपन्नतरमित्यभिप्रेत्योपसंहरति—**तस्मादिति** ॥

### ( नित्यब्रह्मयज्ञविधिविषयत्वादिप्राप्तवेदतुल्यत्वादिनिराकरणम् )

या तु नित्यब्रह्मयज्ञविधिविषयत्वानुपपत्तिः, तां परिहरति—**नित्येति** ॥ यथैव व्रीहित्वजातिमादाय नित्यसंयोगविरोधपरिहारः, तथा सर्वग्रन्थेषु वाक्यत्ववत्कल्प्यत्वजात्यनङ्गीकारेऽपि क्लृपिधात्वर्थानुसारेण वेदार्थप्रकल्पकत्वोपाधिनैवंजातीयकानां ग्रन्थानां सर्वकालं केषांचित्संभवेन प्रवाहनित्यतया नित्यसंयोगाविरोधोपपत्तेर्न दोष इत्यर्थः । **यत्तु** अङ्गानां वेदत्वस्मरणं, तदेकग्रहणादेव पूर्वपक्षत्वप्रतीतेः "मन्त्रब्राह्मणयोः वेदनामधेयमि"त्यत्रैकग्रहणाभावेन सिद्धान्तत्वप्रतीतेः असन्मूलकमित्याह—**एकग्रहणात्त्विति** ॥

### ( कल्पसूत्रप्रणयनसार्थक्योपपादनम् )

**यत्तु** प्रणयनवैयर्थ्यापादनं, तन्नानाशाखागतानामेकादशकपालत्वादीनां समुच्चितानां च प्रयाजाद्यनुमन्त्रणमन्त्रादीनां शाखान्तरीयवाक्याधीनबाधोपसंहारपरिसंख्यापदार्थलक्षणापूर्वतादिज्ञानार्थत्वादयुक्तम् । उपसंहारस्य मीमांसाभिज्ञैः स्वशाखामात्राध्यायिभिः क्वचिदुदाहरणविशेषे ज्ञातुं शक्यत्वेऽपि सर्वोदाहरणेषु ज्ञातुमशक्यत्वात् तत्तदर्थस्मृतिविक्षेपकार्थवादत्यागेन संप्रत्यनुष्ठानस्य कर्तुमशक्यत्वाच्च प्रणयनसार्थक्योपपत्तेः परिहरणीयम् । प्रकृते शाखान्तरवदध्येतृभेदाभावात्तुल्याध्येतृकत्वात्त्वन्मत एव विध्यन्तरानर्थक्यमित्यभ्यासात् कर्मान्तरत्वापत्तेरतीव गौरवम् । मम तु प्रत्यक्षविधिविहितार्थानुवादकत्वेऽपि अनुष्ठानसौकर्यार्थं कल्पादिनोपस्थापनमर्थवदिति । **नच**—एवं एकैकस्यां शाखायां पञ्चषट्संख्याककल्पसूत्राम्नानवैयर्थ्यम्, एकेनैव तदुपस्थापनसिद्धेः **इति**—**वाच्यम्**; स्वाध्यायाध्ययनविधौ स्वपदोपादानात् पारंपर्यागतैकशाखाध्ययननियमस्येव "बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्तितं । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेदि"ति शाखान्तराधिकरणगतसर्वाङ्गोपसंहारानुकल्पविधावपि स्वपदोपादानेन गृह्यपदोपलक्षितकल्पसूत्रादीनामपि पारंपर्यागतैकगृह्यसूत्राध्ययननियमस्यापि प्रतीतेरनेककल्पसूत्राद्यध्ययनस्याप्रसक्त्याऽनेकैरुपस्थापनेन सार्थक्योपपत्तेः; नह्युत्तराधिकरणे कल्पसूत्रादीनां परिग्रहव्यवस्थापि निरसिष्यतेऽपितु तदर्थव्यवस्थैव । अतश्च यान्याश्वलायनकात्यायनसूत्रादीनि तानि तत्तच्चरणैरेव पठनीयानीत्येवंपरिग्रहव्यवस्थया नेतरवैयर्थ्यमिति भावः । यदपि धर्मप्रमाजनकत्वासंभवः इत्युक्तं, तत्र यत्रैषां मूलभूता श्रुतिर्न प्रत्यक्षा, तत्र लौकिकवाक्यवत् धर्मप्रमाजनकत्वाभावेऽपि मूलभूतश्रुत्युपस्थापकत्वेन धर्मप्रमाप्रयोजकत्वोपपत्तेर्भाक्तमेव प्रामाण्यमिति स्मृत्यधिकरण एव प्रतिपादनान्निरसनीयम् । यत्र मूलभूता श्रुतिः प्रत्यक्षा, तत्रापि तत्तात्पर्यावधारणस्य कल्पसूत्राद्यधीनत्वात् तात्पर्यविषयीभूतार्थविषयप्रमाजनकत्वात् तदुपपत्तिरिति कौस्तुभे द्रष्टव्यम् ॥

### ( शाक्यादिग्रन्थाप्रामाण्यव्यवस्थापनम् )

एवं वेदमूलकत्वेन कल्पादीनां प्रामाण्ये साधितेऽपि शाक्यादिग्रन्थानामपि समानन्यायात्प्रामाण्ये भ्रान्तिं प्रसक्तां पूर्वहेतुनैव निरस्यति—**शाक्यादिग्रन्थानां त्विति । तदसंभवादिति** ॥ वेदाप्रामाण्यवादिभिरेव तत्प्रामाण्याङ्गीकारेण वेदमूलकत्वस्यासंभवादित्यर्थः ॥

### ( कल्पसूत्राधिकरणपूर्वपक्षप्रयोजनानि )

**ननु** कल्पादीनां सिद्धान्ते वेदमूलकत्वेन प्रामाण्याङ्गीकारे किं विचारप्रयोजनमित्यपेक्षायामाह—**प्रयोजनमिति ॥ यत्र प्रत्यक्षेति** ॥ यथा "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति श्रुत्या वेष्टनविषयकसूत्रस्य विरोधो भाष्यकारमते, यथावा "पुरोडाशं पर्यग्निकरोती"ति कल्पसूत्रवचनानां विरोधस्तत्रेत्यर्थः । **यत्रवेति**—यथा "अन्यत्र तदर्थवादवचनादि"ति पञ्चमाध्यायगताश्वलायनवचने "सुषिरो वा एतर्हि पशुर्यर्हिवपामुत्खिदति यद्व्रीहिमयः पुरोडाशो भवत्यपिधानाय" इत्यर्थ वादावगतछिद्रापिधानार्थत्वस्याग्नीषोमीयपशुपुरोडाशेऽवगतेः तस्य च सवनीयेऽतिदेशप्राप्तस्याप्यकरणं "अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते व्रीहित्वाच्छिद्रतायां" इत्यर्थवादावगतछिद्रापिधानरूपफलकसवनीयैरेव तत्कार्यस्य सिद्धेर्न्यायाभासोपन्यासपूर्वकं प्रतिपादितं तद्वचनमित्यर्थः ॥

सिद्धान्ते तु प्रत्यक्षश्रुतिविरोधे सन्न्यायविरोधे च यावन्मूलश्रुतिदर्शनमननुष्ठानलक्षणमप्रामाण्यम्। श्रुतिदर्शनोत्तरन्तु विकल्पः। यत्र तु न्यायोपन्यासरहितं मीमांसान्यायविरुद्धञ्च स्मृतेर्वचनं तत्र श्रुतिमूलसम्भवेन वचनविरोधे न्यायस्यैवाभासत्वात्तदर्थ एवानुष्ठेय इति। अत्र सर्वत्रोदाहरणानि मूलोक्तोदाहरणदूषणानि चाऽस्मत्कृते कौस्तुभे द्रष्टव्यानि ॥९॥

## ( कल्पसूत्राधिकरणसिद्धान्तप्रयोजनानि )

**सन्न्यायविरोधेचेति** ॥ द्वादशाध्याये "छिद्रापिधानार्थत्वात् पुरोडाशो न स्यात् अन्येषामेवमर्थत्वा"दित्यधिकरणे पूर्वोक्तरीत्या पशुपुरोडाशस्याकरणं "पुरोडाशेन माध्यन्दिने सवने" इति लिङ्गात् विकल्पेन वा करणमिति पूर्वपक्षं प्रापय्य छिद्रापिधानप्रतिपादनस्यार्थवादमात्रत्वात् दशमे देवतासंस्कारार्थत्वस्य साधितत्वान्नित्यत्वेन कर्तव्य एवेति सिद्धान्तितम्। अत्र मीमांसा सन्न्यायः। तद्विरोध इत्यर्थः ॥ **मीमांसान्यायविरुद्धंचेति** ॥ यथा नवमे अग्निष्टुति सुब्रह्मण्यानिगदगतानां हरिवद्वादिपदानां न्यायेनानूहः साधितः, तद्विरुद्धं "अग्न आगच्छ रोहिताश्व बृहद्भानो धूमकेतो जातवेदो विचर्षण" इत्यूहितपाठबोधकं छन्दोगसूत्रकारवचनम्। यथावा "तथा यूपस्य वेदि"रितितार्तीयाधिकरणे "अर्धमन्तर्वेदि मिनोती"ति वचनेन यूपार्धोद्देशेनान्तर्वेदिदेशाङ्गत्वेन विहितेऽर्धाद्यूपार्धस्य वहिर्वेदिदेशे प्राप्ते वहिर्वेदीत्ययमनुवाद इति पूर्वपक्षं प्रापय्यासंस्कृतदेश एवान्तर्वेदिवहिर्वेदिपदाभ्यां लक्षयित्वा विधीयत इति सिद्धान्तितम्। तत्र पूर्वपक्षे यूपाङ्गत्वाद्यूपवृद्धौ पश्वेकादशिन्यामङ्गवृद्धेरावश्यकत्वात्प्रतियूपं वेदिवृद्धिरित्येतन्मूलं प्रस्तुतोत्कर्षं प्रकल्प्यापस्तंवैराम्नातं "यावद्यूपं वेदिमुद्धन्ती"ति कल्पसूत्रकारवचनं सिद्धान्तन्यायविरुद्धम्। यथावा द्वादशाधिकरणे दैक्षे श्रुते "जाघन्या पत्नीस्संयाजयन्ती"ति वाक्ये पश्वनुनिष्पन्नजाघन्याः प्रतिपत्त्यपेक्षत्वात् तत्प्रतिपत्त्यर्थतया पत्नीसंयाजानां विधानम्। ततश्चातिदेशप्राप्ततया पश्वैकादशिन्यां सर्वासामपि जाघनीनां संस्कार्यत्वानुरोधेन सर्वाभिः पत्नीसंयाजाः कार्या इति जाघनीसमुच्चयपूर्वपक्षं प्रापय्य आज्येन सह विकल्पेन प्राप्ताया जाघन्या नियमार्थत्वेन विधानोपपत्तौ न पत्नीसंयाजादीनां अप्राकृतकार्यार्थत्वं कल्पनीयम्। ततश्च अर्थकर्मत्वे सति जाघन्या उपादेयत्वेन विवक्षितैकत्वाद्यया कयाचिदेकया तया पत्नीसंयाजा इति सिद्धान्तितम्। अतश्च मीमांसान्यायविरुद्धम् "जाघनीभिः पत्नीः संयाजयन्ती"ति बहुवचनान्तजाघनीपदघटितं कल्पसूत्रकारवचनमित्यर्थः। **यत्तु**—शास्त्रदीपिकायां एतादृशवचनानां न्यायोपन्यासरहितानामपि मीमांसान्यायविरोधे सर्वथाऽप्रामाण्यमुक्तम्, तन्न्यायविरोधाभावे श्रुतिमूलकत्वाभावानिश्चयात्तेषु बहुत्वादिस्मरणस्य श्रुतिमूलत्वोपपत्तेरुपेक्षणीयमितिव्यक्तं कौस्तुभे ॥ अत्रेति ग्रन्थो व्याख्यातचरः ॥

**इति षष्ठं कल्पसूत्राधिकरणम्॥**

**अनुमान** ॥ अथ यत्र स्मृतिषु पाठव्यवस्था यथा गौतमीया छन्दोगैरेव, तथाऽऽचारेषु कर्तृव्यवस्था यथा होलाकादि प्राच्याद्यभिमानिभिरेव, तत्र तदनुमेयश्रुतिरपि अनुमापकस्य नियतविषयत्वान्नियताधिकारिकैवेति नान्यैस्तदनुष्ठेयमिति प्राप्ते—

## ( अवसरसंगत्या मूलभूतवेदगतविशेषविचारप्रतिज्ञा )

एवं तावत्स्मृतीनामाचाराणां आत्मतुष्टेश्च वेदमूलकत्वेन प्रामाण्ये दृढीकृते अवसरप्राप्तत्वात् केषुचित्स्मृत्याचारेषु मूलभूतवेदगतो विशेषः तत्तदध्येत्राचरित्रधिकारानधिकारविचारफलीभूतश्चिन्त्यते। एवमवसरसङ्गतिमथशब्देन सूचयन् विषयं दर्शयति—**अथ यत्रेति** ॥

## ( स्मृत्यादिपदोपलक्षणतानिरूपणम् )

**स्मृतिष्विति** पदं पुराणमानवेतिहासव्यतिरिक्तधर्मशास्त्रगृह्योपलक्षणं। तथा गौतमीयछन्दोगपदे अप्युपलक्षणे। यथा गौतमीया स्मृतिश्छन्दोगैरेव पठ्यते तथा गोभिलीयमपि; तथा वासिष्ठं बह्वृचैरेव, शङ्खलिखितं वाजसनेयिभिरेव, आपस्तम्बबोधायनीये तैत्तिरीयैरेव, तेषामपि पाठव्यवस्थया विचारविषयत्वात्। **होलाकादीति** ॥

## ( होलाकादीत्यादिपदार्थः )

आदिपदद्वयेन यथा होलाकाचारः प्राच्यैरेव, एवं वसन्तोत्सवः, तथा स्वस्वकुलागतकरञ्जार्कादिस्थावरपूजाद्याचारो आह्नीनैबुकसंज्ञो दाक्षिणात्यैरेव, तथा "ज्येष्ठायां पौर्णमास्यां बलीवर्दानभ्यर्च्य धावयन्ती"त्युद्वृषभयज्ञ उदीच्यैरेव। तथा अयमेवोत्सवो भाद्रपदामावास्यायां दाक्षिणात्यैरेव। तथा मातृगणपूजाचारः प्रतीच्यैरेव इति व्यवस्थया तेषामपि विचारविषयत्वात्। एवं क्वचिद्देशविशेषे कैश्चिदेवं किंचित्क्रियते तेषामप्युपलक्षणम् ॥

## ( गृह्याप्रतिपाद्याचारविषयत्वनिरूपणपरन्यायसुधाखण्डनसूचनम् )

**यत्तु**—न्यायसुधाकृता गृह्याप्रतिपाद्यविषयविशेषाणामेवात्र विचारविषयत्वेनोदाहरणत्वं, नतु पार्वणस्थालीपाकोपनयादीनां गृह्यविहितानामपि **इत्युक्तम्**; तस्योपपादनपूर्वकं दूषणं कौस्तुभ एव द्रष्टव्यम् ॥

## ( केषांचिद्विचारस्वरूपखण्डनम् )

**यत्तु**—यथाश्रुतभाष्यानुसारात् होलाकाद्याचाराः स्मृतयश्च प्राच्यादिभिन्नान् प्रति प्रमाणं नवेति विचारस्वरूपं कैश्चित्—**उक्तम्**; तत्प्रामाण्यस्यालोकवत्सर्वपुरुषासाधारण्यात् व्यवस्थाशङ्कानुपपत्तेरयुक्तमित्युपेक्ष्यम्। प्रमाणभूतमूलश्रुतिगतविशेषपूर्वपक्षमेव फलीभूतविचारसहितं दर्शयति—**तत्रेति**॥

यद्यपि अनुमापकं नियतविषयम्; तथापि नानुमेयश्रुतौ विशेषणं प्राच्यत्वादि दातुं शक्यम् । नहि प्राच्यत्वं नाम सर्वाचरित्रनुगतं जातिव्यक्तिगुणसंस्थानादिभिर्निर्वक्तुं शक्यम्; तत्तद्देशगतानामप्यनाचरणात्, चिरविनिर्गतपुत्रपौत्राणामप्याचरणाच्च । अतो विशेषणाभावात् सर्वविषयत्वम् । गौतमीयादिस्मृतिषु तु न छन्दोगाधिकारिकत्वस्मरणं, येन श्रुतावपि तत्सम्भाव्यते । पाठमात्रन्तु तेषां स्मृतिकर्तुः तच्छाखीयत्वादप्युपपन्नम् । कर्ता हि छन्दोगः स्वशिष्यान् छन्दोगान् स्वग्रन्थमध्यापयामास तेऽप्यन्यान् इत्येवं पाठस्तन्मात्रे व्यवस्थित इति तत्रापि सर्वविषयत्वमेव ॥ १० ॥

**प्रयोग** ॥ स्मृत्यधिकरणन्यायेन सिद्धमपि व्याकरणप्रामाण्यमाक्षिप्यते। नियमद्वयार्थं हि तत्। "साधूनेव प्रयुञ्जीत नासाधून्" इत्येकः, "गवादय एव साधवो न गाव्यादय" इत्यपरः। न च नियमद्वयस्य मूलं सम्भवति; प्रतिगवादिशब्दमनेकश्रुतिवाक्यपाठासम्भवात्, साधुत्वस्य पूर्ववन्निर्वचनासम्भवेनानुगतैकश्रुतिकल्पनानुपपत्तेश्च । नहि साधुत्वं नामार्थप्रत्यायकत्वम्, अनादित्वे सति वाचकत्वं वा;

---

**( स्वाभिमतपूर्वपक्षनिरूपणम् )**

यथैव धूमस्य पर्वतवृत्तित्वदर्शनात् वह्नेरपि पर्वतवृत्तित्वेनैवानुमानं तथैव श्रुत्यनुमापकत्वस्य स्मृत्याचाररूपस्य लिङ्गस्य केषुचिदेव व्यवस्थितत्वादनुमीयमानायाः श्रुतेरपि व्यवस्थितविषयत्वमेव कल्पयितुं युक्तम् । यदितु अर्थापत्तिविधया तत्कल्पनं, तदा यद्यपि तद्विषयश्रुतिकल्पनमात्रेण तस्याः परिहारान्न नियतकर्तृकल्पना प्रामाणिकीत्युच्येत, तथापि सामान्यश्रुतिकल्पने तत्प्रवर्तितयोः स्मृत्याचारयोरपि सर्वविषयत्वापत्तेरनुपपत्त्यपरिहाराद्व्यवस्थितश्रुतिकल्पनमेव युक्तमित्यर्थः ॥

**( कर्तृविशेषज्ञानोपायनिरूपणम् )**

सर्वत्र कर्तृविशेषज्ञानं सामर्थ्यान्निषेधवशादुपपदाद्वा । यथा द्विजानामेवाहिताग्नित्वात् शूद्रादेस्तदभावादग्निहोत्रादिषु कर्तृविशेषज्ञानं सामर्थ्यात् । यथावा पतितषण्ढादीनां निषेधादनिषिद्धेष्वेव पतितषण्ढरूपकर्तृविशेषज्ञानं निषेधवशात् । यथावा राजसूये राजरूपकर्तृविशेषज्ञानं राजरूपोपपदाद्भवति ॥

**( प्रकृते कथमपि कर्तृविशेषज्ञानाभावसमर्थनम् )**

प्रकृतेच न निषेधो न वा सामर्थ्यं नियामकमस्ति; अप्रत्यक्षत्वात् । सामर्थ्यस्यच सर्वत्राविशिष्टत्वात् । **यत्तु**—उपपदमश्रुतं कल्पनीयं, **तत्तु** नैव श्रुतौ दातुं शक्यते इत्यभिप्रेत्य सिद्धान्तमाह—**यद्यपीति** । स्मृतिमूलभूतश्रुतिषु यद्यपि चरणविशेषवाचितैत्तिरीयाद्युपपदं संभवति; तथापि कल्पकस्मृतौ पदापाठान्नाश्रुतकल्पकं किंचिदस्ति प्रमाणम् । यस्तु पाठः स तु पाठं विनाप्यवगतमात्रस्य स्मृतिवाक्यस्य श्रुतिकल्पकत्वोपपत्तेरकिंचित्करः ॥ नच पाठव्यवस्थानुपपत्तिः तत्कल्पिका; तस्यान्यथाप्युपपन्नत्वेन व्यवस्थाकल्पकत्वासंभवादित्यभिप्रेत्याह—**गौतमीयादीति** ॥

**॥ इति सप्तमं होलाकाधिकरणम् ॥**

---

**( पील्वाद्यधिकरणैः व्याकरणाधिकरणापौनरुक्त्यपरिहारः )**

अत्राचारप्रामाण्यप्रसंगात्साधुभूतगोशब्दप्रयोगाचारस्य सास्नादिमतः पदार्थस्य कार्यभूतवाक्यार्थप्रमाकरणत्वात्प्रामाण्यस्येवासाधुगाव्यादिशब्दप्रयोगाचारस्य तादृशप्रमाकरणत्वमस्ति नवेति चिन्ता । साच यद्यपि पील्वादिवर्णके यववराहाधिकरणे भाष्यमतेनाभियुक्ताचारात् शास्त्रस्थाचारस्य बलवत्वं साधितमितीहापि स्मृत्यधिकरणसाधितस्मृतिप्रामाण्येन साधितप्रामाण्यकव्याकरणानुगृहीताचारबलीयस्त्वात् नोदेतीत्येतदर्थं प्रथमतो मूलभूतव्याकरणप्रामाण्यं साधितमपि न संभवतीत्येतदवश्यं साधनीयमेव दर्शयति—**स्मृत्यधिकरणेति** ॥

**( स्मृत्यधिकरणाक्षेपेणैतदधिकरणप्रवृत्तिनिरूपणम् )**

समूलत्वे तत्प्रामाण्यात्तदनुगता एव गवादयः शब्दा ज्योतिष्टोमादिकर्मणि प्रयोक्तव्याः, नतु तदननुगता गाव्यादयोऽपि । निर्मूलत्वेतु तत्प्रामाण्याभावान्नियामकाभावेन प्रत्यायकत्वाविशेषात् सर्वेषां प्रयोगस्सिद्धो भवतीत्यतः तदाक्षिप्य समाधीयत इत्यर्थः । **इत्येक इति** प्रयोगनियम इत्यर्थः । **इत्यपर इति** । साधुस्वरूपनियम इत्यर्थः ॥

**( साधुशब्दप्रयोगनियमासंभवनिरूपणम् )**

तत्र न तावत् आद्यो नियमःसंभवतिः नियमाभावेप्यसाधुभ्यः प्रयोगस्वरूपस्य तत्कार्याभिमानस्य जायमानत्वेन तत्स्वरूपे कार्ये वोपयोगाभावात् । अविहितत्वेन च प्रयोगस्यादृष्टार्थत्वाभावेनावघातादिनियमस्येवापूर्वेप्युपयोगकल्पनानुपपत्तेश्च । अथ रागप्राप्तभोजनाश्रितप्राङ्मुखत्वनियमवदर्थप्राप्तप्रयोगाश्रितसाधुनियमो धर्माय विधीयते इत्युच्यते, तत्राह—**नचेति** । न तावदत्र प्रत्यक्षादिकं मूलं संभवति; तेषां धर्माधर्मयोरप्रवृत्तेः । वेदवाक्यस्य मूलतया कल्पनायामपि प्रतिशब्दं 'गोशब्देनाभिदध्यात् न गावीशब्देने'त्येवं कल्पनस्य अनन्तश्रुतिपाठासंभवादसंभवः । नच पठितानामेव मूलत्वम्; नित्यानुमेयश्रुतिमूलत्वस्य निराकृतत्वात् । एकैकस्य च साधुशब्दस्य गावीगोण्याद्यनेकापशब्ददर्शनेन तद्विषयप्रतिषेधानां प्रतिपदकल्पनेऽत्यन्तमानन्त्यप्रसंगात् पाठानुपपत्तेश्च । 'साधुभिर्भाषेत नासाधुभिरि'त्येवं साधुत्वासाधुत्वोपपदकल्पनेन तत्कल्पनायां तयोर्निर्वक्तुमशक्तेः न संभव इत्यभिप्रेत्याह—**प्रतीति** । पूर्ववदित्यनेन पूर्वाधिकरणोपपादितोपपदासंभवरूपहेतूपजीवनेन पूर्वपक्षोत्थानादनन्तरसंगतिः सूचिता । निर्वचनासंभवमुपपादयति—**अनादीति** । अवध्यस्मरणे सति

गाव्यादिष्वपशब्देष्वपि सत्त्वात्, अपशब्दानां क्वचिद्वाचकत्वाभावे गवादिषु गौणत्वस्याप्यसंभवाच्च । अतो वाचकत्वाविशेषान्न व्याकरणेन नियमः संभवति इति प्राप्ते—

प्रयोगप्रत्यययोः साधुशब्दापभ्रंशजानां गाव्यादिशब्दानां तच्छब्दोपस्थापनद्वारोपपत्तेर्न वाचकत्वकल्पना; अनेकशक्तिकल्पनापत्तेः । इदानीन्तनानां च शक्तिभ्रमात्तौ । नच घटकलशादिपदवद्विनिगमनाविरहः; पाणिन्यादिप्रणीतव्याकरणस्यैव नियामकत्वात् । नच निर्मूलत्वम्; प्रयोगनियमे "साधूनेव प्रयुञ्जीते"त्येवंविधाया एकस्या एव श्रुतेर्मूल-

---

वाचकत्वमित्यर्थः । नच **नच** साधुशब्दस्मरणात् शक्तिभ्रमाद्वा प्रयोगप्रत्यययोरुपपत्तिः; गवादिष्वपि तथात्वस्य वक्तुं शक्यत्वेन विनिगमनाविरहात् । **ननु अपशब्दानां गवादिषु गौणत्वमेव न वाचकत्वम्, इत्यत आह—अपशब्दानामिति** ॥ **एतेन**—लक्षणापि—**निरस्ता**; तयोरर्थान्तरशक्तिपूर्वकत्वादिति भावः । अतो गाव्यादिशब्देभ्यो जायमानस्यार्थप्रत्ययस्य नियमेन वारयितुमशक्यत्वात् अर्थप्रत्ययाभावे च तत्प्रयोगस्यैवाप्रसक्तेरुभयथापि "साधूनेवे"ति नियमो न संभवतीत्यभिप्रेत्य पूर्वपक्षमुपसंहरति—**अत इति** । यथाच रक्षोहागमलघ्वसन्देहानां व्याकरणप्रयोजनकत्वमुक्तं तथा पूर्वपक्षे प्रतिपादितं कौस्तुभ एव द्रष्टव्यम् ॥

**( न म्लेच्छितवैइत्यस्य विषयसमर्पणम् )**

एवंच गाव्यादिशब्दानामपशब्दत्वाभावात् "नम्लेच्छितवै" "आहिताग्निरपशब्दं प्रयुज्ये"त्यादयो निषेधाः पारसीकशब्दविषया एव "न म्लेच्छभाषां शिक्षेते"त्यादिस्मृत्येकवाक्यतया नेयाः ॥ **अथवा**—"मन्त्रो हीनः स्वरतः" इत्येकवाक्यतया नेयाः । मन्त्रविषयस्वरवर्णभ्रेषविषयतया वा नेया इति भावः ॥

**( वाचकत्वं विनाप्यपशब्दप्रयोगप्रत्यययोरुपपत्तिवर्णनपूर्वकसाधुशब्दप्रयोगनियमसमर्थनम् )**

सिद्धान्तमाह—**प्रयोगेति** ॥ **तच्छब्दोपस्थापनेति** ॥ मूलभूतगोशब्दोपस्थापनद्वारेत्यर्थः । **अनेकेति** ॥ अनेकेषु शब्देषु शक्तिकल्पनविकल्पाद्यापत्तेरित्यर्थः । प्रथमतः करणापाटवादिना प्रयुक्ताद्गावीशब्दात् श्रोतुः प्रयोज्यवृद्धस्यार्थप्रत्ययः तावद्गोशब्दोपस्थापनेन यदा जातस्तदानीमेव श्रोतृपार्श्वस्थानां संज्ञासंज्ञिरूपशक्तिग्रहो भ्रमादेव जातः तथैवान्येषामपीदानींतनानामिति न प्रयोगप्रत्ययान्यथानुपपत्त्या वाचकत्वकल्पनमित्यर्थः । असाधुशब्दप्रयोगनिषेधस्य प्रत्यक्षत एवोपलम्भस्य वक्ष्यमाणत्वात् तत्र कल्पनाप्रयोजनाभावमर्थादेव वा तत्सिद्धमभिप्रेत्य साधुप्रयोगमूलभूतश्रुतिकल्पनामेव दर्शयति—**प्रयोगेति** ॥

**( पार्थसारथ्युक्तसाधुत्वनिर्वचनं तत्र प्रकाशकाराणां व्याख्यानं दलप्रयोजनं च )**

प्रथमतः पार्थसारथ्युक्तं साधुत्वनिर्वचनमाह—**अनादीति** ॥ अत्र प्रकाशकारा इत्थं तल्लक्षणार्थमाहुः—**हरिकारिकायाम्**—"अनपभ्रष्टताऽनादिर्यद्वाऽभ्युदययोग्यता । व्याक्रियाव्यञ्जनीया वा जातिः काऽपीह साधुता" । इति निर्वचनं त्रेधाकृतम् । तत्राद्दृष्टसाधनत्वपक्षौ विहाय **हरदत्तेन**—"अनिदंप्रथमाः शब्दाः साधवः परिकीर्तिताः । त एव शक्तिवैकल्यप्रमादालसतादिभिः । अन्यथोच्चरिताः पुंभिः अपशब्दा उदाहृताः ।" इति प्रथमपक्षस्यैव विस्तरेणोक्तेः स एवादृतः पार्थसारथिना । तत्र यद्यपि अनादित्वमात्रं साधुत्वनिर्वचनमत्र प्रतीयते; तथापि अनपभ्रष्टविशेषितं तत् द्रष्टव्यम् । तदेव 'मनादिरनपभ्रष्टता साधुत्वमि'ति तद्ग्रन्थेऽन्त्ये उपसंहारात्, हरिकारिकायामपि विशेषणविशेष्यभावदर्शनाच्चेतरयो 'रनपभ्रष्टताऽनादिरि'त्यत्र वाशब्दप्रयोगाच्च । तत्र यद्यनपभ्रष्टत्वमात्रमुच्येत तदा टिघुभादिसंज्ञास्वतिव्याप्तिः । अतोऽनादित्वप्रवेशः । **तदुक्तं हरदत्तेन**—"यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः । कथं नु तासां साधुत्वं नैव ताः साधवो मताः । अनपभ्रंशरूपत्वान्नाप्यासामपशब्दता । हस्तचेष्टा यथा लोके तथा संकेतिता इमाः । नासां प्रयोगेऽभ्युदयः प्रत्यवायो न वा भवेत् ।" **इति** ॥ अनादित्वमात्रोक्तौ अनर्थकैकवर्णसमुदायेऽतिव्याप्तमित्यनपभ्रष्टपदोपादानम् ॥

**( अनपभ्रष्टत्वपरिष्कारः )**

**ननु—अनपभ्रष्टत्वं** अत्र यद्यनादिर्यः शब्दः स च प्रत्यायक इति साधुत्वलक्षणार्थे क्रियमाणे यद्यपि नामकरणसंकेतिते रुद्रादिशब्दे अनादिशब्दत्वादपत्यरूपार्थप्रत्यायकत्वालक्षणसमावेशसंभवः; तथापि गोणीशब्दस्यावपनवाचिनोऽनादित्वात् गोरूपार्थप्रत्यायकत्वाच्च गवि साधुत्वापत्तिः, अतस्तत्परिहारार्थं यदर्थविषयप्रत्यायकत्वमनादिः स तत्र साधुरित्युच्येत, तर्हि रुद्रादिशब्दस्य शिवाद्यर्थप्रत्यायकत्वस्यानादित्वाभावात् असाधुत्वापत्तिरिति—**चेत्, उच्यते**; नामकरणविधिनाऽनादिरेव पुत्रत्वोपाधिना संकेतितः कर्तव्यतया विहितः इति तेन सामान्योपाधिनाऽनाद्येव पुत्रादिप्रत्यायकत्वं रुद्रादिशब्दानामिति न दोषः । अतो यदर्थप्रत्यायकत्वमनादि स तत्रार्थे साधुरिति युक्तम् लक्षणमिति ॥

**( अनादिवाचकत्वमित्यत्र न विशेषणविशेष्यभावः किन्तु लक्षणद्वयमिति निरूपणम् )**

**अत्रेदमवधेयम्**—यद्यर्थप्रत्यायकत्वं शक्त्योच्यते, तदा गङ्गाग्निपदयोः तीरमाणवकयोरसाधुत्वापत्तिः । नच असन्मते शक्यार्थस्यैव तीराद्युपस्थापकत्वात् गङ्गादिपदानां तीरादिप्रवाहवाचकत्वेनैव तीरादौ साधुत्वमिति प्रकाशकारोक्तं यु-

त्वात्, साधुत्वं चानादिवाचकत्वं, अनपभ्रष्टत्वं वा, व्याकरणाभ्यासजनितसंस्कारव्यङ्ग्या जातिर्वा, प्रमितवृत्त्याऽर्थे-

क्रम्; तत्र यदि शक्यार्थप्रत्यायकत्वमेव वाच्यम्, तावतापि अनादिपदोपादानवैयर्थ्यम्; टिघुभादिसंज्ञासु शक्तेरेवाभावेन शक्यार्थप्रत्यायकत्वमात्रेण निराकरणोपपत्तेः, सादिशक्तिस्वीकारे च साधुत्वस्याप्यापत्तेश्च। अन्यथा अर्थवत्त्वाभावेन प्रातिपदिकसंज्ञाभावाट्टेरित्यादिषष्ठ्यनापत्तेः। यत्तु टेरित्यादीनां शब्दानुकारत्वाङ्गीकारेण साधुत्वमङ्गीकृत्य शब्दपरत्वेऽर्थपरत्वाभावात् शब्दस्यैव लोपादिकार्यान्वयापत्तिमाशंक्य शब्दपरस्यैव लक्षणयाऽर्थपरत्वं यदुक्तम्, तत्स्वयमेव पूर्वं साधुत्वानङ्गीकारात् पूर्वापरविरुद्धत्वात् शब्दपरत्वस्यापि अनादित्वाभावाद्वेदोक्त "हेलय" इत्यादिशब्दानां अनुकरणत्वाङ्गीकारेण साधुत्वेन स्वयमङ्गीकृतानां अनाद्यर्थप्रत्यायकत्वाभावाच्च लक्षणस्याव्याप्तेश्चायुक्तम्। **वस्तुतस्तु**—वृत्तिग्रहाभावे टिघुभादीनां अर्थबोधकत्वानुपपत्तेर्वृत्तावपि च लक्षणागौण्योः शक्यपूर्वकत्वेनासंभवात्संकेतत्वेन च गाव्यादिशब्दवच्छब्दोपस्थापनेन शक्तिभ्रमेण वा बोधकत्वानुपपत्तेरवश्यकल्प्यायां शक्तौ शब्दविषयशक्तिस्वीकारेण अर्थपरत्वमेव युक्तमिति तत्रानाद्यर्थप्रत्यायकत्वाभावात् दुरुपपादमेव साधुत्वमित्यनादिपदोपादानं व्यर्थमेव। अतोऽनादिरिति भिन्नं लक्षणम्, अपरं च अनपभ्रष्टतेति लक्षणम्, न तु विशेषणविशेष्यभावः। अतएव शास्त्रदीपिकायां "सर्वकालवृत्तित्वमेव चानादित्वं साधुत्वम्। तच्चाविच्छिन्नपारंपर्यादभियुक्तस्मरणेन सुलभमि"त्युक्तमिति मूलग्रन्थविरोधोऽपीत्यभिप्रेत्य हरिकारिकागतानपभ्रष्टतापदस्य यथाश्रुतार्थपरत्वमेवाङ्गीकृत्य द्वितीयं लक्षणमाह—**अनपभ्रष्टत्वं वेति**॥ करणापाटवादिजन्यापभ्रंशरहितत्वमित्यर्थः॥

### (द्वितीयलक्षणास्वारस्येन तृतीयं तदस्वारस्येन तृतीयं च लक्षणं निर्वक्ति)

इदमपि डुमावनर्थकवर्णेष्वतिव्याप्तम्, अतो लक्षणान्तरमाह—**व्याकरणेति**॥ अत्रापि न गवादिशब्देष्वेवानुगता गाव्यादिशब्देभ्यो व्यावृत्ता साधुत्वं नाम जातिः संभवति; लोके गवादिशब्दमात्रवृत्तिसाधुशब्दप्रयोगाभावेन तदङ्गीकारे मानाभावात्। **किंच** व्याकरणानुगतशब्दमात्रवृत्तित्वेन तत्स्वीकारे वचन्तीत्यस्यापि साधुत्वापत्तिः। यत्र प्रयुज्यमानत्वे सति व्याकरणानुगतत्वं तत्र साधुत्वजातिस्वीकारे गवादिपदस्यानेकक्रमिकवर्णसमुदायात्मकत्वेन यौगपद्यासंभवात् "अनारब्धे तु गोशब्दे गोशब्दत्वं कथं भवेदि"ति न्यायेन पदत्वादिजातेरिव साधुत्वादिजातेरप्यसंभव एवेत्ययुक्तं लक्षणं मत्वा न्यायसुधाकारोक्तं लक्षणान्तरमाह—**प्रमितवृत्त्येति**॥

### (वृत्तित्वादिनिर्वचनासंभवेन वृत्तीयलक्षणे प्रकाशकृतो दूषणपरिहारौ)

**यत्तु** अत्र प्रकाशकारैः न शक्त्याद्यनुगतं वृत्तित्वं नाम किंचित् शक्यते निर्वक्तुमिति दूषणं दत्तम्, **तत्** शक्तिलक्षणागौणीषु वृत्तिपदस्य शास्त्रकारैः संकेतितस्यैव लघुनोपायेन लक्षणे प्रवेशान्निर्वचने प्रयोजनाभावादयुक्तम्। यदपि आधुनिकसंकेतितनामसु वृत्तित्वाभावाल्लक्षणस्याव्याप्तिरिति तेषां दूषणम्, तत् "द्वादशेऽहनि पिता नाम कुर्यादि"ति सामान्यविधिना पुत्रत्वोपाधिना सर्वेषां देवदत्तशब्दादीनां संकेतकरणेन शक्तेः प्रमितत्वादयुक्तम्॥ **उक्तंच हरिणा**—"पुंत्रादिनामकरणे गृह्येषु नियमश्रुते। अनादिशक्तिता संज्ञास्वपि नैव विरुध्यते।" **इति**॥ तेषामनादितासंज्ञास्वपीतिपाठः। तस्मात् तेषामप्यनादिताङ्गीकारादर्थप्रत्यायनरूपकार्यानुरोधेनावश्यक एव शक्तिस्वीकार इति न दोषः॥ टिघुभादिसंज्ञास्वपि पूर्वोक्तरीत्याऽर्थपराणां सादिशक्तिस्वीकारात् नाव्याप्तिः। अपशब्दानां तु तत्तच्छब्दोपस्थापनेन अर्थप्रत्यायनात् वृत्त्यनङ्गीकारान्नाप्यतिव्याप्तिरिति युक्तं लक्षणमित्यर्थः॥

### (वचन्तीत्यादीनां साधुत्वपरिहारोपायः)

अत्र शक्तिभ्रमेणार्थप्रत्यायकेऽपशब्देऽतिप्रसंगवारणाय प्रमितपदोपादानेऽपि यत्र यः शब्दः प्रयुज्यते, तस्यैव तादृशार्थप्रत्यायकत्वमित्यपि निवेशनीयम्; इतरथा घटशब्दस्य पटे साधुतापत्तेः। ततश्च एतादृशसाधुत्वस्य व्याकरणानुगतत्वमेव शक्तिनिर्णयद्वाराऽभिव्यञ्जकम्। वचन्तीत्यादौ व्याकरणानुगतत्वस्य "नहि वचिरन्तिपरः प्रयुज्यते" इति कात्यायनेन निषेधकरणेनाभावान्न साधुत्वमिति साधुत्वासाधुत्वोपलक्षणेनैकस्या एव शक्तिनिर्णायकत्वान्न घटकलशादिवद्विनिगमनाविरह इति भावः॥

### (आशङ्कानिरासपूर्वकंसाधुभिरेव भाषेतेति नियमस्वरूपतद्व्यावर्त्यांशादिनिरूपणम्)

**ननु**—अत्र कीदृशो नियमो विवक्षितः, किं साधुभिर्भाषेतैवेत्येवं क्रियाविषयको वा? उत यद्भाषितव्यं तत्साधुभिरेवेति साधनविषयो वा?। **नाद्यः**, मौने दोषापत्तेः। **नान्त्यः**; भाषणं हि नार्थप्रतिपादनमात्रम्। अक्षिनिकोचादावप्रयोगात्, किन्तु शब्दव्यापारसाध्यं अर्थप्रतिपादनम्, तत्र च वाचकस्य साधुशब्दस्यैव प्राप्तेरत्यन्तावाचकासाधुप्रयोगाप्रसक्तेः कथंचिदसाधुप्राप्त्या तन्नियमकरणेऽक्षिनिकोचादेरपि कथंचित्प्राप्त्या निवृत्त्यापत्तिरिति—**चेत्**, परिहृतमेतदाचार्यैः। स्वाभिप्रायप्रकाशनद्वाराऽर्थप्रकाशनमात्रमत्र भाषेतेत्यनेन लक्षणयोच्यते, यदि शब्दव्यापारद्वाराऽर्थज्ञापनरूपं भाषणमुच्येत, तदा साधुव्यतिरिक्तोपायाप्रसक्त्या साधुनियमोऽनर्थको भवेत्, इह तु स्वाभिप्रायप्रकाशनद्वाराऽर्थज्ञापनरूपं भाषणमुद्दिश्य साधुनियमविधौ च न मौने दोषः। तत्रोद्देश्याभावादेव विध्यप्रवृत्तेर्मौनव्यावर्तनात् यत्रापि भोजनादौ वैधं मौनं, तत्रापि एतद्विधिप्रवृत्त्याऽक्षिनिकोचादिव्यावर्तनात् हस्तसंज्ञादिना शाकादेर्ज्ञापनवारणादि न कार्यम्। **अथवा**—

प्रतिपादकत्वं चेति कौस्तुभ एव क्षुण्णम् । तदभावश्चासाधुत्वम् । प्रत्यक्षैव च श्रुतिः "न म्लेच्छितवै म्लेच्छो ह वा एप यदपशब्द" इति मूलम् । अयं च निषेधः प्रकरणाज्ज्योतिष्टोमाङ्गम्; यज्ञमात्रेऽपि च निषेधो "याज्ञे कर्मणि नियमोऽन्यत्र" इत्यादिना ज्ञायते ।

सामान्यविशेषन्यायान्मौनविधिनैव साधुभाषणविधेर्बाधात्तत्फलीभूताक्षिनिकोचादिव्यावृत्तेरपि बाधान्न शिष्टाचारविरोधोऽपि । नह्येतादृशे भाषणेऽसाधूनामप्रसक्तिरस्ति । अतस्तद्व्यावृत्त्या युक्तो नियम इति । प्रकारान्तरमपि वार्तिके उपपादितं तत्रैव द्रष्टव्यम् । अतो युक्तमेव साधुप्रयोगनियममूलभूतश्रुतिकल्पनम् ॥

## ( न म्लेच्छितवै इत्यत्र म्लेच्छशब्दस्यापशब्दपरत्वोपपादनपूर्वकं तस्याः प्रत्यक्षाया एव साधुशब्दप्रयोगनियममूलत्वोपपादनम् )

**वस्तुतस्तु**—नात्र श्रुत्यनुमानमपि; प्रत्यक्षाया एव तस्याः पाठस्योपलंभादित्याह—**प्रत्यक्षैववेति** । वाजसनेयिशाखायां हि "तेऽसुरा हेलयो हेलय इति वदन्तः पराबभूवुः । तस्मात् ब्राह्मणेन न म्लेच्छितवै म्लेच्छो ह वा एप यदपशब्द" इति श्रुतौ पठ्यमानायां विध्यर्थे विहितेन तवैप्रत्ययेन म्लेच्छितव्यमित्यर्थावगमात् प्रत्यक्षत एवापभाषणनिषेधाच्च साधुभाषणनियमविधिः प्रतीयते । नच म्लेच्छशब्दः पारसिकीशब्दविषयः; उपक्रमोपसंहारस्थार्थवादपर्यालोचनयाऽपशब्दमात्रविषयत्वप्रतीतेः । उपक्रमे च "हे अरय" इति प्रयोज्ये रेफस्थाने लकारप्रयोगेण "हैहे प्रयोगे हैहयोः" इत्येतत्सूत्रविहितप्लुताप्रयोगेण "प्लुतप्रगृह्या अचि नित्यम्" इति विहितप्रकृतिभावाभावाच्च "हेलयः" इत्यसुरकृतनिविदपशब्दभाषणस्य पराभवरूपानिष्टहेतुत्वावगतेरत एवापशब्दत्वेनैवोपसंहारप्रतीतेर्न म्लेच्छभाषापरत्वमिति भावः ॥

## ( अपशब्दभाषणनिषेधस्य क्रत्वर्थत्वोपपादनम् । ज्योतिष्टोमे प्रतिनिधितयाऽपि अपशब्दनिषेधोपपादनं च )

**ननु** कथं क्रत्वर्थतयाऽपशब्दभाषणनिषेधः ? अपशब्दभाषणस्य पुरुषार्थत्वेन तद्विषयकनिषेधस्य निषेध्यसमानार्थकत्वस्य युक्तत्वात्, इत्यत आह—**अयंचेति** ॥ "नानृतं वदेदि"ति प्रकरणात् ज्योतिष्टोमाङ्गम् । "क्र्युपायमांसभक्षादि पुरुषार्थमपि श्रितः । प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात्" इतिवार्तिकोक्तरीत्या यदर्था क्रिया तदर्थो निषेध इति नियमस्यौत्सर्गिकत्वात् न दोष इत्यर्थः । न केवलं ज्योतिष्टोम एव तन्निषेधोऽपितु यज्ञमात्र इत्याह—**यज्ञमात्रेपिचेति** ॥ **नच**—एवं "वाग्योगविदुष्यति चापशब्दैरि"ति स्मृत्या वाचा मनसा च यज्ञो वर्तेत इति लिङ्गदर्शनेन वाग्योगशब्दस्य यज्ञपरत्वावसायात्तद्विदो यज्ञमात्रस्यापशब्दभाषणे दोष इत्यर्थावगतेर्यज्ञमात्रविषयनिषेधपरस्य "याज्ञे कर्मणी"ति महाभाष्यवचनस्यापि यज्ञमात्रविषयतया प्रतीतेः ताभ्यामेव विधिनिषेधाभ्यां इतरयज्ञ इव ज्योतिष्टोमेऽपि तदुभयप्राप्तेर्विशेषतो निषेधाम्नानं व्यर्थं इति—**वाच्यम्**; निषेधातिक्रमे यजुर्वेदत्रेषप्रायश्चित्तप्राप्त्यर्थमृत्विग्यजमानसाधारण्येन निषेधप्राप्त्यर्थं वा तत्सार्थक्योपपत्तेः । **अथवा**—साधुनियमेनार्थान्निवृत्तानामपि असाधूनां साधुप्रयोगासंभवेऽवघातासंभव इव नखदलनादेः प्रतिनिधित्वेन प्राप्तौ प्रसक्तायां तन्निषेधार्थं तन्निषेध इति कौस्तुभदर्शितरीत्या वा सार्थक्योपपत्तेश्च । अस्मिंश्च पक्षे ज्योतिष्टोमे साधुप्रयोगासंभवेऽक्षिसंकेतादेरेव प्रतिनिधित्वम्, नत्वसाधुशब्दस्येत्यपि द्रष्टव्यम् ॥ **वस्तुतस्तु**—वाग्योगविदित्ययं न स्वतन्त्रो निषेधः, किंतु साधुप्रयोगनियमेनार्थादसाधुभाषणनिवृत्तेः "नगिरे"तिवदनुवादमात्रम् "यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति फलं परत्र चे"ति चरणत्रयविहितस्य पुरुषार्थस्य साधुनियमस्यौचित्येन स्तुत्यर्थं इति **कौस्तुभे द्रष्टव्यम्** । एतच्च "आहिताग्निरपशब्दं प्रयुज्य सारस्वतीमिष्टिं निर्वपेदि"ति प्रायश्चित्तविध्यन्यथानुपपत्तिकल्पितापशब्दनिषेधस्याप्युपलक्षणम् । तत्राप्याहिताग्निपदोपादानात् तत्साध्यक्रतुमात्रप्रसक्तापशब्दप्रयोगे प्रायश्चित्तविधानात् निषेधस्य यज्ञमात्रपरत्वमवसीयते ॥

## ( पुरुषार्थतयाऽपशब्दभाषणनिषेध इति प्रकाशकारमतं तत्खण्डनं च )

**यत्तु**—एतस्य यज्ञातिरिक्तव्यवहारे पुरुषार्थतयाऽपशब्दभाषणनिषेधपरत्वं प्रकाशकारा वर्णयन्ति, तस्य दूषणं कौस्तुभे द्रष्टव्यम् । अतएव "अन्यत्रानियम" इति भाष्यकारीयं वचनं आहिताग्नीनामपि व्यवहारकाले हरिनामकीर्तनादपशब्दभाषणाचारोऽनुगृहीतो भवतीत्यलं विस्तरेण ॥

## ( सत्यं वदेत्, नानृतं वदेदित्यनयोः प्रयोगनियममूलत्वमितिशास्त्रदीपिकातद्व्याख्यानयोः सिद्धान्तखण्डनम् )

**यत्तु**—सम्यक्त्वासम्यक्त्ववाचिसत्यानृतपदोपादानात् "सत्यं वदेत्" "नानृतं वदेत्" इत्यनयोरेव श्रुतिस्मृतिषु श्रूयमाणयोर्विधिनिषेधयोः प्रयोगनियमांशे मूलत्वोपपत्तेरेकोपलक्षणासंभवेन मूलकल्पनानिरासो न युक्त इति वार्तिके पक्षान्तरमाह—तदेव शास्त्रदीपिकायामनुसृतम्, तद्वदेदित्यस्यार्थाभिधानार्थकत्ववच्छब्दोच्चारणपरत्वादनृतपदस्याप्यर्थविषये सत्यत्वपरत्वात् शब्दविषये वापभ्रष्टत्वपरत्वात् सकृच्छ्रुतस्य अनेकार्थपरत्वायोगेनोभयनिषेधकत्वायोगात् प्रत्युत "एष ह वै सत्यं वदन् सत्ये जुहोत्यस्तमिते जुहोति उदिते प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति ये ऽग्निहोत्रमि"त्यादिश्रुतिपर्यालोचनयाऽर्थपरत्वावसायाच्छब्दपरत्वानुपपत्तेर्गौव्यादि-

त्रानियम" इति महाभाष्याद्यनुसारात्। साधुप्रयोगनियमात् परं फलोदय इत्यपि; "एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवती"ति वचनात्।

अत्र हि प्रयोगाश्रितः साधुनियमः फलोद्देशेन विधीयते। रागप्राप्तस्यापि च साधुप्रयोगस्य "तस्मादेषा व्याकृता वागुद्यत" इति वचनादाश्रयत्वसिद्धिरिति स्पष्टं कौस्तुभे।

---

शब्दस्य च शिष्टैरगर्हितत्वात्प्रौढिवादमात्रमिति राणके एव व्यक्तम्। **यत्तु**—सोमनाथेन सत्यत्वं नाम वृत्त्याऽबाधितार्थबोधकत्वम्। तच्च गौरियमिति शब्दे अर्थस्य गोरबाधितत्वादर्थविषयं सत्यत्वम्, गोशब्दस्य शक्त्या प्रतिपादकत्वात् शब्दविषयसत्यत्वमित्युभयमपि निरुक्तरूपेण एकस्यैव सत्यशब्दस्यार्थः। गाव्यस्त्यीत्यत्र तु अर्थाबाधेऽपि वृत्तेरभावाच्छब्दानृतत्वं, अर्थबाधस्थलेतु प्रतिपादकत्वसद्भावेऽप्यर्थस्याबाधितत्वाभावान्नातिप्रसङ्ग इत्युभयं निरुक्तबोधकत्वाभावेनैकस्यैवानृतशब्दस्यार्थोऽतः सत्यानृतशब्दयोः नानेकार्थतापत्तिः—**इत्युक्तम्**; तदेकरूपेणापि प्रतिपादितार्थद्वयस्य युगपद्वदनक्रियान्वयायोगात् क्रियापदे अनेकार्थकल्पनया आवृत्त्यापत्तेरनिवारणादुपेक्ष्यम्॥

**( अपशब्दभाषणनिषेधस्य क्रत्वर्थतोपसंहारः )**

एवंच "न म्लेच्छभाषां शिक्षेत" इत्यादिनिषेधैः म्लेच्छभाषायाः पुरुषार्थतया सर्वत्र निषेधेप्यपशब्दरूपान्यभाषानिषेधस्य सर्वथा क्रत्वर्थतयैवावगतेः व्यवहारकाले तदुच्चारणान्नैव प्रत्यवाय इति सिद्धम्॥

**( यजमानसंस्कारद्वारा साक्षाद्वा क्रत्वपूर्वे साधुप्रयोगनियमापूर्वस्योपयोगः )**

एवं तावत् ज्योतिष्टोमप्रकरणगतनिषेधस्य प्रकरणात्क्रत्वर्थत्वे प्राप्तेऽपि जंजभ्यमानानुवचनन्यायेन ज्योतिष्टोमापूर्वसाधनीभूतत्राह्मणपदोपात्तयजमानसंस्कारत्वावगतेः तत्र च यजमानस्यैव तार्तीयन्यायेन कर्तृत्वेन संस्कार्यत्वात् तदर्थापत्त्या कल्पितसाधुनियमविधिविहितसाधुनियमादृष्टस्य क्रत्वर्थत्वात् तज्जन्यफलाधानयोग्यतासंपादनद्वारा क्रत्वपूर्वे उपयोगात् न वैयर्थ्यम्। एवं "याज्ञे कर्मणी"ति महाभाष्यकारवचनात् यज्ञमात्रापूर्वेऽपि उपयोगान्न वैयर्थ्यम्। **एतावांस्तु विशेषः**—महाभाष्यकारवचने ऋतुयुक्तपुरुषवाचकपदोपादानाभावात्तत्संस्कारत्वे प्रमाणाभावादनृतवदनवर्जनस्यैव शुद्धक्रतुधर्मत्वात्तत्कृतवैगुण्यपरिहारार्थं ऋत्विग्यजमानसाधारण्येन कर्माङ्गभूतव्रीह्यादिपदार्थव्यवहारार्थं लौकिकशब्दे प्रयोक्तव्ये व्याकरणानुगतशब्दनियमात्तज्जन्यं यदवघातादिनियमजन्यादृष्टवत् शुद्धक्रत्वर्थं अपूर्वं तदङ्गभूतव्रीह्यादिनिष्ठमेव कल्प्यते इति॥

**( क्रत्वर्थत्ववत्संयोगपृथक्त्वन्यायेन पुरुषार्थत्वमपीति निरूपणम् )**

एतावताच क्रत्वर्थत्वेन नियमादृष्टवैयर्थ्ये परिहृते संयोगपृथक्त्वन्यायेन पुरुषार्थताङ्गीकरणमित्यपिशब्दाभ्यां सूचयन्

---

तद्वैयर्थ्यं परिहर्तुमाह—**साधुप्रयोगनियमादिति**॥ "एकः शब्दः सुप्रयुक्तः" इत्यनारभ्याधीतवाक्येन फलसंबन्धस्यापि बोधनात् तादृशफलस्यापूर्वं विनाऽनिष्पत्तेः तत्र च ज्योतिष्टोमसाध्यफलोपभोगलक्षणकार्योपयोगित्वाद्वपनादिनेव फलाधानयोग्यतारूपसंस्कारस्य साधुनियमेन निष्पत्तेरुपयोगान्न वैयर्थ्यमित्यर्थः॥

**( एकः शब्द इति वाक्यार्थस्य प्रकृतानुगुणस्य संपादनप्रकारः )**

अत्र च सुप्रयुक्त इत्यस्य अग्रे शास्त्रान्वय इत्यपि पठति। तेन शास्त्रशब्देन रूढ्या विद्यास्थानवाचिना व्याकरणस्यैवाभिधानात् व्याकरणशास्त्रानुगतसाधुशब्दभाषणनियमस्य स्वर्गसाधनत्वावगतेः पुरुषार्थता अवसीयते। तथाच रागप्राप्तप्रयोगाश्रितः साधुनियमो भोजनाश्रितः प्राङ्मुखत्वनियम आयुष्यफल इव स्वर्गफले विधीयते। तस्य चाज्ञातस्य शब्दस्य प्रयोगाश्रिततवासंभवादर्थप्राप्तव्याकरणोत्थज्ञानकर्मत्वस्यानुवादकमेव सम्यग्ज्ञात इति पदम्। एवंचात्र प्रयोगाश्रितादेव फलोक्तेः ज्ञानमात्रादेव धर्म इति पक्षो भाष्याद्युक्तोऽपि अभ्युपेत्यवादेनैव नेयः॥

**( साधुशब्दानां प्रयोगाश्रितानामेव फलसाधनत्वं न ज्ञानमात्रादित्यस्य सोपपत्तिकमुपपादनम् )**

अतएव ज्ञानस्य साधुनियमार्थत्वेन परार्थत्वाज्ज्ञानफलप्रतिपादकानां वचनानां "योऽश्वमेधेन यजते य उ चैनमेवं वेदे"तिवत्पर्णमयीन्यायेनार्थवादत्वमेव। **एतेन**—शास्त्रोत्थज्ञानपूर्वकप्रयोगस्यैव धर्महेतुत्वाभिधानं व्याकरणवार्तिककारीयं—**निरस्तम्**; प्रयोगस्य रागप्राप्तत्वेन अविधेयत्वेन फलसंबन्धासंभवात्। नच भाषणस्याप्यर्थज्ञानार्थत्वेन परार्थत्वादपापश्लोकश्रवणवत् "स्वर्गे लोके" इत्यस्यापि अर्थवादमात्रत्वं शङ्क्यम्; अनारभ्यविहितस्य भाषणस्य क्रत्वर्थत्वे प्रमाणाभावेन दृष्टार्थव्यवहारहेतुत्वेन शुद्धपुरुषार्थत्वावगतेः फलाकाङ्क्षायां "फलमात्रेयो निर्देशादि"ति न्यायेन फलप्रतिपादकत्वोपपत्तेः इति भावः॥

**( रागप्राप्तस्य साधुप्रयोगस्याश्रयत्वेनान्वेतुं योग्यस्योपस्थापकप्रमाणनिरूपणम् )**

**ननु** एवं दृष्टार्थस्य रागप्राप्तस्य भोजनस्याधिकाराख्यप्रकरणेन दिङ्नियमाश्रयत्वसंभवेऽपि इह तदभावे उपस्थितिमात्रेणाश्रयत्वे क्रियान्तराणामप्याश्रयत्वापत्त्या सुप्रयुक्त इति नित्यवदनुवादानुपपत्तिरिति शङ्कां परिहरति—**रागप्राप्तस्यापीति॥ तस्मादेषेति॥** प्रकृतिप्रत्ययाधानरूपेण व्याकरणेन

"गवादय एव साधवो न गाव्यादय" इति साधुस्वरूपनियमस्य तु अनादिप्रयोगपरम्परैव मूलम् । अतः प्रमाणं व्याकरणम् । यत्तु न्यायमूलकं स्फोटादि तत्रोच्यते श्रुतिविरुद्धं च, तन्न्यायश्रुतिविरोधे कामं भवत्वप्रमा-

---

संस्कृताया वाचो भाषणरूपधात्वर्थाश्रयसंबन्धविधानात् भाषणस्याश्रयत्वं नासुलभमित्यर्थः ॥

**( अत्र प्रासङ्गिकप्रकाशकारमतखण्डनम् )**

अत्र प्रकाशकारैरस्य पुरुषार्थभूतसाधुभाषणनियमोत्पत्तिविधिपरत्वमङ्गीकृत्य "एकः शब्द" इत्यस्य फलसंबन्धबोधकत्वमित्युक्तम् । तदेकः शब्द इत्यनेनैवोभयसंभवाद्वैयर्थ्यात् अनन्यलभ्याश्रयसंबन्धविधायकतयैव परिहरणीयत्वात् अयुक्तमिति सूचयितुं वचनादित्युक्तम् । नह्येकः शब्द इत्यनेन साधुभाषणनियमस्य स्वर्गफलसाधनता बोध्यते, अपितु सुप्रयुक्तः कामधुगिति सामानाधिकरण्यात् प्रयोगाश्रितसाधुशब्दनियमस्यैवेति साधुभाषणविधेरनपेक्षणादपेक्षिताश्रयसंबन्धबोधकत्वमेव युक्तम् । अत एव शास्त्रदीपिकायां तदाश्रितः साधुनियम इत्येवोक्तम् इति भावः ॥ यत्तु न्यायसुधाकृताऽस्य क्रत्वर्थतया विधायकत्वमुक्तं, तत् कौस्तुभे निरस्तम् तत्रैव द्रष्टव्यम् ॥

**( गवादय एव साधव इत्यत्रानादिप्रयोगपरंपराया एव मूलत्वनिरूपणम् )**

**अनादिप्रयोगपरंपरैवेति** ॥ साधुत्वाश्रयाणां शब्दानां श्रोत्रप्रत्यक्षसिद्धत्वात् तेषां प्रमाण्यनिश्चय एव केवलं व्याकरणाधीन इति तत्रापि व्याकरणान्तरमूलकत्वादुपपन्नमेवानादिसाधुस्वरूपनियमज्ञानम्; चतुर्दशमहाविद्यास्थानान्तर्गतत्वेन कल्पादिवत्प्रवाहनित्यताया व्याकरणेऽपि स्वीकर्तुं युक्तत्वात् । अन्यथा तत्रापि नित्यब्रह्मयज्ञविधिविषयत्वानुपपत्तेः । अत एव तैत्तिरीयगते "प्रयाजानूयाजेषु विभक्तिः कुर्या"दिति ब्राह्मणे विभक्तिकरणमुपपद्यते । नचैवं स्मृत्यन्तरमूलकत्वेऽन्धपरंपरापत्तिः; अदृष्टसाधनत्वस्याष्टकादौ प्रत्यक्षाविषयत्वेन अन्धपरंपराप्राप्तावपि "ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मण" इति स्मृत्युक्ताभिव्यञ्जकज्ञानसहकृतचक्षुर्ग्राह्यत्वेन ब्राह्मणप्रत्यक्षस्येवेहापि पूर्वपूर्वव्याकरणावगतप्रकृतिप्रत्ययाद्यभिव्यञ्जकाभ्यासजनितसंस्कारसहकृतेनार्थज्ञानान्यथानुपपत्तिसहकृतेन च श्रोत्रेणाद्ययावत्साधुशब्दप्रत्यक्षोपपत्तेस्तदप्रसक्तेः । अतो "गवादय एव साधव" इति स्वरूपनियमेऽनादिप्रयोगपरंपरैव मूलमिति भावः । अतो वेदावगतसम्यक्साधुशब्दप्रयोगात्मकधर्माङ्गत्वेन व्याकरणप्रक्रियेति कर्तव्यतयोपयुज्यते इति सिद्धं व्याकरणप्रामाण्यमुपसंहरति—**अत इति** ॥ एतदुपपादनपूर्वकं न्यायविरुद्धत्वेन दर्शितं कौस्तुभे द्रष्टव्यम् । **श्रुतिविरुद्धं चेति** ॥

णम् ॥ इत्यष्टमं व्याकरणप्रामाण्याधिकरणम् ॥

---

**( ९ अधिकरणम् । )**

**प्रयोगचोदना** ॥ वाचकशब्दप्रसङ्गाद्वाच्यं किं घटत्वा-

---

**( कलेर्ढक् वामदेवाड्ड्यड्ड्यौ इत्यन्वाख्यानयोरर्थवादविरुद्धयोः सर्ववेष्टनवदननुष्ठानलक्षणाप्रामाण्यनिरूपणम् )**

"दृष्टं सामे"त्यधिकारे "कलेर्ढक्" "वामदेवाड्ड्यड्ड्या"-विति सूत्राभ्यां कलिना वामदेवेन वर्षिणा दृष्टं सोमेत्यर्थे कालेय-वामदेव्यशब्दयोः साधुत्वान्वाख्यानं क्रियमाणं श्रुतिविरुद्धम्; "यदकालयत्तत्कालेयस्य कालेयत्व"मित्यर्थवादे सुखस्वीकाररूपकालप्राप्तिनिमित्तत्वस्य कालेयशब्देऽभिधानात् । तथा "आपो वै ऋत्विजमाच्छंस्तासां वायुः पृष्ठे व्यवर्तत ततो वामं वसु सन्न्यभवत् तन्मित्रावरुणौ पर्यपश्यतां तावब्रूतां वामं मर्त्या इदं देवेभ्योऽजनि तस्माद्वामदेव्यं" इत्यर्थवादे वामदेव्य इति समभिव्याहृतपदद्वयोच्चारणक्रियानिमित्तत्वस्य वामदेव्यपदेऽभिधानात् । अतः तत् यावत्मूलभूतश्रुतिदर्शनमननुष्ठानलक्षणाप्रामाण्यविषयं भवतु सर्ववेष्टनस्मृतिवन्नत्वेतावता सर्वस्याप्रामाण्यमित्यर्थः । प्रयोजनं पूर्वोत्तरपक्षोत्थं प्रागेव दर्शितम् ॥

**॥ इत्यष्टमं व्याकरणप्रामाण्याधिकरणम् ॥**

---

**( आकृत्यधिकरणोपोद्घातस्य लोकवेदाधिकरणस्याकृत्यधिकरणोपक्रमेणोपक्रमे निमित्तनिरूपणम् )**

लोकवेदयोः शब्दानामन्यत्वं उत नेति विचारार्थं लोकवेदाधिकरणस्य पूर्वव्युत्पादितव्याकरणप्रामाण्याधिकरणेनासंगतिमभिप्रेत्य सङ्गतिलोभेनाकृत्यधिकरणमेवादावारम्भणीयं, तेन च प्रसङ्गसङ्गत्युपपत्तेर्नासङ्गतता । लोकवेदाधिकरणं तु तदुपोद्घातत्वेन मध्ये संगतमित्येवं सङ्गतिं सूचयितुमाकृत्यधिकरणचिन्तां प्रथमतो दर्शयति—**वाचकेति** ॥ प्रसङ्गादित्यपवादसंगतेरपि उपलक्षणम् । पूर्वं व्याकरणप्रामाण्यस्य साधितस्येह कात्यायनेनोक्ते व्यक्तिवाचित्वांशेऽपि प्रसक्तस्यापवादकरणेनापि तदुपपत्तेः । अत एव प्रतिपदाधिकरणादिरूपोपोद्घातस्य प्रक्रान्तमनुपक्रम्यैव कृतस्येवेह न करणम्; असङ्गतिप्रसङ्गात् । तत्रत्वध्यायादित्वान्नानन्तरसंगत्यपेक्षेति विशेषः । **अथवा**—तत्र "भावार्थाः कर्मशब्दा" इति भावार्थाधिकरणसूत्रं न कथंचिदपि प्रतिपदाधिकरणेऽपि शक्यं योजयितुमिति सूचयितुं प्रकृतमनुपक्रम्यारम्भ इति विशेषः ॥

द्विजातिः उत व्यक्तिरिति चिन्ता। तदर्थं च लोकवेदयोः शब्दानामन्यत्वमुत नेति चिन्तनीयम्। अन्यत्वे हि उपायाभावेन वैदिकशब्दशक्तिग्रहस्यासंभवान्नाद्या चिन्ताऽऽरम्भणीया। एकत्वे तु लोके वृद्धव्यवहारानुसारेण गृहीता शक्तिर्वेदे फलिष्यतीति युक्ता चिन्ता। तत्र वर्णाभेदेऽपि स्वरछान्दसवर्णागमलोपविकारानध्यायादिधर्मभेदात् सरो रस इत्यादिपदयोरिव लोकवेदयोः पदानामन्यत्वमिति प्राप्ते—

## ( द्रव्यगुणक्रियावाचकानां सर्वेषामप्युदाहरणत्वनिरूपणम् )

**घटत्वादिजातिरिति** ॥ नह्येतावता द्रव्यवाचकानामेवोदाहरणत्वमिति भ्रमितव्यम्; द्रव्यत्वावान्तरव्याप्यघटत्वादिजातिवत् गुणत्वावान्तरव्याप्यशुक्लत्वादिजातेरप्यङ्गीकारे बाधकाभावात्। कर्मत्वावान्तरजातीनां च ज्योतिष्टोमत्वादीनां शब्दान्तरादिप्रमाणगम्यत्वेनाभ्यासाधिकरणे साधयिष्यमाणत्वात् तेषामपि गुणक्रियाशब्दानामुदाहरणत्वोपपत्तेः। एवमाख्यातेऽपि प्रकृतिप्रत्यययोः धात्वर्थभावनावाचित्वे साधितेऽपि तद्गतजात्युपाध्यन्यतरधर्मवाचित्वम्, **अथवा**—तदुपलक्षितव्यक्तिवाचित्वमिति विचारसंभवादुदाहरणत्वं द्रष्टव्यम्॥

## ( लोकवेदशब्दयोरन्यत्वेऽपि आकृत्यधिकरणानावश्यकताशङ्कासमाधानाभ्यां लोकवेदाधिकरणावश्यकतानिरूपणम् )

आकृत्यधिकरणविचारोपोद्घातं दर्शयति—**तदर्थंचेति** ॥ शब्दानामित्येतदर्थानामप्युपलक्षणम्॥ **वेदे फलिष्यतीति**॥ यदि अन्यः शब्दो भवेत्तदा लौकिकप्रयोगस्यार्थप्रत्यायनार्थत्वेन यथाकथंचित् तात्पर्यादेवान्यतरार्थावगतेः संभवेन नैव तद्विशेषवाच्यत्वविचारस्य प्रयोजनम्। वेदे यद्यपि प्रयोजनमीदृशं संभवति। पूर्वपक्षे "यदाहवनीये जुहोती"त्यत्र जुहोतेरितरहोमव्यक्तिवाचित्ववत्पदहोमव्यक्तिवाचित्वस्यापि सत्त्वात् पदहोमव्यक्तौ पदवदाहवनीयस्यापि संबन्धः श्रुत्यैव प्राप्येतेति सामान्यशास्त्रस्य बाधाप्रसक्तेर्विकल्पः प्राप्येत, यदात्वेतदधिकरणसिद्धान्तयुक्त्या जुहोतेर्होमत्वजातिवाचित्वेनाक्षेपाद्व्यक्तिभानं, तदा सामान्यशास्त्रेण साधारण्येनाक्षेपात् व्यक्तिभानेपि यावद्दूरस्था पदहोमव्यक्तिर्हृदयमानीयोपस्थाप्यते तावत्प्रकरणात् स्ववाक्यगतविध्यन्यथानुपपत्त्यैवोपस्थापिताया: पदहोमव्यक्तेरेव "पदे जुहोती"त्यत्र जुहोतिना साहित्याक्षेपात्सामान्यशास्त्रबाधान्न विकल्पः इति; तथापि "यूपं छिनत्ती"त्यादौ लोकप्रसिद्धच्छेदनादिपदसमभिव्याहारेण यूपपदशक्तिग्रहेप्यन्यत्र वेदे शक्तिग्रहोपायाभावात् नैतत्प्रयोजनं संभवतीत्येकत्वे शब्दानां साधिते एतच्चिन्ताफलमिति भावः ॥

## (आहवनीयपदवाक्ययोः सावकाशनिरवकाशन्यायविषयत्वोपपादनेन व्यक्तिवाचित्वेऽप्युपपत्तिनिरूपणेनोक्तचिन्ताप्रयोजनान्तरनिरूपणम् )

यद्यपि एतदाहवनीयबाधाबाधरूपं प्रयोजनमाकरेऽभिहितम्; तथापि अन्यत्र व्यक्तिवाचित्वपक्षेऽपि "यत् किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ती"ति वाक्येन सर्वनामोपस्थापिततद्व्यक्तिविशेषे विहितस्याप्युपांशुत्वस्य "मन्द्रं प्रायणीयायामि"ति विहितमन्द्रस्वरेण निरवकाशतया बाधस्येवेहापि सावकाशनिरवकाशन्यायेन तद्बाधसिद्धेरयुक्तमिति कौस्तुभे द्रष्टव्यम् ॥ अतएव प्रयोजनान्तरं स्वयं वक्ष्यते ॥

## ( एकत्वेतु इतितुशब्दप्रयोजनम् )

**नन्वेकत्वेऽपि** फलोपाययोर्वेदलोकविषयतया भिन्नविषयत्वादेकाङ्गवैकल्यापरिहार इत्याशङ्का लोके तत्तत्पुरुषगतोच्चारणभेदवद्वेदेऽपि उच्चारणमात्रस्य भेदेऽपि शब्दस्वरूपभेदाभावाद्युक्तेति तुशब्देन सूचितम् ॥ पूर्वपक्षमाह—**तत्रेति** ॥

## ( वर्णाभेदेऽपि स्वरादिभेदात् पदभेदनिरूपणम् )

**ननु**—तर्कपादे "संख्याभावादि"ति सूत्रे बलवत्प्रत्यभिज्ञानादेव गकारादिशब्दभेदः साधितः, तेनैव तद्घटितपदाभेदोऽपि सिद्ध एवेत्याशंकां जरा राजेत्यादौ वर्णाभेदस्य विद्यमानत्वेऽपि तदभेदाप्रयोजकत्वेन निरसितुमभ्युपेत्यवादेन वर्णाभेदेपीत्युक्तम्। ततश्च तत्र यथा धर्मभेद एव पदभेदप्रयोजकः, तथेहापीत्यर्थः। धर्मभेदमेव दर्शयति—**स्वर इति** ॥ वैदिकेषु नियतः स्वरः। "देवास" इत्यादौ छान्दसो वर्णागमः। "त्मनादेवे"ष्वित्यादौ आत्मनेत्याकारलोपः। "उद्ग्राभं च निग्राभं चे"त्यादौ हकारस्य भकाररूपो विकारः। छान्दोग्यबह्वृचब्राह्मणयोः स्वराभावात् गवादिशब्देषु चागमाभावात् व्यापकं धर्मभेदमाह—**अनध्यायादीति** ॥ अनध्यायपदं स्वाध्यायस्याप्युपलक्षणम्। स्वाध्यायो नाम विहितकाले त्रैवर्णिकैः उपनीतैरध्ययनम्। अनध्ययनं च निषिद्धकाले शूद्रादिभिरनुपनीतैश्च अनध्ययनम् वैदिकेषु न लौकिकेष्विति धर्मभेद इत्यर्थः। यद्यपि पाणिनिना वेद इव लोकेऽपि स्वरानुशासनं कृतम्; तथापि शिष्टैर्लोके स्वरनियमस्यानादराद्बचन्तीवाप्रयोगादेव स्वरनियमोऽनावश्यक इति ध्येयम्। आदिपदेन गुरुशुश्रूषोपासाभिवादनादेः संग्रहः। पदान्यत्वे संज्ञाधिकरणन्यायेनार्थभेदस्योत्सर्गतः प्राप्तिमभिप्रेत्य पदान्यत्वमात्रमुपसंहरति—**पदानामन्यत्वमिति** ॥

## ( पदावधारणोपायानितिवार्तिकार्थानुसंधानेन सिद्धान्तोपक्रमनिरूपणम् )

अत्र च सिद्धान्ते नार्थाभेदतद्भेदौ यद्यपि पदाभेदतद्भेदप्रयोजकत्वेनाभिमतौ; शाखान्तरवाक्ययोरर्थाभेदेऽपि भेदात्, अक्षादिपदेऽर्थभेदेऽपि पदभेदाभावात्, अतोऽर्थभेदप्रतीत्यनुकूलो यत्र धर्मभेदः तत्र पदभेद इति कथनस्य नोपयोगः; तथापि सिद्धान्ते प्रत्यभिज्ञानाप्रत्यभिज्ञानयोरेव भेदाभेदयोर्मुख्यहेतुत्वम्। तत्परिचायकतया प्रायिकत्वेन अर्थाभेदतद्भेदावुपयुज्येते, तत्प्रतिपत्तिस्तु धर्मभेदादित्यभिप्रेत्य पदभेदप्रयो-

यत्रार्थभेदप्रतिपत्त्यनुकूलो धर्मभेदस्तत्रैव पदभेदः । यथा सरो रस इति क्रमात्, ब्रह्म ब्राह्मणेति न्यूनातिरिक्तत्वात्, स्थूलपृषतीत्यत्र कर्मधारयबहुव्रीह्योः स्वरात् अन्तोदात्तत्वाद्युदात्तत्वरूपात्, पचते दक्षिणां देहि भोजनार्थं पचते इत्यत्र व्यधिकरणपदसन्निधिरूपाद्वाक्यात्, यातः पुनरायति यातो देवदत्तयज्ञदत्तौ इत्यत्र समानाधिकरणपदसन्निधिरूपश्रुत्या, अश्व इति अगम इत्यर्थे व्याकरणस्मृत्या; तदभिज्ञस्य पदभेदानुभवात् । यत्र तु नार्थभेदप्रतीतिस्तत्र सत्यपि धर्मभेदे दृढतरप्रत्यभिज्ञाबलेनैकत्वावधारणान्न पदान्यत्वं लोकवेदयोरिति युक्ता आद्या चिन्ता ।

---

जकं दर्शयितुं "पदावधारणोपायान् बहूनिच्छन्ति सूरयः । क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृती"रिति वाक्याधिकरणगतकारिकार्थमाह—**यत्रेति** ॥

## ( क्रमेण तदुदाहरणनिर्देशः )

क्रमेणोदाहरणानि दर्शयति—**यथेति** ॥ विलक्षणानुपूर्वीरूपक्रमादित्यर्थः । **स्थूलपृषतीमित्यत्रेति** ॥ अत्र समासभेदेनार्थद्वयसंदेहे स्वररूपधर्मभेदेनार्थभेदनिश्चयात् पदभेदः॥

## ( स्थूलपृषतीत्यत्र स्वरभेदादर्थभेदस्ततः पदभेदस्य च निरूपणम् )

**तथाहि**—"स्थूलपृषतीमनड्वाहीमालभेत" इत्यत्र कर्मधारयपक्षे अत इत्यनुवर्तमाने "समासस्ये"त्यनेन सूत्रेणौत्सर्गिकान्तोदात्तत्वे विहिते "अनुदात्तं पदमेकवर्जमि"ति सूत्रेण पूर्वेषां चतुर्णामनुदात्तः स्यात्, तदानीं च पृषतीशब्देन मत्वर्थलक्षणया तत्रैव विन्दुमत्त्वान्वयवत् स्थूलत्वस्यापि तत्रैवान्वयात् स्थूला विन्दुमती च गौः यागसाधनमित्यर्थः सिध्यति । बहुव्रीहौ तु "बहुव्रीहौ प्रकृत्या पूर्वपद"मिति सूत्रान्तरेण विशेषसूत्रेण सामान्यविहितान्तोदात्तत्वबाधेन पूर्वपदस्य प्रकृतिस्वरविधानात् स्थूलशब्दगतलकारोत्तरयकारे उदात्तस्वरस्य प्राप्तेः स्थौल्यस्य पृषत्स्वेवान्वयात् स्थूलविन्दुमती स्वतः स्थूला वा गौर्यागसाधनमिति अर्थस्सिध्यतीति सन्देहे लकारोत्तराकारोदात्तत्वपाठात् बहुव्रीह्यनुसारिस्वरेण अर्थभेदनिश्चयात्पदभेद इत्यर्थः ॥

## (कर्मधारयपक्षे प्राकृतछागजातिबाधप्रयोजननिरूपणपरप्रकाशकारखण्डनम् )

**यत्तु**—अत्र प्रकाशकारैः कर्मधारयपक्षे प्राकृतच्छागजातिबाधः, बहुव्रीहिपक्षे स्थलविन्दुमत्तारूपगुणमात्रविधानान्न तद्बाध इति प्रयोजनभेदोऽप्युक्तः । स स्थूलपृषतीमनड्वाहीमित्येवं अनड्वाहीपदयुक्तस्यैव वाक्यस्य महाभाष्ये न्यायसुधायां च पाठात् उभयपक्षेऽप्यनड्वाहीविधानावश्यकत्वेन छागजातिबाधोपपत्तेः अयुक्त इति कौस्तुभे व्यक्तम् ॥

## ( वाक्यात् पदभेदोदाहरणम् )

**वाक्यादिति** ॥ देहीतिपदसमभिव्याहारादाद्यवाक्येन चतुर्थ्यन्तनामपदत्वनिर्णयः । उत्तरत्र भोजनार्थमितिपदसमभिव्याहारात् तिङन्तपदनिर्णयस्तेन तत्र समभिव्याहाररूपधर्मभेदेन अर्थभेदात् पदभेद इत्यर्थः ॥

## ( श्रुतिपदार्थनिरूपणपूर्वकतदुदाहरणनिर्देशः )

न्यायसुधाकारदर्शितं श्रुतिपदस्यार्थमाह—**समानाधिकरणेति** ॥ याति इत्याख्यातपदसामानाधिकरण्यरूपधर्मभेदेन कर्तृनिष्ठप्रथमान्तत्वेन नामत्वनिर्णयेनार्थभेदात्पदभेदः । एवं द्विवचनान्तदेवदत्तयज्ञदत्तपदसामानाधिकरण्यरूपधर्मभेदेन यात इत्याख्यातप्रथमपुरुषद्विवचनान्तत्वनिर्णयेनार्थभेदात्पदभेद इत्यर्थः ॥

## ( स्मृत्या पदभेदोदाहरणम् )

**अश्व इति** ॥ अश्वस्त्वं देवदत्तेत्यत्र टु ओ श्वि गतिवृद्ध्योरिति श्विधातोर्लुङि "च्लिलुङि"इति च्लि "जॄस्तम्भु"इत्यादिना च्लेरङादेशे "श्वयतेर" इत्यनेनेकारस्याकारादेशेऽडागमे कृते मध्यमपुरुषैकवचननिश्चयस्य व्याकरणस्मृत्याऽवगतेः अश्वत्वजातिमद्वाचित्वेन लोकतो निर्णीताश्वरूपार्थापेक्षया भिन्नार्थप्रतीतेरश्ववाचकपदाद्भेदः स्मृत्येत्यर्थः । यद्यपि अश्वस्त्वं देवदत्तेत्यत्र समानाधिकरणपदसमभिव्याहाररूपश्रुत्याप्यश्वजातीयवाचकाश्वपदाद्भेदः सिध्यति; तथापि तस्य गौण्या वृत्त्याऽप्युपपत्तेः मध्यमपुरुषैकवचनान्तत्वेन पदभेदनिश्चयः स्मृत्यधीन एवेति भावः ॥

## ( लोकवेदयोः पदभेदोपायाभावनिरूपणम् )

एवं पदभेदावगत्युपायान् प्रदर्श्य तद्यतिरेकं प्रकृते दर्शयति—देवा देवास इत्यादौ दृढतरप्रत्यभिज्ञाबाधकानां पूर्वोक्तानामभावे प्रत्यभिज्ञाबलात् न पदान्यत्वमित्यर्थः । उपोद्घातमुपसंहरति—**इति युक्तेति** ॥

## ( नियोगेन विकल्पेनेत्यादिवार्तिकाद्युक्तानन्तपक्षपरित्यागेन शास्त्रदीपिकादृतपक्षत्रयपरित्यागेन च जातिव्यक्तिपक्षद्वयमात्रेणोपक्रमे निमित्तनिरूपणम् )

तत्र यद्यपि "नियोगेन विकल्पेन द्वे वा सह समुच्चिते । संबन्धः समुदायो वा विशिष्टा वैकयेतरा । गौरित्युच्चारिते सप्त वस्तूनि प्रतिभान्ति नः । जातिर्व्यक्तिश्च संबन्धः समूहो लिङ्गकारके । संख्या च सप्तमी तेषामष्टपक्षीद्वयोर्द्वयो"रित्यादिना वार्तिकेऽनेके पक्षा उक्ताः । तत्सकलमपि "इह पक्षसहस्राणां मिलिता सप्तविंशतिः । शतानिषट्चतुष्षष्टिश्चापरावस्तुसप्तके" इत्यादिना न्यायसुधायां कृतं; तथापि आकृतिविशिष्टव्यक्तिवाचित्वपक्षनिरासेनैव तेषां सुनिरस्यत्वादुपादानाशक्तेश्च शा-

तत्रावघातादिक्रियाणां लिङ्गकारकसङ्ख्यादीनां च जाताबयोग्यत्वात् गौः शुक्ल इत्यादिसमानाधिकरणनिर्देशाच्च व्यक्तिवाचित्वमेव । नचैवं जातिबोधानापत्तिः; लक्षणया तद्बोधोपपत्तेः । व्यक्तिशक्तिग्रहस्यैववा कार्यतावच्छेदकं जातिविशिष्टशाब्दबोधत्वम्। अतो न दोषः । न च विनिगमनाविरहः; लाघवस्यैव नियामकत्वात् । तथाहि—न शक्तिग्रहस्य स्वातन्त्र्येण कारणत्वं, अपि तु लाघवाच्छक्यत्वादिसम्बधेन घटपदवत्ताज्ञानस्यैव । ततश्चास्मन्मते घटत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसंबन्धेन घटपदवत्ताज्ञानस्य घटो घटपदवानित्याकारकस्य विशेष्यतासम्बन्धेन विशिष्टशाब्दबोधत्वावच्छिन्नं प्रति कारणत्वम्, भवन्मते तु घटत्वत्वं धर्मितावच्छेदकीकृत्य तद्वाच्यम् । अतश्च घटत्वत्वस्य घटेतरावृत्तित्वादिरूपस्यानेकपदार्थघटितस्य प्रवेशात् तव कार्यकारणभावे गौरवं, न मम । नच शक्त्यानन्त्यादिदोषः; तस्य फलमुखत्वात् । अतश्च लाघवात् व्यक्तावेव शक्तिर्जातिविशिष्टव्यक्तौ वा नतु जातावेवेति प्राप्ते—

---

स्वदीपिकायाम् आकृतिर्वा व्यक्तिर्वा आकृतिविशिष्टव्यक्तिर्वेति पक्षत्रयं प्राधान्येन दर्शितम् । तत्र व्यक्तिवाचित्वपक्ष एवाकृतिविशिष्टव्यक्तिवाचित्वसंभवस्य स्वयमुपपादनीयत्वात् तृतीयपक्षस्यापि व्यर्थतां मन्वानो यथाभाष्यं पक्षद्वयमेव प्रधानमभिप्रेत्य यदर्थमुपोद्धातस्तदर्थं दर्शयन् पूर्वोपन्यस्तत्वात् संशयमप्रदर्श्यैव पूर्वपक्षमारभते—तत्रेति ॥

## ( जातौ लिङ्गसंख्याकारकाद्यन्वयायोग्यत्वनिरूपणम् )

**अयोग्यत्वादिति** ॥ विधिवाक्येषु विधीयमानावघातादिक्रियाणां जातावमूर्तत्वेनायोग्यत्वम् । एवं "न ब्राह्मणी हन्तव्या" इत्यादिनिषेधेष्वपि जातेर्नित्यत्वेन हननाप्रसक्तेरयोग्यत्वम् । एवं जातेरेकत्वेनैकत्वातिरिक्तद्वित्वादिसंख्यान्वयायोग्यत्वम् । जातेः स्त्रीत्वेन पुंस्त्वान्वयायोग्यत्वम् । अमूर्तत्वादेव च क्रियाजन्यफलाश्रयत्वादिरूपकर्मत्वादिकारकान्वयायोग्यत्वमित्यर्थः ॥ **वस्तुतस्तु**—"स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः । इत्युक्तलक्षणस्य लिङ्गस्य जाताविव व्यक्तावपि असंभवस्तुल्य इति लिङ्गान्वयायोग्यत्वमभ्युच्चयेन द्रष्टव्यम् ॥

## ( गौः शुक्ला इति सामानाधिकरण्यस्य व्यक्तिवाचित्वे एवोपपत्तिः )

**गौः शुक्ल इति** ॥ शुक्लादिपदानां गुणिपरत्वाज्जातौ च गुणाश्रयत्वासंभवेन गोशब्दस्यैकार्थप्रतिपादकत्वरूपसामानाधिकरण्यानुपपत्तेः तदनुरोधेनापि व्यक्तिवाचित्वमित्यर्थः । **नच**—गोशब्दस्य गोत्वविशिष्टवाचित्वात् शुक्लपदस्य शुक्लगुणविशिष्टपरत्वात् विशेषणभेदे च विशिष्टभेदात् कथं एकार्थत्वम् इति—**वाच्यम्**; विशेषणभेदेऽपि "गौर्न शुक्ले"ति प्रतीत्यभावेनोभयविशिष्टव्यक्त्यैक्यमादायैकार्थत्वोपपत्तेः इति ॥

## ( व्यक्तिशक्तावपि लक्षणया जातिभानोपपत्तिः युगद्वृत्तिद्वयविरोधेन पक्षान्तरानुसरणंच )

**लक्षणयेति** ॥ **नच**—विनिगमनाविरहः; प्रत्युत लाघवेनैकस्यां जातौ शक्तिकल्पनात् व्यक्तावेव लक्षणेति विपरीतं विनिगमकम् इति—**वाच्यम्**; जातेर्व्यक्तिविशेषं विनापि अन्यत्र व्यक्तिविशेषे सत्त्वेन व्यभिचारित्वात् विशेषनिश्चायकत्वासंभवेन व्यक्तेरव्यभिचारेण जातिविशेषनिश्चायकत्वेन व्यक्तेरेव जातिलक्षणायां नियामकसत्त्वात् ॥ अस्मिन् पक्षे युगपद्वृत्तिद्वयविरोधापत्तेरपरितोषात्पक्षान्तरमाह—**व्यक्तिशक्तिग्रहस्यैवेति** ॥

## ( व्यक्तिशक्तिवादिनां शाब्दबोधे कार्यकारणभावलाघवाद्युपपत्तिनिरूपणम् )

**स्वातन्त्र्येण कारणत्वमिति** ॥ घटशक्तिग्रहत्वेन कारणतायां शक्तेर्नैयायिकमते ईश्वरेच्छारूपाया मीमांसकमते पदार्थान्तररूपाया वा कारणताघटकत्वात्तज्ज्ञानादेव विशिष्टशाब्दबोधोदयः इति वाच्यम्, नचेदमनुभवसिद्धम्; तत्त्वेन ज्ञानाभावेऽपि तथाविधबोधस्यानुभवसिद्धत्वात्, अतो न स्वातन्त्र्येण कारणत्वमित्यर्थः । **ज्ञानस्यैवेति** ॥ घटपदवत्तानिश्चयस्यैवेत्यर्थः । तदाच संबन्धविधया शक्तिभानेच शक्तित्वेन रूपेणाभानेऽपि न काचित् क्षतिः । **व्यक्तावेव शक्तिरिति** ॥

## ( व्यक्तिशक्तिवादे व्यक्तिविशेषशक्तिग्रहात् व्यक्त्यन्तरबोधोपपत्तिः )

**ननु**—कथं देवदत्तीयघटव्यक्तौ संकेतग्रहे सति व्यक्त्यन्तरे प्रयोगः । तथात्वेवा पटव्यक्तावपि घटशब्दप्रयोगापत्तिः, इति—**चेत्**, घटत्वसामान्यमुपलक्षणीकृत्य या एवमाकृतिका गोत्वजातिविशिष्टा सा गौर्देवदत्तगौः इत्युक्ते देवदत्तपदानभिधेयस्यापि शुक्लवस्त्रत्वस्य देवदत्तपदशक्तिग्रहोपलक्षणत्ववदिहापि अनभिधेयस्यापि गोत्वादेरुपलक्षणत्वोपपत्तेः ॥

## ( तुष्यतुर्दुर्जनन्यायेन पक्षान्तरधावनम् )

यदात्वभिधेयस्यैव धर्मितावच्छेदकत्वमिति नियमः, तदा सन्देहकोटावनुपन्यस्तमपि वार्तिकोक्तत्वात्पक्षान्तरमाह—**जातिविशिष्टेति** ॥

## ( व्यक्तिशक्तिवादस्य शक्त्यानन्त्यादिदोषैः खण्डनम् )

न व्यक्तिवाचित्वम्; अनन्तव्यक्तिशक्तिकल्पनापत्तेः । एकैकव्यक्तिगतजातिरूपोपलक्षणैक्येऽपि सैन्धवादिपदे लवणाश्वत्वादिना शक्तिभेदस्यैवेहापि घटत्वस्य शक्यतावच्छेदकत्वा-

भवन्मते घटत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसंबन्धेन घटपदवत्तानिश्चयस्य घटो घटपदवान् इत्याकारस्य कारणत्वं पदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसंबन्धेन घटवत्तानिश्चयस्य वा घटपदं घटवदित्याकारस्य कारणत्वमित्यत्र विनिगमनाविरहेणानन्तकार्यकारणभावप्रसङ्गात् गौरवम्, अस्मन्मतेतु घटपदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसम्बन्धेन घटत्ववत्तानिश्चयस्यैव घटपदं घटत्ववदित्याकारकस्य कारणत्वकल्पनाल्लाघवम् । नच ममापि विपरीतमापादयितुं शक्यम्; तथासति घटत्वस्य धर्मित्वेन स्वरूपेण तस्य धर्मित्वायोगाद्धर्मितावच्छेदकत्वेन घटत्वत्वप्रवेशे गौरवस्य त्वयैवोक्तत्वात् । अतो न घटत्वत्वावच्छिन्नं घटत्वं शक्यत्वसंबन्धेन घटपदवदित्याकारकं ज्ञानं कारणं, अपि तु घटपदं शक्तत्वसम्बन्धेन घटत्ववदित्याकारकमेव; जातेः स्वरूपेणैव प्रकारत्वोपपत्तौ घटत्वत्वस्याप्रवेशात् । नच समवायेनैव जातेः स्वरूपेण प्रकारता न संबन्धान्तरेणेत्यत्र प्रमाणमस्ति; परैरपि तथाऽनभ्युगमाच्च । अतश्च कार्यकारणभावेऽपि लाघवात् घटत्व एव शक्तिः । शक्त्यानन्त्यादि च नास्मन्मते । अतः प्रथमोपस्थितत्वाज्जातावेव शक्तिः ।

एवमरुणादिशब्देष्वपि गुण एव गुणत्वे वा, न तु तद्विशिष्टद्रव्ये । कथं तर्हि व्यक्तिबोधः? अभेदात् उक्तविधकारणस्य जातिगुणविशिष्टव्यक्तिशाब्दत्व एव कार्यतावच्छेदकत्वस्वीकाराद्बोधोपपत्तेः। **वस्तुतस्तु**—जातिगुणशाब्दत्वमेव लाघवेन कार्यतावच्छेदकम् । व्यक्तिस्तु तृतीयान्तस्थले पशुना यजेत अरुणया क्रीणाति इत्यादौ नैव पदाद्भासते; जातिगुणयोरेव द्रव्यपरिच्छेदद्वारा करणत्वोपपत्तेः । लिङ्गसंख्ययोरपि पाशाधिकरणन्यायेन सामानाधिकरण्येन पार्ष्ठिको जातिगुणसंबन्धः । अतः संबन्धविधयैव तत्र द्रव्य-

---

भावेन तत्तद्व्यक्तित्वस्यैव तदवच्छेदकत्वेन तद्भेदस्यानिवार्यत्वात् । अथैकव्यक्तिवाचित्वं, तदापि घटत्वस्यातिप्रसक्तत्वेन शक्यतावच्छेदकत्वानुपपत्तेः तद्व्यक्तित्वस्यैव शक्यतावच्छेदकत्वेन तद्व्यक्तिविषयकस्मरणाभावे घटपदादन्यव्यक्तिबोधानापत्तिः । यदा तु पूर्वोक्तविधया तद्व्यक्तित्वं धर्मितावच्छेदकीकृत्य शक्यत्वसबन्धेन घटपदवत्तानिश्चयस्य कारणत्वं कल्प्यते, यद्यपि च शक्त्यानन्त्यम्; तथापि फलमुखत्वान्न दोषः, तदा तद्व्यक्तित्वस्य शक्यतावच्छेदकत्वेनैकव्यक्तिशक्तिग्रहेऽपि शक्तेः संबन्धविधया भानाङ्गीकारात्तत्त्वेन रूपेणास्मरणेऽपि क्षत्यभावः, तथा घटत्वस्यातिप्रसक्तस्यापि तद्व्यक्तिमात्रेण धर्मितावच्छेदकत्वाङ्गीकारो नानुपपन्न इत्युच्येत, तत्राह—**घटत्वमिति** ॥

**( गुणे गुणत्वेवेतिपक्षद्वयोपपत्तिः )**

**गुणएवेति** ॥ यदा जगतीतलवर्त्यरुणगुणोप्येक एव, तदा गुण एव यदाऽरुणगुणानां भेदः, तदाऽनेकवृत्तिजातेः संभवात् गुणत्वे वा शक्तिरित्यर्थः ॥

**( जातिव्यक्त्योरभेदेन व्यक्तिबोधोपपत्त्यादिकम् )**

**अभेदादिति** ॥ यथैव हि पटे पटत्वं इह शुक्लत्वमिति प्रतीत्याऽयुतसिद्धयोर्भेदस्तथा अयं गौरयं शुक्ल इत्यादिप्रतीत्याऽभेदस्यापि तयोस्सिद्धिः । नचैवं व्यक्त्यभेदे जातेरनित्यतापत्तिः; जात्यात्मना नित्यत्वेऽपि व्यक्त्यात्मनाऽनित्यत्वस्यास्माकमपीष्टत्वात् । अतश्च घटादिपदानां जातिवाचित्वेऽपि व्यक्त्यभेदाज्जातेर्जात्यैव व्यक्तिप्रतीतिसिद्धिः । नचैवमभेदे व्यक्तेरपि वाच्यतापत्तेरधिकरणवैयर्थ्यम्; व्यक्तेर्वाच्यत्वेऽपि भेदाभेदाङ्गीकारेण न व्यक्त्यात्मना तत्, अपितु जात्यात्मत्मनेत्येतत्प्रतिपादनार्थमधिकरणसार्थक्यात् । तदेतन्न्यायसुधायां मुख्यत्वेनोपपादितं पक्षमवलंब्योक्तम् ॥

**( जातिशक्तिज्ञानस्यैव जात्यादिविशिष्टशाब्दत्वंकार्यतावच्छेदकमितिकल्पान्तरम् )**

ये तु अभेदाङ्गीकारेऽपि शक्तिज्ञानरूपकारणस्य जातिशाब्दबोधत्ववत् व्यक्तिशाब्दबोधत्वस्य पृथक्कार्यतावच्छेदकत्वस्वीकारे जातिव्यक्तिबोधस्य च क्रमिकत्वाननुभवात् क्रमिकत्वाङ्गीकारे च वैशिष्ट्यबोधाभावेन निर्विकल्पकरूपतापत्तेः पूर्वोक्तघटत्ववत्ताज्ञानस्य कारणस्य घटत्वविशिष्टशाब्दबोधत्वं कार्यतावच्छेदकमङ्गीकृत्यैकं एकयैव जातिशक्त्योरुभयोर्बोध इति वदन्ति, तन्मतेन पक्षान्तरमाह—**उक्तविधेति** ॥

**( द्वितीयकल्पास्वरसनिरूपणपूर्वकस्वमतावतरणम् )**

अस्मिंश्च मते विशेष्यभूतव्यक्तेरेव करणत्वादिद्वारा क्रियान्वयापत्त्या विशेषणीभूतयोर्जातिगुणयोस्तदनापत्तिरिति सप्तदशशरावे चरौ निर्वापे जघन्यमुष्टिलोपेन चतुस्संख्यानुग्रहो न सिध्येत्; जघन्यस्यापि प्रधानत्वेन मुख्यनुग्रहस्यैव न्याय्यत्वादित्यस्वरसात् पक्षान्तरं स्वमतत्वेनाह—**वस्तुतस्त्विति** ॥

**( स्वमते व्यक्तिबोधोपपत्तिप्रकारः, एकवचान्तेषु बहुवचनाद्यन्तेषुच )**

**सामानाधिकरण्येनेति** ॥ करणत्वोपपत्तेरित्यस्यानुषङ्गेण तद्योज्यम् । तथाच लिङ्गसंख्ययोरपि समानपदोपात्तत्वप्रत्यासत्त्या सामानाधिकरण्यसंबन्धेन करणत्व एवान्वयः । पार्ष्ठिको जातिगुणसंवन्ध इत्यर्थः । **ननु**—व्यक्तिपरिच्छेदकतया प्रतीयमानयोर्लिङ्गसंख्ययोरनुरोधेन प्रातिपदिके व्यक्तिलक्षणैवास्त्वित्याशंकानिराकरणाय पाशाधिकरणन्यायेनेत्युक्तम् । **तस्यायमर्थः** ॥ यथा गुणभूतबहुत्वान्वयानुरोधेन मुख्यभूतपाशप्रातिपदिकोत्कर्षो विकृतौ पाशमन्त्रे नाङ्गीकृतः, तथा

बोधः। द्वितीयान्तादिस्थले तु जातिगुणयोः कर्मत्वाद्यन्वयासंभवाद्व्यक्तेर्लक्षणया बोधः, तस्या एव कर्मत्वाद्यन्वयः। लिङ्गसङ्ख्याद्यन्वयश्च साक्षात्सम्बन्धेनैव, सामानाधिकरण्यंच व्यक्तिद्वारकमिति सर्वं सुस्थम्।

प्रयोजनं पूर्वपक्षे रथन्तरादिशब्दानां ऋग्वाचित्वाद्रथन्तरमुत्तरयोर्गायति इत्यादौ उत्तरापदलक्षितोत्तराकार्ये योनिविधानं, सिद्धान्ते तु गीत्यतिदेश उत्तरास्विति वक्ष्यते ॥ १२॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां प्रथमस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

---

नैव लक्षणा युक्ता—इति। यत्र तु पार्ष्ठिकोऽपि द्वित्वबहुत्वान्वयो जातौ बाधितः, तत्रागत्या लक्षितव्यक्त्यैव सोऽङ्गीक्रियताम्। प्रकृते तु एकवचनान्ते युक्त एव जातिगुणाभ्यां स इति भावः॥

### (द्वितीयान्तादिस्थले लक्षणया व्यक्तिबोधोपपादनम्)

**द्वितीयान्तादिस्थलेत्विति** ॥ आदिपदेन संप्रदानत्वादिकारकान्तरसंग्रहः। नच युगपद्वृत्तिद्वयविरोधः; शक्यार्थस्य पदान्तरार्थान्वयप्रमितेः प्रागेव गङ्गापदस्य प्रवाहोपस्थित्यनन्तरं लक्षणावदिहापि तदङ्गीकारेण तस्याप्रसक्तेः। **अतएव**—अन्वयप्रमोत्तरं तस्यैव पदस्य वृत्त्यन्तरेणार्थप्रत्यायकत्व एव सः **इति ध्येयम्**। नच क्रमिकबोधद्वयाङ्गीकरणे वैशिष्ट्यबोधाभावेन निर्विकल्पकरूपत्वापत्तिः; इष्टापत्तेरिति भावः। **सामानाधिकरण्यं चेति** ॥ लिङ्गसंख्ययोः समानाभिधानश्रुत्या सामानाधिकरण्यसंबन्धेन कर्मत्वाद्यन्वये सामानाधिकरण्यमेकवृत्तित्वेन ज्ञेयमित्यर्थः॥

### (जातिविशिष्टव्यक्तिवाच्यत्वनिरासः)

एवंच लक्षणयैव गौः शुक्ल इत्यादि सामानाधिकरण्यानुपपत्तिः परिहरणीयेति द्रष्टव्यम्। आकृतिविशिष्टव्यक्तिवाचित्वपक्षस्त्वावश्यके जातिवाच्यत्वे व्यक्तिवाचित्वस्यापि कल्पनायां गौरवापत्त्या निरसनीयः। **प्रयोजनमिति** ॥ ऋग्वाचित्वपक्षे ऋचो ऋगन्तरे विधानानुपपत्त्योत्तरापदेन कार्यलक्षणया तत्स्थानापत्त्या विधानं पूर्वपक्षे। सिद्धान्ते तु गीतेः ऋगन्तरेऽपि संभवान्न लक्षणा किंतु तस्यातिदेश इति यत्सप्तमे विचारयिष्यते तदेतदधिकरणप्रयोजनमित्यर्थः॥

### (प्रकाशकारनिरूपितपूर्वपक्षसिद्धान्तप्रयोजननिरसनपूर्वकस्वाभिमतप्रयोजननिरूपणम्)

**यत्तु**—प्रकाशकारैः "व्रीहीन् प्रोक्षति" "दध्ना जुहोती"-त्यादौ पूर्वपक्षे सर्वव्रीहिहोमव्यक्तीनां अभिधानात् तत्र श्रुत्या प्रोक्षणदध्यादेर्विनियोगात् प्रकरणसन्निधिबाधेन लौकिकव्रीहिष्वपि प्रोक्षणं होमान्तरे च दधि स्यात् पूर्वपक्षे, सिद्धान्ते तु शब्दार्थभूताया व्रीहित्वहोमत्वजातेः प्राकृतव्रीहिहोमयोरपि पर्याप्तिसत्त्वात् प्रकरणसन्निध्यनुग्रहेऽपि न काचिच्छ्रुतिपीडेति प्रकृतेष्वेवेति। तत् सिद्धान्तेऽपि प्रकृतव्रीहिहोमातिरिक्तव्यक्तिष्वपि तज्जातिपर्याप्तिसत्त्वेनानिवारणात् सर्वैश्च व्यवहारासंभवेनानर्थक्यपरिहारार्थं प्रकरणाद्यालोचनावश्यकत्वेन तेन प्रकृतातिरिक्तानां निवारणवत् पूर्वपक्षेऽपि तत्संभवेन विशेषाभावात् द्वितीयादिस्थले लक्षणया सर्वव्यक्तिभानस्योपपादनीयत्वेन दोषतादवस्थ्याच्चायुक्तमित्युपेक्षितं पूज्यपादैः॥

॥ इति नवममाकृत्यधिकरणम् ॥

इति श्रीखण्डदेवान्तेवासिकविमण्डनशंभुभट्टविरचितायां भाट्टदीपिकाप्रभावल्यां प्रथमस्याध्यायस्य तृतीयः पादः॥

चतुर्थः पादः ।

( १ अधिकरणम् । )

उक्तं ॥ इह गुणविधित्वेन नामधेयत्वेन वा संमतानां सर्वेषामेव फलपदातिरिक्तसुबन्तानां उद्भित्सोमादिपदानां प्रामाण्यमप्रामाण्यं वेति संशये प्रामाण्यप्रकारासंभवाद- प्रामाण्यम् । तथाहि—"उद्भिदा यजेत पशुकामः"

( सर्वस्याप्यध्यायार्थस्य प्रथमसूत्रशेषत्वनिरूपणम् )

अत्र भाष्यकारेण "उद्भिदा यजेत" इत्युदाहृत्य किं उद्भिदादिशब्दाः गुणविधयः? कर्मनामधेयानि वेति सन्दिह्य "उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यादि"त्याद्यसूत्रेण पूर्वपक्षं कृत्वा "अपिवा नामधेयं स्यात् यदुत्पत्तावपूर्वमविधायकत्वादि"त्युत्तरसूत्रेण नामधेयत्वं सिद्धान्तितम्; तदेतस्य विचारस्य धर्मप्रमोपयोगाभवेऽपि अर्थवादवदेवाध्ययनविधिवशादेव गुणविधित्वेन नामधेयत्वेन वोभयथाप्युपयोगसिद्धेर्नानर्थक्यापत्तेर्वाक्यार्थव्याख्यानरूपेण एतद्विचारकरणे वाक्यशेषसामर्थ्ययोरप्यापि प्रामाण्यस्यानुक्तत्वात् द्वितीये करिष्यमाणस्य वाक्यार्थविचारस्यापरिसमाप्यैव प्रमाणलक्षणं करणेऽसंगत्यापत्तेरयुक्तम्; अतः "अथातो धर्मजिज्ञासा" इति सूत्रेण जिज्ञासापदेन द्वादशानामपि लक्षणानामर्थाः सामान्यतः प्रतिज्ञायन्ते । अत एवैतद्विवरणे भाष्यकृता को धर्मः? कथंलक्षणकः? कान्यस्य साधनानि? इत्युपक्षिप्तम् । तत्र कथंलक्षण इत्यत्र धर्मपदानुषङ्गेण थमुञ्प्रकृत्या किंप्रमाणक इत्यर्थेन धर्मप्रमाणनिरूपणरूपप्रथमाध्यायार्थप्रतिज्ञां थमुञ्प्रत्ययोपात्तप्रकारस्य प्रामाण्यप्रतिष्ठासिध्यर्थमानुषङ्गिकतया निरूपणं क्रियते । नतु साक्षादध्यायार्थत्वम् । तत्रापि द्वितीयसूत्रे चोद्यतेऽनेनेति व्युत्पत्त्या विध्युद्देशात्मकप्रवर्तकवाक्यवाचिना चोदनापदेन विध्यात्मकवेदावयवप्रामाण्यं प्रतिज्ञाय तदेवाद्यपादेनाऽऽन्तमुपपादितम् । ततो द्वितीयसूत्रप्रतिज्ञातेऽर्थेऽवसिते पुनराद्यसूत्रप्रतिज्ञातं धर्मप्रमाणान्तरभूतयोः चोदनावद्वेदावयवविशेषयोरर्थवादमन्त्रयोः प्रामाण्यं चिन्तितम् । तत एवं त्रिविभागस्य वेदस्य प्रामाण्ये तथैव त्रैविध्ये चिन्तिते नामधेयमूलकस्मृत्यभावेन त्रिविधवेदोपजीव्यस्मृतिरूपधर्मप्रमाणान्तरस्याद्यसूत्रप्रतिज्ञातं तत्प्रामाण्यं नामधेयचिन्तातः प्राक् मध्य एव तृतीयपादेन चिन्तितम् । ततः पुनराद्यसूत्रप्रतिज्ञातस्यैव धर्मप्रमाणान्तररूपस्य नामधेयस्य नामधेयतायाः पूर्वंप्रतिपादितस्तुत्यादिप्रकारत्रयप्रतिद्वन्द्वित्वाभावात् विध्युद्देशान्तर्गतत्वं प्रसाध्य तस्यैव प्रामाण्यमिह प्रतिपाद्यते । तदेवं समस्तोऽप्यध्यायः प्रथमसूत्रशेष एवेत्यवश्यं प्रामाण्याप्रामाण्यचिन्तैव प्रथमेऽध्याये युक्तेति वार्तिककाराभिप्रायमनुसंधायाधिकरणविचारमारभते—इहेति ॥

( नामधेयप्रामाण्यप्रकारपरतया एकस्य सूत्रस्य, कोष्ठशोधनिकया नामधेयत्वनिर्णयार्थमपरस्य सूत्रस्य प्रवृत्तिरितिनयनेन उपपत्तिः )

यद्यपि अर्थवादाधिकरणोक्तरीत्या सामान्योपयोगे सिद्धे कोष्ठशोधनिकात्वेन विशेषविचारो नासंगतो भवेत्; तथापि एतत्सूत्रस्य नामधेयत्वविरोधिगुणविधित्वहेतुपरत्वाभावेन पूर्वपक्षपरत्वासंभवात् सिद्धान्तेऽनिष्ठापादकत्वायोगाच्च नैकाधिकरण्योपपत्तिरित्येतत्सूत्रद्वयपूर्वपक्षद्वयकरणेन एतत्सूत्रद्वयसिद्धान्तद्वयप्रतिपादनपरतयाऽधिकरणभेद एव युक्त इति भावः । प्रामाण्यस्वरूपविषयत्वेऽस्याश्चिन्तायाः प्रत्यक्षवेदविषयत्वेन स्मृतिविचारात् प्रागेव कर्तव्यतापत्तेर्न स्वरूपेणेहानर्थक्यं शक्यते वक्तुम्; किंतु नामधेयतायाः याज्ञिकप्रसिद्धिसिद्धायाः पक्षद्वयेऽप्यविचारितसिद्धत्वमङ्गीकृत्य किंनामधेयताया धर्मप्रामाण्यप्रकारता संभवति, उत नेति प्रथमाधिकरणे विचार्यते । कथंलक्षण इत्यत्र प्रकारवाचिथमुञ्प्रत्ययप्रयोगात् प्रकारस्यापि लक्षणार्थत्वात् तस्य च त्रिपाद्यां करणान्नासंगतिरिति कल्पयतो न्यायसुधाकारस्य तु मतदूषणं कौस्तुभ एव द्रष्टव्यम् ॥

( एतदधिकरणविषयविवेचनं तत्र मतान्तरखण्डनम् )

संभाव्यमानगुणविधिनामधेयत्वान्यतरप्रकारस्य फलवाचकपदेऽसंभवाद्विचाराविषयत्वं सूचयितुं **फलपदातिरिक्ते**त्युक्तम् । फलपदं च निमित्तसंस्कार्यवाचकानामप्युपलक्षणम्॥ **उद्भित्सोमादी**त्यादिपदेन "समे पौर्णमास्या"मिति देशकालपदानां गुणविधित्वेऽप्यसंभवन्नामताशङ्कानां नोदाहरणत्वमित्युक्तम्; तदयुक्तम् । मन्त्रार्थवादविध्यतिरिक्तत्वेनैवेह पदानामुदाहरणत्वाद्गुणविधित्वनामधेयत्वान्यतरप्रकारेण विध्यन्तर्भावमङ्गीकृत्यैवेह प्रामाण्यसाधनस्य तेष्वपि संभवेनोत्तराधिकरणेषु च नामधेयत्वे साधिते तत्तद्धेतोरभावे परिशेषेण विधित्वस्याप्यर्थात्साधनेन तद्विषयत्वोपपत्तेरिति सूचितम् ॥

( उद्भित्सोमादिपदानामप्यध्ययनविध्युपात्तानामपि प्रामाण्यप्रकारनिर्णयार्थत्वेनाधिकरणप्रवृत्तिनिरूपणम् )

यद्यपि अस्मिन्नधिकरणेऽध्ययनविधिबलेनार्थवादवदेव प्रयोजनवत्त्वसिद्धेरानर्थक्येन पूर्वपक्षो नोत्तिष्ठति; नवा अर्थवादमन्त्रयोरिवान्यथाक्षेपासंभवे द्वारासंभवेनाक्षेपवदिहाक्षेपः संभवति; उद्भिदादिशब्दानां गुणविधित्वेनापि प्रामाण्योपपत्तेः । तत्तद्विशेषाधिकरणेष्वेव चतुर्षु गुणविधित्वाशङ्कानिरासमुखेन नामधेयतारूपद्वारविशेषस्योपपादयिष्यमाणत्वात्, अतो नेहाद्यमधिकरणं अर्थवादविशेषाधिकरणवद्रचयितुं शक्यते; तथापि तद्विधिसिद्धप्रयोजनानामपि उद्भिदादिपदानां पूर्वोक्त-

"सोमेन यजेते" त्यादावुद्भिदादिपदेभ्यः स्तुतिबुद्धेरनुत्पत्तेर्न तावदर्थवादत्वम् । मन्त्रत्वप्रसिद्ध्यभावाच्च न तत्; एतेषां प्रयोगकालोच्चारणे चैतत्प्रतिपाद्यार्थस्य यागाङ्गताबोधकप्रमाणाभावेनैतेषां प्रयोगसमवेतार्थस्मारकत्वानुपपत्तेश्च । न च विध्यन्तर्भावः; कामशब्दाद्यभावेन साध्यानभिधायकत्वात्, एकपदगतेन यजिनैव करणप्रतिपादने एतेषां तत्प्रतिपादकत्वायोगात्, सिद्धरूपाणां सोमादीनां व्यापारमन्तरेण भावनेतिकर्तव्यतात्वानुपपत्तेश्च । नामधेयत्वे तु अभिन्नत्वादेव करणानुग्राहकत्वादिरूपेतिकर्तव्यतानुपपत्तिः । न च—कथमपि भावनाऽन्वयासंभवेऽपि यागे करणत्वेनान्वयो भवत्विति—वाच्यम्; कारकाणां परस्परान्वयासम्भवात् । अतः कथमपि क्रियाऽन्वयासंभवादनाख्यातत्वेन च विधिभावनयोरनभिधानात् अन्यस्य च प्रकारस्य निर्वक्तुमशक्यत्वादप्रामाण्यमिति प्राप्ते—

अध्ययनविध्यध्यापितस्य प्रामाण्यासंभवात् प्रकारान्तरासम्भवेऽपि विध्यन्तर्भावस्य स्पष्टत्वेन तत्रैव गुणविधित्वेन नामधेयत्वेन वा वक्ष्यमाणरीत्या सर्वानुपपत्तिपरिहारेण प्रामाण्यमिति सिद्धम् ॥ १ ॥ १७ ॥ इति उद्भिदादिपदप्रामाण्याधिकरणम् ।

---

विध्युद्देशस्तुतिप्रकाशनरूपप्रकारविशेषासंभवेन प्रयोजनवत्त्वमाक्षिप्य गुणविधित्वनामधेयत्वान्यतररूपद्वारविशेषेण विध्युद्देशान्तर्गत्या प्रामाण्यं साध्यते । **अतएव**—विध्युद्देशान्तर्गतिसाधनमात्रेणैव सिद्धान्ते उपरतं वार्तिककृतेत्यभिप्रेत्यैव पूर्वपक्षमाह—**प्रकारेति** ॥

**( पादार्थोपाधिः प्रथमद्वितीयाधिकरणविषयविवेकश्च )**

अत्र पदप्रामाण्यनिरूपणस्य पादार्थत्वम् पादान्तरत्वादनन्तरसंगत्यभावेऽपि न क्षतिरिति द्रष्टव्यम् ॥ एवंचेह विध्युद्देशान्तर्गत्या आक्षेपं समाधायोत्तराधिकरणेषु गुणविधित्वाशङ्कानिरासेन नामधेयत्वेन तदन्तर्गतिः साध्यत इति सर्वमनवद्यमिति भावः ॥

**( उद्भित्सोमादिपदानां स्तावकतयाऽनुपयोगः )**

विध्युद्देशाद्यनन्तर्गतत्वे उपपादनीये उद्भेदनकर्तृत्वगुणयोगेन संभावितस्तुतिप्रतीतेर्निरासायार्थवादत्वं तावन्निराकरोति—**स्तुतिबुद्धेरिति** ॥ न वा विध्येकवाक्यतामात्रेणार्थवादत्वं भवति; भूतिकामादिपदानामपि तदापत्तेः, अपितु विधिशेषत्वेन; नह्ययं विधिशेषः, नवा विध्यन्तर्गतेनैकपदेन गुणगुणिसंबन्धकीर्तनात्मकस्तुतिधिय उत्पत्तिः । यद्यपि वोत्पद्येत; तथापि "वायुर्वै क्षेपिष्ठे"तिवत् प्रथमाया एवापत्तौ तृतीयोपात्तकरणत्वानुपपत्तिरिति नार्थवादत्वमित्यर्थः ॥

मन्त्र इत्येवंविधाभियुक्तप्रसिद्धिविषयत्वरूपस्य मुख्यमन्त्रलक्षणस्य विधितच्छेषत्वभिन्नत्वरूपस्य वा व्यापकलक्षणस्याभावेन मुख्यमन्त्रत्वानुपपत्तेः न मन्त्रान्तर्गतिरित्याह—**मन्त्रत्वप्रसिद्ध्यभावेति** ॥ नाप्यूहप्रवरनामधेयानामिव मुख्यमन्त्रत्वाभावेऽप्यनुष्ठेयार्थस्मारकतया मुख्यमन्त्रकार्यकरत्वाद्गौणमन्त्रत्वमपि संभवतीत्याह—**एतेषामिति** ॥

**( मन्त्रत्वेन विध्युद्देशत्वेन चानुपयोगसमर्थनम् )**

न तावद्ब्राह्मणैकवाक्यतया अनुष्ठेयार्थस्मारकत्वसंभवः; "यजेत पशुकाम" इत्यादेः ब्राह्मणवाक्यस्य विधायकत्वेन कर्मकालाप्रयोज्यत्वात् तदेकवाक्यतापन्नस्यास्य तदनुपपत्तेः, नापि पृथक्भूतत्वेन; एतदभिधेयस्य खनित्रादेः कर्मण्यविधानादेव प्रकाशनानर्हत्वात् । नचोपांशुयागवदेव सन्निधानावगतयागाङ्गत्वनिर्वाहाय मान्त्रवर्णिकद्रव्यविधिकल्पनया स्मारकत्वोपपत्तिः; द्रव्यस्य भावनायां यागे वान्वयासंभवेन तद्विधिकल्पनानुपपत्तेः । यागजनकत्वेनाकाङ्क्षाया अर्थाक्षिप्तद्रव्येणैव निरासात् न तद्बलेन भावनाया आकाङ्क्षान्तरकल्पनयाप्यन्वयो युक्त इति भावः । विध्युद्देशरूपवेदावयवान्तर्भावं निरस्यति—**नचेति** ॥

**( पूर्वपक्षे अध्ययनविधिदृष्टार्थत्वोपपत्तिः )**

स्पष्टाक्षरमधिकरणपूर्वपक्षान्तम् । नचैवं पूर्वपक्षे साधिताध्ययनविधिदृष्टार्थत्वभङ्गः; तस्य पारायणेऽप्युपयोगिप्रयोगप्राशुभावरूपदृष्टार्थतयोपपत्तेरप्रमाणमुद्भिदादिशब्दा इत्यर्थः ॥

**( विध्युद्देशान्तर्भावेन सिद्धान्तः )**

अध्ययनगतदृष्टार्थतानिर्वाहेऽपि प्रयोजनवदर्थज्ञानार्थत्वस्य साधितस्याभङ्गाय प्रामाण्यमस्तीति सिद्धान्तमाह—**अध्ययनेति** ॥ तत्र प्रकारासंभवेऽपीत्यस्य प्रकारान्तरासंभवेऽपीत्यर्थः ॥

**इति प्रथमं उद्भिदादिपदप्रामाण्याधिकरणम् ॥**

( २ अधिकरणम् । )

**अपि वा नामधेयम्** ॥ अतः परं क्व गुणविधित्वं क्व वा नामधेयत्वमिति कोष्ठशोधनिकार्थमारम्भः । तदिह गुणे कर्मणि च तुल्यवद्वृत्तिकानामुद्भिदादिपदानां विधेयगुणसमर्पकत्वं नामधेयत्वं वेति चिन्तायां भिदिर् विदारणे इति स्मृत्या विदारणसमर्थखनित्रादिवचनत्वप्रसिद्धेर्नामधेयत्वे वैयर्थ्यप्रसङ्गाच्च गुणविधित्वमेव युक्तम् । तत्रच गुणविशिष्टं कर्मैव फलोद्देशेन विधीयत इत्येकः पक्षः ।

प्रकृतसोमयागानुवादेन गुणमात्रविधानमित्यपरः ।

---

**( उद्भिद्वाक्यस्यैव विचारे निमित्तनिरूपणम् )**

अनिर्धारितद्वारविशेषेणोक्तमपि प्रामाण्यं निर्धारणं विना न दृढं भवतीत्येतदर्थं अधिकरणान्तरं सूचयति—**अतः परमिति** ॥ तत्र तत्प्रख्यशास्त्रान्तररहितानामुदाहरणत्वेऽपि चित्रादिशब्देषु लोकप्रसिद्धिबाधेन नामधेयताया वाक्यभेदादिसहकारिसापेक्षत्वेन दुरुपपादत्वात् तान्विहाय अवयवार्थयोगस्य प्रवृत्तिनिमित्तत्वान्मत्वर्थलक्षणाप्रसंगमात्रसहकृतसामानाधिकरण्याच्च प्रथमतो विचारे सौकर्यात्तेषामुदाहरणत्वं दर्शयति—**तदिहेति** ॥ **वचनत्वप्रसिद्धेरिति** ॥ **ननु**—व्रीह्यादिपदवत् समुदायरूपेण रूढत्वाभावात् कथं खनित्रवाचितेत्याशङ्कानिरासाय **"भिदिर् विदारण"** इत्याद्युक्तम् ॥

**( उद्भिच्छब्दस्य खनित्रवाचित्वमेव, नतु कर्मवाचित्वमिति निरूपणम् )**

तथाच उदुपसर्गस्योर्ध्वतायां भिदिधातोर्विदारणे कर्त्रर्थकक्विपः तत्समर्थकर्तरि शक्तेः क्विबन्तेनोर्ध्वविदारणसमर्थखनित्रप्रसिद्धिरवयवप्रसिध्या समुदायरूपेण ग्रहणाद्युक्ता । कर्मणि तु ऊर्ध्वविदारणकर्तृत्वाभावात् कथंचित्फलमुद्भिनत्ति प्रकाशयतीत्येवं योगेन फलोद्भेदनसमर्थत्वेन तदुपपादने प्रकाशने लक्षणापत्त्या लोकव्याकरणावगतावयवप्रसिद्धिबाधापत्तेः सर्वकर्मणामप्येवंविधफलोद्भेदकत्वसत्त्वेनोद्भित्पदवाच्यतापत्तेः तत्परिहारार्थं पङ्कजादिशब्देष्विव रूढिकल्पनापत्तेः तदपेक्षया क्लृप्तावयवशक्त्यैवावयवप्रतीतार्थग्रहणं युक्तमित्यर्थः ॥

**( कर्मसाधारणयोगार्थेनापि नामधेयत्वाङ्गीकारनिरासः )**

अस्तुवा यजिसामानाधिकरण्यनिर्वाहाय कथंचिद्यागेऽवयवार्थमात्रसंभवः, एवमपि तेन नामधेयताङ्गीकारे दूषणमाह—**नामधेयत्वे इति** ॥ विधिबलादेव विशेषावधारणसिद्धेः नाम्नोऽपि यागत्वजातेस्तदवच्छिन्नव्यक्तिसामान्यरूपस्य विशेषावधारणासंभवात्पुनरपि व्यक्तिविशेषावधारणार्थत्वे वैयर्थ्यम् । गुणविधिपक्षे तु यागभावनापेक्षितद्रव्यसमर्पकत्वादर्थवत्त्वं पुरुषप्रवृत्तिविशेषकरत्वं च लभ्यते इत्यर्थः ॥

**( सिद्धान्तापादितमर्थलक्षणानिरासेन गुणविधित्वसमर्थनम् )**

यस्त्विह सिद्धान्ते सर्वकारकाणां भावनान्वयित्वेऽपि समानपदोपात्तयागरूपकरणावरुद्धायां गुणस्य करणत्वेन अन्वयायोगात् धात्वर्थस्य च कारकत्वेन तत्रापि अन्वयायोगेन प्रधानभूतप्रत्ययेन तदसंभवे गुणभूते प्रातिपदिके मत्वर्थलक्षणा पूर्वपक्षे आपद्यते, सा न युक्ता; स्वर्गनिरूपितत्वेन यागस्येव गुणस्यापि व्यापारभेदेन भावनायां करणत्वेनान्वयोपपत्तेः । अतश्च यागस्य फलनिष्पादनद्वारा भावनाकरणत्वेऽपि सोमादेः करणान्तरस्य समादेरधिकरणान्तरस्येव यागनिष्पादनद्वारा भावनासंबन्धे बाधकाभावात्तथैव प्रथमावगत भावनासंबन्धनिर्वाहाय अरुणैकहायनीवत् यागस्य पार्ष्ठिको यागसंबन्ध एव कल्प्यते । तेन न मत्वर्थलक्षणापत्तिरित्यभिप्रेत्य पूर्वपक्षे आद्यं विशिष्टविधिपक्षं उपपादयति—**तत्रेति** ॥

**( पार्ष्ठिकबोधेऽप्यत्र मत्वर्थलक्षणानिरासः )**

नचैवं पार्ष्ठिकान्वयवेलायामेवाश्रुतमत्वर्थव्यवहारापत्तिः; तस्यामवस्थायां श्रुतेन करणत्वेनैव यागं प्रति गुणस्यान्वयोपपत्तेः । नहि तदानीं यागस्य करणत्वमस्ति, येनानाकाङ्क्षितत्वादन्वयो न भवेत्, अर्थाक्षिप्तसाध्यत्वमादाय कर्मत्वात् । अतो न कथमपि मत्वर्थलक्षणाप्रसक्तिरस्मिन्नपि पक्ष इत्यर्थः ॥

**( ताण्ड्यशाखायां ज्योतिष्टोमप्रकरणानुसारेण गुणविधित्वपक्षः )**

अतएव यद्यपि विशिष्टविधौ न मत्वर्थलक्षणा; तथापि एतेषां वाक्यानां ताण्ड्यशाखायां ज्योतिष्टोमानन्तरमेव पाठात् प्रकृतज्योतिष्टोमयागानुवादेनैव दध्ना जुहोतीतिवत् गुणविधानं भविष्यतीत्यभिप्रेत्य पक्षान्तरमाह—**अथवेति** ॥

**( गुणविधित्वपक्षेऽपि विधानेवेत्यादिवार्तिकानुसारेण मत्वर्थलक्षणापत्तिशङ्कानिरासौ )**

यद्यपि प्रकृतविधौ यागस्य करणत्वात् यथाप्राप्तस्यैवानुवादेनेहापि कारणत्वात् गुणान्वये मत्वर्थलक्षणापत्तिः; तथापि असाधितस्य करणत्वायोगादर्थाक्षेपेण साध्यत्वावगमात्तद्रूप्यमादाय यागे करणत्वेन गुणस्यान्वये नानुपपत्तिः । **यत्तु**—'विधाने वाऽनुवादे वा यागः करणमिष्यते । तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चति" इति वार्तिकं, तदुत्तरार्धानुरोधात् "समे दर्शपूर्णमासाभ्यां यजेते"त्यादौ यत्र तृतीयान्तनामधेयसामानाधिकरण्यं तत्रोत्पत्तिवाक्यावगतकरणत्वस्यैवानुवादो नत्वर्थाक्षिप्तसाध्यत्वमित्येतत्परम् ॥

**( ज्योतिष्टोमवाक्यस्योत्पत्तिविधित्वशङ्क्या प्राप्तशङ्कान्तरनिराकरणार्थं सोमवाक्यस्योत्पत्तिविधित्वसमर्थनम् )**

**नच**—प्रापकविधावपि ज्योतिष्टोमाद्युपपदसत्त्वेनेह त-

न च विनिगमनाविरहः; इतिकर्तव्यतासन्निधिविशेषस्यैव कर्मविधिनियामकत्वात्। नचैवं फलपदानर्थक्यम्; "सर्वेभ्यो ज्योतिष्टोम" इति वचनेन तस्य सर्वफलार्थत्वावगतेर्यजिपदस्य पशुफलोपधायकयागलक्षणायां तात्पर्यग्राहकत्वात्। अत एव न विशिष्टोद्देशे वाक्यभेदः। न चोत्पत्तिशिष्टसोमप्राबल्यम्; पशुकामप्रयोगविशेषपुरस्कारेण विहितस्य खनित्रादेः सामान्यविहितसोमादिबाधकत्वात्॥

**वस्तुतस्तु**—प्रकृतसोमयागाश्रितः खनित्रादिगुण एव फलोद्देशेन विधीयते इति **तृतीयः पक्षः**।

काम्यत्वादेव च नित्यसोमबाध इति प्राप्ते ब्रूमः—

नायं गुणविधिः; गौरवात्। **तथाहि**—सर्वत्रैव तावच्छुद्धधात्वर्थकरणकभावनाविधानादाद्यो विधिप्रकारः—"*यथाऽग्निहोत्रं जुहोती*"ति। अन्योद्देशेन तद्विधिरपरः—"*यथाऽग्निहोत्रं जुहुयात् स्वर्गकाम*" इति। एतस्य चोद्देश्यवाचकपदान्तरसापेक्षत्वाद्दौर्बल्यम्। धात्वर्थोद्देशेनान्यकरणकभावनाविधिस्तृतीयः—"*यथा दध्ना जुहोती*"ति। अत्र विधेयताया धात्वर्थवृत्तित्वाभावात् पदान्तरार्थवृत्तित्वाच्च ततोऽपि दौर्बल्यम्। धातोः साधुत्वार्थत्वमङ्गीकृत्य अन्योद्देशेनान्यकरणकभावनाविधिश्चतुर्थः—यथा "दध्नेन्द्रियकामस्य जुहुयादि"ति। अत्र धात्वर्थस्योद्देश्यत्वेनाप्यसंबन्धात्ततोऽपि दौर्बल्यम्। गुणविशिष्टधात्वर्थकरणकभावनाविधानात् पञ्चमः—यथा "सोमेन यजेते"ति। अत्र विशेषणविधिकल्पनादेराधिक्यात्ततोऽपि दौर्बल्यम्। अन्योद्देशेन पूर्वोक्तः षष्ठः—यथा "सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम" इति। अयंतु सर्वदुर्बलः।

तदेवं उद्भिद्गुणविशिष्टस्य यागस्य फलोद्देशेन विधाने षष्ठविधिप्रकाराश्रयणादतिगौरवम्; गुणस्य यागे अन्वयानुपपत्तेर्मत्वर्थलक्षणा च। नहि भावनायां समानपदोपात्तधात्वर्थकरणकत्वावरुद्धायां गुणस्य करणत्वं संभवति। अतस्तस्य यागान्वयावश्यकत्वे यागस्य कारकत्वात् कारकाणां च परस्परं संबन्धानुपपत्तेः सोमेन यजेतेतिवदुद्भिद्वता यागेनेति मत्वर्थलक्षणाऽऽवश्यकीति—प्राञ्चः॥

**वस्तुतस्तु** दृष्टान्तेऽपि सोमस्य करणत्वेनैव भावनायामेवान्वयस्तत्र तत्र वक्ष्यते, युक्तश्च; एककरणावरुद्धेऽपि करणान्तरस्य भिन्ननिरूपितस्य प्रकारतया भावनाऽन्वयोपपत्तेः। नहि यागकरणत्वं भावनानिरूपितम्, अपि तु स्वर्गनिरूपितम्। अतश्च यथैवान्यनिरूपितमपि तत्करणत्वं प्रकारतया भावनायामन्वेति, तथैव सोमकरणत्वमपि यागनिरूपितम्। उभयत्र तत्तन्निरूपकत्वस्य पार्ष्ठिकबोधलभ्यत्वाच्च न कोऽपि विरोध इति नास्मिन्नपि पक्षे यद्यपि मत्वर्थलक्षणा; तथापि विशेषणविधिकृतगुणयागोभयविशिष्टभावनाविधिगौरवमापद्यमानं नापह्नोतुं शक्यम्। यथाच प्राथमिकभावनासंबन्धाङ्गीकारेऽपि द्वितीयबोधवेलायां मत्वर्थकल्पना तथोक्तं कौस्तुभे।

एवं द्वितीय-तृतीययोरपि जघन्यविधिप्रकाराङ्गीकरणं दोषाय। अगत्या च दधिसोमादावेव तदङ्गीकृतम्; तेषां

---

स्यापि गुणविधित्वपूर्वपक्षोदाहरणत्वात्, तत्र च फलपदानुरोधात् यागस्य करणत्वे गुणस्यान्वयानुपपत्त्या मत्वर्थलक्षणापत्तिरिति—**वाच्यम्**; यत्रोपपदस्य गुणे निरूढत्वं कर्मणि च योगेनाप्यसंभवद्वृत्तिता, तत्र सोमेन यजेतेत्यत्राप्रसिद्धशक्त्यन्तरकल्पनपेक्षया मत्वर्थलक्षणाया लघुत्वेनाङ्गीकारात् तत्रैव कर्मोत्पत्तिविधित्वे बाधकाभावात्। अतस्तद्विहिते कर्मणीह युक्तो गुणविधिरित्यर्थः॥

## ( उद्भिद्वाक्यस्योत्पत्तिविधित्वनिरासेन गुणविधित्वसमर्थनम् )

**इतिकर्तव्यतेति**॥ कर्मविध्यभावे गुणविध्ययोगादवश्यं कस्मिंश्चित्कर्मविधानेऽभ्युपगन्तव्ये ज्योतिष्टोमवाक्यसन्निधौ दीक्षणीयादिवद्धितिकर्तव्यताम्नानात्, तस्याश्च कर्तव्यतालिङ्गत्वात् भूयस्त्वेनोभयश्रुतीत्यनेन न्यायेन तस्यैव कर्मविधित्वमित्यर्थः॥

## ( भाष्यवार्तिकाद्यनुसारेण सोमस्यापि भावनाकरणत्वेनैवान्वयनिरूपणम् )

**तत्र तत्र वक्ष्यते इति**॥ सप्तमनवमाध्याययोर्यजेतेत्थमिति इतिकर्तव्यतया धात्वर्थान्वयनिरासेनेत्थं कुर्यादिति भावनान्वयो भाष्यकृता निरस्तः। "सोमेन यजेतेत्यत्रापि तद्भूताधिकरणोक्तेन मार्गेण धात्वर्थकारकाणां अरुणैकहायन्यादिवत् परस्परेणासंबन्ध्य भावनासंबद्धानां उत्तरकालं परस्परोपकारित्वं। तथाच सप्तमनवमाद्ययोर्वक्ष्यतीति न सोमविशिष्टधात्वर्थविधान"मित्यादिना वार्तिककारेण, आघाराग्निहोत्राधिकरणे तथा सोमतुल्यन्यायत्वात् अवघातमन्त्रस्य भावनान्वयिनो न प्रतिप्रहारमावृत्तिरित्येतत्प्रतिपादनार्थं एकादशाधिकरणे तन्त्ररत्नकृता, तथा सप्तमे "भावनान्वयतः पश्चाद्द्वयोरार्थिकोन्वयः। ततः कर्मान्तरेऽङ्गानां प्राप्तिराशङ्क्यते कुत"इत्यादिना शास्त्रदीपिकायां च वक्ष्यते इत्यर्थः। एवं प्राचां मतखण्डनेन पूर्वपक्षे मत्वर्थलक्षणानापत्तिं प्रदर्श्याधुना यत्पार्ष्ठिकबोधवेलायामपि न तदापत्तिरित्युक्तम्, तन्निरसितुमाह—**यथाचेति**॥

## ( पार्ष्ठिकान्वयवेलायां सोमेन यजेतेत्यत्र मत्वर्थलक्षणाऽवश्यकतानिरूपणम् )

**अयमर्थः**—यद्यपि सर्वकारकाणां प्रथमतो भावनयैव संबन्धः; तथापि निर्विषयकृतिसंबन्धायोगात् सोमादिगतव्यापारापेक्षायां प्राक् फलकर्मत्वयागकरणत्वगतनिरूपकापेक्षायाः समानपदश्रुत्या यागे फले चैव प्रतीतेः पार्ष्ठिके फलयागयोः संबन्धे यागस्य करणतयैवावगतस्य कर्मत्वेन प्रा-

तत्रात्यन्तरूढत्वेन नामधेयत्वासंभवात्, प्रकृते तु येनैव योगेन खनित्रे प्रवृत्तिस्तेनैव योगेनोद्भिद्यते उत्पाद्यते फलमिति व्युत्पत्त्या कर्मण्यपीति नामत्वसंभवेन द्वितीयविधिप्रकाराङ्गीकरणाल्लाघवम् । नच भिदो विदारण एव स्मृतेः शक्तिः, भिदिर् इत्येव धातुपाठात्, विदारण इत्यस्य शक्यार्थमात्रोपलक्षकत्वस्य वैयाकरणसिद्धत्वात् । अतो विदारण इवोत्पादनेऽपि प्रयोगात् तुल्यवद्वृत्तिकता । नच नामधेयानर्थक्यम्; संकल्पादौ सार्थकत्वात् । क्वचित् फलोपबन्धश्च—यथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति । क्वचिच्च गुणोपबन्धः—यथा "संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपती"ति । प्रकृते च संज्ञया भेदसिद्धिरेव प्रयोजनम् । इतरथा हि प्रकृत एव कर्मणि गुणफलसंबन्धापत्तेर्न कर्मान्तरत्वम् । नच योगस्य फलोद्भेदनकारित्वस्यातिप्रसक्तत्वादपूर्वे कर्मणि रूढिकल्पने सोमादिपदानामपि तदापत्तिः; सर्वत्र योगरूढिस्थले प्राचीनप्रयोगस्यैव कारणतायाः क्लृप्त-

---

तीतेः खनित्रादिकारकान्तरस्य करणत्वेनैवान्वये वक्तव्ये भिन्नार्थयोः सामानाधिकरण्यानुपपत्त्या संबन्धसामान्येनान्वयार्थमश्रुतमत्वर्थकल्पनाऽऽवश्यकी । पश्चाच्चासाधितस्य यागस्य करणत्वानुपपत्तेः कर्मत्वबोधे सति खनित्रादिकारकान्तरस्य भावनासंबन्धवेलायां श्रुतेन कारणत्वादिनैव विशेषणविधिकालेऽन्वयो भवति । अतः पार्ष्ठिकान्वयकाले सोमवता यजेतेत्येवं मत्वर्थलक्षणाऽनिवार्या ॥

**( मत्वर्थलक्षणाविरहपक्षे सोमस्य श्रौतविनियोगोपपत्तिः )**

नचैवमस्मन्मते सोमस्य वाक्यीयविनियोगापत्तिः; पूर्वमेव भावनासंबन्धवेलायां तन्निर्वाहार्थं मत्वर्थलक्षणाङ्गीकारे तदापत्तावपि प्रथमत एव विनैव लक्षणां कारकाणां अन्योन्यसंबन्धमनादृत्य भावनान्वयस्य श्रौतत्वेन पश्चाच्च फलयागयोः पार्ष्ठिकान्वयवेलायां सर्वकारकाणां मत्वर्थलक्षणया धात्वर्थसंबन्धाश्रयणे तदनापत्तेः ॥

**( विशिष्टविधिपक्षे मत्वर्थलक्षणोपपादनप्रकारः कौस्तुभगतः )**

**नच**—भावनान्वयकाले करणत्वेनावगतसोमादिकरणत्वादीनां यागान्वये अनुपस्थितानां कथं यागसंबन्धप्रतीतिः? इति—**वाच्यम्**; तस्य मत्वर्थसंबन्धसामान्यरूपेणोपस्थितत्वेनानुपपत्त्यभावात् । **अथवा** सोमकरणकेन यागेनेति समस्तवाक्यकल्पनया वोपस्थित्युपपत्तेः । एवमरुणैकवाक्येऽपि या अरुणा सैकहायनीत्येवं लुप्तमतुबन्तवाक्यकल्पनापि द्रष्टव्येति विशिष्टविधिपक्षे मत्वर्थलक्षणापत्तिरनिवार्येति कौस्तुभे उक्तमित्यर्थः ॥

**( अज्ञातसन्दिग्धस्योद्भित्पदस्य यजिसमानाधिकरण्येनार्थनिर्णय इति नामत्वनिरूपणम् )**

**इति व्युत्पत्त्येति** ॥ उद्भिद्यते उत्पाद्यते यस्माद्यागेन फलमिति हेतोरुद्भिनत्ति फलमिति वा व्युत्पत्त्येत्यर्थः । अन्यथा कर्तरि क्विपोऽनुशासनेन कर्मव्युत्पत्तिप्रदर्शनस्यासङ्गतत्वापत्तेः । **अयमर्थः**—"पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक्श्रुति । निर्णीयते निरूढं तु न स्वार्थादपनीयते" इति वार्तिकोक्तरीत्या उद्भिदादिपदानां खनित्रादौ समुदायशक्तेरभावात् अवयवयोगेनापि पाचकादिशब्दवल्लोके प्रयोगाभावादज्ञातार्थत्वम् । यत्तु —"सुराणां वै बलस्तमसा प्रावृतो स्मापिधानमासीत्तस्मिन् गव्यं वस्त्वन्तरासीत्तं देवा नाशक्नुवन् भेत्तुं ते बृहस्पतिमब्रुवन्निमा उत्सृजेति स उद्भिदेव बलं व्यच्यावयत्" इत्यर्थवादे गोयुक्तविवरापरपर्यायवलच्यावनद्वारस्य विदारणस्य प्रवृत्तिनिमित्तत्वावगमः, तस्य स्वार्थपरत्वाभावेन तादृशार्थे प्रमाणाभावान्नोपयुक्तः । तथा पिकादिशब्दवत्प्रयोगाभावेऽप्यवयवार्थयोगमात्रे खनित्र इव यागेऽपि प्रवृत्त्युपपत्तेरक्षादिपदवत्सन्दिग्धत्वम् । अतः प्रसिद्धयजिपदसामानाधिकरण्यान्निर्णेयमिति ॥ **उत्पादनेऽपीति** । अपूर्वे वस्तुनि केनचिदुत्पादिते इदमनेनोद्भिन्नमिति प्रयोगादित्यर्थः ॥

**( नाम्नः संकल्पादौ सार्थक्यनिरूपणम् )**

**संकल्पादाविति** । अनुष्ठानकाले प्रयोगविध्यपेक्षितलघ्वाख्यानौपयिकत्वेन सार्थक्यादित्यर्थः । **यथेति** । दर्शपूर्णमासपदस्य नामत्वाभावे यजिना प्रकृतत्वाविशेषेण षड्यागसाधारण्येन प्रयाजाद्यङ्गानामप्युपादानात् सर्वेषां फलसंबन्धापत्तिः । सति तु नामधेये षण्णामेव तत्सिद्धिरिति फलसंबन्धरूपं प्रयोजनं चतुर्थे वक्ष्यते इत्यर्थः । **यथेति** । वैमृधवाक्ये पौर्णमासीनामधेयाभावे प्रकरणादमावास्याङ्गत्वस्याप्यापत्तिर्वैमृधस्य, तत्सत्त्वे तु वाक्येन प्रकरणबाधान्न तदापत्तिरिति गुणोपबन्धः प्रयोजनमित्यर्थः । **भेदसिद्धिरेवेति** । एवकारेण गुणफलोपबन्धरूपप्रयोजनान्तरासंभवेऽपि संकल्पे उल्लेखवत् भेदसिद्धिरिति द्वितीयं प्रयोजनं अव्यभिचारि लभ्यते इत्यर्थः सूचितः । तेन न संकल्पोल्लेखनरूपप्रयोजनव्यावृत्तिरिति भावः ॥

**( उद्भेदनकारित्वरूपयोगार्थस्यातिप्रसङ्गशङ्का, न्यायसुधाभाष्यप्रकाशकारोक्ततत्समाधानानि )**

**सोमादिपदानामपीति** ॥ एतेन यदत्र न्यायसुधाकृतान्यैश्च पङ्कजादिपदवदुद्भिच्छब्दस्य योगरूढिं परिकल्प्य रूढ्यवच्छेदकपद्मत्ववद्विधिसामर्थ्येनावगतविजातीययागत्वमेव रूढ्यवच्छेदकमित्युक्तम्, तत्पद्मत्वस्य प्रमाणान्तरसिद्धत्वेन रूढ्यवच्छेदकत्वकल्पनेऽपि विधिसामर्थ्यादसिद्धे रूढ्यवच्छेदकत्वानुपपत्त्या रूढिकल्पनानुपपत्तेर्मत्वर्थलक्षणापत्तिभिया रूढि-

कल्पने सोमादिपदेष्वपि तदापत्तेरुपेक्ष्यमिति सूचितम्। यदपि अतिप्रसङ्गपरिहारार्थं यजिसामानाधिकरण्यबलात् तद्गतमेवोद्भेदनकर्तृत्वं प्रवृत्तिनिमित्तमित्याकरेण पक्षान्तरमुक्तं; तदपि यजिपदेन विजातीययागाभिधानात्तावन्मात्रवृत्त्युद्भेदनकर्तृत्वस्य प्रवृत्तिनिमित्तत्वे उद्भिच्छब्दवाच्ययागान्तरे प्रवृत्तिनिमित्तान्तरकल्पनापत्तेः तदर्थं पृथगवयवशक्त्यन्तरकल्पनापत्तेरयुक्तम्। **एतेन**—यत्प्रकाशकारैर्योग्यतया एकवाक्यतया चैतद्यागजन्यपशुफलविशेषोद्भेदकत्वेन प्रवृत्तिनिमित्तेन यौगिकत्वान्नातिप्रसङ्गः—**इत्युक्तम्; तदप्ययुक्तम्;** यागान्तरे भिन्नप्रवृत्तिनिमित्तकल्पनापत्तेः। कर्मसामान्ये एकरूपप्रवृत्तिनिमित्तासंभवादतोऽतिप्रसङ्गमन्यथा परिहरति—**सर्वत्र हीति**॥

**( अर्थान्तरे प्राचीनप्रयोगाभावेनोक्तातिप्रसङ्गवारणस्य स्वाभिमतस्य निरूपणम् )**

**अयमर्थः**—घटपदस्य घटविषयशक्तिनिश्चयानुभवबलात्तत्र नियामकापेक्षायां घटपदप्रयोगरूपव्यवहारस्य सहकारिकारणत्वं लोके क्लृप्तम्। प्रकृते चोद्भिच्छब्दस्य कर्मणि शक्तिनिश्चयार्थं प्राचीनप्रयोगस्य सहकारिकारणत्वात् यत्र यत्र तादृशप्रयोगः तत्रैव शक्तिनिश्चये सत्यन्यस्य ज्योतिष्टोमादेस्तदभावादेव नोपस्थितिः। एवंच योगेनैव निर्वाहे योगरूढिर्नाम नातिरिक्ता कल्पनीयेत्यर्थः॥

**( योगरूढ्यनङ्गीकारेऽपि पङ्कजादिशब्दस्यान्याबोधकत्वोपपत्तिः )**

एवं पङ्कजादिपदेष्वपि ज्ञेयम्। **अथवा**—पङ्कजनिकर्तृत्वस्यावयवशक्त्या बोधेऽपि तादृशशाब्दबोधं प्रति तादृशपूर्वतरप्रयोगाभावज्ञानस्य **अथवा** पद्मविशेष्यकपूर्वतरप्रयोगत्वप्रकारकज्ञानस्य प्रतिबन्धकत्वकल्पनान्न पद्मान्यविशेष्यकबोधप्रसक्तिः। अवश्यं हि पद्मे शक्तिवादिनाऽप्युक्तग्रहस्य शक्तिकल्पकत्वमङ्गीकृत्य तद्ग्रहस्य निरुक्तशाब्दबोधं प्रति प्रतिबन्धकत्वं वाच्यम्। तद्वरमुक्तग्रहस्यैव प्रतिबन्धकत्वं वाच्यमिति सर्वत्रेत्यनेन सूचितम्॥

**( प्राचीनप्रयोगस्य शक्तिज्ञानं प्रति सहकारित्वकल्पना, तन्त्ररत्नकाराणां योगरूढिसाधनप्रकारस्यासाङ्गत्यनिरूपणम् )**

एवंच प्राचीनप्रयोगस्य शक्तिज्ञानं प्रति सहकारित्वेन यत्र नैव सहकारिकारणं, तत्र शक्तिग्रहाभावादेवेतरबोधाभावे स्थिते सति यत् समानाधिकरणे षष्ठे तन्त्ररत्ने "यस्त्वप्रयोगादेवाप्रयोग इति वदन्नेव पद्मादिषु रूढिं नेच्छति, स वक्तव्यः उपपद्यतां नाम पूर्वपूर्वेषामप्रयोगादेवोत्तरोत्तरेषामप्रयोगः; प्रतीतिस्त्वनन्यलभ्या शक्तिमेव कल्पयति। कथं खल्वशक्तात्पङ्कजपदात् पद्मप्रतीतिः? शब्दप्रतिपादितपङ्कजननक्रियायोगवशादिति यदि ब्रूयात्, प्रतिब्रूयादेनमनैकान्तिकत्वादिति। न खलु पद्मैकान्तिकं पङ्कजननम्। यतस्तन्निश्चाययेत्। तस्माच्छब्दशक्तिरेव कल्पयितव्येति। सचेत्ब्रूयात् "सत्यं शब्दादेव पद्मप्रतीतिः। स तु प्रयोगवशादेव तत्प्रत्याययती"ति न वाचकशक्तिः कल्पनीयेति, प्रतिब्रूयादेनं कथमशक्तः प्रयोगमात्रादेव प्रत्याययेदिति? प्रसङ्गो हि तथा स्यादिति सर्वे गवादिशब्दाः शक्तिमन्तरेणैव प्रयोगमात्रादेव स्वार्थं प्रत्याययन्तीति शक्यं वदितुम्। इति रूढिप्रसाधनायोक्तं। तच्छक्तिं विनाऽस्माभिः प्रयोगवशादेव प्रत्यायकत्वानङ्गीकारान्नास्मन्मते प्रसज्यते इत्यपि ध्येयम्॥

**( पङ्कजशब्दे निरूढलक्षणाङ्गीकार इति पक्षान्तरनिरूपणम् )**

यदि तु पङ्कजशब्दात् पङ्कजनिकर्तृत्वप्रकारकपद्मविशेष्यकप्रतीतिरनुभवसिद्धेत्युच्येत, तथाप्यस्मिन् पक्षे निरूढलक्षणयैव तत्प्रतीत्युपपत्तेर्न तदनुरोधेन रूढेरवकाश इति न दोषः॥ एवंच यज्युद्भित्पदयोः प्रवृत्तिनिमित्तभेदात् नीलोत्पलयोरिव भिन्नप्रवृत्तिनिमित्तत्वे सत्येकार्थवृत्तित्वलक्षणस्यार्थसामानाधिकरण्यस्याप्युपपत्तिः॥

**( उद्भित्पदशक्यतावच्छेदकत्वस्य फलोद्भेदनकारित्वेऽङ्गीकारे नामधेयानर्थक्यशङ्कासमाधाने )**

नच उद्भित्पदशक्यतावच्छेदकस्य फलोत्पादकत्वस्य पशुकामपदसमभिव्याहृताख्यातपदादेव पशूत्पादनहेतुना यागेन पशून् भावयेदिति बोधसिद्धेर्नामधेयानर्थक्यम्; पशुकामपदावगतस्यापि फलोद्भेदनहेतुत्वस्य नामधेयेनानुवादात्, तत्फलं चेतरव्यावृत्तिसंकल्पोल्लेखादिकं प्रागेवोक्तम्॥ अतश्च यथा वाक्यान्तरसिद्धाग्निदेवताकत्वानुवादोऽग्निहोत्रपदेन संकल्पादिफलको न विरुध्यते, तथैव स्ववाक्यगतपशुकामपदावगतफलहेतुत्वानुवादोऽपि नानुपपन्नः॥

**( संज्ञासंज्ञिसंबन्धस्याविधेयत्वनिरूपणपूर्वकं नामत्वेनान्वये लाघववादिनिरूपणम् )**

**अतएव**—नामत्वे संज्ञासंज्ञिसंबन्धस्यापि विधानात् वाक्यभेदापत्तिः—**निरस्ता;** नाम्नोऽननुष्ठेयत्वेन सामानाधिकरण्यावयवप्रसिद्धिभ्यामेव च सिद्धेस्तत्संबन्धस्याविधेयत्वेन तदप्रसक्तेः। अतएव नामधेयार्थविशिष्टयागविधानेऽपि नामधेयार्थस्य प्रमाणान्तरावगतत्वेन तदंशे विशेषणविधेरकल्पनादेव विशिष्टविधित्वेऽपि सिद्धान्ते लाघवम्। पूर्वपक्षे तु गुणवत्तद्गतलिङ्गसङ्ख्यांशे विशेषणविधिकल्पनाद्गौरवम्। सिद्धान्ते च आख्यातोपात्तसङ्ख्याद्यनुवादकतया विधेयत्वेन लाघवमिति विशेषः। **एतेन**—यद्यौगिकत्वपक्षोपपादनं वार्तिककारीयं पशुकामो यजेतेत्येतावतैव सिद्धत्वात् पशूद्भेदहेतुना पशून् भावयेदिति नामधेयविध्यानर्थक्यापत्तेः प्रौढवादमात्रमिति न्यायसुधाकारोक्तम्—**तत् अपास्तम्**॥

**( नाम्नोऽविधेयत्वेऽपि धात्वर्थपरिच्छेदकतया विध्युद्देशान्तर्भावनिरूपणम् )**

अतो नामधेयार्थस्यैवेह धात्वर्थावच्छेदकतया आग्नेयादि-

साहित्यस्येव स्वरूपतः प्रमाणान्तरावगतानां व्रीह्यारुण्यादीनामिव वा विशिष्टविधिना विधानाद्विध्युद्देशान्तर्गतेरप्युपपत्तेर्न कापि क्षतिः । यद्यपि अज्ञातविशेषरूपज्ञापन एव परिच्छेदकत्वव्यवहारस्यान्यत्र दृष्टत्वात्तस्य चेह शब्दान्तरादिप्रमाणसहकृतविधिनैव सिद्धेर्न नाम्नः परिच्छेदकत्वेन प्रयोजनम्; तथापि ज्ञातेऽपि विशेषे कोऽसाविति जिज्ञासानिवर्तकत्वेनैव तस्य परिच्छेदकत्वव्यवहार इति द्रष्टव्यम् ॥

**( नामधेयार्थस्य प्रमाणान्तरसिद्धत्वेऽपि भेदादिज्ञापकत्वेन धर्मप्रामाण्यनिरूपणम् )**

**नच**—एवं नामधेयार्थस्य प्रमाणान्तरसिद्धत्वेनानूद्यमानत्वादनधिगतार्थगन्तृत्वाभावेन कथं प्रामाण्यसंभवः ? इति—**वाच्यम्**; स्वार्थानुवादकत्वेऽपि विद्वद्वाक्ययोरिवानधिगतभेदादिज्ञापकत्वेन तदुपपत्तेः । यत्रापि नामधेयाभावेऽप्यनन्यपरविधिपुनःश्रवणरूपाभ्यासादेव भेदसिद्धिर्यथा "समिधो यजति तनूनपातं यजति" त्यादौ तत्र भेदज्ञापकत्वाभावेऽपि निर्धारितरूपविशेषप्रतिपत्तेर्नामधेयाधीनत्वादज्ञातार्थकत्वोपपत्तिः । अतो युक्तं नामधेयत्वेन धर्मे प्रामाण्यम् ॥

**( पशूद्भेदनकारित्वेनोद्भित्पदस्य कर्मणि न प्रवृत्तिः किंतु संज्ञात्वेन रूपेण संज्ञात्वप्रतिपत्त्यर्थयोगाश्रयणमिति सोमनाथीयाशयनिरूपणम् )**

**यत्तु**—वार्तिकोक्तपक्षान्तरावलम्बनेन सोमनाथेन पशूद्भेदनकारित्वस्य पशुकामपदवदाख्यातादेव सिद्धेर्नामधेयानर्थक्यमाशङ्क्य यदि पशूद्भेदनसाधनत्वेन यागमुद्भित्पदं बोधयेत्तदा वैयर्थ्यं स्यात्, अपितु संज्ञारूपत्वेनोद्भिन्नामकत्वेन यागं प्रतिपादयति । एवंच विधिसमभिव्याहृतधातुनैव कर्मविशेषप्रतीतिसिद्धावपि कीदृशोऽसौ कर्मविशेष इत्यपेक्षायां अस्मिन् वाक्ये द्रव्यदेवतयोरश्रवणेन द्रव्यदेवताद्युपलक्षणेन यागविशेषप्रतिपादनासंभवादुद्भिन्नामको यागोऽयमिति तद्विशेषप्रतिपादनपरत्वादुद्भित्पदस्य न वैयर्थ्यम्; उद्भित्पदं तु उद्भित्पदेनानभिहितमपि प्रत्यक्षश्रुतत्वमात्रेण स्ववाच्यमन्यस्माद्व्यावर्तयत् विशेषणभावमनुभवति । शब्दोपस्थितस्यैवान्वयबोधविषयत्वमिति नियमस्तु संज्ञाशब्दव्यतिरिक्तविषयः । **यद्वा**—संज्ञाशब्दानां स्वरूपप्रवृत्तिनिमित्तकत्वमिति शाब्दिकोक्तरीत्योद्भिच्छब्दस्यैव स्वरूपबोधकत्वं संभवतीति न काप्यनुपपत्तिः । **नच**—एवं पशूद्भेदनकारित्वस्य वाक्यार्थप्रतीतिविषयत्वाभावात् तदर्थकयोगाश्रयणवैयर्थ्यमिति—**वाच्यम्**; यत्रार्थे यस्य शब्दस्यावयवयोगादिसंभवस्तत्रैव संज्ञात्वं नान्यत्र । अतएव एतादृशशब्दस्यैव संज्ञात्वमिष्यते । अतएव सोमादिशब्दानां सोमेन यजेतेत्यत्र न नामत्वम् । ततश्च संज्ञात्वनिर्वाहार्थमेवोद्भिदादिशब्दानां कर्मणि योगाश्रयणमिति, तद्वैयर्थ्यानवकाशः । **अथवा** उद्भिच्छब्दः उद्भिच्छब्दाभिधेयत्वेन रूपेण लक्षणया कर्म प्रतिपादयति । सा च लक्षणा योगेन स्वाभिधेयत्वे सति प्रवर्तते नान्यथेति तदर्थं योगाश्रयणम् । लक्षणापि निरूढत्वात् मत्वर्थलक्षणापेक्षया ज्यायसीति न गुणविधिपक्षोक्तदोषप्रसङ्गः । अस्तुवा अवयवयोगं विनापि संज्ञात्वम्, तथापि योगेनोद्भिच्छब्दस्य प्रसक्तगुणविधित्वनिरासमात्रार्थमिव कर्मणि योगसाम्यप्रदर्शनार्थं योगाश्रयणमिति—**उक्तम्** ॥

**( योगार्थपुरस्कारेण कस्यापि दोषस्याप्रवृत्तिरित्यादिपूर्वतनमतखण्डनम् )**

तत्र**प्रथमे पक्षे** पदजन्यपदार्थोपस्थितेरेव वाक्यार्थबोधे कारणत्वेन क्लृप्तस्येह त्यागे प्रमाणाभावादन्यथा स्वर्गकामपदाध्याहारस्य विश्वजिद्वाक्येऽग्निमन्त्रे सूर्यपदप्रक्षेपरूपस्योहस्याप्यपलापप्रसङ्गात्, **द्वितीये पक्षे** शाब्दिकोक्तेर्यत्रावयवार्थसंभवस्तत्र डित्थाश्वकर्णादिशब्दपरत्वादन्यत्राप्रवृत्तेर्योगाख्यानं विनापि डित्थादिशब्देषु संज्ञात्वदर्शनात् यत्रावयवार्थयोगसंभवः तत्रैव संज्ञात्वमिति नियमस्याप्रयोजकत्वेन प्रकृते योगाश्रयणस्य निष्फलत्वापत्तेस्तृतीये उद्भिच्छब्दाभिधेयत्वेन रूपेण लक्षणाश्रयणे मत्वर्थलक्षणाश्रयणेन गुणविधित्वस्य योगार्थसहकृतस्याप्युपपत्तेर्वेदे "सोमेन यजेते" त्यादौ सर्वस्या अपि लक्षणाया निरूढलक्षणात्वेनैवाङ्गीकारे मत्वर्थलक्षणापेक्षया उद्भिच्छब्दाभिधेयत्वलक्षणाया निरूढत्वेन ज्यायस्त्वकथनस्याप्ययुक्तत्वादयुक्तमित्युपेक्षितं पूज्यपादैः ॥

**( उद्भित्संज्ञकेन यागेनेत्येवात्र शाब्दबोधः, संज्ञाबोधस्तु लक्षणेयति मतनिरूपणखण्डने )**

**एतेन**—संभवत्यधिकार्थत्वे न नाम्नः परिच्छेदार्थवर्णनं युक्तम्; किंतु उद्भित्संज्ञकेन यागेनेति प्रतीतेः संज्ञाविशिष्टयागबोध एवोद्भित्पदादङ्गीकर्तुं युक्तः । **नच**—एवं तर्हि तेषामुद्भिच्छब्दस्वरूपाभिधेयत्वप्रसङ्ग इति—**वाच्यम्**; जातिविशिष्टप्रतीतिजनकानां गवादिपदानां जातिवाचित्वसाधकन्यायेन संज्ञाविशिष्टप्रतीतिजनकानामप्येषां संज्ञावाचित्वाङ्गीकारस्येष्टापत्तिग्रस्तत्वात् । यदि शब्दाभिहितैर्गोत्वादिभिस्तादात्म्यादिना संबद्धविशेष्यलक्षणासंभवेन विशेष्यानभिधानेऽपि संज्ञाशब्दानां शब्दमात्राभिधाने संबन्धाभावेन संज्ञिविलक्षणानुपपत्तेः तद्बोधार्थं संज्ञिन्यपि शक्तिकल्पनायामतिगौरवमाशङ्क्येत, तदाऽस्तु संज्ञांशे लक्षणा । **नच**—एवं सिद्धान्तेऽपि लक्षणायास्तुल्यत्वे किमर्थं मत्वर्थलक्षणायास्त्याग इति—**वाच्यम्**; तस्या विशिष्टविधिगौरवापादकत्वेन हेयत्वात् । अत उद्भित्संज्ञकत्वप्रकारकबोधजनकत्वेनैवोद्भिच्छब्दस्य परिच्छेदकत्वं युक्तमिति केषांचिदुक्तम्—**अपास्तम्**; अनवगते संज्ञात्वे तादृशप्रातीतिजननासंभवात्तदवगमस्य उद्भिद्वाक्यात् प्राक् मानान्तरेणासिद्धेरस्यैव वाक्यस्योद्भिदा यागेनेति नाम्नो यजिसामानाधिकरण्येनान्वयबोधनेन संज्ञात्वाक्षेपकत्वे तेनैव प्रथमजातेनान्वयबोधेन वाक्यपर्यवसाने सति उद्भित्संज्ञकेनेति लाक्षणिकबोधाङ्गीकारस्य निर्युक्तिकत्वात् । एतद्वाक्याधीन-

त्वेन प्रकृते तदकल्पनात् । प्रयोजनं स्पष्टम् ॥ २ ॥ १८ ॥ | इति द्वितीयं उद्भिन्नामताधिकरणम् ।

( ३ अधिकरणम् । )

यस्मिन् ॥ अत्र गुण एव रूढानां "चित्रया यजेत पशुकामः" "पञ्चदशान्याज्यानि" "सप्तदशानि पृष्ठानि"

सिद्धिकस्य एतत्संज्ञकत्वस्य अस्मिन्नेव वाक्ये सिद्धवन्निर्देशानुपपत्तेश्च । किंच यदि शब्देन सहार्थस्य संबन्धाभावान्न संज्ञिनि लक्षणायाः संभवस्तर्हि संज्ञिनार्थेनापि सहशब्दस्य संबन्धो दुर्निरूप एवेति न तेन शब्दलक्षणासंभवः । अतो जातिन्यायवैषम्याभावात्संज्ञायामेव शक्तिः संज्ञिन्येव लक्षणाऽऽपद्येत । अतएव संज्ञाशब्दानां वाचकत्वमित्येवं प्रवादोऽपि संगच्छते । तथाच "सोमेन यजेते"त्यत्रापि लाक्षणिकसामानाधिकरण्योपपत्त्या किमिति विशिष्टविधिगौरवाङ्गीकरणम् ? यदितु संज्ञिन्यपि विशिष्टशक्तिमङ्गीकृत्य मुख्यमेव सामानाधिकरण्यं, नैवं सोमवाक्ये संभवति; सोमादिपदानां रूढत्वादित्युच्येत, तदा विशिष्टशक्तिकल्पनागौरवापादकनामधेयत्वाङ्गीकारापेक्षया यौगिकत्वेनैव नामधेयत्वं युक्तमाश्रयितुम्, उद्भित्संज्ञकोऽयमिति व्यवहारस्य तावताप्युपपत्तेरतिप्रसङ्गपरिहारस्य पूर्वोक्तविधयैवोपपत्तेः रूढ्यङ्गीकारे प्रयोजनाभावात् इति ॥

( रूढ्यैवोद्भिदा यजेतेतिसामानाधिकरण्यमिति भाट्टालङ्कारमततत्खण्डने )

**यत्तु**—भाट्टालङ्कारकृता साधुत्वनिर्वाहाय स्वीक्रियमाणस्य योगस्य वाक्यान्तरे स्वानुरूपप्रतीतिजनकत्वेऽपीह रूढ्यैव यागीयविशेषरूपं प्रतिपादयत्युद्भिच्छब्दः, एतद्विधेः प्राक् फलोद्भेदनकारित्वस्यानवगमेन फलोद्भेदनकारित्वप्रकारकबोधस्यासंभवात् । **नच**—वैदिकं कर्म तत्फलसाधनमिति व्याप्तिबलादवगतं सामान्यतः फलोद्भेदनकारित्वं निमित्तीकृत्योद्भित्पदप्रवृत्तिरिति—**वाच्यम्**; वेदविहितत्वात्मकवैदिकत्वस्येतः प्रागसिद्धेः । **नच** फलसामान्यसंबन्धोऽप्युद्भिद्वाक्यजप्रथमबोधाल्लभ्य इति—**युक्तम्**; उद्भित्पदपशुकामपदे अनपेक्ष्य यजेतेत्यस्याप्रमाणत्वात् । अतोऽत्र न योगेनोद्भित्पदस्य यजिसामानाधिकरण्यम्; अपितु रूढ्यैव—**इत्युक्तम्** । **तदपि** न; योगे स्वीक्रियमाणे क्लृप्तावयवशक्त्यैव तदुपपत्तौ रूढिकल्पने मानाभावात्, इतरथा प्रोक्षणादिशब्दानामपि रूढिकल्पनापत्तेः मत्वर्थलक्षणाभियातिरिक्तरूढिकल्पने सोमादिपदानामपि रूढिकल्पनया नामधेयत्वापत्तेश्च । **उक्तं च—द्वितीयाद्याधिकरणे गुरुमतखण्डने शास्त्रदीपिकायाम्**—

वरं च मत्वर्थलक्षणाऽप्रसिद्धार्थकल्पनात्, इतरथा "सोमेन यजेते"त्यत्रापि "सोमपदं नाम स्यादि"ति । अत एव न यत्र योगार्थस्यापि प्रतीतिरनुभवसिद्धा, यथा गोदध्यादिशब्देषु न गमनादेः किंतु गोत्वादिजातेरेव तत्र योगस्य साधुत्वान्वाख्यानमात्रार्थत्वस्वीकारेण रूढिस्वीकारेऽपि यत्र तस्या अपि संभवस्तत्र तदर्थत्यागेनातिरिक्तरूढिकल्पनं निष्प्रमाणकमेव ॥

( भाविनं फलोद्भेदनकारित्वज्ञानमादायोद्भिच्छब्दस्य प्रवृत्तिनिरूपणपूर्वकं फलोद्भेदकारित्वप्रकारकबोधजनकत्वेनैव नाम्नः धात्वर्थपरिच्छेदकत्वोपसंहारः )

नच—इतः प्राक् फलोद्भेदनकारित्वबोधासंभवः ; अग्निहोत्रं जुहोतीत्येतस्मात्प्राक्कर्मस्वरूपस्यैवाज्ञाने संप्रति यज्ञाङ्गभावस्य मन्त्रवर्णस्य प्राप्त्यभावेऽग्निदैवत्यत्वाज्ञानेऽग्निहोत्रपदादपि तद्बोधासंभवस्य तुल्यत्वात् । अतश्च भाविनं प्रवृत्तिनिमित्तमादाय यथाग्निहोत्रपदस्य नामत्वमेवमिहाप्युपपद्यत एवैतत् । **अथवा**—कर्मसामान्यस्यैव लोके फलजनकत्वक्लृप्तेः तत्सामान्यगृहीतव्याप्त्याऽपि अवगतफलोद्भेदनकारित्वबोधोऽपि नासुलभः । अतो यागावगतफलोद्भेदनकारित्वप्रकारकबोधजनकत्वेनैव नामधेयार्थस्य धात्वर्थतावच्छेदकत्वमिति प्रागुक्तमेव युक्तमिति—**संक्षेपः** ॥ अधिकरणप्रयोजनं नामधेयप्रयोजनकथनेनैव सूचितम् ॥ **इति द्वितीयं उद्भिदादियौगिकशब्दयागनामधेयताधिकरणम्** ॥

---

( अथ चित्रादिशब्दयागनामधेयताधिकरणम् )

पूर्वाधिकरणविषयव्यावृत्तविषयमुदाहरति—**अत्रेति** । **गुणएवेति** ॥

( उद्भित्तत्प्रख्यतद्व्यपदेशविषयव्यावृत्तैतदधिकरणविषयविवेकः )

गुणपदे जातिक्रियायोगयोरप्युपलक्षणे । तेन घृतजातिवचनाज्यपदस्य शरीरावयववाचकपृष्ठपदस्य पवनक्रियायोगनिमित्तबहिष्पवमानादिशब्दानामपि संग्रहः । एवकारेण कर्मण्यपि संभवद्वृत्तिकानां यौगिकानामनुदाहरणत्वसूचनेन पूर्वाधिकरणाप्रवृत्तिरुक्ता । यद्यपि पवमानशब्दः पवनक्रियाकर्तरि यौगिक इति पूर्वाधिकरणविषयत्वान्नेहोदाहर्तुं युक्तः; तथापि "सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते" इति न्यायेन पवनक्रियाकर्तरि द्रव्य एव योगेन रूढत्वात् स्तोत्रे च पवनक्रियाकर्तृत्वासंभवात् उद्भिच्छब्दवदुभयत्र तुल्यवद्वृत्तित्वाभावेन नामत्वानुपपत्तेर्न पूर्वाधिकरणविषयत्वमित्युदाहरणत्वोपपत्तिः । यद्यपि तत्प्रख्यतद्व्यपदेशन्याययोरपि जात्यादिवचनानामेवोदाहरणत्वम्; तथापि यत्र तन्न्याययोरप्रवृत्तिस्तेषामिहोदाहरणत्वे कल्प्यमाने दधिसोमादिपदानामपि तन्न्यायाविषयाणां

"त्रिवृद्बहिष्पवमानः" इत्यादौ चित्राऽऽज्यपृष्ठबहिष्पवमानशब्दानां गुणविधित्वं कर्मनामत्वं वेति चिन्तायां, दध्यादिवद् रूढेषु कर्मनामत्वासंभवाद् गुणविधित्वमेवैषाम् । तत्र चित्रापदे तावत्प्रातिपदिकेन चित्रत्वं स्त्रीप्रत्ययेन च स्त्रीत्वं विधीयते । विधेययोश्च परस्परसाहित्यावगतेर्विधेयसामर्थ्यानुरोधेन प्राणिद्रव्यकयागस्योद्देश्यत्वावगतेः प्रकृतानामपि "दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्य"मित्येतद्वाक्यविहितानां यागानामुद्देश्यत्वासंभवेऽपि सर्वप्रकृतिभूताग्नीषोमीययागोद्देशेन सर्वपशुयागोद्देशेन वा विधीयते । नचानेकगुणविधाने वाक्यभेदः;

उदाहरणतापत्तिस्तद्वारणाय यस्मिन्वाक्ये जातिगुणवाचकशब्दानामुपादाने सति प्रसक्तवाक्यभेदपरिहारो नामत्वेन विना न संभवति तेषामिहोदाहरणत्वम् इत्यपि ज्ञेयम् । अत एव "दध्नेन्द्रियकामस्ये"ति वाक्ये वाक्यभेदसंभावनायामपि तस्य विनैव नामतया परिहर्तुं शक्यत्वान्नोदाहरणत्वम् । तथाच तत्प्रख्यतद्व्यपदेशन्यायाविषयाणां जात्यादावेव निरूढानां नामतामात्रकृतप्रसक्तवाक्यभेदपरिहारवद्वाक्यगतानां शब्दानामिहोदाहरणत्वम् इति भावः । तानेव शब्दान् वाक्यगतत्वेन दर्शयति—**चित्रयेति** ॥

**(आज्यैः स्तुवते इत्याद्युत्पत्तिवाक्यगताज्यादिपदपरित्यागेन गुणवाक्यगतस्योदाहरणत्वेन निर्देशे निमित्तनिरूपणम्)**

यद्यपि "आज्यैः स्तुवते" "पृष्ठैः स्तुवते" इत्याद्युत्पत्तिवाक्यगतानामप्येषां शब्दानां विचारविषयत्वं संभवति । स्तोत्रादिसमानाधिकरणतृतीयान्तपदाभिधेयत्वेन नामताकोटेः तत्र संभवोऽधिकोऽप्यस्ति; तथापि तेषामनुदाहरणत्वं स्वयमेवाशङ्कानिरासव्याजेनादूर एव दर्शयिष्यतेऽतस्तान्युपेक्ष्य "यस्मिन् गुणोपदेश" इति सूत्रावयवानुरोधेन गुणवाक्यगतानामेवोदाहरणत्वं दर्शितम् ॥

**( उद्भिदधिकरणेन चित्राधिकरणस्य प्रत्युदाहरणसंगतिः )**

क्वचिदप्यप्रसिद्धतया सन्दिग्धार्थानां पदानां सामानाधिकरण्यान्नामतानिर्णय इत्येवंरूपपूर्वाधिकरणन्यायात्ययेन पूर्वपक्षिप्रत्यवस्थानात्प्रत्युदाहरणरूपामनन्तरसंगतिं स्पष्टत्वादनुक्त्वा पूर्वपक्षमाह—**दध्यादिवदिति** ॥

**( चित्रादिपदार्थनिर्णयः )**

चित्राशब्दो रूपत्वव्याप्यावान्तरजातिरूपचित्रत्वगुणत्वावच्छिन्ने गुणे रूढः । आज्यशब्दो घृतजातौ । पृष्ठशब्दः शरीरावयवजातौ । पवमानशब्दः पूर्वोक्तरीत्या द्रव्ये रूढ इत्यर्थः॥

**( चित्रत्वस्त्रीत्वोभयविधिसामर्थ्येन प्राणिद्रव्यकयागोद्देश्यत्वावगतिनिरूपणम् )**

**विधेयसामर्थ्यानुरोधेनेति** ॥ यथैव "यस्योभावग्नी अभिनिम्रोचेतां पुनराधेयमस्य प्रायश्चित्ति"रिति वाक्ये हविरार्त्यधिकरणन्यायेन निमित्तविशेषणस्योभयत्वस्याविवक्षयान्यतराभ्यनुगमनेऽपि प्रायश्चित्तप्राप्तावपि विधीयमानस्याधानास्याग्निद्वयोत्पादकत्वसामर्थ्यादेवोभयाभ्यनुगमनस्यैव निमित्तत्वान्नान्यतराभ्यनुगमने तत्प्राप्तिरिति षष्ठे सिद्धान्तयिष्यते, तेन न्यायेन विधेययोः चित्रत्वस्त्रीत्वयोरारुण्यादिवत् द्रव्यवृत्तित्वप्रतीत्या विधेयस्य चित्रत्वस्त्रीत्वावच्छिन्नकरणत्वस्याप्राणिनि मुख्यतया निवेशायोगाद्विधेयसामर्थ्यानुरोधेन प्राणिद्रव्यकस्यैवेहापि उद्देश्यत्वावगतेस्तदुद्देशेनैव चित्रत्वस्त्रीत्वविशिष्टकरणत्वविधानम् । **अतएव**—प्रकृते दध्यादियागे चित्रत्वविधाने **आनर्थक्यतदङ्गन्यायेन** दध्यादिद्रव्येषु अवताराद्विचित्रवर्णैर्दध्यादिभिर्योग इति प्रकृतयागे तद्विधानमित्यपि—**निरस्तम्**; पशुकामपदान्वयानुपपत्तेश्च ॥

**( दधिमध्वादिवाक्ये एकयागत्वपक्षनिरासः )**

**यागानामिति** ॥ बहुवचनेनाष्टमाद्यपादाधिकरणवार्तिककारस्येन सङ्ख्याधिकरणे यो न्यायसुधाकृतैकयागपक्ष उक्तः, स निराकृतः । तस्योपपादनपूर्वकं निराकरणं च कौस्तुभे द्रष्टव्यम् । अतो द्वादशाधिकरणवार्तिकोक्तोऽनेकयोगपक्ष एव श्रेयानिति सूचितम् । एवंच "प्रकरणं च बाध्येत प्राजापत्ययागस्ये"त्येतत्सिद्धान्तवार्तिकगतं "प्रकृतो यागः फलतया विधीयत" इति शास्त्रदीपिकागतं चैकवचनं यागत्वसामान्याभिप्रायेण व्याख्येयमिति भावः ॥

**( अग्नीषोमीयपशौ पुंस्त्वकृष्णसारङ्गायनवरोधनिरूपणपूर्वकं तत्र चित्रत्वस्त्रीत्वयोर्निवेशोपपादनं प्राचामनुरोधेन )**

यद्यपि प्राणिद्रव्यकयागस्योद्देश्यत्वम्, तथापि कथं न प्रकृतिविकृतिसाधारण्येन प्राणिद्रव्यकयागमात्रे विधानमित्याशङ्कानिरासाय **सर्वप्रकृतिभूते**त्युक्तम् । सौत्यस्यैकादशिनीप्रकृतित्वेऽपि एकादशिनीनां च पशुगणप्रकृतित्वेऽप्यग्नीषोमीयस्य "दैक्षस्य चेतरेषु"इत्याष्टमिकन्यायात् सर्वप्राणियागप्रकृतित्वावगमेन तत्रैव "प्रकृतौ वाऽद्विरुक्तत्वा"दिति तार्तीयन्यायेन निवेशो न विकृत्यन्तरेष्वित्यर्थः । **नच**—प्राकरणिकपुंस्त्वकृष्णसारङ्गत्वादिगुणान्तरावरोधान्नानारभ्याधीतयोश्चित्रत्वस्त्रीत्वयोरग्नीषोमीये निवेशसंभव इति—**वाच्यम्**; उत्पत्तिवाक्यगतपशुपदे स्त्रियामपि पशुशब्दप्रयोगेण पुंस्त्वस्याविवक्षितत्वात् । "छागस्य वपाया"मिति मन्त्रे श्रुतस्यापि पुंस्त्वस्यानारभ्याधीतेनापि प्रत्यक्षविधिविहितेन स्त्रीत्वेनावरोधेन विधिकल्पनानुपपत्तेः छान्दसतया परिहर्तुं शक्यत्वात् । कृष्णसारङ्गादिविधेरपि चित्रत्वाश्रयतया पक्षप्राप्तकृष्णसारङ्गादिरूपनियमार्थतयाप्युपपन्नत्वेनाविरोधोपपत्तेश्च । अतो युक्त अग्नीषोमीये तयोर्निवेशः ॥

एवं तावत्प्राचां रीत्याऽग्नीषोमीयपशुयागमात्रे निवेश इति पूर्वपक्षमुपपाद्याधुना स्वातन्त्र्येण पक्षान्तरमाह—**सर्वपशुयागेति** ॥

धेनुर्दक्षिणेतिवदुभयविशिष्टैककारकविधानेनावाक्यभेदात् । एवमाज्यपदेन घृतं पृष्ठपदेन शरीरावयवः । स च सङ्ख्या-

प्राकृतत्र्यहकालत्वावरोधाद्विकृतिषु निवेशानापत्तेः ॥ अतो युक्तं विकृतावपि तद्विधानम् ॥

**( द्विरुक्तत्वाद्यभावनिरूपणपूर्वकं चित्रत्वस्त्रीत्वयोः सर्वपशुसंबन्धनिरूपणम् )**

**अयं भावः**—यथैवहि "आश्रावये"त्यादिसप्तदशाक्षराणां प्रजापतिसंज्ञाना'मेष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त'मितिविधिना साक्षाद्यज्ञमात्रोद्देशेन विधानेऽपि न प्रकृतावेव निवेशः; अतिदेशात् पूर्वमुपदेशप्रवृत्तावतिदेशकल्पनस्यैवाभावेन द्विरुक्तत्वाभावात् । अत एव पर्णतादौ जुहूद्देशेन विधाने सति तत्प्राप्त्यर्थमतिदेशापेक्षणात्ततः पूर्वं प्रवृत्त्यभावेन प्राप्तिकालवैषम्यात् द्विरुक्तत्वोपपत्तिरिति वैषम्यम् । तथैवेहापि साक्षाद्यागमात्रोद्देशेन चित्रत्वस्त्रीत्वयोर्विधाने द्विरुक्तत्वाभावात्प्रकृतिसाधारण्येन प्राणिद्रव्यकयागमात्रोद्देशेन नायुक्तं तद्विधानम् । अत एव सर्वपशुयागेषु पशोरुपदिष्टत्वात्मात्र पशुरूपद्वारसंवन्धार्थमप्यतिदेशापेक्षा ॥

**( चित्रत्वस्त्रीत्वयोर्वायव्यपश्वतिरिक्तविषयत्वस्य कौस्तुभोक्तरीतिखण्डनपूर्वकं निरूपणम् )**

एवं स्थिते यत्र "वायव्यश्श्वेत"मित्यादौ पशोरप्यतिदेशस्तत्र द्विरुक्तत्वप्रसङ्गात्तत्साधारण्येनैतद्विधानासंभवेऽपि यत्रा-"ग्नेयं सवनीयं पशुमुपाकरोती"त्यादौ द्रव्यदेवतासंबन्धव्यतिरेकेण यागस्यैवासिद्ध्या द्रव्योपदेशावश्यंभावः, तत्र प्राप्तिकालवैषम्याभावात्तादृशविकृतिसाधारण्येनैतद्विधानं नानुपपन्नमिति यत्पूज्यपादैः कौस्तुभे उक्तं, तद्वायव्यवाक्येऽपि द्रव्यदेवतासंबन्धव्यतिरेकेण यागासिद्धेस्तुल्यत्वेन तत्रापि श्वेतद्रव्यसामान्यसंबन्धेनैव यागस्य कल्पनानुरोधेन श्वेतस्यैव प्रथमतो द्रव्यत्वेनान्वयस्यावश्यवक्तव्यत्वाददतिदेशप्रवृत्तेः पूर्वमेवोपदेशेन चित्रत्वस्त्रीत्वयोस्तत्परिच्छेदकत्वेनान्वयोपपत्तेः किं तच्चित्रस्त्रीरूपं श्वेतं द्रव्यमिति विशेषाकाङ्क्षयैव पश्वतिदेशकल्पनात्समानमिति कथमिव युक्तमिति चिन्त्यम् । अतो वायव्यवाक्ये श्वेतमित्युत्पत्तिशिष्टश्वेतगुणपुंस्त्वानुरोधादेव चित्रत्वस्त्रीत्वयोर्निवेशो न संभवतीत्येव समाधेयम् ॥

**( विरोध्यनाक्रान्तसर्वविकृतिपशुयागेषु चित्रत्वस्त्रीत्वयोर्निवेशोपसंहारः )**

एवं चैतादृशविरोध्यन्तरं यस्यां विकृतौ तत्र निवेशासंभवेऽपि यस्यां न तत् तादृशसर्वपशुद्रव्यकयागमात्रोद्देशेन तद्विधानमिति द्वितीयपक्षनिष्कर्षः । **नच**—कृत्स्नोपकारातिदेशप्राप्तपांचदश्यावरोधेनानारभ्याधीतसाप्तदश्यस्य सर्वविकृतिषु निवेशासंभववदिहापि कृत्स्नोपकारकृष्णसारङ्गावरोधे कथं तयोर्निवेशः? इति—**वाच्यम्**; पूर्वोक्तरीत्या विरोधाभावात्, प्रकरणानधीतस्य शरादेः कृत्स्नोपकारातिदेशिकबाधकत्ववदनारभ्याधीतस्यापि **आनर्थक्यप्रतिहतन्यायेनातिदेशिकबाधकत्वोपपत्तेश्च** । अन्यथा य इष्ट्येतिवाक्यावगतस्य सद्यःकालत्वस्यापि

**( मेषीयागे चित्रत्वस्त्रीत्वविधिशङ्का तत्र सोमनाथीयपरिहारतत्खण्डनादिकम्, सर्वपशुयागेषु तद्विधानेऽपि वाक्यभेदाभावनिरूपणम् )**

**ननु**—यागानुवादेनोभयगुणविधाने विध्यावृत्तिलक्षणवाक्यभेदापत्तिः, अतो यत्र मेषीयागे स्त्रीत्वं प्राप्तं, तत्रैव चित्रत्वमात्रविधानेन तदप्रसक्तेस्तद्विकृतिमात्र एव निवेशापत्त्या नाग्नीषोमीये सर्वपशुयागे वा निवेशपूर्वपक्षो युक्तः । **यत्तु** अत्र स्त्रीत्वप्राप्त्या मेषीयागरूपविकृतौ तद्विधानम्, **अथवा** "अदित्यै त्रयो रोहितैता" इति वाक्यविहितविकृतौ चित्रत्वप्राप्त्या स्त्रीत्वस्य विधानमिति विनिगमनाविरहापादनं सोमनाथदीक्षितस्य, **तदयुक्तम्**; अदितियागे उत्पत्तिशिष्टपुंस्त्वावरोधे तन्निवेशासंभवस्यैव नियामकत्वात् । अतः कथमग्नीषोमीये सर्वपशुयागे वा चित्रत्वस्त्रीत्वविशिष्टकरणत्वस्यैकस्यैवैकपदोपात्तस्य विधाने विध्यावृत्तेरप्रसक्तेरवाक्यभेदः? यद्यपि कारकस्याप्युत्पत्तिवाक्यादेव प्राप्तत्वात्तद्विशिष्टविध्यसंभवे तदनुवादेनोभयविधाने वाक्यभेदतादवस्थ्यम्; तथापि तत्र द्रव्याश्रितायास्तस्याः प्राप्तत्वेऽपि चित्रत्वस्त्रीत्वनिष्ठकरणतयोरप्राप्तत्वेन विध्युपपत्तिः । द्रव्यगुणादीनां व्यापारभेदेन स्वरूपसंबन्धविशेषरूपाणां शक्तिरूपपदार्थान्तररूपाणां वा करणतानां भेदस्यावश्यकत्वात् । अत एव अनेकासामपि करणतानां एकया तृतीययोपादानेन युगपदुपस्थितेर्न वाक्यभेद इति भावः ॥

**( प्रकृतौ स्त्रीत्वमात्रविधानमितिसोमानाथमतखण्डनपूर्वकं प्राचीनमतव्यवस्थापनम् )**

**यत्तु** अत्र कृष्णसारङ्गत्वादिना प्रकृतौ चित्रत्वस्य प्राप्तत्वात् स्त्रीत्वमात्रविधानेनापि वाक्यभेदपरिहारसंभवोपपादनं सोमनाथस्य, **तत्** चित्रत्वविध्यभावे कृष्णसारङ्गत्वादिविधेरनपेक्षितापूर्वविधित्वापत्तेस्तदपेक्षयोक्तप्रकारेण वाक्यभेदपरिहारेण चित्रत्वस्यापि विधिमङ्गीकृत्य कृष्णसारङ्गविधेरपेक्षितनियमविधित्वस्वीकारस्यैव युक्तत्वेन ततश्चित्रत्वप्राप्त्युपपादनेन वाक्यभेदपरिहारसंभवकथनस्यायुक्तत्वादुपेक्ष्यम् । अतो विशिष्टकारकविध्यङ्गीकारेण प्राचामभिमत एव तत्परिहारो युक्तः ॥

**(प्राचीनमतेनापि फलसंबन्धस्यापि बोधनेन वाक्यभेदशङ्कापरिहारपूर्वकचित्रापदगुणपरत्वोपसंहारः )**

**नच**—एवं फलसंबन्धस्यापि यागे विधानाद्विरुद्धत्रिकद्वयापत्तिर्वाक्यभेदो वा दुष्परिहरः इति—**वाच्यम्**; पशुकामपदस्य साधनभूतपश्वर्जनकामनानुवादकतयाऽविधेयत्वेन त-

विशिष्टः प्रकरणा "दाज्यैः स्तुवते" "पृष्ठैः स्तुवते" इत्येतद्वाक्यविहितस्तोत्राङ्गतया यथाक्रमं विधीयते। एवं त्रिवृच्छब्दवाच्यं त्रिभिण्डिद्रव्यं पवनक्रियाविशिष्टं तथैव तद्वाक्येन विधीयते। सर्वत्र द्रव्याणां स्तोत्रसमीपदेशे अदृष्टार्थं स्थापनेनैव स्तोत्रोपकारकता, उत्पत्तिवाक्येषु तु आज्यादिपदं गुणवाक्यप्राप्तत्वादनुवादः, स्तोत्रमात्रं तु विधीयते इति प्राप्ते—

प्राप्तकर्मानुवादेन चित्रत्वस्त्रीत्वरूपानेकगुणविधाने वाक्यभेदात् करणत्वस्यापि पशुगतस्य प्राप्तत्वेनाविधेयतयो-

---

दप्रसक्तेः । अत्र च मेषीयागे वा प्रकृते धानायागे वा चित्रत्वविधानमिति प्रकारान्तरेण पूर्वपक्षकरणं कौस्तुभे द्रष्टव्यम् ॥ एवं चित्रापदस्य गुणविधिपरत्वमुपपाद्याज्यादिपदानां तत्परत्वमुपपादयति—**एवमिति** ॥

**( आज्यपृष्ठवाक्ययोः पूर्वपक्षानुगुणवाक्यार्थानुष्ठानयोर्निरूपणम् )**

**अयमर्थः**—आज्यपृष्ठवाक्ययोः "अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ती"त्यनुशासनेनाभ्यनुज्ञातस्यासिधातोः प्रथमपुरुषबहुवचनान्तस्याध्याहारात्तस्य चाप्राप्तत्वेन विधिकल्पनया पञ्चदशसङ्ख्याविशिष्टाज्यसत्ता प्रकरणात्स्तोत्राङ्गतया विधीयते। यद्यपि स्वव्यापारे विधिना पुरुषो नियुज्यत इति न्यायाद्विधिः पुरुषव्यापाररूपां भावनामाक्षिपति, तस्याश्च निरवच्छिन्नाया व्यापारत्वायोगादवच्छेदकार्थापेक्षायां सत्तायाः प्रयोज्यनिष्ठत्वेन पुरुषव्यापारत्वाभावादवच्छेदकत्वानुपपत्तिः; तथापि अवान्तरप्रकरणावगतस्तोत्राङ्गत्वबलेन प्रधानदेशस्थत्वावगतेः तस्य च समीपस्थापनसंपाद्यत्वेन स्थापनाख्यधात्वर्थस्यैव तदवच्छेदकत्वं कल्प्यते । अतश्चास्मिन् "अग्निमुपधाय स्तुवीते"तिवत् स्थापनसंपाद्यसत्ताद्वारेणाज्यादीनां स्तोत्रोपकारकता पृष्ठविधया न विरुध्यते; सांसिद्धिकद्रव्यत्वाच्चाज्यादीनां स्वरूपेण संख्यान्वयानुपपत्त्या तावत्सङ्ख्याकामत्रभेदस्याक्षेपात्पञ्चदशस्वमत्रेषु घृतानि स्तोत्रानुष्ठानकाले स्थापनीयानीत्यनुष्ठानम्। एवं पराङ्मुखसप्तदशप्राणिस्थापनेन पृष्ठस्तोत्रं संपाद्य स्तोतव्यमिति ॥

**( पञ्चदशाज्यविधाने स्तोमे डविधिविरोधोपपादनम् )**

नच "स्तोमे ड विधिः पञ्चदशाद्यर्थे"इत्यनुशासनशिष्टडप्रत्ययान्तपञ्चदशादिशब्दानां स्तोत्रीयर्क्सङ्ख्याकृतस्तुतिसङ्ख्यावाचित्वम्; ऋचोऽपि तत्र प्रवेशे प्रयोजनाभावेनाज्यादिगतत्वेनापि सङ्ख्याविधानोपपत्तेः । यदि तु पश्वेकत्वाधिकरणपूर्वपक्षन्यायेन सङ्ख्याविशिष्टद्रव्यविधाने सङ्ख्याया अविवक्षापत्तिराशङ्क्येत, तदा कौस्तुभोक्तरीत्या सङ्ख्याद्रव्योभयविशिष्टस्थापनभावनाया एव स्तोत्रोद्देशेन विधानमस्त्विति । **एवमिति** ॥

**( त्रिवृद्बहिष्पवमानशब्दयोः त्रैगुण्यवाय्वादिपरत्वखण्डनपूर्वकं पवनक्रियाविशिष्टद्रव्यवाचित्वव्यवस्थापनम् )**

अत्र प्रकाशकारैः पवमानशब्दो यौगिको विशेष्यापेक्षः सन् प्रकरणात् सोमेनैव विशेष्येण संबध्यते, त्रिवृच्छब्दस्तु तृचत्रयानुक्रमणात् स्तोत्रीयानवकवाचित्वेन त्रिवृच्चर्वैश्ववालाधिकरणे स्थापितोऽपि पवमानशब्दसामानाधिकरण्यादत्र स्तोत्रीयानवकवाचित्वत्यागेन त्रिवृद्रज्जुरित्यादौ त्रैगुण्येऽपि प्रयोगादवयवयोगेन त्रैगुण्यार्थकत्वस्याप्यवगतेरिह त्रैगुण्यपरः । त्रैगुण्यं च प्रकरणाद्दशमुष्टिपरिमाणसोमपरिमाणपेक्षयेति सदसो बहिः पवमानक्रियाविशिष्टत्रिगुणसङ्ख्यायुक्तसोमद्रव्यस्यैव पूर्ववद्विधानमित्युक्तं तन्निरसितुं **त्रिभिण्डिद्रव्यमित्युक्तम्** ।

**तस्यायमर्थः**—रूढ्या त्रिभिण्ड्यपरपर्यायलतावचनत्वसंभवे यौगिकार्थग्रहणे प्रमाणाभावः । अत एव यत्र रूढिबाधस्तत्रैवावयवार्थग्रहणम् । त्रिवृद्रज्जुरित्यादौ रज्जुसामानाधिकरण्यस्य यद्यपि योगेनैवोपपत्तेर्न रूढिकल्पनम्; तथापीह सापेक्षार्थग्रहणापेक्षया निरपेक्षार्थग्रहणमेवोक्तम्। पवमानशब्दस्य विशेष्यापेक्षायां स्ववाक्योपात्तविशेष्यलाभे संभवति प्राकरणिकविशेष्यकल्पनमयुक्तं च । **एतेन**—त्रिवृच्छब्दपवमानशब्दयोः त्रैगुण्यवायुपरत्वमङ्गीकृत्य व्यजनादिना सदसो बहिर्वायुः कार्य इति पूर्वपक्षेऽनुष्ठानमिति सोमनाथोपन्यस्तं मतान्तरमपि **निरस्तम्**; अतो न्यायसुधाकृदुक्तरीत्या त्रिभिण्डिद्रव्यमेव पवनक्रियाविशिष्टं विधीयत इत्येव युक्तमिति ॥ पूर्वपक्षेऽपि लाघवं दर्शयति—**स्तोत्रमात्रंत्विति** ॥

**( आज्यैः स्तुवते इत्यादौ आज्यादिपदसार्थक्यादिना पूर्वपक्षोपसंहारः )**

आज्यपदं तु एकस्तोत्रसंबन्धित्वेनाज्यमन्त्रयोः परस्परसंबन्धावगमात् स्वसंबन्धितया लक्षितमन्त्रगतकरणस्यानुवादमात्रमिति भावः । यद्यपि संख्यायुक्तवाक्ये विशिष्टविधिकृतगौरवमधिकमस्ति; तथापि रूढ्यनुरोधेन सोमादिवाक्ये लक्षणापादकविशिष्टविधेरप्यङ्गीकारे तदनापादकविशिष्टविधेरङ्गीकरणं नायुक्तमिति भावः ॥

**( अग्नीषोमीयादौ वाक्यभेदापत्त्या पुंस्त्वावरोधेन पुनः स्त्रीत्वविधानायोगाच्च चित्रत्वस्त्रीत्वविधानासंभवादिना सिद्धान्तोपपादनम् )**

यद्यपि तृतीयोपात्तं करणत्वमात्रं विधीयते इति शक्यते वक्तुम्; तथापि स्त्रीत्वस्य यद्व्यापारेण करणता तद्व्यापारेणैव पुंस्त्वस्य प्रकृतौ "अजोऽग्नीषोमीय" इत्यादिवचनावगतपुंस्त्वविधिबलादेव तत्करणत्वस्य प्राप्तत्वात् चित्रयेत्यत्रैकयैव तृतीयया करणत्वमनूद्य प्रत्ययांशेन स्त्रीत्वविधिः, प्रातिपदिकांशयुक्त्या च तया चित्रत्वविशिष्टकरणत्वविधिरिति विधेयानामेकाभिधानप्रतिपाद्यत्वाभावात् वाक्यभेदापत्तिरनिवार्यै-

भयविशिष्टकारकविध्ययोगात् "अजोऽग्नीषोमीय" इति वचनेन विहितप्राकरणिकपुंस्त्वावरोधेन स्त्रीत्वस्य विध्ययोगाच्च न गुणविधिः। अतः प्रकृतानामेव यागानां विचित्रद्रव्यकत्वेन लक्षणया चित्रापदं नामधेयम्। इष्टयभिप्रायेण च स्त्रीप्रत्ययः। एवमाज्यादिपदेष्वपि असमस्तत्वेन विशिष्टस्याव्युत्पन्नत्वात् प्राप्तस्तोत्रानुवादेन द्रव्यसङ्ख्याद्यनेककगुणविधौ वाक्यभेदः। न च—उत्पत्तिवाक्य एव द्रव्यविशिष्टस्तोत्रविधिरितरत्र तु सङ्ख्यामात्रविधिरस्त्विति—वाच्यम्; घृतादीनां स्तोत्रे करणत्वासंभवेन विशिष्टविध्ययोगात्, पञ्चदशानीत्यादिस्तुतिगतऋक्सङ्ख्यारूपस्तोमवाचि-डप्रत्ययस्य गुणविधित्वेऽनुपपत्तेश्च। अत आज्यादिपदं वाक्यद्वयेऽपि शक्त्यैव स्तोत्रनामधेयम्। आज्यादिपदाभिधेयस्तोत्रानु-

वेत्यभिप्रायेण पूर्वपक्षे वाक्यभेदमापाद्य सिद्धान्तमाह—**प्राप्तेति**॥ अस्तुवा कथंचित् करणभेदः; तथापि प्रकृतौ पुंस्त्वावरोधान्न स्त्रीत्वविधिसंभव इत्याह—**अग्नीषोमीय इतीति**॥ पूर्वपक्ष्युपपादितपुंस्त्वप्रापकप्रमाणाभावनिरासार्थं "अजोऽग्नीषोमीय" इति शाखान्तरीयवाक्योपन्यासः कृतः। एतच्च पशुकामपदानुपपत्तिप्रकृतदध्यादियागप्रकरणबाधापत्योरप्युपलक्षणम्। **अतएव**—मेषीयागधानायागयोरपि तद्विधानं—**निरस्तम्**। चित्रावाक्ये नामधेयत्वमुपसंहरति—**अत इति**॥

**(चित्रापदे निरूढलक्षणया नामधेयपरत्वोपपादनम्)**

नामधेयत्वपक्षे स्वतन्त्ररूढिकल्पनापत्तिं निरस्यति—**विचित्रद्रव्यकत्वेनेति**॥ नास्माभिश्चित्राशब्दे रूढिरङ्गीक्रियते; किन्तु चित्रद्रव्यकत्वसंबन्धेन वैदिकप्रचुरप्रयोगात् दर्शनादिपदेष्विव निरूढलक्षणेति। अत्र च न बहुद्रव्यतयैव चित्रद्रव्यकत्वं विवक्षितम्, किंतु द्विद्रव्यतयापि। **अत एव**—तैत्तिरीयशाखायां "चित्रया यजेत पशुकाम इयं वै चित्रे"त्युपक्रम्य आम्नातानां पुरोडाशचरुद्रव्यकाणां आग्नेयत्वाष्ट्रादिसप्तयागानां चरुपुरोडाशद्रव्यतामात्रेणैव चित्रापदनामकत्वसिद्धिः। द्रव्यद्वयेनापि संप्रतिपन्नदेवताकत्वाभावेन पृथग्यागानामनुष्ठानेऽपि चित्रद्रव्यकत्वोपपत्तेः इति भावः॥ **स्त्रीप्रत्यय इति**॥ एकवचनात्तस्यापि राजसूयपदस्येव समुदायाभिप्रायेणोपपत्तेरप्येतदुपलक्षणम्॥

**(पञ्चदशान्याज्यानीत्यत्र विशिष्टस्याव्युत्पन्नत्वेन वाक्यभेदापत्त्या, आज्यैः स्तुवते इत्यत्रापि आज्यानां स्तुत्यनन्वयित्वेन विशिष्टविध्यसंभवेन चाज्यपदनामधेयत्वव्यवस्थापनम्)**

सर्वेषां कारकाणां भावनायामेवान्वयनियमस्य समासे एकार्थीभावलक्षणसामर्थ्यापेक्षितत्वनियमानुरोधेन त्यागेन परस्परान्वयस्वीकारेऽपि तदभावे परस्परान्वयस्याव्युत्पन्नत्वेन वैशिष्ट्यायोगाद्विशिष्टविधानानुपपत्तेर्वाक्यभेदापत्तिमाज्यादिवाक्येष्वपि दर्शयति—**एवमिति**॥ अवाक्यभेदमाशङ्क्य निराकरोति—**नचेति**॥ **घृतादीनामिति**॥ **अयमर्थः**—शब्दैकसाध्यगुणिनिष्ठगुणाभिधानरूपस्तुतिं प्रति न घृतादीनां करणत्वं संभवति। अत एव "सोमेन यजेते"ति वन्मत्वर्थलक्षणयापि नाज्यानां स्तोत्रसंबन्धः। नचाज्यानामपि सन्निधिस्थापनमात्रेण स्मारकत्वाद्रथघोषादिवत्करणत्वोपपत्तिः; आह्वादानाख्योपाकरणे नेत्रकरादिव्यापारस्यापि लोके करणत्वदर्शनात् रथघोषस्य करणत्वसंभवेऽपि स्तुतावन्यत्राक्लृप्तस्य करणस्य कल्पनेऽदृष्टार्थत्वापत्तेः। नचाज्यपदेन लक्षितघृतसंबन्धिमन्त्राणां तत्करणत्वोपपत्तिः; मन्त्रेषु स्थापनाख्यघृतसंबन्धस्य प्रमाणान्तरेणाप्राप्तेः। प्रकाशकत्वेन च तत्संबन्धस्य प्राप्त्या तेषां विधाने प्राकरणिकमन्त्रबाधापत्तेरिति। घृतसंबन्धिमन्त्राणां करणत्वे दूषणान्तरमप्याह—**पञ्चदशानीति**॥ याज्ञिकानां प्रचुरप्रयोगात् स्तोत्रीयऋग्गतसङ्ख्यावाचित्वेनैवावगतस्य स्तोमशब्दस्य स्तोत्रसाधनमात्रवृत्तिसङ्ख्यापरत्वकल्पने प्रमाणाभाव इत्यर्थः॥

**(स्तोत्रभावनानुवादेन सङ्ख्याद्रव्यविशिष्टभावनाविधानशङ्कातत्परिहारपूर्वकाज्यवाक्यसिद्धान्तोपसंहारः)**

यद्यपि स्तोत्रभावनानुवादेऽपि प्रयाजादिभावनान्तरस्येवेह सङ्ख्याद्रव्यविशिष्टभावनान्तरविधानेऽपि शक्यते वाक्यभेदः परिहर्तुम्, पश्चाच्च द्रव्यसङ्ख्ययोररुणैकहायन्योरिव परस्परापेक्षया परिच्छेद्यपरिच्छेदकभावकल्पनान्न दोषः, तथापि भावनाया अवच्छेदकधात्वर्थं विना विधातुमशक्तेः सत्तायाश्च प्रयोज्यनिष्ठत्वेन प्रयोजकव्यापाररूपभावनावच्छेदकत्वासंभवात् पृथक्करणस्य सङ्ख्यासंपादकत्वेनाज्यविषयकव्यापारत्वायोगात् स्थापनस्य प्रकरणावगताङ्गभावोत्तरकल्प्यस्य व्यापारविशेषग्राहिकथंभावाकाङ्क्षालक्षणप्रकरणेन ग्रहणस्य निर्व्यापारेऽसंभवेनाङ्गत्वस्यैवानवगतेरन्योन्याश्रयग्रस्तत्वादयुक्तमवच्छेदकत्वकल्पनमिति वाक्यभेदापत्तेः सर्वथाऽपरिहारं मत्वा सिद्धान्तमुपसंहरति—**अत इति**॥

**(शक्यसंबन्धाभावादाज्यपदे शक्तेः अन्यत्र पवमानादिपदे तत्संभवाल्लक्षणायाश्च भाष्यवार्तिकाविरोधनिरूपणपूर्वकोपपादनम्)**

यतः पञ्चदशादिवाक्ये न विशिष्टविधिसंभवोऽत आज्याद्यनुवादेन व्यक्तं सङ्ख्याविधिः। स च आज्यानां प्राप्तौ संभवति। सा च प्राप्तिरुत्पत्तिवाक्ये आज्यपदस्य वाक्यभेदभिया रूढिपरित्यागेन नामधेयत्वे उपपद्यते। अतो वाक्यद्वये नामधेयमाज्यादिपदमित्यर्थः। **शक्त्यैवेति**॥ आज्यादिपदेषु

वादेन च गुणवाक्ये सर्वत्र सङ्ख्यामात्रविधिः । आज्योत्पत्तिवाक्ये च तत्संज्ञकानि चत्वारि स्तोत्राणि; 'गमकसहकृत-

शक्यसंवन्धाभावेन लक्षणाया असंभवात् स्तोत्रसामानाधिकरण्यानुपपत्त्या वाक्यभेदापत्तिभिया अतिरिक्तरूढिकल्पनमपि न दोष इत्यर्थः । अत एव यत्र वहिष्पवमानशब्दे अन्येषां स्तोत्राणां सदोमण्डपमध्ये औदुम्वरीसंनिधावनुष्ठानेऽपि वहिष्पवमाने सदसो वहिर्भावस्यास्तावरूपदेशविधानेनैव प्राप्तेः पवनक्रियाश्रयसोमप्रकाशकमन्त्रकत्वसंवन्धेन **अथवा**—पवमानपदघटितमन्त्रसमुदायजत्वसंवन्धेन निरूढलक्षणासंभवस्तत्र नैवातिरिक्तरूढिकल्पनम् । यद्यपि भाष्यवार्तिकादौ "प्रजापतिर्देवेभ्य आत्मानं यज्ञं कृत्वा प्रायच्छत्ते देवा अन्योन्यस्मा आग्रायणातिष्ठन्त तानब्रवीदाजिमस्मिन्नितेति ते आजिमायन्नि"त्युपक्रमकेन यदाजिमीयुस्तदाज्यानामाज्यत्वमित्युपसंहारपरेण चार्थवादेन यज्ञमुद्दिश्य भोगार्थं स्पर्धमानेषु देवेषु सत्सु यस्मादस्मिन् यज्ञे आर्जि मर्यादामित गच्छतेति प्रजापतिनोक्ते ते देवा एतानि स्तोत्राणि काष्ठां मर्यादां कृत्वा आगतास्तस्मादेतानि आज्यर्हत्वादाज्यानीत्यर्थकत्वेन अवयवार्थप्रसिद्धिः प्रदर्शिता; तथापि उद्भिदपदान्वाख्यानार्थवादवदेवास्यापि स्वार्थपरत्वाभावेन तादृशयोगसत्त्वे प्रमाणाभावात् "गमेर्डो"रितिवत्साधुत्वान्वाख्यानमात्रार्था सती रूढेस्त्यागे आकस्मिकत्वनिरासायैव सेति द्रष्टव्यम् ॥

**( आज्यैरिति वहुवचनेन गमकसहकृतेन चतुर्णां ग्रहणनिरूपणम् )**

उत्पत्तिवाक्ये च वहुवचनश्रवणात्सङ्ख्यया कर्मभेदमङ्गीकृत्याह—**आज्योत्पत्तीति** ॥ कपिञ्जलाधिकरणन्यायेन त्रयाणां विधानापत्तिं तदुत्तरोत्तराधिकरणन्यायेन परिहरति—**गमकेति** ॥ यथैवोत्तरा दोहयतीत्यत्र वहुवचनस्य त्रित्वे पर्यवसाने प्राप्ते "नास्यैतां रात्रिं कुमारा अपि लभन्ते"इत्यर्थवादरूपगमकवलात्रित्वाधिकसङ्ख्यापरत्वं वक्ष्यते, एवमिहापि "अग्न आ याहि वीतये" "आ नो मित्रावरुणा" "आ याहि सुषुमा हि तम्" "इन्द्राग्नी आगतं सुतं" इत्युत्तरग्रन्थे वहिष्पवमानसामत्रयादूर्ध्वं गायत्रसाम्ना गीयमानानां चतुर्णां तृचानामाम्नानरूपगमकसत्त्वात् त्रित्वाधिकचतुस्सङ्ख्यापरत्वाद्वहुवचनस्य चतुष्ट्वपरत्वावगमात्तेषु चतुर्षु पञ्चदशत्वसङ्ख्याविधिरित्यर्थः । एवंच आज्यपदमुत्पत्तिवाक्यगतं चतुर्णां स्तोत्राणां नामधेयम् । "पञ्चदशान्याज्यानि" "पञ्चदशं होतुराज्यं सप्तदशं मैत्रावरुणस्यैकविंशं व्राह्मणाच्छंसिनः पञ्चदशमच्छावाकस्ये"ति प्रकृतौ विकृतौ चतुर्ष्वपि प्रयोगाच्च ॥

**( चतुर्णां स्तोत्राणां पञ्चदशत्वसंपादनप्रकारः )**

अत्र "पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया पञ्चभ्यो हिंकरोति स एकया स एकया स तिसृभिः" इति विष्टुतिव्राह्मणे पञ्चदशसङ्ख्यासंपादकगानप्रकाराख्यविष्टुत्याम्नानान्नेयं सङ्ख्या वहिष्पवमाने त्रिवृत्सङ्ख्येव पृथक्त्वनिवेशिन्यपित्वभ्याससंपाद्यैवेति द्रष्टव्यम् ॥

**( पवमाननामधेयत्वं तत्र त्रिवृत्सङ्ख्यायाः पृथक्निवेशश्च )**

एवं वहिष्पवमानशब्दस्यापि पूर्वोक्तरीत्या स्तोत्रनामत्वात् तदुद्देशेन विधीयमानत्रिवृत्सङ्ख्या तु सामगानां उत्तरग्रन्थे "उपास्मै गायता नरः" "दविद्युतत्यारुचा" "पवमानस्य केतवे" इति तृचत्रयाम्नानात् पृथक्त्वनिवेशिन्येवेति वोध्यम् ॥

**( पृष्ठशब्दनामधेयत्वम् तत्षट्त्वं च तत्सप्तदशत्वसंपादनप्रकारश्च )**

एवमाज्यपदस्येव पृष्ठस्यापि गुणत्वे वाक्यभेदापत्त्योत्पत्तिवाक्ये रूढ्या नामधेयत्वात् "पृष्ठैः स्तुवते"इत्ययमुत्पत्तिविधिः; उत्पत्तिविधित्वेन वार्तिककृता लेखनात् तद्विधिविधेयानि गमकसहकृतवहुवचनवलात् षट् पृष्ठानीत्याह—**एवमिति** ॥ अत्र "अभि त्वा शूर नोनुमः" "त्वामिद्धि हवामहे" "कया न श्चित्र आ भुवत्" "तं वो दस्म मृतीषहम्" "अभिप्रवः सुराधसं" "तरोभिर्वो विंदद्वसुः" इति षण्णां तृचानामुत्तराग्रन्थे आम्नानात्तेषु च क्रमेण रथन्तरवृहद्वामदेव्यनौधसश्यैतकालेयानां षण्णां समाख्यानात् षट्सु तेषु पृष्ठपदाभिधेयेषु सप्तदशानीति गुणवाक्ये सप्तदशसङ्ख्याविधिः । तत्रापि "पञ्चभ्यो हिंकरोति स तिसृभिस्स एकया स एकया पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया सप्तभ्यो हिंकरोति स एकया स तिसृभि"रिति विष्टुत्याम्नानात् अभ्याससंपाद्यत्वमेवेत्यर्थः ॥

**(पृष्ठपदस्य स्तोत्रविशेषेषु रूढावप्यर्थवादाविरोधः)**

यद्यपि अत्रापि "आपो वै ऋत्वियमार्च्छन् तासां वायुः पृष्ठे व्यवर्तत ततो वामं वसु सन्यभवत्तन्मित्रावरुणौ पर्यपश्यता"मित्यादिना पृष्ठशब्दान्वाख्यानार्थोऽर्थवादः समस्ति; तथाप्यग्रे आर्तवयुक्तानामपां पृष्ठे वायोर्विपरिवर्तनात्मकमैथुनाभिधानपूर्वकं वामदेव्योत्पत्तिं तत्पदनिर्वचनं चोक्त्वा तत्पृष्ठेषु न्यदधुरित्यनेन वामदेव्यस्य पृष्ठस्तोत्रेषु निवेशमभिधायैतस्या योनेः पृष्ठानि इत्यादिना पृष्ठस्तोत्रसाधनानां रथन्तरवृहद्वैरूपवैराजशाक्वररैवताख्यानां षण्णां साम्नामुत्पत्तिं वामदेव्यादुक्त्वापि "ता वै वामदेव्यं पुत्राः पृष्ठानी"त्युपसंहारात् रथन्तरादिसामसु पृष्ठशब्दान्वाख्यानार्थत्वेऽपि स्तोत्रनामत्वान्वाख्यानार्थत्वाभावात् न रूढिकल्पनायां विरोधः । अत एव रूढिसिद्धं चतुर्षु पृष्ठत्वं सिद्धवत्कृत्यैवार्थवादे पृष्ठेषु न्यदधुरित्यनेन पृष्ठपदानुवादः संगच्छते । एतेन पृष्ठाख्यरथन्तरादिषट्सामप्र-

बहुवचनेन तावत्त्वावगमात् । एवं पृष्ठोत्पत्तिवाक्येऽपि षट् । अनुष्ठेयानि तु नियतानि चत्वारि; आद्ययोर्द्वयोर्बृहद्रथन्तरयोरन्त्ययोश्च नौधसश्यैतयोर्वचनेन विकल्पविधानात् । यथाचात्र तत्तद्दूषणानां निरासो मतान्तरदूषणानि च,

---

कृतित्वात् वामदेव्यादिषु पृष्ठशब्दप्रसिद्धिरिति वार्तिकोक्तिः प्रौढिवादमात्रमेव । तत्प्रकृतित्वेन कथंचिद्वामदेव्ये पृष्ठशब्दप्रसिद्धिसंभवेऽप्यन्यत्र तत्प्रकृतित्वाभावे "पृष्ठेषु न्यदधुरि"ति पृष्ठपदप्रयोगस्य दुरुपपादत्वात्; अब्वायुमैथुनस्पर्शजन्यत्वस्य साक्षाद्वामदेव्य एव संभवेन तत्रैव पृष्ठत्वस्य मुख्यतयाऽङ्गीकर्तुमुचितत्वेन तज्जन्यतया रथन्तरादिष्वेव तत्पदप्रयोगस्य गौणतोपपत्तेश्च । अतएव अस्य द्वितीयस्थाने निवेशमात्राभिधायित्वेऽपि न वामदेव्ये पृष्ठशब्दप्रवृत्तिनिमित्तान्वाख्यानार्थतैवास्य स्पष्टं प्रतीयमाना युक्ता । तेन चाब्वायुमैथुनाख्यस्पर्शोत्पन्नजन्यत्वस्य प्रवृत्तिनिमित्ततप्रदर्शनेन स्पृशधातोरौणादिके थक्प्रत्यये कृते "तिथपृष्ठगूथयूथप्रोथा"इतिसूत्रेण सकारलोपे निपातिते व्रश्चादिसूत्रेणच शकारस्य षकारादेशे कृते ष्टुत्वात् पृष्ठशब्दस्य व्युत्पत्तिरुक्ता भवति । यद्यपिच पृष्ठशब्दस्थाने शक्तिकल्पनाभिया रथन्तरादिषु पृष्ठस्तोत्रसाधनत्वसंबन्धेन लक्षणैव; तथापि अन्वाख्यानवशात् निरूढलक्षणास्वीकारेण न वैयर्थ्यमन्वाख्यानस्य । तत्फलं च "पृष्ठैरुपतिष्ठते" इत्यत्र "उपान्मन्त्रकरणे"इति सूत्रविहितात्मनेपदावगतमन्त्रकरणत्वानुरोधेनाभिधानार्थत्वावगतिः । अभिधानं च प्रति मुख्यपृष्ठस्तोत्रकरणत्वानुपपत्त्या लक्षणया ऋचां करणत्वावगतावपि अगीतानां करणत्वव्यावृत्त्या रथन्तरादिसामविधिरेव । अतएव रथन्तरादिसाममात्रविधानेऽपि साम्नामक्षराभिव्यक्तिद्वारैव गुणाभिधानेऽपि करणत्वायोग्यतयैव तदाधारग्द्वारकत्वस्य प्राप्तिरपि न विरुद्धा; स्तोत्रीयसाम्न एव तृचानुकरणत्वानुरोधेन "यद्योन्या"मिति वचनेनोत्तरासु तद्विधानेऽपि इह स्तोत्रीयत्वाभावात् नोत्तराणां प्राप्तिः । अतः "सप्तदशानि पृष्ठानि" "पृष्ठैः स्तुवते" "एकविंशं होतुः" "पृष्ठं त्रिणवं मैत्रावरुणस्य" "सप्तदशं ब्राह्मणाच्छंसिनः" "पंचदशमच्छावाकस्ये"त्यादिप्रयोगस्याज्यवदेव प्रकृतौ दर्शनात् पृष्ठशब्दस्य माध्यन्दिनपवमानानन्तरभाविषु षट्सु स्तोत्रेषु वृथैव नामधेयत्वमिति सिद्धम् । यस्तु "बृहत्पृष्ठं भवति" "कण्व रथन्तरं पृष्ठं" इत्यादौ होतुः पृष्ठे विशिष्य पृष्ठशब्दप्रयोगो न वामदेव्यादिषु स धने द्रव्यशब्दप्रयोगवत् अर्जुने पार्थशब्दप्रयोगवच्च निरूढवशादेव ज्ञेय इति न बाधकम् ॥

## (पृष्ठैः स्तुवते इत्यत्र नियमेन चतुर्णामेव ग्रहणोपपादनम्)

**ननु** षट्पृष्ठानि चेत् कथं चतुर्णामेवानुष्ठानम् इति ? अत आह—**अनुष्ठेयानीति ॥ बृहद्रथन्तरयोरिति** ॥ बृहद्रथन्तरसामपृष्ठयो "र्बृहद्वा रथन्तरं वा पृष्ठं भवती"तिवचनेन विकल्पविधाने सति बृहत्पक्षे श्यैतं पृष्ठं रथन्तरपृष्ठपक्षे नैधसं पृष्ठमित्यन्तिमपृष्ठद्वयस्य व्यवस्थया विकल्पविधानान्नियतान्यनुष्ठेयानि चत्वारीत्यर्थः । यथाचात्र बृहद्रथन्तरयोः भेदादपूर्वभेदे सत्यपि रथन्तरबृहद्धर्माणां नावमिकसांकर्यपूर्वपक्षोत्थानं तथोपपादयिष्यते तत्रैव पूज्यपादैः ॥

## ( दूषणान्तराणि तन्निरासप्रकारश्च )

**ननु**—प्रकृतौ पृष्ठबहुत्वे कण्वरथन्तरादेः सर्वपृष्ठेषु कौत्सादिवन्निवेशापत्तिः । तथा "विश्वजित्सर्वपृष्ठ"इत्यत्र प्रकृतिप्राप्तपृष्ठबहुत्वेनैव सर्वपृष्ठपदानुवादोपपत्तिः । षाडहिकानां रथन्तरादिपृष्ठानां प्राप्तेः सप्तमे वक्ष्यमाणाया असिध्यापत्तिश्चेत्यत आह—**यथाचात्रेति** ॥ "कण्वरथन्तरं पृष्ठं भवती"त्यादिवैकृतविधौ "रथन्तरं पृष्ठं भवति बृहत् पृष्ठं भवती"ति प्रकृतरथन्तरबृहत्सामपदगतपृष्ठपदसामानाधिकरण्यतुल्यनिर्देशेनोक्तवैरूपसामेत्यादिवचनविहितानां वैरूपादिसाम्नां दाशमिकन्यायेन महेन्द्रस्तोत्रविषयत्वस्येवेहापि तद्विषयत्वोपपत्तेर्न सर्वपृष्ठेषु निवेशापत्तिः । **अतएव**—निरूढिवशात् प्रकृतौ कृतस्य पृष्ठपदप्रयोगस्येदमेव फलम् । एवंच कौत्सादेः तादृशतुल्यनिर्देशाभावात् न तत्रैव निवेशः । अपितु सर्वत्रैवेति नानुपपत्तिः । सर्वपृष्ठपदेनतु प्राकृतग्रहणे अनुवादापत्त्या वैयर्थ्यापत्तेर्विधेयपरतालाभाय षाडहिकानां ग्रहणमिति "षडहाद्वा तत्र चोदने"ति सूत्रव्याख्याने भाष्यकारेण सर्वपृष्ठपदस्य विधायकत्वलाभपुरस्कारेणैव दर्शितम् ॥

## ( पार्थसारथिमततद्दूषणानि )

**अतएव**—प्रकृतौ पृष्ठबहुत्वं नास्तीति तत्रत्यव्यवहारस्य चोदकाप्राप्तं पृष्ठबहुत्वं नास्तीत्यर्थतयोपपत्तेर्न कश्चिद्विरोध इति । एवंस्थिते एतद्दोषभिया पार्थसारथिना नैमपिकवार्तिकस्वारस्येन "बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवति" इति वाक्यद्वये मुख्यमपि बृहद्रथन्तरपदं स्वार्थसाधनलक्षणार्थमङ्गीकृत्य तद्विशिष्टस्तोत्रद्वयस्यैव माहेन्द्रसंज्ञकस्य विधानात् तत्रैव पृष्ठशब्दो मुख्यः, "पृष्ठैः स्तुवते" इत्यस्य कण्वमाहेन्द्रादीनां चतुर्णां स्तोत्राणां गौण्या वृत्त्या पृष्ठपदेन समुदायानुवादः । तत्प्रयोजनं "सप्तदशानि पृष्ठानी"त्यत्र पृष्ठपदेन सर्वेषां ग्रहणात् चतुर्षु तत्सङ्ख्यानिवेशः । उत्पत्तिवाक्ये स्तोत्रसामानाधिकरण्याभावेऽपि पृष्ठपदस्य स्तोत्रनामतासिद्धिश्च । अन्यथा उत्पत्तिवाक्ये सामसमभिव्याहृतस्यापि पृष्ठपदस्य गुणाभिधानार्थत्वसन्देहापत्तेरित्युक्तं, तदयुक्तम्; पृष्ठशब्दस्य सर्वत्र शक्त्या प्रयुज्यमानस्यान्यत्र गौणत्वकल्पने प्रमाणाभावात् । नच साप्तमिकवार्तिकाद्युक्तगौणत्वकल्पनेन विरोधः; तवापि "पृष्ठैः स्तुवते" इति वाक्यस्योत्पत्तिविधित्वप्रदर्शनपरतत्रत्यवार्तिकविरोधस्य तुल्यत्वात् । अतोऽन्यतरवार्तिकोक्तेः प्रौढवादमात्रत्वेऽवश्यकल्प्ये यत्रैव गौणतादिदोषप्रसङ्ग आपतति त-

तानि कौस्तुभे द्रष्टव्यानि ॥ ३ ॥ १९ ॥ इति तृतीयं | चित्रानामताधिकरणम् ।

( ४ अधिकरणम् । )

तत्प्रख्यं ॥ इह रूढानां यौगिकानां च संभवत्प्राप्तिका- | नाम "अग्निहोत्रं जुहोति" "आघारमाघारयति" "समिधो

स्यैव तत्कल्पनं युक्तम् । "बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवती"ति वाक्ययोः मुख्ये जघन्यताया मत्वर्थलक्षणाविशिष्टविधिगौरवापादिकाया अङ्गीकारे प्रयोजनाभावाच्च । अतो नेदं वाक्यं पृष्ठद्वयोत्पत्तिपरम्, अपितु माहेन्द्रस्तोत्रावान्तरप्रकरणान्माहेन्द्राख्यपृष्ठद्वयानुवादेन सामद्वयविधिपरम् । अतएव जघन्ये पृष्ठपद एव स्वार्थसाधनलक्षणयात्र सामानाधिकरण्यं ज्ञेयम् । तयोरेव माहेन्द्रसंज्ञकपृष्ठयोः बृहद्रथन्तरं वा पृष्ठं भवतीति वचनाद्विकल्प इत्येव युक्तम् ॥

( न्यायसुधाकारमतखण्डनम् )

**एतेन**—"पृष्ठैः स्तुवत" इत्येकस्यैव माहेन्द्राख्यपृष्ठस्तोत्रस्य विधायकं बृहत्पृष्ठं भवतीति वाक्यद्वयं पूर्ववदेवैकस्मिन् स्तोत्रे सामद्वयविधायकम् । तयोश्च सत्यप्येकपृष्ठार्थत्वे तत्तद्वक्प्रकाश्यावान्तरकार्यभेदाद्विकल्पापत्तौ "बृहद्वा रथन्तरं वा पृष्ठं भवती"ति वचनादेव विकल्पः । एवंच सामविधिवाक्य एव पृष्ठशब्दस्य माहेन्द्रस्तोत्रपरत्वात् उत्पत्तिवाक्यगतबहुवचनान्तः पृष्ठशब्दः लिङ्गसमवायात् "पुरोडाशानलंकुर्वि"त्यादौ पुरोडाशशब्द इव पृष्ठसमुदाये गौणः । बहुवचनस्य च प्रचयशिष्टसङ्ख्यानुवादत्वादविधेयत्वेन सङ्ख्यायाः समिधो यजतीतिवन्न भेदकत्वम् । अतः प्रमाणान्तरसिद्धस्तोत्रत्रयसहकृततद्वाक्यविहितमाहेन्द्रस्तोत्राभिप्रायं पृष्ठैरिति बहुवचनम् । "सप्तदशानि पृष्ठानी"त्यत्रापि गौणमुख्यसाधारण्येन पृष्ठमात्रे सङ्ख्याविधिरिति न्यायसुधाकृत्कल्पनमपि—**अपास्तम्**; गौणत्वे प्रमाणाभावात् । **किंच** सामविधिवाक्ये पृष्ठपदस्य माहेन्द्रस्तोत्रमात्रवाचित्वे सति पृष्ठैरिति बहुवचनस्यैव पाशाधिकरणन्यायेनैकत्वलक्षणयाप्युपपत्तौ पृष्ठपदे तत्र तत्र गौणत्वे प्रमाणाभावात्तस्यैव सप्तदशसङ्ख्यासंबन्धापत्तिः ॥

( पृष्ठद्वये एव शक्तिरिति विधिरसायनमतखण्डनम् )

**अपिच** सामविधिवाक्ये माहेन्द्रस्तोत्रे एव पृष्ठपदस्य शक्तिरिति निर्धारणे प्रमाणाभावः । तत्र क्रियाविशेषसामानाधिकरण्याभावेन स्तोत्रनामत्वस्यैवासिद्धौ माहेन्द्रवाचित्वस्य सुतरामनवगतेः । मम तु "पृष्ठैः स्तुवते" इति स्तोत्रसामानाधिकरण्येन सर्वस्तोत्रनामत्वेऽवान्तरप्रकरणान्माहेन्द्रविशेषप्रतीतिमात्रे न दोषः । **अपिच** स्तोत्रत्रयस्य प्रापकप्रमाणाभावे तत्प्रचयविशिष्टसङ्ख्यानुवादायोगात् सङ्ख्याविधेयत्वावश्यकत्वात् पृष्ठभेदो दुर्निवारः । अतोऽन्याक्षिप्तशक्तिकत्वात् "पृष्ठैः स्तुवते"इत्येवोत्पत्तिवाक्यं, तेन विधेयानि षट् स्तोत्राणि पृष्ठनामधेयानि नतु विधिरसायनोक्तरीत्या पृष्ठद्वयं, नवापि न्यायसुधोक्तदिशैकमेव पृष्ठमिति । स्वमतप्रसक्तदूषणनिरासपूर्वकमतान्तरदूषणानि कौस्तुभे द्रष्टव्यानीत्यर्थः ॥

( वाक्यभेदापत्त्या चित्रादिनामधेयत्वोपसंहारः )

अतः सिद्धं गुणवाक्ये वाक्यभेदापत्त्योत्पत्तिवाक्ये बहिष्पवमानाज्यपृष्ठपदानां नामधेयत्वम् । चित्रापदं तु फलवाक्ये एव वाक्यभेदापत्त्या प्राजापत्ययागानां नामधेयमिति । प्रयोजनं पूर्वोत्तरपक्षप्रतिपादनेन स्पष्टत्वान्नोक्तम् ॥ **इति तृतीयं चित्रादिपदनामधेयताधिकरणम् ॥**

---

( संगतिनिरूपणपूर्वकविषयविवेचनम् )

गुणविधिनिरासहेतोः मत्वर्थलक्षणावाक्यभेदापत्तिरूपस्य पूर्वाधिकरणद्वयप्रतिपादितस्यात्राभावात् पूर्वपक्षोत्थानेन प्रत्युदाहरणरूपां अनन्तरसंगतिं स्पष्टत्वादनुक्त्वा विचारविषयीभूतानां शब्दविशेषाणामुदाहरणत्वं दर्शयति—**इहेति** ॥

( यौगिकानां तत्प्रख्योदाहारणत्वपरवार्तिकोपपत्तिनिरूपणपूर्वकामावास्यादिपदविषयत्वनिरूपणम् )

अत्र च यौगिकानामेव मत्वर्थलक्षणापरिहारेणात्र चिन्ता, उत्तराधिकरणे तु सांविज्ञायिकानाम्; वाक्यभेदासंभवादि"ति वार्तिकग्रन्थादिह यौगिकानामेवोदाहरणत्वभ्रमं व्यावर्तयितुं **रूढाना**मित्युक्तम् । अत एव विद्वद्वाक्यादिगतपौर्णमास्यमावास्यासमिदादिशब्दानामप्युदाहरणत्वं सूचितम् । न हि तेषां मत्वर्थलक्षणापरिहारवाक्यभेदासंभवतद्व्यपदेशैर्नामधेयतासिद्धिरस्ति । अत इहैव तत्प्रख्यन्यायेन नामताप्रसाधनं कर्तव्यमित्युदाहृणत्वम् । वार्तिकग्रन्थस्तु यथाकथंचिन्मत्वर्थलक्षणापरिहारमात्रतात्पर्यकोद्भिन्न्यायवैषम्यप्रदर्शनमात्रार्थोपयोगितया नेयः ॥

( उद्भिच्चित्रातद्व्यपदेशन्यायैस्तत्प्रख्यन्यायागतार्थतानिरूपणम् )

**संभवत्प्राप्तिकानामित्यनेन** रूढेषु चित्राधिकरणतद्व्यपदेशाधिकरणविषयत्वं सूचयता न्यायान्तरप्रतिपादनेन यौगिकेषु चोद्भिदधिकरणन्यायाविषयत्वेनापि पृथगधिकरणारम्भस्य वैयर्थ्यं परिहृतम् । ततश्चाधिकरणत्रयेणासंभवन्नामधेयत्वानां यौगिकानां रूढानां वा शब्दानां नामधेयत्वं तत्प्रख्यशास्त्ररूपन्यायान्तरेण गुणविधित्वनिरासपूर्वकमिह साध्यत इति युक्तः पृथगारम्भ इति भावः ॥

यजति" इत्यादौ अग्निहोत्रादिपदानां गुणविधित्वं कर्मनामत्वं वेति चिन्तायां प्रसिद्धेर्गुणविधित्वमेव युक्तम्। न-

(तत्प्रख्यन्यायतृतीयत्वानुपपत्तिशङ्कातत्परिहारौ)

नचैवं प्रत्युदाहरणत्वाविशेषात् तद्व्यपदेशाधिकरणस्य चित्राधिकरणानन्तरमारम्भापत्तिः; तत्प्रख्याधिकरणप्रत्युदाहरणत्वेनापि तस्यानन्तरसंगत्युपपत्तेः। न हि यत्र यस्य संगतिः, तस्य तत्राभिधानमिति नियमोऽस्ति। अपितु यद्यत्राभिधीयते, तत्र तस्य काचित्संगतिर्वाच्येति। तेन तत्प्रख्याधिकरणस्याभिधीयमानस्य सङ्गतिसद्भावान्न दोषः। **अतएव**—यौगिकत्वसामान्यादस्योद्भिदधिकरणानन्तरमेवारम्भप्रसंग इति च—**निरस्तम्**; रूढानामप्यत्रोदाहरणत्वेन तत्सामान्याच्चित्राधिकरणानन्तरमारम्भस्यापि वक्तुं शक्यत्वात्। अतः पूर्वाधिकरणद्वयेन यौगिके रूढे च चिन्तिते तदैवोभयविधमुपस्थितमन्यतोऽसंभवन्नामधेयताकमिह प्रथमं विचार्यत इति न काप्यनुपपत्तिः। **प्रसिद्धेरिति**॥

(अग्निहोत्रपदस्य गुणे कर्मणि च तुल्यवद्वृत्त्यभावेन गुणविधित्वव्यवस्थापनम्)

प्रवृत्तिविशेषकरत्वस्याप्युपलक्षणमेतत्। नचेह यौगिकेषूद्भिन्न्यायेन नामत्वाशङ्का; वक्ष्यमाणरीत्या कर्मण्यग्निदेवताकत्वरूपावयवयोगस्याप्रसिद्धत्वेन गुणे कर्मणि च तुल्यवद्वृत्तिकत्वयोगाभावेन तद्वैषम्यात्। बहुव्रीहिसमासान्ताग्निहोत्रपदान्तर्गताग्निपदस्य स्वरूपेणैव विधेयगुणसमर्पकतया गुणेऽपि योगाभावः। अतः सोमादिपदवदेव प्रसिद्ध्यादिभिर्गुणविधित्वमित्यर्थः॥

(चित्राधिकरणेनाग्निहोत्रपदनामताशङ्कातत्समाधानम्)

मत्वर्थलक्षणाया वक्ष्यमाणबहुव्रीह्यन्तताश्रयणेन मत्वर्थस्य लाभात् कर्मणोऽनुवाद्यत्वेन विशिष्टविध्यभावाच्च यौगिकेषु मुनिरस्यतया तामनाशङ्क्यानन्तराधिकरणोपन्यस्तगुणविधित्वनिरासहेतुं वाक्यभेदापत्तिमाशङ्क्य निरस्यति—**नचेति**॥

(अग्निहोत्रपदे व्यधिकरणबहुव्रीहिसमर्थनम्)

अत्र जुहोते"र्हुयामाश्रुभसिवसिभ्यस्त्रन्"इत्यौणादिके त्रन्प्रत्यये कृते सार्वधातुकार्धधातुकयोरिति गुणे कृते होत्रशब्दव्युत्पत्तेः होत्रशब्देन च हूयमानद्रव्यस्योक्तत्वादग्निर्होत्रमस्मिन्निति न तावदग्निहोत्रपदे समानाधिकरणबहुव्रीहिसमाससंभवः। नापि "सप्तमीविशेषणे बहुव्रीहा"विति ज्ञापकबलेन कण्ठेकाल इतिवदग्नौ होत्रमस्मिन्निति लक्षणानुगतस्य व्यधिकरणबहुव्रीहेरपि चात्र वाक्यभेदः; विधेयानेकत्वाभावात्। अतोऽग्निहोत्रपदे अग्नये होत्रमस्मिन्निति व्युत्पत्त्या उपसर्जनार्थोऽग्नि-

संभवः; तस्य "यदाहवनीये जुहोती"त्यनेनैवाग्न्यधिकरणत्वस्य प्राप्तेः पूर्वपक्षासाधकत्वात्। नाप्यग्नेर्होत्रमिति षष्ठीतत्पुरुषः; जुहोतिसामानाधिकरण्यानुपपत्तेः। संबन्धविशेषापरिज्ञानाच्च। चतुर्थीसमासस्यापि प्रकृतिविकारभाव एवेष्टत्वेन इहाप्राप्तेः। शौण्डादिगणपाठाभावाच्च न सप्तमीतत्पुरुषस्यापि संभवः। अतः समासान्तरासंभवाज्जुहोतिसामानाधिकरण्यानुरोधेन बहुव्रीहेरेव वक्तव्यत्वे लक्षणाननुगतमपि तं सिद्धान्ते भाष्यवार्तिककाराभ्यामप्यङ्गीकृतं कथंचिच्छान्दसतया पूर्वपक्षेऽपि स्वीकृत्य गुणविधित्वमुपपादयति—**अत इति**॥

(अग्निहोत्रपदे विशिष्टपरेऽपि विशेषणमात्रसमर्पकत्वनिरूपणम्)

**उपसर्जनार्थ इति**॥ यथैव "लोहितोष्णीषा ऋत्विजः प्रचरन्ती"त्यन्यपदार्थभूतर्त्विजां प्राप्तौ उपसर्जनभूतं लोहितोष्णीषं विधीयते, तथैव होत्रस्य द्रव्यादेः प्राप्तत्वेन विशेषणीभूतार्थोऽग्निदेवतात्वं विधीयत इत्यर्थः॥

(फलवाक्यादिना कर्मप्राप्त्यभावेन विशिष्टविधिनैव पूर्वपक्षः कर्तव्य इति शङ्का)

**ननु** एवमत्रान्यतः कर्मप्राप्त्यभावान्न तदनुवादेन गुणविधिसंभवः, अतो गुणविधाविव विशिष्टविधावपि बहुव्रीहिणैव मत्वर्थलाभाच्चित्रादिवाक्ये इव विशिष्टविधौ मत्वर्थलक्षणाया अप्रसक्तेः विशिष्टविधिनैव गुणविधित्वपूर्वपक्षो युक्तः। **नच**—फलवाक्येन कर्मविधानम्; तथापि फलसंबन्धस्यापि तत्र करणे गौरवलक्षणवाक्यभेदापत्तेः। अत एव कालद्वयोपादानाद्यत्सायं च प्रातश्च जुहोतीत्यत्रापि न कर्मविधानम्। न वा गुणद्वयस्याप्याधिक्यात् "यदग्नये च प्रजापतय" इत्यत्रापि तद्विधानम्। **नच**—एतद्वाक्येऽनैकगुणोपादानाद्वाक्यभेदानापत्तेः कर्मविधानमावश्यकमिति—**वाच्यम्**; एतद्वाक्यविहितकर्मणोऽग्नेः प्राप्तत्वेनाग्निविधानानुपपत्त्या तत्प्रख्यशास्त्रताया एव प्राप्तेः नामताया एवापत्तेः॥

(सूर्यवाक्यविहितकर्मानुवादेनाग्निविधानासंभवः। तत्र सोमनाथीयमतखण्डनंच)

सूर्यवाक्यविहिते च कर्मण्युत्पत्तिशिष्टसूर्यप्रजापत्यवरोधादग्निदेवताया निवेशासंभवाच्च। **यत्तु**—सोमनाथेन सूर्यवाक्ये सूर्यसमुच्चितप्रजापतिविधानस्यैकेनैव चशब्देन लाभात् सूर्यपदोत्तरचकारवैयर्थ्यापत्त्या सूर्यस्याप्येतद्वाक्यविहिताग्निसमुच्चयविधानादुत्पत्तिशिष्टसूर्यप्रजापत्यवरुद्धेऽपि कर्मण्यग्नेर्निवेशः। अत एव "यदग्नये चे"ति वाक्यविहितकर्मण्यग्नेः प्राप्तत्वात्

र्दैवता होमे विधीयते । न च "यदग्नये च प्रजापतये च सायं जुहोति" इत्यनेन तस्याः प्राप्तत्वादविधानम्; तत्राने-

---

परस्परसमुच्चयार्थत्वमप्याश्रितमिति—**उक्तम्** । तद्यत्समभिव्याहृतश्चशब्दः तत्समभिव्याहृतसमुच्चयस्यैवेतरत्र प्रतिपादकत्वं चशब्दस्य व्युत्पत्तिसिद्धमिति सूर्यसमुच्चयस्य प्रजापतौ संभवेऽप्यग्निसमुच्चयस्य सूर्येऽसंभवादयुक्तम् । आरुण्यादिवदेकवाक्योपादानेन समुच्चयप्राप्तेर्द्वितीयचकारस्यैवमपि वैयर्थ्याच्च । अग्निवाक्येऽपि सूर्यसमुच्चयमादाय चकारोपपत्तेः, परस्परसमुच्चयार्थत्वे मानाभावाच्च । "यत्सायं च प्रातश्च जुहोती"त्यस्य "यदग्नयेचे"ति वाक्यविहितकर्मणि तत्तत्कालस्योत्पत्तिशिष्टतया सायंप्रातःकालयोः समुच्चयनिवेशानुपपत्तेर्निर्विषयत्वापत्तेश्च ॥

**( यत्सायमितिवाक्यविहितकर्मानुवादेन गुणविधित्वशङ्कानिरासः )**

न च "यत्सायंचे"ति वाक्यविहितकर्मानुवादेनैवात्राग्निरूपगुणविधिः; तस्य "यदग्नयेचे"ति वाक्यविहितकर्मोपस्थितौ प्रकरणान्तरन्यायेन कर्मान्तरविषयकत्वानुपपत्तेः । गुणात्तत्संभवेऽपि वानुपादेयगुणद्वयस्यासंभवात् । समुच्चयस्यैकत्र निवेशायोगेनाग्नेयवाक्य इवादृष्टद्वयापादककर्मद्वयविध्यापत्तेरतिगौरवापत्तेरेव नियामकत्वात् । न च सायंप्रातर्वाक्यविहितसायंप्रातःकालविशिष्टकर्मानुवादेन "यदग्नयेचे"ति वाक्याभ्यामग्न्यादिदेवताविधिः; अनेकगुणोपादानेन विध्यावृत्तिलक्षणवाक्यभेदापत्तेः ॥

**( सायंविशिष्टहोमविध्यसंभव इति प्रकाशकारमतखण्डनम् )**

**यत्तु**—अत्र प्रकाशकारैः सायंप्रातःकालविशिष्टानुवादतायामपि वाक्यभेदापत्तिरित्युक्तम्, **तत्** सायंप्रातःपदयोरव्ययत्वेन तदर्थस्य स्वसमभिव्याहृतार्थेऽन्वयस्य व्युत्पन्नत्वेन तदप्रसक्तेरुपेक्ष्यम् ॥

**( गुणविशिष्टकर्मविधिपक्षशङ्कायाः सायंयदग्नयेचेत्यादिवाक्यानामग्निहोत्रवाक्यशेषतोपपादनपूर्वकोपसंहारः तत्र प्रकाशमतखण्डनं च )**

अतो लाघवादग्निहोत्रवाक्य एव गुणविशिष्टकर्मविधिः । तत्रैव सायंप्रातर्वाक्येन सायंप्रातःकालविधिः, अव्ययार्थस्य चशब्दार्थेनाप्यन्वयस्य व्युत्पन्नत्वेन अग्निहोत्रवाक्यविहितकर्मानुवादेन सायंप्रातःकालसमुच्चयविधानेऽपि न वाक्यभेदः । अस्यैव च गुणविधितयाप्यग्निहोत्रपदेनानुवादात् फलनिमित्तवाक्याभ्यां फलनिमित्तसंबन्धः, "यदग्नयेचे"ति वाक्यविहितकर्मान्तरयोरेतद्वाक्यविहितकर्माङ्गत्वमेव अफलवत्वेन प्रकरणसत्त्वात् । **यत्तु** प्रकाशकारैः विशिष्टविध्यङ्गीकारेऽपि तयोर्विश्वजिन्न्यायेन स्वर्गार्थत्वमुक्तम्, तदङ्गत्वस्यैव

प्रकरणादापत्तेरयुक्तम् । अतो विशिष्टविधित्वेनैव पूर्वपक्षो युक्त इत्याशङ्कामिष्टापत्त्यैव परिहरिष्यते ॥

**( केवलगुणविधित्वपक्षः प्राचीनमतेनेतितन्मतरीत्या यदग्नयेवाक्येनाग्निप्राप्तिशङ्कावाक्यभेदापत्त्यादिना तदपरिहारादिकं च )**

तत्र प्राचां रीत्या तत्सिद्धान्त्यभिमतविधित्सितगुणप्रापकरूपतत्प्रख्यशास्त्रन्यायेन निराकरणपूर्वकं कर्मप्राप्तेरत्र सत्त्वात् केवलगुणविधित्वं समर्थयितुमाह—**यदग्नयेचेति** ॥ अनेन वाक्येनाग्निहोत्रवाक्यविहितकर्मानुवादेन समुच्चितयोरप्यग्निप्रजापत्योर्द्वयोरपि विधाने वाक्यभेदः । नचात्र विशिष्टैककारकविधिना स परिहर्तुं शक्यः; विभक्तिभेदेन कारकभेदात् । अत एव कारकाणां क्रिययैवान्वयाच्चशब्दार्थे समुच्चयेऽन्वयाव्युत्पत्तेर्न कारकद्वयसमुच्चयविधानेनापि तत्परिहारः । **एतेन**—"अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहे"ति मन्त्रविनियोगान्यथानुपपत्तिकल्पितविधितोऽग्नेः प्राप्तत्वात् समुच्चितप्रजापतिविधानान्न वाक्यभेद इत्यपि—**निरस्तम्**; "अग्नये" इत्यस्यापि कारकत्वेन चशब्दार्थे अन्वयासंभवेनाग्निसमुच्चिततद्विधानानुपपत्तेः । नाप्यग्नये इति वाक्ये मन्त्रवर्णप्राप्ताग्निदेवतानुवादकमग्नय इति पदमङ्गीकृत्य केवलप्रजापतिविधानादवाक्यभेदः, तथात्वे ब्राह्मणवाक्यगतचतुर्थ्यन्तपदबोधितदेवतात्वविशिष्टप्रजापत्यवरुद्धे मान्त्रवर्णिकदेवताकल्पनानुपपत्तेर्मन्त्रस्यैन्द्रीन्यायेन प्रजापतिमात्रप्रकाशकत्वापत्त्याऽग्नय इत्यनुवादानुपपत्तेः । सूर्यवाक्येऽपि सूर्यपदानुवादापत्त्या प्रजापतिमात्रविधान एकेनैव वाक्येन होमे प्रजापतिप्राप्त्युपपत्तौ वाक्यद्वयवैयर्थ्याच्च । तत्तत्कालविशिष्टहोमोद्देशेन प्रजापतिविधाने पूर्वोक्तरीत्या विशिष्टोद्देशे वाक्यभेदानापत्तावपि प्रजापतये जुहोतीत्येतावतापि तद्विधिसिद्धेः सायंप्रातःपदयोरपि वैयर्थ्यापत्तेश्च । अतोऽवश्यं "यदग्नयेचे"ति वाक्यद्वये देवताद्वयकालद्वयविशिष्टकर्मान्तरद्वयस्यैव विधेयत्वान्नैतद्वाक्यविहिते कर्मणि तेन देवताप्राप्तिरिति न तत्प्रख्यशास्त्रत्वम् । एतद्विहितकर्मद्वयस्यैव सायं च प्रातश्च जुहोतीत्यनेन समुच्चयविधिः । समुच्चिताद्धोमद्वयादेकमेव फलम् । अस्मिन् पक्षे कर्मद्वयस्य विश्वजिन्न्यायेन स्वर्गार्थत्वम् । फलवाक्यस्याग्निहोत्रपदेनानुवादासंभवादस्मिन्नेव फलवति कर्मद्वये दध्यादिवाक्यैर्द्रव्यविधिः । फलवाक्ये चैतद्धोमाश्रिताग्नेः फलार्थतया विधानमिति ज्ञेयम् ॥

**( तत्प्रख्यशास्त्राभावादग्निहोत्रपदानामत्वनिरूपणम् )**

**अतएव**—"यदग्नयेचे"ति वाक्यविहितकर्मणाग्नेः तत्प्रख्यशास्त्रसत्त्वादग्निहोत्रपदमस्यैव नामधेयमित्यपि—**अपास्तम्**; नामधेयत्वपक्षे तस्याविधेयत्वात् कर्मण एव विधेयत्वे

कगुणोपादानेन विशिष्टकर्मान्तरविधेरावश्यकतया एतद्वाक्यविहिते कर्मणि तत्प्राप्तेरभावात् । अतो यत्र दर्वीहोमादावाग्नेयो मन्त्रः पठितः, तादृशदर्वीहोमानुवादेन देवतामा-

वक्तव्ये तस्यापि प्राप्तेर्विधानायोगात्, कर्मान्तरविधौ च तत्र द्रव्यदेवताख्यरूपाभावाद्विधानानुपपत्तेः । अतश्चान्यतो देवतायाश्च प्राप्तावग्नये होत्रमित्यनुवादानुपपत्त्या नामत्वासंभवाद्गुणविधित्वमेवेत्यर्थः ॥

## ( अग्निहोत्रवाक्यस्य दर्वीहोमानुवादेन गुणविधित्वनिरूपणम् )

कस्मिन् कर्मणि तर्हि गुणविधानमित्यत आह—**अतो यत्रेति** ॥ दर्वीहोम इति च जुहोतिचोदनाचोदितानां केषुचिदाचारप्राप्तदर्वीसंबन्धाद्वैश्वदेवशब्दवच्च सर्वेषां लिङ्गसमवायेन दर्व्याम्नानात्तत्प्रख्यन्यायेन "यदेकया जुहुयाद्दर्वीहोमं कुर्यादि"त्यर्थवादावगतकर्मसामानाधिकरण्यसिद्धनामधेयमष्टमे साधयिष्यते । तादृशदूरस्थदर्वीहोमानुवादेनापि "यदाहवनीये-जुहोती"त्यनेन दूरस्थहोमानुवादेनाप्युपादेयाहवनीयविधिवदिहाप्युपादेयाग्निदेवताविधिरित्यर्थः । तेष्वपि येषु तद्धितेन चतुर्थ्या वाग्निरन्या वा देवताविहिता तत्रानेनाग्निविधिनानुपपत्तेर्वैयर्थ्यपरिहारायाग्नेयो **मन्त्रः पठित** इत्युक्तम् । ततश्च मन्त्रवर्णकल्प्याग्निदेवताविधेः पूर्वप्रवृत्त्या देवताविधिः; प्रत्यक्षविधिना तल्लाभे मान्त्रवर्णिकतत्कल्पनायुक्तत्वस्यान्यत्रापि दर्शनात् । अतोऽविहितदेवताकदर्वीहोमानुवादेन अग्निहोत्रपदेनाग्निदेवताविधिरिति ॥

## ( अग्निहोत्रवाक्ये निमित्तफलाद्यसंबन्धापत्त्या सूर्यदेवताऽसमर्पकत्वेनच दर्वीहोमसूर्यवाक्यविहितकर्मणोरनुद्देश्यत्वनिरूपणपूर्वकसायंहोमानुवादपरप्रकाशकारमतनिरूपणम्, तत्खण्डनंच )

**यत्तु**—अस्मिन् पक्षे फलनिमित्तवाक्याभ्यां दर्वीहोमानां अग्निहोत्रपदनिर्दिष्टत्वेनाग्निहोत्रपदानुवादसंभवेऽपि दूरस्थतया विपरिवृत्तेर्न फलनिमित्तसंबन्धः क्रियते । नापि "यत्सूर्याय चे"ति वाक्यविहितप्रातर्होमकर्मणः; तस्याग्निदेवत्यत्वाभावे अग्निहोत्रपदेनानुवादायोगात् अतो "यदग्नये चे"ति वाक्यविहितसायंहोमस्यैव । अत एव सायंहोमस्य फलवत्त्वेन प्रकरणात् प्रातर्होमस्य सायंप्रातश्च जुहोतीतिवाक्येनाग्नेयन्यायेन विहितकर्मद्वयस्य च सायंहोमाङ्गत्वम् । सायंप्रातश्चेति वाक्यद्वयविहितकर्मणोरेव अग्निर्ज्योतिरिति मन्त्रविधानात्तत्रैव मान्त्रवर्णिकी देवता, नतु "यदग्नयेचे"ति वाक्यद्वयविहितकर्मद्वये; तत्र लिङ्गादेव मन्त्रप्राप्तौ पुनर्विध्यानर्थक्यापत्तेरिति वाक्यव्यवस्थापनं **प्रकाशकारैः कृतम्** ॥

त्रमनेन विधीयते; वचनेन तत्प्राप्तिसंभवे मान्त्रवर्णिकविधेरकल्पनीयत्वात् ॥ विशिष्टकर्मान्तरं वा ॥

## ( गुणफलसंबन्धविधित्वेन उपस्थितदर्वीहोमाश्रयत्वसंभवात् पूर्वतनप्रकाशकारमतखण्डनम् )

**तदयुक्तम्**; अस्मिन् पूर्वपक्षे क्वाप्यग्निहोत्रपदस्य नामत्वासिद्धेः गुणविधित्वेनाग्निहोत्रपदेनानुवादायोगात्सायंहोमस्य "यदग्नयेचे"ति वाक्यविहितस्य फलसंबन्धानुपपत्तेः, अग्निदेवताकत्वमात्रेणाग्निहोत्रपदस्य तत्र प्रवृत्तौ "यत्सायंचे"ति वाक्यविहितकेवलाग्निदेवत्यकर्मान्तरस्यापि तदापत्तेरङ्गत्वोक्तेरप्रयोजकत्वाच्च । परमसिद्धान्ते इव सायंप्रातर्वाक्यविहितकर्मद्वये मन्त्रवर्णप्राप्ताग्निसूर्यदेवत्येऽग्निसूर्ययोः प्राप्त्या तत्रैव "यदग्नयेचे"ति वाक्याभ्यामग्निसूर्यसमुचितप्रजापतिमात्रविधानेन वाक्यभेदाप्रसरात्, तत्र कर्मान्तरविध्यसंभवाच्च । अतो "यदग्नयेचे"ति वाक्यद्वयविहितकर्मद्वयस्यैव स्वर्गार्थस्य "यत्सायं चेति वाक्येन समुच्चयविधानम् । फलनिमित्तवाक्याभ्यां दूरस्थस्यापि दर्वीहोमस्य गुणविधावनुवाद्यत्वेनोपस्थितस्याश्रयत्वोपपत्तेः तदाश्रितस्याग्निहोत्रपदसमर्पिताग्निदेवतारूपगुणस्य फले निमित्ते च विधिः, **अथवा**—"यदग्नये चे"ति वाक्यद्वयविहितहोमद्वयस्यापि प्रकरणादाश्रयत्वापत्तेस्तदाश्रितस्यैव वा गुणस्य विधानम् । **नच**—अग्निदेवत्ये प्रथमे सायंहोमे अग्नेः सत्त्वेनाविरोधादाश्रयत्वसंभवेऽपि सूर्यदेवत्ये होमे कथमग्नेर्निवेशः? इति—**वाच्यम्**; काम्यतया अग्निदेवत्यताबाधकत्वेन निवेशोपपत्तेरित्येवं वाक्यव्यवस्था पूर्वसूचितैव युक्ता। नच "यदग्नयेचे"ति वाक्यद्वयविहितकर्मणोर्लिङ्गादेव मन्त्रप्राप्तौ मन्त्रविनियोगविधिवैयर्थ्यम्; मिश्रलिङ्गकविनियोगविधिपर्युदस्तप्रतिप्रसवार्थत्वेन सार्थक्यात् । **अत एव**—मिश्रलिङ्गकर्मविनियोगाम्नानबलात्तयोरप्येतदङ्गत्वाद्बौण्या वृत्त्यैवैन्द्रीन्यायेन केवलाग्निसूर्यप्रकाशकत्वमेवेति सर्वं सुस्थम् ॥

## ( विशिष्टविधित्वरूपपक्षान्तरानुसरणम् । तत्रोपपत्तयश्च )

एवं तावद्धोमानुवादेन गुणविधित्वपूर्वपक्षस्योपपादितस्यापि दर्वीहोमेषु मन्त्रवर्णादग्निप्राप्तिसंभवे ततः पूर्वप्रवृत्त्याश्रवणेऽपि फलान्तराभावात् वैयर्थ्यापत्तेरयुक्ततां मत्वा पूर्वं शङ्कितं विशिष्टकर्मान्तरविधिमेव पूर्वपक्षे पक्षान्तरेण दर्शयति—**विशिष्टेति** ॥ अस्मिंश्च पक्षे सर्ववाक्यव्यवस्था आशङ्काव्याजेनैव दर्शिता प्राक् । फलनिमित्तवाक्यगतमग्निहोत्रपदं बहुव्रीह्यन्तपदनिर्दिष्टाग्निदेवताककर्मपरिचयार्थं सत् "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते"ति वाक्यगतसोमपदवत् गुणा-

आधारवाक्येऽपि द्वितीयान्ताधारपदेन क्षरणसमर्थमाज्यादिद्रवद्रव्यमभिधीयते । धातुना च क्षरणाख्यः संस्कारस्तदुद्देशेन विधीयते । अविनियुक्तस्य च संस्कारायोगात् प्रकरणकल्पितवाक्येनोपांशुयाजाङ्गतया द्रवद्रव्यं विधीयते । "चतुर्गृहीतं वा एतदभूत् तस्याघारमाघार्य" इत्यनेन वा प्रयाजाङ्गभूतचतुर्गृहीतरूपविशेषसमर्पणम् । सर्वथाऽऽघारपदं द्रव्यपरं न नामधेयमिति प्राप्ते—

---

नुवादकमेव, नतु नामधेयम् । अस्मिन्नेव कर्मान्तरे दध्यादिवाक्यैः प्रकरणाद्द्रव्यविधिः, **अथवा**—आकाङ्क्षाविशेषात् "द्वेधा हवींष्षी"तिवद्धोमपदसङ्कोचे प्रमाणाभावादस्मिन् प्रधानभूते कर्मणि "यदग्नयेचे"ति वाक्यद्वयविहिते अङ्गभूते कर्मद्वयेऽपि च कौस्तुभोक्तरीत्या तद्विधिरित्यर्थः ॥

**( कर्मव्युत्पत्त्याऽऽघारपदस्य आज्यद्रव्यपरत्वोपपादनम् )**

**क्षरणसमर्थमिति** ॥ तथाच "घृक्षरणदीप्त्यो"रिति धातुपाठे पठितघृधातोराङ्पूर्वकात् स्वार्थणिजन्तात् "अकर्तरि च कारके संज्ञाया"मिति सूत्रादकर्तरीत्यनुवर्तमाने "एरजि"त्यच्प्रत्यये कृते "णेरनिटी"ति सूत्रेण णिलोपे कृते आघार्यतेऽसावाघार इति कर्मव्युत्पत्त्या क्षरणसमर्थद्रव्यपरमाघारपदम्, न तु भावव्युत्पत्त्या कर्मनामधेयम्; तथात्वे प्रवृत्तिनिमित्तभेदाभावेनोद्भिदादिवैषम्यात्तदनुपपत्तेरित्यर्थः ॥

**( द्वितीयया संस्कारकर्मणोऽपि आज्यस्य प्रकरणकल्पितवाक्येनोपांशुयागाङ्गत्वनिरूपणम्, प्रकरणकल्पितवाक्यपदार्थनिरूपणंच )**

आज्यादीत्यादिपदेन "चतुर्गृहीतं वा" इति वाक्यादाज्यस्य प्राप्तेः तत्प्रख्यशास्त्रताया निरासः सूचितः। **एतेन (?)** प्राप्तमाज्यरूपं यत् द्रवद्रव्यं तत्परमित्यर्थः । नचैवमाज्याद्यभिधानेपि तस्य द्वितीयया प्राधान्यात् विधेयत्वाभावेन गुणविधित्वासंभवः, यदा तु भूतभाव्युपयोगाभावेन सक्तूनामिव संस्कार्यत्वानुपपत्त्या द्वितीयायास्तृतीयार्थलक्षकत्वेन तदुच्यते, तदा न संस्कारकर्मत्वसंभव इत्यत आह—**अविनियुक्तस्यचेति** ॥ क्षरणाख्यसंस्कारस्य द्रव्यगतभूतभाव्युपयोगं विनाऽनुपपत्तेः "अध्वर्युं वृणीत" इत्यादाविव विनियोगविधिः कल्प्यते । स च क्षरणस्य प्रकरणे आम्नानात् प्राकरणिकापूर्वसाधनीभूतद्रव्यसंस्कारत्वेन विधानसामर्थ्यात् कल्प्यमानः प्राकरणिकद्रव्यापेक्षयागार्थतयैव कल्पयितुं युक्त इत्युपांशुयागाङ्गत्वमेव संभवति । ततश्च सिद्धान्त्यभिमतनामताविरोधेनाघारवाक्ये गुणतया निर्णीतस्याघारपदार्थस्य कल्पितवाक्येन विधानेन गुणविधित्वं नानुपपन्नम् । **प्रकरणकल्पितवाक्येनेत्यस्यायमर्थः** । क्षरणस्य प्रकरणपाठकल्पितविनियोगवाक्येनेति ॥

**( प्राकरणिकविनियोगे शास्त्रदीपिकासूचितमत्वर्थलक्षणाप्रसङ्गतन्निरासनिरूपणम् )**

तेन द्रव्यस्येतिकर्तव्यतात्वाभावादितिकर्तव्यताकाङ्क्षालक्षणप्रकरणाग्राह्यत्वेऽपि न क्षतिः । तस्य च क्षरणविधेरेव संस्कारविध्यानर्थक्य भिया प्रकरणसनाथस्योपांशुयाजोद्देशेन संस्कार्यद्रव्यविनियोगपर्यन्ततेति भावः । एवंचो"पांशुयाजमन्तरा यजती"ति उत्पत्तिवाक्यमेव प्रकरणसनाथं संस्कृताघारद्रव्यविशिष्टयागविधायकमाश्रित्य मतुब्युक्तवाक्यस्यैव प्रकरणेन कल्पनेन मत्वर्थलक्षणापरिहारक्लेशोऽपि शास्त्रदीपिकासूचितो नापतति; क्षरणसंस्कृतेन द्रव्येणोपांशुयाजं कुर्यादित्येवं वैयधिकरण्येनैव वाक्यस्य कल्पनात् ॥

**( सक्तुवाक्यस्याघारवाक्यवैषम्यनिरूपणम् )**

नचैवं सक्तुष्वपि विनियोगकल्पनापत्तिः; सक्तूनां होमेन भस्मीभावेन भाव्युपयोगित्वासंभवाद्विनियोगानाश्रयणेऽपि इह क्षरणरूपस्यासाधारणस्य लोके पानीयजलादिविषयसंस्कारकत्वदर्शनात्तस्यैव क्लृप्तस्य प्रत्यभिज्ञायमानत्वादभिषवयुक्तपूतीकानामिवावशिष्टस्य भाव्युपयोगित्वसंभवेन द्वितीयावलाद्विनियोगकल्पनोपपत्तेर्वैषम्यात् । अत एव उपांशुयाजस्थानेनैव द्रव्येण नैराकाङ्क्ष्याद्ध्रौवाज्यमन्यत्रैवावतिष्ठते । **अथवा**—अनेनाज्यपयःप्रभृतिद्रव्यमात्रे विहिते "सर्वस्मा" इति वाक्येनाज्यानुवादेन ध्रुवाधिकरणत्वविधानेऽपि न क्षतिः ॥

**( विनियोगविधिकल्पनयोपांशुयागार्थत्वमिति प्राचीनमतास्वारस्यनिरूपणपूर्वकपक्षान्तरानुसरणम् )**

एवं तावद्विनियोगविधिकल्पनयोपांशुयाजार्थत्वं प्राचां रीत्योक्तम् । नत्वेतद्युक्तम्; विनियुक्तस्य संस्कारयोग्यता, संस्कारविधिवलाच विनियोगकल्पनेत्यन्योन्याश्रयापत्तेः, अध्वर्य्वादेस्तु तत्तत्कर्मणि समाख्याकल्पितविधित एव कर्तृत्वेन विनियोगदर्शनादध्वर्युकर्मकस्य वरणसंस्कारस्य विधानाद्वैषम्यम्। **किञ्च** प्राकरणिकप्रत्यक्षवचनेन सर्वपक्षार्थे विहितेन ध्रौवाज्येनैवोपांशुयाजेनैराकाङ्क्ष्यान्न तत्र विनियोगविधिकल्पनावसरः । **यत्तु**—ध्रुवाधिकरणत्वमात्रविधानमुक्तं, तदाज्यमात्रोद्देशेन तद्विधानेऽलङ्करणार्थाज्येऽपि तदापत्तेः यजतिविशेषणत्वे विशिष्टोद्देशापत्तेरयुक्तम् । अतः तत्र ध्रुवाधिकरणकाज्यग्रहणभावनाविधानमेव यज्ञोद्देशेन युक्तम्, नोपांशुयाजार्थत्वं इत्यपरितुष्य पक्षान्तरमाह—**चतुर्गृहीतं वेति** ॥

**( पक्षान्तरस्य सिद्धान्तासिद्धिमात्रोपयोगितयोपसंहारः )**

**अयमर्थः**—"आघारमाघारयती"त्यनेन क्षरणसमर्थद्रव्यैकदेशसंस्कारत्वेन क्षरणे विहिते किं तद्द्रव्यमिति विशेष-

मन्त्रवर्णकल्प्यविधिनैव देवताप्राप्तिसम्भवे अस्य पूर्वप्रवृत्त्या विधिकल्पकत्वे वैफल्यापत्तेः अभ्युदयशिरस्कत्वस्य च सम्भवति प्रथमविध्यापादकधात्वर्थविधावन्याय्यत्वान्न तावद्दर्वीहोमानुवादेन देवताविधिः। नापि विशिष्टकर्मान्तरविधिः; "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोती"ति वचनविनियुक्तमन्त्रवर्णेनैव देवताप्राप्तेः, "यदग्नये च प्रजापतये च सायं जुहोति यत् सूर्याय च प्रजापतये च प्रात"-रित्यत्र तु लाघवात् सायंप्रातःकालीनदेवतासमुच्चयविशिष्टप्रजापतिमात्रविधानम्। अतएव यथैव केवलदेवत्यमन्त्रलिङ्गवशेन केवलयोर्देवतात्वं, तथा "अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति सायं जुहोति सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातरि"ति मिश्रलिङ्गकमन्त्रवर्णान्मिश्रयोरपि तत्। अतश्च "यदग्नये चे"ति वाक्यस्थाग्निसूर्यपदं सायंप्रातःका-

---

जिज्ञासायां चतुर्गृहीतमिति विशेषसमर्पणमात्रमाग्नेयं चतुर्धाकरोतीतिवत् क्रियते। एवंच संस्कार्यस्य विनियोगापेक्षायां नाक्लृप्तोपांशुयाजार्थता कल्प्या; अपितु "चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्" इति वाक्यत एव प्रयाजार्थतेति लाघवम्। "इन्द्र ऊर्ध्वो अध्वरः स दिविस्पृश"इत्याघारमाघारयतीत्यनेन तु मन्त्रमात्रं क्षरणाङ्गतया रथघोषादिवत् स्मारकत्वेन विधीयते इति नदोषः इति॥

### ( आघारवाक्ये नामधेयत्वे वैयर्थ्यं अग्निहोत्रवाक्ये द्वितीयानुपपत्तिश्चेति निरूपणम् )

एवं चास्मिन् पक्षे गुणविधित्वासंभवेऽपि सिद्धान्त्यभिमतनामतानिरोधेनैवाघारपदं गुणपरमात्रमित्येतावतापि सिद्धान्तासिद्धिं सर्वथापदेन सूचयन्नाघारवाक्ये पूर्वपक्षमुपसंहरति **—सर्वथेति**॥ कर्मनामधेयत्वे आघारे पृथक्संकल्पाभावेनोल्लेखविशेषप्रयोजनासंभवात् वैयर्थ्यम्। कथंचिदग्निहोत्रपदे तत्संभवेऽपि उभयत्रोत्पत्तिवाक्ये कर्मणः करणत्वाद्द्वितीयानुपपत्तिरपि सर्वथापदेन सूचिता॥

### ( सोमनाथमतखण्डनपूर्वकं सान्नाय्योद्देशेन संस्कारविधानमितिपक्षान्तरस्य निरूपणम् )

**वस्तुतस्तु**—सान्नाय्ययागीयपयस एवाघारपदेनानुवादसंभवे तदुद्देशेनैवात्र संस्कारविधानमित्यपि शक्यते पूर्वपक्षे वक्तुम्। **यत्तु**—अत्र सान्नाय्यादिद्रव्यस्याघारपदेन विधानादाघारपदेनानुवादासंभव इति न्यायसुधाकारस्येन**—सोमनाथेनोक्तम्,** तदाघारपदस्य पूर्वपक्षे रूढत्वाङ्गीकारायोगेनाप्रकृताज्यपयःपरत्वेनेव सान्नाय्यपयःपरत्वेनापि अनुवादसंभवादुपेक्ष्यम्। अतः सान्नाय्यपरत्वेनापि गुणपरत्वसंभवेन नामतानिषेधोपपत्तेरित्यपि सुवचमिति। एवं विद्वद्वाक्यगतयो रूढयोरपि पौर्णमास्यमावास्यापदयोः गुणपरत्वोपपादनं कौस्तुभे द्रष्टव्यम्॥

### ( अग्निहोत्रवाक्ये गुणगुणविशिष्टकर्मान्तरयोर्विधानासंभवनिरूपणम् )

अग्निहोत्रपदे तावद्गुणविधित्वासंभवपूर्वकं नामधेयत्वसिद्धान्तमाह**—मन्त्रवर्णकल्प्येति**। व्याख्यातपूर्वमेतत्। **नापीति**। अत्रच न्यायसुधाकृता सोऽन्यत एव प्राप्तो "यदग्नयेचे"ति टुप्टीकायामुक्तत्वादिहापि देवताव्यवस्थापरे वाक्ये वाक्यान्तरप्राप्तः कालोऽनूद्यत इत्याघाराग्निहोत्राधिकरणे वक्ष्यमाणत्वादत्रभाष्ये "यदग्नये चेत्य"स्यैवाग्निप्रापकत्वेनोपन्यस्तत्वात् "यदग्नयेचे"ति ब्राह्मणवाक्यादेवाग्निप्राप्तिरुक्ता, तन्निरासायाघाराग्निहोत्राधिकरणवार्तिकोक्तां मान्त्रवर्णिकीमग्निप्राप्तिमाह**—अग्निर्ज्योतिरिति**॥ तदुपादानपूर्वकनिरासप्रकारश्चैवकारेण सूचितः कौस्तुभे द्रष्टव्यः॥

### ( यदग्नयेचेत्यस्य देवतासमर्पकत्वशङ्कातत्परिहारादिपूर्वकमान्त्रवर्णिकदेवताप्राप्तिनिरूपणम् )

**ननु**—कथं यदग्नयेचेति वाक्याभ्यां चतुर्थ्या प्रजापतेर्देवतात्वस्य प्रत्यक्षत एव विधानेन नैराकाङ्क्ष्ये सति मन्त्रवर्णकल्प्यविधिनाऽग्नेर्विधानं युज्यते? कल्पकत्वेऽपि वा चतुर्थ्या वलवत्त्वेनाग्निदेवताबाध एव प्रसज्यते इत्याशङ्कानिरासायाह**—यदग्नयेचेति**॥ यद्यप्यग्नय इति चतुर्थ्युपात्तकारकस्य न चार्थेऽन्वयसंभवः; तथापि "अग्नय" इति पदस्य वक्ष्यमाणरीत्योपलक्षकत्वेनानुवादकत्वात्तत्समभिव्याहारस्य तात्पर्यग्राहकत्वकल्पनया अर्थात्तत्समुच्चयसिद्धेर्न चशब्दस्यार्थेनान्वय इति सायंप्रातःकालीनदेवतासमुच्चयविशिष्टेत्यनेन सूचितम्॥

### ( प्रजापतिदेवतयाग्निबाधशङ्कापरिहारौ )

**एतेन**—पूर्वप्रवृत्ताग्निविधिमपेक्ष्य विधीयमानः प्रजापतिः उत्पत्तिशिष्टगुणावरुद्धे उत्पन्नशिष्ट इव नातिदेशं लभते अग्नेः प्रजापतिं प्रति शेषत्वापत्तिश्चेति वरदराजोक्तशङ्का**—अपास्ता,** अन्यतः प्राप्तहोमाभिषवसमानकर्तृकत्वविधिना होमाभिषवयोर्भक्षणाङ्गत्ववत् इहापि अन्यतोऽङ्गत्वेनावधृताग्निसमुच्चयविशिष्टतद्विधानोपपत्तेस्तदप्रसक्तेः। अत एव परस्परसमुचितदेवताविधानान्न परस्परबाधकतापि॥

### ( मिश्रमन्त्रविनियोगवैयर्थ्यशङ्कापरिहारौ )

**मिश्रयोरपि तदिति।** नचैवं केवललिङ्गकमन्त्रपाठादेवोपांशुयाजे विष्ण्वादीनामिवाग्नेः सूर्यस्य च प्राप्तेस्तद्विनियोगवैयर्थ्यम्, तत्तत्कालीनप्रयोगविषयव्यवस्थार्थत्वेन सार्थक्यात्। एवं मिश्रलिङ्गमन्त्रविध्योरपि उभयदेवताप्रकाशकतया कालद्वयेऽव्यवस्थाप्राप्तौ व्यवस्थार्थत्वेन सार्थक्यमनुसन्धेयम्॥

लीनदेवतालक्षकम्। सायंप्रातःपदं च तात्पर्यग्राहकम्। चशब्दोपस्थितसमुच्चयस्य च प्रजापतावन्वयस्य निपातोपसर्गार्थत्वेन व्युत्पन्नत्वान्न विधेयानेकता। अतश्चाग्नेर्दैवतात्वादिना अग्निहोत्रहोमे प्राप्तत्वादग्निहोत्रपदं अग्नेर्होम इत्येवं व्युत्पत्त्या नामधेयम्।

**( अग्नेःपूर्वाहुतिरित्यादिक्रमविध्युपपत्तिपूर्वकसमुच्चयविशिष्टप्रजापतिविधानोपपत्तिः )**

**ननु** चशब्दार्थस्य प्रजापतेश्च विधाने वाक्यभेद इत्यत आह—**चशब्दोपस्थितेति**॥ **एतेन**—वाक्यभेदापत्तेर्यदग्नयेचेति वाक्यद्वये विशिष्टकर्मान्तरविधिरपि पूर्वपक्ष्युक्तः **—निरस्तः**। कर्मान्तरविधौ तत्र लिङ्गादेवोभयदेवतालिङ्गकशुद्धमन्त्रयोः प्राप्तत्वेन तद्विनियोजकविधिद्वयवैयर्थ्यापत्तेश्च। नचैव"मग्नेः पूर्वाहुतिः प्रजापतेरुत्तरे"ति क्रमविध्यन्यथानुपपत्त्यैव समुच्चयसिद्धेरेतत्समुच्चयविधानं व्यर्थम्, न, वैकल्पिकत्वेऽपि प्रयोगभेदेन पूर्वोत्तरभावविधायकत्वोपपत्तेः। अत एकस्मिन् प्रयोगे समुच्चयविधानोपपत्तेः। तयोश्च "यदग्नये-चे"ति पाठक्रमादेव क्रमसिद्धेः क्रमवाक्यमनुवाद एव॥

**( ज्योतिष्ट्वगुणविशिष्टाग्निदेवतात्वपरप्रकाशकारमतखण्डनम् )**

**यत्तु**—अत्र "ततश्च ब्राह्मणेनाग्निसूर्ययोः शुद्धयोर्देवतात्वविधानात् शुद्धावेवाग्निसूर्यौ त्यागवेलायामुद्देष्टव्यौ न मन्त्रवर्णानुसारेण ज्योतिष्ट्वगुणविशिष्टविधिरि"ति न्यायसुधाग्रन्थस्वारस्यभ्रमेण मान्त्रवर्णिकदेवताविधिपक्षे ज्योतिष्ट्वादिगुणविशिष्टयोरेवाग्निसूर्ययोर्देवतात्वमिति प्रकाशकारैरुक्तम्। **तत् न**; उपांशुयाजे विष्णुरुपांशु यष्टव्यः प्रजापतिरुपांशु यष्टव्य इति वाक्यशेषे शुद्धानामेव विष्ण्वादीनां संकीर्तनात् मान्त्रवर्णिकविधिकल्पनायामपि गुणविशिष्टयोर्देवतात्वाकल्पनवदिहापि "धूम एवाग्नेः दिवा ददृशे" "अग्नेः पूर्वाहुतिर्यदग्नये-चे"ति वाक्यशेषे शुद्धयोरेव संकीर्तनाद्गुणविशिष्टयोर्देवतात्वाकल्पनया लाघवाच्छुद्धयोरेव तदुपपत्तेः॥

**( अग्निहोत्रपदनामत्वोपसंहारः )**

अतोऽग्निहोत्रवाक्ये शास्त्रान्तरप्राप्ताग्निदेवताकत्वयोगेनापि अग्निहोत्रपदप्रवृत्तेः संभवादसाधारणपरताज्ञापकाभावे च धात्वर्थविधानस्य संभवतस्त्यागायोगान्न होमानुवादेन गुणविधिः। शुद्धधात्वर्थविधानसंभवे विशिष्टविधेर्गुरुभूतस्याश्रयणं न युक्तमित्यभिप्रेत्य नामधेयत्वमुपसंहरति—**अतश्चेति**॥

**( अग्निहोत्रपदे सप्तमीबहुव्रीहिचतुर्थीतत्पुरुषखण्डनेन षष्ठीतत्पुरुषव्यवस्थापनम् )**

**अत्र भाष्यकृता** यस्मिन्नग्नये होत्रं होमः तदग्निहोत्रमित्युक्तेर्व्यधिकरणचतुर्थीबहुव्रीहिराश्रितः, **न्यायसुधाकृता** अग्नेर्होत्रं यस्मिन्निति षष्ठीबहुव्रीहिः, तत्रोभयत्रापि लक्षणा, एवमाघारेऽपि उपांशुयाजे "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्य"मित्यनेनैव द्रव्यस्य प्राप्तत्वात् प्रयाजाऽऽज्योद्देशेन संस्कारविधानेऽपि द्वितीयविधिप्रकारापत्तेर्लाघवाद् भावव्युत्पन्नमाघारपदं नामधेयम्। विधेयश्च धातुलक्ष्यो होम एव। "इन्द्र ऊर्ध्वो अध्वर इत्याघार-

न तु गतिः स्पष्टा। तैत्तिरीयैराम्नायमानान्तोदात्तस्वरानुपपत्तिरपि। अतः स्वरलक्षणानुगतः षष्ठीतत्पुरुष एव होत्रशब्दं भावे व्युत्पाद्य आश्रयितुं युक्त इति सूचयितुं विशेषतोऽग्नेर्होत्रं इति व्युत्पत्तिप्रदर्शनं कृतम्। तत्र यद्यपि कात्यायनमते प्रकृतिविकृतिभावाभावेऽपि अश्वघासादिपदे इवेहापि चतुर्थीसमास एव युक्तः; तथापि महाभाष्यकारेण तन्मतप्रत्याख्यानावसरेऽश्वघासादिपदेऽपि षष्ठीतत्पुरुषस्यैवाश्रयणात् इहापि तदाश्रयणे न कोऽपि दोषः। नच पूर्वपक्ष इव संबन्धविशेषाप्रसिद्धिः। सिद्धान्ते अन्यतः प्राप्ताग्निदेवताकत्वानुवादकत्वेनान्यतस्सिद्धदेवतात्वरूपविशेषेण षष्ठ्युपपत्तेः, पूर्वपक्षे तु तस्याधुनैव विधेयत्वान्न पूर्वं संबन्धविशेषः संभवतीति वैषम्यम्। यद्यपि प्रकाशकारैः चतुर्थीतत्पुरुषोऽप्युक्तः; तथापि तस्य "कर्तृकरणे कृता बहुलमि"ति सूत्रगतबहुलग्रहणसिद्धत्वानन्यगतित्वेनाश्रयणापेक्षयाऽस्यैव तत्पुरुषस्य युक्तत्वं मत्वा पूर्वपदे लक्षणापत्तिमपि लक्षणस्वरानुगतसमासापेक्षया ज्यायस्त्वेनाङ्गीकृत्य पूज्यपादैरयमेवाद्दतः। यस्तु न्यायप्रकाशे सप्तमीबहुव्रीहिरप्याश्रितः, तस्य स्वरानुगतस्यापि दूषणं कौस्तुभे द्रष्टव्यम्॥

**( होत्रपदस्य द्रव्यपरत्वनिरासेन होमपरत्वोपपादनम् )**

अत्र च होत्रपदस्य द्रव्यपरत्वे अग्निसंबन्धिद्रव्यत्वप्रकारकबोधजनकत्वे नामधेयार्थस्य धात्वर्थावच्छेदकत्वसंभवेऽपि होत्रपदस्य भावपरत्वे अग्निहोत्राख्यहोमस्य न धात्वर्थावच्छेदकत्वं संभवति; रूपान्तराभावेन स्वस्मिन् स्वस्यैवावच्छेदकत्वानुपपत्तेः। न हि संभवति अग्निसंबन्धिहोमेन होमेनेष्टं कुर्यादिति। **अतएव**—भाष्यकारन्यायसुधाकारादिभिः द्रव्यपरत्वमाश्रितम्। तथाचात्र होत्रशब्दस्य द्रव्यपरतया लक्षणया दध्यादिद्रव्यसंबन्ध्यर्थकत्वेन प्रकाशकारोक्तः षष्ठीतत्पुरुषपक्ष एव युक्तः; तथापि अस्मिन् पक्षे होत्रपदे लक्षणापत्तेः, अग्निदेवताकहोमत्वरूपरूपान्तरप्रकारकहोमविशेष्यकप्रतीतिजनकत्वेन धात्वर्थावच्छेदकत्वोपपत्तेः भावव्युत्पन्न एवाश्रितो होत्रशब्दः। तत्र च जुहोतिपदेनैव विशेष्याभिधानात् विशेष्यपरमप्यग्निहोत्रपदं विशेष्यांशेऽनुवादकमित्यदोषः॥

**( सूर्यहोमेऽपि प्रातःकालिकेऽग्निहोत्रपदप्रवृत्त्युपपादनम् )**

यद्यपि चाहवनीये होमो नापरयोरितिगार्हपत्यान्वाहार्यपचनयोर्होमनिषेधादाहवनीय एवाहुतिद्वयविधानेन प्रातर्होमेऽग्ने-

माघारयती''ति मान्त्रवर्णिकेन्द्रदेवतायाश्चतुर्गृहीतं वेत्यनेन च द्रव्यस्य लाभात्। एवं समिदादिष्वपि वक्ष्यते।

रविधानान्नेदमग्निदेवताकहोमत्वं प्रवृत्तिनिमित्तं संभवति; तथापि "द्वे आहवनीये जुहोति चतस्रो गार्हपत्ये चतस्रोऽन्वाहार्यपचने" इति दशाहुतिपक्षे, "द्वे आहवनीये द्वे गार्हपत्ये द्वे अन्वाहार्यपचने" इति षडाहुतिपक्षे च प्रातर्होमेपि गार्हपत्यान्वाहार्यपचनयोः "अग्नये गृहपतये स्वाहाऽग्नये संवेशपतये स्वाहा" इत्यादिमान्त्रवर्णिकाग्निदेवत्यहोमसद्भावादग्निहोत्रशब्दप्रवृत्तिर्नानुपपन्ना ॥

**( प्रकारान्तरेणाग्निहोत्रपदस्य प्रातर्होमे प्रवृत्तिनिरूपणपूर्वकनामधेयत्वोपसंहारः )**

**वस्तुतस्तु**—एकस्यैवाग्निहोत्रहोमस्य "सायं च प्रातश्च जुहोती''ति वाक्येन प्रयोगद्वयविधानात्तस्य ज्योतिष्टोमवत्कालभेदे कर्मभेदाभावाद्विजातीयहोमत्वावच्छिन्नेऽग्निदेवताकत्वस्य सामानाधिकरण्येन सत्त्वाद्युक्तैव तत्पदप्रवृत्तिरिति। वक्ष्यते चैकदेशप्रवृत्तिनिमित्तेनापि तत्प्रख्यन्यायेन नामधेयोपपत्तिर्वैश्वदेवाधिकरणे। अतिप्रसङ्गनिराकरणमुद्भिदपदवदेव ज्ञेयम्। अतस्सिद्धं तत्प्रख्यन्यायेन अग्निहोत्रपदं नामधेयम्, तस्यैवाग्निहोत्रसंज्ञकस्य कर्मणः फलनिमित्तवाक्ययोरुपपादनात्तत्संबन्धः **इति ॥**

**( सिद्धान्तानुगुणं सूत्रयोजनम् )**

अत्रच सूत्रे "यस्मिन् गुणोपदेश" इति सूत्रावयस्मिन्निति, "अपिवा नामधेय''मिति तत्पूर्वसूत्राच्च नामधेयमित्यनुषज्य तस्य विधित्सितस्य गुणस्य प्रख्यं प्रख्यापकमन्यच्छास्त्रं यस्मिन् तदग्निहोत्रादिपदं नामधेयमित्यर्थः ॥

**( चतुर्गृहीतवाक्याद्द्रव्यस्य मन्त्रवर्णाद्देवतायाश्च लाभात् आघारपदस्य क्षरणात्मकप्रवृत्तिनिमित्तेन होमनामधेयत्वोपपादनम् )**

आघारपदेऽपि नामधेयत्वं साधयति—**एवमिति। चतुर्गृहीतं वेत्यनेन चेति ॥ अस्य वाक्यस्यायमर्थः—** यदेतज्जौहवं चतुर्ग्रहणसंस्कृतमभूत्तस्य तत्संबन्ध्याघारसंज्ञकमाघारणं कृत्वा इतोऽस्मात् प्राचीनं प्रथमं त्रींस्त्रीन् प्रयाजान्यजतीति (?)। अत्र च बलवत्प्रत्यभिज्ञानेनाघारवाक्यविहितस्य प्रकृतस्यैवाघारणाख्यकर्मणः प्रयाजार्थजौहवचतुर्गृहीतैकदेशसंबन्धोऽनन्यार्थतया विधीयतेऽन्यत्सर्वं प्राप्तमेवानूद्यते। तेन नाघारणान्तरविधिः। अत एव चतुर्गृहीतसंबन्धपरत्वेन अन्यार्थत्वादाघारपदस्य नामत्वादनन्याक्षिप्तशक्तिकेनाघारमाघारयतीत्यनेनैव देवतोद्देशपूर्वकद्रव्यत्यागप्रक्षेपरूपहोमस्याभिधानम्। चतुर्गृहीतवाक्येनाज्यरूपस्य द्रव्यस्य मान्त्रवर्णिक्या देवतायाश्च लाभादाघारयतिना लक्षणया तदुपपत्तेः। तत्र चाघारपदं होमस्य प्रक्षेपांशेन क्षरणात्मकत्वात् क्षरणात्मकप्रवृत्तिनिमित्तेन नामधेयमिति प्रवृत्तिनिमित्तभेदात् न तदैक्यमादाय वैयर्थ्यमाशङ्कनीयम् ॥

**( क्षर्यमाणद्रव्यकत्वमाघारपदप्रवृत्तिनिमित्तमिति सोमनाथमतखण्डनम् )**

**यत्तु**—"चतुर्गृहीतमित्यनेनैव आज्यप्राप्तेः क्षरणात्मकत्वं प्राप्तमिति तन्निमित्तनामधेयसंभवा''दिति शास्त्रदीपिकाव्याख्यमनुरुध्याज्यस्य द्रवद्रव्यत्वेन स्वतःक्षरणात्मकत्वात् क्षर्यमाणद्रव्यकत्वं प्रवृत्तिनिमित्तमादायाघारपदं नामधेयमिति—**सोमनाथेनोक्तम्, तन्न;** आज्यगतक्षरणात्मकताया धातुनैवेह विधेयत्वेनाज्यप्राप्तेः क्षरणात्मकत्वे हेतुत्वासंभवात्। नहीदमग्निहोत्रादिपदवदाज्यादिगुणयोगनिमित्तं नाम, अपितु धात्वर्थगतक्षरणात्मकत्वयोगेनेति तदेव प्रवृत्तिनिमित्तं युक्तम् ॥

**( पूर्वपक्षोक्तसान्नाय्यपयःपरत्वद्रवद्रव्यसामान्यपरत्वादिनिरासः )**

अत एव द्वितीयविधिप्रकारापत्तेरेव न सान्नाय्यीयपयःसंस्कारपरत्वमाघारपदस्य, नापि पञ्चमविधिप्रकारापत्तेर्विनियोगभङ्गेन द्रव्यविशिष्टाघारविधानमपि। **एतेनैव**—चतुर्गृहीतवाक्येन विशेषसमर्पणमित्यपि—**निरस्तम्।** तस्याघार्येत्येतावतैवाभीष्टसिद्धौ तत्राघारमित्यस्य वैयर्थ्यापत्तेश्च। अतो युक्तं नामधेयत्वम् ॥

**( आघारयागस्य सन्निपत्यारादुपकारकत्वयोः स्विष्टकृत इव सोपपत्तिकनिरूपणम् )**

अयं च यागः स्विष्टकृदिव त्यागांशेनारादुपकारकोऽपि प्रक्षेपांशेनाद्यप्रयाजत्रयसाधनीभूताज्यसंस्कारकत्वात् सन्निपत्योपकारकोपि स्वीक्रियते, सन्निपत्योपकारकत्वसंभवे आरादुपकारकत्वकल्पनस्य तद्वदेवान्याय्यत्वात्। **अतएव**—तस्याघारमिति संबन्धसामान्यपरापि षष्ठ्याज्यस्य यजन्तितिवन्न गुणत्वपरा; अन्यत्र प्रयाजत्रये विनियुक्तस्यान्यत्र विनियोगायोगात्, अपितु भाव्युपयोगित्वात्प्राधान्यपरैव। अतश्चाघारोत्तरमपि जौहवनाशे प्रयाजनार्थं तदुत्पादने पुनराघारकरणं विकृतिषु वाचनिकप्रयाजपर्युदासे उत्तराघारनिवृत्तिः ॥

**( संस्कारकर्मणोऽप्याघारनामत्वप्रयोजनम् )**

नचैवं संस्कारकर्मत्वे तस्य संस्कार्यनिरूप्यत्वेनैवावच्छेदसिद्धेर्नामधेयानर्थक्यम्; सत्यप्यवच्छेदकान्तरे नामाम्नानवशेनैतदवच्छिन्नस्यैवाभ्युदयशिरस्कत्वकल्पनया "अंशुं गृह्णाती''ति वत्संस्कारकर्मण्यपि नामार्थवत्वोपपत्तेरिति न्यायसुधाकरः ॥

**( अभिघारणस्यारादुपकारकत्वमात्रमिति स्वसिद्धान्तस्य पूर्वतनमतप्रयोजनादिनिरसनपूर्वकं सोपपत्तिकमुपपादनम् )**

**वस्तुतस्तु**—संस्कारकर्मत्वे द्रव्यसंबन्धांशेऽप्यपूर्वविधि-

सर्वत्र द्वितीया करणत्वलक्षणार्थेति न विरोधः ॥ ४ ॥ २० ॥ | इति चतुर्थं तत्प्रख्याधिकरणम् ।

( ५ अधिकरणम् । )

**तद्व्यपदेशाच्च** ॥ "श्येनेनाभिचरन् यजेते"त्यादौ पूर्वोक्त- बाधकाभावात् प्रसिद्धेः श्येनादिपदानां गुणविधित्वमेव ।

त्वापत्तेर्नियमविधिलाघवानुरोधेन तस्येति षष्ठ्या गुणत्वमात्र-मङ्गीकृत्यारादुपकारकत्वमेव प्रयाजादिवद्युक्तमाश्रयितुम् । अत एव देवतोद्देशप्रक्षेपद्रव्यत्यागसमुदायरूपहोमपदार्थस्यावयवभेदकल्पनया भाव्युपयोगाङ्गीकरणमपि न युक्तम्; स्विष्टकृदादौ तु दृष्टार्थत्वं द्वितीयाश्रुतिबलादतस्तदाश्रयणं, इह तु संस्कारकर्मत्वेऽपि अदृष्टकल्पनाया आवश्यकत्वाद्द्रव्यभेदाङ्गीकरणं निष्प्रमाणकम् । अतस्तुषोपवापवत् परप्रयुक्तद्रव्योपजीवित्वेपि संस्कारकर्मत्वाभावात् नोक्तफलसिद्धिः । विकृतिषु वाचनिकपर्युदासे परं यत्किंचिदाज्येनाघारकरणेऽपि न जौहवाज्यनाशे; कपालवत्परप्रयुक्तत्वात् । परप्रयुक्तत्वं च चतुर्गृहीतवाक्ये एतच्छब्देन प्रयाजत्रयसाधनत्वानुवादवैयर्थ्यभियाऽवगतमिति न किंचिदनुपपन्नम् । **अतएव**—भाष्ये प्रधानकर्मत्वमेव स्पष्टमुक्तमिति पार्थसारथिमतानुयायिनः प्रकाशकाराः । **तदुक्तं शास्त्रदीपिकायाम्**—"दृष्टं च संस्काराणामपि नामधेयमंशुं गृह्णात्यन्तर्यामं गृह्णाती"ति । नचास्य संस्कारत्वम्; "इन्द्र ऊर्ध्वो अध्वर"इत्याघारयतीति मान्त्रवर्णिकेन्द्रदेवतात्वाद्यागसिद्धेरिति ॥

**( आघारकर्मणस्संस्कारकर्मत्वमिति सोमनाथमतस्य शास्त्रदीपिकामतविरुद्धत्ववर्णनम् )**

अत्र च यागस्याश्रवणात् पूर्वपक्ष्युक्तं आघारस्य संस्काररूपत्वं अङ्गीकृत्यापि प्रथमतो नामधेयवैयर्थ्यं परिहृत्य स्पष्टमेव **नचास्य**ग्रन्थेन तत्प्रदूष्य यागत्वप्रसाधनेन नामतानुपपत्तिः परिहृतेति गम्यते । एवं स्थिते संस्कारकर्मत्वाङ्गीकारेणैव प्रस्तरप्रहरणवदुभयरूपतातपर्येणैतद्ग्रन्थव्याख्यानं सोमनाथकृतं कथमिव युक्तमिति न विद्मः । अत्रच प्रक्षेपांशेनारादुपकारकत्वेऽपि सान्नाय्याङ्गभूतेन्द्रदेवतासारकत्वेन सन्निपत्योपकारकत्वमाशङ्क्य निरस्तं कौस्तुभे तत्रैव द्रष्टव्यम् ॥

**( समिदादिपदानामपि नामत्वोपपादनम् )**

एवं समिदादिपदमपि अभ्यासाधिकरणवक्ष्यमाणरीत्या मन्त्रवर्णप्राप्तसमिद्देवताकत्वेन प्रवृत्तिनिमित्तेन निरूढलक्षणया नामधेयमित्याह—**एवमिति** । आदिपदेन पौर्णमास्यमावास्यादीनामपि नामधेयत्वसंग्रहः ॥

**( अग्निहोत्रमित्यादिद्वितीयातद्बहुवचनोपपत्तिः )**

पूर्वपक्ष्युक्तां द्वितीयानुपपत्तिं परिहरति—**सर्वत्रेति** ॥ असाधितस्य करणत्वानुपपत्तेरर्थाक्षिप्तसाध्यत्वमादायानुवादिनी द्वितीयैकार्थसमवायसंबन्धेन करणत्वलाक्षिकेत्यर्थः । "समिधो यजती"त्यत्र बहुवचनं तु "समिधो बह्वीरिव यजती"ति वाक्यशेषे समिद्देवतानां बहुत्वावगमात् तदनुवादकमिति न दोषः ॥

**( पूर्वोत्तरकल्पप्रयोजनम् प्रकाशकारीयतत्खण्डनंच )**

प्रयोजनं पूर्वोत्तरपक्षोपन्यासेनैव स्पष्टत्वान्नोक्तम् । **यत्तु** प्रकाशकारैः पूर्वपक्षे दर्वीहोमानामग्निदेवताकत्वं, सिद्धान्ते नेति प्रयोजनमुक्तम्, तत्पूर्वपक्षोपपादनवेलायामेव "यत्राग्नेयो मन्त्रः पठित" इत्यनेन पूज्यपादैर्निरस्तप्रायमित्युपेक्ष्यम् ॥

**इति चतुर्थं तत्प्रख्याधिकरणम् ॥**

---

**( संगतिनिर्देशपूर्वकविषयवाक्योपन्यासः तत्र-गवाभिचर्यमाण इतिपाठसाधुताविवेचनं च )**

तत्प्रख्यशास्त्रताख्यपूर्वन्यायात्ययेन प्रत्यवस्थानात् प्रत्युदाहरणसंगतिं स्पष्टत्वादप्रदर्श्यैव विषयोपन्यासपूर्वकं पूर्वपक्षमाह—**श्येनेनेति** ॥ आदिपदेन "अथैष सन्दंशेनाभिचरन् यजेत" अथैष गवाभिचर्यमाणो यजेते"त्यादिवाक्यानां संग्रहः। "अथैष"इत्यानुपूर्वी श्येनवाक्येऽपि प्रथमतो द्रष्टव्या । अत्र बहुषु भाष्यादिपुस्तकेषु "गवाभिचरन् यजेते"ति वाक्यं लिखितं दृश्यते, तदनुरोधेन नवीनग्रन्थेष्वपि तथा, तथापि लेखकप्रमादादेव तल्लेखनं द्रष्टव्यम् । अन्यथा यथा गावो गोपायन्तीति वाक्यशेषान्वयानुपपत्तेः । यमुद्दिश्याभिचारः तस्य यागेन गोपनासंभवाद्यागकर्तुरप्रस्तुतगोपनोक्तेरसंभवात् । अतोऽभिचर्यमाण इत्येव युक्तम् । तदाद्यन्यकृताभिचारकर्मीभूतस्य यागकर्तृत्वात्परकृतादभिचाराद्यागेन गोवद्रक्षणमस्य यजमानस्य भवतीत्युपपद्यते । अत एवाधिकरणमालायां श्रीविद्यारण्यगुरुभिस्तथा सोमनाथेन शास्त्रदीपिकाटिप्पणे अभिचर्यमाण इत्येव धृतं वाक्यम् ॥

**( उद्भिच्चित्रातत्प्रख्यन्यायानां श्येनवाक्येऽप्रवृत्त्या पूर्वपक्षप्रवृत्तिनिरूपणम् )**

उद्भिदाद्यधिकरणाविषयतां दर्शयति—**पूर्वोक्तेति** ॥ न तावदुद्भिदधिकरणविषयता; तत्र गुणे कर्मणि च तुल्यवद्वृत्तिकानामेव गुणपरत्वे मत्वर्थलक्षणापत्तेर्नामत्वं साधितं, न तु दधिसोमादिपदानां रूढानामपीति तद्वदेवेहापि गुणविधित्वसंभवात् । नापि वाक्यभेदरहितत्वेन चित्रान्यायविषयता। तत्प्रख्यशास्त्रान्तराभावादेव न पूर्वाधिकरणविषयतेत्यर्थः । **अतएव**—दधिसोमादिपदवदेवात्यन्तनिरूढत्वेन प्रसिद्धेः पूर्वपक्षसिद्धिरित्याह—**प्रसिद्धेरिति** ॥ श्येनादीत्यादिपदेन सन्दंशगोपदयोः संग्रहः ॥

प्रकृतसोमयागाश्रितो गुणः फलोद्देशेन विधीयते । विशिष्टकर्मान्तरं वा । नचैवं "यथा वै श्येनो निपत्यादत्त एवमयं भ्रातृव्यं निपत्यादत्ते" इत्यर्थवादे स्वस्यैव स्वोपमानुपपत्तिः; उपक्रमनिर्णीतविध्यनुरोधेनोपसंहारस्थार्थवाद-

(ज्योतिष्टोमादिगुणविधिरिति शास्त्रदीपिकायाः गुणफलसंबन्धपरत्वम् केवलगुणविधित्वपरन्यायसुधानिरासः आदिपदेनाप्रकृतविश्वजित्संग्रहपरसोमनाथखण्डनं च)

अत्र न्यायसुधाकृता प्रसिध्यादिभिः पूर्वपक्ष उद्भिदादीनामिवेति दृष्टान्तोपादानाज्ज्योतिष्टोमे गुणविधिरिति पूर्वपक्षतात्पर्यवर्णनं कृतं, तत्फलपदवैयर्थ्यापत्तेः विशिष्टानुवादे च वाक्यभेदापत्तेरयुक्तमिति सूचयन्निन्द्रियकामाधिकरणन्यायेन तद्विधित्वं समर्थयति—**प्रकृतेति** । **एतेन**—"गुणविधिर्ज्योतिष्टोमादिष्वि"ति शास्त्रदीपिकागतस्यादिशब्दस्य "विश्वजित्सर्वपृष्ठोऽतिरात्र" इत्यत्रानेकगुणोपादानेन विशिष्टकर्मान्तरविधेरावश्यकत्वात्तस्य विश्वजित आदिपदेन संग्रह इति सोमनाथकृतं व्याख्यानं—**अपास्तम्**; प्रकृतकर्मण आश्रयत्वसंभवेऽप्रकृतस्य तत्कल्पने प्रमाणाभावात्, उद्भिदधिकरणेत्वप्रकृतलौकिककर्मणि गुणविधित्वस्योपक्षिप्तस्य प्रतिबन्धोत्तरं दातुमप्रकृतवैदिकविश्वजिदुपन्यासः कृत इति स्पष्टमेव शास्त्रदीपिकायां प्रतीयते । अत एव तदग्रे ज्योतिष्टोमस्यैवाश्रयत्वाभिप्रायेण पूर्वपक्षोपसंहारः कृतः । अत एव प्रकाशकारैः "श्येनस्य सामवैदिकत्वात्तत्र च शाखाभेदेनान्यस्यापि प्रकृतत्वसंभवादादिशब्द" इत्यादिग्रन्थेन संभवाभिप्रायेणादिशब्दः शास्त्रदीपिकागतो व्याख्यातः । अतः प्रकृतज्योतिष्टोमाश्रितस्य श्येनपक्ष्यादिगुणस्य फलोद्देशेन युक्तं विधानम् । काम्यत्वाचोत्पत्तिशिष्टस्यापि सोमस्य नित्यस्य बाधनमपि नायुक्तमिति भावः ॥

(भाष्यवार्तिकादिस्वारस्येन विशिष्टकर्मान्तरविधानमिति पक्षान्तरानुसारणोपपादनम्)

यदितु "नचात्र कर्मणि प्रवृत्तिनिमित्तं किंचिदस्ति, वत्यर्थोपादानेन कर्मणि प्रवृत्तावत्यन्तविप्रकृष्टा गौणता स्यात्, तत्र वरं मत्वर्थलक्षणा । साधनं हि प्रतीतमत्यन्ताविनाभावात् स्वसाध्यां क्रियामक्लेशेनैव प्रतिपादयति विनैवमतुब्लोपेने"ति वार्तिके गौण्यपेक्षया मत्वर्थलक्षणाया ज्यायस्त्वाभिधानात्फलोद्देशेन गुणविधौ तदप्रसक्तेर्वार्तिककृतो नायं पक्षस्सम्मतः; विप्रकृष्टार्थविधानेन। धातुपारार्थ्यापत्तेश्च, लक्षणा गुणविधाविति सिद्धान्तभाष्यविरोधापत्तेश्चेत्यालोच्यते, तदोद्भिदादीनामिवेति पूर्वपक्षभाष्यस्य गुणविधित्वमात्रसाम्येऽप्यविरोधात् उद्भिदधिकरणे विशिष्टविधेः पूर्वपक्षितत्वद्याथाश्रुतेप्यविरोधमभिप्रेत्य वार्तिकानुगुणं विशिष्टकर्मान्तरविधानमपि पक्षान्तरेणाह—**विशिष्टेति** ॥

(ज्योतिष्टोमोद्देशेन केवलगुणविधौ वार्तिकाभिप्रायनिरूपणपरन्यायसुधायाः प्रकाशकारैः खण्डनम्)

**एतेन**—"साधनं ही"ति वार्तिकग्रन्थस्य ज्योतिष्टोमोद्देशेन विधीयमानस्य श्येनादेस्तत्साधनत्वप्रतीतेः स्वसाध्यलक्षकत्वमुक्तमि"ति न्यायसुधाकृतां तद्व्याख्यानं—**अपास्तम्**; अनुवादे मत्वर्थलक्षणाभावस्य शतश उपपादितत्वेन मत्वर्थलक्षणाज्यायस्त्वप्रतिपादनपरसकलवार्तिकग्रन्थस्यासामञ्जस्यापत्तेः । अतो विशिष्टकर्मान्तरविधानपूर्वपक्ष एव वार्तिकतात्पर्यमिति प्रकाशकाराः ॥

(गुणफलसंबन्धपक्षस्येव विशिष्टविधिपक्षस्यापि वार्तिकारूढत्वम्)

**वस्तुतस्तु**—"विधेयं स्तूयते वस्तु भिन्नयोपमया सदा। न हि तेनैव तस्यैव स्तुतिस्तद्वदितीष्यते" । "गुणविधाने च श्येनद्रव्यं विधीयत" इति तदेव स्तोतव्यम् । नच "तस्यैवात्मनैवोपमानं युक्त"मिति सिद्धान्तवार्तिकग्रन्थात् श्येनाख्यगुणमात्रविधानस्यैव पूर्वपक्षो न तु विशिष्टविधानस्य; सिद्धान्त इव यागेनोपमानोपमेयभावोपपत्तेस्तद्दूषणानुपपत्तेः । ज्योतिष्टोमोद्देशेन गुणविधिपूर्वपक्षो नोपमानोपमेयभावानुपपत्त्या दूषितोऽपितु गौरवप्रस्तुतत्वादेव । अत एव मत्वर्थलक्षणोपन्यासाद्विशिष्टविधिपक्षोऽप्यस्तु तत्सम्मत इत्यभिप्रेत्यैव पूज्यपादैस्समानकक्षाद्वयमपि दर्शितम् । वार्तिके विशिष्टविधिपक्षनिरासस्तु स्फुटत्वान्नोक्त इति **ध्येयम्** ॥

(यथा वै श्येन इति वाक्यशेषविरोधः प्रथमपक्ष इति शङ्का)

**नचैवमिति** ॥ आद्यपक्षे "यथा वै श्येन" इत्यर्थवादे अयमिति प्रथमान्तेन विधेयश्येनस्यैव परामर्शादेकस्मिन् भेदाभावे तद्घटितोपमानोपमेयभावासंभवादर्थवादोपात्तसादृश्यावलम्बनेन विधिगतश्येनशब्दस्य वत्यर्थकल्पनया गौणत्वेन नामत्वमेव युक्तमित्याशङ्कार्थः ॥

(वाक्यशेषान्यथानयनोपपत्त्या तद्विरोधशङ्कापरिहारः)

**अन्यथा नेयत्वादिति** ॥ विशिष्टविधिपक्षेऽयंशब्दस्य श्येनद्रव्यकयागरूपविशेष्यपरत्वमङ्गीकृत्योपमानोपमेयभावोपपत्तावपीह "रामरावणयोर्युद्धं रामरावणयोरिवे"त्यादाविव काल्पनिकावस्थादिकृतभेदकल्पनयोपमानान्तराभावलक्षणया वाऽन्यथा नेयत्वमित्यर्थः । ननु अयमेव दोष इत्याशङ्कानिरासायोपक्रमेत्युक्तम् । तथाचोपक्रमेणोपसंहारान्यथानयनं न दोषः । न ह्यत्र विध्युद्देशः सन्दिग्धो येन वाक्यशेषेण निर्णीयेत । एतदभावे "सोमेन यजेते"त्यादाविव गुणविधित्वस्य त्वयाप्यङ्गीकर्तव्यत्वादित्यर्थः ॥

स्यान्यथा नेयत्वात् । "ते तद्विलासा इव तद्विलासा" इत्यादिवदनन्वयालङ्कारस्याभेदे अनुगुणत्वाच्चेति प्राप्ते—

नायमनन्वयालङ्कारः; तथात्वे सर्वेषामर्थवादपदानामुपमानान्तराभावलक्षकत्वापत्तेः, तद्वरं भूयोऽनुग्रहस्य न्याय्यत्वात् उपक्रमस्थ एवैकस्मिन् पदे रूपकविधया लुप्तोपमाविधया वा गौणीं वृत्तिमङ्गीकृत्य नामधेयत्वं द्वितीयवि-

( अनन्वयालङ्कारविधया वाक्यशेषाविरोधोपपादनम् )

**वस्तुतस्तु**—अयंशब्देन समानविभक्तिकत्वादुपमानभूतश्येनस्यैव परामर्शेनाभेद एवोपमानान्तराभावद्योतकस्योपमेयेनोपमानत्वकथनरूपानन्वयालङ्कारस्योपपत्तेर्न दोष इत्याह **—ते तद्विलासा इवेति** ॥ "न केवलं भीतिनितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव । यावद्विलासा इव लास्यवासा" इति चरणत्रयमस्य ज्ञेयम् ॥

( अनन्वयालङ्कारस्य धर्मभेदेऽप्रवृत्तिरिति सोमनाथमतस्य भिन्नयोरप्यैक्याध्यासेनोपपत्त्या खण्डनम् )

**यत्त्वत्र सोमनाथेनोक्तम्**—नचात्रानन्वयालङ्कारः शङ्क्यः; अनन्वये हि धर्मैक्यमावश्यकं, इह तु मत्स्याद्यादानभ्रातृव्यादानरूपधर्मभेदेनानन्वयाप्रसक्तेः, धर्मभेदेऽप्यनन्वयाङ्गीकारे "धर्मार्थकाममोक्षेषु समं प्रपेदे यथा तथैवावरजेषु वृत्ति"मित्यादावपि अनन्वयापत्त्या धर्मभेदनिबन्धनियमोच्छेदापत्तिः । **नच**—एवमिह धर्मभेदनिबन्धनोपमैवास्तु इति—**वाच्यम्**; उपमानोपमेययोर्भिन्नशब्दनिर्देशे एकधर्मिकत्वाप्रतीत्या धर्मभेदनिबन्धनैकधर्मिकोपमायाः प्रकृतेऽनुन्मेषात्—**इति, तन्न**; भिन्नयोरपि धर्मिणोः सादृश्येनैक्यविवक्षयैकधर्मत्वोपपत्तेः । इतरथा सिद्धान्तेऽपि साधारणधर्मैक्याभावेनोपमानोपमेयभावानुपपत्तेः । "धर्मार्थकाममोक्षे"ष्वित्यत्रोपमानोपमेययोरभेदाभावादेवानन्वयाप्रसक्तेः उपमानोपमेययोर्भिन्नशब्दनिर्देश एकधर्मिकत्वाप्रतीत्येत्यादिकल्पनायां "धर्मार्थकाममोक्षेष्वि"त्यादौ धर्मभेदनिबन्धनोपमोक्तेरनुचितत्वाच्च । अत एव वार्तिके अनन्वयालङ्कारो यथा "रामरावणयोर्युद्ध" इत्यादिना शङ्कितः । अतः श्येनमात्रस्यैव फलोद्देशे विधानेऽनन्वयालङ्कारविधयाऽभेदेऽप्युपमानोपमेयभावोपपत्तेर्विशिष्टविधिपक्षेच सुतरां सिद्धान्त इव तदुपपत्तेर्न रूढियागेन नामत्वं युक्तम् ॥ नच विशिष्टविधौ मत्वर्थलक्षणैव दोषः; तस्याः लक्षितलक्षणापेक्षयेव गौण्यपेक्षया ज्यायस्त्वात् । गौण्या हि "अभिधयाऽविनाभूते प्रवृत्तिर्लक्षणेष्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु लक्षणा" इति तत्सिद्धिसूत्रगतवार्तिकोक्तरीत्या गुणलक्षणाया आधिक्यात् गुरुभूतत्वं स्पष्टम् । **अपिच** मत्वर्थलक्षणायां श्रौतार्थस्य श्येनादेर्लोहितोष्णीषादिवद्वाक्यार्थेऽन्वयापरित्यागादितरत्रतु गौणार्थावगमे श्रुत्यर्थस्याविवक्षितस्य वाक्यार्थेऽनन्वयाच्छ्रुतिपीडेति सैव ज्यायसीति भावः ॥

( अभेदे उपमानोपमेयभावानुपपत्त्या काल्पनिकभेदेनापि तदनुपपत्त्यादिनाच श्येननामत्वसिद्धान्तोपक्रमः )

नायं गुणफलसंबन्धविधिः; तथात्वेऽर्थवादावगतोपमानानुपपत्तेः, यद्यपिचेयं स्तुतिर्नात्यन्तस्वार्थसत्यत्वमपेक्षते; तथाप्यालम्बनापेक्षत्वान्नोपमानस्य भेदं विनोपपत्तिः । नचौपचारिकभेदकल्पना युक्ता; तथात्वे एकस्या एव व्यक्तेः कालभेदेनोपमानत्वकल्पने तावद्यया श्येनव्यक्त्या पूर्वं निपत्य मांसादनं कृतं, तया वैरिणो व्यापादनं क्रियते इत्यर्थापत्तेर्निपत्यादत्त इति भूतकाललक्षणा, यथैवं शब्दाभ्यां समभिव्याहृतयोः श्येनपदसर्वनाम्नोः भिन्नार्थकत्वेन प्रतीयमानयोरेकार्थत्वकल्पनेत्यनेकदोषापत्तेः । एवमेकस्मिन्नपि काले व्यक्तिभेदेनोपमानकल्पनायां श्येनपदसर्वनाम्नोः श्येनत्वावच्छिन्नोपस्थापकयोर्ग्राह्यतदितरव्यक्तिलक्षकत्वापत्तिः । पुनश्च विधेयतावच्छेदकश्येनत्वावच्छिन्नस्य स्तुत्यभाव इत्यनेकदोषापत्तिः । **वस्तुतस्तु**—अनन्वये नौपचारिकभेदकल्पनयोपमानोपमेयभावकल्पनम्; रसविघातापत्तेः, किन्तूपमानाभावलक्षणयाऽनन्यान्वितत्वख्यापनमेव । अतश्चात्राप्युपमानान्तराभावप्रतिपादनेऽनेकेषु पदेषु लक्षणापत्तिस्तदपेक्षया एकस्मिन्नुपक्रमस्थेऽपि श्येनपद एव निरूढलक्षणया नामत्वाश्रयणं युक्तमित्यभिप्रेत्य सिद्धान्तमाह—**नायमिति** ॥ **न्याय्यत्वादिति** ॥

( श्येनपदे रूपकविधया गौणीवृत्तिनिरूपणम् )

जघन्यानामपि भूयसामनुग्रहः कर्तव्यः, मुख्यानुग्रहस्तु समसंख्यविषय इति द्वादशे वक्ष्यमाणत्वान्न्याय्यत्वमित्यर्थः । अत्र च भिन्नयोराहार्याभेदकल्पनात्मकरूपकविधया गौणीति केषांचिन्मतमनुसृत्याह—**रूपकविधयेति** ॥

( वेदे रूपकविधया गौणवृत्त्यसंभवेन लुप्तोपमाविधया नामत्वव्यवस्थापनम् )

**वस्तुतस्तु**—वेदे कल्पकपुरुषाभावान्न क्वापि रूपकम् । **अत एव**—"यद्यध्यासेन वक्तॄणां गौणी वृत्तिः प्रकल्पते । वेदे सा न कथंचित्स्यादध्यारोपयितुर्विना" इति वार्तिके तत्सिद्धिसूत्रे समारोपिततद्भावो गौणीति मतं—**निरस्तम्** । अत अभेदारोपासंभवात्साधारणधर्मवाचिपदाभावाद्विधिगतश्येनपदे लुप्तोपमेत्यभिप्रेत्य पक्षान्तरमाह—**लुप्तोपमेति** ॥ गौणी वृत्तिरित्यनेन शक्त्यन्तरकल्पनापत्तिर्निरस्ता । यद्यपि गौणीतो मत्वर्थलक्षणा ज्यायसी; तथापि विधौ तदापत्तिः । मम त्वनुवादभूते नामधेय इति वैषम्यान्न दोषः ॥

**(श्येननामत्वे द्वितीयविधिप्रकाराश्रयणप्रयुक्तलाघवोपपादनम्)**

द्वितीयविधीत्यनेन विशिष्टविधिपक्षो गौरवापत्तेर्निरस्तः। एवंच प्रसिद्धश्येनातिरिक्तं तत्सदृशं च यागरूपमभिचारफलजनकं श्येनपदप्रतिपाद्यमित्येतावदवगते ज्योतिष्टोमस्य संज्ञान्तरावरोधात्तत्रानुपपत्तेः संज्ञयैव कर्मान्तरत्वसिद्धिः। निरूढ्यङ्गीकारप्रयोजनं तु "समानमितरत् श्येनेने"त्यादौ प्रसिद्धश्येनयागोपस्थितिरेव न तु रूढ्या श्येनपक्षिणो ग्रहणम्। नच यागस्य भ्रातृव्यादानसाधनत्वेन श्येनसादृश्योपपत्तेः विधेयवेतसावकस्तुत्यर्थमपां स्तुतिरिव यागस्तुतिः; विधेयगताया एव स्तुतेरन्यत्र संचारदर्शनात्। नच यागविधावपि तद्विशेषणतया द्रव्यस्यापि विधेयतोपपत्तिः॥

**(साकाङ्क्षस्योपक्रमस्योपसंहारानुसरणोपपादनम्)**

एतावता च गुणफलसंबन्धविधाने विप्रकृष्टविधानधातुपारार्थ्योपत्तौ विशिष्टविध्यङ्गीकारे च गौरवापत्तौ च द्वितीयविधिप्रकारापादकत्वोक्त्या सूचितायां यदि कश्चिदत्रोपसंहारप्राबल्यमापादयेत्तं प्रत्याह—**अर्थवादस्त्विति॥ अयमर्थः**—नात्रोपसंहारानुरोधेनोपक्रमान्यथाकरणम्, किंतु पूर्वोक्तदोषापत्त्या लाघवेन श्येननामकयागविधाने निश्चिते श्येनशब्दस्य यागनामत्वाय ज्योतिष्टोमनाम्न इव प्रवृत्तिनिमित्तापेक्षानुरोधेनैव वाक्यशेषोपदर्शितसादृश्यावलम्बनेन गौणत्वाङ्गीकरणमित्युपक्रमाकाङ्क्षयैव वाक्यशेषानुसरणम्। **अत एव**—यत्र चैवमुपक्रमस्याकाङ्क्षा, तत्र तद्विरुद्धोपसंहारार्थानुसरणं नैवाङ्गीक्रियते, यथा—अवकाभिरग्निं विकर्षतीत्यत्रावकाशब्दस्य "आपो वै शान्ता" इत्यर्थवादानुसारेण नाप्सु लक्षणाभ्युपेयते, गुणवादसूत्रे जनकाप्स्तुतिद्वाराऽवकानामेव स्तुतिरिति विधिस्तुत्योर्वैयधिकरण्यपरिहारात्। उपसंहारमात्रप्राबल्यवादिनस्तत्राप्यप्सु लक्षणापत्तिर्दुर्वारैव। अतस्तत्र निराकाङ्क्षस्य न वाक्यशेषानुसरणमिति नोपसंहारप्राबल्यापत्तिरिति॥ एतच्चापेक्षितेति पदेन पूज्यपादैर्ध्वनितम्॥

**(पक्षिपरत्व एवार्थवादाञ्जस्येप्युपक्रमे श्येननामत्वनिर्णयात् तदनुसारेणोपसंहारनयनमिति उपक्रमपराक्रमवादगतविषयानुवादः)**

**यत्तु**—अत्रोपक्रमपराक्रमवादे पक्षिपरत्व एवार्थवादाञ्जस्यं यागपरत्वे चानांजस्यमुपपादितम्, **तथाहि**—पक्षद्वयेऽपि तावत्तत्रोपमानभागस्य "यथा श्येनः पक्षी निपत्य मत्स्यादिकमादत्ते इत्यर्थः। तत्र मत्स्यादिकमित्यस्यानुपादानेऽपि प्रसिद्धस्यैव दृष्टान्तीकर्तव्यतया तल्लाभात्। उपमेयभागस्य त्वेवमयं यजमानस्य शत्रुं मारयतीत्यर्थः। पक्षिणि यागेचोभयत्रापि शत्रोर्मुख्यस्य निपत्यादानस्यासंभवात् पक्षिपक्षे फले यागे वा साधनत्वेन विनियुक्तस्य पक्षिणः शत्रोरादाने व्यापारासंभवात्। यागपक्षे क्रियायां निपतनादानक्रिययोः सवैथैवासंभवाच्च। एवंच वाक्यशेषस्य पक्षिपरत्वे यथा श्येनपक्षी निपत्य मत्स्यादिकमादत्ते एवमयं फले यागे वा विनियुक्तः श्येनः पक्षी यजमानस्य शत्रुं मारयतीत्यर्थः। अत्र श्येनपक्षिनिष्ठयोः लोकप्रसिद्धमत्स्याद्यादानविध्युद्देशोपात्तद्विषन्मारणयोरेवोपमानोपमेयभावः प्रतीयते, न तु श्येनस्यैव श्येनेनेति नात्र भेदेन सादृश्यानुपपत्तिः। यद्यपि तयोः साधारणधर्मो नोपात्तः; तथापि यथा जले स्वच्छन्दं विहरतो मत्स्यस्य श्येनकृतनिपत्यादानं झटित्यशङ्कितोपस्थितं भवति, तथा तत्कृतं द्विषतां मारणमपीति गम्यमानसाधारणधर्मोऽस्त्येव। तथाच "कप्यासं पुण्डरीकमेवमक्षिणी"त्यादाविव गम्यमानसाधारणधर्मेणोपमानोपमेयभावनिर्देशे न कदाचिदनुपपत्तिः। अवश्यं च तस्य साधारणधर्मस्य गम्यमानत्वं पक्षान्तरेऽप्यभ्युपगन्तव्यम्। अन्यथा द्विषन्मारणमात्रस्य विध्युद्देशगतत्वेन वाक्यशेषात् दृष्टान्तबलेन तदवगतशैघ्र्यानवगमे ततः प्रवृत्तिविशेषकरस्तुतिविशेषालाभप्रसंगात्। तथाच प्रच्छन्नतया गृहं प्रविश्य प्रच्छन्नतयैव निर्गते चैत्रे तस्य प्रच्छन्नतया गृहप्रवेशमात्रं जानानमन्यं प्रति यथा देवदत्तो गृहं प्रविष्टः, तथैवायं निर्गत इति वाक्येन देवदत्तनिष्ठयोरेव प्रवेशनिर्गमनयोः प्रच्छन्नत्वकृतत्वरूपगम्यसाधारणधर्मेणोपमानोपमेयभाव उच्यते, न तु देवदत्तस्यैव देवदत्तेनेति मुख्य एवोपमानोपमेयभावः, तथात्रापीत्युपपद्यते। अयमित्यस्य च सन्निहितप्रथमान्तपदोक्तपक्षिपरत्वे आर्जवं लक्ष्यते। यागपरत्वे तु वाक्यशेषस्थस्यायमित्यस्य व्यवहितयज्ञमात्रकरणपरामर्शित्वेनानार्जवप्रसंगात् पक्षियागयोश्चामुख्य उपमानोपमेयभावः स्यात्; अनुगतसाधारणधर्माभावेन मुख्यसादृश्यस्यासंभवात्। पक्षिणि मत्स्यादिकर्मकं मुख्यं निपत्यादानम्, यागे भ्रातृव्यकर्मकं मारणमेव। तदेवाशङ्कितोपस्थितिकत्वगुणयोगेन तथोपचरितं मुख्यं निपत्यादानमिति तत्प्रयोज्यं पक्षियागयोरमुख्यमेव सादृश्यम्। **नच**—यागपरत्वपक्षेऽपि पक्षियागगतयोर्मत्स्याद्यादानभ्रातृव्यमारणयोरेवोपमानोपमेयत्वमुचितम् **इति—वाच्यम्**; तावता यागे श्येनशब्दप्रवृत्तिनिमित्तस्य श्येनसादृश्यस्यालाभादुपसंहारानुसारेण श्येनशब्दगौणत्वोक्त्ययोगात्। एवमाञ्जस्ये विद्यमानेऽपि उपक्रमे लाघवानुसारेण यागमात्रविधिनिर्वाहाय श्येनशब्दस्य यागनामधेयत्वसिद्धये प्रवृत्तिनिमित्ताकाङ्क्षायां रूढस्य तत्र मुख्यप्रवृत्तिनिमित्तासंभवे गौणप्रवृत्तिनिमित्तलाभायोपक्रमाकाङ्क्षानुसारेणैव वाक्यशेषेऽयमित्यस्य व्यवहितकरणपरामर्शित्वं वाक्यशेषस्यामुख्यसादृश्यपरत्वकल्पितमित्यत्रोपक्रमानुसारेणोपसंहारो नीत—**इति,**

**(अर्थवादस्य श्येनयागोभयदृष्टान्तदार्ष्टान्तिकभाव एवोपपत्त्योपक्रमपराक्रमखण्डनम्)**

**तदयुक्तम्**; अयमिति सर्वनाम्ना श्येनादन्यस्यैवार्थस्य प्रतीयमानत्वेन श्येनपरामर्शायोगादेकश्येननिष्ठक्रिययोरुपमानोपमेयभावानुपपत्तेः, साधनत्वेन विनियुक्तव्यक्त्यन्तरमा-

धिप्रकारापादकं युक्तमाश्रयितुम् । अर्थवादस्तु रूपकाद्यपेक्षितसादृश्योपपादनार्थः सन्विनैव लक्षणां पूर्णोपमालङ्कारविधया विधेययागस्तुत्यर्थो न विरुध्यते । तत्सिद्धं चतुर्भिरेव प्रकारैः सर्वत्र नामत्वमिति ॥ ५ ॥ २१ ॥ इति पंचमं तद्व्यपदेशाधिकरणम् ॥

---

दायायंशब्देन परामर्शे श्येनत्वावच्छिन्नप्रतियोगिताकभेदस्य प्रतीयमानस्य बाधापत्तेः । यद्यत्र "यथा श्येनो निपत्यादत्ते एवं द्विषन्त"मित्येतावदेव स्यात्तदेकश्येननिष्ठक्रिययोः संभवेदपि सः । नचैतदस्ति, अत एव दृष्टान्तेऽपि अयंपदसत्त्वे तन्निष्ठक्रिययोरुपमानोपमेयभावो दुरुपपाद एव । आकरेऽपि संभवति तु भेदकल्पनेत्युक्त्वौपचारिकभेदकल्पनेत्यादिना प्रतीयमानभेदनिर्वाहाय पराक्रान्तम् । तथापि यथैवंशब्दयोरपि व्यवहितेनान्वयापत्त्या सामञ्जस्याभावस्य तुल्यत्वाच्च । अतः प्रतीयमानभेदनिर्वाहाय यागश्येनयोरेवोपमानोपमेयभावः समञ्जसः । एवंच प्रवृत्तिनिमित्तसमर्पकतया वत्यर्थकवाक्यशेषस्य स्वाध्यायविध्यवगतं दृष्टं प्रयोजनं लभ्यते । तव तु अन्यथाऽपि स्तुतौ वत्यर्थेनैव प्ररोचितमभ्युदयकारीत्येवं नियमाद्दृष्टकल्पनापत्तिरिति ॥ एतच्च यथैवंशब्दाभ्यां समभिव्याहृतयोः श्योनसर्वनाम्नोर्न भिन्नार्थत्वेन प्रतीयमानयोरेकार्थत्वकल्पनेत्यादिना भिन्नार्थत्वकथनेन कौस्तुभे पूज्यपादैः सूचितम् ॥

### ( बिम्बप्रतिबिम्बभावमूलकपूर्णोपमालङ्कारविधया लक्षणां विनैव यागस्तुत्यर्थत्वमर्थवादस्येति निरूपणम् )

**विनैव लक्षणामिति** ॥ उपमानान्तराभावलक्षणां विनेत्यर्थः ॥ **पूर्णोपमालङ्कारविधयेति** ॥ अत्रच पूर्वोक्तरीत्याऽऽशङ्कितोपस्थितत्वादिगुणयोगेन मत्स्याद्यादानद्विषन्मारणयोरेकधर्मत्वविवक्षया पूर्णोपमत्वमेष्टव्यम् । यागे हि प्रवृत्तिनिमित्तप्रतिबन्धकारुचिनिरासाय स्तुतिरपेक्षिता । द्रव्ये तु स्वतः प्रवृत्त्यभावात् न तत्स्तुतिरत्यन्तमपेक्ष्यत इति तत्स्तुत्या तत्साध्ययागस्तुतिकल्पनेति विप्रकर्षो विशेष इति यागस्तुत्यर्थ इत्यनेन सूचितम् ॥

### ( सन्दंशादिनामत्वव्यवस्थापनम् )

एवं सन्दंशादिपदानामपि "यथा ह दुरादानं सन्दंशेनाददीतैवमेतेनादत्त" इत्यर्थवादे तत्रायःपिण्डग्रहणसाधनलोहमयसन्दंशेनोपमानदर्शनान्नामधेयत्वं ज्ञेयम् ॥

### ( यौगिकत्वेन सह चातुर्विध्यं नामधेयत्वप्रकारस्येति निरूपणम् )

अपिवा नामधेयमित्यत्र क्व गुणविधित्वं क्व नामधेयत्वमिति कोष्ठशोधनिकार्थमारम्भ इति प्रतिज्ञातं, तन्नामत्वे प्रकारचतुष्टयापेक्षतां सूचयितुमुपसंहरति—**तत्सिद्धमिति** ॥ अत्र उद्भिदधिकरणे यौगिकत्वमेव नामतासाधकं, मत्वर्थलक्षणा तु गुणविधित्वनिरासद्वारा तदुपोद्बलिका । तदापत्त्यभावेऽपि फले यागे वा गुणविधिपूर्वपक्षस्य यौगिकत्वेनैव निरासेन नामताप्रसाधनेनायुक्तत्वात्, मत्वर्थलक्षणापत्तिमात्रेण सोमादौ नामतानङ्गीकाराच्च । अतो यौगिकत्वेन सह चातुर्विध्यं ज्ञेयम् । **अतएव**—शास्त्रदीपिकायां यौगिकस्येवोक्तम् । कौस्तुभे मत्त्वर्थलक्षणोक्तिरपि यौगिकत्वोपलक्षणतयैव नेया ॥

### ( नामत्वे उत्पत्तिशिष्टबलीयस्त्वस्य पञ्चमप्रकारतामतनिरूपणं तत्खण्डनंच )

वैश्वदेवाधिकरणगतन्यायसुधावलम्बनेनोत्पत्तिशिष्टगुणबलीयस्त्वस्यापि नामधेयत्वे प्रकारत्वमिच्छन्ति केचित् । यथाहुर्वैश्वदेवाधिकरणे "गुणान्तरावरुद्धत्वान्नावकाशो गुणोऽपरः । विकल्पोऽपि न वैषम्यात्तस्मान्नामैव युज्यते" इति ॥ तन्निराससूचनार्थैवकारः । तन्निरासस्तत्रैव निरूपयिष्यते ॥

### ( वैश्वदेवज्योतिरादिपदानां यथासंभवं उद्भिदाद्यधिकरणविषयत्वोपपादनम् । पौनरुक्त्यपरिहारश्च )

सर्वत्रेत्यनेनैतदुक्तं भवति । यद्यपि "अथैष ज्योतिरथैष सर्वज्योति"रित्यत्र ज्योतिरादिपदे प्रथमनिर्दिष्टे द्रव्यस्य क्रतुवाचकपदसमभिव्याहाराभावे तदङ्गत्वेन विनियोगायोगात् प्रकरणेन च सिद्धरूपस्याविनियोगात् "एतेन सहस्रदक्षिणेन यजेते"त्युत्तरवाक्यगतैतच्छब्देन पूर्ववाक्यगतप्रथमानिर्दिष्टानां परामर्शेन ज्योतिष्टोमयागानुवादेनैतच्छब्दोपनीततया गुणपरताशङ्का भवति; तथापि तदनुवादेन तेषां गुणानां सहस्रदक्षिणायाश्च विधाने वाक्यभेदापत्तेश्चित्रापदवदेव न गुणपरत्वम्; अपितु नामत्वमेव; वाक्यभेदापादकगुणादेश्च कर्मान्तरकल्पनस्योचितत्वात् । एतदभिप्रायेणास्मिन्नधिकरणेऽपि चवाक्यान्तरेषु यदा तृतीयानिर्देशं प्रतिपद्यन्ते, तदा विचार्यन्त इति वार्तिके तद्व्यपदेशाधिकरणविचार्यत्वं ज्योतिरादिपदानामापाततः प्रतीयमानमपि तद्व्यपदेशरहितत्वेनायुक्तं मत्वा ज्योतिरादिशब्दानामुद्भिदाद्यधिकरणेषु यथासंभवं निवेशो भविष्यतीत्यभिप्रायेण न्यायसुधाकृता व्याख्यातम् । अतस्तत्रापि युक्तं नामधेयत्वम् । एवं दर्वीहोमवैश्वदेवादिपदानामपि नामधेयत्वं तत्प्रख्यन्यायेन द्रष्टव्यम् । वैश्वदेवाधिकरणे तु तदेव वैश्वदेवपदस्याक्षिप्य समाधीयते । अष्टमे त्विह सिद्धमेव नामधेयत्वम् अपूर्वतादिविचारार्थं प्रसङ्गादुक्तमिति न पौनरुक्त्यमिति । प्रयोजन**माद्यपूर्वपक्षे** सोमबाधेन श्येनपक्षिणा ज्योतिष्टोमानुष्ठानम्, **द्वितीयपक्षे** प्राणिद्रव्यकत्वाद्ग्नीषोमीयविध्यन्तः, **सिद्धान्ते तु** सोमद्रव्यकः सोमयागविकृतिरिति स्पष्टत्वान्नोक्तम् ॥ **इति पञ्चमं तद्व्यपदेशाधिकरणम्** ॥

( ६ अधिकरणम् ।)

**नामधेये** ॥ पूर्वमुभयत्र विशिष्टविधिपूर्वपक्षे यानि दूषणानि मत्वर्थलक्षणादीनि दत्तानि तानीह आक्षिप्यन्ते । यदि हि यागस्य कारकत्वं स्यात्, ततः सोमादीनां कारकान्तराणां तदन्वयानुपपत्तेर्भवेन्मत्वर्थलक्षणा, उभयशिष्ट-

**( पूर्वतनाधिकरणचतुष्टयेनास्याक्षेपसङ्गतिनिरूपणम् )**

अधिकरणचतुष्टयेनास्याक्षेपिकां सङ्गतिं दर्शयति—**विशिष्टविधिपक्षे इति** ॥ यागानुवादेन गुणविधिपक्षस्याप्युपलक्षणम्; अग्रे मत्वर्थलक्षणादीनीत्यादिशब्दबहुवचनयोरुपादानात् । **मत्वर्थलक्षणादीनीति** ॥

**( तन्त्रसंबन्धेनाक्षेपो यत्र यत्र पूर्वन्यायविषयेषु भवति तस्य सर्वस्योदाहरणत्वोपपादनम् )**

आदिपदेन यागानुवादेन गुणविधानपूर्वपक्षे यत् फलपदानर्थक्यं, फलोद्देशेन तद्विधौ गुणपदानर्थक्यमिति दोषद्वयं तद्व्यपदेशन्यायश्चेति संगृह्यते । तन्त्रसंबन्धेनेह पूर्वपक्षे तयोरपि उद्धारात्, न तु न्यायसुधाकृदुक्तस्यापि पूर्वन्यायचतुष्टयस्य ग्रहणं, तन्त्रसंबन्धेन पूर्वन्यायाक्षेपासंभवात्, नहि यौगिकत्वन्यायेन सामानाधिकरण्येन चोक्तं नामत्वं तन्त्रसंबन्धेन निराकर्तुं शक्यते, न वा चित्राधिकरणोक्तवाक्यभेदः; गुणद्वयस्य यागद्वये तन्त्रत्वोपपत्तावपि विध्यन्वयतन्त्रत्वे प्रमाणाभावेन तदसंभवात्, नापि तत्प्रख्यतद्व्यपदेशावपि । अतो यत्र यत्र विशिष्टविधिपूर्वपक्षस्तत्रापाद्यमानमत्वर्थलक्षणाक्षेपो यत्र यागानुवादेन गुणविधिपूर्वपक्षस्तत्र फलपदानर्थक्यादिदोषाक्षेपश्चेह क्रियेते । तत्रापि नाम्निहोत्रवाक्ये विशिष्टविधिपूर्वपक्षेऽपि बहुव्रीहिणैव मत्वर्थभानान्मत्वर्थलक्षणाया अप्रसक्तेर्नैतदाक्षेप इति सूचयितुं संभवाभिप्रायेण यत्र यत्रेति वीप्सोपादानं कृतम् । अत एव तत्प्रख्यान्यशास्त्रोदाहरणं समिदादिवाक्यं विशिष्टविधिपक्षे मत्वर्थलक्षणाप्रसक्तेः तदाक्षेपार्थं भवत्येवोदाहरणम् ॥

**( विशिष्टविधिपूर्वपक्षे श्येनवाक्यस्यापि एतदधिकरणविषयत्वस्य कौस्तुभाविरोधेनोपपादनम् )**

एवं श्येनवाक्ये विशिष्टविधिपूर्वपक्षे तन्त्रसंबन्धेन मत्वर्थलक्षणानिरासे सति विशिष्टयागविधेः निर्दुष्टत्वात् श्येनभिन्नस्य यागस्योपमेयतोपपत्तेः विशिष्टविधिगौरवस्य रूढ्यनुरोधेन सोमादिवाक्य इव स्वीकारे बाधकाभावात् पूर्वाधिकरणस्यापि आक्षेपात्तदुत्तरमप्यारम्भो न विरुध्यते ॥ **एतेन**—मत्वर्थलक्षणाक्षेपे उद्भिदधिकरणानन्तरमेव अस्यारम्भापत्तेः असाङ्गत्योपपादनं न्यायसुधाकृतो—**निरस्तम्** । **यत्तु**—कौस्तुभे पूज्यपादैः तद्व्यपदेशन्यायस्तु नैवोद्धर्तुं शक्यत इत्युक्तम्, तत्साक्षात्तन्त्रसंबन्धस्य तन्निरासाक्षमताभिप्रायेण नेयम् । अत एव न्यायसुधायां विशिष्टविधिमङ्गीकृत्यैव तद्व्यपदेशन्यायाक्षेपो दर्शितः ॥

**( वाजपेयवाक्ये तत्प्रख्यन्यायविषयेऽपि एतन्न्यायप्रवृत्तिरिति प्रकाशकौस्तुभग्रन्थयोः प्रौढिवादत्वोपपादनम् )**

**यत्तु** प्रकाशकारैस्तदनुसारेण पूज्यपादैश्च कौस्तुभेऽग्निहोत्रवाक्ये प्रसक्तमत्वर्थलक्षणाक्षेपासंभवेऽपि वाजपेयोदाहरणे तत्प्रख्यन्यायविषये बहुव्रीह्यपेक्षया कर्मधारयं लघुत्वेनाश्रित्य तत्र प्रसक्ताया मत्वर्थलक्षणाया आक्षेपसंभवः । अत एव आक्षेपस्य साधारण्येऽपि तत्प्रख्यन्यायविषयेऽपि मत्वर्थलक्षणाप्रसक्तिद्योतनाय वाजपेयवाक्योपन्यास आकरे—**इत्युक्तम्**, तत् पेयविशेषणस्य कर्मधारयपक्षे पूर्वनिपातापत्तेः स्वरविसंवादापत्तेश्च प्रौढिवादमात्रम् ॥

**( वाजपेयोदाहरणस्य पूर्वाधिकरणाविषयत्वपरन्यायसुधाखण्डनेनाक्षेपार्थत्वसमर्थनम् )**

**यदपि**—न्यायसुधायामपूर्ववाजपेयोदाहरणानर्थक्यं परिहृतम्; वाजं पेयमस्मिन्निति बहुव्रीहिणैव मत्वर्थलाभान्मत्वर्थलक्षणानापत्तेः, पेयस्य च वाजशब्दवाच्यान्नविशेषणत्वोपपत्तेः पानार्हत्वविशिष्टैकार्थविधानोपपत्तेरवाक्यभेदात्तत्प्रख्यान्यशास्त्रतद्व्यपदेशयोश्चाभावात् पूर्वन्यायचतुष्टयेन गुणविधित्वनिरासासिद्धेर्वैरूप्यापत्त्या तन्निरासाय वाजपेयोदाहरणम्—**इति, तदपि न**; तथात्वे उद्भिन्न्यायाविषयत्वायाग्निहोत्रपदे इव बहुव्रीहेराश्रयणे मत्वर्थलक्षणाया अप्रसक्तौ तन्त्रसंबन्धेन तदुद्धारार्थैतदधिकरणविषयत्वस्याप्यनापत्तेः । सिद्धान्तेतु सुराग्रहविधानात्तत्प्रख्यतयैवाकरेऽभिहितया गुणविधिनिरासस्सिद्धेः तन्निरासस्यानपेक्षणाच्च । अतो यौगिकत्ववाक्यभेदतत्प्रख्यन्यायान्विना यानि दूषणानि मत्वर्थलक्षणादीनि तानि इह आक्षिप्य समाधीयन्त इति भावः ॥

**( धात्वर्थस्य भावनायां संबन्धसामान्येन तत्र च गुणादीनां करणत्वादिना चान्वयनिरूपणपूर्वकं विशिष्टविध्यसंभवरूपपूर्वपक्षोपपादनम् )**

**तदन्वयानुपपत्तेरिति** । कारकाणां क्रिययैवान्वयात् कारकान्तरीभूतो धात्वर्थस्तच्छब्दार्थः । उद्भिदधिकरणे मत्वर्थलक्षणापरिहारेण गुणस्य भावनायामेव कारकत्वेनान्वयस्य स्वयं साधितत्वात् गुणयागोभयविशिष्टभावनाविधानाश्रयणेन यद्गौरवं तदप्याश्रयणीयं स्यादित्याह—**उभयेति । नत्वेतदिति** ॥ यजेतेत्यत्र यागगतकर्मत्वकरणत्वप्रतिपादकशब्दाभावादिति शेषः । यद्यपि भावार्थाधिकरणेऽतिरिक्तभावना साधयिष्यते; तथापि तस्य यत्नरूपस्य कारकाजन्यत्वात् न

भावनाविधानं वा । नत्वेतदस्ति; यागस्य क्रियारूपत्वाङ्गीकारात् । अतश्च तस्मिन् सर्वकारकाणां भावनावदेव विनैव मत्वर्थलक्षणां विनैव च वैरूप्यं संबन्धोपपत्तिः । यागस्य च क्रियात्वेऽपि संबन्धसामान्येन भावनाऽन्वयो न विरुध्यते । भावना वा वैयाकरणवदतिरिक्ता नैवाङ्गीक्रियते । अतश्चोद्भिदादिष्वपि सर्वत्र गुणविधित्वमेव, वाजपेयोदाहरणं तु मूले गुणसूत्रानुरोधेनेति प्राप्ते—

पचतीत्यस्य पाकं करोति पाकेन करोतीति विवरणाद्धात्वर्थस्य कर्मत्वकरणत्वान्यतरकारकत्वेनैव भावनाऽन्वयः । भावना च यथाऽतिरिक्ता तथा वक्ष्यते । अतश्चेतरकारकाणां धात्वर्थान्वयानुपपत्तेरगत्योभयविशिष्टभावनाविधानं सोमादावङ्गीकृतम् । प्राचीनरीत्या वा मत्वर्थलक्षणा । अन्यथा

---

तत्र कारकाणां अन्वयः संभवति; धात्वर्थद्वारकाश्रयणे तदपेक्षया तत्रैव तदन्वयस्य युक्तत्वात् । अतः सर्वाण्यपि कारकाणि धात्वर्थेनैवान्वीयन्ते । अत एव कारकान्वयित्वात् न तस्य कारकत्वम्, अपितु क्रियारूपत्वमेवेति यथैव सिद्धान्ते सकलकारकान्वितभावना क्रियारूपैव सती प्रत्ययेनोच्यते, तथैव धातुना ममापि क्रियारूप एवार्थ उच्यते । अत एव न भावनावदेव कर्मत्वकरणत्वादिकृतवैरूप्यमपि । एवं च सकलकारकविशिष्टस्य धात्वर्थस्य संबन्धसामान्येनैवान्वयः । "प्रकृतिप्रत्ययौ सहार्थं ब्रूत"इत्यनुशासनमपि संबन्धसामान्याभिप्रायम् । अत एव एतदनुशासनबलादेव निरूढलक्षणया संबन्धस्य पदार्थविधया भानम् । नच कारकातिरिक्तस्य नैव भावनायामन्वय इति नियमोऽस्ति; "एतस्यैव रेवतीष्वि"ति वाक्ये भावनायाश्चापि तदन्वयाङ्गीकारात् । **अथवा**—प्रधानान्वयानुरोधेन भावनायामेव कारकाणामन्वयः; तथापि धात्वर्थस्य संबन्धसामान्येनैव तस्यामन्वयादेकस्मिन् यागे गुणनिरूपिते कर्मत्वे फलनिरूपिते च करणत्वे अङ्गीक्रियमाणेऽपि शाब्दबोधे तेन तेन रूपेण प्रतीत्यभावात् न वैरूप्यापत्तिरिति करणत्वेनानवगमात् न तदन्वयार्थं मत्वर्थलक्षणाद्यापत्तिरित्यभिप्रेत्याह—**यागस्येति** ॥ भावार्थाधिकरणं असिद्धं मत्वैतद्विचारप्रवृत्तिरिति पक्षान्तरेणाह—**भावना वेति**॥

**( उदाहरणान्तरपरित्यागेन वाजपेयोदाहरणाशयः, तत्र न्यायसुधाप्रकाशकारयोर्मतखण्डनंच )**

यद्यपि वाजपेयपदे बहुव्रीह्याश्रयणे न मत्वर्थलक्षणाप्रसक्तिः, कर्मधारये पेयपदस्य पूर्वनिपातापत्तिः; तथापि बहुव्रीहेराश्रयणेऽपि नान्यपदार्थो यागः पूर्वपक्षेऽभिप्रेतः, येन वाजपेयसुबन्तेनोपात्तं द्रव्यं गुणत्वेन विधीयत इति पूर्वपक्षाशयेन मत्वर्थलक्षणाप्रसक्तिर्न संभवतीत्युच्यते, किन्तु वाजं अन्नं पेयम् यस्मिन्निति सुराद्रव्यवत् यत् कर्म तदेवान्यपदार्थत्वेन विवक्षितमित्यभिप्रायः । तथाच समासेनैवान्यपदार्थतया सुराद्रव्यविशिष्टकर्मविधानाशयेन प्राचीनैः प्रसज्यन्मत्वर्थलक्षणाकवाजपेयोदाहरणमेव किमर्थं दर्शितमिति शङ्कां परिहरति—**वाजपेयेति** ॥

**( गुणसूत्रप्रवृत्तिप्रयोजनम् )**

**गुणसूत्रानुरोधेनेति** ॥ अत्रच "तुल्यत्वात् क्रिययोर्न"ति गुणसूत्रं वाजपेयस्यान्नद्रव्यकत्वेन द्रव्यसादृश्यस्य बलवत्वादैष्टिकविध्यन्तरस्य पूर्वपक्षे प्राप्ते सोमधर्माणां दीक्षोपसदादीनामप्राप्तौ "सप्तदशदीक्षो वाजपेयः" "सप्तदशोपसत्कोवाजपेय" इति दीक्षोपसदनुवादलिङ्गदर्शनानुपपत्तिप्रदर्शनार्थम् । तद्धि वाजपेय एव संभवति नान्यत्रेति तदनुरोधेन वाजपेयोदाहरणं न तु न्यायसुधाकृत्प्रकाशकारोक्तरीत्येत्यर्थः ॥

**( धात्वर्थस्य संबन्धसामान्येन भावनान्वयनिरासेन कर्मत्वकरणत्वादिनान्वयनिरूपणपूर्वकं सोमेन यजेतेत्यादौ सर्वत्र मत्वर्थलक्षणा समर्थनम् )**

यदि संबन्धसामान्येन यागभावनयोरन्वयस्ततो गुणफलयोरेकस्याप्ययोग्यत्वाद्यागान्वयानुपपत्तिः । यागसंबन्धिभावनायाः फलगुणाकाङ्क्षाभावात् । अतो यागकरणकभावनाया एव साधनाकाङ्क्षितत्वेन तत्तद्रूपेणैवान्वयो युक्तः । यदा पूर्वोक्तविवरणानुरोधाद्भावनायाः धात्वर्थातिरेकेण धात्वर्थस्य च करणत्वकर्मत्वान्यतरकारकत्वप्रतीतिस्तदा सुतरां तेनैव रूपेणान्वयः । विधिसमभिव्याहारसत्त्वे धात्वर्थस्यापुरुषार्थस्य करणत्वेनैव भावनान्वयः । तदभावे पुरुषार्थत्वावगतौ वा कर्मत्वेनैवेति न संबन्धसामान्येनान्वय इति करणत्वेन भावनान्वये पार्ष्ठिकान्वयवेलायां योग्यत्वात् फलेनैवान्वयः स्यान्नतु गुणेन विधिसमभिव्याहारे सत्यपि कथंचित् कर्मत्वाभ्युपगमे गुणेनैवान्वयः, स्यान्न फलेन । उभयरूपत्वावगत्यङ्गीकरणं तु युगपत् बोधे विरुद्धम् । श्रूयमाणस्यैव क्रमिकबोधद्वयजनकत्वस्वीकारे आवृत्तिलक्षणो वाक्यभेद इत्यभिप्रेत्याह—**अतश्चेति** ॥

**( मत्वर्थलक्षणां विनोभयोर्गुणफलयोर्यागान्वये प्रसक्तविरुद्धत्रिकद्वयस्वरूपादिनिरूपणम् )**

मत्वर्थलक्षणां विनैव श्रुत्यैवोभयोर्यागान्वये विरुद्धत्रिकद्वयापत्तिमाह—**अन्यथेति** ॥ युगपत् बोधे हि साध्यस्य फलादेः प्रयोजनत्वात् प्राधान्यं, साधनस्य तु साध्यार्थत्वेन पारार्थ्यात् शेषत्वापरपर्यायं गुणत्वं प्रसिद्धमेव । प्राधान्यस्य च कृत्युद्देश्यत्वं विना अनुपपत्तेरुद्देश्यत्वापादकत्वं, अप्राप्तस्य चोद्देष्टुमशक्यत्वात् प्राप्तानुकीर्तनरूपानुवादापादकत्वम् । एवं शेषत्वस्य शेषिपारतन्त्र्यापाद्यत्वलक्षणोपादेयत्वापादकत्वम्, उपादेयत्वस्य च विध्यधीनत्वाद्विधेयत्वापादकत्वमित्येवं साधनत्वे गुणत्वोपादेयत्वविधेयत्वं त्रिकं, साध्यत्वे प्राधान्योद्देश्यत्वानुवाद्यत्वं च त्रिकमेकस्य यागस्य विरुद्धम् । क्रमिकबोधे-

श्रुत्यैव फलगुणयोर्यागान्वये फलान्वयार्थं यागस्योपादेयत्वविधेयत्वगुणत्वानि गुणान्वये चोद्देश्यत्वानुवादत्वप्राधान्यानीति विरुद्धत्रिकद्वयापत्तेः । उपादेयत्वादिनिरुक्त्यादिकं च कौस्तुभे द्रष्टव्यम् । अतो मत्वर्थलक्षणादिभिया विशिष्टविध्य-

ऽपि च विध्यपेक्षितत्वेन करणत्वावगतेः प्राथमिकत्वस्यावश्यकत्वादज्ञातपूर्वस्यैव यागस्य फलसंबन्धकरणेन तत्प्रति यागस्याज्ञातज्ञापनविषयत्वाख्यं विधेयत्वम् । करणत्वावस्थायां च ज्ञातस्य यागस्य गुणसंबन्धवेलायां उत्तरकालमनुवादाज्ज्ञातज्ञापनविषयत्वाख्यमनुवाद्यत्वं गुणं प्रति । तदिदं यागगुणयोरुत्पत्तिविधिक्रमाङ्गीकारे पूर्वं यागस्योत्पत्तिरनन्तरं गुणस्येति वैरूप्यम् । तथा फलं प्रति यागस्य शेषत्वापरपर्यायं गुणत्वं गुणं प्रति च शेषित्वापरपर्यायं प्राधान्यमिति श्रूयमाणस्यैव क्रमिकविनियोगविधिपरत्वाङ्गीकारे वैरूप्यम् । तथा फलं प्रति यागस्योपादेयत्वं गुणं प्रति चोद्देश्यत्वमिति प्रयोगविधिक्रमाङ्गीकारे च वैरूप्यं चेति दोषापत्तिरित्यर्थः ॥

**( प्रकाशकारीयोपादेयत्वनिरुक्तिप्रकारनिरसनम् )**

**ननु**—उपादेयत्वविधेयत्वगुणत्वत्रिके उद्देश्यत्वानुवाद्यत्वप्राधान्यत्रिके च किमिदमुपादेयत्वं? किंचोद्देश्यत्वं नाम । नच कृतिव्याप्यत्वं उपादेयत्वं, तद्विपर्ययोऽनुपादेयत्वापरनामधेयमुद्देश्यत्वमिति प्रकाशकारोक्तं साधु; समादिरूपदेशस्य दर्शपूर्णमासोत्तरत्वादिकालस्य रथन्तरसामत्वादेर्निमित्तस्य व्रीह्यादेः संस्कार्यस्य कृतिव्याप्यत्वसत्त्वेनोपादेयत्वापत्तेः, कर्तृतद्गतैकत्वादेः कृतिव्याप्यत्वाभावेनोपादेयत्वानापत्त्योद्देश्यत्वापत्तेश्च । प्रकृतेऽपि यागे कृतिव्याप्यत्वसत्त्वेनोद्देश्यत्वानापत्तेश्चेत्यत आह—**उपादेयत्वादीति** ॥

**( शेषत्वादिस्वरूपस्यासंकीर्णस्य स्पष्टज्ञानतयोपादेयत्वमात्रनिरुक्तिप्रतिज्ञोपपादनम् )**

शेषत्वाख्यगुणत्वस्य क्रत्वुद्देश्यत्वापरपर्यायशेषित्वरूपप्रधानत्वस्य प्रवर्तकलिङ्गव्यापारात्मकप्रवर्तनाविषयत्वाख्यविधेयत्वानुवाद्यत्वस्य च स्पष्टरूपतयाऽसङ्कीर्णत्वेन ज्ञातुं शक्यत्वादुपादेयत्वस्य पारतन्त्र्यापाद्यत्वलक्षणस्य शेषत्वेऽपि कालदेशादावभावादत एव प्राधान्यात्तदन्यथानुपपत्त्या कल्प्यमानोद्देश्यत्वस्य तत्र सर्वसंप्रतिपन्नस्यासंभवेन तत्रैव स्वरूपजिज्ञासोदयात्तत्स्वरूपज्ञानमेवोपयोगीत्यभिप्रायेण गुणत्वादीनि विहायोपादेयत्वादीत्युक्तम् ॥

**( निर्दुष्टतयोद्देश्यत्वोपादेयत्वयोर्निर्वचनम् )**

आदिपदेनोद्देश्यत्वसंग्रहः । प्रकृतविधिप्रयुक्त्यविषयत्वमुद्देश्यत्वं तदभावश्चोपादेयत्वं । अस्तिचेदमुद्देश्यत्वं स्वर्गादिफले कालदेशादौ च । समादिरूपदेशादेः कृतिव्याप्यत्वेऽपि लोकसिद्धसमोपजीवनेनापि प्रकृतविध्युपपत्तेः पश्वादिवत्प्रकृतविधिप्रयुक्तोत्तरविहारदेशप्रापणादिरूपक्रियान्तरव्याप्यत्वाभावेन प्रकृतविधिप्रयुक्तिविषयत्वाभावाल्लक्षणसमन्वयः । अत एव पश्वादिद्रव्यस्य तन्निष्ठगुणादेश्च वस्तुतो लोकसिद्धत्वेऽपि विहारदेशप्रापणादिक्रियाविषयत्वेन प्रकृतविधिप्रयुक्तिविषयत्वान्नातिव्याप्तिः । एवमाहवनीयादेराधानविधिप्रयुक्ताधाननिष्पन्नत्वेन "यदाहवनीये जुहोती"त्यादिप्रकृतविधेरुत्पत्त्यप्रयोजकत्वेऽपि प्रणयनप्रादुष्करणादिक्रियान्तरव्याप्यत्वेन रूपेण प्रयुक्तिविषयत्वसत्त्वान्नातिव्याप्तिः । एवं पुरोडाशकपालस्यापि विहारदेशे स्थितस्य हस्तग्रहणादिरूपक्रियाविषयत्वेन प्रकृतविधिप्रयुक्तत्वं ज्ञेयम् । संस्कार्यस्य व्रीह्यादे"र्व्रीहिभिर्यजेते"ति वाक्ये प्रयुक्तिविषयत्वेऽपि संस्कारबोधकप्रकृतविधौ प्रयुक्तिविषयत्वाभावादुद्देश्यत्वाविघातः। आख्यातोपात्तकर्तृस्तदेकत्वादेश्च प्रकृतविध्यप्रयुक्तत्वेऽपि कृतिनिरूपितसमवायघटितसंबन्धेनैव भावनान्वयान्नातिव्याप्तिः । यत्र तु पुरुषस्य संस्कार्यत्वं तत्र कर्मतासंबन्धेनैवान्वयान्नाव्याप्तिः । अतश्च शेषत्वव्याप्यत्वेन पारतन्त्र्यापाद्यत्वलक्षणस्योपादेयत्वस्य प्राधान्यव्याप्यत्वेन चोद्देश्यत्वस्याप्यनङ्गीकारात्कालदेशादिषु शेषत्वेऽपि चोपादेयत्वतदभावरूपोद्देश्यत्वयोरनुपपत्तिः । प्रकृतेच प्रकृतविधिप्रयुक्त्यविषयत्वरूपोद्देश्यत्वस्य तदभावरूपोपादेयत्वस्य मिथो विरोधान्न तत्रसंबन्धसंभवः । **इति कौस्तुभे द्रष्टव्यमिति** ॥

**( मत्वर्थलक्षणाविरुद्धत्रिकद्वयापत्त्यादिनोद्भिदादिपदानां नामत्वोपसंहारः )**

एवं च युगपद्बोधे विरुद्धत्रिकद्वयापत्तेः क्रमिकत्वाङ्गीकारे च पूर्वोक्तवैरूप्यापत्तेः श्रूयमाणस्यैव क्रमेण युगपद्वोभयपरत्वाङ्गीकारायोगात् श्रूयमाणो विधिरन्यतरपरोऽन्यश्चार्थिकमित्यवश्याभ्युपेये विध्यपेक्षितत्वात् योग्यत्वाच्च भावार्थाधिकरणन्यायेन करणत्वमेव शाब्दं प्राथमिकभावनान्वये इति पाष्ठिकबोधवेलायामपि तेनैव रूपेण फलान्वयो, न तु कर्मतया गुणेन, तस्य फलसंबन्धोत्तरकालीनत्वेनार्थिकत्वात् । अतश्च गुणस्यापि प्राथमिकभावनान्वये अस्मदुक्तरीत्या करणत्वेनैव संजाते द्वितीयबोधवेलायां यागसंबन्धस्यावश्यकत्वे यागस्य फलं प्रति करणत्वात् करणीभूतगुणान्वयार्थं आवश्यकी मत्वर्थलक्षणा । येषां तु प्राचां मते प्रथमतोऽपि न गुणस्य करणत्वेन भावनान्वयस्तेषां तु प्रथमत एव सा आवश्यकी दुरुद्धरेत्यभिप्रेत्योपसंहरति—**अत इति** ॥ उद्भिदादीनामित्यादिपदेन यौगिकत्वसाम्यात् वाजपेयपदस्यापि संग्रहः ॥

**( वाजपेयपदे यजिसामानाधिकरण्योपपत्त्यर्थं बहुव्रीह्याश्रयणेन गुणे कर्मणिच तुल्यवद्वृत्तिकत्वसंपादनम् )**

यद्यपि कर्मधारयपक्षे गुणे एव यौगिकस्य वाजपेयशब्दस्यैकहायन्यादिशब्दस्येव मत्वर्थलक्षणया गुणविधिपरत्वमेवापद्यते, न तु उद्भिदादिपदस्येव गुणे कर्मणि च तुल्यवद्वृत्तिकत्वम्; तथापि मत्वर्थलक्षणापत्त्या गुणपरत्वे निरस्ते यजिसामानाधिकरण्योपपत्त्यर्थं जघन्यस्य बहुव्रीहेरेवाश्रयणेन त-

नुपपत्तेर्नामधेयत्वमेवोद्भिदादीनाम् ॥ ६ ॥२२॥ इति षष्ठं विशिष्टविध्याक्षेपाधिकरणम् (वाजपेयाधिकरणम्)

( ७ अधिकरणम् । )

तद्गुणास्तु ॥ "आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती"त्यादौ आग्नेयशब्दो गुणविधिः कर्मे-

त्प्रख्यन्यायेन नामधेयत्वं नासुलभम् । यद्यपि बहुव्रीहौ अन्यपदार्थलक्षणापत्त्या नामत्वाश्रयणमपि लक्षणापादकम्; तथापि तस्या निरूढत्वेन पदार्थबोधवेलायां जातत्वात् श्रुतितुल्यत्वेन पदान्तरसामानाधिकरण्यवत्त्वेन वाक्यार्थलक्षणातो ज्यायस्त्वमिति न दोषः । यदा तु मद्रुक्तरीत्या पूर्वपक्षेऽपि बहुव्रीहिरेव, तदा तु तुल्यवद्वृत्तिकत्वान्न कोऽपि दोषः ॥

( तत्प्रख्यन्यायेन वाजपेयनामत्वोपपादनम् )

अतो युक्तं तत्प्रख्यन्यायेन नामत्वम् । संभवति च सप्तदशानां प्राजापत्त्यसोमग्रहाणां विशेषत आम्नानवत् प्राजापत्यानां सप्तदश सुराग्रहान् गृह्णातीति विशेषत आम्नानात् सोमग्रहाणां आहवनीयाध्वर्युकर्तृकप्रचारवत् सुराग्रहाणां मार्जालीये प्रतिप्रस्थातृवाजसृत्कर्तृकप्रचारविधानात् सुराग्रहैरपि वाजपेययागाभ्यासात् तत्प्रख्यन्यायः । तत्र च मार्जालीये सुराग्रहणमनुकम्पनमात्रं कृत्वा वाजसृतां भक्षणं होमोऽपि वेति पक्षद्वयेऽपि यागाभ्यासे न विवादः । एवं स्थिते यद्यपि च साक्षात्सुरासंबन्धित्वं यागे न प्रसिद्धम् । तथाच "सप्तदश-सुराग्रहान् गृह्णाती"त्यनेन ग्रहणसंस्कृतानां सुराणां विनियोगापक्षेया तेन मधुग्रहं निष्क्रीणाति, तं सब्रह्मणे सपात्रमिति शपथश्रुत्या सुराप्रतिग्रहकर्तृपूर्वंदत्तस्य हिरण्यपात्रस्थमधुग्रहस्य सुराग्रहणनिष्क्रयार्थत्वेन विनियोगात् मधुग्रहस्यापि च सपात्रस्य ब्रह्मसंप्रदानके दाने विनियोगात्परंपरया यागे सुरासंबन्धित्वसिद्धिरिति पूज्यपादानां कौस्तुभे सुरासंबन्धित्वोपपादनप्रयासकरणं वृथैव । यद्यप्यग्नीषोमादिपदवद्वाजपेये बृहत्सामकस्य विष्णौ इत्यस्यामृचि वाजपेयस्तोत्रस्यान्ते आम्नानात्तेनैव क्रतुसमाप्तेः वाजपेयस्तोत्रकृतसमाप्तिमत्त्वेनैव वाजपेयपदप्रवृत्तिः शक्यते एव वक्तुं; तथापि "प्रजापतिरकामयत वाजमाप्नुयात् स्वर्गलोकमिति स एतं वाजपेयमपश्यद्वाजं पेयो वा एष वाजपेयः एतेन स्वर्गं लोकं आप्नोती"ति तांडिब्राह्मणे अर्थवादे वाजरूपान्नपेयत्वयोगेनैव वाजपेयशब्दनिर्वचनात् वाजं पेयमस्मिन्निति योगार्थस्यैव अनुसरणं मीमांसकानामिति ध्येयम् । प्रयोजनं पूर्वपक्षे व्यक्तत्वेऽपि द्रव्यसादृश्येन बलवत्तैष्टिकविध्यन्तः सिद्धान्ते स्पष्टत्वाच्च नोक्तम् ॥

इति षष्ठं विशिष्टविध्याक्षेपाधिकरणम् (वाजपेयाधिकरणम् )

( पूर्वाधिकरणेनापवादिकसंगतिनिरूपणम् )

आक्षेपसमाधानार्थस्यापि पूर्वाधिकरणस्य नामतासाधकत्वादाक्षेपसमाधानाभ्यां साधितस्य नामत्वस्येह सिद्धान्तेऽपवादकरणात् आपवादकीं सङ्गतिं स्पष्टत्वादनभिधाय विषयवाक्यप्रदर्शनपूर्विकां चिन्तां दर्शयति—**आग्नेयोऽष्टाकपाल इति** ॥

( प्राकृतवैकृतवाक्यान्तराणामप्येतदधिकरणविषयत्वम् )

आदिपदेन "अग्नीषोमीयमेकादशकपालं ऐन्द्रं दध्यमावास्याया"मिति प्राकृतानां "आग्नेयं पय" "ऐन्द्रः पुरोडाश" इति वैकृतानां च वाक्यानां संग्रहः ॥

( आग्नेयनामतागुणविधित्वपरत्वनिरासेन सर्वविशिष्टविधिविषयत्वमेतदधिकरणस्येति न्यायसुधाकारमततत्खण्डने )

**अत्र न्यायसुधाकृता**—"आग्नेयपदस्याष्टाकपालादिद्रव्यसामानाधिकरण्यात् कर्मणश्चाश्रवणान्मन्त्रस्तु विरोधे स्यादि"त्यधिकरणे पञ्चमे आग्नेयाग्नीषोमीययोः ब्राह्मणक्रमविपर्ययेण मन्त्रक्रमाम्नानस्य वक्ष्यमाणत्वेन क्रमविनियुक्तमन्त्राभावात् श्रुत्यविनियुक्तानां च मन्त्राणां स्वार्थसमवायकल्पकत्वाभावात् मान्त्रवर्णिकदेवताकल्पनानुपपत्तेः द्रव्यदेवतासंयोगेनापि यागस्य कल्पयितुमशक्यत्वादा"ग्नेयं चतुर्धा करोती"त्यादिव्यवहारस्य च द्रव्यविषयत्वेन कर्मनामानपेक्षत्वान्निष्प्रयोजनत्वेनापि नामत्वाशङ्कानुपपत्तेः न नामत्वचिन्ता युक्ता; अतः पूर्वाधिकरणे तन्त्रसंबन्धानुपपत्त्या विशिष्टविधौ निरस्ते क्वचिदपि तद्दर्शनावृत्तेन प्रत्ययेन विशिष्टविधिर्न संभवतीत्याशङ्क्य विशिष्टविधिव्युत्पादनायैवैतदधिकरणम् । तद्व्युत्पादनस्य चोत्पत्तिशिष्टगुणबलीयस्त्वसिद्धिः प्रयोजनम् । तस्य नामता । सोमविशिष्टे ह्युत्पन्ने शुद्धानुवादासंभवान्न खनित्रादिस्तत्रेत्युद्भिदादेर्नामता सिध्यति । श्रुतेन तु प्रत्ययेन शुद्धं यागं विधायोपपदानर्थक्यपरिजिहीर्षया तदर्थविधिनायाश्रुतप्रत्ययान्तरकल्पने श्रुतस्यैवावृत्तिकल्पने शुद्धयागानुवादेनोद्भित्सोमयोर्विहितयोः तुल्यबलत्वेन विकल्पोपपत्तेर्न नामता सिध्यतीति नामधेयत्वं द्रढयितुं विशिष्टविधिरिह व्युत्पाद्यते सप्रयोजनः । एवंच सर्वैचात्र विशिष्टविधयः उदाहरणमिति भाष्यवार्तिकयोर्गुणविधिनामधेयचिन्ता पूर्वापवादत्वेन सङ्गतिं वक्तुं कृता। **अथवा**—गुणविध्यसंभवे स्थिते वैयर्थ्यपरिहाराय संभवमात्रेण नामत्वमुक्तम् । एतदधिकरणं तु विशिष्टविधिव्युत्पादनमात्रार्थत्वमेवेति—**उक्तम्, तदयुक्तमिति** सूचयितुं यथाभाष्यवार्तिकं गुणविधिः कर्मनामधेयमिति चिन्तायां निवेशितम् । **अयमाशयः**—न तावदत्र विशिष्टविधिव्युत्पादनं नामत्वविचारे सङ्गतम्; उत्पत्तिशिष्टगुणबलीयस्त्वसिध्या विशिष्टविधिविचारस्य सप्रयोजनत्वेऽपि तद्बलीयस्त्वेन वाजिनयागवद्गुणविशिष्टकर्मान्तरस्यैवोद्भिदादिवाक्येष्वापत्त्या गुणविधित्वनिरासासंभवेन नामतायामसाधकत्वात्, यदि वाजि-

नवाक्ये रूढिबलीयस्त्वेन वाजिनपदस्योत्पत्तिशिष्टगुणबलीयस्त्वेनापि न नामतेत्युच्येत, तदोद्भिदादिपदानामरूढत्वेन तुल्यवद्वृत्तिकतयैव नामतासिद्धेः किमुतपत्तिशिष्टगुणबलीयस्त्वेन? **किंच** विशिष्टविध्यभावेऽपि न खनित्रस्य विकल्पः संभवति; उद्भिदादिवाक्येषु यागानुवादासिद्धेः, "सोमेन यजेते"ति वाक्यस्य पूर्वप्रवृत्त्याश्रयणेन शुद्धयागविधानेऽपि तदानीमेवोपस्थितोपपदानर्थक्यपरिहाराय कल्पितेनावृत्तेन तेनैव वा विधिप्रत्ययेन स्ववाक्योपस्थितयागानुवादेन सोमे विहिते तेनैव निराकाङ्क्षीकृते यागेनैव वाक्यान्तरोपात्तखनित्रादिविधानं संभवतीति तत्र कर्मान्तरविधानस्यैवापत्तिर्न तु विकल्पः। नह्युत्पत्तिशिष्टगुणबलीयस्त्वे निराकाङ्क्षतापादनातिरिक्तमन्यत् किंचित्करणमस्ति, तत्तु विशिष्टविध्यभावेऽपि सुकरमिति। **अतएव**—तत्र विशिष्टविधिं मत्वर्थलक्षणापत्त्या निरस्य यौगिकत्वादिनैव नामत्वमाकरे साधितमित्यसङ्गतं विशिष्टविधिव्युत्पादनम् **अपिच** सन्निकृष्टविधौ असंभवनिबन्धनत्वाद्विप्रकृष्टयोर्विशेषणविशेष्ययोर्युगपद्विधेयत्वस्य सन्निकृष्टविधानार्थं च तत्संभवः विप्रकृष्टविधानार्थं तस्यासंभवश्चाऽभ्युपगन्तव्यः स्यादिति युगपत् विरुद्धसंभवासंभवायोगान्न क्वचित् सकृच्छ्रुतेन प्रत्ययेन विशिष्टविधिः संभवतीति त्वदुक्तपूर्वपक्षस्य सोमेन यजेतेत्यत्रेवाग्नेयादिवाक्येष्वपि संभवादनेकगुणोपादाननिमित्तवाक्यभेदापत्तिहेतुकपूर्वपक्षाभिधानमाग्नेयादिवाक्ये भाष्यकारस्य शून्यहृदयतामेवापादयेत्। अतः सङ्गतत्वाद्गुणविधिनामधेयविचार एव युक्त इति॥

### (तत्प्रख्यन्यायेनाग्नेयपदनामत्वोपपादनम्)

कथं तर्हि न्यायसुधोक्तदूषणसमूहे विद्यमाने नामतापूर्वपक्षसिद्धिरित्यत आह—**अग्नेरिति॥ अयमर्थः**—यद्यप्याग्नेयवाक्ये भवतिना सत्तामात्रोपादानाद्विधेर्भावनायाः तदवच्छेदकयोग्यधात्वर्थस्य वा नोपादानं; तथापि अप्राप्तार्थत्वाद्विधिं प्रकल्प्य भूधातोश्च भावनां विनाऽनुपपत्तेः भावनाक्षेपात्तयैव वा भावनाभिधानात् तस्यां च प्रथमान्ताष्टाकपालपदोक्तद्रव्यस्यान्वयासंभवे सक्तुवत्प्रथमायाः करणत्वलक्षणया अष्टाकपालकरणिकायां तस्यां भावनायां अग्नेरपि विशेषणत्वेनानेकविधिनिमित्तगौरवापत्तेः तत्प्रख्यन्यायेन नामधेयमाग्नेयपदम्। संभवतिचात्र मन्त्रवर्णस्याग्निदेवताप्रापकस्य सत्त्वात्तत्प्रख्यन्यायः॥

### (मन्त्रब्राह्मणपाठयोरनन्यादृशत्वेनान्यादृशत्वेऽपि अनुष्ठानसादेश्यात् अग्निर्मूर्धेत्यादीनां आग्नेयादिविनियोगेन मान्त्रवर्णिकदेवताप्राप्तिसमर्थनम्)

अग्निर्मूर्धेति पुरोनुवाक्याया "भुवो यज्ञस्ये"ति याज्यायाश्चाधिकाराख्यप्रकरणेन स्थानेन वा अष्टाकपालभावनाङ्गत्वावगतेरुपांशुयाजवत् श्रुत्यविनियोगेऽपि देवताकल्पकत्वोपपत्तेः। **अतएव**—द्रव्यसमानाधिकरणस्याप्याग्नेयपदस्य न्यायेन नामतासिद्धौ कर्मव्यधिकरणद्वितीयान्ताग्निहोत्राघारपदवन्नामत्वं करणत्वलक्षणया नानुपपन्नम्। नचाऽधिकारस्योपांशुयाजादिष्वप्यविशेषात्क्रमस्य च ब्राह्मणपाठापेक्षया मन्त्राणां वैपरीत्यादसंभवत्, कथं प्रथमस्य प्रथममित्येवं पाठक्रमात् मन्त्राणामङ्गत्वमिति दूषणम्; वाजसनेयिशाखायां प्रथममाग्नेयस्य पश्चादग्नीषोमीयस्यैव ब्राह्मणपाठान्नानात् मन्त्राणां पाठक्रमोपपत्तेः; सर्वशाखाभिज्ञत्वेन विश्वस्ततन्त्रवार्तिककारैर्लेखनात् शाखान्तरे मन्त्रपाठक्रमानाम्नानस्यानुमातुमप्यशक्यत्वाच्च। "मन्त्रतस्तु विरोधे स्यादित्यत्र तु यत्रापि व्युत्क्रमाम्नानं, तत्रापीष्टसिद्धिरुपपादिता, नतु तावता सर्वत्रापि व्युत्क्रमाम्नानमेवास्तीति भ्रमितव्यम्। यदपि तैत्तिरीयशाखायां व्युत्क्रमाम्नानं, तदप्यग्नीषोमीयानन्तरे पठितस्याप्याग्नेयस्य "शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीय"इत्यनेनाप्राप्तार्थत्वेन विधिकल्पनया स्वस्थानादपकृष्य अग्नीषोमीयपशुयागवदपकृष्यानुष्ठानावगतेरनुष्ठानलक्षणस्थानक्रमात्पशुधर्माणां अग्नीषोमीयाङ्गत्वस्येव याज्यानुवाक्यायुगलस्याङ्गत्वावगतिरिति कौस्तुभदर्शितप्रकारेणाङ्गत्वस्य सुलभत्वाच्च॥

### (आग्नेय इति तद्धितस्य देवताप्रमापकत्वशङ्कातन्निरसने)

**नच**—तद्धितस्य सर्वदैवतप्रापकप्रमाणापेक्षया बलवत्त्वात्तेनैव देवताविधानेन दुर्बलमान्त्रवर्णिकदेवताकल्पनं न युक्तमिति—**वाच्यम्**; विरोधे तत्प्राबल्येऽपि अविरोधेऽनेकविधिगौरवापादकत्वेन तद्धितस्य तत्कल्पकत्वायोगात्। "सर्वत्राग्निकलिभ्यां ढक् वक्तव्य" इति प्राग्दीव्यतीयेषु "तस्येदं" "तस्यापत्यं" "सास्य देवता" "तस्य समूहः" "तत्र भव" इत्यादिसामान्यविशेषेषु अनेकेषु संबन्धेषु ढक्प्रत्ययस्य स्मरणादाग्नेयपदस्य सन्दिग्धार्थत्वेन नियमेन देवताविधायित्वानुपपत्तेश्च। नामधेयत्वेतु प्रमाणान्तरबलादेव देवतातद्धितनिर्णयोपपत्तेः। अतो युक्तैव मन्त्रवर्णाद्देवताप्राप्तिरिति॥

### (पूर्वमनिर्धारितस्य धात्वर्थविशेषणस्य पश्चादवधार्यमाणस्य भावनावच्छेदकत्वोपपादनम्)

भावनायाश्चावच्छेदकधात्वर्थापेक्षायां तदवच्छेदकयोग्यधात्वर्थाश्रवणेऽपि देवतासंबन्धकल्पितयागस्यैव पश्चादवगतस्याप्यवच्छेदकत्वोपपत्तेः। इष्यते चाभ्युदितेष्टिवाक्ये भावनान्तरविधिपक्षे गुणसंबन्धवाक्येषु पश्चादवगतस्यैव धात्वर्थस्यावच्छेदकत्वम्। अत एव "ज्योतिर्गौरायु"रित्यादौ अप्राप्तिफलकल्पितविध्यन्यथानुपपत्तिसिद्धभावनाक्षिप्तानिर्धारितधात्वर्थविशेषस्यैव ज्योतिरादि नामेत्यवधारिते पश्चादव्यक्तत्वादिसादृश्येनातिदिष्टद्रव्यदेवतासंबन्धेन यागरूपविशेषनिर्धारणमिष्टम्। अतश्च सिद्धान्त इव पश्चादवगतस्यैव यागस्य भूधातुना लक्षणया भावनाविधानोपपत्तेर्युक्तमाग्नेयपदस्य नामत्वम्॥

### (प्रकाशकाराभिमतयागचतुरावृत्तिरूपपक्षप्रयोजननिरासेन पूर्वपक्षप्रयोजनान्तरसूचनम्)

यथाचात्र नामधेयस्य नानिष्प्रयोजनत्वं तथा अधिकरण-

नामधेयमिति चिन्तायां अग्नेर्मन्त्रवर्णादेव प्राप्तत्वादाग्नेयपदं नामधेयम् इति प्राप्ते—

पुरोडाशकर्मिकाया भावनाया मन्त्रापेक्षाऽभावान्मन्त्रस्य च तत्रायोग्यत्वान्नोपांशुयाज इव मन्त्रस्य देवताकल्पकत्वम्। नचाघारवद्वाचनिको विनियोगो मन्त्रस्य, येन तत्कल्पकत्वं संभाव्येत। न च मन्त्रस्याष्टाकपालकर्मकभावनाऽङ्गत्वे प्रमाणमस्ति, प्रकरणस्य उपांशुयाजादिष्वप्यविशिष्टत्वात्। नापि क्रमः, ब्राह्मणपाठक्रमापेक्षया मन्त्रपाठक्रमवैपरीत्यस्य पञ्चमे वक्ष्यमाणत्वात्। अतस्तत्प्रख्यन्यायाभावान्नामत्वानुपपत्तेर्द्रव्यदेवतोभयविशिष्टभावनाविधिप्रतीतेस्तस्य च यागमन्तरेणानुपपत्तेर्भूधातुना तल्लक्षणात् सकलविशेषणविशिष्टयागभावनाविधानेन अर्थाद्विशेषणानामपि विधिकल्पनात् गुणविधिरेवाग्नेयशब्दः॥

प्रयोजनं "आग्नेयं पय" इत्यादौ नामातिदेशेनाग्नेयविध्यन्तः पूर्वपक्षे, सिद्धान्ते तु सान्नाय्यविध्यन्तः॥ ७॥ २३॥

इति सप्तममाग्नेयाधिकरणम्।

---

प्रयोजनकथनव्याजेन दर्शयिष्यते। यत्तु—प्रकाशकारै "राग्नेयं चतुर्धा करोती"त्यत्र आग्नेयकर्मणश्चतुर्धाकरणासंभवेऽपि चतुरावृत्तिः प्रयोजनम्—इत्युक्तम्, तत् "पुरोडाशं चतुर्धा करोती"ति शाखान्तरवाक्योपसंहारेणाग्नेयपदस्याग्निदेवतोपलक्षितपुरोडाशपरत्वावगतेः पुरोडाशस्यैव चतुर्धाकरणरूपविभागविधिप्रतीतेरयुक्तमिति दूषितं कौस्तुभे। अतो न्यायसुधाकृदापादितसकलदूषणपरिहारेण सुदृढो नामधेयत्वपूर्वपक्ष इत्यभिप्रेत्योपसंहरति—**आग्नेयपदमिति**॥ आग्नेयपदमग्नीषोमीयपदानामप्युपलक्षणम्॥

## ( अयोग्यत्वात् वाचनिकविनियोगाभावाच्चोपांशुयाजाघारादिष्विव मन्त्रसंबन्धासंभवात् मान्त्रवर्णिकदेवताप्राप्त्यसंभवादाग्नेयपदनामत्वासंभवोपपादनम् )

नेदं नामधेयम्; तत्प्रख्यशास्त्राभावात्, यदि ह्यष्टाकपालकरणिकाऽत्र भावना विधीयेत, ततस्तस्यां त्वदुक्तविधया मान्त्रवर्णिकदेवताप्राप्तेः सत्त्वात् स्यान्नामधेयम्। नत्वेतदस्ति; अष्टाकपालकर्तृकभवनेनाक्षिप्तायां भावनायां अष्टाकपालस्य कर्मत्वेनैवान्वयात् अष्टाकपालोत्पत्तिजनकव्यापाररूपेणैवाष्टाकपालभावना विधेया, नतु सिद्धाष्टाकपालकरणिकानिर्धारितधात्वर्थविशेषावच्छिन्ना यागादिभावनेति तस्यामभ्यादिदेवताप्रकाशकयाज्यानुवाक्यायुगलस्य कथमप्यन्वयानुपपत्तेर्याज्यानुवाक्यासमाख्यासहकृतलिङ्गेनान्यत्रैव विनियोगात् अनुष्ठानलक्षणस्थानबाधाच्चाष्टाकपालभावनाङ्गत्वे प्रमाणाभावान्मान्त्रवर्णिकदेवताप्राप्तेरसंभव इत्यभिप्रेत्य सिद्धान्तमाह—**पुरोडाशकर्मिकेति**॥ उपांशुयाजे तु प्रत्यक्षयजिश्रवणात्तत्र योग्यतया स्थानेन मन्त्रान्वयोपपत्तेर्युक्तं मान्त्रवर्णिकदेवताकल्पनमित्यभिप्रेत्य वैषम्यं दर्शयितुं नोपांशुयाज इवेति व्यतिरेकदृष्टान्तोपादानम्। **ननु** क्षरणात्मकाघारकर्मणामपि "इन्द्र ऊर्ध्व" इति मन्त्रस्याकाङ्क्षायोग्यतयोरभावेनान्वयायोगात् कथं तदन्वयेन देवताप्राप्त्या यागकल्पनमित्याशङ्कां परिहरन् वैषम्यमाह—**नचेति**॥ तत्र लिङ्गादन्वयायोगेऽपि "इत्याघारमाघारयती"तीति करणेन श्रुत्यैव विनियोगान्यथानुपपत्त्या देवतायागयोर्द्वयोरपि कल्पनात् करणस्य च होमत्वकल्पनेन विरोधापादनान्नामतोपपत्तिरिति वैषम्यमित्यर्थः॥

## ( पूर्वपक्ष्यापादितसकलदोषपरिहारेण सिद्धान्तोपसंहारः )

पूर्वोक्तरीत्या मन्त्रपाठक्रमोपपत्तावपि अयोग्यत्वादेव मन्त्रत्वस्यानुपपत्तिमभिसंधाय पूर्वपक्ष्यापादितानेकविधिनिमित्तकगौरवपरिहारेण सिद्धान्तमुपसंहरति—**अत इति**॥ **द्रव्यदेवतेति**॥ आग्नेय इति तद्धितेन देवतात्वविशिष्टद्रव्याभिधानादष्टाकपालपदस्य "ते पुरोडाशं कूर्मं भूतं सर्पन्तमपश्यन्" इत्यर्थवादावगताष्टावच्छिन्नकपालसंस्कृतपुरोडाशद्रव्यवाचकत्वादप्राप्तार्थत्वादर्थवादसमभिव्याहाराच्च लटो लेडर्थत्वनिश्चयेन विधिभावनयोः प्रतीतौ तस्यां भावनायां पुरुषव्यापाररूपायां अष्टाकपालस्य कर्तृत्वानुपपत्तेः प्रथमया करणत्वलक्षणया अष्टाकपालस्य करणत्वेनान्वये अग्निदेवतात्वस्यापि च कारकत्वेनान्वये सकलकारकविशिष्टाक्षिप्तयत्किंचिद्धात्वर्थकरणत्वेष्टसामान्यभाव्यकत्वे बुद्धे पश्चाद्धविःसमभिव्याहृतदेवतात्वस्य यागमन्तरेणासंभवात् भावनापेक्षितस्य धात्वर्थस्य यागत्वावधारणेऽपि शाब्दत्वसिद्ध्यर्थं भूधातुना यागलक्षणया यावद्वाक्योपात्तविशेषणविशिष्टैकयागभावनाविधानान्न श्रुतस्य प्रत्ययस्यावृत्तिप्रसङ्गः। विशेषणविधिकल्पनाकृतं च गौरवमन्यतो प्राप्तत्वादापद्यमानं न दुष्यति। न च तद्धितस्य देवताविधायकत्वे लिङ्गादेव मन्त्रप्राप्तेः मन्त्रक्रमाम्नानवैयर्थ्यम्; अग्निर्मूर्धेति मन्त्रविशेषप्राप्तये तत्सार्थक्यात्। अत एव यत्र "कपालेषु श्रपयती"त्यादिना प्रमाणान्तरेण कपालानां तदधिकरणत्वस्य श्रपणाख्यसंस्कारविशेषस्य च प्राप्तिः, तत्रोत्पत्तिवाक्येऽपि तद्विशेषविधेरकल्पनान्नैव तत्कृतं गौरवम्। नचैवं अष्टत्वस्य प्रमाणान्तराप्राप्तेः समासभङ्गापत्त्या भावनाया यागेन वैशिष्ट्यासंभवात् कपालानुवादेनाष्टत्वस्य यागस्य च विधाने वाक्यभेदः; एकप्रसरताभङ्गापत्त्या प्राप्तानामपि कपालानां विशिष्टवेषेणाप्राप्तविशेषणविधिकल्पकविधानोपपत्तेः। अत एव तदंशे प्राप्तत्वान्न विशेषणविधिकल्पना। अतश्च विशिष्टयागभावनाविधानोपपत्तेर्मन्त्राणामपि तत्क्रमेणैवापकर्षसिद्धेर्न "शिरो वै"त्यस्यापकर्षविधित्वकल्पनमापद्यते इति गुणविधिरेवाग्नेयशब्द इति भावः। **नामातिदेशेनेति**॥ बलवतोऽपि द्रव्यसादृश्यस्य चोदनालिङ्गसादृश्यरूपत्वात्तदपेक्षयापि बलवता नामातिदेशेनेत्यर्थः॥ **इति सप्तमं आग्नेयगुणताधिकरणम्**॥

( ८ अधिकरणम्। )

**बर्हि** ॥ बर्हिराज्यपुरोडाशादिशब्दानां संस्कृतेषु कुशादिषु शास्त्रस्थैः प्रयुज्यमानत्वाद् यूपादिशब्दवत्संस्कारमात्रवाचित्वे संस्कारविशिष्टकुशादिवाचित्वे वा प्राप्ते—

जातिं विहाय कैरप्यप्रयुज्यमानत्वात् संस्कारं विनापि च लोके 'बर्हिरादाय गावो गताः' 'आज्यं क्रय्यं' 'पुरोडाशेन मे माता प्रहेलकं ददाती'त्यादौ प्रयुज्यमानत्वादव्यभिचाराल्लाघवाच्च कुशत्वादिजातिवाचित्वमेव ॥

प्रयोजनं तु यूपावटस्तरणार्थबर्हिरादौ पूर्वपक्षे संस्कारकरणं, सिद्धान्ते नेति ॥ ८ ॥ २४ ॥ **इत्यष्टमं बर्हिरधिकरणम्।**

---

**( पूर्वाधिकरणेन बर्हिरधिकरणस्य संगतिद्वयनिरूपणपूर्वकैतदधिकरविषयत्रयनिरूपणम् )**

पूर्वाधिकरणेषु सापवादे कर्मनामत्वे साधिते प्रसङ्गाद्द्रव्यविषयनाम्नामभिधेयविचारेण गुणविशेषविधिविचार इति प्रासङ्गिकीं प्रकरणसङ्गतिं तथा आग्नेयादिशब्दानां देवतोद्देश्यकद्रव्यत्यागात्मकयागस्य क्रियागर्भसंबन्धनिमित्तदेवताविशिष्टद्रव्यवाचित्वात्तद्द्वारेण क्रियानिमित्तत्वेऽभिहिते बर्हिरादिशब्दानां संस्कारात्मकक्रियानिमित्तताऽस्त्युत नेति विचाराद् बुद्धिस्थानात्मिकामनन्तरसङ्गतिं च स्पष्टत्वादनभिधाय संस्कृतबलीयस्त्वादिरूपपूर्वपक्षहेतोः संस्कारनिमित्तत्वे गौरवापत्तिरूपसिद्धान्तहेतोश्च तुल्यत्वात्सूत्रगतबर्हिराज्यपदस्य उपलक्षणत्वं चाभिप्रेत्य विषयत्रयप्रदर्शनपूर्वकं पूर्वपक्षमाह—**बर्हिराज्येति** ॥

**( याज्ञिकप्रसिद्ध्या बर्हिरादिशब्दानां संस्कृतपरत्वोपपादनम् )**

शास्त्रस्थैरित्यनेन शास्त्रस्थानामसंस्कृते प्रयोगः पीलवधिकरणन्यायेन बाध्यते। क्वचिच्छास्त्रस्थानामप्यसंस्कृते प्रयोगश्चाश्ववालाधिकरणन्यायेन याज्ञिकप्रसिद्ध्या बाध्यत इति शास्त्रस्थपदस्य याज्ञिकप्रसिद्धिपरतया सूचितम्। एवंचासंस्कृतप्रयोगस्य प्रादेशिकत्वेनाशिष्टस्थत्वेन तद्दौर्बल्यात् सादृश्यस्योपपत्तेर्न याज्ञिकप्रयोगस्याविगीतत्वापादनक्षमत्वमित्यर्थः

**( यूपादिशब्दानामिव संस्कृतवाचित्वस्य बर्हिरादिशब्द उपपत्तिः )**

**ननु**"बर्हिर्लुनाति" "आज्यमुत्पुनाति" "पुरोडाशं प्रथयती"त्यादिसंस्कारविधिषु बर्हिराद्युद्देशेन संस्कारविधानादुद्देश्यानां लवनादिसंस्कृतानां कुशादीनां पूर्वावगमे संस्कारविधिवैयर्थ्यम्, अनवगमे तूद्देश्यत्वायोगात् सुतरां तद्विधानानुपपत्तिरिति जातिवाचित्वमेवोपपद्यते इत्यत आह—**यूपादिशब्दवदिति** ॥ यथा पलाशं तक्षतीति प्रकृत्य श्रुते तत्र यत्तक्षति तद्यूपमिति विपरीतवचनव्यक्त्याश्रयणेन छेदनसंस्कृतपलाशनामत्वं यूपशब्दस्यावसीयते, एवमिहापि "दर्भैः स्तृणीते"ति बर्हिस्स्तरणार्थे मन्त्रे कुशवाचिदर्भशब्ददर्शनात् बर्हिश्शब्दस्य यल्लुनाति तद्बर्हिरिति वचनव्यक्त्याश्रयणेन लवनादिसंस्कृतकुशनामत्वावधारणात् "पिष्टानि संयौति" "पिण्डं करोती"ति श्रवणाच्च पुरोडाशशब्दस्य प्रथनादिसंस्कृतपिष्टपिण्डनामत्वावधारणादुत्पवनादीनां च कथंचिद्वृत्तविषयत्वमुत्प्रेक्ष्याज्यशब्दस्योत्पवनादिसंस्कृतघृतनामत्वावधारणाद्यूपादिवद्वचनव्यक्तिविपर्ययाश्रयणेन संस्कारविधिवैयर्थ्यमित्यर्थः। आदिपदेनाहवनीयपदसंग्रहः। तत्रापि यथा नागृहीतविशेषणन्यायेन यूपादिपदानां संस्कारेष्वेव शक्तिः। **अथवा**—संस्काराणामनेकत्वादनेकशक्तिकल्पनापत्तेस्तद्विशिष्टकाष्ठ एवेति मतभेदः तद्वदिहापीति मतभेदं सूचयितुं वाशब्दः ॥

**( जातिं विहायाप्रयुज्यमानत्वेन जातिवाचित्वमेव बर्हिरादिशब्दानामिति सिद्धान्तः )**

न बर्हिरादिशब्दानां संस्कारविशिष्टजातिमद्द्रव्ये शक्तिः; गौरवापत्तेः, अत एव न संस्कारेष्वपि। अतज्जातिमति संस्कृतेऽपि प्रयोगाभावाच्च। एवं सत्यपि यदि संस्काररहिते प्रयोगो न स्यात्ततो गौरवमप्यङ्गीकृत्य तद्वाचिताऽङ्गीक्रियेत, अस्ति च तत्रापि प्रयोगः। अत एव एतादृशप्रयोगस्य यूपादिष्वभावात् स्वीक्रियत एव संस्कारवाचित्वम्। जातिमपहाय प्रयुज्यमानत्वेन शास्त्रस्थैः सह विरोधाभावान्न शास्त्रस्थप्रसिद्ध्याऽपि बाध इति तदनुरोधेन च न वचनव्यक्तिवैपरीत्याश्रयणं युक्तमित्यभिप्रेत्य सिद्धान्तमाह—**जातिं विहायेति** ॥ कैरपीत्यनेन विरोधो दर्शितः। **प्रयोजनंत्विति** ॥

**( बर्हिरधिकरणपूर्वोत्तरपक्षप्रयोजननिरूपणम् )**

संस्कारवाचकानां शब्दानां खलेवाल्यां यूपशब्दस्येव नामातिदेशेन संस्कारप्रापकत्वात् संस्कारकरणमित्यर्थः। एवं यूपाञ्जनार्थाज्ये। तथा ज्योतिष्टोमाङ्गप्रवर्ग्यहोमपूर्वोत्तरकालयोः "रोहिणाभ्यां वै देवाः स्वर्गं लोकमायन्नि"त्यादिनाऽहोरात्रदेवताके होमद्वये विहिते रोहिणनामकपुरोडाशद्वयस्य द्रव्यत्वेन विधानात्तत्राग्नीध्रकर्तृकगार्हपत्याधिश्रयणमात्रानुष्ठानेपीतरसंस्कारानुष्ठानं सिद्धान्ते। पूर्वपक्षे तदनुष्ठानमित्यपि ज्ञेयम्। अत्र चोत्तराधिकरणप्रयोजनवद्दर्भैः स्तृणीतेति मन्त्रे मौद्गे चरौ पुण्डरीकपदस्येवोहानूहप्रयोजनान्तरमपि द्रष्टव्यम्। एतत्सिद्धजातिवाचित्वमङ्गीकृत्यैव बर्हिर्धर्माणां अङ्गप्रधानसाधारण्यबर्हिर्धर्मार्थत्वाद्यूपावटस्तरणार्थबर्हिषि तद्धर्मप्राप्तिमाशङ्क्य निराकरिष्यते इत्यपौनरुक्त्यम् ॥ **इत्यष्टमं बर्हिरधिकरणम्** ॥

( ९ अधिकरणम् । )

**प्रोक्षणीषु** ॥ प्रोक्षणीशब्दस्यापि पूर्ववत्संस्कारवाचित्वे 'प्रोक्षणीभिरुद्वेजिताः स्म' इति लोके संस्कारं विहायापि जातिमात्रे प्रयोगदर्शनात् रूढ्या जलत्वजातिवाचित्वे वा प्राप्ते—

क्लृप्तावयवयोगेनोपपत्तौ रूढिकल्पने प्रमाणाभावः । अतएवाश्वकर्णादिशब्दे योगबाधे एव तत्कल्पनम् । न चापामौदासीन्यावस्थायां प्रकृष्टोक्षणसाधनत्वरूपयोगाभावः; फलोपधानासंभवेऽपि उक्षणस्वरूपयोग्यत्वस्य सम्भवात् । नचैवं रथकारपदेऽपि रथकर्तृत्वरूपयोगसम्भवेन जातिविशेषे शक्तिकल्पनाऽनुपपत्तिः; अनुशासनबलेन तत्कल्पनात्, कर्तृत्वस्वरूपयोग्यत्वस्याव्यावर्तकत्वेन "वर्षासु रथकारस्ये"त्यस्य वैयर्थ्यापत्तेश्च । प्रोक्षणीशब्दे तु रूढिकल्पने प्रमाणाभावाद् यौगिकत्वमेव ॥

प्रयोजनं विकृतौ घृतं प्रोक्षणमित्यादौ प्रोक्षणीरासादयेत्यविकृतः प्रयोगः संस्कारवाचित्वपक्षे, घृतमासादयेति जातिवाचित्वे, प्रोक्षणमासादयेति यौगिकत्वे द्रष्टव्यम् ॥९॥ ॥ २५ ॥ **इति नवमं प्रोक्षण्यधिकरणम्** ॥

**( सङ्गतिनिरूपणपूर्वकं संस्कारजातिवाचित्वपक्षद्वयेन पूर्वपक्षोपक्रमः तादृशपक्षद्वयोपपादनं च )**

**पूर्ववदिति** ॥ **अनेनच** प्रकरणसङ्गतिरापवादकी चानन्तरसङ्गतिः सूचिता । प्रोक्षणीरासादयेत्यादौ उत्पवनाभिमन्त्रणादिसंस्कारविशिष्टे प्रयोगादायं तद्विनापि प्रयोगाज्जातिवाचित्वेन द्वितीयं च पूर्वपक्षमाह—**संस्कारेति** ॥

**( कल्प्यरूढ्यपेक्षया क्लृप्तयोगप्राबल्येन प्रोक्षणशब्दस्य प्रकृष्टोक्षणसाधनत्वपरत्वेन सिद्धान्तोपक्रमः )**

अपामौदासीन्यावस्थायां प्रकृष्टोक्षणसाधनत्वाभावेनावयवार्थस्याक्लृप्तत्वात्तैलादाववयवार्थसद्भावेऽपि प्रोक्षणीशब्दाप्रयोगात्संस्कारवद्योग्यत्वस्याप्यन्वयतो व्यतिरेकतश्च व्यभिचारात् प्रवृत्तिनिमित्तत्वासंभवादश्वकर्णादिशब्दवज्जलेऽतिरिक्तशक्तिकल्पनस्यावश्यकत्वात् क्लृप्तसमुदायप्रसिध्या चावयवार्थप्रसिद्धिबाधस्य रथकाराधिकरणे वक्ष्यमाणत्वात् तद्वदेव समुदायप्रसिध्या अप्त्वजातिवाचित्वमित्यर्थः ॥

**( समुदायप्रसिद्धेरक्लृप्तत्वात् घृतादावपि प्रोक्षणपदप्रयोगदर्शनाच्च प्रकृष्टोक्षणसाधनत्वयोग्यत्वरूपयोगार्थस्यैव ग्रहणमिति सिद्धान्तोपक्रमः )**

सत्यं समुदायप्रसिद्धेः प्राबल्यं, यदि तस्याः क्लृप्तत्वं भवेत्, अपामौदासीन्यावस्थायामपि प्रकृष्टोक्षणसाधनत्वयोग्यतामात्रेणावयवशक्त्यैव विशिष्टार्थबोधोपपत्तावतिरिक्तसमुदायशक्तिकल्पने मानाभावात् । अन्यथा यौगिकपदमात्रोच्छेदापत्तेर्नाप्त्वजातिवाचित्वम् । तैलादिषु सत्यपि प्रकृष्टोक्षणसाधनत्वेन प्रोक्षणपदवाचित्वे स्त्रीप्रत्ययबहुवचनयोरनन्वयादेव प्रोक्षणीशब्दाप्रयोगोपपत्तेः तद्रहितप्रातिपदिकप्रयोगमात्रस्य घृतं प्रोक्षणं भवतीत्यादौ दृष्टत्वाच्च प्रोक्षणप्रयोगस्येत्यभिप्रेत्य सिद्धान्तमाह—**क्लृप्तेति** ॥

**( यौगिकार्थप्रतीत्यसंभवस्थले रूढेः क्लृप्तिस्थलेचोक्ताधिकरणाप्रवृत्तिनिरूपणम् )**

यत्र तु सर्वथा नावयवार्थप्रतीतिसंभवः तत्रेष्ट एव समुदायप्रसिध्या क्लृप्तावयवप्रसिद्धिबाध इत्याह—**अतएवेति** ॥ **ननु** योग्यतया रथकरणवृत्तित्वस्य जातिविशेषेऽपि संभवात् प्रत्युत "नेमिं नयन्ति ऋभवो यथे"ति मन्त्रलिङ्गात्तेषामपि रथकरणवृत्तित्वावगमात् रथकारशब्दस्यापि यौगिकत्वापत्तौ यौगिकत्वाविशेषात् त्रैवर्णिकस्यैव लाघवाद्रथकारपदेन ग्रहणापत्तिरित्याशङ्कामनूद्य परिहरति—**नचैवमिति** ॥ **अनुशासनेति** ॥ "ऋभूणान्त्वे"ति मन्त्रवर्णरूपानुशासनबलेन रथकारशब्दस्य जातिविशेषपरतावगतेः सामान्यप्रवृत्तयोग्यताबाध इत्यर्थः । सामान्यतो योग्यतामात्रेण. योगाङ्गीकारे त्रैवर्णिकस्य सर्वदा रथकर्तृत्वसंभवेन निमित्तत्वानुपपत्तेर्वर्षाविधिगतरथकारपदवैयर्थ्यमप्यापादयति—**कर्तृत्वेति** । अतश्च वर्षाविधिवाक्ये फलोपहितरथकर्तृत्वेनैव योगो वाच्यस्तादृशस्य चौदासीन्यावस्थे सौधन्वनापरपर्याये जातिविशेषेऽयोगेन व्यभिचारादतिरिक्तरूढिकल्पनमावश्यकमिति वैषम्यमित्यर्थः ॥

**( प्रोक्षण्यधिकरणपूर्वोत्तरकल्पप्रयोजननिरूपणम् )**

**विकृताविति** ॥ सोमारौद्रचरुद्रव्यकविकृतावित्यर्थः । **अविकृत इति** ॥ सर्वत्र प्रागीकरणात्प्रोक्षणप्रातिपदिकमात्रस्य क्वचिदपि संस्कारेऽप्यप्रयोगात् प्रोक्षणीशब्दस्यैव संस्कृतवाचिताभ्युपगमादीकारबहुवचनोपादाने पि घृतादिनिवृत्तेः प्रोक्षणमासादयेत्यूहासंभवादविकृत इत्यर्थः । यस्तु "घृतं प्रोक्षण"मिति प्रयोगः, स नोत्पवनादिसंस्कारपरः; तथात्वे घृतपदसामानाधिकरण्याय प्रोक्षणपदे उत्पवनादिकार्यप्रोक्षणक्रियासाधनलक्षणापत्तेः । अतस्तत्र प्रोक्षणशब्दं भावल्युडन्तत्वेन प्रोक्षणक्रियामात्राभिधायकं यौगिकमङ्गीकृत्य तस्यां घृतस्य साधनत्वेन लक्षणया विधानम् । अर्थादौपदेशिकत्वात् अपां बाध इति न क्वापि प्रोक्षणप्रातिपदिकस्य संस्कारपरत्वमिति भावः । **घृतमासादयेतीति** ॥ घृतस्य सूर्यादिवत् प्राकृतापूर्वकार्यापन्नत्वादवाचकप्रोक्षणीपदनिवृत्तेर्युक्तो घृतपदप्रक्षेपरूपोह इत्यर्थः । **प्रोक्षणीरासादयेति** ॥ यौगिकत्वे प्रोक्षणप्रातिपदिकादप्सामानाधिकरण्येन प्रयुक्तयोर्बहुवचनेकारयोर्घृतेऽर्थलोपेन निवृत्तेश्चोदकप्राप्तप्रोक्षणप्रातिपदिकस्यालोपात् तदेवाप्रधानलिङ्गवशान्नपुंसकैकवचनान्ततयोह्यम् । नच विधिगतशब्दनियमो निगदे द्रव्यविषयेऽस्ति, येन घृतशब्दस्यैव विधिगतस्य प्रयोगः शक्येत; दशमे देवताविषय एव तन्नियमस्य वक्ष्यमाणत्वादित्यर्थः । **इति नवमं प्रोक्षण्यधिकरणम्** ॥

(१० अधिकरणम्।)

**तथा** ॥ "निर्मन्थ्येनेष्टकाः पचन्ती"त्यत्र निर्मन्थ्यशब्दस्य पूर्ववत् संस्कारवाचित्वे निर्मन्थ्यमानय पक्ष्याम इति लौकिकप्रयोगेन निरस्ते मंथनकर्मत्वस्य पाकसाधनीभूतेऽग्नावभावेन मन्थनप्रयोज्यत्वस्य च पाकनवनीतादावपि सत्त्वेनातिप्रसङ्गादरणिप्रयोज्याग्नित्वावान्तरव्याप्यजातिवाचित्वे प्राप्ते—

**(पूर्वाधिकरणेन निर्मन्थ्याधिकरणसंगतिः तद्वदेव सोपपत्तिकपूर्वपक्षद्वयस्य च निरूपणम्)**

पूर्ववदेव प्रकरणसंगतिं सूत्रगततथाशब्दसूचितां तथैव तत्सूचितामातिदेशिकीं चानन्तरसङ्गतिं संशयंच स्पष्टत्वादनभिधायाग्निचयनप्रकरणगतं वाक्यमुदाहृत्य पूर्वाधिकरणवदेवाद्यपक्षद्वयं पूर्वपक्षद्वयं पूर्वपक्षत्वेनाभिधत्ते—**निर्मन्थ्येति**॥ पशौ अधिमन्थनशकलविधानाद्यङ्गकमन्थनस्य "जातायानुब्रूही"ति प्रेषितेन "धनंजयंरणे"इति मन्त्रेण प्रकाशनादिसंस्काराणां च विहितत्वात्तत्संस्कृते वह्नौ शास्त्रस्थानां निर्मन्थ्यशब्दप्रयोगात् संस्कारवाचित्वमित्याद्यः पक्ष इत्यर्थः। **एतेन**— संस्कारनिमित्तत्वात् निर्मन्थ्य एव विधीयते इति प्रकाशकारोक्तम्, **अथवा**—पशावपि संस्कारविधानादाधानप्रकृतसंस्काराणामिव विनिगमनाविरहात् पाशुकसंस्काराणामपि वाच्यत्वमिति सोमनाथेनोक्तम्—**अपास्तम्**; आधानकृतसंस्कारविशिष्टे क्वचिदपि याज्ञिकानां निर्मन्थ्यशब्दप्रयोगस्यादर्शनात्। अत एव चातुर्मास्यातिथ्यादिषु पशुवन्निर्मन्थ्यशब्दप्रयोगो दर्शितः। द्वितीयं पूर्वपक्षमुपपादयितुं आद्यं दूषयति—**निर्मन्थ्यमानयेति** ॥

**(पूर्वाधिकरणगतार्थताशङ्कातत्परिहारौ)**

**ननु** पूर्वाधिकरणन्यायेन कर्मत्वयोगेनैव तच्छब्दप्रवृत्त्युपपत्तावतिरिक्तशक्तिकल्पने प्रमाणाभावात् कथं जातिवाचित्वपक्षोत्थानम्? तेनैव च गतार्थत्वादधिकरणान्तरारम्भवैयर्थ्यं चेत्याशङ्काद्वयं निरसितुमाह—**मथनकर्मत्वस्येति** ॥ निर्मन्थ्यशब्दस्य "ऋहलोर्ण्यत्" इति सूत्रानुशिष्टकर्मत्वार्थकण्यत्प्रत्ययान्तत्वेन मथनकर्मत्वापरपर्यायमथनव्याप्यत्वरूपयोगस्य मथनानिष्पन्ने यागसाधनीभूतेऽग्नावभावेन संस्कारवदेव व्यभिचारित्वात्, प्रतिक्षणं चाग्न्यादिसंसर्गिद्रव्यस्योपचयापचयाभ्यां परिमाणप्रकाशभेदेन भेदात्, स एवायं वह्निरिति प्रत्यभिज्ञायाश्च सजातीयसन्तानजन्यत्वेनाप्युपपत्तेरैक्यासाधकत्वात्पाकसाधनीभूताग्नेर्भूतपूर्वगत्यापि मथनव्याप्यत्वासंभवेन विनष्टे विनाशयोग्यतावन्मथिते मथनव्याप्यत्वाभावात् योगस्य व्यभिचारित्वम्, प्रोक्षणसाधनत्वस्योदासीनाप्सु योग्यताया-स्सत्त्वात् वैषम्यमिति विशेषशङ्कयाऽधिकरणान्तरारम्भः। अत एव जातिवाचित्वपूर्वपक्षसिद्धिरित्यर्थः ॥

**(मथनप्रयोज्यत्वरूपयोगस्य नवनीतेऽतिप्रसङ्ग इति भवदेवमतानुवादः। तन्मतनिरासश्च)**

**अतिप्रसङ्गादिति** ॥ एतच्चातिप्रसङ्गापादनं भवदेवोक्तिमाश्रित्य नेयम्। तेन चात्र नवनीतेऽपि मंथनकर्मत्वायोगस्यातिप्रसङ्गेन यत्र प्रयोगाभावस्तत्रावयवार्थाभाव इत्यसंभवेन व्यतिरेकव्यभिचारान्न यौगिकत्वसंभव इति विशेषाशङ्कां प्रदर्श्य योगरूढ्या समाहितम्। **वस्तुतस्तु**—निर्मन्थ्येनेति प्रकृतवाक्ये निर्मन्थ्यशब्दो न "मन्थ विलोडन" इति दण्डादिभ्रामणापरपर्यायविलोडनार्थकमथधातोर्निष्पन्नः; तस्य द्रवद्रव्यविषयत्वेनाग्नावसंभवात्, अपितु "मन्थ मन्थन" इति क्र्यादिगणपठितान्मन्थनसाधनदण्डादिभ्रमणव्यावर्तनापरपर्यायमन्थनार्थान्निष्पन्नः। अत एव "मन्थ विलोडने" "मन्थ मन्थने"इत्युपदेशोऽर्थभेद उपपद्यत इति नात्रत्यनिर्मन्थशब्दस्य नवनीतादावतिप्रसंगापादनं युक्तम् ॥

**(वैद्युताद्यग्नावप्रसङ्गेन योगार्थासंभव इति न्यायसुधामततद्दूषणे)**

या तु न्यायसुधाकृता वैद्युताद्यग्निव्यक्तेः मंथनजन्यत्वशक्तेरप्यभावात् पूर्वन्यायातुल्यत्वेन विशेषाशङ्का दर्शिता, सा "वैद्युताश्मभिघातोत्थसूर्यकान्तादिजन्मनां। निवृत्तौ चरितार्थत्वान्निर्मन्थ्योऽभिनवः कथमि"ति भाष्योक्तप्रयोजकताक्षेपवार्तिके वैद्युतादीनां निर्मन्थ्यशब्दानभिधेयत्वस्यैवोक्तेस्तत्र निर्मन्थ्यशब्दाप्रसक्तिमादायावयवार्थत्वखण्डनेन तदाशङ्काया वार्तिकविरोधेनायुक्तत्वात् दूषिता प्रकाशकारैरित्युपेक्षिता पूज्यपादैः ॥

**(अरणिप्रयोज्याग्नित्वावान्तरजातिवाचित्वं अग्नित्वसामान्यत्वपरमिति प्रकाशकारमतस्य वार्तिकविरोधेन खण्डनंच)**

द्वितीयं पूर्वपक्षमुपसंहरति—**अरणिप्रयोज्येति** ॥ विहितमन्थनजन्ये संस्कृतेऽग्नौ तथाऽविहितमन्थनजन्ये पाकार्थाग्नौ चाग्नित्वावान्तरजात्यनपायादुभयानुवर्तिन्यास्तस्या एव निर्मन्थ्यशब्दवाच्यत्वान्न क्वापि व्यभिचारः ॥ **यत्तु**— प्रकाशकारैः अग्नित्वजात्यनुवृत्तेर्वैद्युतादीनां अभिधेयतासिद्धेः तद्विषयोऽपि 'निर्मन्थ्यमानये'ति प्रयोगो विनैव गौण्या मुख्ययैव वृत्त्याऽभ्युपगम्यमानो न दुष्यति—**इत्युक्तम्, तत्** स्वयमेव न्यायसुधाकृद्दर्शितविशेषाशङ्कानिरासार्थं पूर्वं वार्तिकविरोधस्य प्रदर्शितत्वात्तत्र निर्मन्थ्यशब्दाप्रयोगादेव तत्साधारणाग्नित्वसामान्यजातिमादाय जातिवाचित्वपक्षोपपादनस्य तत्रापि प्रयोगापत्तेरयुक्तत्वादयुक्तमिति सूचयितुमरण्यवान्तरपदयोरुपादानम्। एवंच "निर्मन्थ्यमानय पक्ष्याम" इति प्रयोगो मथनमात्रजन्यत्व एव नत्वग्निसामान्यमात्रेऽपीत्याशयः ॥

मंथनप्रयोज्यत्वयोगेनैवोपपत्तौ उक्तरूढिकल्पने प्रमाणाभावादतिप्रसङ्गस्य च पाकादौ प्राचीनप्रयोगाभावेनैवाबोधकत्वोपपत्तेर्निराकर्तुं शक्यत्वान्नवनीते च वाच्यत्वस्यापि वक्तुं शक्यत्वाद् यौगिक एव निर्मन्थ्यशब्दः । एवंच "निर्मन्थ्येनेष्टका" इत्यत्राग्नेः पाकसामर्थ्यादेव प्राप्तत्वान्मन्थनमात्रविधिरिति तस्यापि प्रयोगमध्ये करणं सिद्धान्तप्रयोजनम् ॥ १० ॥ २६ ॥ इति दशमं निर्मन्थ्याधिकरणम् ॥

**( मथनप्रयोज्यत्वयोगेन नवनीतवाच्यत्वस्यापि संमतत्वस्य वस्तुतस्त्वित्यादिना तदसंमतत्वस्य च निरूपणपूर्वकं सिद्धान्तोपक्रमः )**

पूर्वोक्तदोषापत्तेर्नायं कर्मणि तव्यप्रत्ययः, अपितु "अर्हे कृत्यतृचश्चे"ति सूत्रादर्हार्थकं तमङ्गीकृत्य मन्थनार्हतायाः संबन्धविशेषापेक्षायां मथनप्रयोज्यत्वस्यैव तस्य मथनप्रयोज्यवह्निसन्ताने निर्मन्थ्यशब्दप्रवृत्तिनिमित्तत्वेनाश्रयणात् सर्वत्रैवावयवयोगेनैव वैद्युताद्यग्निव्यावृत्त्या प्रयोगोपपत्तौ नातिरिक्तशक्तिकल्पनं युक्तमित्यभिप्रेत्य सिद्धान्तमाह—**मन्थनप्रयोज्यत्वेनेति** ॥ **वाच्यत्वस्यापीति** ॥ नचाप्रयोगान्नवनीतावाच्यत्वं युक्तम्; यो यद्वाचकश्शब्दः स तत्र सर्वैरपि प्रयोक्तव्य इति नियमे प्रमाणाभावेनासत्यपि प्राचीनप्रयोगे इदानींतनेनैव केनचिद्वक्त्रा नवनीते निर्मन्थ्यशब्दप्रयोगे कृते श्रोतुरवयवार्थयोगेन झटित्येवार्थप्रत्ययेन तद्वाच्यत्वकल्पने बाधकाभावात् । **वस्तुतस्तु**—नवनीते विलोडनार्थकमन्थधातुनिष्पन्नत्वेनापि क्वचित्प्रयोगोपपत्तेः नाग्निवाचकनिर्मन्थ्यपदवाच्यत्वं युक्तमिति प्रागेव सूचितम् । नहि क्वचिदप्याकरग्रन्थेषु अग्निवाचकनिर्मन्थ्यपदप्रयोगो नवनीते उक्तः, प्रत्युत भवदेवेन तन्निरासायैव योगरूढेरुपासनं कृतमिति ध्येयम् ॥

**( निर्मन्थ्येनेतिवाक्ये निर्मन्थ्यशब्दसार्थक्यार्थं पाकसामर्थ्यप्राप्ताग्न्युद्देशेन मंथनविधिः ततः अन्तः प्रयोगमप्यमन्थनकरणसिद्धिश्चेत्यादिनिरूपणम् )**

**ननु** निर्मन्थ्यशब्दस्य नवनीतादावपि वाच्यत्वकल्पने अग्निमात्रवाचित्वे वा कथमग्निविषयकस्य मन्थनस्य कर्तव्यतासिद्धिः? नच निर्मन्थ्यपदवैयर्थ्यापत्तेरेव मथनकर्तव्यतासिद्धिः; तस्य वैद्युतादिव्यावृत्त्यर्थकत्वेन सार्थक्यादित्याशङ्कापरिहारायाह—**एवंचेति** ॥ इष्टकोद्देशेन निर्मन्थ्यद्रव्यकरणपाकस्येह विधेयत्वात् विधेयपाकसामर्थ्यादेव वह्निरूपद्रव्यविशेषप्राप्तेः लोहितोष्णीषवदप्राप्तमथनमात्रांशे विशेषणविधिकल्पनात् तेनैव च वैद्युतादिव्यावृत्तिसिद्धेर्नोक्तदोष इत्यर्थः । अत एवास्मिन् पक्षे अङ्गप्रधानयोर्मन्थनयागयोः एकदेशकालकर्तृत्वलाभात् प्रयोगमध्यवर्तित्वलाभाच्च अधिमन्थनशकलनिधानादिधर्मरहितं केवलमेव मंथनं कृत्वा तन्निष्पन्नेनाग्निना यागः कार्य इति "यौगिके चिरमथिते न" इति भाष्योक्तं प्रयोजनं लभ्यत इत्याह—**तस्यापीति** ॥ सिद्धान्तपदोपादानात् संस्कारवाचित्वपूर्वपक्षे पशुप्रकरणविहितयावत्संस्कारसहितमंथनस्य प्रयोगानंतःपातः, जातिवाचित्वपक्षे तु प्रयोगबहिर्भूतेन येन केनचिदग्निना पाक इति व्यतिरेकेण प्रयोजनभेदः सूचितः । अतो निर्मन्थ्यशब्दस्य प्रोक्षणीशब्दवद्यौगिकत्वमेवेति सिद्धम् ॥

**( साक्षान्मन्थनजन्यस्यैव निर्मन्थ्यपदयौगिकत्वेन मूलकाराभिमतप्रयोजने वार्तिकाविरोधादिसंपादनसंभव इति स्वमतनिरूपणम् )**

अत्रच साक्षान्मथनजन्याग्नितज्जन्याग्निसाधारण्येनैकस्यानुगतस्य संबन्धस्य निर्वक्तुमशक्तेः जन्यत्वस्यैव सम्बन्धत्वाङ्गीकारेण साक्षाज्जन्य एव निर्मन्थ्यपदस्य यौगिकत्वेन वाच्यत्वकल्पनं युक्तम्, तत्सन्ततेस्तु प्रयोज्यत्वेन संबन्धेन लक्षणया प्रयोगः । प्रकृते मुख्यार्थसंभवे लाक्षणिकग्रहणस्यान्याय्यत्वात् तदर्थस्यैव ग्रहणादन्तःप्रयोगं मंथनकारणसिद्धिरिति सर्वत्राग्नौ योगिकत्वेन वाच्यत्वं नाश्रयणीयम् । **किंच** यदि कौस्तुभोक्तरीत्या प्राप्तपाकविधानमङ्गीक्रियते, तदा निर्मन्थ्याग्निद्रव्यविशिष्टपाकविधानेन विशिष्टार्थे विधौ वैयर्थ्याभावात् निर्मन्थ्यपदस्य वैद्युतादिव्यावृत्त्या सार्थक्यात् किमिति विशेषणविधिकल्पनागौरवमाश्रित्य मथनांशेऽपि विधानमाश्रयणीयम्? यदि तु पाकस्यान्यतः प्राप्तिमाश्रित्योद्देश्यत्वम्, तदा तस्य प्राप्तत्वात् विधेः विशेषणांशे पर्यवसानेऽपि पाकसामर्थ्याद्वह्नेर्विशेष्यस्यापि प्राप्तौ लोहितोष्णीषवदिह द्रव्यविशेषणीभूतक्रियामात्र एव पर्यवस्यतीति प्रयोगमध्ये तदनुष्ठानलाभः । "पाकेनाग्नेरुपात्तत्वाद्विशेषणपरा श्रुतिः । तच्च पाकाङ्गभूतत्वात्तद्देशादौ करिष्यते ॥" इत्यचिरमथितत्वोपपादनपरवार्तिकमप्येवमेव नेयम् । तत्र पाकप्राप्तिः कथं? प्राप्तावपि वा कथं न विशिष्टोद्देशः? इत्याशङ्काऽवान्तरप्रकरणादिष्टकानां लाभात् इष्टकात्वस्य पाकसमनियतत्वेनार्थात् पाकलाभात् निराकर्तव्येति मम प्रतिभाति ॥ इति दशमं निर्मन्थ्याधिकरणम् ॥

(११ अधिकरणम्।)

**वैश्वदेव** ॥ चातुर्मास्येषु वैश्वदेवे प्रथमे पर्वणि आग्नेयादीनष्टौ यागान् विधाय "वैश्वदेवेन यजेते"ति श्रुतम्। तत्र वैश्वदेवशब्दो गुणविधिः कर्मनामधेयं वेति चिन्तायां नामत्वे समस्तवाक्यवैयर्थ्यप्रसङ्गादगत्या आग्नेयादिषु सप्तसु देवताविधिः; आमिक्षायागे विश्वेदेवदेवतायाः प्राप्तत्वात् ॥

**(पूर्वाधिकरणेन आग्नेयाधिकरणेन चापवादिकसङ्गतिः वैश्वदेवाधिकरणस्येतिनिरूपणम्)**

गुणविधिनामधेयविचारात् प्रकरणसङ्गतिं तथा आग्नेयाधिकरणे तत्प्रख्यन्यायासंभवेन गुणविधित्वे साधिते प्रसङ्गेन गुणविशेषविधिविचारे कृते **यत्प्रसङ्गेन यदागतं तत्समाप्तौ तदेव पुनरुपस्थाप्यत** इति न्यायेन आग्नेयाधिकरणोक्तगुणविधित्वे सत्यत्रापि तत्प्रख्यन्यायाक्षेपेण गुणविधित्वपूर्वपक्षकरणादापवादिकीमनन्तरसङ्गतिं **अथवा**—पूर्वत्र निर्मन्थ्यशब्दे द्रव्यप्रधानेऽपि विशेष्यस्यान्यतः प्राप्तेः विशेषणमात्रविधिफलकत्वे स्थिते वैश्वदेवशब्दस्यापि विशेषणभूतदेवतापरत्वमस्त्विति पूर्वाधिकरणप्रयोजनमुपजीव्य पूर्वपक्षिणः प्रत्यवस्थानादापवादिकीमनन्तरसङ्गतिं च स्पष्टत्वादनभिधाय विचारविषयं दर्शयति—**चातुर्मास्येष्विति** ॥

**(वैश्वदेवेन यजेतेतिविषयवाक्यविशेषणतया चातुर्मास्येष्विति, अष्टौ यागान्विधायेतिचोपादानस्य सिद्धान्ते प्रत्येकप्रयोगापत्तिसमुदायानुवादप्रयोजनादिज्ञापनार्थत्वोपपादनम्)**

आग्नेयाद्यष्टयागानां यदि विश्वजिन्न्यायेन स्वर्गः फलं भवेत्, तदा य इष्ट्येतिवाक्यवत् "वसन्ते वैश्वदेवेन यजेते"त्यादिवाक्यविहितकालदेशाद्यन्वयस्य प्रत्येकमेवान्वयात् "वैश्वदेवेन यजेते"त्यत्राष्टानां नामत्वावधारणेऽपि सिद्धान्ते प्रत्येकं प्रयोगापत्तिरापद्यते इत्यतः चातुर्मास्यपदोपादानम्। ततश्च "चातुर्मास्यैः स्वर्गकामो यजेते"त्यनेन एकफलसाधनत्वेनैकादशाद्यन्यायेन युगपत्कर्तव्येषु सर्वेषु यागेषु अष्टानां वैश्वदेवनामत्वेनैककालत्वावगमे सति तद्वारावान्तरप्रयोगैक्यं वैश्वदेवेन यक्ष्य इति संकल्पश्च लभ्यत इत्यर्थः। चातुर्मास्याख्यकर्मणस्त्रीणि वरुणप्रघाससाकमेधशुनासीरीयाख्यान्यन्यानि पर्वाणि तदपेक्षया प्रथम इत्युक्तम्। तदुपन्यासस्य च सिद्धान्ते चत्वारि पर्वाणीति व्यवहारस्य समुदायानुवादप्रयोजनताज्ञापनमेव प्रयोजनम्। यद्यत्र वैश्वदेव एव यागः प्रकृतः स्यात्तदा तत्र विश्वदेवदेवतायाः प्राप्तत्वात् गुणविधिपूर्वपक्षस्य समुदायिनां बहूनामभावात् समुदायानुवादप्रयोजनतासिद्धान्तस्य चासंभवापत्तिवारणाय आग्नेयादीत्युक्तम्। तांश्च "आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालं" इति वाक्ये विधायेत्यर्थः ॥

**(समस्तवाक्यवैयर्थ्यापत्त्या वैश्वदेवशब्दस्य देवताविधिपरत्वोपपदनम्)**

**समस्तेति** ॥ यद्यामिक्षायागमात्रस्य तत्प्रख्यन्यायेन नामधेयं सिद्धान्ते अभिमतं, तदा तदभावेऽपि वैश्वदेवदेवताकत्वेनैव वसन्तादिकालविधायकवाक्ये ग्रहणोपपत्तेर्वैयर्थ्यम्। यदितु सप्तापि, तदा तु तत्र तद्देवताया अप्राप्तेः तत्प्रख्यशास्त्राप्राप्तेर्न तत्संभवः। **किंच** सूक्तहविषोरेव देवतातद्धितनियमेन यागपरत्वानुपपत्तेः तद्देवताकहविष्कयागलक्षणापत्तेरपि न युक्तं नामधेयत्वम्। अतएवैकदेशप्रवृत्तिनिमित्ताङ्गीकरणेनाप्यग्निहोत्रपदस्य सायंप्रातरभ्यासद्वयनामत्वेऽपि लक्षणाद्यनापत्तेर्नास्य तत्तुल्यत्वम्। नच तद्धितस्य संबन्धसामान्यार्थत्वेन लक्षणापादनं युक्तम्; देवतातद्धितेऽपि संबन्धसामान्यमादायैव देवतात्वरूपविशेषसम्बन्धपर्यवसानेन पर्यवसानोपपत्तौ "सास्य देवते"त्यनुशासनवैयर्थ्यापत्तेः। तस्यैव शक्यार्थानुशासनत्वस्वीकारेणान्यस्य लाक्षणिकानुशासनत्वाङ्गीकारेण तदनिवारणात्। अतो विधेयान्तराभावे नाम्नश्चाविधेयत्वात् समस्तवाक्यानर्थक्यप्रसङ्गात् गुणविधिरेवायमित्यर्थः। **देवताविधिरिति** ॥

**(द्रव्यदेवतोभयपरस्यापि वैश्वदेवशब्दस्य देवतारूपविशेषणांशमात्रे विधिव्यापारेणावाक्यभेदः)**

**नच**—यागानुवादेन देवताया द्रव्यस्य च विधौ वाक्यभेदापत्तिः, यदितु प्रकृत्यर्थस्य देवतात्वेन तस्य च द्रव्येऽन्वयस्य व्युत्पन्नत्वात् तदनापत्तिः शङ्क्यते, तदा विद्वद्वाक्यविहितकर्मानुवादेनाग्नेयादिवाक्ये आग्नेयपदेन द्रव्यदेवताविधानेनारूपतापरिहारेऽपि वाक्यभेदापत्तिः सिद्धान्ते न सिध्येत्। अत एतादृशस्थले देवतात्वस्य कारकत्वेन भावनायामेवान्वयस्वीकारेण द्रव्येऽन्वयाभावेन तदापत्त्युपपादने प्रकृतेऽपि तदापत्तिस्स्यादेवेति—**वाच्यम्**; अस्येति सर्वनाम्नः प्रकृतपरामर्शित्वेन स्ववाक्योपात्तद्रव्यविशेषालाभेऽष्टाकपालादिप्रकृतद्रव्यपरत्वोपपत्तेः। तेषां चोत्पत्तिवाक्यत एव प्राप्तौ विशेषणीभूतदेवताविध्युपपत्तिरित्यर्थः ॥

**(वैश्वदेवपदस्याग्नेयादिवाक्यविहितयागे गुणसमर्पकत्वे उत्पत्तिशिष्टन्यायविरोधस्य द्वेधा परिहारः)**

उत्पत्तिशिष्टगुणाग्न्यादिदेवतान्तरावरोधेनोत्पन्नशिष्टतद्देवतानिवेशो न संभवतीत्याशङ्कानिरासाय पूर्वोपपादितन्यायत्वा-

देवताविशिष्टकर्मान्तरविधानं वा; गुणात् । एतस्मिन्नेव वा कर्मणि आमिक्षावाक्येन द्रव्यमात्रविधानम् । एवंचाष्टौ

संभवाभिप्रायेणाऽगत्येत्युक्तम् । एवंच गुणाधिकरणवक्ष्यमाणोत्पत्तिशिष्टगुणवलीयस्त्वस्यापीहाक्षेपेण समाधानमिति सूचितम् । **अथवा**—सर्वनामश्रुत्यैवाष्टाकपालादिद्रव्येषु देवताविधिरगत्यैवैतद्देवताया उत्पन्नशिष्टाया अपि विधिर्नायुक्तः । यदिहि "वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनं चे"त्यश्रोष्यत, तदा कथंचित् तत्रोत्पत्तिशिष्टप्राबल्यमङ्गीक्रियेत । अत एव गुणाधिकरणपूर्वपक्षे वाजमामिक्षारूपमत्र येषां विश्वेषां देवानां ते वाजिनो विश्वेदेवास्तेभ्यो वाजिनमित्यर्थाङ्गीकारेणैवोत्पत्तिशिष्टगुणप्राबल्यशङ्का निरस्ता । प्रकृतेतु वैश्वदेवशब्दस्य यौगिकत्वस्यासन्दिग्धत्वात् अष्टाकपालादिपरामर्शोपपत्तेः तत्रापि 'शिक्ये घटोस्ति तमानये'त्यादौ सर्वनाम्नः शुद्धद्रव्यपरामर्शित्वस्य दर्शनात् पूर्वदेवतासंवन्धपरित्यागेन देवतान्तरसंवन्धस्य प्रधानावृत्त्यापादकत्वेनायोगाच्च समुच्चयानुपपत्तेः विकल्पेनैव युक्तो निवेशः । **नच**—यथा सवनीयहविष्षु "इन्द्राय हरिवते धाना निर्वपेदि"त्यादिविहितनिर्वापे हरिवदादीनां देवतात्वेऽपि एतेषां हविषां "इन्द्रमेव यजन्ती"ति वचनान्तरविहितेन्द्रदेवताया यागे संबन्धाश्रयणेन न विकल्पस्तथेहाप्युपपत्तेः किमिति तदाश्रयणम्? इति—**वाच्यम्**; तत्र निर्वापे देवतान्वयसंभवेऽपि इह तथा स्वीकारेऽष्टाकपालादिपदानामनन्वयापत्तेरगत्या लक्षणया यागविधेरवश्यं स्वीकार्यतया वैषम्यात्, तत्र तु धानादीनां निर्वापसंभवेन तदन्वयोपपत्तेर्युक्तो निर्वापान्वयः । अष्टाकपालादीनां तु तदन्वयायोग्यत्वाद्विशेषः । यद्यपि प्रस्तुतद्रव्यपरामर्शे बहुत्वात् बहुवचनापत्तिः; तथापि प्रकृतहविष्ट्वरूपधर्मैक्यविवक्षयाप्येकवचनोपपत्तिरित्यर्थः ॥

**( वाजिनयागामिक्षायागयोरनुवादासंभवे सप्तयागोद्देश्यत्वोक्तिरिति निरूपणम् )**

वाजिनयागस्य प्रतिपत्तित्वेनाऽमिक्षायागाङ्गत्वात् प्रकरणासंभवेन यजिनाऽनुवादासंभवाभिप्रायेण—**सप्तस्वित्युक्तम्** । आमिक्षायागस्य प्रकरणसंभवेऽपि "अप्राप्ते शास्त्रमर्थवदि"ति न्यायेन यजतौ वैरूप्याप्रसङ्गाय सप्तस्वित्युक्तम् । तदेव विशदयति—**आमिक्षेति** ॥

**( वाजिनवाक्यवत् विशिष्टविध्यङ्गीकारेणोत्पत्तिशिष्टन्यायविरोधपरिहारः, तत्र त्रिंशदाहुतिसंपत्तिलिङ्गदर्शनोपपत्तिश्च )**

यद्यपि चोत्पत्तिशिष्टवलीयस्त्वम्; तथापि वाजिनयागवदेव विशिष्टकर्मान्तरविधित्वेनैव पक्षान्तरेण गुणविधिपक्षं द्रढयति—**देवताविशिष्टेति** ॥ तद्धितेन चावगतेऽनिर्धारिते द्रव्यविशेषे निर्धारणापेक्षायामनेकदेवताकत्वसादृश्येनातिदेशात् पुरोडाशादिद्रव्यविशेषावधारणसिद्धिरित्यर्थः । नच

हवींषि इति लिङ्गदर्शनस्याप्युपपत्तिरिति प्राप्ते—

नाग्नेयादिषु गुणविधिः; उत्पत्तिशिष्टदेवताऽवरोधात् ।

कर्मान्तरत्वे त्रिंशदाहुतिसंपत्तिप्रदर्शकलिङ्गदर्शनानुपपत्तिः, एकत्रिंशदाहुत्यापत्तेरिति प्रकाशकारोक्तदूषणापत्तिः; पुरोडाशामिक्षयोरेकदेवतात्वेन सान्नाय्यवत्सहयागावगतेः "त्रयोदशामावास्यायामि"ति वदुपपत्तेः ॥

**( अष्टौ हवींषीत्यादिलिङ्गदर्शनाविरोधार्थं प्रकारान्तरेण पूर्वपक्षः विशिष्टविधिपूर्वपक्षे प्रकाशकारापादितानुपपत्त्यन्तरपरिहारश्च )**

पक्षान्तरेण द्रव्यविशेषप्राप्तिप्रदर्शनापत्तिद्वाराऽष्टौ हवींषीति लिङ्गदर्शनानुपपत्तिं परिहरति—**एतस्मिन्नेवेति** ॥ अपिना प्रकाशकारापादितलिङ्गानुपपत्तिपरिहारो मदुक्तः सूचितः । **एतेन**—वैश्वदेवपदस्य द्रव्यपरत्वेऽपि प्रकृतानां बहुत्वाद्वैश्वदेवेनेति चोपादेयविशेषणस्यैकत्वस्य विवक्षितत्वेन किं तत् द्रव्यमित्यनध्यवसायात् पर्यायेण चान्यसर्वग्रहणे पर्यायवृत्तेरेव दोषत्वात् विकल्पापत्तेश्च न विशिष्टविध्याश्रयणेन कर्मान्तरत्वपूर्वपक्षो युक्त इति प्रकाशकारोक्तं—**अपास्तम्**; सर्वनाम्नां प्रकृतपरामर्शित्वनियमाभावेन तद्गुणास्त्विवतिसूत्रे तच्छब्दस्येव बुद्धिस्थपरामर्शितया इहोपपत्तौ पूर्वोक्तरीत्या विशेषावधारणसिद्धेश्चाष्टाकपालादिसर्वपरामर्शस्यासंमतत्वात् तद्रूपाप्रसङ्गात् । अस्तुवा तन्नियमः, एवमपि प्रकृतपरामर्शित्वस्येवाव्यवहितपरामर्शित्वस्यापि त्यागे प्रमाणाभावेनैककपालस्यैव परामर्शेन विशेषावधारणाद्युपपत्तेश्च । **मूले** अनुक्तपूर्वोपपादितापत्त्यन्तरसूचनाय वाशब्दः प्रयुक्तः ॥

**( वार्तिकक्रुदादृतगुणविधित्वं नामत्वमुभयं भवत्विति समुच्चयपूर्वपक्षस्य प्रौढिवादतोपपादनम् )**

**यच्चु वार्तिके**—निर्मन्थ्यशब्दस्य यौगिकस्य नामधेयत्वे सत्यपि गुणविधित्वस्यापि दर्शनाद्वैश्वदेवशब्दस्यापि यौगिकत्वात् सत्यपि नामधेयत्वे गुणविधित्वमप्यस्त्विति समुच्चयेन पूर्वपक्षः केवलनामधेयत्वेन सिद्धान्त इति पक्षान्तरेण **दर्शितम्**, तत्पूर्वं स्वयमेव मत्वर्थलक्षणावाक्यभेदतत्प्रख्यतद्व्यपदेशानामभावेन नामतानुपपत्तेरुक्तत्वात् असिद्धनामधेयत्वसमुच्चयायोगात् सर्वत्र च गुणविध्यसंभवे नामत्वानुपपत्तेश्च सकृदुच्चरितस्य वैश्वदेवशब्दस्य विरुद्धोभयरूपतापत्तेर्गुणविधिप्रतियोगिकनामत्वस्याभावेन समुच्चयपूर्वपक्षायोगात् प्रौढिवादमात्रमित्यावेदितो न्यायसुधायामित्युपेक्षितं पूज्यपादैः ॥

**( वैश्वदेवपदस्य संवन्धसामान्यतद्धितान्तस्य यागनामत्वे एव विधिलाघवात्तन्नामत्वसिद्धान्तः )**

सिद्धान्तमाह—**नाग्नेयादिष्विति** । यदुक्तं सर्वनाम्ना

नापि कर्मान्तरविधिः; भेदबोधकप्रमाणानां नामत्वेनोपपत्तौ विधिगौरवापादकभेदबोधकत्वानुपपत्तेः । अतएव नामिक्षावाक्येऽपि द्रव्यमात्रविधानम्; "आग्नेयमष्टाकपालं निर्वपे"-दित्याग्नेयादिवाक्ये निर्वपेदित्यस्य विशिष्टविधायकस्यामिक्षावाक्येऽनुषक्तस्य द्रव्यमात्रविधायित्वे वैरूप्यापत्तेश्च। अत आग्नेयादीनामष्टानामपि यागानां नामधेयं वैश्वदेवशब्दः; उत्पत्तिशिष्टदेवताऽवरोधसहकृततत्प्रख्यन्यायात्। प्रवृत्तिनिमित्तंच विश्वदेवदेवताजन्यामिक्षायागघटितसमुदायाश्रयत्वरूपम्। वाक्यंच समुदायसिद्ध्यर्थं समुदायिनामनुवादकम्। तत्प्रयोजनंचाष्टानामपि यागानां "वसन्ते वैश्वदेवेन यजेते"ति वसन्तादिसम्बन्धद्वारा चातुर्मास्यसंज्ञकत्वलाभेन फलसम्बन्धसिद्धिः। इतरथा आमिक्षायागस्यैव विश्वदेव-

---

प्रकृतद्रव्यपरामर्शात् तत्रैव गुणाधिकरणपूर्वपक्षरीत्या देवताविधानम्—**इति, तन्न;** सर्वनाम्नः स्ववाक्यानुपात्तद्रव्यपरत्वासंभवेऽपि स्ववाक्योपात्तयागपरत्वोपपत्तेः । न हि सूक्तहविस्समभिव्याहार एव देवतातद्धित इति नियमोऽस्ति। "शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाज"इत्यादौ तदभावेऽपि देवतातद्धितदर्शनात्, प्रचुरप्रयोगात् तद्धितस्य संबन्धसामान्येऽपि शक्त्यवगमाद्देवतात्वरूपसंबन्धविशेषस्य प्रमाणान्तरेण बोधोपपत्तेर्न लक्षणापत्तिरितीहापि तदुपपत्तौ न विकल्पापादकदेवताविधानं युक्तम्; नामत्वेनाप्युपपत्तौ समुदायानुवादार्थत्वेन सार्थक्येनानर्थक्याभावात् इत्यर्थः । **विधिगौरवेति** । मत्वर्थलक्षणापत्तेरपि उपलक्षणमेतम् ॥

**( आग्नेयादिवाक्ये विशिष्टविधिपरस्य निर्वपेदित्यस्य आमिक्षावाक्येऽनुषक्तस्यापि तथात्वावश्यकतया आमिक्षावाक्ये यजिकल्पनार्थं द्रव्यदेवतासंवन्धस्यापि विधानावश्यकतया च वैश्वदेवशब्दस्य गुणपरत्वखण्डनम् )**

**वैरूप्यापत्तेश्चेति** । यथैव हि "सप्तदश मारुतीः त्रिवत्सानुपाकरोति तावतश्चोक्ष्ण"इत्यत्रोक्ष्णां पर्यग्निकृतानां उत्सर्गे कर्मभेदापादकस्यैकपशुनिष्पन्नैकादशावदानगणातिदेशस्याभावेऽपि मारुतीवाक्यस्थस्य सप्तदशकर्मविधायकाख्यातस्येहानुषक्तस्येह वैरूप्यापत्तेः भिन्नान्येव कर्माणि विधीयन्ते, तथेहापि अनुषक्तनिर्वपतिपदस्य वैरूप्यापत्त्या कर्मविधायकत्वमेव युक्तम् । **किंचा**मिक्षावाक्ये यज्यकल्पने आमिक्षा किमनुवादेन विधीयते, न तावद्विश्वदेवानुवादेन; तथात्वे द्रव्यस्य देवताङ्गत्वापत्त्या यागाङ्गत्वानापत्तेः, वैश्वदेवीपदेन तद्धितेन आमिक्षापदस्य तात्पर्यग्राहकतयाऽऽमिक्षाया एवोपादानात् वैश्वदेवीशब्देनैव द्रव्यविधाने एकप्रसरताभङ्गापत्तेः । अतो यागानुवादेन द्रव्यविधानार्थं यजिकल्पनावश्यकत्वे तत्रैव द्रव्यदेवतासंवन्धस्य कल्पकस्य विधानमावश्यकमिति तद्विशिष्टकर्मान्तरान्वयनिराकाङ्क्षाऽऽमिक्षाया नैतद्वाक्यविहितकर्मणि प्राप्तिरित्यर्थः । **यत्तु—न्यायप्रकाशे—**"वैश्वदेवेन यजेते"त्यस्य यागविधायित्वे आमिक्षावद्वाजिनस्याप्येतद्यागाङ्गत्वापत्त्या विकल्पापत्तिः—**इति दूषणं** दत्तम्, **तन्न;** वाजिनवाक्ये विश्वदेवदेवताकयागप्रत्यभिज्ञाभावे एतद्यागस्य द्रव्यविशेषाकाङ्क्षायां झटित्युपस्थापकवैश्वदेवपदोपात्तैतद्यागानुवादेन विहितामिक्षाया विधानेन नैराकाङ्क्ष्याद्वाजिननिवेशानुपपत्तेः । अतः पूर्वोक्तमेव दूषणं साधु । अतश्च प्रकृतेषु यागेषु गुणविध्यसंभवात् सामानाधिकरण्येन यजिनाऽनूदितसर्वयागानां नामधेयं वैश्वदेवशब्द इत्युपसंहरति—**अत इति** ॥

**( उत्पत्तिशिष्टन्यायसहकारेण तत्प्रख्यन्यायस्य वैश्वदेवनामत्वे प्रमाणत्वम् )**

अत्र च न केवलं तत्प्रख्यन्यायेन नामत्वम्; तस्य गुणविध्यसंपादनद्वारा प्रवृत्तिनिमित्तापादकत्वेनेहामिक्षायागे गुणविधिनिराससंपादकत्वेऽप्याग्नेयादियागेषु तदसंभवस्य कर्तुमशक्यत्वात्; अत उत्पत्तिविशिष्टगुणवलीयस्त्वस्यापि सहकारित्वमभिप्रेत्याह—**उत्पत्तीति** ॥

**( प्रवृत्तिनिमित्तान्तरनिरासपूर्वकं विश्वदेवजन्ययागघटितसमुदायाश्रयत्वस्य प्रवृत्तिनिमित्तत्वोपपादनम् )**

**यत्तु**—प्राचीनैः "यद्विश्वेदेवाः समयजन्ते"त्यर्थवादावगतस्य विश्वदेवकृतयागत्वस्य प्रवृत्तिनिमित्तत्वं—उक्तं, तदवास्तवस्य निमित्तत्वानुपपत्तेरयुक्तम् । **यदपि**—विश्वशब्दस्य सर्ववाचकत्वमभिप्रेत्य सर्वाग्न्यादिदेवताकत्वं—**कैश्चिद्दर्शितम्**, तदपि रूढित्यागादयुक्तमित्यभिप्रेत्य तज्जिज्ञासायां यद्यपिच तत्प्रख्यन्यायेनामिक्षायाग एव प्रवृत्तिनिमित्तं संपाद्यते; तथापि यजेतेत्यनेन प्रकृतत्वाविशेषाद्वक्ष्यमाणार्थवत्त्वाय सर्वेषामेव यागानां समुदायीकरणार्थमनुवादात् समुदाये च विश्वदेवदेवताकत्वस्य स्वजन्यघटितत्वसंवन्धेन सत्त्वात् तद्द्वारा समुदायिष्वष्टसु प्रवृत्तिनिमित्तसंपादनोपपत्तिमभिप्रेत्याह—**प्रवृत्तिनिमित्तं चेति** ॥ एवंच तद्धितेन समुदायिनां चोक्तावपि तेषां संवन्धसामान्ये पदश्रुत्यावगते संवन्धविशेषापेक्षायां योग्यतया विश्वदेवदेवताजन्यामिक्षायागघटितसमुदायाश्रयत्वरूपसंवन्धविशेषावगतेर्वैश्वदेवपदेनैकेनोपादानात् प्राजापत्यानामिवोत्पत्तिवाक्ये एकपदोपादानाभावेऽपि नानावाक्योत्पन्नानामपि एकसमुदायसिद्धेर्न वैश्वदेवशब्दे छत्रिन्यायेन वैश्वदेवावैश्वदेवसमुदाये प्राचीनोपपादितलक्षणाश्रयणक्लेशोऽपीति भावः ॥

**( वैश्वदेवपदस्य समुदायानुवादत्वप्रयोजनम् आमिक्षायागमात्रव्यावर्तनेन सर्वफलसंवन्ध इति निरूपणम् )**

**तत्प्रयोजनं चेति—इतरथेति**। सप्तसु देवताविधान-

देवताकत्वाद् वसन्तादिसंबन्धद्वारा चातुर्मास्यसंज्ञकत्वलाभेन फलसंबन्धापत्तेरितरेषामङ्गत्वापत्तिरिति कौस्तुभे स्पष्टम् ॥ ११ ॥ २७ ॥ इत्येकादशं वैश्वदेवाधिकरणम् ॥

( १२ अधिकरणम् । )

**पूर्ववन्तः** ॥ "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इत्यनेन यागं विधाय "यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति" इत्यादिनाऽष्टाकपालनवकपालदशकपालैकादशकपालद्वादशकपालानां फलान्यनूद्याऽन्ते "यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवती"ति श्रुतम् । तत्र द्वादशत्वे अष्ट-

पूर्वपक्षे तेषामपि वैश्वदेवपदेन ग्रहणं संभवत्येवेति शङ्कानिरासायामिक्षायागस्यैवेत्येवकारः प्रयुक्तः । तत्राग्न्यादीनामपि विकल्पेन पूर्वपक्षे देवतात्वाद्वसन्त दिविधौ नित्यानित्यसंयोगविरोधापत्तेर्न ग्रहणमित्यर्थः । **वस्तुतस्तु**—कर्मान्तरपूर्वपक्षे समानलिङ्गकत्वेन वसन्तादिवाक्ये वैश्वदेवपदमस्यैव नामेति नियन्तुमशक्तेः उपलक्षणमेवामिक्षायागस्यैवेतिपदम् । एवकारश्चाग्नेयादिसप्तकव्यावृत्त्यर्थक एवेति ध्येयम् ॥

**( वैश्वदेवपदस्यामिक्षायागपरत्वेऽपि आग्नेयादीनां वसन्तकालादिसंबन्धसिद्ध्या आग्नेयादीनां तत्संबन्धसिद्धिरिति प्राचीनमतनिरासपूर्वकं फलसंबन्धसिद्धिराग्नेयादीनां प्रयोजनमिति निरूपणम् )**

अत्रच प्राचां ग्रन्थेषु वसन्तकालप्राचीनप्रवणदेशसंबन्धसिद्धिराग्नेयादीनामिति समुदायानुवादप्रयोजनमुक्तम्, नत्वेतदेव प्रयोजनम्, तस्यान्यथापि सिद्धेः, **तथाहि**—एतदभावे हि वसन्तादिवाक्ये आमिक्षायागस्यैव साक्षात् कालान्वयेऽपि चातुर्मास्यैः स्वर्गकामो यजेतेत्यत्रामिक्षायागस्यैव वरुणप्रघासादिपर्वान्तरसहचरितस्य फलसंबन्धापत्तेराग्नेयादिनां वैश्वदेवावान्तरप्रकरणात् तदङ्गत्वापत्तिः । चातुर्मास्यशब्दो हि "चतुर्थे चतुर्थे मास्येकेन पर्वणा यजेते"ति वाक्यान्तरानुरोधेनोत्तरपर्वत्रये मासचतुष्टयोत्तरत्वस्य श्रौतस्य पूर्वावध्यपेक्षायामर्थादायस्य पर्वणो मासचतुष्टयपूर्वभावावगतेर्मासचतुष्टयपूर्वोत्तरभावरूपप्रवृत्तिनिमित्तेन चतुर्णां पर्वणां नामधेयम् । पूर्वोत्तरभावस्यच विशेषापेक्षायां वसन्तादिवाक्येन कालविधानाद्येषामेव पूर्वोत्तरभावघटकवसन्तादिसंबन्धस्तेषामेव चातुर्मास्यनामावच्छिन्नेन यजिना फलसंबन्धावगतेरामिक्षायागस्यैव फलसंबन्धावगतौ वाजिनयागवदन्येषां तदङ्गत्वापत्तावङ्गप्रधानानां एकदेशकालकर्तृत्वसिध्या वसन्तप्राचीनप्रवणदेशसिद्धिर्लभ्यत एवेति न तावन्मात्रस्य प्रयोजनत्वमिति सूचयितुं फलसंबन्धसिद्धिपर्यन्तानुधावनम् ॥

**( वैश्वदेवनामत्वे एव त्रिंशदाहुतिलिङ्गदर्शनस्याप्युपपत्त्या नामत्वोपसंहारः )**

**कौस्तुभे स्पष्टमिति** ॥ उपपादितमेतत् । एवं "नव प्रयाजाः" "नवानूयाजाः" "द्वावाघारौ" "द्वावाज्यभागौ" "अष्टौ हवींषि" "त्रिंशदाहुतयो हूयन्ते" इत्याहवनीयाहुतीनां वैश्वदेवे पर्वणि नित्यवच्छ्रवणं त्रिंशत्त्वलिङ्गदर्शनं उपपद्यते । अन्यथा सप्तसु देवताविधिपक्षे आग्नेयादीनां सप्तानां संप्रतिपन्नदेवताकत्वेन सान्नाय्यवत्सहानुष्ठानेनैकाहुत्यापत्तेः तद्विरोध इति सिद्धं नामधेयं वैश्वदेवपदमिति । प्रयोजनं पूर्वोत्तरपक्षोपन्यासेनैव सुज्ञेयत्वात्पूर्वपक्षे "वैश्वदेवे विकल्प" इति सूत्रेणैव च कण्ठोक्तेर्नोक्तम् ॥ **इति एकादशं वैश्वदेवाधिकरणम्** ॥

---

**( विषयवाक्यसंग्रहः पूर्वाधिकरणेन वैश्वानराधिकरणस्य प्रत्युदाहरणसङ्गतिश्च )**

**इत्यादिनेति**—आदिपदेन "यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति" इत्यन्तस्य संग्रहः । एकवाक्यतासूचनायान्ते इत्युक्तम् । "गुणविधिर्नामधेयं च निर्णीतम् । संदिग्धानामर्थानां वाक्यशेषादर्थाच्चाध्यवसानमुक्तमि"ति द्वितीयाध्यायोपक्रमभाष्यादत्राधिकरणं यावन्नामधेयविचारप्रतीतेः साक्षादेवाष्टाकपालादिशब्दानां गुणविधित्ववन्नामधेयत्वमिहाशङ्क्येहापवादकरणादापवादकीं प्रकरणसंगतिं तथा पूर्वाधिकरणे आनर्थक्यात् गुणविधित्वे पूर्वपक्षिते समुदायानुवादत्वेनाप्यर्थवत्त्वोपपत्तेर्निरस्ते इह तथाविधार्थवत्त्वासंभवादुपक्रमस्थद्वादशकपालशब्दस्य विवक्षितत्वेऽष्टाकपालादिपदानामानर्थक्यापत्तेश्च गुणविधित्वमिति पूर्वन्यायात्ययेन प्रत्यवस्थानात्प्रत्युदाहरणरूपां अनन्तरसङ्गतिं संशयं च स्पष्टत्वादनभिधाय पूर्वपक्षमाह—**तत्रेति** । पुत्रे जाते इत्यन्तस्याग्नेयाधिकरणोक्तन्यायेन निर्वपतेरतिदेशप्राप्तनिर्वापानुवादेन यागलक्ष्यत्वात् द्वितीयान्तवैश्वानरद्वादशकपालपदयोः द्वितीयायाः करणत्वलक्षणाङ्गीकारेण करणसमर्पकत्वमङ्गीकृत्य वैश्वानरेण द्वादशकपालेन यजेत पुत्रजनने निमित्ते इत्यर्थस्य निस्सन्दिग्धत्वेन विचारविषयत्वाभावात् विचारविषयस्य निष्कृष्टरूपत्वं सूचयितुं—**तत्रे**त्युक्तम् ॥

**( तत्प्रख्यन्यायेनाष्टाकपालादिपदनामधेयत्वम् एकस्यैव नामभेदाङ्गीकारप्रयोजनं च )**

यद्यपि अष्टाकपालादिपदेऽष्टत्वादिसङ्ख्या कपालानि तदधि-

त्वादेः प्राप्तत्वादष्टाकपालादिशब्दा वैश्वानरयागनामधेयमित्याद्यः पक्षः। स्वरूपेण प्राप्तावपि परिच्छेदकत्वेन प्राप्त्यभावाद् गुणविधय एव ते। अष्टत्वमष्टाकपालद्रव्यं वा पूर्व-

करणकः संस्कारो द्रव्यं चेत्येतावदवगम्यते, नतु यागः; तथापि सर्वेषाममीषां द्वादशकपालपदेनैव प्राप्तत्वात् तत्प्रख्यन्यायेन लक्षणया समिदादिपदवन्नामधेयान्यष्टाकपालादिशब्दाः, यथा शतं ब्राह्मणाः सोमं भक्षयन्तीत्युक्ते द्वादशैकैकमिति विभागवाक्ये शते द्वादशानां अन्तर्भूतत्वाद्विभागविधिः, तथा द्वादशेष्वष्टत्वप्राप्तिरित्यर्थः। नच प्रथमान्तानां निर्वपेदित्यनेनान्वयाद्यागसामानाधिकरण्याभावः; तदभावेऽप्यष्टाकपालपदैर्यागस्य प्रकृतस्य विधानोपपत्त्या अष्टाकपालो यागो भवतीत्येवं नामतोपपत्तेः। नच संज्ञया कर्मभेदापत्तिः; एकस्यैव प्रकृतस्य यागस्य पाचकलावकादिवद्भेदं विनाप्युपपत्तौ तदङ्गीकारे प्रमाणाभावात्। नच नामत्वे प्रयोजनाभावः; "गायत्रियैवैनमि"त्यर्थवादिकफलस्य रात्रिसत्रन्यायेनेह कल्पनेन नामधेयानां विकल्पेन सङ्कल्पेऽसार्थक्येऽपि तत्तन्नामावच्छिन्नसङ्कल्पात्तत्तत्फलसिद्धेः प्रयोजनत्वलाभादित्यर्थः॥

**(परिच्छेदकतयाऽष्टत्वप्राप्त्यभावेन तत्प्रख्यशास्त्राप्रवृत्त्या गुणविधित्वपक्षान्तरानुसरणं, अतिदेशप्राप्तस्याप्यष्टाकपालस्य पुनर्विधिसार्थक्याद्युपपादनंच)**

अष्टाकपालादिपदात् "तत्रोद्धृतममत्रेभ्यः" इति सूत्रात्तत्रेत्यनुवृत्तौ "संस्कृतं भक्षा" इत्यनेनाष्टसु कपालेषु संस्कृतमित्यर्थे विहितस्य तद्धितरूपस्याणप्रत्ययस्य "द्विगोर्लुगनपत्ये" इत्यनेन सङ्ख्यापूर्वसमासत्वेन द्विगुसंज्ञकादष्टाकपालादिप्रातिपदिकात्परत्वेन लोपविधानात्तद्धितान्तत्वावगमेन तदन्तर्गताष्टत्वप्राप्तौ चतुरादिसङ्ख्यासापेक्षत्वेनासामर्थ्येन तद्धितोत्पत्त्यनापत्तेः द्वादशपरिच्छेदकतयाऽष्टत्वप्राप्त्यसंभवेन तत्प्रख्यन्यायाभावान्न नामधेयत्वसंभव इत्याद्यं पक्षं दूषयन् द्वितीयं पक्षमाह—**स्वरूपेणेति**॥ अतश्च द्वादशकपाले प्राप्ताष्टत्वादिगुणविधिः; अन्यथाऽविहितस्य स्तुत्यसंभवात्। यद्यप्याग्नेयविध्यन्तेनाष्टत्वं प्राप्तम्; तथापि द्वादशत्वादिनौपदेशिकेन बाधो माभूदित्येतदर्थं पुनर्विधिः सार्थकः। यदि तु द्वादशकपाले पदश्रुत्यान्वितद्वादशत्वावरोधेन नाष्टत्वस्य निवेशः, तथा कपालानुवादेनाष्टत्वविधौ एकप्रसरताभङ्गापत्तिरपि स्यादित्युच्येत, तदा गुणत्रयवदेव पुरोडाशे वैजात्यकल्पनया पूर्वयाग एवाष्टाकपालादिद्रव्यान्तरविधिमभिप्रेत्याष्टाकपालादिद्रव्यमित्युक्तम्॥

**(द्वादशकपालस्यानुत्पत्तिशिष्टतया प्राजापत्यन्यायेन त्वेकद्रव्यकयागभेदनिरूपणम्)**

**उत्पत्तिशिष्टेति**॥ तथाच भवतीत्यस्यानुवादत्वं अङ्गीकृत्य प्रथमाया द्वितीयार्थलक्षणया निर्वपेदित्यनेनान्वयाङ्गी-

यागे विधीयते। उपक्रमोपसंहारैक्येन चैकवाक्यत्वप्रतीतेर्न द्वादशकपालस्योत्पत्तिशिष्टता। **अथवा—अस्तु वाक्यनानात्वं, तथापि यद् द्वादशकपालो भवतीत्यनेनैव तद्विधिः।**

कारेण वैश्वानरं द्वादशकपालं अष्टाकपालमित्याद्यन्वयस्वीकारेण सर्वेषामेवोत्पत्तिशिष्टत्वम्। तत्र चाष्टाकपालादिद्रव्याणां परस्परमनन्वितानामेव देवतासंबन्धात्प्राजापत्यन्यायेन द्रव्यदेवतासंबन्धभेदेन यागभेदान्नैकस्मिन् यागे एकवाक्योपात्तत्वादारुणत्वादिवत्समुच्चयापत्तिरित्यर्थः। यत्तु द्रव्यविधिपक्षे समुच्चये कौस्तुभे इष्टापत्त्यभिधानं, तदेतामित्युपसंहारगतैकवचनान्तेनेष्टिपदेनैकयागपरत्वप्रतीत्यभिप्रायेण कथंचिन्नेयम्, नतु पारमार्थिकम्; दध्यादियागानामनेकत्वपक्षे 'चित्रये'त्येकवचनस्येवेहापि पञ्चयागैरेकेष्ट्यभिप्रायेणैकवचनस्योपपत्तेः पूर्वोक्तरीत्या यागभेदस्यापत्तौ यागैकत्वे मानाभावात्॥

**(पूर्वत्रापरितोषेण वाक्यनानात्वपक्षेण सर्वेषामुत्पन्नशिष्टत्वेन विकल्पेन गुणविधित्वरूपद्वितीयपक्षानुसरणम्)**

भवतीत्यादौ बहूनामनुवादत्वानुपपत्तेः प्रथमाया द्वितीयार्थलक्षणायां भवतीत्यनेनानन्वयापत्तेः आवृत्त्यङ्गीकारे आवृत्तेरेव दोषत्वादपरितुष्य वाक्यनानात्वमङ्गीकृत्यैकस्मिन्नपि यागे सर्वेषामुत्पन्नशिष्टत्वसाधनेन पक्षान्तरेण द्रव्यविधिपक्षं समर्थयति—**अथवेति**॥ "अष्टाकपालो भवती"ति यद्वादशकपालो भवतीत्यन्तवाक्येषु भवतीत्यत्राप्राप्तार्थत्वेन विधिमङ्गीकृत्य द्रव्यमात्रविषयो विधिः। तदपेक्षिता च भावनापि यागकर्मिका वैश्वानरवाक्यप्राप्ता भवतिना लक्षणयाऽनूद्यते। वैश्वानरवाक्येतु प्रमाणान्तरसिद्धद्रव्यानुवादकत्वात् द्वादशकपालपदं सर्वेषामुपलक्षणमङ्गीकृत्य केवलवैश्वानरदेवताविशिष्टयागस्यैव लाघवात् विधानम्। "गायत्रियैवैनमि"त्यादिनातु विधेयाष्टाकपालादिद्रव्यस्तुतिः। "एतामिष्टिमि"त्यस्य च प्रत्येकमनुषङ्गेणैतामष्टाकपालगुणकामिष्टिं यस्मिन् जाते निर्वपति स पूत एव भवति। एतां नवकपालगुणकामिष्टिं निर्वपति स तेजस्व्येव भवतीत्येवं प्रत्येकं संबन्धादार्थवादिकपूतत्वादिफलमिष्टेरेव कल्प्यते, नत्वष्टाकपालादिद्रव्यस्येति द्वादशकपालादीनां सर्वेषामेवोत्पन्नशिष्टत्वात् सर्वेषां प्रकृतयागनिवेशोपपत्तेर्निरपेक्षसाधनत्वात् व्रीहियववद्द्रव्याणां विकल्प इत्यर्थः॥

**(द्वादशकपालस्योत्पत्तिशिष्टत्वाङ्गीकारेणाष्टाकपालादिवाक्यस्य गुणफलविधित्वाङ्गीकारेण तृतीयपक्षोपपादनम्। तत्र वार्तिकविरोधपरिहारश्च)**

विकल्पापत्तिदोषापत्तेर्वा स्वरसेन नानावाक्यतामङ्गीकृ-

वैश्वानरवाक्ये तत्पदमनुवाद एवेति द्वितीयः । ब्रह्मवर्चसादिरूपफलोद्देशेन प्रकृतयागाश्रितगुणा एवाष्टाकपालादयो विधीयन्ते इति तृतीयः ।

सिद्धान्तस्तु संभवत्येकवाक्यत्वे तद्भेदस्यान्याय्यत्वात् ...

त्यापि तृतीयं पूर्वपक्षमाह—**ब्रह्मवर्चसेति** ॥ यदष्टाकपालो भवतीत्यादावप्राप्तत्वात् विधिं प्रकल्प्य विहितानां अष्टाकपालादीनां "गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति"इत्यर्थवादिकब्रह्मवर्चसहेतुकपूतत्वफलकल्पनेन तत्रैवाश्रयापेक्षायां प्रकृतवैश्वानरयागस्याश्रयत्वोपपत्तेः काम्यत्वादेवोत्पत्तिशिष्टस्यापि नित्यस्य द्वादशकपालस्य बाधोपपत्तेर्द्वादशकपालस्य स्वशब्दोपादानेन "जगत्यैवास्मिन् पशून्"इत्यात्मीयस्तुत्यैव नैराकाङ्क्ष्यान्नाष्टाकपालादिशब्दानां गौणीपूर्वकलक्षणया द्वादशकपालस्तावकत्वमङ्गीकर्तुं युक्तमित्यर्थः । **यत्तु वार्तिके—ननु** च—"ब्रह्मवर्चसयोगादिफलत्वेन यदीष्यते । स्तुत्यभावाद्विधिः केन वर्तमानापदेशिनाम् ॥" इति ब्रह्मवर्चसफलार्थत्वमाक्षिप्य "गायत्रियैवैनमि"त्यादिना स्तुतिरेव क्रियते, न फलसंबन्धः । तयातु अप्राप्त्यात्मकविध्युन्मीलनाद्यदष्टाकपाल इत्यादिभिः सार्थवादकैः प्रत्येकं विहितानां यथासंख्यं "पूत एवे"त्यादिभिः फलसंबन्धः क्रियते—**इत्युक्तम्,** तदर्थवादाद्विधित्वम्, तेन चार्थवादतेत्येवं अर्थवादतो विधिकल्पनस्यान्योन्याश्रयग्रस्तत्वात् "यस्मिन् जात" इत्यनेनेष्टेरेव पूतत्वादिफलैः संबन्धेन गुणानां तदन्वयानुपपत्तेः प्रौढिवादमात्रमिति सूचयितुं ब्रह्मवर्चसादीत्युक्तम् । अतश्चाप्राप्तार्थस्यैव सर्वव्यापकस्य लेट्त्वनिश्चायकतया विधिकल्पकत्वाद्गायत्रिसत्रे इवार्थवादिकं ब्रह्मवर्चसहेतुकपूतत्वादिकं फलं युक्तम् । एवंच "यस्मिन् जाते" इत्यस्य सिद्धवन्निर्देशानुपपत्त्या विनियोगविधिकल्पनयाऽऽश्रयत्वाभिमतेष्टेः फलसंबन्धोऽपि सिद्धो भवतीति पूतत्वादीष्टेरेव फलमिति भावः । मूले ब्रह्मवर्चसादिरूपफलेतिपदेन ब्रह्मवर्चसपदघटितार्थवादोपात्तं फलमित्यर्थो ज्ञेयः ॥ **यत्तु कौस्तुभे**—पूतत्वादीनां फलत्वमुक्तं, तद्वार्तिकोक्तिमाश्रित्याथवामूलोक्तिविरोधपरिहाराय ब्रह्मवर्चसहेतुकपूतत्वाभिप्रायेण कथंचिन्नेयमिति दिक् ॥

**( आख्यातभेदेन निमित्तफलरूपोद्देश्यभेदेन प्रत्यवायध्वंसरूपफलान्तरोद्देशेन पूतत्वाद्यनेकफलसंबन्धेन च प्रसक्तवाक्यभेदपरिहारेणोपक्रमोपसंहारावगतैकवाक्यतया द्वादशकपालस्तुतावेवाष्टाकपालादिवाक्यानां तात्पर्योपपादनम् )**

वाक्यभेदाङ्गीकारेण दृढतयोपपादितयोर्द्वितीयपक्षतृतीयपक्षयोरेकहेतुनैव दूषणं सूचयन् सिद्धान्तमाह—**सिद्धान्तस्त्विति** ॥ "संभवत्येकवाक्यत्वे"इत्यनेनाथवास्त्विति पक्षो निरस्तः । फलार्थगुणविधिपक्षोऽप्येवं निरसनीयः । यदि ह्याश्रयविधायकं परिपूर्णतयाऽऽश्रयं विधाय निराकाङ्क्षं भवेत्तदा तेन विहिताश्रयलाभेन फलार्थगुणविधानं भवेत् । नह्युपक्रमोपसंहारपर्यालोचनया प्रतीयमानमेकं वाक्यं "एतामिष्टिं निर्वपेत्"इत्यनेनान्वयनिराकाङ्क्षम् । इतरथैकवाक्यताया एव भङ्गापत्तेः । अतश्च वैश्वानरवाक्यस्यापर्यवसायित्वेन यागविध्यभावे विहिताश्रयालाभात्तन्मध्यपतिताष्टाकपालादिवाक्यानां स्वातन्त्र्येण विधायकत्वेऽर्थभेदाद्वाक्यभेदापत्तेश्च नात्र गुणविधिः । **एतेन**—आख्यातभेदेन वाक्यभेदस्यादोषत्वमित्यपि—**निरस्तम्;** आख्यातभेदेऽपि "यस्योभयमि"त्यादौ यच्छब्ददवलादेवैकवाक्यत्ववदिहापि "यस्मिन् जाते" इत्युपसंहारस्य यत्तच्छब्दोपबद्धत्वेनोपक्रमस्य जातेष्टिविषयत्वावगमेनैकवाक्यताप्रतीतेः कामपदाभावेन ब्रह्मवर्चसादेः फलत्वाप्रतीतेः सत्यामपिवा तत्प्रतीतावेतामिष्टिमित्यादिनेष्टिगतफलस्यैव प्रतीतेर्न गुणफलसंबन्धः । नच सिद्धान्तेऽपि निमित्तफलयोरुद्देश्ययोरुपादानाद्वाक्यभेद आवश्यकः; निमित्तस्यावश्यानुष्ठापकत्वरूपोद्देश्यत्वेऽपि ईप्सिततमत्वरूपोद्देश्यत्वाभावेन फलस्यैव तत्त्वेनान्वयात् विजातीययोरेकेनान्वयेऽपीतरविषयाकाङ्क्षानिवृत्त्यभावेन तस्याप्यन्वयोपपत्तेर्वाक्यभेदाप्रसक्तेः । **नच**—निमित्तान्वयेनोद्देश्यानेकत्वाभावेऽपि तदन्वयानुपपत्त्या कल्पितपापक्षयस्य भावनायां पूतत्वादेरिवोद्देश्यत्वेनैवान्वयात् वाक्यभेदतादवस्थ्यमिति—**वाच्यम्;** अन्यत्र पापक्षयस्य भाव्यत्वकल्पनेऽपीह प्रतियोग्युपस्थितिसापेक्षतया विलम्बितोपस्थितिकस्य तस्य भाव्यत्वकल्पनापेक्षया शीघ्रोपस्थितपूतत्वादीनामेव तत्कल्पनात् । **अतएव**—निमित्तबलादवगतप्रत्यवायध्वंसस्यैव फलत्वोपपत्तेर्नार्थवादिकफलकल्पनेत्यपि—**परास्तम्।** नच तथापि पूतत्वाद्यनेकफलानां कल्प्यत्वेऽपि भावनायामन्वये वाक्यभेदः; अर्थवादोपात्तफलकामो निर्वपेदित्येवं पूतत्वादीनां व्यासज्यवृत्तिफलत्वकल्पनेन प्रत्येकमुद्देश्यत्वाकल्पनात् । अतएवचैकवाक्यतापत्त्या संवलिताधिकारसिद्धिरिति नाग्निहोत्रादिविधिवत् प्रयोगान्तराक्षेपकत्वम् । एवंच निमित्तत्वानुपपत्त्याऽकरणे प्रत्यवायमात्रकल्पनेऽपि तद्ध्वंसस्य फलत्वाकल्पनात् । पुत्रविपत्तौ विद्यमानमपि जननिमित्तं नेष्टेः प्रयोजकम्; संवलिताधिकारत्वात्, अतः पुत्रजनने निमित्ते पुत्रगतपूतत्वाद्यर्थं जातेष्टिः कार्या, अन्यथा प्रत्यवैतीत्यर्थावगमात् न तदकरणे पितुः कश्चन प्रत्यवाय इत्यपि ज्ञेयम् । **येतु**—उपक्रमप्राबल्यपक्षे "पुत्रे जाते" इत्युपक्रमे संवलितनैमित्तिकाधिकारितया जातेष्टेर्वाक्यशेषरूपोपसंहारानुसारेण पुत्रगतपूतत्वादिफलसंवलिताधिकारानापत्तेर्वाक्यशेषस्यार्थवादतामात्रेणाप्युपपत्तिरापद्यते इत्युपसंहारप्राबल्येन संवलिताधिकारम्—**आहुः,** तेषां निरासोऽप्यत एव ज्ञेयः । नहि उपसंहारानुसारेणात्रोपक्रमे कस्याप्युपमर्दः कृतः; उपक्रमावगतपुत्रजनननिमित्तत्वापरित्या-

य्यत्वात् प्रकृतयागस्यैवेयं सर्वा स्तुतिः। यदङ्गभूतद्वादशकपालस्यावयवोऽष्टाकपालादिरप्येकैकफलसाधनं, तत्र सर्वावयवोपेतद्वादशकपालस्य सर्वफलप्रयोजकत्वे कः सन्देह इति यागस्तुतिः। अष्टाकपालपदं चाग्नेयाष्टाकपाले शक्तं गौण्या वृत्त्या अष्टत्वाश्रयकपालश्रपितत्वसादृश्येन द्वादशकपालावयवे गौणम्। तेन चावयवद्वाराऽवयवी द्वादशकपालो लक्ष्यते। तेन लक्षणया यागस्तुतिरिति। इदं चाधिकरणं औदुम्बराधिकरणन्यायेन गतार्थमपि शिष्यहितार्थमुक्तमिति ध्येयम्॥ १२॥ २८॥ इति द्वादशं वैश्वानराधिकरणम्॥

(१३ अधिकरणम्।)

ततिसिद्धिः॥ "यजमानः प्रस्तर" इत्यादावपि सामानाधिकरण्यादेकमितरस्य नामधेयम्, अतएव रूढत्वेन तद्-

गेनैव विधेः प्रवर्तकत्वपर्यवसानात् रात्रिसत्रन्यायेन विध्याकाङ्क्षयैव पूतत्वादिफलकल्पनात्। अत एव यत्रान्याङ्गत्वेनैव विधेः प्रवर्तकत्वपर्यवसानेनानाकाङ्क्षा, तत्रापापश्लोकश्रवणादीनां नैव वाक्यशेषेण फलत्वकल्पना, किंतु अर्थवादत्वेन स्तुतिपरत्वमेव युक्तमित्याह—**प्रकृतयागस्यैवेति**॥

**(जगत्यैवास्मिन्निति वाक्येनैव द्वादशकपालस्तुतिनैराकाङ्क्ष्य शङ्कानिरासः)**

यदुक्तं द्वादशकपालस्य "जगत्यैवास्मिन्निति स्तुत्यैव नैराकाङ्क्ष्यान्नाष्टाकपालत्वेन स्तुतेः प्रयोजनमिति, तन्निरासाय **सर्वा** इत्युक्तम्। **अत एवोक्तम् वार्तिके**—स्तुतेरपरिमाणत्वाद्यावती हि प्रतीयते। तां सर्वामेकरूप्येण विध्युद्देशः प्रतीच्छति। सर्वत्र हि अल्पैः वहुभिर्वाक्यैः स्तुतयो दृश्यन्ते, श्रोतृप्रकारानेकत्वाच्च क्वचित्काश्चिदर्थवत्यो भवन्ति। यथैव केषांचिद्विध्युद्देशमात्रेण प्रवृत्तौ सिध्यन्त्यन्यार्था स्तुतिराश्रियते, तथैवाल्पस्तुत्युपपन्नेऽपि कार्ये महास्तुत्याश्रयणमि"ति। अतश्च "यस्मिन् जाते एतामिष्टिं निर्वपति पूत एवे"त्यादिप्राशस्त्यप्रतिपादनोपपादकतया पूर्वासां स्तुतीनां युगपद्ग्रहणादेकया नैराकाङ्क्ष्याभावात् महत्या अपि स्तुतेरपेक्षणात् वैयर्थ्याभावेन सर्वाऽपि स्तुतिरित्यर्थः॥

**(प्रथमपूर्वपक्षखण्डनम्)**

**यत्तु**—एकवाक्यतामङ्गीकृत्य अष्टत्वस्याष्टाकपालद्रव्यस्य वा विधानं पूर्वपक्षितं, तत्त्वेकप्रसरताभङ्गापत्तेरुक्तत्वान्मध्ये भिन्नभिन्नानेकार्थविधाने एकवाक्यताभङ्गापत्तेरयुक्तमिति प्रागेव सूचितम्॥

**(अष्टाकपालपदस्य द्वादशकपालावयवपरत्वोपपादनपूर्वकं अष्टाकपालादिवाक्यैर्द्वादशकपालस्तुतिप्रकारः)**

**ननु** अष्टाकपालादीनां अविहितानां विहितस्य द्वादशकपालस्य चाष्टाकपालादिपदैः कथं स्तुतिरित्यतः स्तुतिप्रकारमाह—**यदङ्गेति**॥ यद्यप्यष्टाकपालादीनामविधानम्; तथापि ब्रह्मवर्चसहेतुकपूतत्वादिहेतुभूता गायत्र्याद्यक्षरताष्टत्वादिसङ्ख्यासाम्येन कपालगताष्टत्वादेः ब्रह्मवर्चसादिजनकत्वेन प्रतीयमाना स्तुतिर्गौण्योक्ताष्टाकपालावयवे संचार्यते। अतः तस्याप्यविहितत्वादवयवावयविभावेन लक्षितविहितद्वादशकपालावयविस्तुतिस्तु यागस्तुतिरित्यर्थः॥ **ननु**—अष्टाकपालपदस्याष्टत्वावच्छिन्नकपालसंस्कृतपरत्वेन द्वादशकपालावयवस्य तेन नोपादानमित्यत आह—**अष्टाकपालपदंचेति**॥ **गौण्येति**॥ वैधस्यैव श्रपणस्य संस्कारपदवाच्यत्वात् इह तदभावेऽप्यष्टाकपालजन्यश्रपणजातिगुणयोगात् गौण्येत्यर्थः। **शिष्यहितार्थमिति**॥ विशेषाशङ्कानिराकरणव्याजेनेति शेषः। प्रयोजनं स्पष्टत्वान्नोक्तम्॥

**॥ इति द्वादशं वैश्वानराधिकरणम्॥**

---

**(पूर्वाधिकरणादिना सङ्गतिनिरूपणपूर्वकपूर्वपक्षोपक्रमः)**

अत्रच "तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रया" इत्येकपाठेन विद्यमानमपि सूत्रं मन्त्राधिकरणपूर्वपक्षसूत्रस्येव व्याख्यासौकर्याय खण्डशः कृत्वा पठितम्। गुणविधिनामधेयविचारात् प्रकरणसंगतिं अष्टाकपालादिपदानां द्वादशकपालावयवे गौण्या वृत्त्या प्रवृत्तिरिति पूर्वाधिकरणे उक्ताया गौण्या निमित्तासंभवादाक्षेपसमाधानेनाक्षेपिकीमनन्तरसङ्गतिं संशयं च स्पष्टत्वादनभिधाय गुणवृत्त्याक्षेपसमाधानार्थत्वेऽप्यस्य सूत्रस्य सार्वत्रिकगौणीवृत्तिसमाधानार्थत्वं सूचयितुं यद्भाष्यकारेण विशेषत उदाहृतं, तदुदाहरणप्रदर्शनेन पूर्वपक्षमाह—**यजमान इति**॥

**(औदुम्बराधिकरणेन गतार्थत्वशङ्कानिरासः)**

**अतएव**—औदुम्बराधिकरणसिद्धं स्तुतिपरत्वमप्यर्थान्तरवाचिनाऽष्टाकपालपदेनेव यजमानपदेनापि प्रस्तरस्तुत्यसंभवेनासंभवात् गौणीवृत्त्या तद्वदेव निर्वहणीयम्। नच सा संभवति; पराभिमततल्लक्षणासंभवात्, अतः प्रामाण्यनिर्वाहाय कर्तव्यपदाध्याहारेण गुणविधित्वमेव अङ्गीकरणीयमित्याक्षिप्य समाधानान्नार्थवादत्वसिद्धान्तकरणादौदुम्बराधिकरणेन गतार्थत्वमित्यपि ध्येयम्॥

**(प्रवृत्तिनिमित्तप्रयोजनयोरसंभवेन सामानाधिकरण्योपपत्त्यर्थं यजमानपदस्य प्रस्तरनामत्वेन पूर्वपक्षोपपादनम्)**

आदिपदेन "यजमान एककपाल" इत्यादिसंग्रहः। भाष्ये विध्यर्थवादत्वाभ्यां कोटिद्वयोपन्यासेऽपि वार्तिके संगतिसूचनात् नामतापूर्वपक्षमाह—**सामानाधिकरण्यादिति**॥ नहि एकार्थप्रतिपादकत्वरूपं पदानां सामानाधिकरण्यं एकार्थत्वं विनोपपद्यते। अतो नामधेयमित्यर्थः। **नच**—नाम्नो

विधेयत्वाभावात् तदवच्छेद्यविधेयान्तरस्याप्यभावे वाक्यानर्थक्यम्, ईदृङ्नामवत्त्वात्प्रशस्तोऽयमिति स्तुतिपरत्वे तेनार्थवादत्वपक्षादविशेष इति—**वाच्यम्**; "प्रजा वै बर्हिर्यजमानः प्रस्तर" इति सामानाधिकरण्यात् प्रजाशब्दस्य बर्हिर्नामत्वे यजमानशब्दस्य प्रस्तरनामत्वे च सति यजमाननामकप्रस्तरस्य प्रजानामकबर्हिरुपरिभावकरणेन प्रसिद्धयजमानस्यायजमानादुत्तरत्ववत् भवतीत्येवंरूपायाः "प्रस्तरमुत्तरं बर्हिषः सादयती"ति विधेयप्रस्तरोपरिभावस्तुतेस्तेन लाभादानर्थक्याभावात्। अर्थवादत्वेतु साक्षादेव स्तुत्यर्थत्वम् । नामधेयत्वेतु परंपरयेत्येतावानेव भेदः । नच नामधेयत्वे प्रवृत्तिनिमित्ताभावः; यजमानशब्दस्य यागकर्तृतावाचितया प्रस्तरैककपालयोरचेतनत्वेन यागकर्तृत्वासंभवेऽपि तत्प्रयोगान्तर्गतस्वव्यापारं प्रति स्थाल्यादिवत् कर्तृत्वोपपत्तेस्तस्यैव प्रवृत्तिनिमित्तत्वोपपत्तेः । अत एव एतादृशयोगस्य यजमाने प्रस्तरपदस्यासंभवादेकमितरस्य नामधेयमिति मूले संमुग्धाधिकारेणोक्तावपि यजमानपदमेव प्रस्तरनामधेयमित्यत्रैव तात्पर्यं द्रष्टव्यम्। प्रतिपादितं च तथैव कौस्तुभे ।

**( यजमानपदस्य योगरूढत्वात् सोमादिवन्नामत्वासंभवात् प्रस्तरकार्ये यजमानरूपकर्तृगुणविधित्वरूपपूर्वपक्षप्रकारान्तरनिरूपणम् )**

अतएव यजमाननामकत्वात् ॥ यजमानशब्दो न यागकर्तृमात्रवाची, अपितु कर्तृनिष्ठक्रियाजन्यफलाश्रयाभिधायकात्मनेपदादेशशानजन्ततया क्रियाजन्यफलाश्रयवाचकत्वेन यजमाने योगरूढ एवेति तदर्थस्य प्रस्तरेऽसंभवात् सोमादिपदवत्सामानाधिकरण्यमात्रेण नामत्वानुपपत्त्या गुणविधित्वपूर्वपक्षमाह—**रूढत्वेनेति** ॥ **ननु**—तथापि कुत्र को वा गुणो विधीयते इत्यपेक्षायामाह—**जघन्यप्रस्तरपदेति** ॥ "यो होता सोऽध्वर्युरि"ति कौण्डपायिनामयने समाम्नाते सामानाधिकरण्यानुपपत्त्या होत्रादिपदानां मुख्यार्थत्वमङ्गीकृत्याध्वर्य्वादिशब्दानां लक्षणार्थत्वं "विप्रतिषेधे करणं समवायविशेषादि"त्यधिकरणे तृतीये उक्तम्। एवमिहापि प्रस्तरपदस्य कार्यलक्षणार्थत्वमङ्गीकृत्य यजमानरूपगुणस्य कर्तृत्वेन विधानमित्यर्थः ।

**( यजमानोद्देशेन प्रस्तरस्य प्रस्तरोद्देशेन यजमानस्य वा विधानम्। )**

तत्र यदि कश्चित् अचेतनस्यापि प्रस्तरस्य यजमानकार्ये क्वचिद्योग्यतया विधानं विनिगमकाभावात् "उद्देश्ययोगः प्राथम्य"मित्युक्तोद्देश्यतानियामकप्राथम्यसत्त्वाद्वा शङ्केत, तन्निरासाय "मुख्यं वा पूर्वचोदनाल्लोकवदि"ति द्वादशाधिकरणोक्तेनानुपसंजातविरोधित्वेन मुखे आदौ भवस्यैव स्वधर्मत्वानुग्रहो युक्तो, नतु जघन्यस्येति मुख्यानुग्रहन्यायेन विनिगमनां सूचयितुं **जघन्ये**त्युक्तम्। ततश्च यजमानपदस्य मुख्यार्थवृत्तित्वरू-



पस्वधर्मत्वानुरोधेन तत्र कार्यलक्षणाया अयुक्तत्वान्न यजमानकार्ये प्रस्तरविधानाद्यापत्तिरित्यर्थः । प्रस्तरैककपालयोः कार्ये यजमानविधाने प्रस्तरैककपालयोरिव प्रहरणसर्वहोमयोरापत्त्या यजमाननाशेन सर्वतन्त्रलोपापत्तिशङ्कानिरासाय **कार्यपदो**पादानम् । स्रुग्धारणयागरूपयोः कार्ययोर्विनियुक्तप्रस्तरैककपालयोः प्रहरणहोमाख्यप्रतिपत्त्यापाद्यत्वात् तत्प्रतिपत्त्योस्तत्कार्यत्वाभावात् यजमानस्यान्यार्थस्यैककपालकर्तृकपुरोडाशधारणादौ विनियोगेऽपि तन्वानिष्पत्त्या कृतार्थत्वाभावेन प्रतिपत्त्यनर्हत्वाच्च प्रतिपत्त्यनापत्तेर्न सर्वतन्त्रलोपापत्तिः, नैव विकल्पाङ्गीकारात् प्रस्तरविधिवैयर्थ्यापत्तिश्चेत्यर्थः । प्रस्तरकार्ये यजमानस्य विधाने "दक्षिणतोऽवस्थानं च कर्मणः क्रियमाणस्ये"ति सामान्यविहितस्य यजमानकर्तृकदक्षिणतोऽवस्थानस्यानुपपत्तिपरिहाराय कार्यविशेषज्ञापनाय **स्रुक्धारणप**दोपादानम्। ततश्च तस्य स्रुग्धारणपूर्वोत्तरकालयोरुपपन्नत्वान्न विरोध इत्यर्थः ॥

**( अष्टाकपालपदवद्गौण्यनुपपत्त्या यजमानपदगुणविधित्वसमर्थनम् )**

**नच**—अत्रार्थवादत्वेनोपपत्तौ नाष्टाकपालादीनामिव विध्यन्तरकल्पनया गुणविधित्वं युक्तमिति—**वाच्यम्**; तत्र गायत्रियैवैनमित्याद्युपादानेनावयवभूताष्टाकपालादिस्तुतिप्रतीतेरवयवावयविभावेन द्वादशकपालस्तुत्युपपन्नत्वेऽपीह वायुर्वैक्षेपिष्ठेत्यत्रोत्कर्षाधायकगुणस्यैव तदभावे एकयजमानपदास्तुत्यप्रतीतेरवयवावयविभावेन द्वादशकपालस्तुत्युपपत्तावपीहावयवायोगेनावयवित्वाभावात् लक्षणयापि प्रस्तरे स्तुत्यनुपपत्तेश्च पूर्ववैषम्येण अर्थवादत्वासंभवात् । नच गौण्या तदुपपत्तिः; गौण्या लक्षणस्वरूपाणां दुर्निरूपणीयत्वात् ॥

**( प्रसिद्धार्थहानेनाप्रसिद्धार्थवाचित्वम् समुदायवाचिन एकदेशवाचित्वं स्वोत्प्रेक्षाप्रभावारोपविषयार्थपरत्वं वा न गौणीवृत्तिरिति निरूपणम् )**

**तथाहि**—यदि तावत् प्रसिद्धार्थत्यागेन अप्रसिद्धगुणवाचित्वं तल्लक्षणम्। प्रसिद्धमर्थं परित्यज्य देवदत्तपदसामानाधिकरण्यात् देवदत्तनिष्ठप्रसह्यकारित्वादिगुणेषु शक्त्यन्तरकल्पनया तत्समन्वयान्मत्वर्थलक्षणया सामानाधिकरण्योपपत्तिरित्युच्येत, तदेदृशस्य लक्षणस्य लोके वक्त्रभिप्रायानुरोधेन संभवेऽपि वेदे तदभावात् प्रसिद्धार्थत्यागेऽप्रामाण्यापत्तेर्नैदृशेन गौणत्वेन स्तुत्युपपत्तिः । **यत्तु**—समुदायवाचिनो लक्षणयैकदेशे वृत्तिर्गौणीति लक्षणम्, सर्वे हि सिंहादिशब्दा न जातिमात्रवाचकाः, तथात्वे गुणादिवचनैः शुक्लादिशब्दैः सामानाधिकरण्यानुपपत्तेः, अपितु जातिद्रव्यगुणक्रियादिसमुदायवचना इति तादृशसमुदायस्य देवदत्तेऽसंभवाद्देवदत्तादिपदसामानाधिकरण्यानुपपत्त्या समुदायैकदेशे प्रत्येककारित्वे ल-

प्रत्यक्षविध्यश्रवणात् "प्रस्तरमुत्तरं बर्हिषः सादयती"ति विध्यन्तरैकवाक्यत्वाच्च तदर्थवादत्वमौदुम्बराधिकरणन्यायेन सिद्धमेव। यजमानपदन्तु गौण्या वृत्त्या प्रस्तरस्तावकम्।

**ननु**—अध्यारोपितार्थवृत्तित्वे गौणत्वं लोके प्रसिद्धम्, सिंहत्वस्य, देवदत्ते आहार्य्यारोपात्, नच तत् वेदे सम्भवति आरोपकपुरुषाभावादिति—**चेत्** विनाऽप्यारोपं सिंहशब्दस्य सादृश्यमात्रविवक्षया देवदत्ते काव्यलोकयोः प्रयोगदर्शनात् स्वशक्यगुणसमानजातीयगुणयोगनिमित्तत्वं गौणत्वम्। सिंहनिष्ठक्रूरत्वसमानजातीयक्रूरत्वयोगाच्च सिंहपदस्य देवदत्ते प्रवृत्तेः सिंहो देवदत्त इत्यत्र लक्षणसमन्वयः। पुष्पादौ खसम्बन्धित्वाध्यारोपेण चारोपितं खपुष्पशब्दार्थमङ्गीकृत्य तद्वृत्तिगुणानामसत्त्वादीनां सिद्धान्ते सत्त्वाच्च न

---

क्षणया सिंहशब्दवृत्तेः मत्वर्थलक्षणया सामानाधिकरण्योपपत्तेस्तत्समन्वय इति—**केषांचित्कल्पनम्, तदपि** समुदायस्यानित्यत्वेनानित्यार्थसंयोगात् वेदेऽप्रामाण्यापत्तेः जातिं विना व्यक्तिगुणक्रियाणां परिच्छेदासंभवादावश्यकजातिवाचित्वेनैव व्यक्तिप्रतीत्युपपत्तेरतिरिक्तगौणीस्वीकारे मानाभावाच्चायुक्तम्। **यदपि**—स्वोत्प्रेक्षाप्रभावारोपविषयीभूतार्थवृत्तित्वं गौणीलक्षणम्। अस्ति च सिंहशब्दस्य देवदत्ते वक्त्रा प्रयुज्यमानत्वान्यथानुपपत्त्या सिंहत्वारोपेण स प्रयुक्त इति श्रोत्रा कल्पनात् तत्समन्वय इति, **तदपि** वेदे आरोपकपुरुषस्याभावादयुक्तमिति नेदृशेनापि गौणीलक्षणेनेह गौण्योपपत्त्या स्तुत्युपपत्तिरिति सर्वथा नार्थवादत्वम् स्तुत्यापादकमाश्रयितुं शक्यते इत्यगत्या भङ्क्त्वाप्येकवाक्यतां गुणविधिरेवायमिति भावः॥

**( प्रत्यक्षविध्यभावेन प्रहरणाद्यापत्त्योत्तरतन्त्रलोपापत्त्याच गुणविधित्वनिराकरणेनौदुम्बराधिकरणन्यायेन सिद्धान्तोपपादनम् )**

यद्यत्र प्रत्यक्षो विधिः स्यात्, तदा प्रत्यक्षविधिविहितैतदनुरोधेन दक्षिणदेशावस्थानसङ्कोचः प्रस्तरविधेः पाक्षिकत्वमेकवाक्यताभङ्गश्च कल्प्येत, नत्विह प्रत्यक्षो विधिरस्ति। अतः कल्प्येन विधिना तदङ्गीकारस्यायुक्तत्वान्न गुणविधिरित्यभिप्रेत्य सिद्धान्तमाह—**प्रत्यक्षेति** ॥ **अपिच** प्रस्तरस्थानापत्त्या यजमानस्य प्रहरणसर्वहोमयोरापत्तिः। यद्यपि तयोर्न प्रस्तरैकक्रपालकार्यत्वम्; तथापि प्रतिपत्तिभूतप्रहरणहोमौ प्रति स्वकार्यस्रुग्धारणयागरूपसाधनत्वेन रूपेण प्रस्तरैकक्रपालयोः संस्कार्यत्वेन प्रयोजकत्वात् ताद्रूप्यस्य यजमानेऽपि सत्त्वेन स्थापनापत्त्युपपत्तेः। नचाकृतार्थत्वम्; प्रधानानुरोधेन क्रमं बाधित्वापि सर्वयाजमानकरणोत्तरं तदापत्तेरनिवार्यत्वात्। इष्टापत्तौ क्रमबद्धसोमयागाद्युत्तरतन्त्रलोपापत्तिरिति भावः। औदुम्बराधिकरणाक्षेपसमाधानेन तत्सिद्धमर्थवादत्वमेव युक्तमित्याह—**तदर्थवादत्वमिति** ॥ पूर्वोक्तस्तुत्यसंभवं परिहरति—**यजमानपदंत्विति** ॥

**( वेदाप्रामाण्यानापादकगौणीलक्षणस्वरूपनिरूपणं, तस्य खपुष्पं भवत्सिद्धान्त इत्येतत्साधारण्योपपादनं च )**

आद्यलक्षणद्वयस्यासिद्धत्वात् तदुपेक्ष्य पूर्वोक्तप्रसिद्धान्तिमगौणीवृत्तिलक्षणासंभवं शङ्कते—**नन्विति** ॥ **अत इति** ॥ अत इति ल्यब्लोपे पञ्चमी। तेन प्रयोगदर्शनादिदं पूर्वोक्तं लक्षणं विहाय स्वशक्येत्यादिवक्ष्यमाणं लक्षणमित्यर्थात् न प्रयोगदर्शनादिति पञ्चम्यन्तान्वयानुपपत्तिः। **ननु** यथा किंचिद्रूपमादाय तद्रूपे तद्रूपकल्पनलक्षणकारोपघटिततल्लक्षणस्य "खपुष्पं भवत्सिद्धान्त" इत्यादौ खपुष्पादीनामननुभूतत्वेन ईदृशमिति निरूपणाशक्तेरारोपासंभवात् गौणत्वानापत्तेरव्याप्तिः, तथैव तत्र शक्यार्थस्यैवाप्रसिध्या तन्निष्ठगुणयोगाभावात् सिद्धान्ते खपुष्पशब्दस्य गौणत्वासंभवात् भवदुक्तलक्षणस्याप्यव्याप्तिः, इत्याशङ्कानिरासायाह—**पुष्पादाविति** ॥ आरोपितार्थवृत्तित्वरूपतल्लक्षणस्यास्मदुक्तरीत्याऽऽरोपितखपुष्पमादायावस्तुस्वरूपनिरूपणेनारोपोपपादनेऽव्याप्त्यभावेऽपि खपुष्पशब्द एव लतापुष्पे आरोपितार्थवृत्तित्वसत्त्वेन गौणत्वापत्त्याऽतिव्याप्त्यापत्तिः। नहि लोके खपुष्पशब्दस्य गौणत्वं केनचिदुच्यते, यत इष्टापत्तिरुच्यते। **एतेन** आरोप्यस्य सिंहत्वादेर्गौणत्वाप्रसिद्धेरारोपिताश्रये देवदत्तादावेव तत्प्रसिद्धेरारोपितार्थाश्रयत्वमेव गौणत्वम् इति—**पराहतम्**; खपुष्पस्य स्वयमेवाप्रसिद्धस्यारोपितत्वासंभवात् प्रसिद्धे खे लतादौ प्रसिद्धस्य पुष्पस्यैवारोपितस्याङ्गीकारेण प्रसिद्ध्युपपादने आरोपितार्थाश्रयत्वस्य खे सत्त्वात् खपुष्पे खपुष्पशब्दस्य गौणत्वानिवारणादतिव्याप्तेरमुक्तेः। अतस्त्वन्मतेऽतिव्याप्तिदोषः। ममतु शक्यशब्देन मुख्यार्थमात्रविवक्षणादारोपितस्य मुख्यार्थतानपायात् न कोपि दोषः। नहि मुख्यत्वमनारोपितत्वकृतं, किंतु वृत्त्यन्तरमनपेक्ष्य शब्दप्रयोगकृतमिति भावः। **नच**—तथापि "खपुष्पं भवत्सिद्धान्त" इति वदता बौद्धेनोपमेयभूतस्य सिद्धान्तस्यानभ्युपगमात् वस्तुतोऽसत्ये तस्मिन् कथं गुणयोगाभावे गौणतोपपत्तिः? इति—**वाच्यम्**; सिद्धान्तपदाभिधेयस्य निश्चयस्य सद्रूपाभावेन भ्रमत्वेऽपि स्वरूपेण विद्यमानतयोपमेयत्वोपपत्तेः। एवमेव पुष्पविकारात्मना खस्यासत्यत्वेऽपि स्वात्मनो रूपेण सत्यत्वात् सादृश्यप्रतियोगित्वमाकाशस्यैवेति नोपमानानुपपत्तिः। एतच्च खे लतापुष्पस्यैवारोपेण पार्थसारथ्याद्यभिमतेनोक्तम्। यदा तु लतापुष्पे खाधिकरणतारोप इति पूज्यपादानामभिप्रेतम्, तदा लतापुष्पस्यैवोपमानत्वेन खाधिकरणताकत्वेनासत्यत्वेऽपि लतापुष्पात्मना सत्यत्वेन सादृश्यप्रतियोगितयोपमानत्वोपपत्तिः सुलभैव। अत एवैतन्मते खपुष्पस्यैवोपमानत्वप्रतीतिर्नैव बाधिता भवतीत्यपि ज्ञेयम्। **यत्तु वार्तिके**—आरो-

खपुष्पं भवत्सिद्धान्त इत्यादावव्याप्तिः। अतश्चैतादृशगौणत्वस्य वेदेऽप्यस्त्येव संभवः।

यद्यपि च रूपकादिस्थले "सौन्दर्यस्य तरङ्गिणीत्यादौ" आरोपेणापि गौणी वृत्तिर्दृष्टा; तथापि सादृश्यमात्रेणापि उपमालङ्कारस्थले साऽनुभूयमाना नापह्नोतुं शक्या। अतश्चोभयसाधारण्येन स्वशक्यसमवेतवत्ता गौणी वृत्तिः। समवेतत्वञ्च क्वचिदारोपितत्वसंबन्धेन क्वचिच्च स्वसमानजातीयगुणवत्तासंबन्धेनेति भेदः।

अत्र च सिंहपदेन शक्त्या सिंहोपस्थित्यनन्तरं लक्षणया क्रूरत्वोपस्थितिरिति प्राञ्चः। **वस्तुतस्तु**—एकसंबन्धिदर्शनेनापरसंबन्धिस्मरणमिति स्मारकविधयैव तदुपस्थितिः। गौणीज्ञानकार्यतावच्छेदकंच निरुक्तोभयविधसंबन्धान्यतरसंबन्धेन स्वशक्यसमवेतधर्मप्रकारकदेवदत्तविशेष्यकशाब्दत्वमिति न क्रूरत्वादीनामशाब्दत्वप्रसङ्गः। नच गौण्या

---

पितपुष्पं विनैव खाधारपुष्पावच्छिन्नाभाववाचित्वम् खपुष्पशब्दस्य वर्णितम्, तत् कौस्तुभ एवोपपाद्य निरस्तं द्रष्टव्यम्। अतः स्वोक्तलक्षणस्य वेदाप्रामाण्यानापादकत्वात् युक्तत्वाशयेनोपसंहरति—**अतश्चैतादृशेति**॥ गुणनिमित्तकवृत्तिसंबन्धात् शब्दार्थवृत्तिगौणपदाभिलप्यत्वोपपादकं सादृश्यविवक्षया कृतमेतादृशशब्दार्थः॥ यद्यपि च "पुरुषो वाव गौतमाग्निरि"त्यादौ वेदेऽप्यारोपो दृष्टः; तथापि तत्रादृष्टफलार्थमुपासकस्योपासनारूपारोपविधिसंभवेऽपीह तदभावे वेदे वक्तुरभावे च तत्कृतारोपानुपपत्तेर्दृष्टव्यवहारस्यान्यथाप्युपपत्तेर्नारोपकल्पनं युक्तमिति स्वलक्षणस्य वेदे संभवोक्त्या सूचितम्॥

**( स्वशक्यसमवेतेत्यादि गौणलक्षणसमन्वयः )**

देवदत्ते क्रूरत्वादिवत् सिंहत्वस्याप्यारोपेण गौणीदर्शनादुभयसाधारण्याय लक्षणे गुणपदं समवेतपरमित्युपेत्य लक्षणमाह—**स्वशक्येति**॥ **क्वचिदारोपेणेति**॥ यत्र रूपकादौ सत्यपि भेददर्शने सादृश्यमात्रेण सिंहत्वक्रूरत्वादि देवदत्ते वक्राऽऽरोप्य सिंहशब्दः प्रयुज्यते, श्रोत्रा च तथैव प्रतिपद्यते, तत्रानुभवसिद्धारोपापह्नवे प्रमाणाभावात् सिंहत्वादीनामारोपेण साक्षादेव देवदत्ते स्वशक्त्या सिंहसमवेतसिंहत्वादिसद्भावाल्लक्षणसमन्वय इत्यर्थः। **क्वचिदेवेति**॥ स्वशक्ये सिंहे विद्यमानैः प्रसह्यकारित्वादिगुणैः समानजातीयगुणानां देवदत्ते सत्त्वेन सादृश्यमात्रविवक्षयापि देवदत्ते सिंहशब्दप्रयोगे लक्षणसमन्वय इत्यर्थः॥

**( स्वशक्यसमवेतेत्यादिलक्षणस्य लक्ष्यमाणगुणैर्योगादिति वार्तिकाविरोधसमर्थनेन प्राचां मतेन गुणानां लक्षणया बोधोपपत्तिः )**

अत्रच "अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते। लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता"। इति लक्षणाभेदनिरूपणपरवार्तिके उक्तं लक्ष्यमाणगुणयोगनिमित्तत्वलक्षणं गौण्या न युक्तम्; तथात्वे जहत्स्वार्थतापत्तेः, तद्वारणाय स्वार्थमात्रपरत्वे गुणानामशाब्दत्वापत्तिः। अतः सिंहशब्देन शक्यार्थं पूर्वं शक्त्यनुसारेणाभिधाय गुणा अपि लक्षणयोच्यन्ते। "अतो लक्ष्यमाणगुणैरित्यन्तं समानाधिकरणसमासाङ्गीकारेण स्वार्थाभिधानपूर्विका गुणेषु लक्षणेति वार्तिके उक्त"ति न्यायसुधायां व्याख्यानेन गुणलक्षणां प्राचामभिमतामभिप्रेत्य तन्मतमुपपादयति—**अत्रेति**॥

**( गौण्यां गुणानामुपस्थितौ स्वमतस्य स्वशक्येत्यादिलक्षणलक्ष्यमाणगुणवार्तिकयोरविरोधोपपादनपूर्वकं तत्र न्यायसुधादिखण्डनपूर्वकं चोपपादनम् )**

युगपद्वृत्तिद्वयविरोधापत्तेः मुख्यार्थगुणवदुपस्थित्यर्थमाश्रितया गौण्यैवावच्छेदकीभूतगुणशाब्दबोधोपपत्तेरशाब्दत्वाप्रसङ्गान्निष्प्रयोजनं गुणेषु लक्षणाङ्गीकरणमित्यस्वरसादाह—**वस्तुतस्त्विति**॥ लक्षणाया अप्युपस्थितार्थस्यैव शाब्दत्वसिध्यर्थमङ्गीकारात् गौण्यामप्यावश्यकीं गुणोपस्थितिं साधयति—**एकसंबन्धीति**॥ एवंच लक्ष्यमाणगुणैरिति वार्तिके न कर्मधारयसंबन्धः; किंतु सिंहत्वाग्नित्वजातिवाचकपदेन या लक्ष्यमाणा व्यक्तिः, तन्निष्ठगुणैरिति षष्ठीतत्पुरुष एव। **अत एव वार्तिके**—यथा पूर्वार्धे लक्षणया अभिधेयाविनाभूतसंबन्धादरः प्रदर्श्यते एवमुत्तरार्धे मुख्यार्थसादृश्यरूपादरमात्रं, नतु लक्षणा गुणेषु। **अतएव**—"वह्नित्वलक्षितादर्थात् यत्पैङ्गल्यादि गम्यते। तेन माणवके बुद्धिः सादृश्यादुपजायते॥" इत्युत्तरवाक्ये **गम्यते** इत्येवमुक्तम्। तथा "संभवति चात्र सिंहत्वावगतव्यक्त्युपस्थापितप्रसह्यकारित्वाद्यनेकधर्मप्रत्ययात् देवदत्तप्रत्यय इति पूर्वंव शक्तिर्निमित्तं इति वार्तिके पूर्वशक्तेरेव निमित्तत्वं गौण्यामुक्तम्। नतु गुणलक्षणाया" इति न्यायसुधाकृतो गुणलक्षणापरतया व्याख्यानमन्याय्यमेवेति भावः। **ननु** सिंहादिपदानां सिंहसंबन्धिलक्षणयैव देवदत्तपदसामानाधिकरण्योपपत्तेः किमित्यतिरिक्तगौणीवृत्तिसमङ्गीकार इत्याशङ्काभेदाशङ्कानिरासद्वारा भेदापादनेन निरस्यति—**नचेति**॥ "अभिधेयाविनाभूते" इति पूर्वलिखितवार्तिके न लक्षणाहेतुत्वेनाविनाभावोपपादनम्; तस्याः संबन्धमात्रेण शब्दतात्पर्यवशादुपपत्तेः। नवाऽत्र लक्षणस्याभिधेयस्य लक्ष्येनाविनाभावोऽग्निेव धूमस्योक्तः; लक्ष्यस्यैव लक्षकाभिधेयाविनाभावकथनात्, किंतु अभिधेयसंबन्धित्वरूपादरप्रदर्शनमात्रार्थं तदुपादानम्। **अत एव** "यष्टीः प्रवेशये"त्यादौ यष्ट्यादेः पुरुषाविनाभावेऽपि यष्ट्यादिशब्दानां अभिधेययष्ट्यादिसंबन्धानादरेण पुरुषस्वरूपे वृत्त्यभावेनाभिधेयाविनाभावप्रवृत्तित्वाभिधानात् संबन्धमात्रस्य च लक्षणाहेतोर्भावाद्युक्तैव लक्षणया प्रवृत्तिरित्यभिधेयसंबन्धित्वादरेण लक्षणोक्ता। गौण्यान्तु लक्षणाहेतुसंबन्धसत्त्वेऽपि अभिधेय-

लक्षणातो न भेदः; स्वशक्यवृत्तिगुणानामेव यत्र संबन्धित्वेन रूपेण बोधस्तत्र लक्षणा, क्रूरत्वादिना बोधे तु गौणीति तयोर्भेदात्। ते च गुणाः षड्विधाः। क्वचित्तत्सिद्धिः तत्कार्यकारित्वं यथा यजमानपदे। यजमानो—यथा स्वकार्यकर्ता, तथा प्रस्तरोऽपीति। एवं गौणीगर्भलक्षणया प्रस्तरस्तुतिः। एवमन्येऽपि पञ्च गुणा अग्रिमसूत्रैर्द्रष्टव्याः

संबन्धित्वरूपाभावात् क्रूरत्वादिधर्मसंसादृश्यादरान्न लक्षितलक्षणात्वप्रसिद्धिरिति वैषम्यमभिप्रेत्य समाधत्ते—**स्वशक्येति** ॥ अत एव लक्षणागौण्योर्भेदादेव "सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमंचकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तद्वदुपचार" इति सूत्रेणाक्षपादप्रभृतिभिर्लक्षणानिमित्तानामुक्तत्वाज्जैमिनिना गौणीवृत्तिनिमित्तगुणाः पार्थक्येन तत्सिद्धीत्यादिनोक्ता इत्याह—**तेचेति** ॥ "प्राप्नोति परमां सिद्धिं" इत्यादौ सिद्धिपदेन कार्याभिधानात् तस्य मुख्यस्य सिद्धिः कार्यमस्मिन्निति व्यधिकरणबहुव्रीहिणा तत्सिद्धिशब्देन सूत्रगतेन मुख्यार्थकार्यकरत्वमुच्यते इत्यभिप्रेत्याह—**तत्सिद्धिरिति** ॥ प्रस्तरैककपालयोरपि यजमानवत्कर्तृत्वाविशेषेण यागाख्यकार्यनिरूपितत्वैकधर्मयोगेन प्रस्तरयजमाननिष्ठकरणत्वयोः साजात्याद्यजमाननिष्ठकार्थकर्तृत्वसमानजातीयकार्थकर्तृत्वाख्यगुणयोगेन गौणीलक्षणया प्रस्तरैककपालपदसामानाधिकरण्योपपत्त्याऽवान्तरवाक्यार्थसंभवात् पश्चात् स्तुतिलक्षणेत्याह—**यजमानो यथेति** ॥ प्रयोजनं स्पष्टत्वान्नोक्तम् ॥

**॥ इति तत्सिद्धिपेटिकाधिकरणे तत्सिद्ध्युदाहरणविचारः॥**

---

## ( भाष्यकृदुदाहृतस्याग्नेयो ब्राह्मण इत्यस्य परित्यागेन अग्निर्वै ब्राह्मण इत्यस्योदाहरणत्वेन निर्देशे कारणनिरूपणम् )

अत्र भाष्यकारेण "आग्नेयमष्टाकपालं निर्वपेत् ब्राह्मणो ब्रह्मवर्चसकाम;" इत्यस्य विधेः शेषे श्रुतं "आग्नेयो वै ब्राह्मण ऐन्द्रो राजन्यो वैश्यो वैश्वदेव" इत्युदाहृत्य आग्नेयादिपदानां "प्रजापतिरकामयत प्रजाः सृजेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवतान्वसृज्यत गायत्री छन्दो रथन्तरꣳ साम ब्राह्मणो मनुष्याणामजः पशूनां उरसो बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवतान्वसृज्यत तत्रिष्टुप् छन्दो बृहत्साम राजन्यो मनुष्याणामविः पशूनां तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त ऊरुभ्यां मध्यतः सप्तदशं निरमिमीत तं विश्वे देवा अन्वसृज्यन्त जगतीछन्दो वैरूपं साम वैश्यो मनुष्याणां गावः पशूनां" इत्येतद्विध्यर्थवादसंकीर्तितप्रजापतिमुखाद्येक-

**॥ १३ ॥ २९ ॥ इति तत्सिद्धिपेटिकायां तत्सिद्ध्युदाहरणविचारः ॥**

---

**जातिः** ॥ "अग्निर्वै ब्राह्मण" इत्यत्र पूर्ववदेवाग्निशब्दो ब्राह्मणे गौणः; द्वयोरप्यग्निब्राह्मणयोरेकमुखप्रभवत्वात्, अग्निजननसमानजातीयजननमेवात्र गुणः ॥ १३ ॥ २९ ॥

प्रभवत्वसादृश्येन गौणतामुपपाद्यार्थवादत्वं सिद्धान्तितम्। तदाग्नेयशब्दस्य सूक्तहविस्समभिव्याहाराभावे देवतातद्धितान्तत्वानुपपत्तावपि "तस्येदमि"त्यधिकारे "नित्यमग्निकलिभ्यां ढक् वक्तव्य" इति स्मृत्या संबन्धसामान्यार्थकतद्धितान्तत्वोपपत्तेः भ्रातृव्यवदुक्तार्थवादसंकीर्तितप्रजापतिमुखैकप्रभवत्वरूपसंबन्धविशेषेण मुख्यतयैवोपपत्तेः देवतात्वरूपसंबन्धापेक्षणेऽपि च ब्राह्मणस्य यष्टृहविष इवाग्नेर्देवतात्वेनापि संबन्धस्य "आग्नेयो वै ब्राह्मणो देवतये"त्यादौ दृष्टस्येहाप्युपपत्तेः गौणत्वे प्रमाणाभावादिति वार्तिककृता प्रदूष्य यदन्यदुदाहृतं तदेव स्वयमुदाहरति—**अग्निर्वै इति** ॥

## ( अग्निर्वै इत्यत्राग्निशब्दस्य गुणविधित्वादिनिरासपूर्वकं एकमुखप्रभवत्वगुणेन गौणत्वनिरूपणम् )

अत्रापि पूर्ववदेव नामत्वगुणविधित्वे आशङ्क्य विध्यन्तरैकवाक्यत्वेन ब्राह्मणकार्ये त्यागादावचेतनस्याग्नेर्विधानासंभवेन च निरस्यार्थवादत्वनिस्सन्दिग्धत्वे गौणत्वमप्यग्निशब्दस्य निश्चितमिति पूर्ववदित्युक्त्या सूचितम्। किमर्थं तर्हि सूत्रैकदेशकृतं अधिकरणान्तरमित्याशङ्कानिरासाय निमित्तान्तरप्रतिपादकत्वेन तत्सार्थक्यं सूचयन् निमित्तान्तरमाह—**द्वयोरपीति** ॥ पूर्वसूत्रगततच्छब्दानुषङ्गेण जायते यस्मादिति व्युत्पत्त्या जन्मोपादानं जातिशब्देन विवक्षितमभिप्रेत्य तस्य मुख्यार्थस्याग्नेर्या जातिरुपादानं सैव यस्य ब्राह्मणस्य जातिरिति व्यधिकरणबहुव्रीहिणा जातिशब्देन सूत्रे एकजातीयता गौणीनिमित्तत्वेनोक्तेत्यभिप्रेत्याह—**एकेति** ॥ सामान्यवाचित्वाभावं जातिशब्दस्य सूचयितुं जननपदप्रयोगः। यद्यपि श्राद्धादौ पाणिहोमे ब्राह्मणस्याग्निकार्यकर्तृत्वादग्निनिष्ठकार्यकर्तृत्वसमानजातीयकार्यकर्तृत्वेन तत्सिद्धेरपि निमित्तत्वमुपपद्यते; तथापि तदविवक्षया यदेकमुखजन्यत्वविवक्षया प्रयोगस्तत्र निमित्तान्तरज्ञापनार्थतयैव तत्प्रवृत्तिः। यद्यपि चैकमुखभवत्वं प्रमाणाभावादर्थवादस्यान्यपरत्वेन चावास्तवम्; तथापि अवास्तवस्याप्यर्थवादान्तरोक्तत्वादिह तच्छब्दनिमित्ततां प्रतिपत्स्यते इति ॥

**॥ इति तत्सिद्धिपेटिकायां जात्युदाहरणविचारः॥**

---

सारूप्यम् ॥ "आदित्यो यूप" इत्यादौ तु सारूप्यं गौणीनिमित्तम्। नच सर्वत्र तदेव निमित्तम् कोऽत्र विशेषः? चक्षुर्ग्राह्यं तेजस्वित्वायत्र निमित्तमिति प्राञ्चः। **वस्तुतस्त्व-**न्यत्र शक्यनिष्ठगुणस्यैव स्वसमानजातीयगुणवत्तासंसर्गेण प्रकारत्वान्निमित्तता, नतु सारूप्यस्य, तस्य संसर्गत्वात्, इह तु शक्यनिष्ठगुणसजातीयगुणवत्त्वरूपस्य सारूप्यस्यैव समवायादिसंसर्गेण प्रकारत्वात्तदेव निमित्तमिति विशेषः ॥ १३ ॥ २९

**प्रशंसा** ॥ "अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वा" इत्यत्राजादीनां तत्र तत्र विहितत्वात्पशुकार्ये प्रतिषेधस्य पर्युदासस्य वाऽनुपपत्तेरर्थवादत्वम्। अपशुशब्दो हि

---

**( आदित्यो यूप इत्यत्र सारूप्यस्य गौणीवृत्तिनिमित्तत्वोपपादनम् )**

"आदित्यो यूप" इत्यादावपि नामत्वगुणविधित्वाशङ्काया निरासः पूर्ववदेव स्पष्टत्वात् ज्ञातुं शक्यत एवेत्युपेक्ष्य अर्थवादत्वोपपादकं गौणीवृत्तिनिमित्तान्तरमात्रमिह कथ्यत इत्यभिप्रेत्याह—**आदित्यो यूप इति** ॥ आदिपदेन "यजमानो यूपः" इत्यादेः संग्रहः ॥

**( यजमानः प्रस्तर इत्यादीनां सारूप्योदाहरणत्वासंभवस्य प्राचां मतेनोपपादनम् )**

**इति प्राञ्च इति** ॥ अथ चक्षुर्ग्राह्यतेजस्त्वादिना धर्मेण यदि सादृश्यबोधः, तदा "यजमानः प्रस्तर" इत्यादावपि तत्कार्यकरत्वादिनापि तद्बोधः समान एवेति न चक्षुर्ग्राह्यतेजस्त्वादिना कश्चन विशेष इति यथाश्रुतं प्राचामुक्तं विशेषकरं न भवतीत्यभिप्रेत्य तदाशयं विवृणोति—**वस्तुतस्त्वति** ॥ **अयमर्थः**—यद्यपि प्रस्तरादेः सारूप्यं तत्कार्यकरत्वादिधर्मसामान्यात् संभवति; तथापि शब्दस्य तत्कार्यकरत्वादिमात्रे तात्पर्यावसानेन तस्य शाब्दबुद्धिविषयत्वाभावात् अविषयस्य च प्रतिपादनात्मकशब्दवृत्तिनिमित्तत्वायोगान्न शब्दवृत्तिनिमित्तत्वम्। अतस्तत्र तत्कार्यकरत्वमेव शब्दात्प्रतीतं प्रकारीभवति, इह तु प्रत्यक्षत्वेन सारूप्यस्य प्रथमं प्रतीतस्य तत्रैव शब्दस्य तात्पर्यावधारणाच्छाब्दबुद्धिविषयत्वेन प्रकारतया भातस्यैव निमित्तत्वम्। अतश्च चक्षुर्ग्राह्यत्वेन सादृश्ये झटिति प्रतीतत्वेन तात्पर्याख्यविवक्षावधारणाच्च बुद्धिविषयत्वरूपशब्दवृत्तिनिमित्तविशेषाभिधानार्थं तत्कार्यकरत्वादिहेतुकेभ्यः सद्भावमात्रेण गौणीनिमित्तेभ्यः पृथगसाधारण्येनेहोपादानमिति ॥ **अत एव**—नात्र चक्षुर्ग्राह्यत्वमेव पृथगुपादानप्रयोजकम्," छत्रिणो गच्छन्ती"त्यादौ बहुत्वादीनामपि चक्षुर्ग्राह्यत्वेन पृथगुपादानानुपपत्तेरिति चक्षुर्ग्राह्योर्ध्वत्वतेजस्त्वरूपसादृश्यप्रकारत्वमेव भिन्नं निमित्तमिति ज्ञापयितुमध्याहृतपञ्चम्यन्ततया भाष्यादौ सारूप्यादिति सूत्रावयव उपात्तः ॥

**( चक्षुर्ग्राह्यत्वधर्मप्रकारकबोधजनकत्वाभावेन यजमानः प्रस्तर इत्यस्य सारूप्यानुदाहरणत्वमिति मूलकारमतनिरूपणम् )**

पूज्यपादैस्तु लिङ्गसमवाया इति द्वंद्वसमासान्ते प्रथमाबहुवचनदर्शनात् तत्सिद्धिश्च जातिश्च सारूप्यं चेत्येवं विग्रहाभिप्रायेण प्रथमान्ततया सारूप्यपदं धृतम्। **अतएव**—सूत्रे सारूप्यपदेन न समानधर्मवत्त्वमात्रं विवक्षितम्, अपितु यथावस्थितचक्षुर्ग्राह्यरूपशब्दार्थविवक्षया चक्षुर्ग्राह्यत्वलाभेन तादृशधर्ममात्रमेवेति ध्येयम् ॥

**॥ इति तत्सिद्धिपेटिकायां सारूप्योदाहरणविचारः ॥**

---

**( विषयवाक्यसंग्रहः, अपशुशब्दनामत्वासंभवेऽपि निषेध्यगुणसमर्पकतया पूर्वपक्षः )**

अग्निचयने पञ्चदशशीर्षोपधाने श्रुतं—"पुरस्तात् प्रतीचीनमश्वस्योपदधाति पश्चात् प्राचीनमृषभस्ये"ति गवाश्वशीर्षोपधानविधिवाक्यशेषमुदाहरति—**अपशव इति** ॥ एतच्च "अयज्ञो वा एष योऽसामा" "असत्रं वा एतद्यदच्छन्दोमं" इति विध्यन्तरशेषाणामप्युपलक्षणम्। तत्र गवाश्वव्यतिरिक्तानामजादीनां पशुपदवाच्यत्वादपशुसंज्ञात्वानुपपत्तेः तैत्तिरीये "अपशवो वा अन्ये गोअश्वेभ्यः पशव" इति पशुशब्दसामानाधिकरण्येन श्रुतस्यापशुशब्दस्य घटादिनामत्वस्याप्यनुपपत्तेः प्रमाणान्तरेणैव सिद्धत्वात्संज्ञाकरणवैयर्थ्यापत्तेश्च नामत्वाशङ्काया असंभवेन तामुपेक्ष्यान्यथानुपपत्तेः पशुपदे पशुकार्यलक्षणामङ्गीकृत्य गवाश्वव्यतिरिक्ताजादीनां पर्युदासः प्रतिषेधो वा संभावनया शङ्क्येत, तामपि निरस्यन्नर्थवादत्वं स्मारयति **अजादीनामिति** ॥ **एतेन**—नामत्वासंभवेऽपि गुणविधित्वसंभवासंभवविचारेण संगतिः सूचिता। नहि विधेय एव गुणो विचारविषय इति राजाज्ञा; विधिशब्दस्य निषेधोपलक्षणतया निषेध्यगुणसमर्पकतयापि तदुपपत्तेरिति भावः ॥

**( अपशुशब्दस्यार्थवादत्वोपपादनम् )**

**तत्र तत्रेति** ॥ "अजोऽग्नीषोमीयः" "सारस्वतीं मेषीमि"त्यादौ विहितत्वादेव निषेधानुपपत्तेरविहिते च प्राप्त्यभावादेव तदसंभवात् कल्प्यनिषेधानुरोधेन क्लृप्तविधीनां पाक्षिकत्वकल्पनेन विकल्पस्यापि सत्यां गतावन्याय्यत्वात् अर्थवादत्वमेव गवाश्वप्रशंसार्थं युक्तमित्यर्थः ॥ गवाश्वव्यतिरिक्तानामपशुकार्ये पशुकार्ये तन्निषेधस्य वा संभवे का गतिरित्यपेक्षायामाह—**अपशुशब्दो हीति** ॥

**( अपशुशब्दस्य गवाश्वादिगतप्राशस्त्याभावलक्षकतया प्रशंसायाः विध्येकवाक्यतयेव फलत्वेनाप्युपपादनं, प्रशंसाभावघटकतया गौणीनिमित्तत्वं प्रशंसाया इति निरूपणम् )**

नञ्समासान्तमपशुपदं घटादिवाचकं सद्गवाश्वविध्येकवा-

घटादौ मुख्यो गवाश्वगतप्राशस्त्याभावरूपगुणयोगादजादौ गौणः सन् लक्षणया गवाश्वस्तुत्यर्थः । प्राचां मते तु नञ्समासान्तर्गतपशुपदेन गवाश्वगतं प्राशस्त्यं लक्षयित्वा नञा तदभावरूपो गुण उपस्थाप्यत इति विशेषः । सर्वथा प्रशंसा गौणीनिमित्तघटिकेति सिद्धम् ॥ १३ ॥ २९ ॥

भूमा ॥ "सृष्टीरुपदधाति"त्यत्र विध्यन्तरैकवाक्यत्वा-

---

क्यतानुरोधात् अर्थवादेऽपि च पशवो गोअश्वा इति सामानाधिकरण्यात् एकसंबन्धिज्ञानेनापरसंबन्धिस्मरणविधया गवाश्वगतप्राशस्त्याभावस्य शक्यार्थनिष्ठस्योपस्थापकम् । अतश्च गवाश्वगतप्राशस्त्याभावरूपगुणयोगेनाजादिषु गौण्या वृत्त्योपपन्न इति अर्थात् **नहिनिन्दा**न्यायेन विधेयगताश्वगतप्राशस्त्यावगतिः सुलभा । यद्यपि अर्थवादस्य गवाश्वगतप्राशस्त्यलक्षणयाप्युपपत्तेर्न तद्गतप्राशस्त्याभावकथनस्योपयोगः; तथापि इतरनिन्दया विधेयोत्कर्षापादकत्वेन फलीभूतस्तुतेरतिशये उपयोगो नानुपपन्नः । **अतएव** पशुशब्दस्य निमित्तान्तरासंभवेन निमित्तत्वेनाश्रिताया अपि गवाश्वगतप्रशंसाया विध्येकवाक्यतयेव फलत्वेनाप्याश्रयणान्न वैयर्थ्यशङ्कापि । यजमानशब्देतु कार्यकरत्वस्यैव गुणस्य निमित्तत्वात् तस्याः फलत्वमेवेति विशेषः ॥ एवंच प्रशंसाऽभावरूपे गुणे व्यावर्त्यमानतया प्रशंसायाः प्रविष्टत्वमादायैव सूत्रे प्रशंसाया निमित्तान्तरत्वेनोपादानं द्रष्टव्यम् । यथाश्रुते गवाश्वगतप्रशंसायाः शक्यार्थघटादिगुणत्वस्याजादिगुणत्वस्य वाऽसंभवात् प्रत्युत विधेयगवाश्वादिप्रशंसार्थमन्येषां अजादीनामप्राशस्त्यस्यैवापेक्षणाच्च गुणतानुपपत्तेः । अतश्चापशुशब्दो विशिष्ट एवात्र गौणः ॥

## ( पशुपदेन प्रशस्ततालक्षणेति न्यायसुधाकारमतं, तुशब्दसूचिततदस्वारस्यनिरूपणम् )

**यत्तु**—"गवाश्वादिगतां पूर्वमुपादाय प्रशस्ततां । तदभावोऽन्यपश्वादौ नञ्समासेन कथ्यते" इति वार्तिकस्वारस्येन न्यायसुधाकारादिभिः नञ्समासावयवभूतेन पशुशब्देन प्रशस्ततां लक्षयित्वा नञ्समासेनान्यपशुषु तदभावः कथ्यत इति —**प्रतिपादितं,** तल्लक्षणयैव तर्हि अपशुशब्दस्य घटादिष्विवाजादिषु प्रवृत्त्युपपत्तेः गौणीवृत्त्युपपादनानुपपत्तेरयुक्तमिति दर्शितं कौस्तुभे । यद्यपि "पशवो गो अश्वा" इति पशुत्वकथनस्य पशुत्वे सत्येवानुपयोगात्प्रशस्तत्वलक्षणया प्रयुक्तपशुपदार्थव्यतिरेकप्रशस्तत्वाभावरूप एवापशुशब्दात् प्रतीयेत; तथापि गौणीवृत्त्युपपादनायैव एकसंबन्धिस्मरणन्यायेनैव तत्प्रतीतिः, नतु लक्षणया । तथाच प्रथमतोऽपशुशब्देन नञ्समासान्तेन शक्यस्यैव पशुभिन्नमर्थमभिधाय तन्निष्ठगुणयोगेन पश्चात् गौणत्वमुपपादनीयम् । **अतएव**—अपशुशब्दस्य घटादिवाचित्वं शास्त्रदीपिकोक्तं संगच्छते । इममेवास्वरसं तुशब्देन सूचयन्न्यायसुधाकारादिदर्शितमर्थं प्राचां मतत्वेन दर्शयति—**प्राचां मते त्विति** ॥

## ( अयज्ञासत्राद्युदाहरणान्तरे प्रशंसाया गौणीनिमित्तत्वोपपादनपूर्वकोपसंहारः )

एवं "अयज्ञो वा एष योऽसामे"त्यादौ दर्शपूर्णमासप्रकरणपठिते यद्यपि न सामवत्क्रतुसामानाधिकरण्यं, येन तद्गतप्राशस्त्यमुपस्थितं भवेत्, तथाप्यसामतापरिहाराय सामस्थानीयतया विहिताग्नेआयाहिइत्यादिविध्यर्थवादे सामन्वन्तं करोतीत्युक्त्योपस्थितसामवत्क्रतुगतप्राशस्त्याभावरूपगुणस्य अयज्ञादिपदशक्यघटादिनिष्ठस्य योगात् स्वतो यज्ञरूपेष्वपि दर्शपूर्णमासादिषु गौणमयज्ञपदं ज्ञेयम् । **यत्तु**—सामवत्क्रतुविध्येकवाक्यतया तदुपस्थितिरित्युक्तं—**कौस्तुभे, तत्** दर्शपूर्णमासप्रकरणे पठितस्यास्य क्रत्वन्तरैकवाक्यत्वाभावात् उदाहरणान्तरविषयं ज्ञेयम् । "असत्रं वा एतद्यदच्छन्दोम"मित्यस्यायमर्थः । चतुर्विंशो भवतीत्यनेन विहितः चतुर्विंशतिस्तोमको रथन्तरसामा उक्थ्य आद्यछन्दोमः । चतुश्चत्वारिंशो भवती"त्यनेन विहितश्चतुश्चत्वारिंशत्स्तोमको बृहद्रथन्तरसामा उक्थ्यो द्वितीयछन्दोमः । "अष्टाचत्वारिंशो भवती"त्यनेन विहितोऽष्टाचत्वारिंशत्स्तोमको बृहत्सामा उक्थ्यस्तृतीयछन्दोमः । ततः स्तोमगतसंख्यासाम्येन गायत्रीत्रिष्टुप्जगतीछन्दोभिर्मीयन्ते परिच्छिद्यन्ते स्तोमा यत्रेति व्युत्पत्त्या छन्दोमत्वं त्रयाणां यागानामिति ते त्रयश्छन्दोमा यत्र सन्ति तत् सत्रं पञ्चदशरात्रादि प्रशस्तम् । यत्रतु चतुर्दशरात्रे आद्ये प्रायणीयं अहर्मध्ये पृष्ठ्यः षडहीयान्यानुलोमविलोमतया द्वादशदिनान्येते उदयनीय इत्येवं अहःक्लृप्तौ मध्ये छन्दोमानामभावात् सत्रभूतोऽपि चतुर्दशरात्रः सत्रगतछन्दोमकृतप्राशस्त्याभावादसत्रं गौण्या वृत्त्या सत्रपदेनोच्यते । तेन छन्दोमरहितनिन्दया छन्दोमरूपावयवस्तुत्या "य एवं विद्वांसः पञ्चदशरात्रमासते" इति विहितपञ्चदशरात्ररूपावयविस्तुतिरिति द्रष्टव्यम् । एवं स्वमते प्राचां मते वा गवाश्वगतप्राशस्त्यबोधनप्रकारभेदेऽपि प्रतियोगिविधया प्रविष्टायाः प्रशंसाया गौणीनिमित्तत्वे नैव विवाद इत्यभिप्रेत्योपसंहरति—**सर्वथेति** ॥

## ॥ इति तत्सिद्धिपेटिकायां प्रशंसोदाहरणविचारः ॥

---

## ( पूर्वोदाहरणेन संगतिनिरूपणपूर्वकं सृष्टिपदार्थनिरूपणपूर्वकं च सृष्टिविशिष्टोपधानविधानमिति भाष्यकारमतोपपादनम् )

पूर्वत्र विध्यन्तरैकवाक्यत्वादिनाऽर्थवादत्वे सिद्धे यत्र न तत्तत्र विधित्वस्यैवानर्थक्यपरिहाराय स्वीकार इति प्रत्युदाहरणदर्शनेन संगतिं प्रत्युदाहरणरूपां सूचयन् विधावपि गौणीवृत्तिनिमित्तान्तरकथनार्थत्वमधिकरणान्तरस्येति दर्शयितुमुदाहरति—**सृष्टीरिति** ॥ **यद्यपि**—अत्रार्थवादत्वासंभवेन विधायकत्वे आवश्यके सत्यनुपधीयमानाभिरिष्टकाभिश्चयनस्य

भावात् प्रत्यक्षविधिश्रवणाच्च विधित्वम्। तत्र चोपधानमेवेष्टकासंस्कारार्थत्वेन विधीयते। यद्यपि चेष्टकानां चयनाङ्गत्वान्यथानुपपत्त्यैवोपधानं प्राप्येत; तथापि ततः पूर्वमेव प्रत्यक्षविधिना विधीयते। तत्फलंच प्रत्येकोपधानसिद्धिश्चयनसमानकर्तृकत्वसिद्धिश्च। अन्यथा समुदितोपधानमपि कदाचित् प्राप्नुयात्। आर्थिकत्वाच्च चयनभिन्नकर्तृकत्वमपि। सति त्वस्मिन्निष्टकासंस्कारद्वारा चयनाङ्गताबोधकविधौ प्रतिप्रधानावृत्तिन्यायादङ्गप्रधानयोरेककर्तृकत्वाच्च फलद्वयसिद्धिः। सृष्टिपदंतु लिङ्गप्रकरणप्राप्तसृष्ट्यसृष्टिमन्त्रमात्रस्य गौण्याऽनुवाद इति—भाष्यकारः।

---

कर्तुमशक्यत्वेनेष्टकाभिरग्निं चिनुत इति विध्यन्यथानुपपत्त्यैव स्वरूपेणेष्टकासंबन्धित्वेन चोपधानस्य प्राप्तौ गुणसंक्रान्तविधिशक्तिकतयोपधानानुवादेन सृष्टिपदार्थ एव विधातुं युक्तः, सोऽपि च नेष्टकारूपः; इष्टकानां सृष्टिरूपत्वानवगमात्, अपितु सृष्टितन्मात्रोपधेयेष्टकासु सृष्टिपदस्य सृष्टिमन्त्रपरस्य लक्षणामङ्गीकृत्येष्टकानां सृष्टिपदाभिधेयत्वेऽपि कासामिष्टकानां सृष्टिमन्त्रैरुपधानमिति विशेषानवगमात् इष्टकासामान्यस्य चेष्टकाविधिनैवोपधानसंबन्धे प्राप्ते तद्विशेषस्य सुतरामुपधानसंबन्धप्राप्तेः विधानायोगात् पारिशेष्यात् "तिसृभिरस्तुवत ब्रह्मासृज्यते" त्यादिसृजिधातुयुक्तसृष्टिलिङ्गकमन्त्ररूप एव। **यत्तु प्राचीनैः**—"तद्वानासामुपधानो मन्त्र" इति "इष्टकासु लुक् च मतो" रिति स्मृतेर्मतुप्लोपेन सृष्ट्यभिधायिमन्त्रैरुपधेयानामिष्टकानां सृष्टिपदवाच्यत्व**मुपपादितम्, तदयुक्तम्**; तथात्वे सन्नियोगशिष्टस्य प्रत्ययस्य "कृतव्या उपदधाती" तिवन्मतुप्लोपेन सह प्राप्त्यापत्तेः। **नच**—एवं भवन्मतेऽपि मन्त्रत्वविवक्षायां मतुप् दुर्निवार इति—**वाच्यम्**; मतुप्प्रकरणेन तस्य लोपाश्रयणे यत्प्रत्ययलोपस्यापि छान्दसत्वेनैवोपपादनीयत्वे लाघवात् मतुप्विधेरेव दृष्टानुविधिश्छन्दसीति सृजिवचनेनानित्यताकल्पनौचित्यादतो लक्षणयैव स्त्रीलिङ्गानुरोधात् सृष्टिमन्त्रोपधेयेष्टकापरः सृष्टिशब्द इत्येवोक्तं कौस्तुभे। **यत्तु** अत्र लिङ्गप्रकरणाभ्यामेवान्यमन्त्रवदेपोऽपि प्राप्त इति प्राप्तान्यपरिसङ्ख्यायां त्रैदोष्यापत्तिरितरमन्त्राम्नानवैयर्थ्यापत्तिश्चेति शास्त्रदीपिकाया**मुक्तम्, तन्न**; लिङ्गप्रकरणकल्प्यश्रुतेः पूर्वमेवैतद्विधिप्रवृत्त्या फलतः परिसङ्ख्यायां त्रैदोष्याप्रसक्तेर्ग्रहणादिशेषिपरिसङ्ख्यार्थत्वेनापि पुनर्विध्युपपत्तेश्चेतरमन्त्राणामैकान्तिकोपधानलिङ्गाभावेनेष्टकाग्रहणादिविषयत्वेन सार्थक्यसंभवाच्च। अतः सृष्टिमन्त्रविधायकत्वेन विध्युपपत्तेर्न विधौ गौणीलक्षणापादकमसृष्टिमन्त्रपरत्वमाश्रयणीयम्; **तथापि**—उभयोः धात्वर्थोपपदार्थयोः संभवत्प्राप्तिकत्वे भावार्थाधिकरणन्यायेनाक्षेपतः पूर्वं प्रयोजनान्तरार्थं युक्तं धात्वर्थस्यैव विधानं इत्यभिप्रेत्य भाष्यकारीयं सिद्धान्तमेवाह—**तत्र चेति**॥

## ( उपधानविधानप्रयोजननिरूपणम् )

पूर्वोक्तमन्त्रविधिपूर्वपक्षनिराससूचक एवकारः। अर्थप्राप्तस्याप्युपधानस्येष्टकासाध्यत्वेन तत्संस्कारत्वासंभवात्तदर्थं पुनर्विधानमित्याह—**इष्टकासंस्कारार्थत्वेनेति**॥ **ननु** प्रधानभेदेऽपि प्रयोगविध्यवगतसाहित्यनिर्वाहार्थं यथाशक्ति पात्राभिमर्शनवत्समुदितोपधानमेव युक्तमित्याशङ्क्य तन्निरासायानिष्टापादनेन प्रयोजनान्तरमाह—**आर्थिकत्वाच्चेति**॥ तदेवाह—**सतित्विति**॥ व्यूहविशेषेणोपस्थानरूपोपधानस्यार्थिकत्वे विहितत्वरूपाङ्गत्वस्य कृष्यादिवदभावाच्चयने अध्वर्युकर्तृत्वेन समानकर्तृकत्वस्य चान्यकृतेनापि सन्धुक्षणादिना देवदत्ते पाककर्तृत्वस्येवेहाप्यवान्तरव्यापाररूपोपधानस्यान्यकृतत्वेऽपि चयने अध्वर्युकर्तृकत्वोपपत्तेर्नियमेनाध्वर्युकर्तृत्वाप्राप्तेरङ्गत्वेन विधानमावश्यकम्। ततश्चाङ्गप्रधानयोरेककर्तृत्वावात्तसिद्धिः। अतएव प्रथनादिविधेरिवाध्वर्यवसमाख्याविषयतासिद्धिद्वाराऽध्वर्युकर्तृत्वसिद्धिरपि नैव प्रयोजनम्। चयनसमानकर्तृत्वादेव तल्लाभात्, अतश्चयनसमानकर्तृत्वसिद्धिरेव प्रयोजनमित्यर्थः॥

## ( सृष्टिपदेन सृष्ट्यसृष्टिमन्त्रग्रहणप्रकारनिरूपणम् )

सृष्टिपदं च यद्यपि विशेष्यांशेनोद्देश्यसमर्पकं सृष्टिमन्त्रांशेनानुवादकम्, ते च मन्त्राः "सृष्टीरुपदधाती" त्युपक्रम्य "कयाऽस्तुवत प्रजा अधीयन्ते" त्यादिना सप्तदश पठिताः। तत्र "तिसृभिरस्तुवत ब्रह्मासृज्यत" इत्यादिना सृजिधातुयोगेनाम्नातानां चतुर्दशमन्त्राणां सृष्टिलिङ्गत्वेन यथा सन्निधानसहकृतात् लिङ्गादवगताङ्गभावानां प्राप्तत्वात् अनुवादस्तथैव "सप्रजापतिरधिपतिरासीत्सप्तविंशत्याऽस्तुवत द्यावापृथिव्या ऐतां वसवो रुद्रा आदित्या अनुव्यायंस्तेषामाधिपत्यमासीत्त्रयस्त्रिंशताऽस्तुवत भूतान्यशाम्यन् प्रजापतिः परमेष्ठ्यधिपतिरासीत्" इति त्रयाणामाद्यसप्तदशमन्त्राणां "यत्सप्तदशेष्टका उपदधाती" ति उपसंहारात् सप्तदशमन्त्रान्तर्गतानां असृष्टिलिङ्गानामपि सन्निधानादिनाङ्गतया प्राप्तत्वादनुवाद इत्याह—**सृष्टिपदं त्विति**॥ मात्रपदेन विशेष्यभूतेष्टकाव्यावृत्तिः। **अथवा**—मन्त्रगतकात्स्न्र्यस्य वा ग्रहणम्। कथमसृष्टिलिङ्गे तत्पदप्रवृत्तिरिति अपेक्षया गौण्येत्युक्तम्। तत्प्रकारस्तु अधिकरणान्तरप्रतीकग्रहणे उपपादयिष्यते॥

## ( सृष्टिपदेनासृष्टिमन्त्रग्रहणप्रयोजनम् )

अयं चानुवादः, इत्थमिदमुपधानं प्रशस्तं यत्सृष्टिवन्मन्त्रैः क्रियते इत्येवं स्तुत्यर्थो **यथासृष्टं** ब्रह्मणा यानि सृष्टान्यनुवाके कीर्तितानि फलानि तान्यनतिक्रम्यातिक्रमनिमित्तं विघ्नं निरस्य सर्वाणि यजमानः प्राप्नोतीत्यर्थकस्य "यथासृष्टमेवावरुन्धे" इत्यर्थवादस्यालम्बनार्थः प्रथनमन्त्रे उरुप्रथेति मन्त्रप्रतीकवन्नानुपपन्नः॥

वार्तिककारस्तु—नोपधानमात्रविधिः । तथासति "प्राणभृत उपदधाती"त्याद्यनेकोपधानविधिवैयर्थ्यापत्तेः, अतो मन्त्रमात्रमुपधानानुवादेन मन्त्रविशिष्टं वोपधानमिष्टकासंस्कारार्थत्वेन विधीयते । तत्रोपधानविधिफलंतु पूर्ववत् । मन्त्रविधिफलंतु उपधाने तन्नियमः । मन्त्रा हि इष्टकामात्रप्रकाशकास्तद्ग्रहणादिष्वपि प्राप्तिसंभवान्नोपधाने नियमेन प्राप्नुवन्ति । अतस्तन्नियमो ग्रहणादिपरिसङ्ख्यैव वा फलम्, मध्यमचितिसंबन्धश्च; "यां वै काञ्चन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्यादि"ति वचनेन प्रत्यक्षब्राह्मणवतीनामिष्टकानां मध्यमचितिसंबन्धस्य विधानात्, अन्यथा तत्तच्चित्यवान्तरप्रकरणपाठरहितानां मन्त्राणां चयनमहाप्रकरणेन सर्वचितिषु अन्तिमायामेव वा निवे-

---

(भाष्यकारमतेऽस्वारस्यनिरूपणपूर्वकं मन्त्रमात्रविधानमिति वार्तिककारमतनिरूपणम्)

एवं भाष्यकारमतमुपपाद्यैतन्मते सर्ववाक्येषूपधानमात्रविधानादभ्यासाद्भेदापत्तेः सकृद्विहितस्यापि चेष्टकाः प्रत्यङ्गत्वेन प्रतीष्टकमावृत्तिसिद्धौ असकृद्विधानस्य निष्प्रयोजनत्वापत्तेरपरितुष्य पूर्वोपपादितमन्त्रविधिपूर्वपक्षमेव न्याय्यमभिप्रेत्य वार्तिककारोक्तं पक्षान्तरमाह—**वार्तिककारस्त्विति** ॥

(केवलमन्त्रविधाने न्यायसुधाकृदभिमते वार्तिकातात्पर्येण मन्त्रविशिष्टोपाधानविधानतात्पर्यनिरूपणम्)

**अत्र न्यायसुधाकृता**—अर्थाक्षिप्तोपधानानुवादेन मन्त्रमात्रविधावेव यथापूर्वपक्षं वार्तिकतात्पर्यमुपवर्णितम्, **तदयुक्तम्**; इष्टकानामेव द्वितीययोद्देश्यत्वावगमेनोपधानस्यैव करणतया विधेयत्वावगतेः तद्विधानफलस्यापि पूर्ववल्लाभेन तदतिक्रमे प्रमाणाभावात् । नहि मन्त्रस्याध्वर्यवत्वात्तत्करणकत्वेनार्थाक्षिप्तोपधानस्याध्वर्युकर्तृकत्वं सिध्यति; याज्यावद्भिन्नकर्तृकत्वेऽप्युपपत्तेः । अतो मन्त्रविशिष्टोपधानविधावेव वार्तिकतात्पर्यं युक्तमित्यभिप्रेत्य पक्षान्तरमाह—**मन्त्रविशिष्टेति** ॥

(विध्यन्तरावैयर्थ्यैनैकप्रसरताभङ्गाप्रसक्त्या च मन्त्रविशिष्टोपधानविधिपक्षोपपादनम्)

**अतस्तन्नियम इति** ॥ नियमपदेन शेषशेष्युभयपरिसङ्ख्या विवक्षिता, अनारभ्याधीतचित्रिणीवज्रिण्यादिविधौ दूरस्थचयनविध्याक्षिप्तोपधानानुवादेन मन्त्रमात्रविधानस्य संस्कार्येष्टकारूपगुणयोगात् कर्मान्तरत्वोपपत्तेः प्राकरणिकमन्त्रावरोधाच्चानुपपत्तेरगत्या मन्त्रविशिष्टोपधानविधेरावश्यकत्वात्तद्वदिहापि विशिष्टविधानमेव युक्तम् । **नच**—एवमप्येकोपधानविधिनैव तत्सिद्धेरितरविधिवैयर्थ्यं तदवस्थमिति—**वाच्यम्**; केवलोपधानमात्रविधौ तदापत्तावपि मन्त्रविशिष्टतद्विधाने उपधानानां गुणाद्भेदसिद्धेस्तत्तन्मन्त्रविशिष्टोपधानान्तरविधानेन वैयर्थ्याप्रसक्तेः । नह्येकेन वाक्येन कतिपयमन्त्रोपधेयेष्टकानां उपधाने विहिते इतरमन्त्रोपधेयेष्टकानामुपधानविधिवैयर्थ्यं शङ्कितुं शक्यम्; उपधानान्तरेऽध्वर्युकर्तृकत्वसिद्ध्यै तदावश्यकत्वात् । अतएव ईदृगस्वरसपर्यालोचनया सर्वेष्टकानामेकैकवाक्यसंस्कार्यत्वावगतावपि विधेयतत्तन्मन्त्रविशिष्टोपधानसामर्थ्यात्तत्तद्वाक्ये विशेषावधारणमपि नानुपपन्नम् । भाष्यकारमते तु विधेयस्योपधानस्येष्टकाविशेषप्रत्यायकत्वानुपपत्तेः सर्वेष्टकाविषयत्वापत्तेः विध्यन्तरवैयर्थ्यं दुष्परिहरमतः तत्तन्मन्त्रविशिष्टोपधानविधानमेव युक्तम् । नचेष्टकोद्देशेन मन्त्रवदुपधानविधावेकप्रसरताभङ्गापत्तिः; इष्टकानामुपधाननिरूपितत्वेनोद्देश्यत्वेऽपि मन्त्रनिरूपितोद्देश्यत्वाभावेन तदप्रसक्तेरिति भावः । एतच्चोपधानमात्रविधौ भाष्यकारमते विध्यन्तरवैयर्थ्यापादनं न्यायसुधाकारोक्तमाश्रित्योक्तम् ॥

(मन्त्रोपधेयेष्टकोद्देशेनोपधानसंस्कारविधानमिति प्रकाशकारमतस्य भाष्यवार्तिकाद्यविरोधेन विध्यन्तरावैयर्थ्येन चोदपादनम्)

**वस्तुतः**—इष्टकानामुद्देश्यत्वस्य सृष्टिपदोपादानेनैव वक्तव्यत्वे इष्टकाविशेषणत्वेनैकपदश्रुत्याऽन्वितानां मन्त्राणां उपधानभावनायामन्वयो दुरुपपाद एव । अतश्चैकपदोपादानेनोद्देश्यभूतेष्टकाविशेषणत्वेऽपि मन्त्राणां वाक्यभेदाप्रसक्तेः सृष्टिमन्त्रोपधेयेष्टकासंस्कारार्थत्वेनोपधानमात्रविधानेऽप्यन्यमन्त्रोपधेयाष्टकाव्यावृत्तिसिद्धेस्तत्संस्कारकत्वेनेतरविधिसार्थक्यं संभवत्येव । अतएव इष्टकोद्देशेन मन्त्रविधानपूर्वपक्ष एवेष्टकाविशेषाप्रतीतेः सर्वास्वतिप्रसंगापादनं भाष्यवार्तिककारादीनां दृष्टम्, नतूपधानविधावपि । **नच**—सृष्टिमन्त्रोपधेया एवेष्टकाः सर्वा एव कुतो न स्युः ? इति—**वाच्यम्**; "सृष्टीरुपदधाती"त्युपक्रम्य "यत्सप्तदशेष्टका उपदधाती"त्युपसंहारार्थवादेन "सन्दिग्धेषु वाक्यशेषादि"ति न्यायेन सप्तदशमन्त्रोपधेयसप्तदशेष्टकाविषयत्वोपपत्तेः । अयं चार्थवादः पूर्वपक्षिणा मुख्यानामेव सृष्टिलिङ्गानां विध्यभ्युपगमादनादृतोऽपि मन्त्रमात्रविधिवादिना सिद्धान्तिनाऽवश्यमादर्तव्यः । अन्यथा गुणवृत्तेरतिप्रसङ्गेन सप्तदशानामेवोपादानानुपपत्तेः । तथा मन्त्रविशिष्टोपधानविधावपि सर्वेष्टकोपधानप्रसंगे सप्तदशैवैतैर्मन्त्रैरुपधेया इति व्यवस्थासिध्यर्थमवश्यमयमर्थवाद उपास्यः । एवंच सप्तदशानामेवाष्टकानां सृष्टिमन्त्रसंबन्धात्तद्वतीनां सप्तदशानामेवाष्टकानामुद्देशेनैकेन विधिना विहितस्याप्युपधानस्यान्यसंस्कारकतया पुनर्विध्यन्तरानोपपत्तेर्न वैयर्थ्यप्रसक्तिरिति—**प्रकाशकारोक्तमेव साधु** ॥

शापत्तेः । अतो मध्यमचितिसंबन्धार्थं मन्त्रविधिः । इष्टकानां प्रत्यक्षब्राह्मणवत्त्वं चेष्टकावाचिप्रत्यक्षब्राह्मणपठितपदविधेयमन्त्रकत्वम् । सृष्टिपदं हि सृष्टिप्रकाशकमन्त्रोपधेयेष्टकापरम् । तत्र च विशेषणांशस्य मन्त्रस्य विधेयत्वात्तदिष्टकानां प्रत्यक्षब्राह्मणवत्त्वसिद्धिः । इतिकरणविनियुक्तलोकंपृणमन्त्रस्यापि मध्यमचितिमात्रसंबन्धापत्तेरिष्टकावाचीति-

---

**( भाष्यकारमते विध्यन्तरवैयर्थ्यापादनपदस्य वार्तिककारमते मन्त्रविधानोपपादनस्य च भाट्टदीपिकादृतस्याशयनिरूपणम् )**

**पूज्यपादैस्तु**—भाष्यकारमते एतदुपधानविधितः प्राक् सृष्टिमन्त्रोपधेयत्वस्येष्टकास्वसिद्धेस्तेन रूपेणोद्देश्यत्वायोगात् न सृष्टिपदमिष्टकावाचित्वेनोद्देश्यसमर्पकम् । कथमन्यथा सृष्टिपदस्योद्देश्यसमर्पकत्वे भाष्यकारः सृष्टिपदस्यानुवादत्वमर्थवादप्रयोजनकं वदेत्, अपितु यस्यैवेष्टकाकरणकचयनविध्यर्थाक्षिप्तस्य उपधानस्य पूर्वप्रवृत्त्या विधेयत्वं, तस्यैवेष्टकासंबन्धित्वेनावगतस्योपस्थितेष्टकासंस्कारकतया विध्याश्रयणादुद्देश्यत्वम् । तच्च रूपं सर्वेष्टकास्वप्यनुवृत्तमिति सर्वासामुपधानसिद्धेरितरवैयर्थ्यम् । अतएवार्थवादोऽपि तदा इष्टकासमुदायावयवीभूतसप्तदशेष्टकाप्रशंसार्थ एव संपद्यते, विधेः सन्दिग्धत्वाभावेन तत्राप्रवृत्तेः । अतएव सृष्टिपदमपि मन्त्रमात्रपरम् लोहितोष्णीषपदवत् । कियन्तः सृष्टिमन्त्रा इति सन्देहे एवोपसंहारो निर्णायको नत्वसंदिग्धेष्टकानिर्णायकः; विध्यर्थवादयोरेकवाक्यतया स्तुत्यनुरोधेन विधेयनिर्णायकत्वेऽपि उद्देश्यनिर्णायकत्वस्य क्वाप्यदृष्टत्वात् । यद्यपि "द्वयोः प्रणयन्ती"-त्यग्निप्रणयनविधौ द्वाभ्यामेवेति, "ऊरू एतद्यज्ञस्य यद्वरुणप्रघासस्साकमेधाश्चे"त्यर्थवादे ऊरुत्वेन संस्तुतयोर्गमनसाधनत्वप्रतीतेः मध्यमपर्वणोर्द्वयोरुद्देश्ययोर्निर्णयोऽप्यर्थवादे दृष्टः; तथापि चतुर्णां मध्ये कतरयोर्द्वयोरिति निर्धारणाभावाद्युक्तं निर्णायकत्वम् । प्रकृते सन्देहाभावादनिर्णायकत्वमेव । अत एव विधेयसमन्त्रकोपधानसामर्थ्यादिव सिद्धान्ते सप्तदशेष्टकाविषयत्वमस्मन्मते सिध्यतीति न तत्रार्थवादोपासनमावश्यकमित्यभिप्रेत्य भाष्यकारमते विध्यन्तरवैयर्थ्यापादनं मन्त्राणामुपधानभावनायामन्वयश्च वार्तिकसंमतत्वेन दर्शितः । तदिदमुक्तं कौस्तुभे—"भाष्यकृन्मतेतु विधेयोपधानस्येष्टकाविशेषप्रत्यायकत्वाभावान्मन्त्राणां चेष्टकाविशेषकत्वानुपपत्तेर्यत्सप्तदशेष्टका उपदधातीत्यर्थवादस्य च विधौ सर्वेष्टकाविषयत्वेन निश्चिते सन्देहाभावेनानिर्णायकत्वाद्वाक्यान्तरानर्थक्यम् इति विशेष" इति ॥

**( मन्त्रविधानस्य मध्यमचितिसंबन्धरूपप्रयोजनान्तरनिरूपणम् )**

पंचमे "मध्यमायान्तु वचनात् ब्राह्मणवती"त्यधिकरणे "यां कांचन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्यादि"ति वचनेनाभिपूर्वस्य जानातेः प्रत्यक्षज्ञानवाचित्वात् प्रत्यक्षब्राह्मणविहितानां इष्टकानां मध्यमचित्याश्रयत्वस्य वक्ष्यमाणत्वात्तदप्यत्र प्रयोजनान्तरं भवितुमर्हतीत्याह—**मध्यमेति** ॥ आगन्तूनामन्ते निवेशस्यापि पञ्चमे वक्ष्यमाणत्वात् अन्तिमायामेवेत्युक्तं । इष्टकानां ब्राह्मणेन विधानाभावे कथं ब्राह्मणवत्त्वम्? इति शङ्कां ब्राह्मणवत्त्वनिर्वचनेनोपपादयन्निरस्यति—**प्रत्यक्षेति** ॥ तत्रचेति ग्रन्थः पूर्वमेव व्याख्यातः ॥

**( मन्त्रविधानपक्षप्रयोजने मध्यमचितिसंबन्धे याज्ञिकसंप्रदायविरोधोपपादनम् )**

परन्तु वार्तिककारमते चतुर्थचितौ याज्ञिकैः सृष्टीनामनुष्ठानेन क्रियमाणेन विरोधो दुष्परिहर एव । सर्वासामपि प्राणभृतामनेन मध्यमचितिसंबन्धस्यैवापत्तौ प्रथमादिचित्यनुष्ठानविरोधोऽपि ॥ यदि तत्रावान्तरप्रकरणेन "यां कांचने"ति सामान्यवाक्यस्य बाध उच्येत, तदा सृष्टीनामप्येतत्समानमित्यपि ध्येयम् ॥

**( वार्तिकमतोपसंहारः )**

वार्तिकमतमुपसंहरति—**अतश्चेति** ॥ यतो मन्त्रांशे उपधाने वा विधानफलस्य लाभः, अतस्तद्रूपो हेतुरतः शब्दार्थः ॥

**(बहुत्वाश्रयसमुदाय एव गौणोऽर्थ इति शास्त्रदीपिकानुसारिप्रकाशकारमतखण्डनेन सृष्टिबहुत्वसमानाधिकरणसमुदायाश्रितत्वगुणयोगेन समुदायिन एव गौणोऽर्थ इति निरूपणम्)**

**अत्र च** "कः पुनरत्र गुणः? भूमा, सृष्टिसमुदाये हि सृष्टिभूमाऽस्ति । सृष्ट्यसृष्टिसमुदायेप्येकयास्तुवतेत्यनुवाके सृष्टिभूमास्ति, इत्यनेन सादृश्येन सृष्टिशब्द" इति शास्त्रदीपिकाग्रन्थगतसमुदायशब्दस्वारस्यमनुरुध्य बाहुल्यस्य गुणत्वमाश्रित्य यथा बाहुल्यं सृष्टिष्वस्ति, तथा सृष्ट्यसृष्टिसमुदायेऽपि कथंचित्सम्बद्धमस्तीत्येवं सृष्ट्यसृष्टिसमुदाय एवार्थे गौणीति प्रकाशकारैः समुदाय एव गौणोऽर्थ इत्युक्तं, तदयुक्तम् । तदात्वे समुदायस्यार्थैक्याभावेन प्रकाशकत्वानुपपत्तेः कथंचित्समुदायिद्वारा तदुपपत्तावपि समुदायस्यैव शाब्दत्वेन करणतया विधाने सति सर्वमन्त्रपाठोत्तरमेव सकृदुपधानापत्तेः । **किंच** सृष्टिसमुदायगतबाहुल्यस्य गुणत्वमुत सृष्टिसमुदायाश्रयगतबाहुल्यस्य तत् । **आद्ये** समुदाये बाहुल्यासंभवः, **द्वितीये** समुदायगतबाहुल्यस्य समुदायिष्वेव सत्त्वेन सृष्ट्यसृष्टिसमुदायेऽभावान्न समुदायार्थस्य गौणतासिद्धिः । अथ सृष्टिगतबाहुल्यमेव तत्र कथंचित्संबन्ध इत्युच्यते, तदा सृष्टि-

पदविशेषणम्। अतश्च मन्त्रविशिष्टोपाधानमत्र विधीयते। सृष्टिपदं परं गौण्या वृत्त्या सप्तदशसङ्ख्याकसृष्ट्यसृष्टिमन्त्रपरम्; "यत् सप्तदशेष्टका उपदधाती"त्यर्थवादानुसारात्। तत्र चतुर्दश सृष्टिमन्त्रास्त्रयोऽसृष्टिमन्त्रा इति सृष्टिबाहुल्यम्

समुदाये ह्यस्ति भूमेति समुदायगतभूमत्वप्रतिपादनपरमूलग्रन्थविरोधः, अतः समुदायिगततत्करणतानिर्वाहार्थं सृष्टिनिष्ठबाहुल्यसमानाधिकरणसमुदायाश्रितत्वगुणयोगेन सृष्ट्यसृष्टिसमुदायिनामेव गौण्याऽर्थत्वं न्यायसुधाकृदुक्तं युक्तमाश्रयितुम्। **नच**—सृष्टिवत्वाहुल्यवदसृष्टिमन्त्रत्रयेऽपि बाहुल्यस्य सत्त्वात् तस्यैवास्तु गुणत्वं, किमतः पुनः समुदायस्य प्रवेशेन? इति—**वाच्यम्**; यत्र बहूनां मध्ये द्वयोरेकस्य वाऽऽम्नानं, तत्र तदसंभवेन भूम्नो गुणत्वनिर्वाहाय तत्प्रवेशस्यावश्यकत्वात्। नच एकः समुदायो निष्प्रमाणकः; "यत्सप्तदशेष्टका"इत्यर्थवादे एकपदोपादानैकानुवाकगतत्वेन तत्प्रतीतेः। **नच**—सृष्टिघटितसमुदायाश्रयत्वमेव गुणोऽस्तु। किं बाहुल्यप्रवेशेन? इति—**वाच्यम्**; सृष्टिशब्दात्प्रतीयमानबाहुल्यस्यैव गुणत्वेण तस्यावश्यकत्वात्। **उक्तंच न्यायसुधायाम्**—"अन्यत्र तत्कार्यकरत्वसारूप्यादिरिवेह सृष्टिशब्दात् सृष्टिबाहुल्यबुद्धेः तस्यैव प्रवृत्तिनिमित्तत्वम्" **इति**॥ "अतो मन्त्रगणं लक्षयेत् सृष्टिशब्दः" इत्युत्तराधिकरणगतभाष्यकारोक्तगणशब्दस्य समूहमात्रपरतयाऽविरुद्धत्वाच्छास्त्रदीपिकागतसमुदायपदं प्रत्येकं एकत्वेन बहुत्वान्वयायोग्यत्वात् तदन्वययोग्यमात्रप्रदर्शनमात्रपरतयाऽविरोधेनोपपत्तेः समुदायिसृष्ट्यसृष्टिमन्त्रेष्वेव युक्ता गौणीत्यभिप्रेत्याह—**सृष्टिपदं परमिति**॥

**(अर्थवाद इव विधावपि गौणीवृत्तिनिरूपणम्)**

पूर्वत्रार्थवादानामेवोदाहरणत्वात्तत्रैव गौणीवृत्तिनिमित्तकथनस्य प्रस्तुतत्वात् विधेयार्थकसृष्टिशब्दे तत्कथनमसंगतमित्याशङ्कानिरासार्थं परशब्दोपादनम्। इहार्थवादत्वानपेक्षैणैव सूत्रस्य गौणीवृत्तिनिमित्तमात्रकथने तात्पर्यात्तस्य चेह विधेयेऽपि संभवेनात्यागान्नासंगतिरित्यर्थः॥

**(तत्सिद्ध्यादौ जहत्स्वार्था गौणी, भूम्नितु अजहत्स्वार्थेति उपसंहारप्राबल्यनिरासेनोपपादनम्)**

तत्सिद्ध्यादौ तत्कार्यकरत्वादिबुद्धेर्मुख्यार्थत्यागेऽप्यक्षतेर्गौण्या उपायमात्रतयावस्थितेर्मुख्ये न तात्पर्यं; इहतु वाच्यावाच्यसमुदायस्यैव गुणत्वात् तस्य च व्यासज्यवृत्तित्वेनैकसमुदायित्यागे आत्मलाभायोगात् समुदायघटकतया तदन्तर्भूतास्वसृष्टिष्विव सृष्टिष्वपि तात्पर्येण वैषम्यादजहत्स्वार्था गौणीं दर्शयितुं सृष्ट्यसृष्टिमन्त्रपरमिति सृष्टिपदं प्रयुक्तम्। नचैतावतोपसंहारप्राबल्यवादिनः प्रत्यवस्थानम्; सृष्टिपदस्यैकस्य मुख्यार्थत्वे असृष्टिस्तावकपदानां वैयर्थ्यापत्तेरानर्थक्यप्रतिहतन्यायेन चेह लक्षणाङ्गीकारेणोपसंहारकृतोपमर्दाभावात्।

गुणो गौणीवृत्तिनिमित्तम्॥ १७॥ ३३॥ इति तत्सिद्धिपेटिकायां भूमोदाहरणविचारः॥

लिङ्गसमवायात्॥ "प्राणभृत उपदधाती"त्यादौ तु

**गौणीवृत्तिनिमित्तमिति**॥ गौणीवृत्तिघटकमित्यर्थः। प्रयोजनं स्पष्टत्वान्नोक्तम्॥

**॥ इति तत्सिद्धिपेटिकायां भूमोदाहरणविचारः॥**

---

**(प्रस्तारत्रयगतवाक्योदाहरणत्वनिरूपणेन प्राणभृदादिपदेषु अल्पत्वेन निमित्तेनाप्राणभृदादिसाधारणग्रहणनिरूपणम्)**

गौणीवृत्तिनिमित्तान्तरपरतया अधिकरणभेदं तुशब्देन सूचयन् विषयवाक्यं दर्शयति—**प्राणभृत इति**॥ प्रथमद्वितीयतृतीयप्रस्तारगतवाक्यत्रयस्यापीह तन्त्रेणोपादानम्। **तत्र प्रथमे प्रस्तारे**। "अयं पुरो भुवस्तस्य प्राणो भौवायनो" "वसन्तः प्राणायनः" "प्राणं गृह्णामि प्रजाभ्य" इत्यादीन् त्रीन् प्राणशब्दघटितानानुक्रम्याम्नातानां सप्तचत्वारिंशदप्राणभृतामन्येषां मन्त्राणां दशदिक्क्रमेणोपधाने "अयं पुरो भुव इति पुरस्तादुपदधाति प्राणमेवैताभिर्दाधारे"त्यादिविधिभिः पर्यायपञ्चकेन विनियोगादन्ते "दशदशोपदधाति" इत्युपसंहारात् पञ्चाशन्मन्त्रोपधेयेष्टकानां "प्राणभृत उपदधाती"त्ययं उपधानविधिः। **द्वितीयतृतीययोः** प्रस्तारयोर्मध्ये द्वितीये "प्राणं मे पाही"ति प्राणपदघटितस्तावदेकमन्त्रः, तेन सह प्राणभृतां चतुर्णामन्येषां आम्नातानां विनियोगा"च्चतुर्ध्वेव प्राणान् दधाती"त्यर्थवादे पञ्चर्तव इत्यर्थवादान्तरगतऋतुगतपञ्चसङ्ख्यासाम्येन श्रवणात्पञ्चमन्त्रोपधेयेष्टकानां "प्राणभृत उपदधाती"त्युपधानविधिः, तृतीये "प्राणं मे पाहि" इति प्राणपदघटितैकेन मन्त्रेण सह नवानामन्येषामप्राणभृन्मन्त्राणामाम्नातानां "दश प्राणभृतः पुरस्तादुपदधाती"ति वाक्ये च विनियोगाद्दशमन्त्रोपधेयदशेष्टकानां "प्राणभृत उपदधाती"त्युपधानविधिरिति विवेकः। आदिपदेन "ये चत्वारः पथय" इत्येतदज्यानिपदघटितैकमन्त्रसहितेतरचतुर्मन्त्रोपधेयेष्टकोपधानविधेरज्यानीरुपदधातीत्यस्य संग्रहः। **अतएव**—यद्यपि प्राणभृच्छब्दस्य मन्त्रेष्वभावान्न सृष्टिशब्दवत् "तद्वानासामि"ति सूत्रविहितमतुप्लोपेन मतुबन्ततया प्राणभृच्छब्दप्रयोगसंभवः; तथापि **प्राणं** प्राणशब्दं बिभ्रतीति योगेन मन्त्रेषु तदुपधेयेष्टकासु च मन्त्रद्वारा प्राणशब्दभरणात्तच्छब्दप्रवृत्तिर्द्रष्टव्या। भूमन्याप्तं निमित्तान्तरं दर्शयति—**अल्पत्वमिति**॥ तथात्वे प्राणभृदल्पत्वसमानाधिकरणसमुदायाश्रयत्वगुणयोगेन प्राणभृदप्राणभृत्समुदायाश्रयीभूतसकलमन्त्रेषु गौणी। तस्यां गुणान्तर्भूतत्वान्निमित्तमल्पत्वमित्यर्थः॥

**(अल्पत्ववत्साम्यस्यापि गुणत्वनिरूपणम्)**

एतच्च लिङ्गसमुदायपदस्य गौणार्थापेक्षया वाच्याल्पत्वपर-

अल्पत्वं निमित्तम् । शेषं पूर्ववत् । एवं षट् गौणीवृत्तिप्रकाराः ॥ १८ ॥ ३४ ॥ इति त्रयोदशं तत्सिद्धिपेटिकाधिकरणम् ।

---

त्वमङ्गीकृतमपि यत्र द्वयोरपि साम्यं, एक एव छत्री, तत्र गौणार्थोपलक्षणाल्पत्वाभावेन लिङ्गसमवायोपपादनाय साम्यस्यापि भूमव्यावृत्तस्योपलक्षणतया व्याख्येयम् ॥

**( लिङ्गसमवायशब्दस्य चिह्नसंवन्धपरत्वं ननु अल्पत्वसंबन्धपरत्वमिति न्यायसुधानुसारिस्वसिद्धान्तनिरूपणम् )**

**वस्तुतस्तु**—सौत्रलिङ्गपदस्य चिह्नितार्थकत्वात्तत्संवन्धमात्रस्यैव निमित्तत्वोक्तेर्नाल्पत्वस्य निमित्तत्वम् । अत एव पूर्वत्र भूम्न इव निमित्तत्वं नह्यत्राल्पत्वं सूत्रकारोक्तं नवा तद्बुद्धिविषयम् । **अतएव न्यायसुधायां**—लिङ्गपदं चिह्नपरं व्याख्याय "प्राणभृच्छब्दात्तु प्राणभृल्लिङ्गसमवायमात्रबुद्धेस्तस्यैव प्रवृत्तिनिमित्तत्वाद्भेदेनोपादानं" इत्युक्त्वा भूयस्त्वमनपेक्ष्य प्रतीतिप्रदर्शनार्थोऽल्पशब्द इति वार्तिकगतोल्पशब्दो व्याख्यातो नतु निमित्तपरतया । अतश्चिह्नसंवन्धस्यैव प्रतीतिविषयत्वात् प्राणशब्दवच्चिह्नसंवन्धवत्समुदायाश्रयत्वमेव गुण इत्येव युक्तमिति ॥ **पूर्ववदिति** ॥ सृष्टिवाक्ये उक्तस्य मतभेदस्य समुदायिनामजहत्स्वार्थगौणार्थोपपादनस्य च संचार इहापि ज्ञातव्य इत्यर्थः ॥

**( लक्षणयैव सृष्टयसृष्टिमन्त्रग्रहणोपपत्तेर्गौणीवैयर्थ्यशङ्कातत्परिहारौ )**

**नच**—सृष्टिप्राणभृद्वाक्येषु छत्रिणो यान्तीति लौकिकवाक्ये इव स्वघटितसमुदायाश्रयत्वसंवन्धेन लक्षणाया एवोपपत्तेः किमिति गौणी? इति—**वाच्यम्**; अभिधेयसंवन्धित्वानादरेण गुणयोगसादृश्यनिमित्तं तत्तद्गुणप्रकारकताप्रतीत्यर्थं तदावश्यकत्वस्य प्रागेव दर्शितत्वात् ॥

**( प्रच्छन्नत्वादीनां सारूप्यादावन्तर्भावेन गौणीनिमित्तषट्कत्वस्य, तत्सिद्ध्यादीनां तस्याप्युपलक्षणत्वस्य च निरूपणम् )**

"स्तेनं मन" इत्यादौ प्रच्छन्नत्वादिना गौणत्वस्याकरेऽङ्गीकारात्तस्य प्रत्यक्षग्राह्यत्वेन कथंचित्सारूप्यान्तर्भावं अभिप्रेत्य गौणीवृत्तिप्रकारमुपसंहरति—**एवमिति** ॥ तत्सिद्धिपेटिकाया नामधेयगुणविध्यर्थवादात्मकत्वेनार्थवादत्वसिद्ध्यर्थं गौणीवृत्तिप्रकारमात्रकथनपरत्वेऽपि गौणीनिमित्तप्रकारावधारणार्थत्वाभावात् प्रच्छन्नत्वादेरत्रानन्तर्भावेऽपि क्षत्यभावाभिप्रायेण षट्पदोत्तरमेवकाराप्रयोगः ॥

**॥ इति तत्सिद्धिपेटिकायां लिङ्गसमवायोदाहरणम् ॥**

**॥ इति तत्सिद्धिपेटिकाधिकरणम् ॥**

---

**( १४ अधिकरणम् । )**

**सन्दिग्धेषु** ॥ "अक्ताः शर्करा उपदधाति" त्यत्र अक्ता इत्यनेनाविशेषाद् यत्किंचिदञ्जनसाधनद्रव्यस्य विधिना निर्णीतत्वादुपसंहारस्थेन "तेजो वै घृत" मित्यर्थवादेन सङ्कोचा-

---

**( पादाध्यायसङ्गतिनिरूपणपूर्वकविषयवाक्यनिर्देशः )**

विध्यन्तर्गतानामप्युद्भिदादिपदानां विधानातिरेकेण धात्वर्थावच्छेदकतनामधेयत्वरूपेण प्रामाण्ये प्रतिपादितेऽवसरलाभादर्थवादान्तर्गतपदानां स्तावकतया प्रतिपादितप्रामाण्यानां विधिमन्तरेणापि प्रामाण्यसदसद्भावविचारात्पादाध्यायसङ्गती प्रकरणान्तरत्वादनन्तरसंगत्यभावेऽप्यक्षतिं संशयं च स्पष्टत्वादनभिधाय काठकचयनप्रकरणगतं वाक्यमुदाहृत्य पूर्वपक्षमेवाह—**अक्ता इति** ॥ मृत्तिकामिश्राः क्षुद्रपाषाणाः शर्कराशब्दार्थः ॥

**( विधिनैव पर्यवसितवोधसिद्धेर्नार्थवादापेक्षेति निरूपणम् )**

सन्दिग्धार्थनिर्णयप्रामाण्यविषयत्वेनार्थवादमात्रस्यैवोपन्यासे युक्तेऽपि तद्विषयत्वज्ञापनाय विधेरप्युपन्यासः कृतः । "अक्ता" इत्येतावन्मात्रेणैव विध्युद्देशस्य सामान्याक्षिप्तसर्वविषयनिर्णयाद्विरोधेऽर्थवादानां अन्यतराकाङ्क्षयैव वैकृताङ्गवदन्वये विध्यनुरोधेनैव तत्कल्पनं युक्तमित्यभिप्रेत्याह—**अक्ता इत्यनेनेति** ॥

**( अर्थवादं विना विध्यपर्यवसनं नार्थवादाधिकरणे वोध्यते, किन्त्वत्रैवेति घृताद्यन्यतमेनाञ्जनमिति पूर्वपक्षनिरूपणम् )**

यद्यप्यर्थवादाधिकरणे पूर्वपक्षिणोपन्यस्तार्थवादं विना विधिपर्यवसानस्य निरस्तत्वान्नात्र विधिपर्यवसानेन पूर्वपक्ष उदेति, तथापि विधिं विना तत्रार्थवादपर्यवसानमात्रस्य निरासेनान्यतराकाङ्क्षयाऽन्वयेऽपि तत्रत्यसिद्धान्तसिद्धेर्न विधिपर्यवसाननिरासे प्रयोजनमितीहैव तत्पर्यवसानमूलकपूर्वपक्षनिरासेन तदपर्यवसानसिद्धान्तसाधनान्न दोषः ॥ अत्र शर्करोद्देशेनोपधानविधिमात्रप्रतीतेरञ्जनसाधनद्रव्यविध्यभावशङ्कां निरसितुमक्ता इत्यनेनेत्युक्तसामान्यस्यानुष्ठेयत्वेन विशेषापेक्षिणो विधेरवश्यापेक्षितप्ररोचनासमर्पकार्थवादापेक्षणेन विना पर्यवसानाभावे तदन्वयस्यावश्यकत्वात्तेनैव विशेषसमर्पणोपपत्तेर्न सामान्यस्य विशेषाक्षेपकत्वसंभव इति न घृताद्यन्यतमेनाञ्जनपूर्वपक्षः सिध्यतीति शङ्कानिरासाय निर्णीतत्वादित्युक्तम् । विधेरेव प्ररोचनाक्षेपकत्वेन सामान्येनैव विशेषाक्षेपोपपत्तेरर्थवादानपेक्षणेन पर्यवसानोपपत्त्या निर्णीतत्वमित्यर्थः ॥

**( निर्णीतस्यापि विधेरुपक्रमाधिकरणन्यायेनार्थवादापेक्षानिरासः )**

**ननु**—निर्णीतविधेरपि वेदोपक्रमाधिकरणन्यायेनार्थवादानुसारेणान्यथानयनं संभवतीत्याशङ्क्याह—**उपसंहारस्थे-**

नेति ॥ तत्रोपक्रमगतार्थवादानुरोधेनोपसंहारगतविधेरन्यथानयनेऽपीह वैपरीत्याद्वैषम्यमित्यर्थः ॥

### ( मुख्यत्वादिना विधिप्राबल्यनिरूपणम् )

अर्थवादस्योपसंहारस्थत्वोक्तेरुपलक्षणतया व्यतिरेकेण विधेः प्राबल्ये स्वार्थवृत्तितया मुख्यत्वं प्रथमश्रुतत्वादसंजातविरोधित्वं अनधिगतार्थबोधकत्वादप्राप्तार्थकत्वं चेति हेतुत्रयं सूचयित्वाऽर्थवादस्य स्तावकत्वादमुख्यत्वं चरमश्रुतत्वादुपसंजातविरोधित्वं जातार्थत्वात् प्राप्तार्थानुवादित्वं चेति दौर्बल्ये हेतुत्रयं दर्शितम् । "पशुमालभेते"ति विधेः पशुसामान्यविधायकस्य "छागस्य वपाया मेदसोऽनुब्रूहि" इति मन्त्रवर्णानुरोधेन संकोचेऽपि नात्र तस्योदाहरणत्वम् । तत्र वाक्यैकवाक्यतया विधिमन्त्रयोरेकविषयत्वस्य पश्चान्त्ये प्रतिपादनेन पौनरुक्त्यापत्तेरिति सूचनायार्थवादेनेत्युक्तम् । तथाचात्र पदैकवाक्यतापन्नार्थवादवशेनेष्यमाणस्य विधिसंकोचस्य अभ्युपगमो न युक्त इत्यर्थः ॥

### ( कांस्यभोजिन्यायेनार्थवादप्राबल्यनिरासः )

**ननु** कांस्यभोजिन्यायेन अङ्गभूतार्थवादानुरोधित्वमेव विधेरस्त्वित्याशङ्कापरिहाराय सङ्कोचपदं प्रयुक्तम् । यत्र गुणविधिना प्रधानस्य न किञ्चित् बाध्यते, तत्रैव कांस्यभोजिन्यायः, प्रकृतेतु प्रधानस्य सङ्कोचरूपबाधापत्तेर्न तन्न्यायप्रवृत्तिः ॥

### ( अग्निहोत्रादेः अग्निविद्यादिसाध्यत्वात्तदनुरोधेन त्रैवर्णिकविषयत्ववद्विधानस्यार्थवादसाध्यत्वात् तदनुसारेण विधानान्यथानयननिरासः )

**एतेन**—अग्निविद्यासाध्यस्याग्निहोत्रादेस्तदनुरोधेन त्रैवर्णिकविषयतया सङ्कोचवदिहापि विधानस्यार्थवादसाध्यत्वात्तदनुरोधेन विषयसङ्कोचोऽपि—**परास्तः**; येनाङ्गेन विना प्रधानं न सिध्यति स्वयं च यत्राक्षिप्यते तदनुरोधेन प्रधानस्यापि सङ्कोचाङ्गीकारेऽपीह विनाप्यर्थवादेन विधेरेव प्ररोचनाशक्तिकल्पनेन विधायकत्वोपपत्तेस्तदपेक्षाभावात् ॥

### ( अङ्गभूतमन्त्रानुरोधेन सोमग्रहणस्येवार्थवादानुसारेण विधेरसङ्कोच इति निरूपणम् )

अतश्च यथा "इन्द्राय त्वा वसुमते गृह्णामी"त्यैन्द्रमन्त्रसाध्यस्यापि सोमग्रहणस्य मन्त्राभावे ध्यानादिनापि स्मृतस्यानुष्ठानोपपत्तेर्नाङ्गभूतमन्त्रानुरोधेन प्रधानस्य सोमग्रहणस्यैन्द्रप्रधानमात्रविषयत्वेन सङ्कोच इति तृतीये लिङ्गविशेषनिर्देशादित्यधिकरणे वक्ष्यते, तद्वदङ्गभूतार्थवादानुरोधेन प्रधानभूतविधेः सङ्कोचो न युक्त इत्यर्थः ॥



### ( सूत्रगतेन सन्दिग्धपदेनाव्यवस्थितार्थग्रहणमिति निरूपणम् )

**सन्दिग्धार्थनिर्णय इति** ॥ यद्यपि पूर्वपक्षे सामान्यरूपतया निश्चयात् सिद्धान्ते चैकवाक्यतया घृतरूपत्वनिश्चयात्सन्देहासंभवे सन्दिग्धार्थत्वाभावेन न सिद्धान्त्यभिमतसन्दिग्धार्थाप्रामाण्यनिषेधोपसंहारो युक्तः; तथापि सन्दिग्धशब्देन सूत्रगतेनाव्यवस्थितार्थप्रतीतिमात्रस्य विवक्षणात् विध्युद्देशमात्रपरामर्शात् भवन्ती सा प्रतीतिः यथा वाक्यशेषावधारितया व्यवस्थया सिद्धान्तिना वार्यते, तद्द्वारा च प्रामाण्यमर्थवादस्य साध्यते तत्र, किन्त्वव्यवस्थितार्थप्रतीतिरेव युक्तेत्यर्थः ॥

### ( अर्थवादगतघृतपदस्य गौणत्वलाक्षणिकत्वोपलक्षणत्वादिनोपपत्तिः पूर्वपक्षे )

घृतपदन्तु विध्यवगतसामान्यद्रव्येऽञ्जनसाधनत्वरूपगुणयोगात् गौणम् । **अथवा**—अञ्जनसाधनत्वसंबन्धेन लाक्षणिकमेव वा। **अथवा**—सामान्येन घृतस्यापि प्राप्तत्वादवयुत्यानुवादेन घृतमात्रपरमेव । सामान्यांशे विधेः स्तावकत्वकल्पनेऽपि घृतांशे तदकल्पनया स्तावकमेव ॥

### ( लिङ्गसमवायाद् घृतपदलक्षकत्वमिति न्यायसुधाकारादिमतखण्डनेन येनकेनचिदञ्जनमिति पूर्वपक्षोपसंहारः )

**यत्तु—अत्र न्यायसुधाकारादीनां** लिङ्गसमवायात् गौणत्वप्रतिपादनं, तदञ्जनसाधनद्रव्याणामेकसमुदायस्य सत्त्वे प्रमाणाभावेनान्यतमस्य साधनत्वानुपपत्तेश्च घृतचिह्नसंबन्धासंभवादुपेक्षणीयम् । **एतेन**—अल्पत्वस्याप्यत्र निमित्तत्वं—**प्रत्युक्तम्** ॥ एवंच सामान्यस्य विशेषव्यभिचारित्वेन तल्लक्षकत्वानुपपत्तेर्विशेषेण सामान्याव्यभिचारिणा सामान्यलक्षणोपपत्तेर्येन केनचिदञ्जनमिति सिद्धम् ॥

### ( आक्षेपतःपूर्वमेवार्थवादेन घृतस्याञ्जनसाधनत्वेनान्वयात् न येन केनचिदञ्जनमिति सिद्धान्तोपक्रमः )

सामान्येन व्यवहारासंभवाद्विधेरनुष्ठापकत्वनिर्वाहाय यावद्विशेषाक्षेपकत्वं कल्पनीयम् तावत् प्ररोचनासमर्पकतयावश्यापेक्षितैकवाक्यतापन्नार्थवादेनैव तदपेक्षाशान्तेः तत्समर्पितविशेषपरतया विधेर्न युक्तं व्यवस्थापनम्; सङ्कोचस्य व्यवहारानुमतत्वेन स्वार्थतयैवापेक्षणात् । अत एवात्र नोपक्रमेणोपसंहारगतार्थवादस्योपमर्दलक्षणबाधः, नवोपसंहारेणोपक्रमस्य सङ्कोचलक्षणो बाधः । एवंच विधेः प्ररोचनाशक्तिरपि न कल्पिता भवति; घृतप्ररोचनया समाप्ते वाक्ये काल्पनिक्या तैलादिप्ररोचनया वाक्यान्तरार्थतापत्त्या वाक्यभेदापत्तिश्च न प्रसज्यते इत्यभिप्रेत्य सिद्धान्तमाह—**विधेरविशेषेति** ॥

तराक्षेपकत्वे प्रमाणाभावादुपक्रमस्याविरोधेनोपपत्तौ च उपसंहारस्थस्यार्थवादस्योपलक्षणत्वे प्रमाणाभावाद्विध्यर्थवादयोरेकवाक्यत्वेनैकविषयकत्वस्यावश्यकत्वाच्च युक्तं वाक्यशेषस्य सन्दिग्धार्थनिर्णयेऽपि प्रामाण्यमिति घृतेनैवाञ्जनम् ॥ १४ ॥ ३५ ॥ इति चतुर्दशं अक्तधिकरणम् ॥

**( उपक्रमाकाङ्क्षयैवार्थवादस्योपपत्तौ न घृतपदस्य तैलाद्युपलक्षकत्वमिति यद्वचा स्तुवत इत्यादीनां ऋङ्निन्दया साम्नास्तुवीतेति-विधिविषयविषयत्ववदत्रापि समान-विषयत्वमिति निरूपणम् )**

अत एव यत्र सोमेन यजेतेति विधेर्नैराकाङ्क्ष्यं, तत्र नैव गुणभूतमन्त्रानुरोधेनेन्द्रप्रदानमात्रविषयत्वेन सङ्कोचः । एवंचोपक्रमाकाङ्क्षयैवार्थवादस्यान्वयोपपत्तौ तत्र घृतपदस्य लक्षणाङ्गीकरणं निष्प्रयोजनं निष्प्रमाणकं चेत्याह—**उपसंहारस्थस्येति ॥ एकविषयत्वस्येति** ॥ यथा "यद्वचा स्तुवते तदसुरा अन्ववायन्यत्साम्ना स्तुवीत तदसुरा नान्ववायन्नि"त्यर्थवादे किमसुरागमनहेतुत्वेनात्र निन्द्यते, उत वशीकर्तुं अशक्यानामसुराणामपि वशीकरणहेतुतया स्तुतिरिति सन्दिग्धे तदनन्तरश्रुतेन "य एवंविद्वान् साम्ना स्तुवीते"ति सामविषयेण विधिना विधित्सितसामप्रशंसार्थमृग् निन्द्यते इत्यवधार्यते तन्निन्दापरत्व एव तदेकवाक्यतोपपत्तेरिति नवमे **अर्थैकत्वादि**त्यधिकरणे वक्ष्यते, एवमिहाप्येकविषयत्वानुरोधेन विधेरपि सन्दिग्धार्थविषयेऽर्थवादेन व्यवस्थापनमित्यर्थः। **उक्तंच वार्तिके तत्रैव**—विधिस्तुत्योः सदा वृत्तिः समानविषयेष्यते । तस्मादेकत्र सन्दिग्धमितरेणावधार्यते । **इति** ॥

**( संदिग्धपदेनाव्यवस्थितं सदेहविषयश्चोभयमपि विवक्षितम् । अतएव आदित्यः प्रायणीय यदाग्नेय इत्यादौ च अदितिदेवतात्वैकवचनान्ताग्निशब्दप्रकृतिकत्वादिनिर्णयः इत्यादि निरूपणम् )**

अत्रच सूत्रे सन्दिग्धपदेन यः प्रसिद्धः सन्देहः यश्चाव्यवस्थितार्थप्रत्ययः तदुभयमपि सन्देहत्वेन विवक्षितम्; अनवधारणरूपत्वाविशेषात्, **अत एवोक्तम् व्यवराहाधिकरणवार्तिके**—"सन्दिग्धेषु च सर्वेषु वाक्यशेषेण निर्णयम् । वक्ष्यत्येव न तेनात्र पृथक्कार्या विचारणा" इति । अतएव व्यवस्थितार्थप्रतीतेः प्रागेव यत्र प्रकृतिप्रत्ययसन्देहः, तत्राप्यर्थवादेन निर्णयः । यथा "आदित्यः प्रायणीय" इत्यत्र किमदितिशब्दः तद्धितप्रकृतिः उत आदित्य इति सन्देहे "दित्यदित्यादित्यपत्युत्तरपदाण्ण्य" इति विहितण्यप्रत्यये रूपाविशेषे "अदित्यैवादित्यान् खनति" "अमुमेवादित्यं स्वेन भागधेयेनोपधावति" इत्यादावुभयोरपि देवतात्वेन प्रसिद्ध्यविशेषे च समाने सत्यपि तेऽदित्यां समाम्रियन्तेत्याद्यर्थवादाददितिशब्दस्यैव तत्त्वेनावधारणम् । यथावा "आग्नेयोऽष्टाकपाल" इत्यत्राऽग्नये कृत्तिकाभ्य इत्यत्रैकवचनान्तत्वेन "त अस्मा अग्नयो द्रविणं दत्वे"त्यादौ बहुवचनान्तत्वेन देवतापराग्निशब्दनिर्देशादेकवचनबहुवचनान्तरयोः सन्देहे "अग्नये ध्रियस्वे"त्यर्थवादेनैकवचनान्तत्वेन स एव प्रकृतिरवधार्यते, एवमन्यत्राप्यूह्यम् । एवंच यत्र विधौ शब्दस्वरूपमेव प्रकृतितः प्रत्ययतो वा नावधार्यते, अनेकशक्यार्थनिर्णयेऽपि प्रकृते विवक्षितोऽर्थो नावधार्यते, तदवधारणेऽप्युद्देश्यमुपादेयं वा विशिष्य नावधार्यते, तत्र सर्वत्रापि विशेषावधारणसमर्थेनार्थवादेन विशेषावधारणं एतदधिकरणव्युत्पाद्यम्, नतूपसंहारप्राबल्येन । अधिकाशङ्कानिरासाय तु पुनस्तत्र तत्रे विचारकरणमपि न विरुद्धम् । अतएव "वासः परिधत्ते इत्यत्राप्यव्यवस्थितार्थप्रतीतिमादाय सन्दिग्धे विधौ "एतद्वै सर्वदेवत्यं वासो यत्क्षौममि"त्यर्थवादेन विशेषावधारणमिह भाष्यकृतोक्तम् । यदा तु "अजिनं वासोवे"त्यादौ कस्यापि वासःशब्दादव्यवस्थितार्थप्रतीतेरदर्शनादिहापि वासःशब्देनाव्यवस्थितार्थप्रतीत्या सन्दिग्धत्वमित्युच्येत तदापि सामान्यवाचकतयैवाव्यवस्थितार्थप्रतीतिसंभवात्सन्दिग्धत्वं संभवत्येवेति न दोषः ॥

**( विधिस्तुत्योरेकविषयत्वमेवैतदधिकरणशरीरं, एवमपि वेदोपक्रमाधिकरणशरीरमावश्यकमित्यादिनिरूपणेनोपसंहारः )**

अतएव अत्र विशेषप्रवृत्तविधेः नानुष्ठापकत्वनिर्वाहाय विशेषापेक्षितत्वेन विशेषापेक्षा, वस्त्रदानादिविधौ तदपेक्षाया लोकेऽदर्शनात्, तत्रापि विधिस्तुत्योरेकविषयत्वसिद्धये विधेरप्युत्थाप्याकाङ्क्षया विशेषावधारणं नानुपपन्नम् । अत एव **अर्थाद्वा कल्पनैकदेशत्वादि**त्युत्तरसूत्रगतकल्पनैकदेशपदयोरिहानुषङ्गेण वाक्यशेषात्, कल्पनाऽवधारणा, कुतः? एकदेशत्वात्, एकोऽर्थो दिश्यते प्रतिपाद्यते याभ्यां विध्यर्थवादाभ्यां तावेकदेशौ, तयोर्भावः तत्त्वं एकविषयत्वं, तस्मादित्यर्थेन सूत्रकृता एकविषयत्वमेव मुख्यत्वेन हेतुतयोपात्तमित्यभिप्रेत्य सर्वव्यापकतया पूज्यपादैरेकविषयत्वस्यावश्यकत्वाच्चेत्युक्तम् । यद्यपि "उच्चैः ऋचा क्रियते" इत्यत्रापि एकविषयत्वावश्यकत्वेनैव हेतुना वेदपरत्वादेतदधिकरणविषयत्वम्; तथापि तत्र ऋगादिपदानां निश्चितार्थकत्वात् सन्दिग्धत्वाभावेन विधिगतत्वेन चान्यथानयनमयुक्तमित्यधिकाशङ्कानिरास उपक्रमप्राबल्येन दर्शयिष्यत इति न पौनरुक्त्यम् । नचैकवाक्यतां विना पर्यवसितस्य विधेर्वाक्यशेषापेक्षित्वेऽपि पर्यवसितस्य तु विधेर्नैव सङ्कोचो युक्त इत्यधिकाशङ्कानिरासाय प्रवृत्तं षष्ठाद्यधिकरणमपि व्यर्थमिति भावः । सिद्धान्तमुपसंहरति—**युक्तमिति** ॥ अपिना पूर्वोक्तसङ्गतिः सूचिता । अतोऽर्थवादोपस्थापितघृतवाचकपदकल्पनया तस्यैवाञ्जनसाधनत्वमभिप्रेत्याह—**घृतेनैवाञ्जनमिति** ॥

**॥ इति चतुर्दशं अक्तधिकरणम् ॥**

(१५ अधिकरणम्।)

अर्थाद्वा ॥ "स्रुवेणावद्यति, स्वधितिनाऽवद्यति, हस्तेनावद्यति" इत्यादौ विधेरवदेयद्रव्यविषये सन्दिग्धस्य सामर्थ्यान्निर्णयः। स्रुवेण द्रवद्रव्यमेवाज्यादि स्वधितिना मांसादि हस्तेन संहतं पुरोडाशादीति। अतश्च सामर्थ्यसहकृतावद्यतिपदेनैव लक्षणया द्रवद्रव्याद्यवदानस्य उद्देश्यत्वात्तदनुवादेन स्रुवादिविधौ न किंचिद्बाधकम्। एवं

## (अध्यायपादाधिकरणसङ्गतीनां स्पष्टत्वेन पूर्वपक्षस्य सुनिरस्तत्वेन च सिद्धान्तेनोपक्रमः)

विषयवाक्यमुदाहरति—**स्रुवेणेति** ॥ पूर्वत्रार्थवादस्येवेह विधायकतया प्रतिपादितप्रामाण्यस्य विधेः सामर्थ्यानुगृहीतस्य सन्दिग्धार्थनिर्णयेऽपि विधानान्तरेण प्रामाण्यप्रतिपादनादध्यायसङ्गतिं, तथा सामर्थ्यकल्पितद्रवादिपदस्योद्भिदादिपदस्येव प्रामाण्याप्रामाण्यविचारात्पादसङ्गतिं, तथा पूर्वाधिकरणोक्तनिर्णयकारणस्य वाक्यशेषस्याभावेन पूर्वपक्षोत्थानात् प्रत्युदाहरणसङ्गतिं, अथवा सन्दिग्धविषयतयोपस्थितत्वात्प्रसङ्गरूपामनन्तरसङ्गतिं च स्पष्टत्वादनभिधाय तथा घृतवद्वाक्यशेषेऽवदेयद्रवद्रव्यविशेषस्याश्रवणात् प्रमाणान्तरगम्यवस्तुसामर्थ्यापेक्षणे च वेदस्य सापेक्षतयाऽप्रामाण्यापत्तेः तीक्ष्णपुष्करधारस्य च स्रुवस्य कठिनद्रव्यावदानेऽपि सामर्थ्यसंभवादायसावष्टंभेन स्रुवहस्तयोर्मांसावदानेऽपि शक्त्युपपत्तेः कोटरवतश्च स्वधितेर्द्रवद्रव्यावदानेऽपि शक्तिसंभवानुग्राहकापेक्षायामपि च निरपेक्षसाधनत्वाविघातादव्यवस्थापूर्वपक्षस्य च—विधेरशक्यार्थानुष्ठानायोगात् प्रवर्तकत्वव्याघातात् सर्वविधीनामपि सामर्थ्यम्। अपेक्षणीयसामर्थ्यस्य च पदपदार्थावधारणवत् प्रमाणान्तरगम्यत्वेऽपि विषयस्यान्यतोऽनवगतत्वेन वेदस्य प्रामाण्योपपत्तेः तीक्ष्णपुष्करधारेणापि स्रुवेण मांसावदानस्याशक्यत्वात् केवलेनापि स्रुवेण द्रवावदानोपपत्तावायसानुग्राहकत्वकल्पने मानाभावात्तत्कल्पने च निरपेक्षसाधनत्वविरोधस्य दुष्परिहरत्वात् स्वधित्यादीनां **चाजिनवासोधिकरणन्यायेन** लोकसिद्धस्यैव ग्रहणोपपत्तेः कोटरकरणानुपपत्तेर्व्यवस्थैव युक्तेत्येवं सुनिरस्यतां च मत्वा सिद्धान्तमेवाह—**विधेरिति** ॥

## (विधेरसंदिग्धत्वेनोक्तन्यायप्रवृत्तिरिति निरूपणम्)

शेषशेषिभावव्यवस्थारूपसन्दिग्धार्थनिर्णये सामर्थ्यसहकृतविधेरेव प्रमाणत्वमुक्तम्। तेन यत्र दर्शपूर्णमासादिविधेरेकादशोक्तन्यायेन सर्वाङ्गविशिष्टकर्मविषयकतया निश्चितत्वेन सन्देहो नास्ति, तत्र सामर्थ्यानुसारेण प्रयाजादिषु शक्यमात्रविषयतया नैव सङ्कोचकल्पनमिति व्यतिरेकेण सूचितम्। **संहतमिति** ॥ कठिनमित्यर्थः ॥

## (द्रवादिपदाध्याहारपरप्राचीनमतखण्डनेन वाक्यार्थवर्णनम्)

अत्रच सामर्थ्यसहकृतो विधिरेव स्रुवादीनामवदानादिसाधनत्वं बोधयंस्तदन्यथानुपपत्त्या द्रवादिविशेषरूपार्थकल्पनायामपि तस्याशाब्दत्वेन शाब्देतरार्थेनान्वयानुपपत्तेर्द्रवादिपदाध्याहारेण वेदैकदेशत्वरूपवाक्यशेषत्वेन सूत्रगतैकदेशपदं व्याख्याय द्रवादिपदाध्याहारः प्राचीनैरुक्तः, तस्य सामर्थ्यानुगृहीतावद्यतिपदेनैव द्रवादिकर्मकावदानोद्देश्यत्वोपपत्तेः प्रयोजनाभावमभिप्रेत्याध्याहारं विनैव वाक्यार्थं दर्शयति—**अतश्चेति** ॥

## (द्रवादिपदाध्याहारावश्यकतया स्वसिद्धान्तोपपादनम्)

**वस्तुतस्तु**—विभज्यमानसाकाङ्क्षसंहतार्थविशिष्टैकार्थप्रतिपादकपदसमुदायस्य वाक्यत्वात् तस्यच वाक्यार्थप्रतिपत्त्युपायभूतकल्प्यपदार्थवाचिपदाभावे साकाङ्क्षत्वेनापरिपूर्णस्य विशिष्टार्थप्रतिपादकत्वायोगात् अवद्यतेः कर्मत्वाकाङ्क्षस्य कर्मवाचकपदं विनाऽपरिपूर्णत्वात् द्रवादिवाचकपदाध्याहार आवश्यक एवेति ध्येयम् ॥

## (सामर्थ्यादुद्देश्यविशेषस्येव विधेयविशेषस्यापि निर्णय इत्येतदर्थमुदाहरणान्तरप्रदर्शनम्)

यथैव "द्वयोः प्रणयन्ती"ति विधौ पूर्वाधिकरणोक्तन्यायादुद्देश्यविशेषे निर्णयस्तथा सामर्थ्यादुद्देश्यविशेषनिर्णयमभिधाय तद्वदेवेहापि विधेयस्यापि सामर्थ्यान्निर्णयं दर्शयितुं अन्यदप्युदाहरति—**एवमिति** ॥

## (अञ्जलिपदार्थनिर्णयः)

अत्रापि देवताऽभयप्रार्थनादौ द्वयोः करयोरत्यन्ताङ्गुलिसंश्लेषणेऽञ्जलिशब्दार्थत्वस्य दृष्टत्वादञ्जलिना पिबेदित्यादौ जलग्रहणसमर्थव्याकोशात्मकत्वेन तदर्थदर्शनाद्धोमवाक्ये सन्देहे सक्तुहोमरूपोद्देश्यताकाञ्जलिविधिसामर्थ्यान्निर्णयः, अन्यथा सक्तुग्रहणानुपपत्तेरित्यर्थः। व्याकोशात्मक इति विशब्दस्य विकसितार्थत्वात् आङश्चेषदर्थकत्वादीषद्विकसितकोशपदवाच्यमुकुलाकार इत्यर्थः ॥

## (अन्यथाऽनुपपत्तिसहकृतस्यैव सामर्थ्यस्य निर्णायकत्वात् पुरोडाशावदाने न स्वधितिप्राप्तिरिति निरूपणम्)

अत्रच न केवलं सामर्थ्यमात्रादेव व्यवस्था, तथात्वे स्वधितेरपि पुरोडाशावदाने सामर्थ्यसत्त्वेन मांसावदानव्यवस्थाया असिद्धेः, किन्त्वन्यथानुपपत्तिसहितात् तस्मात्। अतश्च पुरोडाशावदानस्य हस्तेनापि संभवात् क्षीणार्थापत्तेर्न स्वधितिप्रयोजकत्वं कल्पनीयमित्यपि ज्ञेयम् ॥

"अञ्जलिना सक्तून् जुहोती" त्यादावपि न संपुटाकारोऽञ्जलिः, अपि तु व्याकोशात्मक एव सामर्थ्यात्। तदेवं विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्यरूपाण्यष्टौ प्रमाणानि धर्माधर्मयोर्निरूपितानि । अतः परं भेदादिना तत्स्वरूपं निरूपयिष्यते ॥ १५ ॥ ३६ ॥ इति पञ्चदशमर्थसामर्थ्याधिकरणम् ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥ ० ॥

इति प्रथमोऽध्यायः ।

(वाशब्दघटितस्याप्यधिकरणान्तरतया योजनम्)

यद्यपि चार्थाद्वेति सूत्रे वाशब्दोपादानबलादेकाधिकरण्यमेव पूर्वसूत्रैकवाक्यतया भाति; तथाप्येकवाक्योपात्तैकदेशशब्दस्यार्थद्वयपरत्वानुपपत्तेरनुपक्तस्य वाक्यान्तरार्थभेदे बाधकाभावमभिप्रेत्याधिकरणान्तरपरतया भाष्यकारादिव्याख्यानं द्रष्टव्यम्। अस्मिंश्च वाक्ये प्रदातव्ये इत्यपि पदं कौस्तुभे धृतं तस्याहवनीयोल्मुकेन महावेद्यास्तृतबर्हिषोन्ते दाहादुत्थितो वैश्वानरोग्निरर्थो द्रष्टव्यः । अध्यायार्थमुपसंहरति—तदेवमिति ॥ नामधेयस्य विध्यर्थवादमन्त्रसामीप्येऽपि निरूपणक्रममादाय स्मृत्याचारयोस्तदपेक्षया प्राथम्येनोपादानम् । मानाधीनत्वेन मेयसिद्धेरावश्यकस्य प्रमाणनिरूपणस्योत्तरत्र निरूपणे हेतुत्वसूचनद्वारा वक्ष्यमाणाध्यायार्थान् शिष्योपरमनिरासार्थं प्रतिजानीते—अतःपरमिति ॥ स्वरूपज्ञानस्योक्ताभ्यां प्रमाणलक्षणाभ्यामेव सिद्धेरुत्तरविचारवैयर्थ्यं परिहर्तुं भेदादिनेत्युक्तम् । आदिपदेन विनियोगप्रयोगविधिविषयत्वादिरूपान्तरस्यापि ग्रहः ॥

गम्भीरार्थपदाध्याये यदकार्षं नु टिप्पणम् ।
तत्साधनं गुरुकृपा नतु मे बुद्धिवैभवम् ॥ इति ॥

॥ इति पञ्चदशं अर्थसामर्थ्याधिकरणम् ॥

इति श्रीमत्पूर्वोत्तरमीमांसापारावारीणधुरीणश्रीखण्डदेवान्तेवासिकविमण्डनशंभुभट्टविरचितायां भाट्टदीपिकाप्रभावल्यां प्रथमाध्यायस्य चतुर्थः पादः ॥

अत्र प्रथमाध्यायस्समाप्तः ॥

| अध्यायः | पादः | अधिकरणसंख्या | आदितोऽधिकरणसंख्या |
|---|---|---|---|
| १ | ४ | १५ | ३७ |



श्रीः।

# भाट्टदीपिका।

## प्रभावलीव्याख्यासंवलिता।

### तत्र द्वितीयाध्यायस्य प्रथमः पादः।

(१ अधिकरणम्।)

**भावार्थाः॥** एवं धर्माधर्मप्रमाणेषु निरूपितेषु अधुना तत्स्वरूपं निरूप्यते। यद्यपि च तदपि एतावत्प्रमाणप्रतिपाद्यत्वेन रूपेण बुद्धमेव; तथापि एकत्वानेकत्वादिरूपेणाबुद्धत्वादिह तेन रूपेण निरूप्यते। अत्र च शब्दान्तरादिषट्प्रमाणकभावनाभेद एवाध्यायार्थः। धात्वर्थभेदस्तु तत्सिद्ध्यर्थः क्वाचित्को निरूप्यते, अपूर्वभेदोऽपि फलत्वेनेति न तावध्यायार्थौ।

(मङ्गलाचरणम्)

अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकम्।
सर्वाभीष्टप्रदं नौमि श्रीरूपं सुन्दरं महः॥ १॥

यो वेदशास्त्रार्णवपारदृश्वा यज्ञादिकर्माचरणेऽतिदक्षः।
सदाशिवाराधनशुद्धचित्तस्तं बालकृष्णं पितरं नमामि॥ २॥

श्रीखण्डदेवं प्रणिपत्य सद्गुरुं मीमांसकस्वान्तसरोजभास्करम्।
अत्यन्तसंक्षिप्तपदार्थतत्कृतौ प्रभावलीटिप्पणमातनोम्यहम्॥ ३॥

यद्यप्यत्र गुरोः कृतावपि मयाऽप्युद्भाव्यते काचना-
संभूतिस्तदपि प्रचारचतुरे नैषा पुरोभागिता।
किन्तु क्ष्मातिलकाः कुशाग्रधिषणाः सिद्धान्तबद्धादरा
मद्वाक्यं परिहृत्य तत्कृतिमलंकुर्वन्त्वियं मे मतिः॥ ४॥

(प्रथमाध्याय एव धर्मस्वरूपविचारावश्यकतानिरूपणपूर्वकं पूर्वाध्यायेनावसरसङ्गतिनिरूपणपूर्वकं च द्वितीयाध्यायार्थप्रतिज्ञानम्)

यद्यप्याद्यसूत्रे धर्मस्वरूपजिज्ञासैव प्रथमतः प्रतिज्ञाता, तद्विवरणपरे को धर्मः किंलक्षणकः इति भाष्येऽपि प्रमाणजिज्ञासातः प्राक् स्वरूपजिज्ञासैव प्रतिज्ञातेति तत्स्वरूपनिरूपणमेवादौ कर्तुमुचितम्, न प्रमाणनिरूपणम्; तथापि मेयसिद्धेः प्रमाणाधीनत्वात् चोदनासूत्रे प्रमाणान्तर्भावेनैव स्वरूपोक्तेः कर्तुं योग्यामपि स्वरूपचिन्तामुपेक्ष्य प्रमाणचिन्ता पूर्वाध्याये कार्त्स्न्येन कृता। यदर्थं च यदारब्धं तत्समाप्तौ तद्बुद्धिस्थं जायत इति न्यायेन प्रमाणचिन्तासमाप्तौ बुद्धिस्थस्य स्वरूपस्यावसरलाभात् तन्निरूपणं क्रियत इत्यभिप्रेत्यावसरसङ्गतिमथवा शब्दान्तरादिभिर्विधेः कर्मोत्पत्तिपरत्वादुत्पन्नस्य च पुनर्विधावानर्थक्यात् भेदसिद्धिरानर्थक्यनिरासाधीना प्रामाण्यसिद्धावेव शक्या वक्तुमिति हेतुहेतुमद्भावसङ्गतिं वाऽधुनापदेन प्रदर्शयन् समस्ताध्यायार्थं प्रतिजानीते—**एवमिति॥**

(द्वितीयाध्याये शास्त्रसङ्गतिः)

**अनेनच**—एतदध्यायार्थनिरूपणस्य को धर्म इत्यंशोपनिपातात् आद्यसूत्रप्रतिज्ञाविषयत्वेन शास्त्रसंगतत्वं—**सूचितम्॥**

(शेषशेषिभावादितःपूर्वं प्रमाणनिरूपणानन्तरं च भेदनिरूपणोपपत्तिः)

यद्यपि प्रमाणलक्षणोत्तरप्रवृत्तैकादशाऽध्याय्यपि प्रमाणलक्षणसापेक्षा; तथापि शेषशेषिभावनिरूपणे भेदाधीनसिद्धिकत्वस्य प्रत्यक्षतः "अथातः शेषलक्षण"मिति सूत्रकारेणैव दर्शितत्वात् तत्सिद्ध्यर्थं कर्तव्यस्य भेदनिरूपणस्यायमेवावसरः। एवंच को धर्मः किंलक्षणक इति भाष्यगतं पाठक्रममर्थक्रमेण बाधित्वा प्रमाणलक्षणानन्तरं भेदादिकथनेन स्वरूपनिरूपणं पश्चात् क्रियमाणं नासङ्गतमिति भावः॥

(भावनाभेद एवाध्यायार्थः न तु तदेकत्वं धात्वर्थभेदादिकं वा, तन्निरूपणं त्वपवादेनोपजीव्यतया फलत्वेन वेत्यादिनिरूपणम्)

**ननु** एकत्वानेकत्वादिना तत्स्वरूपनिरूपणे अध्यायार्थभेदापत्तिरिति शङ्कां परिहरति—**अत्रचेति॥** शब्दान्तरादिप्रमाणैरध्यायार्थत्वेन भावनाभेदे निरूपिते क्वचित्तदपवादतया अभेदनिरूपणेऽपि नाऽध्यायार्थत्वमित्यर्थः। **ननु** अभेदस्याऽध्यायार्थत्वाभावेऽपि भावनापूर्वधात्वर्थानां त्रयाणामप्यग्रे भेदस्य निरूपणात् कथं नाध्यायार्थभेद इत्यत आह—**धात्वर्थभेदस्त्विति॥** यद्यपीह धर्मस्यैव भेदनिरूपणप्रतिज्ञानात् तस्य च यागादिधात्वर्थस्यैव श्रेयस्साधनत्वेन धर्मत्वात् तद्भेदस्यैवाध्यायार्थत्वं वक्तुं युक्तम्, नतु भावनाभेदस्य; तथापि यागादेरसिद्धस्य कृतिविषयत्वेनैव लब्धात्मनः श्रेयस्साधनत्वेन प्राधान्यात् कृतेरेव भेदस्याऽध्यायार्थत्वं नायुक्तम्। अत एवापूर्वस्य अशब्दार्थत्वात् तत्स्वरूपेण भेदनिरूपणाशक्तेस्तद्भेदस्य भावनाभेदानुनिष्पादित्वम्; व्यापारभे-

फलीभूतापूर्वभेदोऽपि अपूर्वसाधनभेदाधीन इति तत्साधनजिज्ञासायां स्वर्गादिसाधनस्यैवावान्तरव्यापाररूपापूर्वं प्रति साधनत्वात् स्वर्गादिफलं प्रति किं धात्वर्थस्य करणत्वं उतोपपदार्थस्य सोमादेरपीति चिन्तायां, प्राथमिकभावनान्वयस्य तावत् सिद्धान्तिनोऽपि संमतत्वादौत्तरकालिकः फलान्वयोऽपि सर्वेषामेवेति प्राप्ते

---

दस्य फलभेदव्याप्यत्वनियमात् श्रेयस्साधनत्वस्य चापूर्वमन्तरेणासंभवादपूर्वोत्पत्तिपर्यन्तमेव सकलभावनोपरमात् फलत्वेनाद्रियमाणत्वात् तद्भेदस्यापि फलीभूतत्वमनुनिष्पादितत्वेऽपि नैव विरुध्यते; धात्वर्थभेदस्य तु भावनाभेदसिध्यर्थत्वेन निरूपणम् । यद्यपि कारणव्यापारभेदादेव कार्यभेदस्य दृष्टत्वात् भावनाभेद एव धात्वर्थभेदसिध्यर्थः; तथापि कारणगतवैजात्यस्य कार्यगतवैजात्याधीनसिद्धिकत्वेन यजत्यादिधातूनां स्वरूपभेदेनोपात्तानां भावनाभेदव्यञ्जकत्वमभिप्रेत्य धात्वर्थभेदस्य भावनाभेदसाधकत्वोक्तिः सर्वेषामिति ध्येयम् ॥

**( धात्वर्थाभेदेऽपि गुणाद्भावनाभेदसिद्ध्या क्वाचित्क इत्युक्तमिति निरूपणम् )**

गुणफलाधिकारे वाक्यभेदापादकगुणात् धात्वर्थाभेदेऽपि भावनाभेदस्य वक्ष्यमाणत्वात् धात्वर्थभेदस्य न सार्वत्रिकभावनाभेदसिध्यर्थत्वमित्यभिप्रेत्य क्वाचित्क इत्युक्तम् ॥

**( सर्वाध्यायोपोद्घातभावार्थाधिकरणोपोद्घातत्वेन प्रतिपदाधिकरणप्रवृत्तिरिति निरूपणम् )**

भावनाभेदविचारस्य द्वितीयपादमारभ्य वक्ष्यमाणत्वात् तस्येहाविचार्यत्वे कथमग्रिमविचारस्य सङ्गतिरित्याशङ्कां सर्वाध्यायोपोद्घातरूपभावार्थाधिकरणस्य वर्तिष्यमाणस्योपोद्घातसङ्गत्या परिहरति—**फलीभूतेति** ॥ अपूर्वस्य साक्षात् भावनाजन्यत्वाभावात् द्वारीभूतधात्वर्थादिजन्यत्वप्रतीतेः फलसाधनस्यैव अवान्तरव्यापाररूपापूर्वजनकत्वात् फलसाधनभेदेऽपूर्वभेदस्तदेकत्वे तदेकत्वमित्येवंफलकं करिष्यमाणधात्वर्थमात्रवृत्तिफलसाधनत्वविचारोपोद्घाततया इदं प्रतिपदाधिकरणमारभ्यत इत्यर्थः ॥

**( व्रीहीन् प्रोक्षतीत्यादीनामुक्ताधिकरणविषयत्वेन सामादिवाक्यविषयत्वोपपादनम् )**

"व्रीहीनवहन्ति" "व्रीहीन् प्रोक्षती"त्यादौ द्वितीययैव व्रीह्यादेः कर्मत्वसिद्ध्या परिशेषेण धात्वर्थस्यैव करणत्वम् । तथा "दध्ना जुहोती"त्यादौ होमस्य प्राप्तत्वेनाविधेयतया करणत्वाभावे कर्मत्वेनैवान्वयात् उपपदार्थस्यैव करणत्वमिति सन्देहाभावात् नात्रोदाहरणत्वमित्यभिप्रेत्य सोमादिवाक्यानामेवोदाहरणत्वं सूचयितुं सोमादेरपीत्युक्तम् । आदिपदेन सौर्यादिवाक्यगतचरुपदोपात्तसंग्रहः । अतएवैतदपवादभूते **तानि द्वैधमित्यधिकरणे** धात्वर्थस्यैव करणत्वमिति तेषामुदाहरणत्वमित्यर्थः ॥

**( भावाधिकरणाप्रवृत्त्या मत्वर्थलक्षणानङ्गीकारपक्षेण वा सोमस्यापि भावनान्वयोपपादनम् )**

**औत्तरकालिक इति** ॥ पाश्चिक इत्यर्थः । एतच्च **भावार्थाधिकरणे** धात्वर्थस्यैव करणत्वमित्यर्थस्य साधयिष्यमाणत्वेनासिद्धिमभिप्रेत्य द्रष्टव्यम्; इतरथा तत्करणावरुद्धायां भावनायां प्रथमतः सोमादीनामन्वयासंभवेन सिद्धान्तिसंमतत्वासंभवात् । **अथवा**—मत्वर्थलक्षणानङ्गीकारपक्षेण वा सिद्धान्तिनोऽपि संमतत्वादिति ग्रन्थो योज्यः ॥

**( प्रधानान्वयाभ्यर्हितत्वात् विकल्पेऽपि निरपेक्षसाधनत्वोपपत्तेश्च सर्वेषां फलकरणत्वेनान्वयनिरूपणम् )**

**सर्वेषामेवेति** ॥ सति संभवे प्रधानान्वयस्याभ्यर्हितत्वादेकस्य फलान्वये इतरस्य फलगुणान्वये च वैरूप्यस्य मत्वर्थलक्षणायाश्चापत्तेः सर्वेषां भावनायामेवान्वयमङ्गीकृत्य फलकरणत्वं युक्तम् । यद्यपि विकल्पे निरपेक्षसाधनत्वे सति ऐकार्थ्यस्यैव प्रयोजकत्वस्य द्वादशे वक्ष्यमाणत्वादितरथा दृष्टार्थमात्रत्वस्यैव तत्प्रयोजकत्वोक्तौ एकार्थानां काम्यकर्मणां विकल्पानापत्तेः प्रकृते च समास इव सुप्तिङ्विभक्त्योरपि सामर्थ्यापेक्षित्वेन निरपेक्षकरणत्वप्रतीत्या विकल्प एव प्राप्नोति; तथापि अरुणैकहायन्योरिवान्योन्याकाङ्क्षयैकवाक्योपात्तत्वादेकस्यां भावनायां तृतीयादिबलेन करणानां नैरपेक्ष्यावगमेऽपि परस्परसापेक्षत्वेन तृतीयावगतनैरपेक्ष्यस्य स्ववाक्योपात्तकरणातिरिक्तविषयत्वाभ्युपगमाद्दर्शादिवच्चैकपदोपादानाभावेऽपि एकवाक्योपात्ततया प्रतीतस्य साहित्यस्य उपादेयगतत्वेन विवक्षितत्वात् समुच्चितानां साधनत्वाभावेऽपि साधनानां समुच्चय इत्यभिप्रेत्य सर्वेषामित्युक्तम् ॥

**( तृतीयावगतनिरपेक्षकरणत्वोपपत्त्यर्थमनेकादृष्टकल्पनाप्रसङ्गेन मत्वर्थलक्षणया सर्वेषां साक्षाद्भावनान्वयं विना सिद्धान्तोपक्रमः )**

यद्यपि भावनैक्यं तत्रैव सर्वेषां एकफलद्वारा समुच्चयेन करणत्वेनान्वयश्च; तथापि तत्र परमापूर्वस्य फलस्य चैकत्वेऽपि तत्तत्करणजन्योत्पत्त्यपूर्वाणां भेदावश्यंभावादनेकादृष्टकल्पनां पूर्वपक्षे आपाद्य सिद्धान्तमाह—**सर्वेषामिति** ॥ **नच**—करणानां सापेक्षत्वेन क्रमिकत्वाभावादेकमेवोत्पत्त्यपूर्वं कल्प्यतामिति—**वाच्यम्**; तृतीयादिनाऽवगतस्य अन्योन्यनिरपेक्षकरणत्वस्य किंचित्कार्यनिरूपितत्वाऽवश्यंभावे फले फला-

सर्वेषां करणत्वे अनेकादृष्टकल्पनाप्रसङ्गादेकस्यैव फलनिरूपिता करणता, अन्येषां तु दृष्टविधयैव करणार्थत्वम्। तदत्र धात्वर्थस्यैव करणत्वे सोमादीनां तज्जनकत्वेनैव दृष्टार्थता सोमादीनां करणत्वे च धात्वर्थस्याश्रयविधयैव दृष्टार्थतेति नानेकादृष्टकल्पना॥ इति प्रथमं प्रतिपदाधिकरणम्॥

(२ अधिकरणम्।)

एवं स्थिते विशेषजिज्ञासायां सोमादेरेव फलकरणत्वम्; तस्य सिद्धत्वेन योग्यतारूपलिङ्गात्, तृतीयायाः करणत्वे शक्तत्वेन कारकश्रुतेरेकपदोपात्तत्वरूपपदश्रुत्यपेक्षया बलीयस्त्वाच्च, फलान्वये पदश्रुतेरप्यभावाच्च। अतएव यागादिधात्वर्थः सोमाद्यर्थ एव। नच तदर्थत्वे अदृष्टकल्पना; अग्निहोत्रहोमेन दधिनिष्ठकरणता सम्पादनवद्यागेनादृष्टमन्तरेणैव सोमनिष्ठकरणतासम्पादनेन यागस्य सोमाङ्गत्वोपपत्तेरिति प्राप्ते,—

पदश्रुत्या यागस्यैव फलकरणत्वम्। यद्यपि च फलान्वये न सा; तथापि प्राथमिकभावनाऽन्वये यस्य यत् प्रमाणं तद्गतबलवत्त्वस्य तस्यामवस्थायामकिंचित्करत्वेऽपि पार्ष्ठिकफलान्वये तस्य निर्णायकत्वात्। अतश्च प्राथमिकभावनाऽन्वये विद्यमाना पदश्रुतिः फलान्वये निर्णायिका। न च तस्याः कारकश्रुत्यपेक्षया दौर्बल्यम्; लाक्षणिकत्वेऽपि यागकरणत्वस्य सोमकरणत्वान्वयात् प्राग्भावनायामन्वितत्वेन तदन्वयस्य प्राथम्यात्, अन्यथा तिङन्तपदस्य परिपूर्णत्वाभावेन तदुपस्थापितभावनायां सोमस्याप्यन्वयानुपपत्तेः। परिपूर्णं पदं पदान्तरेणान्वेतीति न्यायात्। न च प्रथमा-

---

पूर्वे वा तदसंभवेनोत्पत्त्यपूर्वनिरूपितत्वावगतेर्दधिपयोयागयोः क्रमिकत्वभावेऽपि तद्भेदस्येवेहापि तद्भेदस्यानिर्वार्यत्वादित्यर्थः। अतोऽगत्या सर्वेषां प्रधानसंबन्धत्यागेन मत्वर्थलक्षणामप्यङ्गीकृत्य सोमादिविशिष्टधात्वर्थस्य **अथवा**— धात्वर्थविशिष्टसोमादेरेव वा पार्ष्ठिकबोधे फलकरणत्वमन्यस्य तदर्थत्वे युक्तमित्याह—**एकस्यैवेति**॥

**(पार्ष्ठिकबोधेनाश्रयसमर्पणेन दृष्टविधयोपयोग इति सिद्धान्तोपसंहारः)**

**आश्रयविधयैवेति**॥ यद्यपि प्राकारणिक आश्रयो न लभ्यते; तथापीह विशिष्टविधित्वात् पार्ष्ठिकबोधे यागस्य सोमं प्रत्याश्रयतया विधानोपपत्तेर्न काचिदपि क्षतिः। एवंच गुणगतकरणतासंपादकतया दृष्टार्थतालाभात् अनिर्णय इति भावः॥

**॥ इति प्रथमं प्रतिपदाधिकरणम्॥**

---

**(कारकश्रुतिबलीयस्त्वेन शब्दगतप्रत्यासत्तिबाधेनापि उपपदार्थस्यैव करणत्वमिति पूर्वपक्षोपपादनम्)**

एवमनिर्णये प्राप्ते भावार्थाधिकरणं प्रवर्तयति—**एवमिति**॥ साध्यस्य यागस्य साध्यान्तरेणाकाङ्क्षाभावे संबन्धानुपपत्तेराकाङ्क्षितं सिद्धमेवान्वेतुं योग्यमिति योग्यतारूपलिङ्गात् सोमादेरेव करणत्वं साधयति—**सोमादेरेवेति**॥ **नच**— शब्दगतप्रत्यासत्त्या कथंचिद्धात्वर्थस्यैव स्वकारकीभूतद्रव्यदेवतासंपादनेन सिद्धतामापाद्य करणत्वेनास्तु संबन्ध इत्यत आह—**तृतीयाया इति**॥ प्राथमिकभावनासंबन्धस्तावत् बलीयस्या कारकश्रुत्या सोमादेरेवापद्यत इति दुर्बलपदश्रुत्यवगतत्वेन यागस्य नैव करणत्वेनान्वयः, पार्ष्ठिकान्वयवेलायान्तु फलपदापेक्षया उभयोरपि पदान्तरोपात्तत्वाविशेषेऽपि लिङ्गबाधे प्रमाणाभाव इत्यर्थः। अतश्च यथैव यागः स्वर्गकामाधिकरणन्यायेन भाव्यत्वात् प्रच्यावितस्तथैव करणत्वादपीति पदश्रुत्येतिकर्तव्यतांशे निपतन् भावनया संबध्यते। पार्ष्ठिकबोधे च सोमार्थत्वं यागस्येत्याह—**अतएवेति**॥

**(यागस्य सोमार्थत्वेऽदृष्टकल्पनानिरासेन पूर्वपक्षोपसंहारः)**

**ननु**—यागेन सोमे दृष्टोपकारासंभवाददृष्टकल्पनापत्तिरित्याशङ्क्य परिहरति—**नचेति**॥ नहि यागस्य सोमसंस्कारकत्वेन सोमार्थत्वम्, किन्तु सोमादेस्सर्वदा सत्त्वेन फलोत्पत्त्यापत्तेर्विधिवैयर्थ्यपरिहारायाऽऽश्रयविधया तदर्थत्वकल्पनात् गुणनिष्ठकरणतानिर्वाहकत्वेन दृष्टार्थत्वोपपत्तिरित्यर्थः॥

**(पदश्रुत्या कल्प्यस्याप्युपजीव्यत्वेनाबाधेन च भयमतो धात्वर्थस्यैव करणत्वमिति सोमादीनां तदङ्गतयैवोपयोगेन साक्षाद्भावनायामन्वय इति सोमापचारे प्रतिनिधिसंपादनरूपप्रयोजनसिद्धिरित्यादिनिरूपणम्)**

नतावद्भावनान्वयनैरपेक्ष्येण सोमादीनां साक्षात् फलान्वयः; कारकाणां परस्परमन्वयासंभवात्, फलस्येवेतरकारकाणामपि लाघवेन भावनान्वयस्योचितत्वाच्च। अतो भावनाद्वारैवान्वये वाच्ये झटित्युपस्थितावच्छेदकीभूतधात्वर्थस्यैवान्वयेन करणाकाङ्क्षोपरमान्न पदान्तरोपात्तसोमादेः करणत्वेनान्वयो युक्त इत्यभिप्रेत्य सिद्धान्तमाह—**पदश्रुत्येति**— **लाक्षणिकत्वेऽपीति**॥ नह्यत्र धात्वर्थभावनयोरितरपदार्थसंसर्गवत् कर्मत्वकरणत्वादिरूपः संसर्गः संसर्गमर्यादया भासते। तथात्वे "सह ब्रूत" इत्यनुशासनवैयर्थ्यापत्तेः। अतः पदार्थविधया शक्त्या निरूढलक्षणया वा भानस्यावश्यकत्वा-

वगतस्यापि कल्प्यस्य औत्तरकालिकेन बाधः उपजीव्यत्वादिति यागः फलसाधनं सोमो यागार्थ इति सिद्धम् । प्रयोजनं सोमापचारे न प्रतिनिध्युपादानं पूर्वपक्षे, सिद्धान्ते तु तत् ॥

**ननु—**इदं धात्वर्थातिरिक्तभावनासत्त्वे भवेत्, न तु तस्यां प्रमाणमस्ति; धातूनामेव विक्लृत्यादिफल इव तत्प्रयोजकव्यापारमात्रे फूत्कारादौ यत्नादौ च शक्तत्वात्, अतो यत्नादिरूपभावनाया अपि धातुवाच्यत्वाद्धात्वर्थ एव क्रियारूपे सकलकारकान्वयो न तु यागस्य पदश्रुत्या फलकरणत्वमिति—**चेत्,**

पचति, पाकं करोति पाके यतत इति पाकात् पृथक् विक्रियमाणयत्नादेः पच्यर्थत्वानुपपत्तेः । न च घञन्तपाकशब्दस्य फल एव शक्तत्वात् पृथक् विवरणोपपत्तिः; व्यापारविगमेऽपि फलदशायां पाको विद्यते इति प्रयोगापत्तेस्तस्यापि व्यापारवाचित्वावश्यम्भावात् । अतो भासमानो यत्नादिस्तिङ्वाच्य एव । अतएव धातुवाच्यमपि साक्षात् फलजनकफूत्कारादिव्यापारवृत्तिपाकत्वादिकमेव । तच्च जातिरखण्डोपाधिर्वैत्यन्यदेतत् ।

तज्जनकयत्नादिकंतु आख्यातवाच्यमेव । तत्र शक्ततावच्छेदकंतु करोतिविक्रीयमाणतिङ्त्वादिकं, लाघवात् तिङ्त्वादिकमेव वा, न तु स्थानिलत्वम्, तदुपस्थापकादेशविशेषाणां पदज्ञाननिष्ठकारणतावच्छेदककोटौ प्रवेशे गुरुभूतकारणतावच्छेदकघटितानन्तकार्यकारणभावकल्पनापत्तेः । अप्रवेशे

---

ल्लाक्षणिकत्वेऽपीत्यर्थः । **उपजीव्यत्वादिति** ॥ परिपूर्णत्वसंपादनेन सोमकरणत्वान्वये उपजीव्यत्वम् । अतश्च यथैवाग्नेयादिवाक्येऽष्टाकपालादीनां करणत्वस्य लाक्षणिकत्वेऽपि यागकल्पनद्वारोपजीव्यत्वेन पूर्वभावित्वात् तदुत्तरभाविश्रौतमपि करणत्वं परम्परया स्वीक्रियते, एवमिहापि सोमादिकरणत्वमपि यागद्वारा भावनायामङ्गीकर्तुं युक्तमिति धात्वर्थस्यैव करणत्वेन फलद्वारा भावनायामन्वयादसिद्धस्यापि सोमादिना सिद्धतामापादितस्य फलपूर्वकाले योग्यताया अपि संभवात् तस्यैव फलकरणत्वात् अपूर्वं प्रति करणत्वेन फलसाधनस्यैकत्वाद्भावनापूर्वयोरेकत्वमित्यर्थः । एवंचेह धात्वर्थस्य फलकरणत्वेन श्रेयस्साधनत्वरूपधर्मत्वस्य प्रतिपादनादग्रे तद्द्वैतकत्वानेकत्वविचारस्य सर्वाऽध्याये करिष्यमाणस्यैदमुपोद्घाताधिकरणमिति सिद्धम् । पूर्वपक्षे सामादेः फलार्थत्वेऽपि सोमेनैव यागनिष्पत्तेः सिद्धान्तेऽपि समतया निष्प्रयोजनतामधिकरणविचारस्य निरसितुमाह—**प्रयोजनमिति** ॥ सर्वेषां फलसंबन्धे काम्ये संकल्पोत्तरं नित्ये ततः पूर्वमपि विहितद्रव्यक्रिययोरसंभवेऽदृष्टार्थत्वान्न प्रतिनिध्युपादानम् । प्रयाजादिक्रियावत् प्रतिनिधित्वाभावात्, प्रारब्धप्रयोगापरिसमापननिमित्तदोषपरिहारार्थंतु यत्किञ्चिदनियतद्रव्यक्रियोपादानेन समापनम् । नचैतावता तस्य प्रतिनिधित्वम्; सदृशस्यैव प्रतिनिधित्वेनासदृशग्रहणे प्रमाणाभावात् । एवं भावार्थाधिकरणपूर्वपक्षे सोमादेर्न प्रतिनिधिः । प्रक्रान्तसमापनंतु येनकेनचिद्द्रव्येण कर्तव्यम् । सिद्धान्ते तु प्रतिनिधिना तत्समापनमिति प्रयोजनमित्यर्थः ॥

### ( लत्वशक्ततावच्छेदकत्वनिरासेन करोतिविक्रियमाणं केवलं वा तिङ्त्वादिकमेव भावनाशक्ततावच्छेदकमिति निरूपणम् )

**अतएव धातुवाच्यमपीति** ॥ विवरणे पच्यर्थस्य पाकत्वेन रूपेण प्रतीयमानत्वावेदेत्यर्थः । **करोतिविक्रियमाणेति** । जानातीत्यादौ यत्नाप्रतीतेः पचतीत्यादौ च तत्प्रतीतेरन्वयव्यतिरेकाभ्यां करोतिविक्रियमाणतिङ्त्वादिकं शक्ततावच्छेदकं । **अथवा**—तिङ्त्वादिकमेव तत्, जनातीत्यादौ तद्बाधे लक्षणाश्रयणमित्यर्थः । **यत्तु** लत्वरूपमेवाख्यातत्वं स्वीकृत्य लत्वमेव शक्ततावच्छेदकमिति भाट्टालंकारकारादिभिरुक्तम्, तद्दूषयति—**नन्विति,** विस्तरेण चैतदर्थवादाधिकरणे मयोपपादितम् तत्रैव द्रष्टव्यम् ॥

### ( अनुकूलव्यापारत्वं शक्यतावच्छेदकं न तु यत्नत्वमिति पार्थसारथिमतनिरूपणम् )

तत्रच **पचति** पाकं भावयतीत्यनुकूलव्यापारवाचिणिजन्तभूधातुना विवरणात् संग्राहकलाघवाच्चानुकूलव्यापार एव तिङर्थः, नतु फलमात्रम् । नच करोतेरपि यत्नार्थकत्वम्, येन तद्विक्रियमाणत्वेन तिङोऽपि तद्वाच्यत्वमुच्येत; तस्यापि भावयतिपर्यायत्वेन यत्नार्थकत्वासिद्धेः । घटो भवतीत्यादौ यथा कर्तृत्वमापन्नस्य घटस्य तमपरो भावयतीत्यादौ भावयतिकर्मत्वं तथैवमपरः करोतीत्यादावपि तस्य कर्मत्वमपीति भवत्यर्थकर्तृकर्मत्वाविशेषाद्भावयतिपर्यायत्वोपपत्तेः । **यत्तु** पचतीत्यस्य पाके यतते इति यत्नार्थकपदेन विवरणं, तदपि व्यापारसामान्यार्थकस्य विशेषे लक्षणौचित्यात् लाक्षणिकतया नेयम् । नतु यत्नादिविशेषार्थकस्य रथो गच्छतीत्यादौ रथादिनिष्ठविशेषलक्षकत्वाश्रयणं युक्तम् । अतः फलोद्देश्यको धात्वर्थोद्देश्यको वा व्यापारसमूह एव तिङर्थः, तस्य तत्त्वेन रूपेणाख्याताद्बोधेऽपि विशेषरूपेण अग्न्यन्वाधानादिब्राह्मणतर्पणान्तवाक्यैः समर्पणमित्यभिप्रेत्य पार्थसारथिमतमुपपादयति—**शक्यतावच्छेदकंत्विति** ॥

### ( अननुगमेनेतिकर्तव्यताकाङ्क्षानुदयापत्त्या च सामान्येन विशेषेण वाऽनुकूलव्यापारे शक्तिकल्पनायोगेन भाष्यानुसारेण यत्नत्वशक्यतावच्छकत्वपरन्यायसुधामताश्रयणम् )

अन्योत्पादकव्यापारे शक्तावपि तत्तदन्यभेदेन तत्तदुत्पाद-

यथाकथंचिदुपस्थितलकारादपि भावनोपस्थित्यापत्तेः ॥ शक्यतावच्छेदकंतु फलोद्देश्यकधात्वर्थातिरिक्तव्यापारत्वम्। फलंच क्वचिद्धात्वर्थः क्वचिच्च स्वर्गादीति यथाविवक्षम्।

एवंच रथो गच्छतीत्यादौ न लक्षणा, गमनानुकूलव्यापारस्यैवाख्यातार्थत्वात् इति पार्थसारथिः। **वस्तुतस्तु**—यत्नत्वमेव शक्यतावच्छेदकम्; लाघवात्, तदबाधे तु सर्व-

क्रमेदेन च व्यापारत्वानां भेदादेकशक्यतावच्छेदकाभावेन सर्वानुगतैकशक्तिकल्पनानुपपत्तेः तत्तद्विशेषविषयतत्तच्छक्तिकल्पनेच तत्तदितिकर्तव्यताविधीनां वैयर्थ्यापत्तेः तेषां तात्पर्यग्राहकत्वाङ्गीकारे चानेकशक्तिकल्पनागौरवापत्तेः तदपेक्षया रागजन्यतावच्छेदकतया सिद्धयत्नत्वं शक्यतावच्छेदमङ्गीकृत्य यत्न एव शक्तिस्वीकरणं यत्नार्थककरोतिना विवरणाद्युक्तमाश्रयितुम्। नहि करोतिर्व्यापारसामान्यार्थकः; प्रयत्नाभावे वातरोगादिना स्पन्दमाने चैत्रे स्पन्दानुकूलविजातीयसंयोगरूपव्यापारवत्यपि नाहं स्पन्दं करोमीत्यपि प्रयोगदर्शनादनुकूलव्यापारार्थकत्वावगतेः, व्यापारजन्यत्वाविशेषेऽपि यत्नजन्यत्वाजन्यत्वाभ्यामेव पटाङ्कुरयोः कृताकृतव्यवहारदर्शनाच्च। यद्यपि रथो गमनं करोति स्थाली पाकं करोत्यादावचेतनव्यापारेऽपि प्रयोगो दृश्यते; तथापि वोढ्रश्वादिगतयत्नस्य रथादावारोपणात् **अथवा**—लाघवेन यत्ने शक्तौ गृहीतायामनुकूलव्यापारे लक्षणया तदुपपत्तिर्नायुक्ता। **अत एव** अत्र भाष्यकृता तथा यतेत, यथाकथंचित् भवतीति तेनैते भावशब्दा इति यत्नेन विवरणं दर्शितम्। तथा गुणकामाधिकरणेऽपि "जुहुयादिति शब्दस्यैतत्सामर्थ्यम् यद्धोमविशिष्टं प्रयत्नमाहेति"। **अतएव**—विधेश्चेतनप्रवर्तकत्वनियमोऽपि संगच्छत इत्यभिप्रेत्य न्यायसुधाकृन्मतमेव स्वाभिमतत्वेन दर्शयति—**वस्तुतस्त्विति। आश्रयत्वादाविति**॥ आदिपदेन घटो नश्यतीत्यादौ प्रतियोगित्वादौ लक्षणायाः संग्रहः॥

## (भाट्टालङ्कारकृतां यत्नत्वशक्यतावच्छेदकत्वनिरासेन पार्थसारथिमतोज्जीवनम्)

**यत्तु** भाट्टालङ्कारकारादीनां पार्थसारथिमतसमर्थनाय यत्नवाचित्वखण्डनम्। **तथाहि**—व्यापारत्वस्याप्यखण्डोपाधित्वेन जातितुल्यत्वात् शक्यतावच्छेदकत्वे बाधकाभावः। नच तस्मिन् मानाभावः; श्रुत एव मधुररसः स्वाश्रये जनाभिलापगोचरतां नयतीति व्यवहारानुरोधेन तत्समवायतद्भोजनादेरवश्यवक्तव्यव्यापारत्वस्य तज्जन्यत्वाद्यात्मत्वासंभवेनाखण्डोपाधेरेवौचित्यापातत्वात्। अस्तुवा गुरुभूतस्यैव तस्य शक्यतावच्छेदकत्वम्। तथात्वे पचतीत्यस्मात् पाकयत्नस्येव 'पतति फलं वृक्षादि'त्यादौ गुरुत्वस्य 'स्रवति जलं गिरेरि'त्यादौ वेगस्य 'कम्पन्ते तरोः पत्राणी'त्यादौ वायुसंयोगस्यापि संशयनिवृत्त्या निश्चयविषयत्वावश्यकत्वात् गुरुत्वादौ वर्तमानत्वाद्यन्वयस्य फलवृत्तित्वादेः प्रत्ययस्यान्यतो दुरुपपादत्वाद्यत्नत्ववत् गुरुत्वादीनामपि जातिरूपत्वेन शक्यतावच्छेदकत्वसंभवेन तेष्वपि शक्त्यापत्तौ यत्ने एतन्निर्धारणासं-

भवात्। अतः परस्परानपेक्षानेकशक्यतावच्छेदकाभ्युपगमेनानेकवाच्यवाचकभावाभ्युपगमापेक्षया गुरुभूतैकशक्यतावच्छेदकाभ्युपगमेनैकस्यैव वाच्यवाचकभावः स्वीकर्तुं युक्तः। अनेकपदार्थघटितोपाध्यात्मनो हि व्यापारस्यावच्छेदकत्वे तदाश्रयत्वमनेकेषां कल्प्यमिति गौरवं वाच्यम्। आश्रयावच्छेदकत्वंतु सर्वेषां पर्याप्तमेकमेव स्यात्। यत्नत्वाद्यनेकशक्यतावच्छेदकाभ्युपगमेऽप्याश्रयत्वमप्यनेकत्र कल्प्यम्। संबन्धानेकत्वं चेत्यपि गौरवम्। व्यापारसामान्यस्य हि भावनात्वे सामान्यस्य विशेषापेक्षितत्वेन कथमित्याकाङ्क्षयेतिकर्तव्यतान्वयो युज्यते। यागविषयविशेषयत्नस्य भावनात्वे विशेषस्य विशेषान्तरानपेक्षणात् तदन्वयोऽपि दुरुपपाद एव। एवं 'रथो गच्छती'त्यादौ रथो गमनं करोतीत्यादिप्रतीत्यभावेन गमनानुकूलत्वेन भावनाया अप्रतीतेः रथाश्रितगमनव्यापार एवाख्यातेन विनैव लक्षणया उच्यत इति न लाक्षणिकत्वमापद्यते। नच करोतेरपि यत्नार्थकत्वम्। चैत्रः पचतीत्यस्य पाकं करोतीति विवरणस्येव स्थाली बिभर्तीत्यस्यापि धारणं करोतीति विवरणस्य दर्शनेनोभयसाधारणतया व्यापारसामान्यार्थकस्यैव युक्तत्वात्। यातु कृताकृतव्यवस्था, सा त्वयत्नजातेऽपि कृतव्यवहारस्य यत्नाभाववति च कर्तृव्यवहारस्याग्निना पाकः कृतोऽप्यग्निः पाककर्तेति व्यवहारदर्शनादयुक्ता। **यस्तु** यत्नसाध्यत्वासाध्यत्वाभ्यां क्वचित् कृताकृतव्यपदेशः, स यत्नसाध्ययोरेव द्वयोर्मध्ये अल्पयत्नसाध्येऽकृतव्यपदेशवत् व्यापारसाध्यत्वाविशेषेऽपि क्वचित् यत्नन्यूनत्वेनैव स्वल्पव्यापारसाध्यत्वादकृतव्यवहारोपपत्तेर्नासंभवः। यथैव यत्नाश्रयत्वे तुल्येऽपि चैत्राश्वयोः स्वातन्त्र्यपारतन्त्र्याभ्यां कर्तृकरणव्यपदेशव्यवस्था भवति चैत्रो अश्वेन गच्छति, नतु कदाचिदश्वः चैत्रेण गच्छतीति, तथा करोतेर्व्यापाराभिधायित्वेऽपि सर्वेकारकाणां व्यापाराश्रयत्वे तुल्येऽपि ताभ्यामेव संभवति सा व्यवस्था। यथाच सत्यपि तदनुकूलयत्ने स्वातन्त्र्याभावेन कर्तृत्वनिषेधव्यवहारः। यथा परवचो वदति दूते नायमस्य वक्ता, पर एवास्य वक्तेति, तथा सत्यपि तदनुकूलव्यापाराश्रयत्वे तदभावविवक्षयैव संभवति कर्तृत्वनिषेधव्यवहारः। यथा वातादि स्पन्देन भग्ने केनेदंभग्नमनेनैव नान्येनेति। अतो न व्यापारस्याख्यातवाच्यत्वे किंचित् बाधकम्, प्रत्युत पाकानुकूलयत्नवत्त्वस्य चैत्रेश्वरयोस्तुल्यत्वात् चैत्रः पचतीतिवदीश्वरः पचतीत्यपि प्रयोगापत्तिः यत्नस्य वाच्यत्वे बाधकम्। अथेच्छाजन्यतावच्छेदको यत्नत्वव्याप्यो जातिविशेष एव आख्यातशक्यतावच्छेदकः॥ **यद्वा**—धात्वर्थपाकादेराख्यातार्थफले चेष्टादिद्वारमेव जनकत्वम्, अ-

**थवा**—आख्यातार्थयत्नस्य प्रथमान्तपदार्थे चैत्रादाववच्छेदकत्वं संसर्ग इति स्वीकृत्येश्वरः पचतीति प्रयोगवारणम्। नहीश्वरो जन्यकृतिमान्। नापि तत्कृतेः चेष्टादिद्वारं जनकत्वं, नापि कृतिजन्मनि चैत्रस्येवेश्वरस्यावच्छेदकत्वमित्युच्येत, तथासति ईश्वरकर्तृकक्रियावाचिनां वेदपुराणेतिहासगतानामाख्यातपदानामनुपपत्तिः। तत्रागत्या व्युत्पत्तित्याग इति चेन्न, **शास्त्रस्थावा तन्निमित्तत्वादि**त्यत्रोक्तेन त्रिवृच्चर्वश्ववालादिन्यायेन तादृशपदानुसारिण्या एव व्युत्पत्तेरङ्गीकार्यत्वात्। **किंच**—यावन्तः फलजनका यत्नास्ते प्रत्येकमाख्यातवाच्याः, किंवा यावतो फलसमुदायस्य फलोपधाननियमस्तावत्समुदायो वाच्यः। **आद्ये** तादृशयत्नवन्तं कंचित्परंच तादृशसमुदायवन्तमुद्दिश्य नेदृशवचःप्रयोगः स्यात्, नायमपाक्षीत्, किन्तु पर एवेति। पाकजनकयत्नस्य द्वयोरपि सत्त्वाविशेषात्। **द्वितीये** यत्नत्वं न शक्यतावच्छेदकम्, तस्य प्रत्येकवृत्तित्वेन समुदायावृत्तित्वात्, अस्मन्मतेतु व्यापारत्वस्य शक्यतावच्छेदकत्वेऽपि फलोपहितत्वसंबन्धेन भाव्यनिष्ठस्यैव तस्याख्यातेन प्रत्याय्यत्वात् फलोपहितत्वस्य च व्यापारनिचयवृत्तित्वात् व्यापारस्य चाद्यपरिस्पन्दप्रभृत्याफललाभाद्वितता भावनेति व्यवहारात् कोऽसौ व्यापार इत्यपेक्षायामन्वाधानादिब्राह्मणतर्पणान्तपदार्थनिचयस्यायमसौ व्यापार इत्यन्वयकथनाच्च समुदायेऽपि व्यवहारोपपत्तेस्संभवति व्यापारनिचयवत्याख्यातप्रयोगः। **यच्चु**—विधेश्चेतनप्रवर्तकत्वनियमानुपपत्तिदूषणं, तत्तदनुष्ठेयधात्वर्थानुरक्तव्यापाराभिधानेन तन्नियमापत्तेरकिंचित्करम्। यदपि भाष्यादौ यजेतेत्यस्य यतेतेति विवरणप्रदर्शनं, तदपि आख्यातार्थे व्यापारे यत्नस्याप्यनुप्रवेशसत्त्वाद्व्यापारान्तरस्या नियतत्वाद्यत्नस्यैव नियतत्वात् तत्परमेवेति न विरुद्धम्—इति॥

**( भाट्टालङ्कारकृदुक्तसकलदूषणोद्धारपूर्वकं व्यापारसामान्यवाचित्वपक्षोपपादितसर्वोपपत्तिनिरासपूर्वकं च यत्नत्वमेव शक्यतावच्छेदकमिति निरूपणम् )**

**तदप्येतेनापास्तम्। तथाहि**—यत्तावद्व्यापारत्वस्य अखण्डोपाधित्वे श्रुत एवेत्यादिव्यवहारस्य मानत्वमुक्तं, तन्न; प्रायेणानुकूलयत्नासंभवेन व्यापारे लक्षणाङ्गीकारेऽपि मधुररसविषयकानुभवस्यैव मधुररसविषयस्य व्यापारत्वाङ्गीकारात् तस्य च विषयजन्यत्वेनैव व्यापारव्यवहारोपपत्तौ अखण्डत्वस्वीकारे मानाभावात्। नह्यननुभूतो मधुररसः श्रुतोऽपि स्वाश्रये अभिलाषगोचरतापादकः संभवति। अतो गुरुभूतता शक्यतावच्छेदके स्थितैव। यदपि गुरुत्वद्रवत्वादीनामपि जातिरूपत्वेन यत्नस्यैव शक्यतावच्छेदकत्वापादनम्, तदपि तेभ्यस्तेषामप्रतीत्यैवायुक्तम्। **अतएव**—गुरुत्वद्रवत्वादेः द्रवति जलमित्यादिव्यवहारादसमवायिकारणत्वेनोपस्थितस्यापि पदान्तरेणैव समर्पणम्, नत्वाख्यातपदात्। नहि पाकं करोतीति विवरणमिव गुरुत्वादिनाख्यातविवरणं दृश्यते। अतस्तत्रापि मुख्यार्थबाधे आख्यातस्याश्रयत्वे लक्षणैवेति नाननुभूते शक्तिकल्पनापत्तिः। **एतेन**—यत्नत्वादेरनेकस्य शक्यतावच्छेदकत्वाभ्युपगमेन आश्रयित्वानेकत्वसंबन्धकल्पनकृतगौरवापादनमपि—**निरस्तम्**; यदपि भावनाकथंभावाकाङ्क्षयेतिकर्तव्यतान्वयानुपपत्त्यापादनं, तदपि न; भावनायाः स्वजन्यकरणेन फले जन्यमाने अनुग्राहकाकाङ्क्षाया एव कथंभावाकाङ्क्षारूपत्वेन फलवाचित्वपक्षे तदाकाङ्क्षया तदन्वये वाधकाभावात्। यदपि 'रथो गच्छती'त्यादौ अचेतनप्रयोगे भावनाऽभावेऽपि रथाद्याश्रितगमनव्यापारमादाय विनैव लक्षणया बोधोपपादनम्, तदपि तादृशव्यापारस्य धातुनैव प्रतीतेस्तदतिरिक्तव्यापारस्याख्यातार्थत्वाभावे व्यापारसामान्यस्य आख्यातार्थत्वोक्त्यसंभवात् लक्षणाया एवाश्रयणापत्तेर्मूले न्यायप्रकाश एव एतादृशविषये धात्वर्थातिरिक्तभावनानिरूपणेन तद्विरोधाच्चायुक्तम्। यदपि स्थाली बिभर्तीत्यस्य धारणं करोतीति करोतिना विवरणानुरोधात् करोतेरपि व्यापारसामान्यार्थकत्वमुक्तम्, तदपिन; स्वयमेवाचेतनप्रयोगे रथो गमनं करोतीति विवरणे सर्वानुभवविषयत्वाभावस्य पूर्वमुपपादितत्वेनेहापि स्थाली धारणं करोतीति व्यवहारस्योपपादनानुपपत्तेः, सत्त्वे वोभयत्रापि तस्य लाक्षणिकत्वोपपत्तेश्च। इतरथा गङ्गापदस्यापि गङ्गायां घोषः गङ्गायां मीनः इत्युभयसाधारणतया गङ्गासमीपदेश एव शक्त्यापत्तेः। **एतेन**—अग्निना पाकः कृतोऽग्निः पाककर्तेत्यादयः प्रयोगा अप्यसंभवदूषिताः कथंचिल्लक्षणया—**व्याख्येयाः**। यदपि यत्नसाध्ययोर्मध्ये अल्पयत्नसाध्ये अकृतत्वव्यपदेशन्यायेन व्यापारसाध्यत्वाविशेषेऽपि यत्नन्यूनत्वेनैव स्वल्पव्यापारसाध्यत्वादकृतत्वव्यवहारोपपादनं, तदल्पयत्नसाध्ये अकृतत्वव्यवहारस्य क्वाप्यदृष्टेः कृतिसामान्याभाव एवाङ्कुरो मया न कृत इति व्यवहारस्य दर्शनादल्पत्वादेस्तत्प्रयोजकत्वानुपपत्तेरयुक्तम्। यदपि वातादिना स्पन्दमाने स्पन्दानुकूलव्यापारवत्यपि कर्तृत्वनिषेधस्य स्वातन्त्र्याभावविवक्षयोपपादनम्, तदपि किं त्वया स्पन्दः क्रियत इति प्रश्नस्योत्तरत्वेन स्वप्रयत्नाभावविवक्षया प्रवृत्ते नाहं स्पन्दं करोमीति वाक्ये स्वप्रयत्नाभावविषयत्वावश्यंभावेन स्वातन्त्र्याभावविवक्षया तदनुपपादनान्न युक्तम्। परवचो वदति दूते यत्नसत्त्वेऽपि नायमस्य वक्ता, किन्तु पर एवेति व्यवहारानुरोधेन वचनानुकूलप्रयोजकपरवृत्तियत्नाश्रयत्वाभावेनैव तत्कृतित्वनिषेधस्योपपत्तौ स्वातन्त्र्याभावविवक्षायां प्रयोजनाभावाच्च। यदपीश्वरः पचतीति प्रयोगापत्तिवारणायावच्छेदकत्वसंबन्धाङ्गीकारे ईश्वरकर्तृकक्रियावाचिपदानां वेदादिगतानां गौणत्वापादनम्, तदपि अशरीरिणः ईश्वरस्य तत्तत्क्रियाकर्तृकत्वमादाय पठति वक्तीति प्रयोगस्य क्वाप्यसंभवादयुक्तम्। यस्तु मीनादिशरीरधारणेन मीन उवाचेत्यादिप्रयोगस्तत्रतु मीनशरीरे वेदं पठतीत्यादिप्रतीतिबलात् त-

त्राश्रयत्वे लक्षणा। यत्नस्यैव चाख्यातोपात्तस्य नित्यं कर्मसाकाङ्क्षत्वं, करोतिपर्यायत्वादेककर्मकत्वं, फलभवनानुकूलत्वाच्चाऽऽर्थभावनात्वं द्रष्टव्यम्।

इयं चाख्यातोपात्ता भावनैव मुख्यविशेष्या; तद्व्यतिरेके-

---

दीयकृतौ तत्तच्छरीरावच्छेदकत्वकल्पनयाप्युपपन्न एव। अस्तुवाऽशरीरेश्वरकर्तृत्वमादाय क्वापि प्रयोगस्तथापि तस्य गौणत्वेऽपि न क्षतिः। इतरथा "यजमानः प्रस्तर" इति शास्त्रस्य प्रयोगाविरोधेनैव यजमानपदस्यापि गौणमुख्यसाधारणैकशक्तिकल्पनापत्तेः भवन्मतेऽपि ईश्वरकर्तृकक्रियावाचकपदानां अनुकूलव्यापाराश्रयत्वेनोपपादने तादृशव्यापाराश्रयत्वस्य विभावात्मनि सदा सत्त्वेनेश्वरः पचतीति प्रयोगापत्तिरनिवार्यैव। अतः साधारणकर्तृतया तादृशप्रयोगे विवक्षासत्त्वे इष्टापत्तेस्तदभावे ईश्वरकृतेरेवानङ्गीकारादिति शब्दान्तराधिकरणगतकौस्तुभोक्तरीत्या तत्कृतेरभावादेव तदनायत्युक्तावपि न किंचिद्बाधकम्। यदपि किंचेत्याद्याख्यातप्रयोगइत्यन्तमुक्तं, तन्न; पाकानुकूलफलोद्देश्यकयत्नानां प्रत्येकमेव वाच्यत्वाभ्युपगमे बाधकाभावात्। अत एव बहूनां पाककर्तृत्वे सति कस्यचिद्यत्नस्य फलोपहितत्वाभावेऽप्ययमपि चैत्रः पचतीति प्रयोग उपपद्यते। अत एव कृतिकूटान्तर्गतयत्किंचित्कृतिमादायापि वर्तमानत्वान्वयोपपादनम् ताम्त्रिकाणाम्। द्वयोर्यत्नसत्त्वाविशेषेऽपि नायमपाक्षीदिति प्रयोगः फलोपधानकत्वाभावाभिप्रायेणापि उपपद्यत एव। भवतामपि व्यापारसमुदायैकदेशवति पचतीति प्रयोगानापत्तेर्दुर्निवारत्वात्॥ **किंच** व्यापारत्वमखण्डो धर्मः यदि समुदायवृत्तीष्यते, तदा यथाशक्ति प्रयोगे एकाङ्गवैकल्ये समुदायाभावे तद्वृत्तिव्यापारत्वेन रूपेणाख्याताद्बोधाभावे कथं विध्यर्थानुष्ठानमुपपद्यते? अतः प्रत्येकवृत्त्येव व्यापारत्वमभ्युपेत्य तेन तेन रूपेण तावतामेव संभवतां व्यापाराणामाख्यातवाच्यत्वं च प्रकल्प्यैकतरव्यापारमादायैव पचति यजत इति प्रयोगोपपादनेऽपि सत्रे साम्युत्थानेनायमयष्टेत्यादिप्रयोगे एवमेव निर्वाहस्यावश्यकत्वम्, तद्वन्ममापीति प्रत्युत व्यापारत्वानामनेकेषां शक्यतावच्छेदकत्वात् गौरवमनेकशक्तिकल्पनमप्यधिकमिति न व्यापारसामान्ये शक्तिकल्पनं भाष्यादिग्रन्थानामसामंजस्यापत्तेर्युक्तम्। अतो लाघवात् द्वारान्तरापेक्षया नियतत्वाद्यत्न एव शक्तिः, तद्बाधे लक्षणैवेत्येतत्सर्वं **सर्वत्रेति** पदेन पूज्यपादैस्सूचितम्। **अत एवोक्तं—तार्किकाचार्यैः**—"कृताकृतविभागेन कर्तृरूपव्यवस्थया। यत्न एव कृतिः पूर्वापरस्मिन् सर्वभावना" इति॥

## (प्रत्ययैकरूप्येण सर्वत्र शक्तिकल्पनमेव युक्तमिति व्यापारसामान्यार्थत्वमिति प्रकाशकारमततत्खण्डने)

यदपि प्रकाशकारैः—"आत्मकर्तृकमेवाह व्यापारं योऽपि भावनाम्। कर्त्रन्तरेऽप्यनाख्यातं धीसामान्योपचारता" इति मण्डनोक्त्याश्रयेण करी गच्छति रथो गच्छतीति प्रत्ययावैलक्षण्याद्यत्नस्य आख्यातार्थत्वे रथो गच्छतीत्यत्र न लक्षणासंभव इत्युक्तम्, तदपि "यजमानः चैत्रः" "यजमानः प्रस्तर" इति प्रत्ययावैलक्षण्यात् लक्षणानापत्तेः प्रत्ययावैलक्षण्यस्याप्रयोजकत्वादयुक्तमिति दिक्॥

## (भावनायास्सकर्मकत्वैककर्मकत्वनियमोपपादनम्)

भावनायां धात्वर्थकरणत्वस्य पूर्वमुक्तस्य भाव्यद्वारकत्वात् प्रथमं भाव्याकाङ्क्षोत्थापनेन भाव्यान्वयमुपपादयितुं निरूपिताया भावनायाः सकर्मकत्वमुपपादयति—**यत्नस्यैव चेति**। विधेः प्रवर्तकत्वबोधकताशक्तिबाधापत्तेः चेतनविषयप्रवर्तकत्वस्यापुरुषार्थभाव्यकप्रवृत्त्याऽनुपपत्तेर्यागादेरपुरुषार्थत्वेन भाव्यत्वायोगादन्यस्यैव कस्यचित् भाव्यत्वेनापेक्षितत्वात् नित्यं सकर्मकत्वम्। एवं चकारं विना घटं पटं करोतीत्यप्रयोगात् करोतेरिव एककर्मत्वं चेत्यर्थः। अत एव सकर्मकाकर्मकव्यवहारोऽपि धातुगत एव, नतु भावनागतः। अत एव धातोरकर्मकत्वेऽपि 'स्वास्थ्यकामः शयीते'त्यादौ स्वास्थ्यादीनां भावनायामेव भाव्यत्वेनान्वय इति द्रष्टव्यम्॥

## (फलभावनानुकूलत्वेन तस्या आर्थभावनात्वनिरूपणम्)

**आर्थभावनात्वमिति**—आसमन्तादीप्सितत्वेन अर्थ्यते प्रार्थ्यते इत्यार्थः स्वर्गादि, तद्भवनानुकूलव्यापारत्वादार्थभावनात्वम्। **अथवा—अर्थ्यते** फलं प्रार्थ्यते येन स पुरुषो, आर्थस्तद्गतत्वात्तदित्यर्थः॥

## (धात्वर्थस्य फलभावनाकरणत्वसिद्ध्यर्थं प्रत्ययानां प्रकृत्यर्थान्वितत्वेति व्युत्पत्त्यसङ्कोचार्थं चाख्यातोपात्तभावनामुख्यविशेष्यत्वोपपादनम्)

वैयाकरणमतवत् धात्वर्थस्यैव विशेष्यत्वे फलभावनाकरणत्वं धात्वर्थस्योक्तं न सिध्यति इत्यतस्तस्य धात्वर्थं प्रति विशेष्यत्वं साधयितुं वाक्योपात्तानामर्थानां केषांचित्तत्तत्प्रकारतयान्वयप्रदर्शनेन मुख्यविशेष्यत्वं दर्शयति—**इयंचेति। अपर्यवसानादिति**॥ काष्ठैः स्थाल्यामोदनं पचतीति वाक्यस्य काष्ठैः स्थाल्यां पाकेनोदनं पचतीति विवरणे करोत्यर्थेन सह अन्वयं विना इतरपदानां निराकाङ्क्षत्वाभावात् तत्तत्पदोपस्थापितानामर्थानामपर्यवसानम्। यद्यपि भावनाया अपि तत्तदर्थान्वयं विनाऽपर्यवसानं तुल्यम्; तथापि प्रत्ययेन प्रकृत्यर्थान्विततयैव स्वार्थप्रतिपादनात् तत्र धात्वर्थं प्रति

णेतरपदार्थान्वयापर्यवसानात् । तस्यामेव चाख्यातोपात्तायां क्त्वाप्रत्ययाद्युपात्तायां वा योग्यताद्यनुसारेण निपातोपसर्गप्रातिपदिकातिरिक्तशब्दगम्यो यः सुबुपात्तलिङ्गसङ्ख्याव्यतिरिक्तोऽर्थस्तस्य सर्वस्यापि प्रकारतया अन्वयः, निपातोपसर्गयोस्तु क्रियासमभिव्याहारादौ सति तयाऽन्वयोऽन्यसमभिव्याहारादावन्येनापि । प्रातिपदिकार्थोऽपि सुबर्थे करणत्वादौ । तद्धितसमासादिसखण्डप्रातिपदिकावयवार्थानां तु यत्र कारकतासंबन्धेन तद्धितसमासादिवृत्तिर्यथा आग्नेय इत्यादौ, तत्राग्नेर्देवतात्वाद्भावनायामेवान्वयो न तु तद्धितोपात्ते द्रव्ये । स तु पार्ष्ठिक एव । यत्र तु कारकातिरिक्तसंबन्धेन सा—तत्र परस्परान्वयोऽपि, यथाऽश्वाभिधानीमित्यादौ । एवं सुबुपात्तलिङ्गसङ्ख्ययोः समानाभिधानश्रुत्या सुबर्थे करणत्वादावेवान्वयः, तद्व्यतिरिक्तपदार्थमात्रस्य तु सुबर्थकरणत्वादेर्धात्वर्थस्य कर्तृस्तदेकत्वादेश्च कालादेर्लिङाद्यर्थस्य विध्यादेर्लिङाद्यर्थस्य च सर्वस्यैव लिङानन्वयिभावनावाचिपदोपस्थाप्यायां भावनायामेवान्वयः । अतएव भावनादिपदोपस्थापितायां तस्यां नान्वयः । आख्यातेन क्त्वादिना वोपस्थितायांतु भवत्येवान्वयः प्रका-

विशेष्यत्वेनोपस्थितायां तस्यामेव प्रकारतयाऽन्वयकल्पनं युक्तमित्यर्थः । एवंच सर्वत्रैव मुख्यविशेष्यत्वेन तस्यां सर्वकारकान्वयं प्रसक्तमनुवदति—**योग्यताद्यनुसारेणेति** ॥ तथाच "ओदनं स्थाल्यां पक्त्वा व्रजती"त्यादौ क्त्वाप्रत्ययोपात्तभावनाया आख्यातोपात्तभावनायां प्रकारत्वेनान्वयेन तस्या मुख्यविशेष्यत्वेऽपि नास्यामोदनादिकारकाणामन्वयोऽयोग्यत्वात्, किंतु पूर्वभावनायामेव । **अत एव**—भावनायाः पूर्वस्यास्तत्तत्कारकाणि प्रति विशेष्यत्वेऽपि आख्यातोपात्तभावनैव मुख्यविशेष्येत्युक्तम् । अतश्च अन्यभावनायां कारकाणि प्रति विशेष्यत्वम् । नियतमाख्यातोपात्तायास्तु मुख्यविशेष्यत्वमिति भावः । तामेव योग्यतामन्यत्रापि व्यतिरेकेण दर्शयति—**निपातेति** ॥

**( निपातोपसर्गप्रातिपदिकातिरिक्तशब्दगम्य-सुबुपात्तेत्यादिनियमापेक्षयाऽतिरिक्तव्युत्पत्तिकल्पनेन अग्नेय इत्यादावप्यग्न्यादिदेवतानां भावनान्वयव्यवस्थापनम् )**

अत्र पौर्णमास्यधिकरणे विद्वद्वाक्यविहितपौर्णमास्यमावास्यासंज्ञककर्मानुवादेन "यदाग्नेय" इति वाक्येनाग्निदेवताविशिष्टाष्टाकपालद्रव्यविधानेन विद्वद्वाक्यविहितकर्मणो रूपवत्त्वमाशङ्क्याष्टाकपालेन सहाग्निदेवतासंबन्धस्यान्यतोऽप्राप्तत्वादिहैव विधेयत्वापत्तेर्योऽष्टाकपालः स आग्नेयः सच पौर्णमास्यामित्यनेकार्थविधानाद्वाक्यभेदापत्तेर्न रूपविधानं संभवतीति निराकरिष्यते । नहि अग्न्यादिदेवतात्वानां प्रकृत्यर्थवृत्तीनां तद्धितोपात्ते प्रत्ययार्थभूते द्रव्येऽन्वये सति वैशिष्ट्यस्य व्युत्पन्नत्वेन श्रुतविधिना विशिष्टविधानेन पश्चात् कल्पितविशेषणविधिनाऽष्टाकपालोद्देशेनाग्न्यादिदेवतासंबन्धविशेषे सति श्रुतविधेरावृत्त्यसंभवे वाक्यभेद उपपद्यते । अतः श्रुतविधावेव वैशिष्ट्यमवश्यवक्तव्यं व्युत्पत्त्यन्तरकल्पनं विना न संभवतीत्यतो व्युत्पत्त्यन्तरमाह—**तद्धितेति** ॥ ततश्च प्रकृत्यर्थस्याग्न्यादेः प्रत्ययार्थे देवतात्वे आधेयतासंबन्धेनान्वये देवतात्वस्य नैव द्रव्येऽन्वयः, किंतु कारकत्वात् भावनायामन्वयादग्निवृत्तिदेवतात्वस्य द्रव्ये वैशिष्ट्यासंभवाद्युक्तो वाक्यभेद इत्यर्थः । **अतस्तद्व्यतिरिक्तेति** ॥

**( षष्ठ्यर्थसंबन्धस्योपपदार्थेऽन्वय इति शास्त्रदीपिकानुसारिप्राचीनमतखण्डनेन तस्यापि भावनायामेवान्वय इति कौस्तुभसिद्धान्तोपपादनम् )**

अत्रच तद्व्यतिरिक्तस्य कारकस्येव कालादेश्च भावनायामन्वयः षष्ठ्यर्थसंबन्धस्यतु उपपदार्थे इति प्राञ्चः । **अत एव**—पौर्णमास्यधिकरणे भिन्नपदोपात्तान्यपि यानि सामानाधिकरण्येन षष्ठ्या वा क्रियान्वयान्वयात् प्रागेव मिथः संबन्धं शब्दतो वस्तुतश्च विधिमनाद्दत्यैव लभन्ते तत्र नैव वाक्यभेद इत्युक्तं शास्त्रदीपिकायाम् । **वस्तुतस्तु**—साक्षात् परंपरया वाऽधिकरणत्वस्य षष्ठ्यर्थसंबन्धस्य भावनायामेवैककार्यकारणभावलाघवानुरोधेनान्वयो युक्त इति कौस्तुभोक्तमाश्रित्य पदार्थमात्रस्येत्युक्तम् ॥

**( साक्षाद्भावनान्वययोग्यानामपि संप्रदानादीनां परंपरया भावनान्वय इति सर्वेषां भावनान्वयनियमाभङ्गोपपादनम् )**

**एतेन**—अंशत्रयबहिर्भूतानामनीप्सितकर्मत्वसंप्रदानापादनत्वाधिकरणत्वादीनामनपेक्षितत्वात् भावनायां धात्वर्थस्य च कारकत्वेन साक्षाद्धात्वर्थेऽन्वयासंभवे मत्वर्थलक्षणया धात्वर्थेऽन्वय इति भाट्टालंकारकारकोक्तं—**अपास्तम्**; साक्षात्संबन्धेन भावनान्वयायोग्यानामपि स्वनिरूपकधात्वर्थजनकत्वादिरूपं पार्ष्ठिकान्वयलभ्यं परम्परासंबन्धमादाय प्रथमतो भावनान्वये सामान्येन जाते पार्ष्ठिकान्वयलभ्ययागरूपव्यापारसंबन्धावगमोत्तरं वस्तुत इतिकर्तव्यतात्वेन ग्रहणोपपत्तेः । एवं गुणकामाधिकरणे इन्द्रियकर्मत्वस्य स्वनिरूपकगुणसंबन्धाश्रयजनकत्वसंबन्धेन भावनायामेवान्वयः । यत्रतु कालाधिकरणत्वादौ फलनिरूपितत्वासंभवः, तत्रागत्या कालाधिकरणत्वादेः करणत्वाङ्गीकारेणेतरगुणवत् स्वजन्यफलोद्देश्यकत्वसंबन्धान्तरेण तस्यामेवान्वय इति सर्वत्र ज्ञेयमिति भावः ॥

**( सर्वेषां भावनान्वयेऽपि धात्वर्थसकर्मकत्वादिव्यवहारोपपत्त्यादिना धात्वर्थकरणत्वाद्युपसंहारः )**

**ननु**—ओदनादेः कर्मत्वादिना भावनायामन्वये धात्वर्थ-

रतया। प्रकारताघटकाः संबन्धाश्च सर्वे यथायथं पाष्ठिकान्वयबोधवेलायामवगम्यमानाः कौस्तुभ एव द्रष्टव्याः। तस्मात् सिद्धमाख्यातवाच्या आर्थीभावना, तस्याश्च स्वर्गादि भाव्यम्, धात्वर्थश्च करणम्, सोमादिकं तु करणानुग्राहकत्वादितिकर्तव्यतेति ॥ २ ॥ इति द्वितीयं भावार्थाधिकरणम्।

---

(३ अधिकरणम्।)

चोदना ॥

धात्वर्थादेवापूर्वमिति स्थितेऽपूर्वमेवास्ति न वेति चिन्तायां क्लृप्तयागध्वंसद्वारैणैव क्षणिकस्यापि यागस्य स्वर्गसाधनत्वोपपत्तौ नापूर्वकल्पनम्; गौरवापत्तेः। न च नित्यत्वाद्ध्वंसस्य "धर्मः क्षरति कीर्तनात्" "प्रायश्चित्तैर्नश्यन्ति पापानि सुमहान्त्यपि" इति कीर्तनप्रायश्चित्तनाश्यत्वानुपपत्तिः; कीर्तनादेः फलोत्पत्तिप्रतिबन्धकत्वाङ्गीका-

---

कर्मत्वानुपपत्त्या धातोस्सकर्मकत्वानापत्तिः, शयनादिभावनायामपि स्वास्थ्यादेः कर्मत्वेन भावनान्वयात् सकर्मकत्वापत्त्याऽकर्मकत्वानापत्तिरित्यत आह—**प्रकारताघटका इति** ॥ **अयमर्थः**—ओदनकर्मत्वस्य स्वनिरूपकधात्वर्थकरणकत्वसंबन्धेन प्रथमतो भावनायामन्वयः। एवं करणत्वादीनामपि। एवं सत्यपि यद्धात्वर्थस्य कर्मणः पाष्ठिकान्वये आकाङ्क्षा, तद्धातोः सकर्मकत्वम्। यस्य तु न तदानीं सा तस्याकर्मत्वमिति व्यवस्था। नहि पाकः कस्येत्याकाङ्क्षेव शयनं कस्येत्यादिकर्माकाङ्क्षा भवति। **अतएव**—धात्वर्थकर्माद्यादायैव द्वितीयालकारादिविधानमिति नानुपपत्तिः। यथा पाष्ठिकबोधस्य श्रुतशब्दजन्यत्वेऽपि न व्युत्पत्त्यन्तरापादकत्वम्, तथा कौस्तुभे द्रष्टव्यम् विस्तरभयान्नोच्यते। एवंच भावनायाः नित्यसकर्मकत्वात् भाव्यापेक्षायां पुरुषार्थत्वेन स्वर्गादेस्तत्त्वेनान्वये करणाकाङ्क्षयाऽन्वीयमानो धात्वर्थः फलद्वारा करणतया संबध्यत इति फलं प्रति धात्वर्थस्य करणत्वात् तन्निर्वाहकतया कल्प्यमानापूर्वं प्रत्यपि तस्यैकस्यैव साधनत्वात् तत्साध्यमपूर्वमेकमेवेत्येतत्फलसूचनायोपसंहरति—**तस्मादिति** ॥

**(सोमादीनामितिकर्तव्यतात्वेन व्यापाराविष्टतया प्रकरणग्राह्यत्वमिति स्वमतस्य श्रुत्यादिनाऽङ्गत्वमिति पार्थसारथिमतस्य च निरूपणम्)**

**ननु**—धात्वर्थस्य करणत्वेनान्वये कथं सोमादिद्रव्यदेवतानां प्रयाजादीनां चान्वय इत्यत आह—**सोमादिकंत्विति** ॥ द्रव्यदेवतयोः स्वजन्यकरणेन फले जन्यमाने अनुग्राहकाङ्क्षायाः करणसंपादनरूपव्यापारद्वारा भावनायामन्वयः। **अत एव**—व्यापारानाविष्टस्य द्रव्यदेवतादेरितिकर्तव्यतात्वेनाग्रहणेऽपि व्यापारसंबन्धोत्तरं प्रकरणेनेतिकर्तव्यतया ग्रहणं प्रकरणाधिकरणे वक्ष्यते। प्रयाजादीनामपि तदाकाङ्क्षयैव ग्रहणमिति नानुपपत्तिः ॥ पार्थसारथिमतेतु व्यापारसामान्ये द्रव्यदेवतादेः विशेषत्वायोगान्नेतिकर्तव्यताकाङ्क्षया ग्रहणम्, किंतु व्यापारविषयीकृतस्य अर्थाक्षिप्तोत्पत्तिसंपादनद्वाराऽङ्गत्वमेव श्रुत्यादिनेति न प्रकरणग्राह्यत्वम्। प्रयाजादीनां तु तथाग्रहणम्, नत्वनुग्राहकत्वेनेति प्रागेव सूचितमिति भावः ॥

॥ इति द्वितीयं भावार्थाधिकरणम् ॥

---

**(शक्तिरूपस्यापूर्वस्य यागनाशेऽनाशेनात्मनिष्ठत्वकल्पने गौरवेणच क्लृप्तध्वंसमात्रस्य स्वजनकत्वमात्रकल्पनमिति निरूपणम्)**

आक्षेपिकीं सङ्गतिं दर्शयन्नधिकरणचिन्तां प्रतिजानीते—**धात्वर्थादेवेति** ॥ यागस्वर्गसाध्यसाधनभाव इवापूर्वे प्रत्यक्षादीनामप्रवृत्तेः प्रमाणत्वासंभवात् अर्थापत्तेरेव प्रमाणत्वं कल्पनीयम्। साच श्रुतार्थविरोधापत्तेर्न संभवति। **तथाहि**—कालान्तरभाविस्वर्गसाधनत्वान्यथानुपपत्त्याऽपूर्वकल्पनायामपूर्वं तदुपपादकत्वायोगः। नह्यपूर्वे कल्पिते तेनैव स्वर्गजननादपूर्वोत्पत्तिं प्रत्यन्यथासिद्धस्य यागस्य स्वर्गसाधनता संभवति। **नच**—अपूर्वस्य शक्तिरूपत्वेनावान्तरव्यापारस्वरूपत्वात् ज्वालया काष्ठादीनामिव नान्यथासिद्धिरिति—**वाच्यम्**; शक्तिव्यापारयोः शक्तिव्यापारवन्निष्ठत्वनियमेन तन्नाशेऽवस्थानानुपपत्तेः। नच फलवलकल्पनादपूर्वस्य यागनिष्ठत्वासंभवेऽपि तदाश्रयात्मनिष्ठत्वकल्पनं युक्तम्; गुरुभूतापूर्वकल्पनमन्तरेणापि तत्साधनत्वानुपपत्तेः क्षीणत्वेन तादृशकल्पने प्रमाणाभावादित्यभिप्रेत्यार्थापत्तेः क्षीणत्वं दर्शयति—**क्लृप्तेति** ॥ ध्वंसे यागजन्यत्वसद्भावयोः क्लृप्तत्वात्केवलं फलजनकत्वमात्रं कल्प्यमित्यवान्तरव्यापारत्वं सुलभम्, अपूर्वेतु सर्वस्यापि कल्प्यत्वान्न तत्सुलभमित्यर्थः ॥

**(धर्मः क्षरति कीर्तनादित्यस्य ध्वंसव्यापारत्वेऽपि तत्र फलजननप्रतिबन्धेनोपपत्तिवर्णनम्)**

**ननु**—धर्मस्य क्रियारूपस्य क्षणिकत्वेनाऽऽशुतरविनाश्यत्वात् ध्वंसस्यच नित्यत्वेन नाश्यताऽसंभवात् तत्तत्स्मृतिश्रूयमाणकीर्तनप्रायश्चित्तनाश्यत्वानुपपत्तेस्तद्योग्यापूर्वान्तरकल्पनमावश्यकमित्यभिप्रेत्य शङ्कते—**नचेति** ॥ परिहरति—**कीर्तनादेरिति** ॥ क्लृप्तध्वंसस्यैव व्यापारत्वेऽवधारिते कीर्तनादीनां स्वजन्यध्वंसद्वारा साक्षादेव फलोत्पत्तिप्रतिबन्धकत्वमात्रस्यैव तत्तत्स्मृतिभ्यो बोधयितुं शक्यत्वेन नाशकत्वकल्पने मानाभावादित्यर्थः ॥

**(यागध्वंसव्यापारस्वपक्षे स्वर्गोत्पत्त्यनन्तरस्वर्गान्तरोत्पत्त्याशङ्कायाः स्वर्गध्वंसस्य प्रतिबन्धकत्वकल्पनेन निरासः। तद्यागकीर्तनध्वंसस्यैव प्रतिबन्धकत्वाद्दोषान्तरनिरासश्च)**

**अत एव**—ध्वंसस्य नित्यत्वात् स्वर्गोत्पत्त्यनन्तरमपि

रेण तदनाशकत्वात्, कीर्तनात्यन्ताभावविशिष्टज्योतिष्टोमव्यक्तित्वेन कारणत्वकल्पनाद्वा न कश्चिद्दोषः। अतो नापूर्वं किंचित् प्रमाणमस्ति इति प्राप्ते—

क्षरतिनश्यत्योर्नाशवाचिन्योर्भवन्मते लक्षणापत्तेर्नाशयोग्यमपूर्वमेव कल्प्यते; गौरवस्य फलमुखत्वेनादोषत्वात्। अतश्च प्रधानेन स्वर्गादिफले अंगेनच प्रधानादौ जननीये

स्वर्गान्तरोत्पत्तिप्रसङ्गोऽपि स्वर्गध्वंसस्य तत्प्रतिबन्धकत्वकल्पनेनैव निरसनीयः। **नच**—कीर्तनादिध्वंसस्य प्रतिबन्धकत्वकल्पने प्रयोगान्तरजन्यफलोत्पत्तिप्रतिबन्धापत्तिः; अपूर्वकल्पनया नाशकत्वपक्षेऽपि तत्तद्यागव्यक्तिकीर्तने नाशकत्वस्यावश्यकल्प्यत्ववत् तद्यागव्यक्तिकीर्तनध्वंसस्य तद्यागव्यक्तिजन्यफलप्रतिबन्धकत्वकल्पनेन तदनापत्तेरिति भावः॥

**( गौरवनिरासार्थं कीर्तनात्यन्ताभावविशिष्टत्वेन रूपेण यागकारणतोपपादनम् )**

कीर्तनादिध्वंसस्य प्रतिबन्धकत्वकल्पने गौरवापत्त्या पक्षान्तरमाह—**कीर्तनात्यन्तेति**॥ यद्यपि ज्योतिष्टोमादिवाक्ये ज्योतिष्टोमत्वादिरूपेणैव कारणता, तथाप्यनुमानविधया उपस्थितविजातीयस्वर्गत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतयोपस्थापितकीर्तनात्यन्ताभावविशिष्टत्वेन रूपेण कारकताकल्पने न बाधकमिति भावः॥

**(अत्यन्ताभावप्रतियोगिन एव प्रतिबन्धकत्वात् ध्वंसव्यापारत्वपक्षे यागप्रतिबन्धकत्वनिरासः, अभावकारणतासमर्थनं च )**

नच कारणीभूताभावप्रतियोगित्वाद्यागस्य प्रतिबन्धकत्वापत्तिः; अन्यत्र प्रतिबन्धकाभावस्य स्वातन्त्र्येण कारणत्वेन तत्प्रतियोगिनि प्रतिबन्धकत्वसंभवेऽपीह ध्वंसस्य कारणावान्तरव्यापाररूपत्वेन स्वतः कारणत्वाभावेन अभावप्रतियोगित्वमात्रेण तदनापत्तेः। **किंच**—यत्र संसर्गाभावस्य कारणता, तत्रैव तत्प्रतियोगिनि प्रतिबन्धकत्वम्, प्रकृतेतु ध्वंसत्वेन कारणत्वान्न तदनापत्तिः। **नच**—अभावरूपस्य कथं फलजनकत्वं? इति—**वाच्यम्**; सन्ध्यावन्दनाद्यकरणस्य प्रत्यवायजनकत्ववद्योग्यानुपलब्धेरभावरूपाया अभावप्रत्यक्षजनकत्ववदिहापि तस्य फलजनकत्वकल्पने बाधकाभावादिति न कश्चिद्दोष इत्यनेन सूचितम्। एवंचाङ्गेषु प्रधानेषु च ध्वंसव्यापारेणैव निर्वाहे नापूर्वकल्पनमिति तद्भेदाभेदसिध्यर्था व्यर्थाऽपूर्वचिन्तेति पूर्वपक्षमुपसंहरति—**अत इति**॥

**(कीर्तनादेः फलोत्पत्तिप्रतिबन्धकत्वस्य प्रतिबध्यतावच्छेदकस्य तद्व्यक्तित्वस्याप्रसिद्ध्याऽयोगेन गौरवात् कीर्तनात्यन्ताभावविशिष्टत्वेन कारणताकल्पनस्याप्ययोगेन क्षरतिनश्यत्योर्लक्षणापत्त्याचाऽपूर्वसिद्धिरिति निरूपणम् )**

कीर्तनादेः फलव्यक्तिप्रतिबन्धकत्वाङ्गीकारस्तावत् प्रतिबध्यतावच्छेदकस्य तद्व्यक्तित्वस्याप्रसिद्धत्वादेवायुक्तः। विजातीयस्वर्गत्वादिना प्रतिबध्यताङ्गीकारे प्रयोगान्तरेऽपि फलानुत्पत्तिप्रसङ्गः। कीर्तनात्यन्ताभावविशिष्टत्वेन कारणताकल्पने कारणतावच्छेदके गौरवादनेककारणभावकल्पनापत्तिः। अतः यद्यपि कीर्तनत्वेन तद्व्यक्तिजन्यापूर्वत्वेन नाश्यनाशकभावकल्पने कार्यकारणभावानेकत्वेऽपि कारणतावच्छेदके गौरवाभावात् "धर्मः क्षरती"त्यादिशास्त्रोन्नीतत्वात् प्रामाणिकत्वम्; तथापि क्षरतिनश्यतोः लक्षणायां प्रमाणाभावादगत्या नाशयोग्यापूर्वसिद्धिरित्यभिप्रेत्य सिद्धान्तमाह—**क्षरतीति**॥

**( विकृतिषु पृथगङ्गानुष्ठानसिद्ध्यर्थं अङ्गप्रधानभावव्यवस्थासिद्ध्यर्थं चाङ्गापूर्वावश्यकतानिरूपणम् )**

अङ्गेष्वपि ध्वंसस्य व्यापारत्वाङ्गीकारे तस्य नित्यत्वात् विकृतिवेलायामपि सत्त्वात् विकृतीनां पशुपुरोडाशवत्प्रसङ्गित्वोपपत्तेः प्रयोगभेदेऽपि तज्जन्योपकारलाभात् पृथगङ्गाननुष्ठानापत्तौ "प्रयाजे प्रयाजे कृष्णलं जुहोती"ति दर्शनानुपपत्तिः। अतोऽवश्यं तत्राप्यपूर्वकल्पनमावश्यकमित्याह—**अङ्गेन चेति**॥ प्रधानादावित्यादिपदेन प्रधानजन्यापूर्वसंग्रहः। प्रधानस्य प्रयाजाद्यजन्यत्वेन प्रधानेऽङ्गानामुपयोगकल्पनानुपपत्तेस्तदवान्तरव्यापाररूपध्वंसस्यापि चाङ्गैर्विनापि जायमानत्वात् तदनुपपत्तेः फले तत्कल्पनायां प्रधानत्वापत्तेरङ्गप्रधानव्यवस्थासिध्यर्थमप्यपूर्वकल्पनाया आवश्यकत्वेनास्मन्मते उपयोगः सुलभः॥

**( श्रुतार्थापत्तिकल्पितवैदिकवाक्यसिद्धस्यापूर्वस्य भोक्त्रात्मनिष्ठस्य कल्पनात्सर्वोपपत्ति निरूपणम् )**

नच तत्र प्रमाणाभावः; यागेनापूर्वं कृत्वा स्वर्गं कुर्यादिति श्रुतार्थापत्तिकल्पितवैदिकशब्दस्यैव प्रमाणत्वादित्यर्थः। नच अपूर्वस्य शक्तिरूपस्य व्यापाररूपस्य वा शक्तिमतो व्यापारिणश्च नाशेनाऽवस्थानानुपपत्तिरित्याशङ्कां परिहरति—**सचेति**॥ अपूर्वस्य यागजन्यत्वेऽपि अनुभवजन्यस्मृतिव्यापारस्य संस्कारस्यानुभवनिष्ठस्याकल्पनवदिहापि फलबलेन यागनिष्ठत्वाकल्पनेनात्मनिष्ठत्वकल्पनादवस्थानोपपत्तेः। अतएव गयाश्राद्धादौ पितृपुत्रयोरुभयोरपि फलभोक्तृत्वस्य शास्त्रान्तरप्रमितत्वादुभयवृत्त्यपूर्वद्वयकल्पनं तत्तत्कीर्तननाश्यमेव। एवं दम्पत्योरपि फलभोक्तृत्वादपूर्वद्वयं स्वस्वकीर्तननाश्यं च। अतएव देवताप्रसादस्यापि फलव्यधिकरणत्वान्नावान्तरव्यापारत्वकल्पनम्। एवंच यत्रान्यरोगनिवृत्त्यर्थमेव दर्शाद्यनुष्ठानम्, तत्रेतरस्य सत्यपि व्यासज्यवृत्तिकर्तृत्वे फलभोक्तृत्वाभावात् न

अपूर्वं तदवान्तरव्यापारः । स च फलबलादात्मनिष्ठः । अवान्तरव्यापारत्वादेव च न यागादेरन्यथासिद्धिः ।

तत्र यत्रैकमेव प्रधानं, तत्र पूर्वोक्तराङ्गसहितात् तस्मादपूर्वोत्पत्तेः प्रधानाव्यवहितमेकमुत्पत्त्यपूर्वं तेन च सर्वाङ्गान्ते परमापूर्वमपरमिति द्वे अपूर्वे । एवं प्रधानभेदेऽपि प्रतिप्रधानं उत्पत्त्यपूर्वभेदः परमापूर्वं त्वेकमिति ज्ञेयम् । दर्शपूर्णमासयोस्तु "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेते"ति वाक्यद्वयेन यागत्रयकरणतानां त्रिकान्तरनिरपेक्षाणां साहित्यावगतेः साहित्यस्य चैककार्यनिरूपितत्वं विनाऽनुपपत्तेः प्रतिसमुदायं समुदायापूर्वमपरं तेन च परमापूर्वमिति नवापूर्वसिद्धिः । एवमन्यत्रापि चातुर्मास्यद्वादशाहादिषु अपूर्वकल्पना ज्ञेया ।

अङ्गेषु तु सन्निपत्योपकारकाङ्गजन्यापूर्वाणां प्रधान एवोत्पत्त्यपूर्वजननानुकूलयोग्यताजनने उपयोगः । अन्तिमप्रधानगतयोग्यतया च नाशः । आरादुपकारकजन्यानां तु उत्पत्त्यपूर्वनिष्ठतदव्यवहितकार्यजननानुकूलयोग्यताजनने

---

तन्निष्ठापूर्वान्तरकल्पनम्, अपितु फलभोक्तृनिष्ठमेवेति नेतरस्मिन् फलिसंस्काराः। एवं जातेष्ट्यादावपि पुत्रगतस्यैव फलस्य कल्पनात् तत्रैवापूर्वं, पितरि त्वकरण एव प्रत्यवायजनकमपूर्वमिति विशेषः । अतएव—न पितरि ते; ( फलिसंस्काराः ) कर्तृनिष्ठफलाधानयोग्यताजनकत्वाच्च, नापि पुत्र इत्यात्मनिष्ठत्वकल्पने बाधकाभावादवस्थानोपपत्तिरित्यर्थः ॥

## ( यागान्यथासिद्धिपरिहारः )

यागादेरन्यथासिद्धिं परिहरति—**अवान्तरेति** ॥

## ( प्रधानैकत्वानेकत्वाभ्यां उत्पत्त्यपूर्वैकत्वानेकत्वयोरुत्पत्त्यपूर्वावश्यकतायाश्च निरूपणम् )

एवमपूर्वे साधिते एकप्रधानानेकप्रधानभेदाभ्यां तद्वतैकत्वानेकत्वे उत्सर्गतो दर्शयति—**तदत्रेति** ॥ प्रयोगविधिना साङ्गस्य फलसामग्रीत्वोक्तेः साङ्गतायाश्च प्रयोगान्त एव संभवात् तदानीमुत्पद्यमानं परमापूर्वं क्षणिकात् प्रधानान्न संभवत्यतस्तद्द्वारभूतमेकमुत्पत्त्यपूर्वमित्यपूर्वद्वयमेकप्रधानयागे । यत्रानेकानि प्रधानान्येकफलसाधनानि, तत्रापि प्रतिप्रधानमेकैकमुत्पत्त्यपूर्वम्, परमापूर्वं त्वेकमित्युत्सर्ग इत्यर्थः ॥

## ( दर्शपूर्णमासयोः समुदायापूर्वद्वयसाधनम् )

क्वचिदधिकापूर्वकल्पनेनापवादमाह—**दर्शपूर्णमासयोस्त्विति** ॥ यद्यपि चोत्पत्तिवाक्ये प्रत्येकमेव करणत्वादत्रापि न त्रिषु व्यासज्यवृत्त्येकं करणत्वम्; तथाप्येकपदोपादानावगतकरणतात्रयसाहित्यस्योपादेयगतत्वेन विवक्षितस्यैककार्यनिरूपितत्वमावश्यकम्; अन्यथा चित्रासौर्यादिष्विव साहित्यव्यवहारानुपपत्तेः । अतस्समुच्चित्यैककार्यजनकत्वमेवात्र साहित्यं, तच्च न फलनिरूपितम्; करणषट्कसाहित्यस्यैव तदङ्गत्वात् । अतएव न परमापूर्वनिरूपितम्, नाप्युत्पत्त्यपूर्वनिरूपितम्; तस्यैकैककरणजन्यत्वादतस्तत्तद्वाक्ये करणत्रयसाहित्यस्य कार्यापेक्षायां समुदायापूर्वसिद्धिः । अतएव—समुदायद्वये पुनःपुनरङ्गानुष्ठानमित्यर्थः । एवमेकैककार्यनिरूपितत्वस्य कारणत्वे आवश्यकत्वादुत्पत्तिवाक्यावगतैककरणत्वानुरोधेनैव दधिपयोयागयोस्संप्रतिपन्नदेवताकत्वेन सहानुष्ठानेऽप्युत्पत्त्यपूर्वभेदः । अतएव एकप्रधानविस्मृतौ य एव दधियागः पयोयागो वा कृतस्तदितर एवाऽऽवृत्यते, ननु कृतोऽपीत्यादि द्रष्टव्यम् ॥

## ( चातुर्मास्यादिष्वपि दर्शपूर्णमासन्यायातिदेशः )

अनेनैव न्यायेन यत्र यत्र यागसमुदायोऽस्ति, तत्र तत्र समुदायापूर्वसिद्धिरित्यतिदिशति—**एवमन्यत्रापीति** ॥ चातुर्मास्येष्वपि "वसन्ते वैश्वदेवेन यजेते"त्यादिषु तत्तत्पर्वणः करणत्वश्रवणात् समुदायापूर्वसिद्धिः ॥

## ( द्वादशाहे समुदायापूर्वकल्पनानावश्यकताशङ्कापरिहारौ )

यद्यपि द्वादशाहे प्रायणीयादितत्तदपूर्वमुत्पत्तिवाक्येषु निरपेक्षकरणत्वादुत्पत्त्यपूर्वभेदे सत्यपि "द्वादशाहेन प्रजाकामं याजयेदि"ति फलविधौ फलनिरूपितकरणत्वानुपपत्त्या परमापूर्वस्यैव कल्पनान्न समुदायापूर्वकल्पनस्य प्रयोजकम्; तथापि "द्वादशाहेने"त्येकवचनान्तेन समुदायस्य करणतावगमात् तस्याश्च किंचित्कार्यनिरूपितत्वं विनाऽनुपपत्तेः परमापूर्वस्य च समुदायिजन्यत्वेन निरूपकत्वासंभवे समुदायापूर्वसिद्धिर्द्रष्टव्या ॥

## ( सन्निपत्योपकारकाणां प्रधाने उत्पत्त्यपूर्वजननयोग्यतासंपादनेनैवारादुपकारकाणां प्रधानेनोत्पत्त्यपूर्वनिष्ठतदव्यवहितकार्यजननानुकूलयोग्यताजननेनोपयोगनिरूपणम् । समुदायापूर्वाभावेऽपि विकृतावतिदेशोपपत्तिः प्रयोगबहिर्भूतस्य फलजनन एवोपयोग इत्यादिनिरूपणं च )

**अङ्गेष्विति । प्रधान एवेति** ॥ सन्निकृष्टत्वादित्यर्थः । **ननु** आरादुपकारकाणामप्यङ्गानां प्रधानयागस्वरूपस्य तदजन्यत्वात् तत्र तज्जन्योत्पत्त्यपूर्वाणामपि प्रधानाव्यवधानेनैवोत्पत्तेः तत्राप्युपयोगासंभवात् क्वोपयोगः? इत्यत आह—**आरादुपकारकाणां त्विति** ॥ यद्यपि पूर्वाङ्गारादुपकारकाणां सन्निपत्योपकाराणामिव प्रधानगतोत्पत्त्यपूर्वयोग्यताजनन एव शक्यत उपयोगो वक्तुम्; तथापि आरादुपकारकत्वावच्छेदेनैकत्रैवोपयोगकल्पने लाघवादुत्पत्त्यपूर्वनिष्ठयोग्यतायामेवोपयोग इति सूचयितुं सामान्यत आरादुपकारकाणामित्युक्तम् । **ननु** प्रकृतौ समुदायापूर्वजननानुकूलोत्पत्त्यपूर्वनिष्ठयोग्यतासंपादकानामङ्गानां विकृतौ समुदायापूर्वाभावे कथमतिदेशः? इत्यत आह—**तदव्यवहितेति** ॥

उपयोगः । अव्यवहितंच कार्यं समुदायापूर्वसत्त्वे तदेव, तदभावे परमापूर्वं स्वर्गाद्येव वेति ज्ञेयम् । अन्तिमयोग्यतोत्पत्तौ च नाशः । यदि तु परमापूर्वे न तथा किंचित्प्रमाणमित्याशङ्क्येत, ततो माऽस्तु तत् । अङ्गानां तु आरादुपकारकाणामुत्पत्त्यपूर्वे एव समुदायापूर्वाभावे फलानुकूलयोग्यताजननमेव कार्यमस्तु । सर्वथा सिद्धमपूर्वम् ॥ ३ ॥

इति तृतीयमपूर्वाधिकरणम् ॥

---

यत्रतु वाजपेयाङ्गबृहस्पतिसवापूर्वस्य प्रयोगबहिर्भूतत्वेन साङ्गवाजपेयप्रयोगजन्यपरमापूर्वनिष्पत्त्यनन्तरमनुष्ठानान्न तत्रोपयोगः, तत्र फलानुकूलपरमापूर्वनिष्ठयोग्यताजनन एवोपयोगः । एवं वैमृधस्यापि समुदायापूर्वं द्रष्टव्यमिति सूचयितुं फलोपलक्षणेन स्वर्गाद्येव वेत्युक्तम् ॥

**( बृहस्पतिसवकरणस्य परमापूर्वस्थापकत्वादीनां कौस्तुभोक्तत्वनिरूपणम् )**

अत्र च बृहस्पतिसवाख्यकरणस्य परमापूर्वनाशकत्वकल्पनया तत्करणस्य परमापूर्वस्थापकत्वकल्पनं मूलानुयायिनां तन्निरासः प्रतिपत्त्याद्यङ्गानामुपयोगश्च कौस्तुभे द्रष्टव्यः । चतुर्थे चोपपादयिष्यते ॥

**( अङ्गानां प्रधानानां च परमापूर्वाङ्गीकारानावश्यकताशङ्कापरिहारेण परमापूर्वाङ्गीकारावश्यकतानिरूपणम् )**

यद्यपि यत्र समुदायापूर्वं, तन्नारादुपकारकाणां तत्रैवोपयोगोपपत्तेः, यत्रवा न तत्तत्राप्युत्पत्त्यपूर्व एव फलानुकूलयोग्यताजननद्वारोपयोगसंभवान्न परमापूर्वे किंचित् प्रमाणम् । **किंच** यत्र नैवारादुपकारकाण्यङ्गानि, तत्र तत्कल्पने नैव किंचित्तत्; तथापि दर्शपूर्णमासादौ फलवाक्ये साहित्यविशिष्टानां षण्णां यागकरणतानां फलनिरूपकत्वावगमात् तस्यच व्यापारमन्तरेणानुपपत्तेस्तदपेक्षया परमापूर्वं कल्प्यते । उत्पत्त्यपूर्वाणां अतएव समुदायापूर्वस्यवा षट्साहित्यावच्छिन्नजन्यत्वाभावान्न व्यापारत्वम् । यद्यपि प्रतियागं करणता भिन्ना, आग्नेयत्वादीनि तदवच्छेदकान्यपि भिन्नानि; तथापि सर्वासु करणतासु एका फलनिरूपकता; फलस्यैकत्वात्, तदवच्छेदकत्वं च षट्साहित्यम् । नच तज्जन्यत्वमुत्पत्त्यपूर्वादीनां सिध्यतीति तद्व्यापारसिध्यर्थं परमापूर्वोपासनम् । अतएव यत्र करणताव्यवधानेनैव समुदायाद्यपूर्वोत्पत्तिः संभवति, तत्र व्यापारानपेक्षयैव साधकतमत्वविवक्षया करणत्वोपपत्तेर्नैककार्यनिरूपितत्वेन व्यापारापेक्षणम्, प्रकृतेतु फलस्य कालान्तरभावित्वेनाव्यवधानेनोत्पत्त्यसंभवेन व्यापारापेक्षणमिति विशेषः । एवमङ्गानामपि परस्परसहितानामेव प्रयोगविधिना प्रधानोपकाररूपफलजनकत्वावगमात् तस्य चाव्यवधानेनानुत्पत्तेस्तद्व्यापाररूपाखण्डकरणोपकारापरपर्यायपरमापूर्वसिद्धिः । इतरथा प्रधानेष्वपि तुल्यन्यायतया तदनापत्तेः । एवं यत्रैकमेव प्रधानं, तत्रापि फलस्य कालान्तरभावित्वेन व्यापारापेक्षायां साङ्गप्रधानोत्तरोत्पत्तिकत्वानुरोधेनैव तत्सिद्धिः ॥

**( परमापूर्वानङ्गीकारस्येष्टत्वनिरूपणम् )**

एवमुभयत्र परमापूर्वसत्त्वे प्रमाणसत्त्वेऽपि साङ्गप्रधानोत्तरमुत्पन्नस्यैव व्यापारत्वकल्पने प्रमाणाभावात् क्लृप्तोत्पत्त्यपूर्वाणामेव युक्तं व्यापारत्वमित्यालोच्यते यदि, तदा नैव तदङ्गीकारे किंचित्प्रयोजनमिति तथाशब्देन सूचयन् तदनङ्गीकारमिष्टापत्त्या दर्शयति—**यदित्विति** ॥

**( परमापूर्वानङ्गीकारे द्वितीयप्रकृतिप्रयोगे विकृतिषु च प्रसङ्गोपपादनपरप्रकाशमतस्य मतान्तरस्य च वार्तिकावष्टम्भेन खण्डनम् )**

**एतेन**—परमापूर्वाभावे उत्तराङ्गाणां फलोत्पत्तिपर्यन्तमुत्पत्त्यपूर्वस्थित्यर्थत्वे वक्तव्ये सकृत्स्वर्गार्थं दर्शं कृतवतः प्रकृतिद्वितीयादिप्रयोगेषु विकृतिषु चैहिकफलासु पुनरुत्तराङ्गानुष्ठानानापत्तिः । पूर्वकृताङ्गोपकाराणामवस्थानेन प्रसङ्गसिद्धेरिति प्रकाशकारोक्तं—**अपास्तम्**; फलोत्पत्त्यनुकूलयोग्यताधानार्थत्वस्यैवोत्तराङ्गाणां स्वीकारेणान्तिमयोग्यतया तन्नाशेन प्रसङ्गानापत्तौ तदुत्पत्त्यपूर्वस्थित्यर्थत्वे प्रमाणाभावात् । **एतेन**—परमापूर्वाभावे एकैकोत्पत्त्यपूर्वस्य कीर्तनेन नाशापत्तौ फलोत्पादानापत्तिरतस्तत्कल्पनमावश्यकमिति केषांचिदुक्तमपि—**अपास्तम्**; प्रमाणाभावे फलानुत्पादेऽपि बाधकाभावेन तत्कल्पनानुपपत्तेः । **अतएव वार्तिके**—"अथ कस्मात् प्रात्यात्मिकान्येवाङ्गापूर्वाणि प्रधानोपकारकत्वं भिन्नानि च प्रधानापूर्वाणि फलबीजत्वं न प्रतिपद्यन्ते इत्याशङ्क्य सत्यम्, नहि कश्चिदत्र दोष इतीष्टापत्तिं प्रदर्श्य किंतु 'अर्थापत्तेरिहापूर्वं पूर्वमेकं प्रतीयते ततस्तत्सिद्धये भूयः स्यादपूर्वान्तरप्रमा ।' प्रधानानां फलं प्रत्यङ्गानां च प्रधानानि प्रति युगपदुपादानादपेक्षावशेनैकापूर्वकल्पनया च तत्संबन्धोपपत्तेर्नापूर्वान्तरकल्पनाप्रमाणमस्तीत्येकमेव तावदवधार्यते ततः पुनः क्रमवर्तिभिर्बहुभिः कर्मभिः तदशक्यं युगपत् कर्तुमिति तत्सिध्यर्थं प्रात्यात्मिकापूर्वान्तरकल्पना भवती" त्यादिनोपजीव्यत्यागायोगमात्रेण परमापूर्वमङ्गीकृतम् ॥

**( अङ्गानां न परमापूर्वकल्पकत्वमिति प्रकाशोक्तिनिरासपूर्वकोपसंहारः )**

**एतेन**—कथंचित्पार्थसारथिलिखितमनुसृत्याङ्गानां परमापूर्वकल्पकत्वं नेष्टव्यमिति प्रकाशकारोक्तं वार्तिकविरोधादुक्तयुक्तेश्च—**परास्तम्**; विशेषतश्चायमर्थो ह्येकादशाद्ये व्यक्तीकरिष्यते । परमापूर्वसद्भावे विवादेऽप्यपूर्वसद्भावे नैव विवाद इत्यभिप्रेत्योपसंहरति—**सर्वथेति** ॥

॥ इति तृतीयमपूर्वाधिकरणम् ॥

(४ अधिकरणम्।)

**तानि द्वैधम्** ॥ "व्रीहीनवहन्ती"त्यादौ पूर्ववदेवावघातस्य फलभावनाकरणत्वमविवादम्। तच्च फलं न व्रीहयः; अजन्यत्वात्; नापि वैतुष्यम्, तज्जनकत्वस्य लोकसिद्धत्वेनाविधेयत्वात्, नापि पक्षे दलनादेरप्यर्थप्राप्तत्वेन तद्व्यावृत्तिफलको नियमः; तस्यापि वैफल्यात्। न च तस्यादृष्टार्थत्वम्; अदृष्टस्यावश्यकल्पनीयत्वे शाब्दावघातादेव तत्कल्पनौचित्यात्। अतोऽदृष्टार्थमेवावघातः। तदपि चादृष्टं न व्रीहिनिष्ठम्; तत्त्वावच्छिन्नं प्रति आत्मत्वेन समवायिकारणत्वात्। अतः पूर्ववदेव व्रीहय एवावघातार्था इति व्रीहिविशिष्टावघात एवादृष्टार्थमारादुपकारकत्वेन विधीयते इति प्राप्ते—

दृष्टसम्भवे अदृष्टस्यान्याय्यत्वाद्वितुषीभाव एवावघातफलम्। न च तस्याक्षेपादेव प्राप्तत्वेन विधिवैयर्थ्यम्; दलनाद्युपायान्तरव्यावृत्तिफलकनियमस्यैवावघाताश्रितस्यादृष्टार्थं विधेयत्वात्। अतएव कृष्णलचरौ अवघाताभावेन तस्य लोपः। **वस्तुतस्तु**—श्रौतस्यावघातस्यैवाक्षेपतः पूर्वप्रवृत्त्या वितुषीभावार्थं विधेयत्वम्। अतश्चाक्षेपप्रतिबन्धाद्दलनादिव्यावृत्तिफलको नियमः फलम्। वैतुष्यस्य च दलनेनापि जायमानत्वाद्वैयर्थ्यशङ्का तु अवघातादेव व्रीहिनिष्ठादृष्टस्याप्युत्पत्तिकल्पनान्निराकर्तव्या। तददृष्टस्य च जन्यत्वमात्रं लाघवात् कल्प्यते न प्रयोजकत्वमपि; दृष्टरूपे वैतुष्य एव तत्कल्पनात्। अतः कृष्णलचरौ वैतुष्याभावे तल्लोपः। आर्थिकविध्यन्तरकल्पनाच्च नानेकोद्देश्यता।

---

**(भावार्थाधिकरणेनाक्षेपसङ्गतिनिरूपणपूर्वकं प्रयाजशेषन्यायेन व्रीहीणामवघातार्थत्वेन पूर्वपक्षोपपादनम्)**

अपूर्वाधिकरणाधीनो भावार्थाधिकरणस्यात्मलाभ इत्यपूर्वाधिकरणस्य भावार्थाधिकरणशेषतया तत्सङ्गतौ प्रयोजनाभावात् भावार्थाधिकरणेनैवाक्षेपिकीं सङ्गतिं दर्शयितुं भावाधिकरणसिद्धान्तानुवादेन पूर्वपक्षमाह—**व्रीहीनवहन्तीत्यादाविति** ॥ आदिपदेन तण्डुलान् पिनष्टीत्यादिसंग्रहः। अवघातादीनामदृष्टार्थत्वेऽपि यदि तददृष्टं व्रीह्यादिनिष्ठं अङ्गीक्रियते, तथापि न व्रीहीणामवघातार्थत्वसिद्धिरित्येतदर्थमाह—**तदपिचेति** ॥ प्रयाजादिजन्यादृष्टवदात्मन्येवोत्पत्तेरनपेक्षिताश्रये व्रीह्याद्याश्रयत्वकल्पनापेक्षयाऽवघात एव द्रव्यापेक्षे व्रीह्यादिद्रव्यविधानस्योचितत्वात्। अतएव अपेक्षितविधिलाभाय प्रयाजशेषन्यायेन द्वितीयायास्तृतीयार्थलक्षणायामपि न दोष इत्यर्थः ॥

**(चतुर्विधकर्मत्वनिरूपणपूर्वकं अवघातस्य व्रीह्यर्थत्वेन सिद्धान्तोपक्रमः)**

न यस्य जन्यत्वं, तदेव भाव्यतयाऽन्वययोग्यमिति नियमः; कर्मत्वस्य चतुर्विधत्वात्। किंचिद्धि स्वत एवोत्पाद्यत्वेन कर्म भवति—यथा संयवनेन पिण्डः, किंचित्प्राप्तिविशिष्टत्वेन—यथा दोहनेन पयः, किंचिद्विकारविशिष्टत्वेन—यथाऽवघातेन व्रीहयः; वितुषीभावाख्यविकारजनकत्वात्, किंचिच्च संस्कारविशिष्टत्वेन—यथा प्रोक्षणेन व्रीहयः; अदृष्टरूपसंस्कारजननात्। अतश्च प्रकृते व्रीहीणां स्वरूपेण भाव्यत्वायोगेन वितुषीभावविशिष्टत्वेन रूपेण भाव्यतामादाय दृष्टार्थत्वे संभवत्यदृष्टार्थत्वकल्पना न युक्तेत्यभिप्रेत्य सिद्धान्तमाह—**दृष्टसंभव इति** ॥

**(अवघाताश्रितनियमविधानमिति शास्त्रदीपिकासिद्धान्तानुसारेण निरूपणम्)**

अत्रचैकमेव दृष्टार्थावघातनियमाददृष्टं कल्पितमित्यधिकरणोपसंहारग्रन्थे शास्त्रदीपिकायामनेन विधिना विधिवैयर्थ्यपरिहारसूचनद्वारा विधेयनियमस्यादृष्टार्थत्वमुक्तम्। तन्मतेन वितुषीभावार्थपक्षप्राप्तावघाताश्रितनियमविधानमाह—**दलनेति** ॥ यतो वितुषीभावार्थावघाताश्रितस्य तस्यादृष्टार्थतया विधानम्, अत एवाश्रयाभावात् नादृष्टार्थम्। कृष्णलचरौ नियमप्राप्तावपि तु लोप एवेत्याह—**अतएवेति** ॥

**(शास्त्रदीपिकासिद्धान्तेऽश्रुतनियमविधानेन तस्यायोगादवघातस्यैव श्रौतस्य विधानं कल्पितस्यादृष्टस्याप्रयोजकत्वादिकं च)**

अस्मिंश्च पक्षे श्रुतधात्वर्थविधित्यागेनाश्रुतनियमविध्यापत्तेरश्रुतस्यादृष्टजनकत्वानुपपत्तेरपरितुष्यन्पक्षान्तरमाह—**वस्तुतस्त्विति** ॥ **वैतुष्यस्य चेति** ॥ नियमं विनेति पूर्वशेषः। व्रीह्यर्थावघातनियमजन्यत्वात् धर्मिग्राहकप्रमाणेन व्रीहिनिष्ठमेवेत्याह—**व्रीहिनिष्ठेति** ॥ कल्पितस्याप्यदृष्टस्यानुषङ्गिकतया कल्पनान्न प्रयोजकत्वम् स्वातन्त्र्येणेत्याह—**तददृष्टस्येति** ॥ अदृष्टस्याननुष्ठापकताच वैतुष्यासंभवे तस्याननुष्ठानमित्येवंरूपा, नतु वैतुष्यसंभवेऽपि सा; दलनादेरप्यनुष्ठानापत्तेः। अत एव तस्यावघातजन्यत्वेऽपि दलनादिव्यावृत्तिफलकनियमवैयर्थ्यानुपपत्तिप्रसूतत्वान्नियमादृष्टत्वव्यवहार इत्यर्थः॥

**(व्रीह्यदृष्टोभयोद्देश्यकत्वनिबन्धनवाक्यभेदस्य श्रुतविधावुद्देश्यानेकत्वाभावात्, दृष्टादृष्टोभयविशिष्टत्वेनैकयैव द्वितीययोद्देश्यसमर्पणाच्च परिहारः)**

उद्देश्यानेकत्वप्रयुक्तं वाक्यभेदं परिहरति—**आर्थिकेति**॥ श्रुतविधिना वितुषीभावविशिष्टव्रीह्युद्देशेनावघातविधाने तद्वैयर्थ्यप्रतिसन्धानोत्तरमवघातेनादृष्टं कुर्यादित्यार्थिकविध्यन्तरकल्पनान्न श्रुतविधावुद्देश्यानेकत्वम्। **अथवा**—दृष्टादृष्टाश्रयव्रीहीणामेकयैव द्वितीयया भाव्यतोक्तेर्न दोष इत्यर्थः ॥

तत्तदृष्टस्य च द्वितीयादिधर्मिग्राहकप्रमाणेन व्रीह्यादिनिष्ठत्वस्यैवावगतेस्तत्त्वेनैव समवायिकारणता नात्मत्वेन । अतश्चावघातस्यादृष्टवितुषीभावोभयद्वारा अपूर्वसाधनीभूतव्रीह्युद्देशेन विधानात् सिद्धं संस्कारकर्मत्वम् । प्रयोजनं यागार्थव्रीह्यपेक्ष्या व्रीह्यन्तरमवघातार्थमुपादेयं पूर्वपक्षे, सिद्धान्ते नेति ॥ ४ ॥ **इति चतुर्थमवघातदृष्टार्थत्वाधिकरणम् ।**

**( व्रीहिपदेऽपूर्वसाधनत्वलक्षणा नियमापूर्वाङ्गीकारश्चोभयमप्यावश्यकमिति निरूपणम् )**

यथाचात्र व्रीहिस्वरूप इव वितुषीभावेऽप्यानर्थक्यापरिहारादपूर्वसाधनत्वलक्षणाया आवश्यकत्वे प्रधानोत्पत्त्यपूर्वार्थत्वेन विधानोपपत्तेर्न नियमादृष्टप्रयोजनं इत्याक्षेपस्तत्परिहारश्च कौस्तुभे द्रष्टव्यः । अतो व्रीहीणामवघातार्थत्वाभावात् न प्रयोजनीभूतादवघातात् प्रधानापूर्वापेक्षया प्रयोजकत्वेनादृष्टान्तरकल्पनम्, किन्तु व्रीह्यर्थावघातजन्यं नियमादृष्टमानुषङ्गिकमिति धात्वर्थभेदेपि नापूर्वभेद इति व्यतिरेकेण सूचयन् सिद्धान्तमुपसंहरति—**अतश्चेति** ॥

**( विकृतौ प्रैयङ्गवे चरौ विचारप्रयोजनस्य भाष्यकारोक्तस्य परित्यागेन प्रकृतावेवावघातार्थव्रीह्यन्तरं पूर्वपक्षे सिद्धान्ते यागीया एव इति प्रयोजनान्तरोक्तौ निमित्तं प्रयोजनसिद्धिप्रकारश्च )**

अत्र विकृतौ प्रैयङ्गवे चरौ विचारप्रयोजनं भाष्यकारादिदर्शितम्, तत्प्रकृत्यधीनपदार्थप्राप्तिमत्त्वेन विकृतौ स्वातन्त्र्येण निर्णयाभावादावश्यके प्रकृतावेव निर्णये तत्रैव तल्लाभे विकृतिपर्यन्तधावने प्रयोजनाभावादुपेक्ष्य प्रकृतावेव प्रयोजनमाह—**प्रयोजनमिति** ॥ अवघातविधौ पुरोडाशकपालादिवत् परप्रयुक्ततया व्रीहीणां साधनत्वाश्रवणात् यागस्येवावघातस्यापि स्वातन्त्र्येण प्रयोजकत्वे सति तदर्थमपि पार्थक्येन तेषामुपादानम्, सिद्धान्तेतु तेषां संस्कार्यत्वात् व्रीहिस्वरूपार्थत्वे चानर्थक्यापत्तेरपूर्वसाधनत्वापेक्षायां व्रीहिपदस्य तल्लक्षकत्वेऽधिकाराख्यप्रकरणस्य तात्पर्यग्राहकत्वात् प्रकृतग्रहणोपपत्तेः प्रकृतयागीयव्रीहीणामेवोपादानमित्यर्थः ॥

**( पूर्वपक्षे व्रीहीणामेव त्रयाणामेवावघातस्सकृदेव, सिद्धान्ते चतुर्मुष्टिपरिमितानां यवानामपि तण्डुलनिष्पत्तिपर्यन्तमवघात इति स्वयंप्रयोजनान्तरोपपादनम् )**

एवं पूर्वपक्षे सर्वौषधावघातवददृष्टार्थे त्रयाणामेव व्रीहीणां सकृदेवावघातः । प्रकृतौच प्रयाजादिवदवघातस्य सान्नाय्यादियागाङ्गत्वात् तद्विकारेष्वतिदेशे यवप्रयोगेऽपि त्रिभिर्व्रीहिभिरवघातः । सिद्धान्ते त्वातण्डुलनिष्पत्त्यवघातः, औषधद्रव्यसंस्कारकत्वेन सान्नाय्याद्यनङ्गत्वान्न तद्विकृतिष्वतिदेशः । यवपक्षे तेष्वेवावघातश्चतुर्मुष्टिपरिमितानामेव यागसाधनत्वात् तावतामेव स इति प्रयोजनान्तरस्याप्युपलक्षणमेतत् ॥

**॥ इति चतुर्थमवघातदृष्टार्थत्वाधिकरणम् ॥**

---

**( ५ अधिकरणम् । )**

"व्रीहीन् प्रोक्षति" "स्रुचः संमार्ष्टि"इत्यादौ दृष्टोपकारकत्वासम्भवात् द्वितीयायाश्च साध्यत्ववत्करणत्वेऽपि "सक्तून् जुहोति" "बल्वजान् शिखण्डकान् कुर्वि"त्यादौ प्रयोगदर्शनात् पूर्वाधिकरणपूर्वपक्षवदर्थकर्मत्वमेव । बल्बजानां हि करोतेर्द्विकर्मकत्वापत्तेर्न साध्यत्वम् । अतः करणत्वमपि

**( पूर्वाधिकरणेन प्रत्युदाहरणसङ्गतिः, द्वितीयायाः करणत्वशक्तिश्च )**

पूर्वाधिकरणे दृष्टोपकारकत्वलाभात् गुणकर्मत्वे साधिते यत्र स न लभ्यते, तत्र प्रधानकर्मत्वं भवत्विति दृष्टोपकारकत्वरूपसिद्धान्तहेतुप्रत्युदाहरणरूपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिं सूचयन् विषयप्रदर्शनपूर्वकं पूर्वपक्षमाह—**व्रीहीनिति** ॥ आदिपदेन "परिधिं संमार्ष्टि" "अग्निं संमार्ष्टि" "पुरोडाशं पर्यग्निकरोती"त्यादीनां संग्रहः । स्रुगादेः सम्मार्गाद्यजन्यत्वेन भाव्यत्वायोगादवघातादिवच्च योग्यतारूपलिङ्गादपि दृष्टोपकारविशिष्टत्वेन तदयोगात् स्रुगादिविशिष्टसम्मार्गादीनामेवारादुपकारकतया प्रयाजादिवत् विधानं युक्तमित्याशयेनाह—**दृष्टोपकारकत्वेति** ॥ **ननु** योग्यतारूपलिङ्गात् गुणकर्मत्वासंभवे द्वितीयाश्रुतिबलादेव तदर्थसिध्या तत्सिद्धिरित्यत आह—**द्वितीयायाश्चेति** ॥ द्वितीयायाः प्राधान्यवाचित्वं प्रयोगानुसाराद्वा, अनुशासनबलाद्वा । **नाद्यः,** प्राधान्याभावेऽपि प्रयोगदर्शनात् । **नान्त्यः,** उपजीव्यप्रयोगविरुद्धानुशासनस्य तन्नियामकत्वानुपपत्तेरित्यभिप्रेत्याह—**करणत्वेऽपीति** ॥ "बल्वजैस्तृणैर्मयूरान् कुर्वि"त्यर्थे बल्वजानिति लोके प्रयोगः । "सक्तुभिर्जुहोती"त्यर्थे सक्तूनिति वैदिकप्रयोगः । आदिपदेन प्रयाजशेषेणेत्यत्र तदभावेऽप्याज्यस्य प्राधान्यं व्यतिरेकेण सूचितम् । अतो बहुतरप्रयोगात्तस्याः करणत्वेऽपि शक्तिरित्यर्थः ॥

**( बल्वजान् शिखण्डान् कुरु सक्तून् जुहुतीत्यादावनेककर्मान्वयशङ्कातन्निरासौ )**

**ननु** आरुण्यादीनां प्रथमतः क्रयभावनायामन्वितानामपि पार्ष्ठिकः परस्परान्वय इवेहापि द्वयोरपि कर्मत्वेनैव प्रथमत एवं बल्वजवाक्येऽन्वयोऽस्त्वित्याशङ्कामनेककरणान्वयेऽप्यनेककर्मान्वयासंभवेन परिहरति—**बल्वजानां हीति** ॥ एवं सक्तूनामपि देवतोद्देश्यकप्रक्षेपद्रव्यत्यागसमुदायवाचिजुहोतिकर्मत्वानुपपत्तेः अनीप्सिततत्वेनैकदेशकर्मत्वस्याप्यनुपपत्तेः करणत्वं तदर्थ इत्याह—**अतः करणत्वमपीति** ॥

द्वितीयार्थः । अतश्च व्रीहिकरणकं प्रोक्षणमेवादृष्टार्थत्वेन विधीयते इति प्राप्ते—

कर्मणि द्वितीयेत्यनुशासनाद् घटं करोतीत्यादिप्रयोगाच्च साध्यत्वमेव द्वितीयार्थो न करणत्वम्; अनेकशक्तिकल्पनप्रसङ्गात्। कर्मत्वञ्च "कर्तुरीप्सिततमं कर्म"तिसूत्रान्नेप्सिततमत्वरूपमेव। अपि तु "तथायुक्तं चानीप्सितमि"ति सूत्रादीप्सितानीप्सितसाधारणं साध्यत्वमेव । यथाचैवं सति

## (द्वितीयायाः साध्यत्वे करणत्वे च करणत्व एव वा शक्तिरिति व्यवस्थापनम्)

न सर्वत्र करणत्वमेव तदर्थः; घटं करोतीत्यादौ साध्यत्वेऽपि प्रयोगात्, अतो यथाप्रयोगं क्वचित् साध्यत्वं क्वचित् करणत्वमपि, प्रकृते च करणतयाप्युपपत्तेर्न प्रधानकर्मतात्यागे किंचिद्बीजम् । **एतेन**—साध्यत्वार्थकत्वमनङ्गीकृत्य करणार्थत्वाङ्गीकारमात्रेणैवात्र प्राचां पूर्वपक्षे प्रयासकरणं व्यर्थमित्यपिना सूचितम् । **अथवा**—करणत्वेऽपि प्रयोगान्न साध्यत्वमात्रम् तदर्थोऽपितु करणत्वमप्यतः करणत्वे एव शक्तिरित्यर्थेनापिशब्दो योजनीयः । **यस्तु**—घटं करोतीति साध्यत्वे प्रयोगस्तत्रापि विषयतासंबन्धेन घटस्य ज्ञानं प्रतीव कृतावपि करणत्वोपपत्तेर्न विरुद्ध इत्यर्थः । तेन च कौस्तुभे उक्तेन केवलकरणत्वार्थेन न विरोधः ॥

## (प्रयोगादनुशासनप्राबल्येन गुणकर्मत्वसिद्धान्तोपक्रमः)

आचारात् स्मृतिप्राबल्यस्य साधितत्वात् कतिपयप्रयोगरूपाचारसंवादाच्च स्मृतिबोधितार्थ एव तस्याश्शक्तिर्लाघवेनाश्रयितुं युक्ता; इतरथाऽनेकशक्तिकल्पनापत्तेः, अतस्तदवगतकर्मत्वाक्षिप्तप्राधान्यानुपपत्त्या गुणकर्मत्वमेवेति सिद्धान्तमाह—**कर्मणि द्वितीयेति** ॥

## (साध्यत्वमेव द्वितीयार्थः, एवमपि अग्नेर्माणवकमित्यत्र माणवकपदात्पञ्चमीवारणार्थं सूत्रद्वयमावश्यकम्, अनीप्सितत्वादीनामन्यलभ्यत्वात्तत्र न शक्तिर्लक्षणा वा, साध्यत्वमात्रद्वितीयार्थत्वेऽपि व्रीह्यादीनां प्राधान्यावगमप्रायश्च)

**ननु** कर्मत्वस्यापीप्सितानीप्सितभेदेनानेकविधत्वादनेकशक्तिकल्पना तदवस्थेत्यत आह—**कर्मत्वंचेति** ॥ **साध्यत्वमेवेति** ॥ साध्यत्वपदं व्याप्यत्वापरपर्यायचतुर्विधक्रियाजन्यफलाश्रयत्वपरम्, **अथवा**—तत्समनियताखण्डोपाधिपरम्, नतु जन्यत्वमात्रापरपर्यायम् । तेन चतुर्विधकर्मत्वस्यापि संग्रहः । एवंच ईप्सितानीप्सितत्वस्य प्रमाणान्तरलभ्यत्वेन न तत्रापि शक्तिरित्यर्थः । **ननु** एवं सति साध्यं कर्मेत्येतावतैव निर्वाहे सूत्रद्वयप्रणयनवैयर्थ्यमित्यत आह—**यथाचैवं स**न सूत्रद्वयवैयर्थ्यं तथा कौस्तुभ एव प्रदर्शितम् । अतश्च व्रीहीणां द्वितीयया साध्यत्वाभिधानात् यागाङ्गत्वावगमेन चेप्सितत्वप्रतीतेस्तदुद्देशेन प्रोक्षणं विधीयते । दृष्टद्वारासम्भवेऽपि चादृष्टमेव द्वारं व्रीहिनिष्ठं कल्प्यते । अतएव यत्र नोपयोगः क्लृप्तः, न वा कल्पयितुं शक्यः, यथा सक्तुषु, तत्र द्वितीयया करणत्वलक्षणामङ्गीकृत्य सक्तुविशिष्टहोमस्यैव अदृष्टार्थं विधानम् । नच—अनीप्सितकर्मत्वेनाप्यन्वयोपपत्तेर्नेतीति ॥ "वारणार्थानामीप्सित" इति सूत्रेण वारणार्थानां धातूनां योगे ईप्सितस्यापादानसंज्ञाविधानात् अग्नेर्माणवकं वारयतीत्यत्राग्निपदादिव माणवकस्यापि ईप्सितत्वेनापादानसंज्ञाप्राप्तावीप्सिततमत्वेन कर्मसंज्ञाविधानायाद्यसूत्रस्यावश्यकत्वे द्वेष्योदीनसंग्रहार्थं द्वितीयसूत्रस्याप्यावश्यकत्वमिति कौस्तुभे दर्शितमित्यर्थः । **एतेन**—सूत्रद्वयवैयर्थ्यापत्तेः प्रथमोपस्थितत्वादीप्सितकर्मत्व एव तस्याः शक्तिः, अनीप्सितकर्मत्वादौ लक्षणेति न्यायसुधाकारोक्तं—**अपास्तम्**; उभयसाधारण्येनैकशक्त्यैव निर्वाहेऽन्यलभ्यांशेऽपि तत्कल्पनस्य लाक्षणिकत्वकल्पनस्य चायुक्तत्वात् । यत्रतु तद्बाधः, तत्राकथितादिसूत्रस्य लाक्षणिकत्वकल्पनेऽपि न दोष इति भावः । **ननु**—द्वितीययेप्सिततमत्वानवबोधे स्रुगादीनां केन तदवगमो येन कर्मसंज्ञया प्राधान्यमुच्येतेत्यत आह—**अतश्चेति** ॥ चेतनप्रवर्तनात्मा हि विधिरनीप्सितफले स्वतः प्रवर्तयितुमशक्नुवन् भावनाया ईप्सितभाव्यकत्वमवगमयतीतीप्सितभाव्यापेक्षायां द्वितीयया भाव्यत्वेनावगतानां स्रुगादीनां जुह्वा जुहोतीत्यादिविध्यवगतयाऽङ्गतयेप्सितत्वेन ग्रहणं नानुपपन्नमिति ईप्सिततमत्वस्य विधिनैव प्रतीतिरित्यर्थः । **नन्विति** ॥ उत्पत्तिशिष्टसोमावरुद्धत्वेनोपयोगकल्पनानुपपत्तिरित्यर्थः ॥

## (द्वितीयया प्राधान्यबोधसमर्थनम्)

नच निष्प्रयोजनत्वसप्रयोजनत्वाभ्यामेव द्रव्यस्य क्रियां प्रति गुणत्वप्रधानत्वोपपत्तौ द्वितीयातृतीययोर्निष्प्रयोजनत्वापत्तिः; "ऐन्द्या गार्हपत्यमि"त्यादौ गार्हपत्यैन्द्र्योः क्रतुसंबन्धित्वेन प्रयोजनवत्वे समाने सति गार्हपत्य एव प्राधान्यबोधस्य द्वितीयाधीनत्वात् । एवं सूक्तवाकप्रस्तरप्रहरणयोः प्रयोजनवत्त्वाविशेषेऽपि सूक्तवाके साधनताबोधस्य तृतीयाधीनत्वेन तद्वैयर्थ्यानापत्तिः । अतः सत्येव द्वितीयाश्रुतिप्रामाण्ये निष्प्रयोजनत्वात् सक्तुषु अपवाद इति कौस्तुभे द्रष्टव्यम् । **नचेति** ॥

## (सक्तून् जुहोतीत्यत्रानीप्सितकर्मत्वपरत्वशङ्का, तत्र तन्त्ररत्नाद्युक्तः जुहोतेरकर्मकत्वेन तदसंभव इति परिहारः। जुहोतेरपि सकर्मकत्वादन्यथा स्वकीयः परिहारश्च)

अत्र तन्त्ररत्नन्यायसुधाकारादिभिः "मैत्रावरुणाय दण्ड-

करणत्वलक्षणेति—वाच्यम्; तथा सति अदृष्टोपकारकस्यापि भावनायां कर्मत्वेनान्वयावश्यम्भावे तस्य द्विकर्मकत्वापत्त्योद्देश्यानेकत्वनिमित्तकवाक्यभेदापत्तेः । अतः सक्तुकरणकहोमस्यारादुपकारकत्वेऽपि प्रोक्षणादेः सन्निपत्योपकारकत्वमेव । प्रयोजनं पूर्ववत् ॥ ४ ॥ **इति पञ्चमं व्रीहिप्रोक्षणाधिकरणम् ॥**

**( ६ अधिकरणम् ॥ )**

आज्यैः स्तुवते, प्रउगं शंसतीत्यादिस्तोत्रशस्त्राणां यागीयदेवतादिप्रकाशकतयाऽन्यमन्त्रवदेव दृष्टार्थत्वादवघातादिवदेव सन्निपत्योपकारकत्वमिति प्राप्ते ।

लोके गुणिनिष्ठगुणतात्पर्यकाभिधानस्यैव स्तुतिपदवाच्यत्वेन प्रसिद्धत्वात् प्रगीताप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणतात्पर्यकाभिधानस्य च स्तोत्रशस्त्रपदवाच्यत्वात् तेषां गुणिप्रकाशनतात्पर्यकत्वासम्भवेन नैषां मन्त्राणां गुणिप्रकाशनार्थत्वम् अपि तु गुणप्रकाशनरूपाणां स्तोत्रशस्त्राणामात्मनिष्ठादृष्टार्थतया आरादुपकारत्वमेव । न च प्रयाजशेषाभिघारणन्यायेन दृष्टार्थत्वानुरोधेन लक्षणया गुणिप्रकाशनरूपत्वम्; लिङ्गादेव तादृक्त्वोपपत्तौ विधिवैयर्थ्यात् । एवंच

---

मि''त्यादौ ददातेस्सकर्मकत्वात् मैत्रावरुणादीनामनीप्सितकर्मत्वेनान्वयसंभवेऽपीह जुहोतेरकर्मकत्वात् न सक्तूनामनीप्सितकर्मत्वेनान्वयः संभवतीत्यतः करणत्वलक्षणेत्युक्तम्, तद्धुतो हुतः पर्यावर्तत इति कर्मनिष्ठाप्रयोगात् ''तृतीया च होश्छन्दसी''तिसूत्रेण होः कर्मणि तृतीयाविधानाच्च तस्यापि सकर्मकत्वावगतेरकिंचित्करमित्युपेक्ष्यान्यथा समाधत्ते—**तथासतीति । प्रयोजनमिति ॥**

**( पूर्वाधिकरणपूर्वपक्षसिद्धान्तप्रयोजनस्यात्रापि तत्वेन निरूपणम् )**

पूर्वपक्षे स्रुगादीनामुपादेयत्वेन विवक्षितसङ्ख्यात्वात् कपिञ्जलाधिकरणन्यायेन स्रुग्विवृद्धावपि त्रित्वसङ्ख्यावच्छिन्नैरेव सम्मार्गादिकम् । यवप्रयोगेऽपिच प्रोक्षणार्थव्रीह्यादिसंपादनम्, सिद्धान्तेतु सर्वेषामेव, यवप्रयोगेच तेष्वेव प्रोक्षणाद्यनुष्ठानान्न व्रीहिसंपादनमितिपूर्ववदित्यर्थः । **यत्तु**—भाष्यकाराद्युक्तं प्रयोजनं, तद्दूषणं कौस्तुभ एव द्रष्टव्यम् ॥

**॥ इति पञ्चमं व्रीहिप्रोक्षणाधिकरणम् ॥**

---

**( पूर्वाधिकरणेनापवादसंगतिः देवतास्तुतेः मण्डूकादिप्रकाशकतया स्तोत्रशस्त्राणां दृष्टार्थतया गुणकर्मत्वपूर्वपक्षश्च )**

पूर्वाधिकरणे साधितस्य गुणकर्मत्वस्येहापवादकरणादापवादकीं सङ्गतिं स्पष्टत्वात् संशयं चानभिधाय विषयप्रदर्शनपूर्वकं पूर्वपक्षमेवाह—**आज्यैरिति ॥** प्रउगसंज्ञकः शस्त्रविशेषः । आदिपदेन ''पृष्ठैः स्तुवते'' निष्कैवल्यं शंसती''त्यादीनां संग्रहः । स्तोत्रं नाम प्रगीतमन्त्रसाध्यगुणगुणिसंबन्धकीर्तनम् । तदेवाप्रगीतमन्त्रसाध्यं शस्त्रमिति तयोर्भेदः । यद्यपि विषयतासंबन्धेन गुणगुणिनोरुभयोरपि संबन्धकीर्तनात्मकस्तोत्रशस्त्रे प्रति करणत्वमस्ति; तथापि तयोः प्रयोजनापेक्षायां कर्मानुपयुक्तगुणप्रकाशनार्थत्वायोगेऽपि कर्मोपयुक्तगुणिप्रकाशनार्थत्वेन दृष्टार्थत्वसंभवेऽदृष्टार्थत्वकल्पनायोगान् याज्यादिमन्त्रवदेव दृष्टार्थत्वलाभाय प्रकाशनार्थत्वमेव युक्तमिति गुणिसंस्कारकत्वात् गुणकर्मत्वमेवेति पूर्वपक्षमाह—**यागीयेति ॥** नच—द्वितीयाश्रुत्यभावे कथं गुणकर्मत्वमिति—शङ्क्यम्; तदभावेऽपि गुण्यङ्गताबोधकलिङ्गमात्रादपि तदुपपत्तेः । अतएव ''तुल्यश्रुतित्वाद्वेतरैः सधर्मः स्यादि''ति पूर्वतनसिद्धान्तसूत्रे श्रुतिग्रहणमुपलक्षणमिति भावः ॥ आग्निमारुतादौ ''अक्षसूक्तं शंसति'' ''मण्डूकसूक्तं शंसती''त्येवमाद्याम्नातानामक्षमण्डूकादीनां देवतात्वाभावेन देवताप्रकाशकत्वानुपपत्ते राजसूयाग्निचयनयोर्विनियुक्ताक्षमण्डूकस्तुत्यमात्रप्रकाशकत्वस्य दृश्यतेचेति गुणसूत्रेणेह शङ्कितत्वात् ''स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताविधानत्वादि''ति पूर्वपक्षसूत्रगतं देवतापदं स्तुत्यमात्रोपलक्षणमिति सूचयितुं देवतादीत्यादिपदोपादानम् ॥

**( स्तोत्रशस्त्रयोर्गुणिप्रकाशनपरत्वे लक्षणाप्रसङ्गेनादृष्टार्थत्वोपपादनम् )**

श्रुतार्थस्यैव प्रयोजनापेक्षायां तदविरोधेनैव प्रयोजनस्य कल्पना युक्तेत्यभिप्रेत्य सिद्धान्तमाह—**लोक इति ॥** 'वक्रकेशान्तो देवदत्त' इत्यादौ यथागुणाभिधाने स्तुतिबुद्धिर्भवति, न तथा वक्रकेशान्तं तमानयेत्यादावित्यर्थः । **ननु** ''प्रयाजशेषेण हवींष्यभिघारयती''त्यत्र प्रयाजशेषप्रतिपत्त्यर्थतया दृष्टार्थतानुरोधेन विभक्तिद्वये लक्षणाश्रयणवत्, इहापि स्तौतिशंसत्योः प्रकाशने लक्षणास्त्वित्याशङ्क्य निरस्यति—**नचेति ॥** याज्यादिमन्त्रेष्विव प्रकाशनस्य लिङ्गकल्प्यमन्त्रविनियोजकश्रुत्यैव प्राप्तिसंभवेनेह गुणपरिसङ्ख्याद्यर्थत्वाभावेन विधिवैयर्थ्यापत्तेर्मन्त्राणां दृष्टार्थत्वस्य स्तुतिनिष्पादकतया सिद्धान्तेऽप्यक्षतेः स्तुतिस्वरूपस्य दृष्टार्थत्वकल्पने स्तुतिस्वरूपस्यैव बाधापत्तेरगत्या शक्यार्थस्यैवादृष्टार्थतया विधिसार्थक्यमन्यथा वैयर्थ्यमित्यर्थः । एवं लिङ्गबाधकं श्रुतिविरोधमुपन्यस्य क्रमसंबन्धिबाधापत्तिमपि दर्शयति—**एवंचेति ॥**

**( क्रमसन्निध्यबाधायापि स्तोत्रशस्त्रयोरारादुपकारकत्वोपपादनम् )**

यदि स्तौतिशंसत्योर्गुणिप्रकाशनलक्षणार्थतामङ्गीकृत्य गुणिस्मरणार्थत्वम्, तदा माहेन्द्रग्रहयागाभ्यासक्रमे पृष्ठस्तोत्रसाधनत्वेन विहितयोः ''अभित्वा शूरनोनुमः'' ''नत्वावमन्ये'' इत्यनयोः अविद्यमानार्थकमन्त्रयोरिन्द्रलिङ्गत्वेन महेन्द्रप्रका-

माहेन्द्रयागसन्निधौ ऐन्द्रीस्तुतिरुपपन्ना भवति । इतरथा शब्दसमवायिनी देवता विधिगतशब्देनैव निगमेषु वक्तव्येति महेन्द्रो नेन्द्रशब्देन शक्यते प्रकाशयितुम्। अतो यत्रेन्द्र एव देवता तत्रोत्कर्षापत्तिः, सामान्यसंबन्धबोधकप्रमाणाभावेन वा मनोतास्थाग्निशब्दवल्लक्षणया इन्द्रपदेन महेन्द्रस्यैव प्रकाशनापत्तिः । तस्मात् प्रधानकर्मणी स्तोत्रशस्त्रे ॥ ६ ॥ **इति षष्ठं स्तुतशस्त्राधिकरणम्।**

**(७ अधिकरणम्।)**

गुणकर्मप्रधानकर्मविधायकाख्यातद्वये निरूपिते प्रसङ्गादभिधायकं तृतीयमाख्यातं निरूप्यते । मन्त्रगतानां ब्राह्मणगतानांच यत्तच्छब्दादिसमभिव्याहृतानामाख्यातानामपि विधायकत्वम्। सत्यामपि च प्रमाणान्तरेण प्राप्तौ अभ्यासात् कर्मभेद इति प्राप्ते—

"देवांश्च याभिर्यजते" "यस्योभयं हविरार्तिमार्च्छेदि"त्यादौ यच्छब्दस्य प्रासिद्योतकत्वेन स्वविषये अज्ञातज्ञापनरूपविधिप्रतिबन्धकत्वं स्पष्टम्। एवं "अग्नीदग्नीन्विहरे"त्यादौ संबोधनविभक्तेरभिमुखश्रोतृमात्रविषयाया अभिमुखानभिमुखसाधारणविधिविरोधित्वम्। दामीत्यादेरुत्त-

---

शनानुपपत्तेः इन्द्रस्य च यागानङ्गत्वेन प्रकाशनानुपयोगात् यत्रेन्द्रो देवता तत्प्रकरण एव पूषानुमन्त्रणमन्त्रवदुत्कर्षापत्तौ यजुर्वेदविहितग्रहयागाभ्यासक्रमेण सामवेदान्तर्गतोत्तराग्रन्थे पठितर्चां यथाक्रमं पाठेनावगताङ्गभावानां मध्येऽनयोर्मन्त्रयोस्तदङ्गीकारकमस्य तत्साध्यस्तोत्रस्यच बाधापत्तिः । उत्तरयोश्च ककुप्भूतत्वसंपादनाय "पादं पुनरारभते" इत्यादिना माहेन्द्रग्रहसन्निधावाम्नातस्य प्रग्रथनस्य तदङ्गत्वानङ्गीकारात् तत्सन्निधिबाधापत्तिश्च । अतो दुर्बलयोरपि क्रमसन्निध्योरबाधेनोपपत्तौ बाधायोगात् गुणप्रकाशनार्थत्वेचेन्द्रमाहेन्द्रयोर्गुणैक्येन महेन्द्रवृत्तिगुणप्रकाशकत्वोपपत्त्या तयोरनुग्रहेण आरादुपकारकत्वमेव स्तोत्रशस्त्राणां युक्तमित्यर्थः ॥

**(महेन्द्रेन्द्रपदयोर्भिन्नदेवतात्वसमर्थनेनेन्द्रमन्त्राणां महेन्द्राप्रकाशकत्वोपपादनम्)**

**ननु** इन्द्रस्यैव वृत्रवधोत्तरकालं महत्वयोगेन "यन्महानिन्द्रोऽभवत्तन्महेन्द्रस्य महेन्द्रत्वमि"ति महेन्द्रशब्दवाच्यत्वस्मृतेः समुदायशक्तौ प्रमाणाभावेन महत्वगुणविशिष्टत्वेन महेन्द्रत्वादैन्द्रमन्त्राभ्यासेऽपि तत्प्रकाशनोपपत्तेर्नोत्कर्षापत्तिरित्याशङ्कानिरासायाह—**इतरथेति** ॥ "माहेन्द्रं ग्रहं गृह्णाती"त्यत्र महेन्द्रपदादुत्पन्नेन देवतातद्धितेन देवतात्वविशिष्टद्रव्याभिधानात् देवतात्वस्य च वृद्धव्यवहारेण त्यज्यमानद्रव्योद्देश्यत्वरूपस्यानुचार्येऽर्थेऽसंभवात् तद्धिताभिहितोद्देश्यत्वाख्यदेवतात्वान्वयार्थं वृत्रवधोत्तरं महत्त्वेन तदुपपादने वेदस्यानित्यत्वप्रसङ्गात् तद्धितवृद्धौ सामर्थ्यस्यापेक्षणेनाश्वकर्णादिशब्दवदवयवार्थानपेक्षणेन समुदायवृत्त्याऽर्थान्तरप्रतिपादकेन महेन्द्रप्रातिपदिकेन महेन्द्रपदलक्षणया तस्यैव तद्धितेन देवतात्वं विधीयत इति विधिगतशब्देनैव निगमेषु वक्तव्येति दाशमिकन्यायात् तत्पर्यायशक्रादिप्रयोगानुपपत्तौ सुतरां शुद्धेन्द्रपदप्रयोगायोगात् तेन प्रकाशनानुपपत्तेरुत्कर्षापत्त्यादिकमनिवार्यमित्यर्थः ॥

**(त्वं ह्यग्ने इत्यत्राग्निशब्दस्य मनोतालक्षकत्वेऽपि प्रकृते इन्द्रशब्दस्य महेन्द्रलक्षकत्वापत्तिरिति निरूपणम्। प्रयोजननिरूपणं च)**

**मनोतास्थेति** ॥ पशावग्नीषोमयोर्देवतात्वेऽपि "त्वं ह्यग्ने प्रथमो मनोते"तिमन्त्रेऽग्निपदे स्वसहचरितसोमलक्षणावत् इहापीन्द्रपदे तल्लक्षणापत्तिः । नचेह सा युक्ता; तत्र श्रुतिविरोधाभावात्, प्रत्युत "मनोतायै हविषोऽवदीयमानस्यानुब्रूही"ति प्रैषसामर्थ्याद्धविर्देवतास्मृत्यर्थत्वावगतितात्पर्यग्राहकवशात् तदाश्रयणेऽपीह तदाश्रयणस्यायुक्तत्वादित्यर्थः । प्राकरणिकेन्द्रयागे सामान्यसंबन्धबोधकप्रमाणसत्त्वेऽपि तदवान्तरप्रकरणपठितमन्त्रान्तरावरोधेऽस्य विनिवेशायोगात् प्रकरणबहिर्भूतेन्द्रयागे निवेशेनोत्कर्षमभिप्रेत्य सामान्यसंबन्धबोधकप्रमाणाभावेन वेत्युक्तम् । विस्तरस्तु कौस्तुभे द्रष्टव्यः । सिद्धान्तमुपसंहरति—**तस्मादिति** ॥ प्रयोजनं यत्र अग्निष्टुत्यां 'आग्नेयग्रहा भवन्ती'ति वचनेन सर्वग्रहेष्वाग्नेयत्वं विहितम्, तत्र प्रकृतितो नानादैवत्यस्तोत्रशस्त्राणां प्राप्तौ पूर्वपक्षे देवतासंस्कारत्वात् यथादेवतमूहितव्यम् । सिद्धान्ते त्वदृष्टार्थत्वादनूह इति देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यादिति सूत्रेणैव दशमचतुर्थपादे वक्ष्यत इति नोक्तम् ॥

**॥ इति षष्ठं स्तुतशस्त्राधिकरणम् ॥**

**(यच्छब्दादिसमभिव्याहृतमन्त्रब्राह्मणगताख्यातविषयत्वोपपादनम्)**

उत्तरविचारस्य सङ्गतिमाह—**गुणकर्मेति** ॥ **अभिधायकमिति** । अनुवादकमित्यर्थः । सौत्रं मन्त्रपदं यच्छब्दादिसमभिव्याहृताख्यातमात्रोपलक्षणम्, नतु मन्त्रत्वमविधायकत्वे ब्राह्मणत्वं च विधायकत्वे तन्त्रमित्येतदर्थम्; "वसन्ताय कपिञ्जलानि"त्यादौ मन्त्रत्वेऽपि विधायकत्वात्; "यस्योभयमि"त्यस्य ब्राह्मणत्वेऽप्यभिधायकत्वात्, इत्यभिप्रेत्य मन्त्रगताख्यातस्येव ब्राह्मणगतानामपि तेषामुदाहरणत्वं दर्शयति—**मन्त्रगतानामिति** ॥ यच्छब्दादीत्यादिपदेन संबोधनविभक्त्युत्तमपुरुषादिशब्दानां संग्रहः ॥

**(देवांश्च याभिरिति मन्त्रार्थस्तद्विनियोगस्थलं च)**

**देवांश्चेति** ॥ "न ता नशन्ति न दभाति तस्करो नासामामित्रो व्यथिरादधर्षति । देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सहे"त्येतावतो मन्त्रत्वेऽपि प्रकृतोपयोगविवक्षया तृतीयपादमात्रोपादानम् । याभिर्गोभिर्यजते

मपुरुषस्य च परप्रवर्तनारूपविधिविरोधित्वम् अतो विधायकत्वासंभवान्मन्त्रगतानां स्मारकत्वं, ब्राह्मणगतानां निमित्तप्रतिपादकत्वं लक्षणयेति द्रष्टव्यम् ॥ ७ ॥ **इति सप्तमं मन्त्राभिधायकत्वाधिकरणम् ॥**

---

याश्च ददाति ता गावो न नश्यन्ति नच तस्करो दभ्नाति हरति। नचासाङ्गवाममित्रकृतो **व्यथिरुपद्रव आदधर्षति** पीडयति गोस्वामी च ताभिस्सह **ज्योक्च** चिरं कालं **इत्** निश्रेयसेन **सचते** संयुक्तो भवतीति गोस्तुत्यर्थमन्त्रार्थः। अयं आनुबन्ध्ययागाङ्गपशुपुरोडाशानुनिर्वाप्यदेवीहविर्यागे चरुद्रव्यके गोदेवत्वे याज्यात्वेन विनियुक्तः ॥

## ( यद्यदिप्रभृतीनां विधिशक्तिप्रतिबन्धकत्वोपपादनम् )

**नच**—यच्छब्दस्य स्वार्थमात्रे सिद्धताद्योतकत्वात् गोस्वरूपानुवादेऽपि तस्याः साधनत्वेन विध्युपपत्तिरिति—**वाच्यम्;** यः पाकं करोति स भुङ्क्ते इत्यादौ तच्छब्दावधिप्राप्तानुवादकत्वस्य लोके दर्शनेनेहापि या गा ददाति ता न नशन्तीति यच्छब्दसमभिव्याहारेण तच्छब्दावध्यनुवादकत्वप्रतीत्या यागदानयोः सिद्धानुवादप्रतीतेर्विधेयत्वायोगात्। अत एव यत्र कर्तृसमभिव्याहृतः तत्रापि कृत्याश्रयत्वरूपकर्तृत्वस्य सिद्धताप्रतीत्या कृतेरपि सिद्धताप्रतीत्या न विधेयत्वम्। एवं सत्यपि यदि कथंचिदप्यालोच्यमाने प्राप्तिर्न संभाव्येत, तदा "यदाग्नेयोऽष्टाकपाल" इतिवत् स्वार्थमात्रप्रसिद्धिद्योतकतामङ्गीकृत्य विधेरगत्या विधायकत्वमप्याश्रीयेत, नत्वेतदस्ति; गोद्रव्यकयागदानादेरनेकविधिभिः प्राप्तत्वादित्यर्थः। एवं यदिशब्दस्यापि निमित्तत्वपरत्वात् स्वसमभिव्याहृतप्राप्तिद्योतकत्वं द्रष्टव्यम्। एवमग्नीदिति वक्त्रा श्रोत्राभिमुख्येन विधानं वेदे वक्तुरभावान्न संभवतीत्यध्वर्युवक्तृत्वानुवादकत्वमेवेत्यर्थः। अत एव अत्र लोडपि नालौकिकविध्यर्थकः, किंतु "प्रैषातिसर्गप्राप्तकालेतु कृत्याश्च"ति सूत्रात् प्रैषार्थक एवेति ध्येयम्। **परप्रवर्तनेति** यत्रतूत्तमपुरुषेप्यहं दयामिति लिङ्प्रयोगस्तत्रतु स्वनिष्ठप्रवर्तनापरत्वं तत्र लक्षणया नेयमिति द्रष्टव्यम् ॥

## ( विधिशक्तिप्रतिबन्धकयदादिशब्दस्य धर्मोपयोगनिरूपणम् )

नचैवं तर्हि तेषामानर्थक्यम्; ब्राह्मणादिगतानां आख्यातान्तरैकवाक्यतया निमित्तत्वप्रतिपादकतयोपयोगात्। मन्त्रगतानान्तु यद्यपि विधेयत्वेनोद्देश्यसमर्पकत्वेनोपयोगाभावात् स्तावकतया च दूरस्थत्वेन पदैकवाक्यताभावादनुपपत्तेः पदार्थविधया स्तुतिमात्रलक्षणायामपि स्वार्थबोधे समाप्त्यभावेन वाक्यैकवाक्यताया अप्यसंभवान्नोपयोगः संभवति; तथापि

## ( ८ अधिकरणम्। )

मन्त्रप्रसङ्गात् "अहेबुध्निय मन्त्रं मे गोपाये"ति वेदप्रयुक्तमन्त्रशब्दार्थनिर्णयाय तल्लक्षणमुच्यते। यत्राभियुक्तानां मन्त्रपदवाच्यत्वप्रकारिकोपस्थितिर्विशेष्यतासंबन्धेन समन्त्रः।

---

पारिशेष्यान्मन्त्राधिकरणन्यायेन स्मारकत्वेनैव स इत्याह—**अत इति** ॥ प्रयोजनं स्पष्टत्वान्नोक्तम् ॥

**॥ इति सप्तमं मन्त्राभिधायकत्वाधिकरणम् ॥**

---

## ( पूर्वाधिकरणेन प्रासङ्गिकसङ्गतिनिरूपणम् )

पूर्वाधिकरणे उपलक्षणतयापि सूत्रे मन्त्रशब्दप्रयोगादुपस्थितस्य मन्त्रस्य लक्षणं क्रियत इति प्रासङ्गिकीं सङ्गतिं दर्शयति—**मन्त्रप्रसङ्गादिति** ॥

## ( शास्त्रसङ्गतिनिरूपणपूर्वकमर्थप्रकाशकत्वस्यालक्षणत्वात् मन्त्रत्वप्रकारकप्रसिद्धिविषयत्वमेव मन्त्रत्वमिति निरूपणम् )

शास्त्रे वाक्यार्थविचारवत् वेदपदार्थविचारस्यापि कर्तव्यत्वेन प्रतिज्ञानादिह तत्करणेन शास्त्रसंगतिं सूचयितुं वैदिकपदार्थत्वं दर्शयितुं **अहिर्बुध्न्येत्युक्तम्।** "अहिर्बुध्न्यो रुद्र" इति प्रकाशकाराः। आवसथ्याग्निरित्यपरे। तच्छब्देन पूर्वाधिकरणोक्तमभिधानं परामृश्य तदभिधानं चोदकं प्रयोजकं येषामिति बहुव्रीहिसमासेन प्रयोगकाले अर्थप्रकाशकत्वं मन्त्रलक्षणं यद्यपि सूत्रे प्रतीयते; तथापि मन्त्रकाण्डपठितानां "वसन्ताय कपिञ्जलानालभेते"त्यादीनां मन्त्रत्वेऽपि विधायकत्वेनार्थप्रकाशकत्वाभावेनाव्याप्तेः पञ्चमे मन्त्राभावे ब्राह्मणस्यापि स्मारकत्वाङ्गीकारादतिव्याप्तेर्यथाश्रुतमयुक्तं तदित्युपेक्ष्यान्यथा लक्षणमाह—**यत्रेति** ॥

## ( मन्त्रपदवाच्यतावच्छेदकनिरूपणेनोक्तमन्त्रलक्षणस्य सूत्रारूढत्वप्रतिपादनेनात्यन्तत्वादिलक्षणखण्डनेन चोपसंहारः )

**ननु** मन्त्रपदवाच्यतावच्छेदकानिश्चये वाच्यत्वप्रकारकनिश्चयायोगान्न लक्षणसिद्धिः ॥ न हि मन्त्रत्वन्नाम जातिः; तथात्वे विधित्वादिना साङ्कर्यापत्तेः, अनेकवर्णव्यक्तीनां यौगपद्यासंभवेन मन्त्रत्वस्याभिव्यक्त्यनापत्तेश्च। नाप्युपाधिः; तस्य मन्त्रप्रसिद्धिविषयत्वरूपत्वे अन्योन्याश्रयापत्तेः, अतः कथमेतल्लक्षणमित्यत आह—**वाच्यतावच्छेदकंचेति** ॥ अखण्डोपाधिरूपस्यैव मन्त्रत्वस्य देवतात्ववत् स्वीकारेण तेन रूपेण वाच्यत्वेऽवधारिते तत्प्रकारकनिश्चयविषयत्वस्य लक्षणत्वोपपत्तिः। अतश्च तच्छब्दस्य मन्त्रपरत्वमेवाङ्गीकृत्य मन्त्रचोदकेषु मन्त्राध्येतृषु या मन्त्राख्या मन्त्रपदवाच्यत्वप्रकारिका प्रसिद्धिः, सैव विषयतासंबन्धेन लक्षणमाख्यापदप्रयोगेण सूत्रे उक्तमिति भावः। यानि अत्यन्तत्वादीनि लक्षणानि वृत्तिका-

वाच्यतावच्छेदकं च मन्त्रत्वं जातिरखण्डोपाधिर्वेत्यन्यदेतत् ॥ ८ ॥ इति अष्टमं मन्त्रलक्षणाधिकरणम् ॥

( ९ अधिकरणम् )

"एतद्ब्राह्मणानि पञ्च हवींषी"ति वेदप्रयुक्तब्राह्मणशब्दार्थपरिज्ञानार्थं तल्लक्षणमपि प्रसङ्गादेव । मन्त्रातिरिक्तवे-

दत्वमेव ब्राह्मणत्वम् ॥ ९ ॥ इति नवमं ब्राह्मणलक्षणाधिकरणम् ॥

( १० अधिकरणम् । )

ऊहप्रवरनामधेयानां सत्यपि प्रयोगकाले अर्थस्मरणार्थमुच्चार्यत्वे मन्त्रपदैकवाक्यत्वे च स्वरूपेण वेदे पठितत्वादभियुक्तप्रसिध्द्यविषयत्वेन नैषां मन्त्रत्वम् । अतश्च नैषां त्रेषे

---

रेण कृतानि, तानि कथंचित्स्वरूपकथनमात्रपरतया नेयानि, नतु लक्षणत्वेन "इष्यश्वासि वन्यश्च वाजिन्नि"ति मन्त्रेऽसिमध्यत्वेन "तत्त्वा यामि ब्रह्मणे"ति मन्त्रे त्वामध्यत्वेनाव्याप्तेरित्यादि प्राचां ग्रन्थेष्वेव द्रष्टव्यम् । प्रयोजनम्—"आक्षेपेष्वपवादेषु प्राप्त्यां लक्षणकर्मणि । प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्तत" इत्यभियुक्त्या लक्ष्यज्ञानरूपस्यैव स्पष्टत्वात्—न पृथग्वाच्यमिति नोक्तम् ॥

॥ इत्यष्टमं मन्त्रलक्षणाधिकरणम् ॥

---

( शास्त्रानन्तरसङ्गतिनिरूपणपूर्वकं मन्त्रातिरिक्तवेदवाक्यत्वं ब्राह्मणस्य लक्षणमिति अर्थवादोपनिषदामपि विधावेवान्तर्भावेनोपपादनम् )

पूर्ववदेव वैदिकपदार्थविचारेण शास्त्रसङ्गतिं प्रसङ्गसङ्गतिं चानन्तरं दर्शयन् ब्राह्मणलक्षणं यद्यपि मन्त्रलक्षणवदेव यत्राभियुक्तानां ब्राह्मणपदवाच्यत्वप्रसिद्धिविषयत्वरूपं शक्यते वक्तुम्, इतरथा ब्राह्मणातिरिक्तवेदत्वं मन्त्रत्वमित्येवंरूपस्य मन्त्रलक्षणस्यापि संभवेन विनिगमनाविरहापत्तेः; तथापि स्वतन्त्रस्यार्थेर्नियन्तुमशक्यत्वादिति न्यायेन सूत्रकृदुक्तमेव लक्षणं दर्शयति—**एतद्ब्राह्मणानीति** ॥ **वस्तुतस्तु**—शेषे ब्राह्मणमित्येतावतैव सिद्धेः शब्दशब्दप्रयोगेणाभियुक्तप्रसिद्धिमूलकत्वमेव पूर्वोक्तलक्षणस्य प्रतीयत इति न विनिगमनाविरह—**इति ध्येयम्** । **मन्त्रातिरिक्तेति** ॥ वेदस्य ब्राह्मणमन्त्रयोः वेदनामधेयमिति द्विराशित्वोक्तेः मन्त्रातिरिक्तत्वेन लक्षणेनार्थवादानां विधीनामुपनिषदां च द्वितीयराश्यन्तर्भावः सूचितः । अत्रापि वृत्तिकारोक्तानि लक्षणानि भाष्यादावेव दूषितानि तत्रैव द्रष्टव्यानि ॥

॥ इति नवमं ब्राह्मणलक्षणाधिकरणम् ॥

---

( पूर्वाधिकरणेनापवादिकसङ्गतिः ऊहप्रवरनामस्वरूपनिरूपणपूर्वकतन्मन्त्रत्वपूर्वपक्षश्च )

पूर्वं वेदस्य द्वैराश्ये उक्ते ऊहादेरप्यनुमानादिगम्यवेदत्वाभ्युपगमात् तत्रच विधिप्रयोजनत्वाभावेन ब्राह्मणत्वाभावात् परिशेषेणाथवा प्रयोगकालेऽर्थप्रकाशकत्वरूपपूर्वोक्तलक्षणभ्रान्त्या वा मन्त्रत्वे प्राप्ते तदपवादः क्रियते । अर्थाच्च द्वैराश्यस्य दृश्यमानवेदविषयत्वं सिद्धं भवतीत्येवमापवादकीं सङ्गतिं

स्पष्टत्वादनभिधाय विषयप्रदर्शनपूर्वकं पूर्वपक्षं संक्षेपेण सूचयति—**ऊहेति** ॥ "प्राकृतस्थानपतितपदार्थान्तरकार्यतः । ऊहः प्रयोगो विकृतौ ऊह्यमानतयोदितः" इत्यग्न्यादिपदस्थाने विकृतौ सूर्यादिपदप्रयोगो यो मन्त्रेषु स ऊहः । "आर्षेयं वृणीत" इत्यादिविधिवशात् काश्यपवत्सारनैध्रुवेत्यादिशब्देन आर्षेयं कीर्त्यते, स प्रवरः । सुब्रह्मण्यानिगदे यत्र "देवदत्तशर्मणः पुत्रो यजत इत्यादिना यजमानपित्रादिवाचकशब्दो यजमानस्य नाम गृह्णाती"ति विधितः प्रयुज्यते तन्नाम । **मन्त्रपदैकवाक्यत्वेचेति** ॥ इतरथा अमन्त्रैकैकवाक्यतापन्नानां मन्त्राणामपि श्लोकैकवाक्यतापन्नमन्त्राक्षरवदमन्त्रत्वापत्तिरित्यर्थः ॥

( मन्त्रैकवाक्यत्वस्यार्थप्रकाशकत्वस्य वा मन्त्रत्वाप्रयोजकत्वेनोहाद्यमन्त्रत्वसिद्धान्तः )

सिद्धान्तमाह—**स्वरूपेणेति** ॥ स्वाध्यायाध्ययनकाले तेषामपठितत्वेनाभियुक्तप्रसिध्द्यभाव इत्यर्थः । **अत एव** तेषां स्वरपूर्वकं पाठाभावेऽपि न दोषः । **नैषामिति** ॥ नच तदेकवाक्यतापन्नानां अमन्त्रत्वापत्तिः; एकपदलोपेऽपि स एव मन्त्र इति दृढतरप्रत्यभिज्ञानात् मन्त्राविनाशप्रतीतेः । अतएव याज्यान्ते स्तुतिकरणेऽपि न मन्त्रत्वहानिः । श्लोकाद्येकवाक्यतापन्नमन्त्राक्षरेषु तु प्रसिध्यभावादेव न तत् । एवंच मन्त्रैकवाक्यतायामपि इषेत्वेत्यत्र छिनद्मीत्यध्याहृतस्य मन्त्रत्वाभावेन मन्त्रैकवाक्यतायाः, अर्थप्रकाशकत्वस्यापि यथा प्रकृतिप्राप्तस्य "उपावर्तध्व"मिति मन्त्रस्य स्थाने महाव्रते "रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोती"ति वचनविहिते रथघोषेऽपि सत्त्वेन व्यभिचारान्न तन्मात्रेणैषां मन्त्रत्वमित्यर्थः॥

( विधिवाक्याम्नातेरापदस्य, आयुराशास्ते यजमानोऽसौ इत्यत्रासाविति पदस्थानीयविशेषपदानां च मन्त्रत्वनिरासः । पूर्वोत्तरपक्षप्रयोजननिरूपणं च )

**अत्रच वार्तिके**—यत् इरापदस्यैरं कृत्वोद्गेयमिति विधिवाक्ये तद्धितान्तर्गतत्वेनाम्नातत्वादस्त्येव मन्त्रत्वमित्युक्तम्, तद्दानार्थं ब्राह्मणे समाम्नातस्यापि मन्त्रप्रसिध्द्यविषयत्वेन मन्त्रत्वायोगात् कथंचित् मन्त्रकाण्डे तद्विधिपाठाभ्युपगमेऽप्यैरपदस्यैव पाठेनेरापदेन तदसंभवादतिशयार्थम् । यदपि "आशास्तेऽयं यजमानोऽसावि"त्यादिसर्वनामसंयुक्ते मन्त्रे असाविलस्य स्वाध्यायादिकाले मन्त्ररूपस्यापि कर्मकाले तत्पद-

मन्त्रभ्रेषनिमित्तं प्रायश्चित्तम्, अपितु अङ्गभ्रेषनिमित्तकमेव ॥ १० ॥ **इति दशमं ऊहामन्त्रताधिकरणम् ॥**

**( ११ अधिकरणम् । )**

तेषाम् ॥ मन्त्रत्वादौ व्यापकधर्मे निरूपिते तत्प्रसङ्गादेव तदवान्तरधर्मो ऋक्त्वादिः, "ऋचः सामानि यजूंषी"ति वेदप्रयुक्तऋगादिपदार्थपरिज्ञानार्थं निरूप्यते । पादव्यवस्थावन्मन्त्रत्वं ऋक्त्वम् ॥ ११ ॥ **इति एकादशं ऋग्लक्षणाधिकरणम् ॥**

स्थाने पठनीयस्य देवदत्तादिपदस्यापि विशेषाणामानन्त्याद्युगपत्कालत्वाचाम्नातुमशक्तेः स्वरूपस्य सर्वनामप्रकारेणास्त्येवाम्नानमित्यशून्यस्थानत्वात् मन्त्रस्य शक्यमेव निरूपणं कर्तुम् । यदत्र पदं निवेक्ष्यते तद्वानयं मन्त्र इत्यतो मन्त्रत्वमित्युक्तम्, तदपि तेषां विशेषपदानां स्वरूपेण पाठाभावात् तत्प्रसिद्धिविषयत्वानुपपत्तेः सर्वनामपाठस्यच स्वाध्यायकाले पारायणादौ चोपयुक्तत्वेनानर्थक्यस्याप्यभावादितरथा सुब्रह्मण्यानिगदे आर्षेयवरणेऽपि सामान्यात्मना आम्नानस्य विशेषपर्यवसानं विनाऽनुपपत्तेः प्रवरादीनामपि विधिविहितत्वेन मन्त्रत्वापत्तेरनिवार्यत्वादतिशयार्थमेवेत्युक्तं कौस्तुभे । **अतएव वार्तिके**—सर्वनामस्थाने प्रयुज्यमानपदानाममन्त्रत्वमाशङ्क्य तथानामेति केचिदित्यनेनेष्टापत्तिं कुर्वतां मतमप्युक्तम् । अतश्च **नैषामिति** ऊहितपदघटितसमस्तमन्त्रभ्रेषे मन्त्रभ्रेषप्रायश्चित्तस्य पक्षद्वये साम्येऽपि ऊहितपदमात्रभ्रेषे मन्त्रपदभ्रेषनिमित्तं प्रायश्चित्तं पूर्वपक्षे । सिद्धान्तेतु तस्य मन्त्रान्तर्गतत्वेऽपि मन्त्रपदत्वाभावान्न तत्, अपितु ज्ञाताज्ञाताङ्गभ्रेषनिमित्तं प्रायश्चित्तमित्यर्थः ॥

**॥ इति दशममूहामन्त्रताधिकरणम् ॥**

**( प्रायपाठार्थवृत्तवशादिकृतपादव्यवस्थावन्मन्त्रत्वं, ऋक्त्वमिति, ऋग्लक्षणनिरूपणम् )**

यद्यपि अर्थवशेनेति हेतूपादानसहितं लक्षणमुक्तम्, तथापि तत्प्रवेशमन्तरेणापि निर्दोषतया लक्षणोपपत्तिमभिप्रेत्य ऋग्लक्षणमाह—**पादव्यवस्थावदिति** ॥ सूत्रगततच्छब्दपरामृष्टमन्त्रत्वोक्त्या श्लोकादावतिव्याप्तिनिरासः सूचितः । साच पादव्यवस्था "अग्निमीळे पुरोहितमि"त्यत्र ऋगर्थपर्यवसानेऽप्यवान्तरवाक्यार्थमादायार्थवशाद्भवति । एवमपरयोरपि पादयोरीळे इत्याख्यातपदानुषङ्गेणार्थवत्त्वमिति सूत्रे उपात्तमप्यर्थवशेनेति पदं हेत्वन्तराणां वृत्तादीनामप्युपलक्षणम् । **तदुक्तं प्रातिशाख्ये**—"प्रायोऽर्थो वृत्तमित्येते पादज्ञानस्य हेतवः" इति । अस्यार्थस्तद्भाष्ये **प्रायः** प्रायपाठः, **वृत्तं तु** "वर्षिष्ठाणिष्ठयोरेषां लघूपोत्तममक्षरम् । गुरुस्त्वितरयो ऋक्षु तद्वृत्तं छन्दसां विदुः" इति प्रातिशाख्ये उक्तम् । **एषां** पदानां **वर्षिष्ठाणिष्ठयो**र्द्वादशाष्टाक्षरपादयोरुपोत्तममक्षरं लघु भवति । यथा "प्रदेवमच्छा मधुमन्त इन्दवः" इति द्वादशाक्षरे पादे दकार उपोत्तमो लघुर्भवति तदन्त्याक्षरान्तः पादो ज्ञातव्यः । यथा "अग्निमीळ" इत्यत्र हिकार उपोत्तमो लघुर्भवति तदन्त्याक्षरान्तः पादो भवति । **इतरयोः** दशैकादशाक्षरयोस्तु उपोत्तमं गुरुर्भवति तदन्त्याक्षर एव पादः । यथा "श्रुधी हवं विपिपानस्याद्रे"रिति दशाक्षरे पादे **स्या** इति गुरुर्भवति । यथावा "पिबा सोममभियमुग्रतर्द" इत्येकादशाक्षरे पादे **र्द** इति संयुक्ताक्षरे विद्यमाने पूर्वस्य गुरुत्वात् तकारो गुरुर्भवति । तदन्त्याक्षरान्तौ तौ पादौ ज्ञेयावित्यर्थः । प्रायपाठोदाहरणं तु "गोर्नपर्वविरदातिरश्चे"ति त्रैष्टुभे पादे एकादशाक्षरत्वमपेक्षितम् । वर्ततेतु दशाक्षरत्वं तत्र नैत्यक्षरे रकारनकारयोः व्यूहनेनैकादशाक्षरः क्रियते । तत्र त्रैष्टुभे अस्मिन् सूक्ते पूर्वोत्तरपदानां एकादशाक्षरत्वमस्ति । तत्प्रायपाठ एव हेतुः । अर्थोदाहरणं तु उक्तमेव । अन्यदपि घृणानोऽद्रिर्देवतानित्यन्तःपादोऽर्थवशात् । "तमुस्तमिन्द्रं न रेजमानमि"ति त्रैष्टुभे पादे एकेनाक्षरेण न्यूनेऽप्यल्पवैषम्येण तत्रैव नमित्यत्र पादान्तत्वम् । "एवादेवाँइन्द्रो विव्ये नृन्प्रश्च्यौत्नेन मघवा सत्यराधाः । विश्वेत्ताते हरिवः शचीवोभितुरासः स्वयशो गृणन्ती"त्यस्यामृचि उत्तरार्धर्चे दशाक्षरौ द्वौ पादौ । पूर्वार्धर्चे तु अर्थवशेन नृनित्यन्तं पादान्तो भवति । वृत्तवशादन्ते नृनित्यस्योपोत्तमस्य गुरुत्वात् तत्र वृत्तापेक्षयाऽर्थस्य बलवत्त्वात् नृनित्यन्ते पादे प्राप्ते नृउत्तरार्धर्चगतदशाक्षरपादद्वयप्रायपाठेनार्थापेक्षयापि बलीयसा प्रेत्यन्तपादोवसीयते । **तदुक्तं प्रातिशाख्ये**—'तद्विशेषसन्निपातेतु पूर्वं पूर्वं परं परम्, इति प्रायोऽर्थवृत्तानां समवाये पूर्वं पूर्वं प्रबलं उत्तरमुत्तरं दुर्बलमित्यर्थः । **एतेन**—"अग्निः पूर्वेभिर्ऋषिभिरि"त्यत्र क्रियापदानुपादानादपर्यवसितार्थे वृत्तवशेन व्यवस्थेत्युक्तं यद्वार्तिके तदपि—**व्याख्यातम्; यत्तु**—न्यायसुधाकारादीनां लघुगुर्वक्षरसाम्याद्वृत्तवशेनेति वार्तिकगतवृत्तपदव्याख्यानम्, **तदयुक्तम्**, वार्तिकगतवृत्तपदस्य पूर्वदर्शितप्रातिशाख्योक्तवृत्तार्थत्वेनाप्युपपत्तेः । लघुगुर्वक्षरसमाख्यवृत्तपरतया व्याख्यानस्य निष्प्रमाणत्वात् । अतएव वृत्तापेक्षया बलवतार्थवशेनेड्य इत्यन्तस्य पादान्तत्वे प्राप्ते अग्निमीळ इत्याद्यष्टाक्षरप्रायपाठेनार्थापेक्षया बलीयसैव पादव्यवस्था युक्ता । वार्तिके वृत्तोपन्यासो न ईड्य इत्यन्तस्य पादान्तत्वाव्यावृत्त्यर्थोऽपि तु ऋषिभिरित्यन्तस्य पादान्तत्वं नार्थवशेन भवति केन तर्हीत्यपेक्षायां तदुपपादनमात्रार्थ एव । एवं स्थिते अग्निमीळ इत्यादौ वृत्तार्थाक्षरसङ्ख्यानियमछन्दोलक्षणानां पादव्यवस्थाहेतूनां समुच्चयेऽपि न क्षतिरिति ज्ञेयम् । इदंच मूलानपेक्षितमपि कौस्तुभदर्शितोदाहरणशोधनिकार्थं प्रसङ्गादत्रोपपादितम् ॥

**॥ इत्येकादशं ऋग्लक्षणाधिकरणम् ॥**

( १२ अधिकरणम्। )

मन्त्रत्वसमानाधिकरणगीतत्वं सामत्वम् ॥ १२ ॥ इति द्वादशं सामलक्षणाधिकरणम्॥

( १३ अधिकरणम्। )

ऋक्सामभिन्नमन्त्रत्वं यजुष्ट्वम्, स्तोभाक्षरेष्वपि तत्त्वातिव्याप्तिः ॥ १३ ॥ इति त्रयोदशं यजुर्मन्त्रलक्षणाधिकरणम्॥

( १४ अधिकरणम्। )

निगदसंज्ञकानां मन्त्राणां संज्ञाभेदादुपांशु यजुषा उच्चैर्निगदेनेति विप्रतिषिद्धधर्मभेदाच्च भेदो यजुर्भ्य इति प्राप्ते—

( सामलक्षणम् सामशब्दस्य गीतिपरत्वम्, साप्तमिकाधिकरणस्यैतदाकृत्यधिकरणाभ्यामपौनरुक्त्यमित्यादीनां निरूपणम् )

अत्रापि सूत्रे तेषामिति पदानुवृत्त्या मन्त्रगतत्वस्य लाभेनाभियुक्तप्रसिद्धिमूलोपपत्तिकं सामलक्षणमाह—**मन्त्रत्वेति॥** तेन न लौकिकगीतावतिव्याप्तिः । यद्यपि गीतिविशिष्टायामृचि अभियुक्तानां प्रयोगः;तथापि "एकखण्डेन शब्देन विशिष्टो यत्र गम्यते । विशेषणस्य वाच्यत्वं तत्र सर्वत्र जायत" इति वार्तिकोक्तेन नागृहीतविशेषणन्यायेन ऋचां व्यक्तेरिव लक्षणादिनापि भानोपपत्तेर्विशेषणीभूतगीतिवाचित्वस्यैव लाघवेन सप्तमे साधनीयस्यानागतावेक्षणन्यायेन सूत्रकृतेहोपादानं कृतम् । अतएव न तेन पौनरुक्त्यम् । नह्यत्र गीतिमात्रवाचित्वसाधनस्य प्रयोजनमस्ति; गीतिविशिष्टऋग्वाचित्वेनापि ऋगादिभ्यो भेदसिद्धेः, सप्तमे तु "कवतीषु रथन्तरं गायती"त्यनेन "कयानश्चित्रे"त्यस्यामृचि विहिते रथन्तरे रथन्तरशब्दस्य ऋक्पर्यन्तवाचित्वे ऋचो ऋगधिकरणत्वासंभवात् कवतीशब्दे कार्यलक्षणापत्तिभिया गीतिमात्रवाचित्वसाधनमभीवत्यामुत्पन्नरथन्तरगीतेरतिदेशसिध्यर्थमुपयुक्तमिति तत्रत्यस्यैव सिद्धवत्कारेणेहोक्तत्वात् साप्तमिकाधिकरणस्याप्याकृत्यधिकरणप्रयोजनकथनार्थत्वात् नाकृत्यधिकरणेन पौनरुक्त्यमपीति **ध्येयम्॥** यद्यपि रथन्तरादिशब्दानां गीतिवाचित्वं साधितम् न सामशब्दस्य; तथापि विशेषवाचकपदानां गीतिवाचित्वे साधिते तेषां रथन्तरं सामेत्यादौ सामान्यवाचिसामपदसामानाधिकरण्यं सामशब्दस्य गीतिसामान्यवाचित्वेनैव संभवतीत्यभिप्रेत्य सप्तमसिद्धत्वोक्त्यविरोधः ॥

**॥ इति द्वादशं सामलक्षणाधिकरणम्॥**

---

( यजुर्मन्त्रलक्षणम् )

मन्त्रत्वपदोपादानेन ब्राह्मणं व्यावर्तयन् यजुर्लक्षणमाह—**ऋक्सामेति ॥** प्राचामुक्ते लक्षणे स्तोभाक्षरेष्वतिव्याप्तिं प्रसक्तामिष्टापत्त्या परिहरति—**स्तोभेति ॥** प्रश्लिष्टपठितत्वस्य मूलग्रन्थेषु निवेशितस्यापि व्यावर्त्याभावेन पादबन्धाभाववत्वादक्षरघटितत्वरूपस्वरूपकीर्तनमात्रार्थत्वाभिप्रायेणानुपन्यासः ॥

**॥ इति त्रयोदशं यजुर्मन्त्रलक्षणाधिकरणम्॥**

---

( पूर्वाधिकरणेनाक्षेपसङ्गतिः संज्ञाभेदान्निगदानां यजुर्भेदपूर्वपक्षश्च )

शेषे यजुःशब्द इति पूर्वसूत्रेण ऋक्सामभिन्नतया यजुर्भेदकथनेन यन्मन्त्रत्रैविध्यमुक्तं तदाक्षेपेणेह पूर्वपक्षकरणादाक्षेपसङ्गतिं स्पष्टत्वादनभिधाय पूर्वपक्षमेवाह—**निगदसंज्ञकानामिति ॥** ते च प्रायः परसंबोधनार्था "अग्नीदग्नीन्विहर"इत्यादयः, "निगदो वा चतुर्थं स्यात् धर्मविशेषादि"ति पूर्वपक्षसूत्रे धर्मविशेषादिति पदेन उच्चैष्ट्वादिधर्मान्यत्वस्य **पूर्वपक्ष**हेतुतया प्राथम्योक्तेः "व्यपदेशाच्चे"ति द्वितीयसूत्रेण संज्ञाभेदस्य तद्धेतुताया उत्तरत्र सूचनेऽपि "वेदो वा प्रायदर्शनादि"ति तार्तीयवाक्याधिकरणे उपांशुत्वादीनां तत्तन्मन्त्रधर्मत्वनिरासेन तत्तद्वेदविहितकर्मधर्मत्वस्य वक्ष्यमाणत्वेन तद्विरुद्धस्य मन्त्रधर्मान्यत्वहेतोस्तदधिकरणपूर्वपक्षस्थतयोक्तस्याभ्युच्चयहेतुत्वप्रतीतेर्मुख्यत्वमुत्तरहेतोरेवेति सूचयितुं सौत्रक्रमं विहाय द्वितीयमेव हेतुमादितो मुख्यत्वाद्दर्शयति—**संज्ञाभेदादिति ॥** इमे निगदा इमानि यजूंषीत्येवं भिन्नसंज्ञाभिर्व्यवहारात् ज्योतिरादिवत् भेद इत्यर्थः । **विप्रतिषिद्धेति ॥**

( उच्चैर्निगदेनेत्यस्य सामान्यशास्त्रबाधकत्वेन परप्रत्यायनरूपकार्यार्थतयाप्राप्तोच्चैस्त्वानुवादत्वेन वोपपत्तिनिरासेन पूर्वपक्षसमर्थनम् ॥

निगदानां यजुष्ट्वे उपांशुत्वप्राप्त्योश्चैष्ट्वविधानानुपपत्तेर्विशेषविहितेन बाधसंभवेऽपि स्वविषयवृत्तिभेदकल्पनया बाधेनोपपत्तौ सामान्यवाक्यस्य संकोचलक्षणबाधाभ्युपगमस्यायुक्तत्वात् स्वरूपत एव भेदकल्पना युक्ता । **नच**—परप्रत्यायनरूपकार्यानुरोधेनैवोपांशुत्वविधेः संकोचादुच्चैर्निगदेनेत्यस्यानुवादतोपपत्तेर्न तद्भेदबाधकतेति—**वाच्यम्;** मन्त्रप्रमाणकपरप्रत्यायनरूपकार्यानुरोधेन वाक्यस्यापि ब्राह्मणगतस्य संकोचायोगात्, "नमः प्रवक्त्रे" "देवेद्धो मन्विद्ध"इत्यादीनां परप्रत्यायनार्थस्याप्यभावाच्च । अत उच्चैरित्यस्य विधित्वावश्यकत्वात् भेदबोधनादपि तद्विध्युपपत्तेर्नोपांशुत्ववाक्यस्य संकोचो युक्त इत्यर्थः ॥

( ब्राह्मणपरिव्राजकन्यायेन संज्ञाभेदस्य भेदासाधकत्वेन निगदयजुष्ट्वसिद्धान्तनम् )

**मन्त्र एवेति ॥** "तदाहुः—ऋक्सुब्रह्मण्या यजूंषि सामवेति प्रश्नोत्तरभूते मन्त्र एव खल्वयं निगदभूतो भवति । त-

"ऋचः सामानि यजूंषी"ति वेदे त्रयाणामेव मन्त्रभेदानां संकीर्तनात् "मन्त्र एव खल्वयं निगदभूतो भवति तस्माद्यजुरि"ति च लिङ्गान्निगदानां यजुष्ट्वमेव, संज्ञा तु ब्राह्मणपरिव्राजकन्यायेनाभेदेऽप्युपपन्ना। निगदत्वं च यजुष्ट्वावान्तरधर्मो ननु नितरां उपांशुस्वरातिरिक्तस्वरेण गद्यमानत्वम्; "नमः प्रवक्त्रे" इत्यादिनिगदेषु उपांशुपठ्यमानेष्वव्याप्तेः। नच धर्मभेदाद्भेदः; विशेषविहितेनोच्चैष्ट्वेन सामान्यविहितस्योपांशुत्वस्यान्यपरत्वावसायात्, उपांशु यजुषेत्यस्य वेदोपक्रमानुरोधेन यजुर्वेदविहितकर्ममात्रे उपांशुत्वविधायकत्वस्य वक्ष्यमाणत्वेन भवन्मतेऽपि संकोचस्यावश्यकत्वाच्च। नचैवमुपक्रमवशेन यजुःपदे वेदलक्षणावन्निगदपदेऽपि यजुर्वेदलक्षणापत्तेरेकस्मिन्कर्मणि धर्मद्वयविकल्पापत्तिः, "वायोर्यजुर्वेद" इत्युपक्रमस्य यजुःपद एव लक्षणातात्पर्यग्राहकत्वात्, अन्यथा वायोर्निगदवेद इत्यपि किं नावक्ष्यत्। अतश्चोच्चैर्निगदेनेति स्वतन्त्र एव निरर्थवादकोऽयमुच्चैष्ट्वनियमविधिर्विशेषविहितातिरिक्तनिगदोद्देशेन। तेषु हि परप्रत्यायनरूपकार्यवशेनोपांशुत्वनिवृत्तावपि मन्द्राद्यनेकस्वरप्राप्तौ उच्चैष्ट्वनियमो नानुपपन्नः। अतो निगदभ्रेषे यजुर्भ्रेषप्रायश्चित्तम्, आश्विनादौ पारिप्लवशंसनं वा ॥ १३ ॥ **इति चतुर्दशं निगदयजुष्ट्वाधिकरणम् ॥**

---

स्माद्यजुरि"ति वेदे निगदशब्दसामान्येन हेतुना सुब्रह्मण्यानिगदे ऋक्सामभिन्नमन्त्रत्वरूपयजुष्ट्वसाधनात् तद्व्यतिरिक्तनिगदेष्वपि यजुष्ट्वापरित्यागेन मन्त्रत्वस्य प्रतीतेर्यजुष्ट्वमेवेत्यर्थः। यस्तु संज्ञाभेद उक्तः, स ब्राह्मण्ये सत्यपि परिव्राजकव्यपदेशान्तरवत् यजुष्ट्वे सत्यपि नितरां गद्यमानत्वरूपगुणयोगेनाप्युपपन्न इति नैकान्ततो भेदसाधक इत्याह—**संज्ञात्विति** ॥

### ( निगदशब्दे प्राचीनोपपादितयौगिकत्वनिरासेन रूढिसमर्थनम् )

प्राचीनैः गदतेरपादवद्धपदसमूहवाचित्वात् प्रकर्षवाचिनिशब्दोपसृष्टस्योच्चैरविच्छिन्नोच्चार्यमाणापादवद्धपदसमूहवाचितावसायात्परप्रत्यायनकार्यवशेन नितरां गद्यन्ते इत्यवयवयोगार्थमादाय संज्ञोपपादिता, तां दूषयन् अश्वकर्णादिसंज्ञावत् रूढ्यङ्गीकारेण निगदेति संज्ञामुपपादयति—**निगदत्वं चेति** ॥ एवंच व्याप्यव्यापकभावेनैकस्मिन्नुभयसंज्ञोपपत्तिरुच्चैष्ट्वविधितः प्राक् निगदपदशक्यतावच्छेदकप्रसिद्धिश्च सूपपादेत्यर्थः ॥

### ( उपांशु यजुषेति विधिसङ्कोचभिया यजुषो निगदभेदशङ्कानिरासः )

येन ह्युपांशुत्वविधेः संकोचरूपवाधापत्त्या यजुरपेक्षया भेद उच्यते, तस्यापि मते उपांशुत्वादीनां केवलयजुर्धर्मत्वनिरासेन यजुर्वेदविहितकर्माङ्गमन्त्रमात्रधर्मत्वस्यैव पूर्वोक्तरीत्या स्वीकार्यत्वात् निगदानामपि तत्कर्माङ्गमन्त्रत्वेन प्राप्तोपांशुत्वबाधकत्वमुच्चैर्निगदेनेत्येतद्विधेर्भेदेऽपि स्वीकार्यमेवेति न तद्भिया भेदकल्पनं युक्तम्, अपितु सामान्यविशेषभावेन वाध्यवाधकतैवेत्याह—**उपांशु यजुषेति** ॥

### ( निगदोपांशुत्वस्य वाक्यसिद्धस्यापि लैङ्गिकेनोच्चैष्ट्वेन बाधनिरूपणम् )

**वस्तुतस्तु**—परप्रत्यायनरूपकार्यवशाल्लिङ्गेनैव उपांशुत्वस्य बाधात् नोच्चैष्ट्वविधेः तद्बाधकताप्रसक्तिः, यद्यपि लिङ्गावगतपरप्रत्यायनार्थत्वस्य ब्राह्मणवाक्यावगतोपांशुत्वेन बाधोऽपि शङ्क्येत; तथापि लैङ्गिकस्यापि परप्रत्यायनार्थस्य प्रधानत्वेनाङ्गभूतोपांशुत्वेन बाधस्य प्रमाणबलाबलापेक्षया प्रमेयबलाबलस्य ज्यायस्त्वन्यायेनासंभवान्न दोषः ॥ **किंच** एतादृशविषये उपांशुत्वविधेनैव प्रवृत्तिः। यत्रानियतः स्वरः प्राप्तस्तद्विषये उपांशुत्वनियमकरणेऽपि निगदे कार्यवशेनोच्चैष्ट्वस्यैव नियतप्राप्ततयाऽनियतप्राप्तिविषयत्वाभावादित्यादि कौस्तुभे द्रष्टव्यम् ॥

### ( उच्चैर्निगदेनेत्यस्य कार्यप्राप्तोच्चैष्ट्वानुवादेनोपांशुयजुषेत्येतदर्थवादत्वमिति प्राचीनमतनिरासेन विधित्वाङ्गीकारतत्प्रयोजनपूर्वोत्तरकल्पप्रयोजनानां निरूपणम् )

**यत्तु**—प्राचीनैः कार्यवशेनैवोच्चैष्ट्वस्य प्राप्तत्वादुच्चैर्निगदेनेत्यस्यानुवादत्वेनोपांशु यजुषेति विधिस्तुत्यर्थत्वं यजूरूपनिगदेषु कार्यवशादुच्चैष्ट्वेऽपि यजुःसामान्ये उपांशुत्वमेवोचितमित्येवंविधयोक्तम्, तद्विधित्वस्यावश्यकतया दूषयति—**अतश्चेति** ॥ "नमः प्रवक्त्रे" इत्यादेः नियमविध्यविषयत्वं सूचयितुं—**विशेषविहितातिरिक्तेत्युक्तम्**। तस्य विशेषविहितस्वरातिरिक्तेत्यर्थः। **मन्द्राद्यनेकेति** ॥ परप्रत्यायनकार्यरहितनिगदेषु उपांशुत्वस्यापि पक्षे प्राप्त्या नित्यवदनुवादानुपपत्तेर्व्यावर्तनीयोपांशुत्वस्यादिपदेन ग्रहणम्। **आश्विनादाविति** ॥ "सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाचस्तोमे पारिप्लवं शंसती"ति विधिना आश्विनादिशस्त्रे वाचस्तोमयागे यजुरन्तर्गत्या पारिप्लवशंसनं सिद्धान्ते भवति, पूर्वपक्षे तदनन्तर्गतेस्तदभाव इति प्रयोजनमित्यर्थः ॥

**॥ इति चतुर्दशं निगदयजुष्ट्वाधिकरणम् ॥**

( १५ अधिकरणम्। )

यजुष्ट्वं यावत्सु पदेषु वाक्यत्वं पर्याप्तं तावत्सु पर्याप्तं नतु वाक्यसमूहे; तस्य विनियोगानर्हत्वात्। वाक्यत्वं च यावत्स्वर्थैकत्वं विभज्यमानसाकाङ्क्षत्वं च तावत्सु। अर्थैकत्वं च भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यम्; अन्यस्य दुर्वचत्वात्। अस्ति च गामानयेत्यादौ मुख्यविशेष्यभूताया भावनाया एकत्वात्तत्। दर्शपूर्णमासामनहोमादिवाक्येषु च भावनानामनेकासामपि भिन्नप्रतीतिविषयत्वाभावात् व्रीहियववाक्ययोः "भगो वां विभजत्वि"त्यादौ च सत्यपि भिन्नप्रतीतिविषयत्वे मुख्यविशेष्याया भावनाया एकत्वादर्थैकत्वम्। अतस्तत्रैकवाक्यत्वव्यावृत्त्यर्थं द्वितीयं अन्वीयमानयोः पदार्थयोरनन्वये अनिवृत्ताकाङ्क्षत्वरूपं विशेषणम्। "स्योनं ते सदनं कृणोमि तस्मिन् सीदे"त्यत्रानन्वये

( ऋक्सामयोः परस्परभेदस्याध्यापकपरंपरया सुज्ञातत्वेन तमुपेक्ष्य प्रश्लिष्टपठितयजुर्मन्त्रपरिमाणनिरूपणार्थमेतदधिकरणमित्याशङ्कानिरासपूर्वकमुपपादनम् )

मन्त्रप्रस्तावात् ऋक्सामयजूरूपावान्तरभेदे निरूपिते ऋगादीनां "ऋचः सामानि यजूंषि" इत्येवं श्रुतौ बहुत्वेनोक्तानां भेदप्रतीतेस्तत्प्रसङ्गान्निरूपणीये परस्परभेदे ऋक्सामयोरत्रैतावती ऋक् अत्रैतावत्सामेत्येवमुपदेशकाध्येतृवाक्याद्भेदस्य सुज्ञानत्वात्तद्भेदनिरूपणमुपेक्ष्य यजुषां प्रश्लिष्टपठितत्वेन तस्य दुर्ज्ञेयतया भेदज्ञापकमवश्यवक्तव्यमत्रोच्यते। यद्यपि "इषे त्वेति शाखामाच्छिनत्त्यूर्जे त्वेत्युन्मार्ष्टि"इत्येवं भिन्नभिन्नप्रतीकविनियोगात् 'उत्तरादिः पूर्वान्तलक्षणमि'ति वचनाच्च यजुर्भेदोपि सुज्ञातः, तथापि ब्राह्मण एवंरूपेण सर्वेषां विनियोगानाम्नानात् सौत्रविनियोगस्य भेदप्रतीतिमूलतया तन्निरपेक्ष्येण लक्षणत्वायोगात् तथोत्तरादिरित्यस्य च वेदत्वाभावेन स्वातन्त्र्येण प्रामाण्यासंभवात् सूत्रकृद्वचनस्य चैकार्थ्यनिबन्धनपदसमूहस्यैकवाक्यतेति न्यायमूलत्वादावश्यकं न्यायस्वरूपकथनमित्यभिप्रेत्याह—यजुष्ट्वमिति॥

( यावत्सु पदेषु वाक्यत्वं तावत्सु यजुष्ट्वमिति सिद्धान्तोपयोगितयैकवाक्यत्वनिर्वचनम् )

तस्येति॥ वाक्यसमूहस्य। एकार्थप्रकाशकत्वाभावेनेति विनियोगानर्हत्वात् इत्यस्मात् पूर्वं शेषः। तथाच यजेरुसिप्रत्यये कृते यजुश्शब्दव्युत्पत्तेः तस्य चौणादिकत्वेन बाहुलकत्वात् प्रयोगानुसारेण करणवाचिना यजुश्शब्देन योगेन रूढ्या वा यागसाधनमन्त्रविशेषप्रतीतेस्तस्य चैकस्मिन् वाक्य एव विनियोगार्हत्वेन संभवाद्यजुर्भेदसिध्यर्थं सूत्रे वाक्यत्वपर्याप्तिकथनमित्यभिप्रेत्याह—वाक्यत्वंचेति—तावत्स्विति॥ ततश्चैतादृशं वाक्यत्वं यत्र नास्ति, तत्पूर्वस्माद्वाक्यान्तरं तद्वाक्यरूपं यजुः पूर्वस्मात् भिन्नं ज्ञेयमित्यर्थः॥

( अर्थैकत्वस्यान्यथा दुर्वचत्वम्, भिन्नप्रतीत्यादिनिर्वचनसाधुत्वं च )

ननु किमिदमर्थैकत्वम्? न तावत् पदार्थैकत्वम्; तेषां वाक्येऽनेकत्वात् तस्य संसर्गरूपत्वेन प्रतिपदार्थद्वन्द्वं भेदात्। नापि प्रयोजनैकत्वम्; तद्यदि शेषिरूपप्रयोजनैकत्वं, तदा "सौर्यं चरुमि"त्यादौ द्रव्यदेवते प्रति यागस्तं प्रतिच फलमित्यनेकत्वादर्थैकत्वानापत्तिः। "सर्वेभ्य" इत्यादावप्यनेकत्वात्तदापत्तिः। नापि मुख्यविशेष्यरूपप्रयोजनैकत्वं तत्; "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"त्यादावनेकाग्नेयादिभावनानां मुख्यविशेष्याणां भिन्नत्वात्तदापत्तेः। नापि मुख्यविशेष्यप्रतिपादकशब्दैकत्वम्; व्रीहियववाक्ययोः "भगो वां विभजत्वि"त्यादौच तत्प्रतिपादकशब्दभेदादेवार्थैकत्वानापत्तेर्विभज्यमानसाकाङ्क्षत्वविशेषणोपादानस्य वैयर्थ्यापत्तेः, अतः अर्थैकत्वस्य दुर्वचत्वात् कथमेतल्लक्षणमित्यत आह—अर्थैकत्वं चेति॥ भिन्नप्रतीतिविषयत्वाभावादिति॥ विशेषणाभावप्रयुक्तविशेष्याभावात् लक्षणसमन्वय इत्यर्थः॥

( विभज्यमानपदसाकाङ्क्षत्वविशेषणसार्थक्यम् )

एकत्वादिति॥ "आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामि"त्यादौ "क्लृप्तीर्यजमानं वाचयती"त्युपात्तक्लृप्तिगतबहुत्वस्य क्लृप्तिभेदे ज्ञापकस्येवेह विभागभेदे तस्याभावाद्विभागभावनाया एकत्वादित्यर्थः॥

( स्योनं त इत्यादावर्थैकत्ववारणार्थं भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यमिति ससमन्वयं निरूपणम् )

विशेषणमिति॥ नहि "भगो वां विभजत्वि"त्यत्र अर्यमा वामित्यस्यान्वये साकाङ्क्षत्वमस्ति; स्ववाक्योपात्तविभजत्यन्वयेनैव नैराकाङ्क्ष्यात्। अतस्तद्वारणमित्यर्थः। अनन्वय इति॥ तस्मिन्निति तच्छब्दस्य पूर्वनिर्दिष्टार्थसापेक्षतया पूर्वार्धस्यानन्वये साकाङ्क्षत्वेऽपि सदनकरणप्रतिष्ठापनभावनयोरेकपदोपादानाभावेनैकप्रतीतिविषयत्वाभावात् तच्छब्दस्यच वाक्यान्तरोपात्तसदनप्रकाशकत्वेनाप्युपपत्तेर्वाक्येन लिङ्गबाधायोगादर्थैकत्वाभाव इत्यर्थः॥

( यजुष्ट्वस्य समुदाय इवावयवेऽपि पर्याप्तिः, यजुश्शब्दयौगिकत्वस्य न्यायसुधाकृदभिमतस्य निरासः, वेदत्वस्य समुदायमात्रपर्याप्तिरित्यादि निरूपणम् )

अत्रच यजुष्ट्वं न यागसाधनत्वमात्रेण, नाप्यर्थप्रकाशकतया यागसाधनत्वेन वा सखण्डोपाधिरूपम्; ऋच्यपि तदापत्तेः, अपितु मन्त्रत्ववदखण्डोपाधिरूपम्। अतएव यजुश्शब्दो रूढ एव, तस्यच वेदत्ववत् सर्वमन्त्रेषु व्यासज्यवृत्तितया कल्पनेऽपि यजुरवयवस्यैव विनियोगेन प्रकाशकत्वात्तत्पर्याप्तिरवय-

साकाङ्क्षत्वेऽपि भिन्नवाक्यत्वादाद्यं विशेषणम् ॥ १५ ॥

**इति पञ्चदशमेकवाक्यताधिकरणम् ॥**

**( १६ अधिकरणम् । )**

यत्र तु नोक्तविधं विभज्यमानसाकाङ्क्षत्वम्—यथा-"इषे त्वा" "ऊर्जे त्वे"त्यनयोः, यथा वा "आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पता–" मित्यादौ, तत्र सत्यप्यर्थैकत्वे भगो वामित्यादिवन्मन्त्रभेदः । किमुत यदा विनियोगानुसारेणार्थभेद एव प्रमाणवान् तदा मन्त्रैकत्वे प्रमाणभाव एव । अत्र हि "इषे त्वेति शाखां छिनत्ति" "ऊर्जे त्वेत्युन्मार्ष्टी"ति विनियोगभेदादिषे त्वा छिनद्मीति क्रियापदाध्याहारेण भिन्नमेव मुख्यविशेष्यम् । एवमूर्जे त्वोन्माज्मीति । एवं "क्लृप्तीर्वाचयती"ति बहुवचनात् क्लृप्तिभेदावगमेनार्थभेदः । अतश्चात्र यजुर्भेद इति पूर्वोक्तप्रत्युदाहरणमात्रम् ॥ १६ ॥

**इति षोडशं वाक्यभेदाधिकरणम् ॥**

---

वेऽपि न विरुध्यते । अतएव मन्त्र एव खल्वयं निगदभूतो भवति तस्माद्यजुरिति सुब्रह्मण्यानिगदरूपवाक्येऽपि यजुष्ट्वव्यवहार उपपद्यते । **एतेन**—यजुश्शब्दस्य यागसाधनवाचित्वेन यौगिकत्वात् सूक्तवाकवत् स्वाध्यायकाले भेदानभ्युपगमेऽपि कर्मकाले विनियोगभेदेन यजुर्भेदावगतेर्भेदेनैव प्रयोज्यतेति न्यायसुधाकृतो यौगिकत्वोक्तिः—**परास्ता**; जपादिसाधनेषु यजुष्ट्वानापत्तेश्च । एवं मन्त्रत्वमपि वाक्य एव पर्याप्तम्; मन्त्रशब्दप्रयोगात्, वेदत्वं तु एकस्मिन् वाक्ये अधीते वेदोऽधीत इति व्यवहाराभावात् व्यासज्यवृत्त्येव । यथाच वेदैकदेशश्रवणेऽपि शूद्रादेर्वेदश्रवणनिषेधप्रवृत्तिः तथा वेदोपक्रमाधिकरणे कौस्तुभे दर्शयिष्यते । अतो वाक्यमात्रवृत्तित्वेन यजुष्ट्वस्य तद्भेदाद्युक्तो भेद इति भावः ॥

**॥ इति पञ्चदशमर्थैकत्वाधिकरणम् ॥**

---

**( पूर्वाधिकरणेन प्रत्युदाहरणसङ्गतिः, विषयवाक्यसंग्रहश्च )**

पूर्वोक्तप्रत्युदाहरणरूपेणेह सिद्धान्तकरणात् प्रत्युदाहरणसङ्गत्या विषयप्रदर्शनपूर्वकं सिद्धान्तमेवाह—**यत्रत्विति** ॥ इत्यादावित्यादिपदेन "अपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पतां श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतां" इत्यन्तस्य संग्रहः ॥

**( इषेत्वोर्जेत्वा, आयुर्यज्ञेन कल्पतां प्रणो यज्ञेन कल्पतामित्यादेश्चैकादृष्टार्थत्वेन करणमन्त्रत्वाभावेनैर्थकत्वादिना प्राचां पूर्वपक्षप्रकारस्तस्य निरासश्च )**

अत्र प्राचीनैरिषेत्वोर्जेत्वेति पदचतुष्टयस्य तथा "आयुर्यज्ञेन कल्पतामि"त्यादिवाक्यसमूहस्य च रथघोषवद्दृष्टैयार्थाप्रकाशकत्वेऽपि करणत्वोपपत्तेरदृष्टार्थत्वमङ्गीकृत्य लाघवेनैकादृष्टकल्पनया तस्मिन्नदृष्टैक्यरूपप्रयोजने सर्वेषामाकाङ्क्षयाऽन्वयोपपत्तेरर्थैकत्वविभज्यमानसाकाङ्क्षत्वेनैकवाक्यता । **अत एव** यत्र "वायवः स्थेत्यत्र वायुवच्छीघ्रगामिनो भवतेत्यर्थेन वत्सापाकरणार्थत्वप्रतीतिस्तत्रेषेत्वेत्येकवचनान्तानामन्वयासंभवात् "वायवःस्थे"त्येतत्प्राक्तनभागस्यैव यजुष्ट्वम् । "वायवः स्थे"त्यत्र भिन्नयजुष्ट्वमिति पूर्वः पक्षः कृतः, तथापीषेत्वेत्यादिपदानां क्रियासाकाङ्क्षत्वादितिच्छिनत्तीत्युन्मार्ष्टीत्येव विनियोगदर्शनाच्च छिनद्मीत्यध्याहारस्यावश्यकत्वात् तत्र चेतिकरणेन मन्त्रस्य करणत्वावगतेः तस्य चाभिधानं विनाऽनुपपत्तेः छेदनप्रकाशकत्वावगमेनादृष्टार्थत्वस्याऽऽद्यपदचतुष्टयेऽसंभवात् तथायुरादिमन्त्राणामपि प्रोत्साहनार्थत्वेन दृष्टार्थतयाऽदृष्टार्थत्वासंभवाचातिफल्गुत्वात्तस्यानुपन्यासः । अत एव प्रत्युदाहरणमात्रमित्यधिकरणान्तग्रन्थे मात्रपदात्सूचयिष्यते । **सत्यप्यर्थैकत्वे इति ॥**

**( अर्थैकत्वसिद्धवत्कारेण विभज्यमानसाकाङ्क्षत्वाभावादिषे त्वा ऊर्जे त्वा अनयोरेकवाक्यत्वनिरासः )**

अत्र क्रियाकाङ्क्षत्वेऽपि पदचतुष्टयान्ते एकस्यैव छिनद्मीत्यस्याध्याहारेण पूर्वोक्तार्थैकत्वसंभवं कथंचिदभिसंधाय विभज्यमानसाकाङ्क्षत्वमात्रस्यैव प्रत्युदाहरणमुक्तम् । एवमर्थैकत्वमङ्गीकृत्याप्युत्तरदलाभावमात्रेणैकवाक्यत्वाभावं साधितं । अधुना तदपि प्रस्तुते नास्तीत्याह—**किमुतेति ॥**

**( आयुर्यज्ञेन कल्पतामित्यादावपि मन्त्रभेदनिरूपणं पूर्वोत्तरपक्षप्रयोजननिरूपणं च )**

क्लृप्तीरित्यत्र क्लृप्तिपदं न कल्पतामिति पदपरम्, नवा तद्घटितमन्त्रपरम्; लक्षणापत्तेः, अपितु क्लृप्तिक्रियारूपार्थपरम् । तत्रच बहुवचनश्रवणात् क्लृप्त्यर्थभेदसिद्धेः सामान्यमात्रस्याविवक्षितत्वात् आयुरादिविशेषणविशिष्टाः विशिष्टरूपेण भिन्नाः क्लृप्तिक्रियाः शब्दैर्वक्तुं प्रवृत्तम् । यजमानमध्वर्युर्वाचयतीत्यर्थेनाध्वर्युव्यापारे विहितेऽर्थाद्यजमानकर्तृकक्लृप्त्यर्थबहुवचनस्य विधानसिद्धेस्तासां स्वरूपेणाङ्गत्वाभावेऽप्युद्देश्यत्वमात्रेणैवोच्यमानतया देवताया इव कर्माङ्गत्वोपपत्तेस्तत्प्रकाशकत्वेन "आयुर्यज्ञेन कल्पतामि"त्यादेरायुरादिविशिष्टक्लृप्तिप्रकाशकत्वकल्पनेन दृष्टार्थतालाभात् प्रकाश्यमानायुरादिविशिष्टविशेषरूपार्थभेदेन तत्रापि मन्त्रभेद एवेत्यभिप्रेत्याह—**एवमिति ॥** प्रयोजनमाद्योदाहरणे पूर्वपक्षे पदचतुष्टयस्य सकृत् प्रयोगः । सिद्धान्ते तु पदद्वयस्यैवेति । क्लृप्तिमन्त्रेत्वेकमन्त्रत्वे सिद्धान्ते तावन्मात्रावृत्तिः, पूर्वपक्षे समस्तोच्चारणमिति स्पष्टत्वान्नोक्तम् ॥

**॥ इति षोडशं वाक्यभेदाधिकरणम् ॥**

---

## (१७ अधिकरणम्।)

यत्र बहूनां शेषापेक्षिणामाद्यस्यानन्तरं शेषः समाम्नायते, यथा "या ते अग्ने अयाशये"त्यस्यानन्तरं "तनूर्वर्षिष्ठे"त्यादिः शेषः। उत्तरौ मन्त्रौ "या ते अग्ने रजाशया, या ते अग्ने हराशये"ति। तत्रोत्तरयोः शेषापेक्षिणोरयमेव शेषोऽनुषज्यते, नतु लौकिकोऽध्याह्रियते; अक्लृप्तत्वात्, नचासावेकत्र निबद्धोऽन्यत्र नेतुं न शक्यः; सर्वार्थत्वेनाम्नानात्। नचाद्यस्यानन्तरमपेक्षितदेशे पठितत्वात्तदर्थमाम्नानं शङ्क्यम्; आकाङ्क्षायोग्यतयोरविशिष्टत्वात्, आसत्तेरपि असंबन्धिपदाव्यवधानरूपायाः सर्वत्राविशिष्टत्वाच्च। नहि आनन्तर्यमेव संबन्धकारणम्; तदभावेऽपि शाब्दबोधस्यासंबन्धिपदव्यवधानाभावे आनुभाविकत्वात्। सर्वाव्यवधानस्य सकृत्पाठेऽशक्यतया आकाङ्क्षादित्रयेणैव च सर्वार्थत्वज्ञानोपपत्तेरावृत्तपाठस्य सर्वान्तपाठस्य चापादयितुमशक्यत्वादपेक्षितदेशपाठस्य च लिङ्गेनैव ज्ञातुं शक्यत्वादाम्नानस्य सर्वार्थत्वावगतेरनुषङ्ग एव। नचैवं अव्यवधानस्याकारणत्वे पदश्रुत्या यागस्यैव करणत्वानुपपत्तिः; तस्याकारणत्वेऽपि संदेहे नियामकत्वमात्राङ्गीकारात्, प्रकृते तु आकाङ्क्षादिवशेन सर्वार्थत्वस्यैव प्रतीतेर्नियामकाकाङ्क्षाभावेनानुषङ्ग एव युक्तः। अतश्च तद्भ्रेषेऽपि यजुर्भ्रेषप्रायश्चित्तम्॥

एवं यत्र निराकाङ्क्षाणामेव शेषिणां बहूनामन्ते सापेक्षः शेषः समाम्नातो यथा "चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वि"त्येतेषामन्ते, "अच्छिद्रेण पवित्रेणे"ति। तत्रापि संनिधियोग्यत्वयोरविशेषात्सर्वत्रानुषङ्गः।

---

**(सङ्गतिः विषयवाक्यस्य प्रकरणनिर्देशादिकं च)**

अत्रच सिद्धान्तेऽनुषङ्गपक्षे आम्नानस्य सर्वार्थत्वेनैव साधयिष्यमाणत्वात् अनुषक्तस्याम्नातत्वेन मन्त्रवद्यजुष्ट्वस्याप्युपपत्तेः पूर्ववद्यजुःपरिणामचिन्तात्मकत्वेन प्रकृतसङ्गतिं स्पष्टत्वादुपेक्ष्य विषयमाह—**यत्रेति**॥ ज्योतिष्टोमे द्वितीयतृतीयचतुर्थेष्वहस्सु 'अग्निमनीकं सोमं शल्यं विष्णुं तेजन'मिति वाक्ये उपसत्त्रयं यागरूपं विहितम्। तच्चैकस्मिन्नहनि पूर्वाह्णापराह्णभेदेन यागत्रयमभ्यस्यमानमेकैकोपसद्भवति। तत्क्रमे तदङ्गोपहोमत्रयाङ्गत्वेनेदं मन्त्रत्रयं क्रमेण पठितम्। तत्र विचार्यते इत्यर्थः। **इत्यादिरिति**॥ "गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहे"त्यस्यादिपदेन संग्रहः। हे अग्ने, **अयाशया** अयःस्थिता **वर्षिष्ठा** वृद्धतमा **जीर्णा गह्वरे** तीक्ष्णे द्रव्ये तिष्ठति, या ते तनूः उग्रं वचः। क्षुत्पिपासे। तथा **त्वेषं वचः** उपपातकं वीरहत्यादिमहापातकंच **अपावधीं** हतवानस्मीति प्रथममन्त्रार्थः। एवं **रजाशया** रजतस्थिता तथा **हराशया** हिरण्यस्थितेत्यर्थः। **उक्तंच ब्राह्मणे**—"अशनायापिपासे ह्वा उग्रं वचः। एनश्च वै रहस्यश्च त्वेषं वच" इति। ततश्चाद्यो मन्त्रः शेषानाकाङ्क्षः, उत्तरौ शेषाकाङ्क्षौ, तत्र पाठात् पठितमात्रस्य यजुष्ट्वमुतानुषङ्गेण निराकाङ्क्षीकृतयोरिति यजुःपरिमाणचिन्तार्थं विचार इत्यर्थः॥

**(शेषाकाङ्क्षयोरुत्तरमन्त्रयोर्लौकिकेनैवाध्याहृतेनाकाङ्क्षानिरासः, वैदिकेनैवाकाङ्क्षापूरणावश्यकतायामपि न मन्त्रभ्रेषनिमित्तप्रायश्चित्तमिति पूर्वपक्षः)**

तत्रोत्तरयोर्मन्त्रयोर्यच्छब्दस्त्रीलिङ्गनिर्देशाभ्यां स्त्रीवाचकपदसाकाङ्क्षयोरवश्यं कस्मिंश्चित् परिपूरणसमर्थे एकदेशे कल्पनीये वैदिकस्य तस्याद्यमन्त्रपठितत्वेनापेक्षितदेशपाठेनचाद्यमन्त्रात्तस्यैव प्रतीतेरगृह्यमाणविशेषत्वाभावेन सर्वार्थाम्नानस्य वक्तुमशक्यत्वात् उत्तराकाङ्क्षायाश्च निबद्धलौकिकशेषग्रहणेनाप्युपपत्तेरग्निमुपधाय स्तुवीतेत्यत्र लौकिकाग्नेरिवेहापि लौकिकस्यैवाध्याहारो युक्तः। यद्यपि वा लौकिकस्याप्रकृतत्वादाग्नेयीन्यायेन प्रकृतेऽनुषज्यते; तथाप्याग्नेय्या अन्यत्र विनियुक्ताया अप्यन्यत्र विनियोगस्य कुशदर्व्यादय इति वचनमूलत्वेन समस्तविनियोगेन मन्त्रत्वानपायेऽपीह मन्त्रैकदेशस्यान्यत्र नयने मन्त्रत्वानुपपत्तेः प्रकृतग्रहणेऽपि मन्त्रत्वयजुष्ट्वयोरभावान्न तद्भ्रेषे यजुर्भ्रेषनिमित्तप्रायश्चित्तमिति पूर्वपक्षस्याशङ्कानिरासव्याजेनैव सुनिरस्यतां मत्वा सिद्धान्तमेवाह—**तत्रोत्तरयोरिति**॥

**(आकाङ्क्षादित्रयानुसारेणोत्तरयोरनुषङ्ग एवेति सिद्धान्तः। प्रयोजनं च)**

**आनुभाविकत्वादिति**॥ देवदत्तः स्थाल्यामोदनं पचतीत्यादावाख्यातपदेन देवदत्तपदस्यानन्तर्याभावेऽप्याख्यातार्थान्वयानर्हपदव्यवधानाभावमात्रेणैवान्वयस्यानुभवसिद्धत्वम्। अतश्च विशेष्यविषयिण्या आकाङ्क्षाया निराकाङ्क्षीकरणसामर्थ्यरूपाया योग्यताया असंबन्धिपदाव्यवधानरूपासत्तेश्चोत्तरयोरप्यविशेषात् द्वितीयेन सह संबद्धस्य तस्य तृतीयेनापि सह संबन्धे द्वितीयस्य संबन्धिपदत्वेनासत्तिसंभवात् पूर्वतन एव शेषः संबध्यत इत्यर्थः। एवं स्थिते एकस्यैवाव्यवहितानन्तर्यं यथापेक्षितपाठादिकं चाकिंचित्करमित्याह—**सर्वेति**॥ अतश्च प्रयाजादीनां सत्यप्याग्नेय्या व्यवधाने अग्नीषोमीयादेरप्याकाङ्क्षादित्रयसाधारण्यात् सर्वार्थत्ववत् इहाप्यव्यवहितानन्तर्यस्य यत्र क्वापि पाठावर्जनीयत्वात् सर्वार्थाम्नानादनुषङ्ग एवेत्यर्थः। **संदेह इति**॥ तत्र हि फलनिरूपकत्वं यागस्योत सोमादेरित्यनियमे प्राप्ते नियामकमात्रं पदप्रत्यासत्तिः, प्रकृतेतु सर्वत्र नियमस्यैव प्राप्तेरसन्देहात् न नियामकत्वमित्याह—**प्रकृते त्विति**॥ प्रयोजनमाह—**अतश्चेति**॥

**(शेष्याकाङ्क्षस्य शेषस्यैकशेषान्वयेन नैराकाङ्क्ष्यादच्छिद्रेणेत्यादेः चित्पतिस्त्वा पुनात्वादौ न संबन्ध इति नानुषङ्ग इति पूर्वपक्षः)**

भाष्ये विषयव्याप्त्यर्थं कृतं वर्णकान्तरमनुसंधत्ते—**एवमिति**॥ अनेकेषु शेषिषु साकाङ्क्षेष्वेकस्मिन् शेषान्वयेन निराकाङ्क्षीकृतेऽपि इतरेषां नैराकाङ्क्ष्यायानुषङ्गो युक्तः, शेषस्य त्वेकशेष्यन्वयेन नैराकाङ्क्ष्ये शेष्यन्तरान्वयायानुषङ्गो न युक्त इति विशेषाशङ्कां मत्वा विषयं दर्शयति—**यत्रेति**। **पवित्रेणेति**॥ इतिकरणेन "वसोः सूर्यस्य रश्मिभिरि"त्यन्तस्य संग्रहः। तत्र पूर्वपक्षस्य विशेषाशङ्कायामेव सूचितस्याशङ्कानिरासव्याजेनैव सुनिरस्यतां मत्वा सिद्धान्तमेवाह—**तत्रापीति**॥

नचोत्थाप्याकाङ्क्षाया एकसंबन्धेनैव चरितार्थत्वादानन्तर्यस्य नियामकत्वोपपत्तिः; शेषाकाङ्क्षया आकाङ्क्षोत्थापनेऽपि प्रधानत्वाच्छेषिणां विनिगमनाविरहेण सर्वेषामेव शेषग्राहकत्वावगतेरानन्तर्यस्यानियामकत्वात्। अतएव अनेकहविष्कविकृतिसंनिधिपठितोपहोमानां सर्वार्थत्वमेव। अतश्च मुखनासिगुल्फप्रदेशपावनार्थेषु एतेषु मन्त्रेषु शेषोऽनुषज्यते प्रतिप्रधानावृत्तिन्यायात्॥१७॥ इति सप्तदशमनुषङ्गाधिकरणम्।

( १८ अधिकरणम्। )

व्यवायात्॥ यत्र तु असंबन्धिपदव्यवधानं, यथा "सं ते वायुर्वातेन गच्छतां सं यजत्रैरङ्गानि सं यज्ञपतिराशिषे"ति, अत्र गच्छतामित्यस्याशिषेत्यत्र नानुषङ्गः। अङ्गानीत्यत्र एकवचनान्तस्यानन्वयेन बहुवचनान्तस्यैव गच्छन्तामित्यस्याध्याहारावश्यंभावात्। वस्तुतस्तु बहुवचनस्यैवाध्याहारेण गमिधातोरनुषङ्ग एवेति एकवचनस्यैवानुषङ्गप्रत्युदाहरणमिदम्॥ १८॥ इत्यष्टादशमध्याहाराधिकरणम्॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां द्वितीयस्याध्यायस्य प्रथमः पादः॥

---

( चित्पतिस्त्वेत्यादावप्यच्छिद्रेणेत्यस्यानुषङ्गः, उक्तमन्त्रत्रयविकल्पपक्षः वार्तिककृदभिमतः, तन्निरासश्च )

**आकाङ्क्षोत्थानेऽपीति**॥ इतः पूर्वं निराकाङ्क्षाणां शेषिणामिति शेषः। अत्र वार्तिके "यजमानं पावयती"ति विधिविहितपावनक्रियायाः शब्दार्थयोः प्रत्यभिज्ञानेन चित्पत्यादीनां भगादिवत् स्तुत्यर्थमुपात्तानां भेदेऽपि विभागवत् भेदासिद्धेरेकत्वात्तस्यात्रिभिरपि करणमन्त्रैः प्रकाशनादच्छिद्रादेश्चापूर्वसाधनीभूतप्रकाश्यमानैकपावनक्रियाकरणप्रकाशनार्थत्वात् पूर्वमन्त्रयोरपि अन्तिममन्त्रवत् प्रयोगः। अत एव तत्तद्ग्रहजन्याभ्यासापूर्ववत् इहापूर्वभेदाभावान्नान्तिमपावनक्रियाभ्यासात् पूर्वार्थत्वमपि। तत्रैकपावनक्रियाप्रकाशनार्थत्वेन मन्त्राणां विकल्पोपीत्युक्तम्। तत् त्रिभिर्यजमानं पावयतीति पार्थसारथिकृतसङ्ख्यायुक्तवचनेन "तां चतुर्भिरि"त्यनेनेव मन्त्राणां समुच्चयोपपत्तेर्विकल्पायोगात्, क्रियैक्येऽपि बोधायनादिकल्पपर्यालोचनया पावनस्यापि मुखनासिगुल्फप्रदेशेषु त्रिरभ्यासावगमात् एकैकमन्त्रस्यैकैकाभ्यासकरणत्वप्रतीत्याऽऽनन्तर्यविशेषणेनाच्छिद्रादेः गुल्फप्रदेशे संस्कारार्थपावनक्रियाभ्यासप्रकाशकपदैकवाक्यतया विजातीयापूर्वसाधनीभूतपावनक्रियाभ्यासाङ्गत्वस्यैव युक्तत्वात्। पयसा मैत्रावरुणं श्रीणातीति विहितपयःश्रपणस्याभ्यासान्तरेष्विवेहाप्यभ्यासान्तरे प्राप्तेरसंभवेन व्यवस्थाया एव प्राप्तेः। अत एव—वचनाभावे विकल्पानापत्तेश्चातिशयार्थमित्यभिप्रेत्य विनिगमनाविरहेणैव सर्वत्र शेषान्वयं साधयति—**प्रधानत्वादिति॥ आनन्तर्यस्येति**॥ पूर्वमानन्तर्यस्यानियमप्राप्तौ नियामकत्वस्योक्तत्वात् इहाप्यानन्तर्यप्राप्त्यभावे अनियामकत्वमित्यर्थः। बोधायनादिकल्पपर्यालोचनासिद्धं तत्तत्क्रियाभ्यासार्थत्वं मन्त्राणां सूचयन्नुपसंहरति—**अतश्चेति**॥ प्रतिप्रधानावृत्तिन्यायादिति हेतुप्रदर्शनेन वार्तिकोक्तनिरासः सूचितः। शेषप्रयोगयजुर्भ्रेषप्रायश्चित्तसदसद्भावरूपं प्रयोजनं तु स्पष्टत्वान्नोक्तम्॥

॥ इति सप्तदशमनुषङ्गाधिकरणम्॥

---

( आसत्त्यभावेनानुषङ्गाभावनिरूपणम् )

यतो यत्रानुषङ्गासंभवः, यत्रच मध्ये व्यवधानं तदुदाहरणमनुषङ्गप्रत्युदाहरणत्वेन दर्शयति—**यथेति**॥ इदंच मन्त्रत्रयमुत्तरार्धाज्यशेषेण पशोः शिरोंऽसद्वयदक्षिणश्रोणिष्वञ्जने क्रमेण विनियुक्तम्। तत्राद्यवाक्ये समित्युपसर्गस्य 'छन्दसि व्यवहिताश्चे'ति सूत्रेण पदान्तरव्यवधानेऽपि साधुतयोक्तस्य गच्छतामित्यनेनान्वयः। यतश्चेह पशोरेवायुः प्राणो वाह्यवातेन सह सङ्गच्छताम्। यज्ञपतिः स्वामी ते आशिषा फलेन संगच्छतामिति मन्त्रत्रयार्थः। सत्योरप्याकाङ्क्षायोग्यत्वयोरासत्तेरभावान्नानुषङ्ग आद्यमन्त्रगतस्य गच्छतामिति पदस्येत्याह—**गच्छतामित्यस्येति**॥ **अध्याहारावश्यंभावादिति**॥

( संयज्ञपतिराशिषेत्यत्र गच्छतामितिपदाध्याहार इति प्राचीनमतम् )

ततश्च "संयजत्रैरङ्गानी"त्यत्र गच्छन्तामित्यध्याहारावश्यकत्वे तेन व्यवधानात् संयज्ञपतिराशिषेत्यत्रापि शाब्दत्वसिध्यर्थं गच्छतामिति पदाध्याहार एव॥ कल्प्यस्यापि पदस्याभिधानकरणत्वात् कर्तृव्यापारं विनाभिधानकरणत्वायोगादितरमन्त्रेष्विवोच्चारणातिरिक्तशब्दविषयकर्तृव्यापाराभावादुच्चारणस्यैव तत्त्वेन कल्पनादुच्चार्यत्वसिद्धिरित्यर्थः॥

( विभक्तिमात्राध्याहार इति स्वसिद्धान्तः )

एवं गच्छतामिति पदाध्याहारं प्राचीनोक्तमुपपाद्य तत्र विशेषमाह—**वस्तुतस्त्विति—अनुषङ्ग एवेति**॥ गमिप्रकृतेः सं यजत्रैरित्यत्रापि अनुषङ्गोपपत्तौ बहुवचनमात्रस्यैवाध्याहारेऽपि संयज्ञपतिरित्यत्रापि तत्प्रकृतेरव्यवायेनानुषङ्गसंभवात्, मध्ये बहुवचनेन व्यवायादाद्यमन्त्रगतैकवचनस्य नानुषङ्गः, किन्तु अध्याहार एवेत्येवमेकवचनप्रत्युदाहरणमात्रत्वमेव युक्तमित्यर्थः॥

( पदाध्याहार एवेति प्रकाशकारमततन्निरासौ, प्रयोजनं च )

**यत्तु**—प्रकाशकाराणामेतदाशङ्कोत्तरं पदार्थ एव ह्याकाङ्क्षितो न तदेकदेशः। तच्छाब्दतायैच पदमेवाकाङ्क्षितं, न तदेकदेश इति कृत्स्नस्यैव पदस्यानुषङ्गोऽध्याहारश्च न तदेकदेशस्य प्रत्ययमात्रस्य प्रकृतिमात्रस्य वेति। तत्प्रत्ययमात्रोहे प्रकृतेरार्षत्ववदिहापि प्रकृतेरनुषङ्गताया आर्षत्वोपपत्तेः इतरथा तत्रापि संपूर्णपदस्यैवोहापत्तेः प्रत्ययमात्राध्याहारे वाधकाभावाद्युक्तमिति व्यक्तं कौस्तुभे। एवंच प्रकृतिमात्रभ्रेष एव यजुर्भ्रेषप्रायश्चित्तं, प्रत्ययभ्रेषे तु न तदित्यपि प्रयोजनं स्पष्टत्वान्नोक्तम्॥

॥ इत्यष्टादशमध्याहाराधिकरणम्॥

अथ द्वितीयः पादः।

(१ अधिकरणम्।)

शब्दान्तरे।

भावनाभेदफलीभूतापूर्वभेदोपयोगिभावार्थाधिकरणरूपोपोद्घातप्रसक्तानुप्रसक्तादौ समाप्तेऽधुना शब्दान्तराद्भेदोऽभिधीयते। ज्योतिष्टोमप्रकरणस्थानां, "सोमेन यजेत," "हिरण्यमात्रेयाय ददाति," "दाक्षिणानि जुहोती"त्यादीनां विभिन्नधात्वर्थानां भावनाभेदबोधकत्वमस्ति न वेति चिन्तायां "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यनेन स्वर्गकर्मकभावनामात्रे लाघवाद्विहिते तदनुवादेन सोमादिवाक्यैः सोमादिविशिष्टयागादिविधानात्सर्वेषां चोत्पन्नशिष्टत्वेन गुणन्यायाभावान्न भावनाभेदः। नचानेकधात्वर्थानामेकजातीययत्नजन्यत्वासंभवः; बाधकाभावात्। नच प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वात्प्रत्ययानां फलवाक्यस्थेनाख्यातेन धात्वर्थानवच्छिन्नशुद्धभावनाविधानानुपपत्तिः; आख्यातेन धात्वर्थावच्छिन्नभावनाभिधानेऽपि तदंशे विधिव्यापाराभावात्। अतएव गुणफलसंबन्धस्थले धात्वर्थानुवादेऽपि भावनामात्रविधानम्। अतएव च फलवाक्ये यजिः प्रकृतसर्वधात्वर्थोपलक्षणम्। ज्योतिष्टोमपदंच छत्रिन्यायेन सर्वनामधेयमिति प्राप्ते—

कार्यमात्रवृत्तिधर्मस्य विजातीययागत्वादेः किंचित्प्रति कार्यतावच्छेदकत्वावश्यकत्वेन तदवच्छिन्नं प्रति उपस्थितस्य यत्नस्यैव वैजात्यपरिकल्पनया विजातीययत्नत्वेनैव कारणत्वम्।

---

**(अध्यायार्थभावनाभेदनिरूपणस्येह पादेऽवसरसंगतिः, शब्दान्तरप्रमाणस्यैव प्रथमतो निरूपणे निमित्तम्, पादार्थनिष्कर्षः, एकप्रकरणगतशब्दान्तरस्यात्रोदाहरणत्वम्)**

अध्यायार्थभूतभावनाभेदनिरूपणस्येह पादे कर्तव्यस्यावससरसङ्गतिं दर्शयति—**भावनाभेदेति** ॥ भावार्थाधिकरणरूपोपोद्घातः स्तुतशस्त्राधिकरणान्तः, **तत्प्रसक्तं** मन्त्रगताख्याताविधायकत्वनिरूपणं **तदनुप्रसक्तं** मन्त्रत्रैविध्यचातुर्विध्यनिरसनमादिपदोपात्तं **तदनुप्रसक्तं** यजुःपरिमाणनिरूपणादिकम्। तस्मिन् समाप्ते अवसरलाभान्मुख्योऽध्यायार्थरूपो भावनाभेदो निरूप्यते। तत्र शब्दान्तरस्य प्रमाणान्तरगम्यापर्यायभूतधातुभेदरूपत्वेन धात्वर्थभेदद्वारा भावनाभेदकत्वस्य स्पष्टत्वात् भावार्थाधिकरणोक्तस्य धात्वर्थभेदानुनिष्पाद्यापूर्वभेदस्य धात्वर्थभेदेऽप्यपूर्वहेतुभूतभावनाभेदाभावेनाक्षिप्य समाधानार्थत्वाच्च शब्दान्तरप्रमाणस्य प्रथमतो निरूपणम्। **अत एव** प्रकरणान्तरातिरिक्तशब्दान्तरादिप्रमाणकभेदनिरूपणस्य पादार्थत्वमिति भावः। प्रकरणान्तरगतशब्दान्तरेच विपरिवृत्त्यैव भावनाभेदस्य सिद्धत्वात् शब्दान्तरस्य तत्र व्यापारासंभवात् एकप्रयोगविधिपरिगृहीतेषु तद्व्यापारं सूचयन् उदाहरणपूर्वकं संदेहमाह—**ज्योतिष्टोमेति**—आदिपदेन स्तौतिशंसत्यादीनां संग्रहः ॥

**(तिप्रत्ययाभ्यासात् भावनाभेदशङ्कातन्निरासौ। एकस्य यत्नस्यानेकधात्वर्थजन्यत्वोपपत्तिः)**

**गुणन्यायाभावादिति** ॥ यद्यपि भावनावाचकतिप्रत्ययाभ्यासात् भेदः संभाव्यते; तथापि तस्य धात्वर्थविधानार्थमनुवादकत्वाभ्युपगमेनानन्यपरत्वाभावादकिंचित्करत्वमित्यस्याप्युपलक्षणमेतत्। **बाधकाभावादिति** ॥ समूहालम्बनज्ञाने एकस्मिन्ननेकविषयतावदेकयत्नत्वेनानेकावच्छेदकत्वेन जन्यत्वस्वीकारे बाधकाभावात् इत्यर्थः ॥

---

**(तत्तत्फलवाक्यविहितभावनाविषयत्वं तत्तत्प्रकृत्यर्थस्यैवेति यागदानादिप्रकृत्यर्थभेदात् भावनाभेद इति सिद्धान्तोपक्रमः)**

भावना तावत् कृतिरूपा सविषयेति निर्विवादम्। तद्विषयत्वंच न ज्ञानादिविषयत्ववदिवत् सिद्धपदार्थवृत्ति, अपितु साध्यमात्रवृत्तित्वात् जन्यत्वापरपर्यायमेव। अतश्च फलवाक्यविहिताया भावनाया विषयापेक्षायां प्रकृत्युपात्तो यजिरेव विषयो न दानादिः, प्रकृत्यनुपात्तत्वात्, उपलक्षणत्वे मानाभावाच्च। तत्रच पदश्रुत्यन्वितयागरूपविषयावरोधे वाक्यान्तरोपात्तदानहोमादीनां विषयतयाऽन्वयानुपपत्तेर्यागस्यैव तत्त्वे कार्यतावच्छेदकस्य यागत्वादेर्भेदात् कारणभूतायां कृतावपि वैजात्यकल्पनस्यावश्यकत्वात् दानादिकृतितो यागादिकृतौ भेदे तत्तद्वाक्येषु तत्तद्धात्वर्थानुरक्तभिन्नभिन्नभावनाभिधानमावश्यकम्। एवं सत्यपि यदि प्राकरणिकसकलधात्वर्थवृत्तिव्यापकधर्मसामान्यमेव कार्यतावच्छेदकतया केनचित्पदेनोपात्तं स्यात्, ततो भवेत्कार्यतावच्छेदकैक्येन कारणीभूतभावनैक्यम्। नचेह तदस्ति; सोमादिवाक्यैर्यागत्वादिनैव तत्तद्धात्वर्थोपस्थितेः। अतश्च तत्तत्कार्यतावच्छेदकवाचितत्तद्धातुपदप्रतिपाद्यधात्वर्थभेदे सति तद्भेदनिबन्धनानेकापूर्वकल्पनापि प्रामाणिकत्वान्न दुष्यतीत्यभिप्रेत्य सिद्धान्तमाह—**कार्यमात्रेति** ॥

**(विजातीययत्नत्वेन यागादिकारणतासमर्थनम्)**

**नच**—तत्तत्कार्यतावच्छेदकावच्छिन्नफलत्वेनैव कारणता, नतु विजातीययत्नत्वेन, होमोत्पत्तिदशायां यागोत्पत्तिप्रसक्तिस्तु विजातीयादृष्टरूपसामग्र्यभावादिति—**वाच्यम्**; अदृष्टगतवैजात्यकल्पनापेक्षयोपस्थितयत्न एव वैजात्यकल्पनाया युक्तत्वात् इत्याशङ्कानिरासः उपस्थितस्येत्यनेन सूचितः ॥

**(अपर्यायधातुभेदस्य शब्दान्तरत्वनिरासेन विभिन्नधात्वर्थकत्वस्य तत्त्वसमर्थनम्)**

अत्रच प्राचीनैरपर्यायधातुपदभेदरूपाच्छब्दान्तराद्भावना-

अतश्च प्रतिधात्वर्थवैजात्यं भावनावैजात्यसिद्धिः। विभिन्नधात्वर्थकत्वमेव च शब्दान्तरत्वम्। अतएव "तिस्र आहुतीर्जुहोती"त्यत्र संख्यया होमभेदे सिद्धे शब्दान्तरादेवोक्तविधाद्भावनाभेदः नतु मूलोक्तादिति ध्येयम्। किंच प्राप्तभावनानुवादेन सोमयागाद्यनेकविधाने वाक्यभेदापत्तेस्तत्तद्गुणधात्वर्थाश्रयविशिष्टभावनाविधानमेव तत्तद्वाक्ये अङ्गीकर्तव्यम्। तत्रच चातुर्थिकन्यायेन ज्योतिष्टोमपदाभिधेयस्य सोमयागस्यैव स्वर्गवाक्येन फलसंबन्धोऽन्येषांतु तदङ्गत्वम्। नच— स्वर्गवाक्य एव यागभावनोत्पत्तिपूर्वकं फलसंबन्धः सोमवाक्येनच सोममात्रविधानमिति—वाच्यम्; स्वर्गवाक्ये राजसूयन्यायेनेष्टिपशुयागानामेव फलसंबन्धापत्तौ यागान्तरविधाने प्रमाणाभावात्। ततश्च पश्वाद्यवरुद्धे सोमविध्यनुपपत्तेः सोमवाक्ये कर्मान्तरविध्यवश्यंभावः। प्रयोजनं सोमयागमात्रप्राधान्यम्॥ १॥ इति प्रथमं शब्दान्तराधिकरणम्।

( २ अधिकरणम् )

दर्शपूर्णमासप्रकरणस्थे, "समिधो यजति," "तनूनपातं य-

---

भेद उक्तः, तादृशस्य शब्दान्तरत्वेऽनुपपत्तिं दर्शयन् शब्दान्तरलक्षणमाह—**विभिन्नधात्वर्थत्वमेवेति** ॥ तेन विभिन्नधात्वर्थत्वरूपशब्दान्तरेण कार्यतावच्छेदकभेदज्ञापनद्वारा भावनाभेद इत्यर्थः। तत्तु गुणन्यायसंकीर्णमेवेति वक्ष्यते। **नत्विति** ॥ एकेनैव जुहोतिना त्रयाणां होमानामुपादानात् धातुपदभेदाभावात् तदभावप्रसङ्ग इत्यर्थः। **होमयागाद्यनेकेति** ॥

**( सोमादिवाक्ये गुणादपि भेदसिद्धेरभेदपूर्वपक्षानुपयुक्तत्वाद्दाक्षिणानीत्यस्यैवैतदुदाहरणत्वमिति निरूपणम् )**

आदिपदेन हिरण्यवाक्ये हिरण्यात्रेयदानानेकगुणविधानसंग्रहः। **अनेन** चैतादृशोदाहरणेषु वाक्यभेदापादकगुणादपि भेदस्यैव प्राप्तेरभेदपूर्वपक्षानुपयुक्तत्वं—**सूचितम्** ॥ **यत्तु** "दाक्षिणानि जुहोती"ति, तत्तु दाक्षिणपदस्य नामधेयत्वेन होमधात्वर्थमात्रस्यैव विधानात् भवत्येवोदाहरणमित्यपि—**द्रष्टव्यम्** ॥

**( यजिसङ्कोचकत्वेन ज्योतिष्टोमस्येष्ट्याद्यपरत्वमिति चातुर्थिकन्यायस्वरूपनिरूपणम् )**

**चातुर्थिकन्यायेनेति** ॥ चतुर्थे ह्यन्त्ये राजसूयपदवत् ज्योतिष्टोमपदस्याप्रसिद्धार्थत्वेन यजिपदसंकोचकत्वानुपपत्तेः सर्वेषामेवेष्टिपशुयागानां प्राकरणिकानां फलसंबन्धं पूर्वपक्षयित्वा "एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा" इति वाक्यशेषावगतज्योतीरूपस्तोमवत्त्वयोगेन सोमयागमात्र एव नाम्नः प्रसिद्धत्वात् दर्शपूर्णमासपदवद्यजिसंकोचकत्वोपपत्तेस्तस्यैव फलसंबन्धात् प्राधान्यमन्येषामङ्गत्वमिति सिद्धान्तितं, तेन न्यायेनेत्यर्थः। प्रासङ्गिकीमाशङ्कां निराकरोति—**नचेति**॥

**( ज्योतिष्टोमेन स्वर्गकाम इति फलवाक्यस्योत्पत्तिपरत्वनिरासः )**

**कर्मान्तरविध्यवश्यंभाव इति** ॥ तथाच तत्र अग्नीषोमीयादियागेषु पश्वादिद्रव्यावरोधेन सोमवाक्ये कर्मान्तरावश्यकत्वे तस्यैव ज्योतिष्टोमनामत्वेन फलसंबन्धोपपत्तौ फलवाक्ये न तदुत्पत्तिपरत्वमपि गौरवग्रस्तं कल्पनीयमित्यर्थः। चातुर्थिकमेव प्रयोजनमनुसन्धत्ते—**प्रयोजनमिति** ॥

**( गुणाद्भेद इति न्यायस्यात्र द्वेधाऽप्रवृत्त्या शब्दान्तरप्रमाणनिरूपणावश्यकतोपपादनम् )**

अत्रच फलवाक्ये भावनायां यागकरणत्वावरुद्धे धात्वर्थान्तराणां करणत्वनिवेशाद्यद्यपि गुणाद्भेदोऽपि संभाव्यत इति न शब्दान्तररूपमानान्तरप्रतिपादनस्य प्रयोजनम्; तथापि तदुपन्यासस्य पूर्वपक्षिनिराकरणमात्रार्थत्वमेव द्रष्टव्यम्। गुणो हि पूर्वगुणाननुरक्तरूपेण भावनानुवादासंभवात्, धात्वर्थानुरक्तरूपेण तां बोधयन्न भेदक इत्येतावदिह व्युत्पाद्यम् ॥ **किंच** ज्योतिष्टोमवाक्यविहितभावनानुरञ्जकत्वं सर्वेषां धात्वर्थानामिति पूर्वपक्षे फलवाक्यगतयजेरुपलक्षणत्वेनैकपदोपादानात् करणसमुच्चयस्य वक्तव्यत्वेऽपि करणभेदस्य कर्तृव्यापारभेदव्याप्यत्वेन भावनाभेदस्यावश्यकत्वाद्यो भावनाभेदः प्रसज्येत, स न गुणन्यायात् संभवति; तेषां करणानां युगपदन्वयेन केन नैराकाङ्क्ष्यमित्यत्र नियामकाभावात्। अतस्तत्र तत्तत्करणभेदाधीनस्य भावनाभेदस्य शब्दान्तरप्रमाणकत्वात् तन्निरूपणं न निष्प्रयोजनम् ॥

**( अविपरिवृत्तावेव शब्दान्तरस्य भेदकत्वमिति निरूपणम् )**

इदंच शब्दान्तरमविपरिवृत्तावेव भेदकम्, नतु विपरिवृत्तावपि। **अत एव**—चतुरवत्तं जुहोतीत्यत्र सत्यपि शब्दान्तरे जुहोत्यंशभूतयागभावनाया विपरिवृत्तत्वान्न भेदः, अपितु प्रक्षेपभावनाया एवेति द्रष्टव्यम् ॥

**॥ इति प्रथमं शब्दान्तराधिकरणम् ॥**

---

**( शब्दान्तराधिकरणानन्तरं भावनाभेदकत्वसाम्येन असाम्येऽपि प्रत्युदाहरणसङ्गतिलोभेनाभ्यासाधिकरणप्रवृत्तिरित्युपपादनम् )**

यद्यपि संज्ञायाः शब्दरूपत्वेन शब्दान्तरसादृश्यादनन्तरविचार्यत्वं प्राप्तम्; तथापि संज्ञाया धात्वर्थमात्रविषयत्वेन तन्मात्रभेदकत्वात् शब्दान्तरस्य प्रमाणान्तरगम्यस्पष्टभेदधात्वर्थवाचित्वेन धात्वर्थभेदकत्वाभावात् तद्द्वारा भावनाभेदकत्वात्

जति" "इडो यजति" "बर्हिर्यजति" "स्वाहाकारं यजति" इत्यादौ यागस्यापि प्रत्यभिज्ञायमानत्वेनाभेदान्न भावनाभेदः, नचाभ्यासाद्भेदः; अभ्यासस्यैकत्वसाधकत्वेन विरुद्धत्वात्। नच विधिपुनःश्रवणरूपस्याभ्यासस्य विधेययागादिभेदकत्वम्; दध्ना जुहोतीतिवद्विधेर्देवतारूपगुणसंक्रान्तशक्तिकत्वेन यागविषयत्वाभावात्। नच यागोत्पत्तिवाक्यस्थगुणावरोधान्नोत्पन्नवाक्येन गुणविधिः; अगत्या प्राथमिकवाक्यस्थसमित्पदस्य तत्प्रख्यन्यायेन नामधेयत्वाङ्गीकारात्।

वस्तुतस्तु—यदि याज्यामन्त्रवर्णात्समित्प्राप्तिः, तदा सा तनूनपादादीनामप्यविशिष्टा। अत उपांशुयाजानुवादेन विद्वद्वाक्यविहितकर्मानुवादेन वा पञ्चस्वपि देवताविधिः। नच संभवत्प्राप्तिकता; याज्यामन्त्रवर्णवदनुमन्त्रणमन्त्रेभ्योऽपि विकल्पेन वसन्तादिदेवताप्राप्तिसंभवेनैतेषां नियमविधित्वोपपत्तेः। अतश्चानन्यपरपुनःश्रवणाभावान्न कर्मभेद इति प्राप्ते—

उभयाकाङ्क्षाबललभ्ययाज्यामन्त्राणामेव देवताकल्पकत्वस्य पुरःस्फूर्तिकत्वेनान्यतराकाङ्क्षाबललभ्यानुमन्त्रणमन्त्रेभ्यो देवताकल्पनानुपपत्तेर्न समिदादिपदानां देवतानियामकत्वम्। अतश्चोपपदार्थस्य संभवत्प्राप्तिकत्वात् पदश्रुत्यादिना विधेर्धात्वर्थभावनाविषयत्वप्रतीतेर्विहितविधानायोगाद्विधेय-

---

संज्ञातो वैलक्षण्यम्। अभ्यासस्य तु पुनर्विधानात्मकत्वात् विधेश्च धात्वर्थानुरक्तभावनाविषयत्वेनोभयभेदकत्वात् भावनाभेदकत्वांशेन साम्याद्धातुभेदे धात्वर्थभेदाद्भावनाभेदो धात्वर्थभेदे तदर्थाभेदात् भावनाया अप्यभेद इति च प्रत्युदाहरणपूर्वपक्षसांकर्यादनन्तरसंगतिः प्राचीनैरस्य दर्शिता। वस्तुतस्तु—अभ्यासस्यापि संज्ञासङ्ख्यादिवत् धात्वर्थभेदमात्र एव व्यापारोपपत्तावर्थान्तरपरधातूच्चारणरूपशब्दान्तरसिद्धभावनाभेदेऽपि तत्कल्पने प्रयोजनाभावात् न भावनाभेदकत्वसाम्यम्, नवा संज्ञादिवैलक्षण्यम्, किन्तु धातुभेदे तदर्थभेदाद्युक्तो भावनाभेदः, प्रकृतेतु धातोरप्येकत्वेनार्थभेदाभावे फलीभूतभावनाभेदे प्रमाणाभावेन पूर्वपक्षोत्थानेन भावनाभेदसिध्यर्थतया प्रत्युदाहरणसङ्गतिं स्पष्टत्वादनभिधाय विषयप्रदर्शनपूर्वकं पूर्वपक्षमेवाह—**दर्शपूर्णमासेति**॥

**(तनूनपातं यजतीत्यादीनां दध्ना जुहोतीतिवत् समिधो यजतीति वाक्यविहितयागे गुणसमर्पकत्वेन पूर्वपक्षः)**

तनूनपातं यजतीत्यादीनां तनूनपातादिदेवताविधायकत्वेन पूर्वपक्षकरणात् तासां प्रकृतयागे निवेशसंभवोपपादनार्थं प्रकरणस्य इत्युक्तम्—**नच विधीति**॥ अप्रवृत्तप्रवर्तनात्मकस्य विधेर्व्यापारः पदश्रुत्या धात्वर्थानुरक्तभावनाविषयः प्रतीयते। तस्यच कर्मैकत्वे पूर्वमेव तस्य विहितत्वेन वैयर्थ्यात् बाधः स्यात्। अतः कर्मान्तरत्वापादक एव भविष्यतीत्याशङ्कार्थः। "आख्यातप्रत्ययः पूर्वं विधत्ते कर्म शक्तितः। अन्येनाक्षिप्तशक्तिस्तु तदाकाङ्क्षत्यनूदित"मिति न्यायेन यत्र गुणपदं श्रूयते तत्रानेकविध्यशक्तेः यस्यैव प्राप्तिस्तस्यैवानुवादत्वं स्वीकृत्येतरत्र विधिः संक्रामतीति दध्ना जुहोतीत्यत्र धात्वर्थप्राप्तिमालोच्य धातुमुच्चार्य गुणमात्रविधिवदिहापि तदुपपत्तिरिति परिहरति—**दध्नेति**॥

**(प्रथमसमिद्वाक्यप्राप्तयागे देवताविधायकत्वेन चतुर्णां वाक्यानां देवताविधायकत्वमिति पार्थसारथिमतं, तत्रास्वरसेनोपांशुयाजानुवादेन विद्वद्वाक्यविहितकर्मानुवादेन वा देवतानियमविधिरिति स्वमतनिरूपणं च)**

**ननु** विष्णुं यजतीतिवत् द्वितीयान्तानां तनूनपातादिपदानां देवतापरत्वाङ्गीकारेण यागानुवादेन तद्विधिस्वीकारेऽपि यतो यागप्राप्तिस्तत्र वाक्ये देवतान्तरस्यापि विधानात्तदवरोधे कथमासां निवेश इत्याशङ्कते—**नचेति**॥ कर्मविधानोत्तरं गुणविधिप्रवृत्तेरन्यत्र दृष्टत्वादिहापि क्वचित्कर्मविधाने आश्रयणीये प्राथम्यस्य नियामकत्वेन विनिगमनाविरहानापत्तेः समिद्वाक्यस्थस्यैव समित्पदस्य नामधेयत्वकल्पनयोत्पत्तिविधित्वोपपत्तेर्न तत्र देवतान्तरावरोध इति पार्थसारथ्युक्तरीत्या परिहरति—**अगत्येति**॥ तदेतद्दूषयन् पक्षान्तरमाह—**वस्तुतस्त्विति। अत उपांशुयाजेति**॥ उपांशुयाजे तनूनपातादिदेवताविधाने तत्र क्रमाम्नातविष्ण्वादिदेवत्ययाज्यायुगलानां क्रमबाधेन समाख्यासहकृतलिङ्गादुत्कर्षापत्तेरपरितुष्य पक्षान्तरमाह—**विद्वद्वाक्येति**॥ पञ्चस्वपि वाक्येष्वित्यर्थः। "समिधस्समिधोऽग्न आज्यस्य वियन्तु तनूनपादग्न आज्यस्य वेतु"इत्यादियाज्यामन्त्राणामुपांशुयाजादिक्रमे पाठाभावेनाङ्गत्वे प्रमाणाभावात्तत्कल्प्यदेवताविध्यसंभवादेतत्प्रत्यक्षविधिप्राप्तसमिदादिदेवताप्रकाशकत्वेनैव तत्तद्यागाङ्गत्वावसायान्न संभवत्प्राप्तिकतेत्युत्तरे विद्यमानेऽपि विभवादुत्तरान्तरेण परिहरति—**याज्यामन्त्रवर्णवदिति**॥ अनन्यपरविधिपुनःश्रवणरूपाभ्यासस्य दध्ना जुहोतीत्यादाविवाभावान्न कर्मभेद इत्युपसंहरति—**अतश्चेति**॥

**(उपपदार्थस्य संभवत्प्राप्तिकत्वाद्विहितविधानायोगेनाभ्यासेन भेदसिद्धिरिति सिद्धान्तः)**

**संभवत्प्राप्तिकत्वादिति**॥ संभवत्प्राप्तिकत्वेन नाम-

तावच्छेदकतया वैजात्यसिद्धिः । नचैवं तत्प्रख्यन्यायेन समिदादिपदानां नामधेयत्वात्संज्ञयैव भेदसिद्धिः; तत्प्रख्यन्यायेन गुणविधित्वनिराकरणेऽपि नामधेयक्लृप्त्यैकेनैवैकस्मिन्कर्मणि सिद्धेरनेकेषां नामधेयानां वैयर्थ्यप्रसङ्गेन समिदादिपदानां गुणानुवादकत्वेनैवोपपत्तेर्नामत्वानिर्णयात् । सिद्धे तु अभ्यासेन कर्मभेदे एकैकस्य कर्मण एकैकं नामधेयं सार्थकमिति नामत्वनिर्णयः । प्रयोजनमुत्तराधिकरणप्रयोज-

नम् । प्रयोजनान्तराणि कौस्तुभे स्पष्टानि ॥ २ ॥ इति द्वितीयमभ्यासाधिकरणम् ॥

( ३ अधिकरणम् । )

**प्रकरणंतु ॥**

तत्रत्य एव "य एवं विद्वान्पौर्णमासीं यजते स यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति य एवं विद्वानमावास्यां यजते स यावदतिरात्रेणे"त्यादिवाक्येऽपि अभ्यासात्कर्मभेदः ।

---

धेयत्वसंभवे न पदश्रुत्यवगतधात्वर्थानुरक्तभावनाविषयत्वं दुर्बलप्रत्यभिज्ञाबलेनाश्रयितुं युक्तम्, किन्तु सति संभवे प्रथमविधिप्रकाराश्रयणमिति तदनुरोधेन नानापूर्वभेदकल्पनाकृतं गौरवमपि प्रामाणिकत्वान्न दोषावहमित्यर्थः ॥

### ( अभ्यासस्य संज्ञाधीनसिद्धिकत्वस्थले संज्ञाया भेदकत्वेऽपि प्रकृतेऽनेकनामधेयवैयर्थ्येन तनूनपातादिवाक्यानामनुवादकत्वापत्त्या नसंज्ञाधीनसिद्धिकत्वमभ्यासस्येत्यादिनिरूपणम् )

**तत्प्रख्यन्यायेनेति ॥** यत्राख्यातसामानाधिकरण्याभावेन यागविशेषानवगमादधिकारार्थाथशब्दान्वयेनानिर्धारितक्रियाविशेषसंज्ञात्वनिश्चयेनैव विध्याख्यातकल्पनम्—यथाऽथैष ज्योतिरित्यादौ, तत्राभ्यासस्य संज्ञाधीनसिद्धिकत्वेन संज्ञयैव भेदः, यत्र वोद्भिदा यजेतेत्यादौ संज्ञाऽभावे प्रकृतस्यैव यागस्य फलसंबन्धो वाक्यादाश्रितः शक्यते पुनर्विधिना विधातुम्, तत्रानन्यपरत्वाभावेनाभ्यासस्य भेदकत्वासंभवात् संज्ञाया एव भेदकत्वम् । यत्र तु अभ्यासस्वरूपस्य न संज्ञाधीनसिद्धिकत्वं, यथा प्रकृते तत्रान्यपरत्वाभावेनाभ्यासस्यैव भेदकत्वम् । यद्यपि प्रकृते संज्ञायास्तत्प्रख्यन्यायसिद्धत्वेन नाभ्यासगम्ययागविध्यधीनत्वम्, प्रत्युत संज्ञात्वाभावे गुणपरत्वेनान्यपरत्वप्रसक्त्याऽभ्यासस्यैव तदधीनत्वात् संज्ञयैव शक्यते भेदः साधयितुम्; तथाप्येकस्य कर्मण एकनामधेयेनावच्छेदोपपत्तौ तनूनपातादिसंज्ञानां वैयर्थ्यात् तत्तद्देवतानुवादत्वस्यैवापत्तौ संज्ञानिश्चयेन भेदकत्वानुपपत्तेरभ्यासेन कर्मभेद एव तदुपयोगित्वेन संज्ञात्वनिश्चयादभ्यासस्यैव भेदकत्वमिति भावः । भेदोऽपिच व्यक्तिभेदवत् विधेयभेदे विधेयतावच्छेदकभेदस्यावश्यकत्वात् समिद्यागत्वादिव्याप्यजातीनामपीति यागत्वादिव्याप्यसमिद्यागत्वतनूनपाद्यागत्वादिजातीस्तत्तद्वाक्यस्थयजिना लक्षयित्वा तदवच्छिन्नयागव्यक्तयस्तत्तद्वाक्यैः विधीयन्ते इत्यादि कौस्तुभे द्रष्टव्यम् ॥

### ( उत्तराधिकरणप्रयोजनमेवैतदधिकरणप्रयोजनमिति निरूपणम् )

**उत्तराधिकरणेति ॥** उपांशुयाजे देवताविधिपक्षे "विष्णुरुपांशु यष्टव्यः" इत्येवमादीनामनुवादत्वेनार्थवादत्वासंभवात् "पौर्णमासीवदुपांशुयाजः स्यादि"ति वक्ष्यमाणाधिकरणे पूर्वपक्ष्युक्ततत्तद्विधित्वसिद्धिः । सिद्धान्ते तु न तत् । एवं विद्वद्वाक्यविहितकर्मणि देवताविधिपक्षे तत्र रूपलाभेन विधित्वस्यैवापत्तौ समुदायानुवादासंभवात् तदधिकरणगतपूर्वपक्ष्युक्तप्रयोजनसिद्धिः, सिद्धान्ते तु तत्रत्यसिद्धान्तप्रयोजनसिद्धिरित्युत्तराधिकरणप्रयोजनमित्यर्थः ॥

### ( कौस्तुभोक्तप्रयोजनान्तरनिरूपणम् )

**प्रयोजनान्तराणीति ॥** ज्योतिष्टोमे ग्रहणान्वयित्वेन श्रुतानां देवतानां प्रकरणेन ग्रहणद्वारा यागान्वयात् प्रकरणस्य च युगपत् सर्वाङ्गग्राहित्वात् समुच्चयावगतेः प्रत्येकंच ग्रहणान्वयात् संहतानां यागान्वयायोगाद्यागाभ्यासेन समुच्चयावगतावपि अभ्यासे प्रमाणाभावेन देवताविधिपूर्वपक्षे तासां दृष्टार्थत्वेन विकल्पात्सकृदेवानुष्ठानम् । सिद्धान्ते तु पञ्चानां प्रयाजानां अदृष्टार्थत्वादनुष्ठानमिति प्रयोजनान्तरं कौस्तुभे द्रष्टव्यमित्यर्थः ॥ अन्यानितु पूर्वपक्षप्रकारभेदेन कथितान्यपीह तेषामनुक्तत्वान्नोपयुक्तानीति न मया प्रतिपाद्यन्ते ॥

॥ इति द्वितीयमभ्यासाधिकरणम् ॥

---

### ( पूर्वाधिकरणेनापवादसङ्गतिनिरूपणम् )

पूर्वाधिकरणसिद्धान्तहेतुकपूर्वपक्षप्रदर्शनव्याजेनैवापवादकीं सङ्गतिं सूचयन् उदाहरणप्रदर्शनपूर्वकं पूर्वपक्षमेवाह—**तत्रत्य एवेति ॥**

### ( अभ्यासात्कर्मभेदः, रूपलाभः, य एवं विद्वानित्यस्य विधित्वम्, समिद्वाक्यवल्लेट्त्वनिश्चयश्चेत्येतेषां निरूपणम् )

विधिपुनःश्रवणरूपाभ्यासस्वरूपसिद्ध्युपयोगितया तत्रेत्युक्तम् । ततश्चाग्नेयादिवाक्यगतयजिविध्यपेक्षयाऽस्य पुनःश्रवणता सूचिता । एवकारेण रूपाभावरूपसिद्धान्तहेतुनिरासाय वक्ष्यमाणरूपोपपादनस्योपांशुयाजादिसाधारण्यसूचनद्वारा सुलभता सूचिता । स यावदित्यस्य प्रकृतविचारानुपयोगेऽपि विधित्वाभावे तादृशार्थवादानुपपत्तिसूचनद्वारा विधित्वोद्बल-

नचायं लद,लेट्त्वेऽपि वा यच्छब्देन विधिप्रतिबन्धाद्विधिपुनः श्रुत्यभावः; समिधो यजतीतिवल्लेट्त्वावगतेर्यच्छब्दस्य यो दीक्षित इतिवद्वेदनक्रियामात्रविधिप्रतिबन्धकत्वात् । अतएव पौर्णमास्यमावास्यापदमपि नामधेयम्; पौर्णमास्यां पौर्णमास्येति वाक्यद्वयेनैतद्वाक्यविहितकर्मणोरेव कालविधानात् । नच रूपाभावः; "वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामि"ति वचनेन आज्यभागक्रमाम्नातानामपि ऋचां क्रमं बाधित्वा एतद्वाक्यविहितकर्माङ्गत्वेन विधानात् मान्त्रवर्णिकाग्निसोमदेवतायाः "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्य"मितिवचनेन च द्रव्यस्य प्राप्तत्वात् ।

नार्थमुपन्यासः । **समिधो यजतीतिवदिति** । यथा तत्राप्राप्तार्थत्वेन लेट्त्वनिश्चयस्तद्वदिहापि । एवं "स याव"दित्याद्यर्थवादोऽपि विधेयस्तुत्यर्थतया सार्थको भवतीत्यर्थः । **अत एवेति** ॥

## (पौर्णमास्यां पौर्णमास्येति वाक्यवैयर्थ्यानुपपत्यादिभिरपि य एवं विद्वानित्यत्र यागविधिरित्युपपादनम्)

यागभावनाविधिप्रतिबन्धकत्वाभावेन विधेयसमर्पकयजिपदसामानाधिकरण्यादेवेत्यर्थः । **कालविधानादिति** ॥ नच—कालविधौ सति नामधेयत्वम्, नामधेयत्वे च सति तदनुवादेन कालविधिरितीतरेतराश्रयापत्तिरिति—वाच्यम्; अग्निहोत्रन्यायेन पूर्वं सामानाधिकरण्येन नामधेयत्वेऽवधारिते पश्चात्तदनुवादेन विहितकालयोगेन प्रवृत्तिनिमित्तावधारणोपपत्तेः । सिद्धान्ते त्वाग्नेयादीनामुत्पत्तिविहितकालकत्वेन प्रयाजादीनां प्रधानकालकत्वेनैव तत्तत्कालप्राप्तेरेतद्वाक्यद्वयवैयर्थ्यापत्तिः; तेषां यागानां बहुत्वात् । पौर्णमासीममावास्यामित्येकवचनानुपपत्त्या तत्र बहुत्वलक्षणापत्तिश्च प्रसज्येयाताम् । अत अनयोरेव कालविधानात् पौर्णमास्यमावास्यासंज्ञककर्मद्वयविधानम् । द्वितीया चाग्निहोत्रं जुहोतीत्यत्रेवार्थाक्षिप्तसाध्यत्वानुवादिका सती करणत्वलक्षणार्थेति युक्तं कर्मान्तरत्वमित्यर्थः ॥

## (वार्त्रघ्नीवृधन्वतीमन्त्रद्वयविचारः)

**वार्त्रघ्नीति** ॥ आज्यभागयोर्हि क्रमे चतस्रोऽनुवाक्याः पठ्यन्ते । आग्नेयी सौमी आग्नेयी सौमी चेति । तत्र "अग्निर्वृत्राणि जंघनत्" "त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा" इतिमन्त्रद्वयं वृत्रहननप्रकाशकपदघटितत्वात् वार्त्रघ्नीत्युच्यते । "अग्निः प्रत्नेन मन्मना । शुंभानस्तनुवं स्वाम् । कविर्विप्रेण वावृधे" । "सोमगीर्भिष्ट्वा वयम् वर्धयामो वचोविदः" इति मन्त्रद्वयं वृद्धिप्रकाशकपदघटितत्वात् वृधन्वतीत्युच्यते । एतेषां यावत्क्रमादाज्यभागाङ्गत्वं कल्प्यते, तावद्वार्त्रघ्नीवृधन्वतीति वाक्येन पौर्णमास्यमावास्यासंज्ञकैतत्कर्माङ्गत्वेन विनियोगात् क्रमबाधेनैवैतत्कर्माङ्गत्वान्मान्त्रवर्णिकाग्नीषोमदेवतयोरेकैकत्र लाभः सुलभः । नच—अबाधेनोपपत्तौ बाधायोगादाज्यभागयोरेव क्रमप्राप्तमन्त्राणामव्यवस्थाप्राप्तौ व्यवस्थामात्रपरत्वस्य तृतीये वक्ष्यमाणत्वान्नात्र देवताकल्पकत्वमिति—वाच्यम्; आज्यभागयोः पौर्णमास्यमावास्याकालकत्वस्य विध्यभावेन प्रकृतौ प्रतिपदि तयोः क्रियमाणत्वात् तिथ्यन्तरक्रियमाणविकृतिषु तदनापत्तेश्च कालकृतव्यवस्थानुपपत्तेरेतद्वाक्यगतपौर्णमास्यमावास्यापदाभ्यां नामधेयत्वेन विद्वद्वाक्यविहितकर्मणोर्झटित्युपस्थितेः तदङ्गत्वस्यैव युक्तत्वात् । अन्यथा पौर्णमास्यमावास्याङ्गभूताज्यभागयोः लक्षणापत्तेः । अतश्चोपक्रमगतप्रातिपदिके लक्षणापेक्षया तत्र "जयान् जुहुयादि"त्यत्रेव सप्तम्या एव प्राधान्ये लक्षणामङ्गीकृत्य तदुद्देशेनैव मन्त्रविधानादग्नीषोमदेवताप्रकाशकयोः वार्त्रघ्न्यृचोः पौर्णमासीकर्माङ्गत्वात् तादृशयोरेवच वृधन्वत्योरमावास्याकर्माङ्गत्वादेकैकस्मिन् कर्मणि मन्त्रद्वयस्य दृष्टार्थत्वेन विकल्पाद्देवताद्वयस्यापि समुच्चयाद्विद्वद्वाक्यविहितैकैककर्मणोऽग्निहोत्रवदावृत्तिः । देवतालक्षणा याज्यानुवाक्या इति स्मरणात् समुच्चितयाज्याद्वयमात्रं कल्प्यम् । **अथवा**—तयोरेव मन्त्रयोरेकस्यानुवाक्यत्वमेकस्य याज्यात्वमिति वार्तिकोक्तरीत्या मनोतान्यायेनोभयलक्षकत्वमङ्गीकृत्य याज्यापि सुलभैव । नच अस्मिन् पक्षे अनुवाक्यासमाख्याबाधः; प्रैषपश्चाद्भावमात्रेणाप्यनुशब्दोपपत्तेस्तदविरोधात् । आज्यभागयोस्त्वग्नीषोमाभ्यां आज्यभागौ यजतीति वचनेनैवाग्नीषोमीयदेवतयोर्विधानात् तदनुरूपानुवाक्यमात्रकल्पनम् । याज्या तु क्रमप्राप्ता अस्त्येवेति न कश्चिद्दोषः । एवंच देवतालाभ अनयोर्नासुलभ इति भावः ॥

## (सर्वस्मैवेतिवाक्यस्य प्राप्ताज्यध्रौवतामात्रविधित्वस्य निरासः, अलंकरणाज्यव्यवर्तनेन चारितार्थ्यं, तेन द्रव्यलाभश्च)

**सर्वस्मैवेति** ॥ अनेन च वचनेन यज्ञायेति तादर्थ्यचतुर्थ्या सर्वयज्ञोद्देशेन ध्रौवाज्यद्रव्यस्य विधानादुपांशुयाज इवेहापि द्रव्यप्राप्तिः । **नच**—अनेन यत्राज्यप्राप्तिस्तत्र ध्रौवतामात्रविधानादप्राप्ताज्यकयागेषु द्रव्यविध्यसंभवः इति—**वाच्यम्**; यज्ञाङ्गभूताज्यानुवादे विशिष्टोद्देशापत्तेराज्यमात्रानुवादे अलंकरणार्थाज्येऽपि तदापत्तेर्ध्रौवाज्यस्यैव यज्ञोद्देशेन विधानस्यावश्यकत्वात् । **नच**—एवं चतुर्ध्रुवायां गृह्णातीत्यसंयुक्तोत्पत्तिकाज्यस्य प्रयोजनाकाङ्क्षया अनिर्दिष्टद्रव्यकयागानां द्रव्याकाङ्क्षया चोभयाकाङ्क्षयैव यागाङ्गत्वोपपत्तेरेतद्विधिवैयर्थ्यमिति—**वाच्यम्**; अलंकरणाद्यर्थाज्याद्विव्यावृत्त्या तत्सार्थक्यात् । अत एव अलंकरणादौ स्थाल्याज्यस्यैव ग्रहणम् । अतस्तेन वचनेन आज्यद्रव्यप्राप्तिरपीत्यर्थः ॥

**अथवा**—आग्नेयादिवाक्यैरेव पौर्णमास्यमावास्यादिपदोपस्थापितैतद्वाक्यविहितकर्मानुवादेन द्रव्यदेवताविधानाद्रूपलाभोपपत्तिः। नचानेकविधानाद्वाक्यभेदः; तद्धितेन देवताविशिष्टद्रव्यवाचिना परस्परान्वयस्य व्युत्पन्नत्वेन विशिष्टविध्युपपत्तेः। प्रकारान्तरेण रूपलाभस्तु कौस्तुभ एव द्रष्टव्यः। सर्वथा विद्वद्वाक्ये कर्मान्तरविधिः।

एवं च "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति फलवाक्येन प्रयाजादिसाधारण्येन सर्वेषामाग्नेयादीनां एतद्वाक्यविहितकर्मणोश्च प्रथमपक्षे फलसंबन्धो द्वितीये तु तत्साधारण्येन तयोरेव, दर्शपूर्णमासप्रातिपदिकस्य कालयोगिषु प्रसिद्धत्वेऽपि द्विवचनस्याप्रसिद्धत्वात्, आज्यभागादिषु तस्य प्रसिद्धत्वेऽपि प्रातिपदिकस्याप्रसिद्धेः, अतो राजसूयन्यायेन नाम्नः सङ्कोचकत्वानुपपत्तेः प्रकरणात्सर्वेषामेव यागानां फलसंबन्धः। पाशाधिकरणन्यायेन द्विवचनस्याप्रसिद्धत्वेऽपि प्रातिपदिकमात्रप्रसिद्ध्या कालयोगिनामेव वा अनयोरेव वा द्वित्वस्यापि कथंचिदुपपत्तेः फलसंबन्धः, नतु षण्णामेवाग्नेयादीनामिति प्राप्ते—

---

**( गुणस्तु श्रुतिसंयोगादिति गुणसूत्रोक्तप्रकारेणाग्नेयवाक्येन विशिष्टविधानेनावाक्यभेदाद्गुणसमर्पणेन पूर्वपक्षः )**

एवमुत्सूत्रं रूपलाभमुत्पाद्य गुणस्तु श्रुतिसंयोगादिति पूर्वपक्षिणः पुनःप्रत्यवस्थानार्थं सूत्रम्, तदर्थमनुरुध्य रूपप्राप्तिमुपपादयति—**अथवेति** ॥ नच उद्देश्यद्वयप्रयुक्त आग्नेयवाक्ये वाक्यभेदः; अश्रुतयागकल्पने विशिष्टविधिगौरवपरिहारार्थमर्धमन्तर्वेदीतिवत् पदद्वये लक्षणया प्रकृतप्रधानयागत्वेनोद्देश्यतया तदप्रसक्तेरित्यर्थः ॥

**( जुह्वामौपभृतमित्यस्योपपत्त्या समिदादिवाक्यैः देवतासमर्पणमिति प्रकारान्तरोपपादनम् )**

**प्रकारान्तरेण** ॥ **अथवा**—विद्वद्वाक्यविहितकर्मानुवादेन समिदादिवाक्येषु पञ्चसु देवताविधिः, तासां च "अतिहायेडो बर्हिः प्रतिसमानीयत" इति ज्ञापकबलात् समुच्चयः। नह्यत्रोपांशुयाजे देवताविधिपक्षे "विष्णुरुपांशु यष्टव्यः" इत्याद्यनुवादानुपपत्तिबाधकवदिह किंचिद्बाधकमस्ति । **नच**—अत्र बर्हिरादिपदानां विद्वद्वाक्यविहितकर्माङ्गदेवतापरत्वे तत्र ध्रौवस्य द्रव्यत्वात् जुह्वामौपभृथमित्यस्यानुपपत्तिरस्त्येवेति—**वाच्यम्**; अस्मिन्नपि पक्षे "पञ्च प्रयाजा इज्यन्ते यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्" इत्यादिज्ञापकबलात् पञ्चप्रयाजसत्त्वेन प्रयाजादौ औपभृथस्य विद्वद्वाक्यविहितबर्हिर्देवत्यकर्माभ्यासकाले जुह्वामानयनविध्युपपत्त्या तदनुपपत्तेरप्रसरात् ॥

**( सुत्यान्यकालीनानां बाधेनाङ्गगुणन्यायेन पौर्णमस्याः कालबाधेन पंचाहानुष्ठानेऽपि न दोषेण सौमिकधर्मातिदेशेन रूपलाभ इति प्रकारान्तरानुसरणेन पूर्वपक्षोपसंहारः )**

**अथवा**—अव्यक्तत्वात् सौमिकधर्मातिदेशाद्रूपलाभः। नच तदतिदेशे पञ्चाहत्वप्राप्त्या "पौर्णमास्यां पौर्णमास्या यजेते"ति वाक्यद्वयविहितकालबाधप्रसङ्गः; तदनुरोधेन सुत्यान्यकालीनानां बाधेऽपि सुत्याकालीनानतिदेशे बाधकाभावात् ॥ **वस्तुतस्तु**—एकस्यां पौर्णमास्याममावास्यायां वा विहितस्यापि साङ्गसोमयागस्याशक्यत्वात् अनुष्ठानासंभवेन दीक्षणीयाद्यङ्गेषु सोमयागकालबाधवदिहापि गुणभूतकालानुरोधेन प्रधानलोपस्यान्याय्यत्वात् पौर्णमास्यादिवाचनिककालबाधेनाऽपि पञ्चाहमनुष्ठाने बाधकाभावात् सुत्यान्यकालीनामङ्गानामपि नैव लोप इति सौमिकधर्मातिदेशेन रूपलाभः संभवत्येवेति प्रकारान्तरेण रूपलाभः कौस्तुभे द्रष्टव्य इत्यर्थः। पूर्वपक्षमुपसंहरति—**सर्वथेति** ॥

**( प्रथमपक्षे द्वितीयपक्षे च पूर्वपक्षप्रयोजननिरूपणम् )**

पूर्वपक्षे प्रयोजनमाह—**एवंचेति । प्रथमपक्ष इति** ॥ वार्त्रघ्नीवृधन्वतीमन्त्रवर्णकल्प्या देवता ध्रौवं चाज्यद्रव्यमिति पक्षे आग्नेयादिवाक्यानामपि यागविधायकत्वात् तत्साधारण्येन फलसंबन्धः, आग्नेयादिवाक्यानां द्रव्यदेवताविधायकत्वमिति द्वितीये पक्षे तेषां यागानामभावात् प्रयाजाद्यङ्गमात्रसाधारण्येनानयोरपि फलसंबन्ध इत्यर्थः । तदेवोपपादयति—**दर्शपूर्णमासेति** ॥ प्रसिद्धार्थकं हि नाम यजिसंकोचकं भवति, यथा ज्योतिष्टोमेतिनाम, इदन्तु अप्रसिद्धार्थकं यत्राख्यातं तत्र तदनुरोधेन वर्तते इत्याख्यातस्य सर्वयागपरत्वात् सर्वेषां फलसंबन्ध इत्याह—**अत इति** ॥ **राजसूयन्यायेन** चतुर्थचतुर्थपादाधिकरणन्यायेनेत्यर्थः । **अथवा**—कालयोगिष्वष्टसु प्रातिपदिकप्रसिद्धिसत्त्वे द्विवचनस्य पाशाधिकरणन्यायेन बहुत्वलक्षणयाप्युपपत्तेः न प्रयाजादिसाधारण्येन फलसंबन्धः, किन्तु अष्टानामेवेति पक्षान्तरमाह—**पाशेति** ॥ **अथवा**—द्विवचनेऽपि लक्षणायां प्रयोजनाभावादनयोरेव फलसंबन्धोपपत्तिरिति पक्षान्तरमाह—**अनयोरेवेति** ॥

**( पौर्णमास्यमावास्यापदयोः दर्शपूर्णमासपदयोश्च पर्यायत्वसमर्थनेन दर्शपूर्णमासपदाभ्यां विद्वद्वाक्यविहितकर्मानुवादोपपत्तिः )**

यद्यपि फलवाक्ये दर्शपूर्णमासपदार्थवृत्तिद्वित्वपरं द्विवचनम् न पौर्णमास्यमावास्यासंज्ञककर्मवृत्तिद्वित्वपरं भवितुमर्हति; तथापि 'दर्शो वा एतयोः पूर्वः पूर्णमास उत्तरोऽथ यत् पूर्णमासं पूर्वमारभते तदयथापूर्वं क्रियते। तस्मात् पूर्वं पौर्ण-

लिङ्गक्रमाभ्यामाज्यभागाङ्गत्वेन वार्त्रघ्नीवृधन्वतीमन्त्राणां प्राप्तानामपेक्षितव्यवस्थाविधायकत्वेन वार्त्रघ्नीवाक्यस्योपपत्तौ नानपेक्षितगौरवापादकविद्वद्वाक्यविहितकर्माङ्गताबोधकत्वम्। अतएव च कालद्वारेण कर्मद्वारेण वा व्यवस्थापरमेव तदिति वक्ष्यते। अतश्च न तावदनेन देवताप्राप्तिः, नाप्याग्नेयादिवाक्येन; प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्यभेदात्।

---

मासमारभमाणः सरस्वत्यै चरुं निर्वपेत् सरस्वते द्वादशकपालममावास्या वै सरस्वती पूर्णमासस्सरस्वान्'' इत्यन्वारंभणीयावाक्यशेषे दर्शामावास्याशब्दयोः पर्यायत्वावगमात् पौर्णमास्यैकदेशेन पूर्णमासशब्देन **नामैकदेशे नामग्रहणमिति** न्यायेन पर्यायत्वोपपत्तेरेकार्थकत्वेन तद्वृत्तिद्वित्वपरद्विवचनोपपत्तिः कथंचिच्छब्देन सूचिता ॥

**( वार्तघ्नीवृधन्वतीवाक्ययोः अनियमेन प्राप्तमन्त्रचतुष्टयव्यवस्थापकत्वेन विद्वद्वाक्यविहितकर्मणि रूपालाभात् न तद्विधित्वमिति सिद्धान्तोपक्रमः )**

रूपावचनादिति सौत्रं सिद्धान्तहेतुं विवृण्वन्नेव सिद्धान्तमाह—**लिङ्गेति—अपेक्षितेति** ॥ अबाधेनोपपत्तौ बाधायोगाद्ब्राह्मणवाक्ययोश्च पौर्णमास्यमावास्यापदयोः कालपरयोः कर्मपरत्वे लक्षणापत्तेः सप्तम्या अपि प्राधान्यलक्षकत्वापत्तेरपूर्वविधित्वाङ्गीकारेऽश्रुतदेवताविधिकल्पकत्वेऽश्रुतयाज्यान्तरकल्पकत्वे आज्यभागयोरश्रुतानुवाक्याकल्पने गौरवापत्तेश्च मन्त्रचतुष्टयस्याऽऽज्यभागाङ्गतयाऽनियमेन प्राप्तस्य नियममात्रविधाने लाघवाच्चापेक्षितविधित्वसंभवेऽनपेक्षितविधित्वाश्रयणस्यायुक्तत्वादाज्यभागाङ्गत्वमेव तच्चतुष्टयस्येति न विद्वद्वाक्यविहितकर्मणोर्द्रव्यलाभेऽपि देवताभावादरूपत्वेन विधिसंभव इत्यर्थः ॥

**( कालकृतव्यवस्थादरे प्रतिपदि विकृतौ च वार्त्रघ्नीमन्त्राननुष्ठानापत्त्या पौर्णमासीपदस्याज्यभागलक्षकत्वाद्यंगीकारेण कर्मकृतव्यवस्थैव युक्तेत्यादिनिरूपणम् । उक्तपूर्वपक्षनिरासे कालकृतव्यवस्थाया अप्युपयोगश्च )**

यतो नियमविधौ लाघवमत एवोभयथापि व्यवस्था। मिथश्चानर्थसंवन्ध इति तृतीयाधिकरणसिद्धान्तमनुवदति—**अत एवेति** ॥ यद्यपि पौर्णमास्यमावास्याशब्दाभ्यां शक्त्या कालरूपार्थाभिधानेन सप्तम्या निमित्तत्वस्याधिकरणत्वस्य वाऽभिधानेन पौर्णमास्यमावास्याकालयोराज्यभागाङ्गतया तदङ्गतया प्राप्तयोर्वार्त्रघ्नीवृधन्वत्योः तत्कालकत्वात् कालकृतव्यवस्थापि संभवति; तथापि आज्यभागयोः प्रतिपदि क्रियमाणत्वेन तत्कालकत्वासंभवात् कदाचित् सखण्डपर्वणि तत्संभवेऽपि संपूर्णपर्वणि तत्कालकत्वासंभवेन मन्त्रनिवृत्तिरूपशेषिपरिसङ्ख्याफलकत्वापत्तेः शेषनियमरूपलाघवानुरोधेन पौर्णमास्यमावास्यापदं तत्कालीनप्रधानाङ्गभूताज्यभागलक्षकमङ्गीकृत्य प्रधानप्रयोगारंभद्वारा तत्कालीनत्वसंभवात् कर्मकृतैव साऽत्र युक्ता । अत एव—प्रकृतौ पौर्णमास्यादिकालविधीनां सन्धिमभितो यजेतेति वचनान्तरानुरोधात् प्रयोगारंभद्वारकत्वमेव। सप्तमी च प्राधान्यपरैव । अतश्च तादृशाज्यभागयोर्मन्त्रविशेषविधानात् प्रकृतौ व्यवस्थासिद्धिवत् पौर्णमासीविकारस्यामावास्याविकारस्य वा यस्मिन् कस्मिंश्चिद्दिने करणेऽपि तयोर्व्यवस्थासिद्धिरित्येवं कर्मकृतव्यवस्थाया एव युक्तत्वेन वक्ष्यमाणत्वेऽपीह कालकृतव्यवस्थयापि रूपलाभनिराससंभवं प्रस्तुतमभिप्रेत्य अनास्थया तदुक्तिः । यद्यपि पूर्वपक्ष इव प्रातिपदिकप्रत्यययोः लक्षणापत्तिस्तुल्या; तथापि लक्षणामङ्गीकृत्यापि नियमविधिसंभवेऽपूर्वविधित्वाङ्गीकारो न युक्त इति भावः ॥

**( भावनाप्राप्तौ अनेकविशिष्टैककारकविधानवत् अष्टाकपालशब्दस्य तात्पर्यग्राहकत्वेनाग्नेयपदेनैवाग्निद्रव्योभयविवक्षणेन विशिष्टव्युत्पन्नत्वेन आग्नेयवाक्यस्य रूपसमर्पकत्वशङ्का )**

यत्र ह्यप्राप्ताभावनाऽनेककारकविशिष्टा विधीयते, श्रौतविधेर्विशिष्टभावनाविधान एव व्यापारात्, विशेषणानां च विशिष्टविध्यन्यथानुपपत्तिकल्पितविधेरेव विधानसिद्धेः श्रौतविधेस्तत्र व्यापाराभावान्न विधिफलस्याज्ञातज्ञापनस्यैकविषयत्वभङ्ग इति न वाक्यभेदः—यथा "सौर्यं चरुमि"त्यादौ, एवं भावनायामप्राप्तायां तदन्वयात् पूर्वमपि विशेषणानां परस्परवैशिष्ट्यं व्युत्पन्नम्, तत्रानेकविशेषणविशिष्टस्याप्येकस्यैव विशेष्यस्य विधेयत्वान्नाऽऽवृत्तिलक्षणो वाक्यभेदः । यथा पशुना यजेतेत्यत्र पशुप्रातिपदिकोपात्तजातेः पदश्रुत्या समानाभिधानश्रुत्या सङ्ख्यायास्तृतीयोपात्तकरणत्वेऽन्वयाद्विशिष्टैककारकविधाने। **यत्तु शास्त्रदीपिकायां कौस्तुभे च—**प्राप्तकर्मानुवादेन विशिष्टविधाने एतद्वाक्यमुदाहृतम्, तदीदृशं ह्येतद्वाक्यं श्रुतानुमितैकनिष्पन्नमग्नीषोमीयेन पशुना यजेतेति न्यायसुधालेखनादस्याग्नीषोमीयपशूत्पत्तिवाक्यत्वेन तत्र प्राप्तकर्मानुवादासंभवात् प्रौढिमात्रम् । अत एव "अजया क्रीणाती"त्येतदेव प्राप्तकर्मानुवादे विशिष्टविधिप्रदर्शनार्थमुदाहृतं न्यायसुधायाम् । यथा वा—यत्र षष्ठी "तस्य द्वादश शतं दक्षिणे"त्यत्र ऋत्विग्भ्यो दक्षिणां ददातीति प्राप्तदक्षिणानुवादेन तस्येति तच्छब्दोपात्तगोसंवन्धविशिष्टद्वादशशतसङ्ख्याविधाने प्राचां मते षष्ठ्यर्थस्य सङ्ख्यायामन्वयस्य व्युत्पन्नत्वाच्च सः । अनेनैव न्यायेन षष्ठ्यन्तस्योद्देश्यविशेषणत्वेऽपि न वाक्यभेदः । यथाऽतिरात्रे ब्राह्मणस्य गृह्णीयादित्यादौ । एवमिहापि गुणाधिकरणवक्ष्यमाणन्यायेनाऽऽमिक्षापदवदष्टाक-

विधिफलस्य हि अज्ञातज्ञापनस्यैकविषयत्वमेव सर्वत्र क्लृप्तम्, तस्यानेकविषयत्वे बाधप्रसङ्गः । नच विशिष्टविधानादवाक्यभेदः; विशिष्टस्याव्युत्पन्नत्वात् । उक्तं ह्येतत्—कारकतासंबन्धेन यत्र तद्धितादिवृत्तिर्न तत्र परस्परान्वयोऽपि तु यत्राश्वाभिधानीमित्यादौ तदतिरिक्तसंबन्धेन वृत्तिस्तत्रैव स इति । अतश्च प्रकृते देवतात्वस्य संप्रदानकारकत्वात्परस्परसंबन्धानुपपत्तेरुभयविशिष्टकर्मान्तरविधानमेवावश्यकम् । अतश्च रूपाभावस्तदवस्थ एव । अस्तु वा कथंचिद्रूपलाभः, तथापि न विद्वद्वाक्ये कर्मविधिः; यच्छब्देन विधिशक्तिप्रतिबन्धेन विधिपुनःश्रवणस्यैवाभावात् । नच तस्य वेदनक्रियामात्रविधिप्रतिबन्धकत्वम्, यच्छब्दादेस्तच्छब्दावधिकप्रतिबन्धकत्वस्यैव व्युत्पत्तिसिद्धत्वात् । किंच अन्यपरत्वादपि नास्यासस्वरूपसिद्धिः । तथाहि—तत्र विद्वद्वाक्यस्थलडन्तयजिना प्रकृतत्वादाग्नेयादयस्त्रय एव तत्तत्कालयोगिनस्तत्तन्नामधे-

---

पालपदस्य तात्पर्यग्राहकत्वेन भिन्नपदोपात्तत्वाभावेन तद्धितान्तपदेनैकेनैवाग्न्यादिदेवताविशिष्टाष्टाकपालद्रव्याभिधानेन भावनान्वयात् पूर्वमेव विशिष्टव्युत्पन्नत्वात् विद्वद्वाक्यविहितयागभावनाप्राप्तावपि विधानोपपत्तेः प्रत्युत तदनङ्गीकारे सास्यदेवतेति द्रव्यसंबन्धाधिकारविहितदेवतातद्धितानुपपत्तेर्वाक्यभेदाभावमाशङ्क्य परिहरति—नचेति ॥

**( कारकतासंबधं विना समासादिस्थले विशिष्टव्युत्पत्तिसमर्पणम् )**

**अश्वाभिधानीमित्यादाविति** ॥ आदिपदेन "लोहितोष्णीषा ऋत्विजः प्रचरन्ती"त्यत्र प्राप्तप्रचारानुवादेन ऋत्विग्गतलौहित्यविधिः संगृह्यते । अत एव अष्टमे भाष्यकारेण शताग्निष्टोममित्यपि समासः उभयविशेषणविशिष्टं गणमाह—स एवैकार्थो विधीयते यथा लोहितोष्णीष इत्युक्तम् ॥

**( व्यस्तस्थलेषु पञ्चदशान्याज्यानीत्यादौ तस्य द्वादशशतमित्यादौ च सर्वेषामपि क्रियान्वयस्य समूलं मतान्तरनिरासपूर्वकं चोपपादनम् )**

अत एव कारकातिरिक्तसंबन्धेन समासादिवृत्तौ वाक्यभेदाभावेऽपि यत्र न समासः, यथा पञ्चदशान्याज्यानि इत्यत्र तत्र भवत्येव स इत्युक्तं चित्राधिकरणे शास्त्रदीपिकायाम्, प्रकृतेतु देवतात्वस्य संप्रदानकारकत्वादन्यान्वये कारकत्वव्याघातापत्तेः प्रथमतः क्रियान्वय एवाभ्युपेयः पश्चात्तु द्रव्यसंबन्धः पार्ष्णिक आरुण्यादिवत्, तदभिप्रायिकैव तद्धितादिवृत्तिरिति वैशिष्ट्यस्याव्युत्पन्नत्वात् दुरुद्धरो वाक्यभेदः । नचैतत्कल्पनाया निर्मूलत्वम्; "एकपदोपात्तस्याप्यनेककारकस्य परस्परान्वयाभावेनैकविशिष्टेतरविध्ययोगान्नाग्नेय इत्यत्रैकत्वेन विधिस्संभवती"त्यादिना तथा "अन्यतरविशिष्टान्यतरविधावपि द्रव्यदेवतयोर्भिन्नकारकत्वात् कारकयोश्चान्योन्यविशेषणत्वाभावेनैककारकविशिष्टकारकान्तरविध्ययोगादि"त्यादिनाच न्यायसुधायां वाक्यभेदप्रपञ्चावसरे सूचनेन समूलत्वात् । एवं स्थिते भिन्नपदोपात्तान्यपि यानि सामानाधिकरण्येन षष्ठ्या वा क्रियान्वयात् प्राक् मिथः संवन्धं शब्दतो वस्तुतश्च विधिमनादृत्यैव लभन्ते—यथाऽभ्युदितेष्टौ विष्णवे शिपिविष्टायेति पदद्वयेनापि "किमित्ते विष्णो परिचक्ष्यं भूत् प्रयद्ववक्षे शिपिविष्टो अस्मीति यः पशोर्भूमा या पुष्टिः तद्विष्णुः शिपिविष्टोऽतिरिक्तः एवातिरिक्तं दधाती"ति मन्त्रवर्णार्थवादेभ्यः शिपिशब्दवाच्यरश्म्याविष्टविष्णुरूपविशिष्टैकार्थप्रसिद्ध्या विशिष्टान्वयव्युत्पत्त्या न वाक्यभेद इति पार्थसारथिनोक्तम्, तद्दूषणं कौस्तुभोक्तं षष्ठे तदधिकरणे व्यक्तीकरिष्यते । यदपि तस्य द्वादशशतमिति वाक्ये गोसङ्ख्योभयविधाने वाक्यभेदापत्तिनिरासाय षष्ठीस्थलेऽपि परस्परान्वयकल्पनं प्राचाम्, तदपि गोविशिष्टसङ्ख्याविधानेन कथंचिद्वाक्यभेदपरिहारेऽपि समुच्चिताश्वादेरपि विधानात्तदापत्तेरनिवार्यत्वात् तत्रोभयविशिष्टदक्षिणादानविधानस्यैव आवश्यकत्वे तेनैव तत्परिहारे तदनुरोधेन व्युत्पत्त्यन्तरकल्पनया षष्ठ्यर्थस्याप्यन्वयकल्पने प्रयोजनाभावात् व्यर्थमिति कौस्तुभे द्रष्टव्यम् ॥

**( आग्नेयवाक्येन रूपलाभनिरासोपसंहारः )**

अतश्चाग्नेयादिवाक्येषु द्रव्यदेवताविशिष्टयागान्तरविधानस्यावश्यकत्वात् न रूपमनयोः प्राप्यत इत्युपसंहरति—**अतश्चेति** ॥

**( सौमिकधर्माणामन्योन्याश्रयापत्त्यातिदेशादिनिरासेन प्रकारन्तरेण रूपलाभनिरासः )**

कौस्तुभोक्तप्रकारान्तरेण रूपलाभं कथंचित् मनसि निधाय दूषणान्तरमाह—**अस्तु वेति** ॥ ज्योतिष्टोमिकधर्मातिदेशस्य सोमविधेर्दीक्षणीयायङ्गद्वारेण दर्शपूर्णमासविध्युपजीवित्वात् तयोरपि तदुपजीवित्वे अन्योन्याश्रयापत्तेरतिदेशप्राप्ताङ्गविशिष्टेष्टिभावनायाः प्रातःकालेऽनुष्ठानासंभवेन प्रतिपदीष्ट्यापत्तेरसंभवः कथंचित्पदेन सूचितः ॥

**( यच्छब्दस्य तच्छब्दावधिकार्थप्राप्तिमात्रद्योतकत्वेन प्रकृते गत्यन्तरसंभवेन च न कर्मविधिरित्युपपादनम् )**

**तच्छब्दावधिकेति** ॥ यावदुत्तरथ्येनेत्यस्मात् पूर्वं स इति तच्छब्दाध्याहारस्यावश्यकत्वात् तदर्थावधिप्राप्तिद्योतनेन विधित्वप्रतिवन्धः । एवं सत्यपि यच्छब्दसत्त्वे तस्य प्राप्तिद्योतनमात्रकारित्वात् प्रमाणान्तरेण विशिष्टस्य प्राप्त्यभावेऽगत्या विशेषणमात्रप्राप्तिद्योतकत्वमङ्गीकृत्याऽगत्या विशिष्टविधिरपि "यो दीक्षित" इतिवत् स्वीक्रियते । नत्विह तथास्ति; वक्ष्यमाणरीत्याऽनर्थक्यासंभवेनागतेरभावादित्यर्थः ॥

यत्वशादनूद्यन्ते। तत्प्रयोजनंच तन्त्रेण यजिनाऽनेकोपादाना-त्समुदायद्वयसिद्धिः। तस्या अपि प्रयोजनं फलवाक्ये षण्णामेव फलसंबन्धसिद्धिः; प्रातिपदिकस्य षट्सु कालयोगेन प्रसिद्धत्वात्, द्विवचनस्य च स्वशक्याश्रयसमुदायघटकसमुदायिवृत्तित्वसंबन्धेन बहुत्वलक्षणार्थत्वात्। लक्षणातात्पर्यग्राहकमेव च शक्यसंबन्धघटकसमुदायसिद्धिद्वारा विद्वद्वाक्यद्वयम्, अन्यथा हि विद्वद्वाक्याभावे आग्नेयद्वयस्यैवैकवाक्योपादानावगतद्वित्वयोगिनः कालद्वययुक्तस्य च फलसंबन्धापत्तिः। यथाच "यदाग्नेयोऽष्टाकपाल" इत्यत्राग्नेयद्वयसिद्धिस्तथा कौस्तुभ एव प्रपञ्चितम्। अतः षण्णां फलसंबन्धसिद्धिरेवोक्तविधया विद्वद्वाक्यप्रयोजनमित्यन्यपरत्वादपि न "वैश्वदेवेन यजेते"तिवदभ्यासस्वरूपसिद्धिः। नचैवं "पौर्णमास्यां पौर्णमास्ये"ति वाक्यद्वयवैयर्थ्यापत्तिः; तस्य समुदितयागत्रिकप्रयोगविधित्वेन सार्थक्यस्यैकादशे वक्ष्यमाणत्वात्, अन्यथा ह्युत्पत्तिवाक्येषु प्रत्येककालयोगात्प्रत्येकमेव पूर्वोत्तराङ्गसहितैकैकप्रधानप्रयोगा भवेयुः। एवं-

(विद्वद्वाक्येन समुदायानुवादः, एवमपि षण्णामेव फलसंबंध इत्यादि निरूपणम्)

**अनेकोपादानादिति** ॥ यथाऽनेकेषां वृक्षाणां एकदेशस्थितानां वनमित्येकपदोपादानादेकप्रतीतिविषयत्वात् समुदायसिद्धिस्तद्वत् इहेत्यर्थः। अत्र समुदायस्यानुवदितारौ समुदायवचनाविति यथाश्रुतभाष्यात् पौर्णमास्यादिशब्दयोः समुदायवचनत्वप्रतीतेः समुदायद्वयस्यैव फलसंबन्धभ्रमं वारयति—**प्रातिपदिकस्येति** ॥ समुदायस्य कालयोगाभावेन तत्प्रख्यन्यायाविषयत्वेनैव तन्नामत्वासंभवात् समुदायस्य मानान्तराप्रमितत्वेन विद्वद्वाक्ययोरनुवादायोगात् यजिना तदनुवादे लक्षणापत्तेः प्रातिपदिकेन षड्यागसमुदायिनामेवाभिधानात्तेषामेव विध्यर्थमनुवादात् समुदायिनामेव फलसंबन्ध इत्यर्थः। फलवाक्ये समुदाय्यनुवादे द्विवचनानुपपत्तिं परिहरति—**द्विवचनस्येति** ॥ स्वपदं द्विवचनपरम्। तेन द्वित्वाश्रयसमुदायघटकसमुदायिवृत्तित्वसंबन्धेन बहुत्वलक्षणायां शक्यसंबन्धघटकीभूतसमुदायद्वयतात्पर्यग्राहकं विद्वद्वाक्यद्वयमित्यर्थः। **यथाचेति** ॥

(सायंप्रातःकालयोरिवाभ्यासेनापि कालद्वयसंबन्धोपपत्त्या अङ्गत्वेन विधानादुद्देश्यानेकत्वनिमित्तवाक्यभेदाभावात् उपस्थितिसत्त्वेन एकवाक्यगतत्वेन च प्रकरणान्तरादिन्यायस्याप्यप्रवृत्तेराग्नेयैकत्वमिति पार्थसारथिमतनिरूपणम्)

यद्यपि चाग्नेयवाक्ये नैकस्मिन् कर्मणि कालद्वयनिवेशासंभवेन समुचितकालद्वयलक्षणगुणात् भेदः संभवति; तस्याग्निहोत्रे सायंप्रातःकालयोरिव अभ्यासेनाप्युपपत्तेः, नवा कालस्यानुपादेयत्वेनोद्देश्यत्वात् तदनेकत्वनिमित्तकवाक्यभेदापादकगुणात् सः; कालस्यानुपादेयत्वेऽपि अमावास्यायामपराह्ण इतिवदङ्गत्वेन विधेयत्वोपपत्तेरुद्देश्यानेकत्वनिमित्तवाक्यभेदाप्रसक्तेः। नाप्यनुपादेयगुणयोगरूपप्रकरणान्तरात्; तस्य संनिधावप्रवृत्तेः ॥ **किंच** सङ्ख्याव्यतिरिक्तभेदप्रमाणानां वाक्यान्तरविहितकर्मप्रतियोगिकभेदकत्वनियमात् स्ववाक्योपात्तकर्मप्रतियोगिकभेदबोधकत्वासंभवादत्र न सः। अतः पार्थसारथ्युक्तमाग्नेयैकत्वमेव युक्तम् ॥

(उत्पत्तिवाक्यस्थस्य कर्मभेदापादकस्य पदार्थस्य सङ्ख्याया इव कर्मभेदकत्वेन पौर्णमास्यमावास्याकालयोः सायंप्रातःकालवैषम्यात्, आग्नेयद्वित्वमेवमपि विद्वद्वाक्येन समुदायानुवादसार्थक्यार्थं दर्शपूर्णमासाख्यामित्यत्र बहुत्वलक्षणेत्यादिनिरूपणम्)

तथापि यस्य पदार्थस्य भेदमावृत्तिं वा विना न कर्मान्वययोग्यत्वम्, तस्योत्पत्तिवाक्यस्थस्य कर्मोत्पत्तिभेदकत्वमनुत्पन्नवाक्यगतस्य त्वावृत्तिबोधकत्वमित्यर्थस्य सङ्ख्यादौ क्लृप्तत्वादिहापि तस्योत्पत्तिवाक्यगतत्वेन गुणस्यैव कर्मभेदकत्वोपपत्तिः। **अत एव** सायंप्रातःकालयोरनुत्पत्तिवाक्यगतत्वेन गुणस्यैव कर्मभेदकत्वोपपत्तिः। **अत एव** सायंप्रातःकालयोरनुत्पत्तिवाक्यगतत्वादभ्यासापादकत्वमेव। भेदोऽपि चात्र सङ्ख्यावदनेकत्वबोधनद्वारैव, नतु किंचित्प्रतियोगिकः; प्रमाणान्तरवत् प्रतियोगिनः पूर्वमप्रसिध्या तन्निरूपितभेदस्य बोधयितुमशक्यत्वात्। एवंसति प्रमाणवलेन सङ्ख्यावद्गुणस्यापि स्ववाक्यविहितकर्मप्रतियोगिकभेदबोधकत्वेऽपि न क्षतिः। अत आग्नेयभेद इति कौस्तुभे व्यक्तमित्यर्थः। प्रपञ्चितपदोपादानात् प्रकाशकारोपपादितप्रकारान्तरात् भेदनिरासोऽपि तत्र द्रष्टव्य इति सूचितम्। **नच**—एवं तर्हि आग्नेयभेदे तत्रैव द्विवचनोपपत्त्या तयोरेव फलसंबन्धोपपत्तेः किमिति बहुत्वलक्षणाश्रयणमिति—**वाच्यम्**; विद्वद्वाक्यगतसमुदायानुवादवैयर्थ्यपरिहारार्थं प्रयोजनजिज्ञासया तस्या आवश्यकत्वादिति भावः ॥

(वैश्वदेववाक्ये समुदायानुवादोपयोगः)

**वैश्वदेवेन यजेतेतिवदिति** ॥ एतस्य वाक्यस्य विश्वदेवदेवताकयागघटितसमुदायसिद्धिद्वारा आग्नेयाद्यष्टयागानां प्राचीनप्रवणदेशादिसंबन्धसिध्यर्थत्वेनान्यपरत्वेन न कर्मान्तरविधायकत्वं तद्वदित्यर्थः ॥

(वचनान्तरप्राप्तद्यहकालीनत्वप्रातःकालीनत्वयोर्बाधापत्त्या त्रिकस्य त्रिकस्यैकप्रयोगसिद्ध्यर्थं समुदायद्वयानुवाद इति निरूपणम्)

**अन्यथा हीति** ॥ **नच**—प्रत्येकप्रयोगकल्पने एकफलसाधनत्वानुपपत्तिः; प्रत्येकं प्रयुक्तानामपि आग्नेयादीनाम-

चोत्पत्तिवाक्ये कालश्रवणमपि विद्वद्वाक्याधिकारवाक्यस्थयजिपदसङ्कोचार्थमेवेति समुदायसिद्ध्यर्थं समुदायिनामनुवादकावेवैतौ न कर्मान्तरविधिः—इति सिद्धम् ॥ ३ ॥

**इति तृतीयं पौर्णमास्यधिकरणम् ॥**

**( ४ अधिकरणम् । )**

**पौर्णमासीवत् ॥**

तत्रैव "जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाये"ति श्रुते अन्तरावाक्ये पूर्ववदेव न कर्मान्तर-

---

नीकवत्यादिवदेवापूर्वरूपेणैकक्षणवर्तित्वेन फलसाहित्योपपत्तेः । अत एव "समे दर्शपूर्णमासाभ्यामि"तिवचनेन दैशिकप्रयोगविधिवत् क्षणं दैशिकसाहित्यावगमेऽप्येकस्मिन्नेव समे देशे तिसृषु पौर्णमासीषु अमावास्यासु चैकैकप्रधानस्याग्न्यन्वाधानादिब्राह्मणतर्पणान्ताङ्गविशिष्टस्य प्रयोगेऽपि न क्षतिः । नह्येकस्यामेव पौर्णमास्याममावास्यायां वा प्रधानयागप्रयोगत्रयं युज्यते । द्व्यहकालीनप्रातःकालीनत्वयोर्वचनान्तरप्राप्तयोर्बाधापत्तेः । अतः प्रत्येकं प्रयोगव्यावृत्तये त्रिकस्य त्रिकस्यैकप्रयोगतासिध्यर्थमेतद्वाक्यद्वयमिति न वैयर्थ्यम् ॥

**( आग्नेयाद्युत्पत्तिवाक्य एव कालश्रवणेऽपि य इष्ट्येति वाक्यवैलक्षण्यान्न पृथक्प्रयोग इति निरूपणम् )**

**अत एव** उत्पत्तिवाक्ये कालश्रवणेऽपि यावत्तदन्वयानुरोधेन प्रयोगविधिकल्पनम्, ततः पूर्वमेव प्रवृत्तैतद्वाक्यद्वयेन प्रयोगविधानान्न तत्रापि प्रयोगविधिकल्पनमिति "य इष्ट्ये"तिवाक्यवत् प्राप्तप्रयोगानुवादेनेह कालमात्रविधानेन न विकृतीष्टीनामिवेह पृथक्प्रयोगशङ्कावकाशः । "य इष्ट्ये"त्यत्र तु यच्छब्दसमभिव्याहारेण विकृतिप्रयोगानुवादेन कालमात्रविधानेन प्रत्येकप्रयोगकल्पनाभ्यनुज्ञानात् तत्तद्विलक्षणफलसाधनानां कामनैयत्यासंभवेनैकप्रयोगविधिविषयत्वानुपपत्तेश्चानुवाद्यगतत्वेनाविवक्षितसाहित्यानां भिन्नप्रयोगतैव । प्रकृते तु प्राप्तानामपि प्रधानानां प्रयोगविषयत्वेन विधेयत्वात् तत्तत्कालविशिष्टप्रयोगविषयत्वेन विधेययागगतसाहित्यस्य तदङ्गसाहित्यस्य च विवक्षितत्वान्न युक्तः प्रयोगभेद इत्यर्थः ॥

**( उत्पत्तिवाक्ये कालश्रवणं अधिकारादिवाक्यगतयजिसङ्कोचार्थमिति निरूपणम् )**

किमर्थं तर्ह्युत्पत्तिवाक्ये कालश्रवणमित्याशङ्क्यां परिहरति **—एवं चेति ॥ समुदायसिध्यर्थमिति ॥**

**( विद्वद्वाक्यप्रामाण्योपपादनम् )**

अनेन च सर्वस्याप्यनुवादकत्वे अनधिगतार्थगन्तृत्वस्वरूपप्रामाण्यानापत्तिः शक्यार्थानुवादकत्वेऽपि अनधिगतसमुदायबोधकत्वेन प्रामाण्योपपत्तेः परिहृता इति ॥

**( पूर्वोत्तरकल्पयोः प्रयोजननिरूपणम् )**

**सिद्धमिति ।** एवंच "चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्याया"मिति आहवनीयगतवषट्काराहुतिपरिगणनपरं लिङ्गदर्शनमप्युपपद्यते । अन्यथा प्रथमे पक्षे पौर्णमास्यां पञ्चदशत्वस्यामावास्यायां चतुर्दशत्वस्य चापत्तेः द्वितीयपक्षेचोभयत्र द्वादशत्वापत्तेस्तदनुपपत्तिः, ममतु पञ्च प्रयाजाः द्वावाज्यभागौ स्विष्टकृत् त्रयोऽनूयाजाः पौर्णमास्यां प्रधानत्रयमिति चतुर्दशत्वममावास्यायां पञ्च सान्नाय्ययोः संप्रतिपन्नदेवत्यत्वेन सहानुष्ठानात् त्रयोदशत्वं चोपपन्नं भवतीति प्रयोजनं पूर्वोत्तरपक्षप्रतिपादनेनैव स्पष्टीकृतम् ॥

**॥ इति तृतीयं पौर्णमास्यधिकरणम् ॥**

**( एतदाद्यधिकरणत्रयस्य पूर्वाधिकरणेनापवादसङ्गत्याद्युपपादनम् )**

इतःपरमधिकरणत्रयेण समुदायानुवादत्वापवादेन अभ्यासस्य निरूपणात् पूर्वपक्षे कर्मभेदात् सिद्धान्ते च कर्मैक्यात् प्रकृतसङ्गतिं स्पष्टत्वादनभिधाय विषयप्रदर्शनपूर्वकं पूर्वपक्षमाह**—जामिवेति ॥** दशमे जामिकरणाचेति सूत्रे भाष्यकारेण जामिता सादृश्यमिति व्याख्यानकरणात् सौन्दर्यवाचिनोऽपि जामिशब्दस्य सादृश्ये लक्षणेति न्यायसुधायामुक्तेश्च यज्ञस्य **जामि**सदृशमालस्यमिदं क्रियते **यदन्वञ्चौ** अव्यवेतौ **पुरोडाशा**वाग्नेयाग्नीषोमीयौ क्रियेते । अतस्तत्परिहाराय **अन्तरा** यागान्तरं कर्तव्यमित्यर्थः। विष्ण्वादिवाक्यैर्यागविधावुपांशुयाजत्रयापत्त्या पौर्णमास्यां षोडशाहुत्यापत्तेः पूर्वोक्तलिङ्गदर्शनाक्षेपेण पूर्वपक्षोत्थानात् उपांशुयाजचिन्ताया वैशेषिक्याऽनन्तरसङ्गत्या प्राथम्योपपत्तिं सूचयितुं तत्रैवेत्युक्तम् ॥

**( अन्तरावाक्ये पूर्वपक्षः )**

अन्तरावाक्ये लट्लेटोः सन्दिग्धत्वात् "स्वाध्यायोऽध्येतव्य इत्यादौ तव्यप्रत्ययस्यासंशयं विधायकत्वदर्शनायत्र द्रव्यदेवतादियागपरिचायकं रूपं तत्रैव **भूयस्त्वेनोभयश्रुतीति** न्यायेन यागविधित्वप्रतीतेरन्तरावाक्ये तदभावे न यागविधिः, अपितु तव्ययुक्तवाक्येष्वेवेत्यभिप्रेत्य पूर्वपक्षमुपपादयति**—पूर्ववदेवेति ॥ नच—**जामितोपक्रमेण तदपनायककर्मस्तुत्यर्थत्वेनोपात्तजामित्वोपसंहारेणैकविषयतयैकवाक्यताया जातेष्टिवाक्य इवेह प्रतीतेस्तव्ययुक्तवाक्यानां यागत्रयविधायकत्वे वाक्यभेदापत्त्या तद्भङ्गापत्तिरिति**—वाच्यम्;** अजामित्वस्य प्रत्येकमुपसंहारेण तदनुरोधादुपक्रमस्यापि प्रत्येकमनुषङ्गावगतेः भिन्नवाक्यत्वस्यैव युक्तत्वात्, अन्यथा जातेष्टिवत् सकृदेवान्ते तदापत्तौ प्रत्येकं तदनुपपत्तेः । अतो यद्यपि तव्यप्रत्ययेन विष्ण्वादीनां प्राधान्यं प्रती-

विधिः, अपितु तव्यप्रत्ययान्तवाक्यैर्विहितानां देवतोपांशुत्वविशिष्टयागानां समुदायसिद्ध्यर्थमनुवाद एव। तत्प्रयोजनं चान्तरालकालविधिः, (त्रयाणामेतेषां) "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्ति"तिकालसंबन्धात्तत्पर्यग्रहद्वारा फलसंबन्धसिद्धिर्वा। अन्यथा ह्यग्नीषोमदेवत्यस्यैव कालसंबन्धात् फलसंबन्धः स्यादिति प्राप्ते— उपक्रमोपसंहारयोरेकविषयत्वेनैकवाक्यत्वप्रतीतेर्न तव्यप्रत्ययान्तवाक्यैः कर्मविधिः, अन्तरावाक्य एव तु कालोपांशुत्वविशिष्टैककर्मविधिः। तदर्थवादश्चायं पूर्वोत्तरभावेन सर्वोऽपि; अन्यथा वाक्यभेदापत्तेः। अतएव तव्यप्रत्ययान्तैर्देवतामात्रविधिरन्तरालवाक्यस्थकर्मणीत्यपि—**अपास्तम्।** नच तत्र देवताऽलाभः; शाखाभेदेन वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानामेतद्यागक्रमे समाम्नातानां

---

यते; तथापि तेषां भूतभाव्युपयोगाभावेन तदनुपपत्तेः सक्तवकरणत्वादिलक्षणया गुणत्वोपपत्तेः तत्तद्देवतोपांशुत्वविशिष्टयागानां विधानं तेषु नानुपपन्नम्। अन्तरावाक्यस्थयजिपदन्तु तेषामेव यागानामनुवादकम्, उपांशुयाजपदमपि तेषामेवाव्युत्पन्नं सामानाधिकरण्येन नामधेयम्, नतु यौगिकम्। तथात्वे "चजोः कुघिण्यतोरित्यनेन जकारान्तस्य धातोर्घिण्यतोः प्रत्यययोः कुत्वविधानेनोपांशुयाग इति रूपापत्तेः। अत एव अन्तरावाक्ये उपांशुत्वगुणत्वे नैव विधानम्, अपित्वन्तराकालमात्रं यज्युपात्तयागत्रयोद्देशेन विधीयते। नच अन्तराविधिना जामितोपक्रमस्य व्यवधानान्नानुषङ्गो युक्तः; समुदायस्तुत्यर्थमत्रापि अन्वयेनाव्यवधानोपपत्तेः। **वस्तुतस्तु**—तैत्तिरीयशाखायामन्तरालवाक्येऽप्यजामित्वायेति पाठाज्जामितोपक्रमस्तन्मात्रविषय एव, विष्ण्वादिवाक्येषु अजामित्वायेत्येतावन्मात्रमेव अजामित्वसंपादकान्तरालकालविधानलब्धाजामित्वसंपादकतयाऽनुवादो यागस्तुत्यर्थ एव। एवंच शाखाभेदेन क्रमाम्नातानां वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानां लिङ्गादेव तद्यागाङ्गत्वोपपत्तेर्न देवताविधिकल्पकत्वमिति लाघवम्। नच अन्तरावाक्येऽपि यागान्तरविधिः शङ्क्यः; भेदकप्रमाणाभावात्, तत्तद्याज्यानां तत्तद्यागाङ्गत्वेनेह मान्त्रवर्णिकदेवताकल्पनानुपपत्त्याऽरूपत्वाच्च तदनापत्तेः। अतो युक्तं विष्ण्वादिवाक्ये यागत्रयविधानमुपांशुवाक्ये यजतीति समुदायानुवाद इति भावः॥

**(समुदायानुवादस्यान्तरालकालविधिः, तस्यान्यथालाभे त्रयाणां फलसंबन्ध इति प्रयोजनद्वयोपपादनम्)**

समुदायानुवादप्रयोजनमाह—**तत्प्रयोजनमिति**॥ नच—पुरोडाशनैरन्तर्यापादितजामितानिवर्तकतानुवादबलादेवान्तरालेऽनुष्ठानोपपत्तेर्नैतत्प्रयोजनं युक्तमित्यस्वरसात् प्रयोजनान्तरमाह—**त्रयाणामिति**॥ एतदभावे हि "तावब्रूतामिति वाक्ये अग्नीषोमपदोपादानात् तदुपात्तयोरग्नीषोमयोरुपलक्षणत्वेन विशेषणत्वेन वान्वयादग्नीषोमदेवत्यविजातीययागस्यैव पौर्णमासीकालोद्देशेनोपादानाद्विद्वद्वाक्यफलवाक्ययोः तस्यैव ग्रहणात् फलसंबन्धोपपत्त्येतरयोरङ्गत्वस्यैवापत्तिः। सतित्वे तस्मिन् समुदायानुवादे त्रयाणामुपांशुयागसंज्ञकत्वावगतेरुपांशु पौर्णमास्यामित्यत्र नामैकदेशेन कालसंबन्धात् त्रयाणां तत्सिद्धिः। नहि तदाऽग्नीषोमीयपदमुपलक्षणं विशेषणं वा भवितुमर्हति; समुदायानुवादवैयर्थ्यापत्त्या वैश्वदेवपदवदेव विष्ण्वादिदेवतोपलक्षणत्वात्। अतस्त्रयाणां फलसंबन्धसिद्धिः प्रयोजनमित्यर्थः॥

**(प्रत्येकमजामित्वोपसंहारस्य विष्ण्वादिदेवतासु प्रत्येकं तत्करणशक्तिप्रदर्शनार्थत्वेनोपपत्त्यैकवाक्यतयोपांशुवाक्य एव यागविधिः विष्ण्वादिवाक्यं त्वर्थवाद इति सिद्धान्तोपक्रमः)**

प्रत्येकमजामित्वोपसंहारस्य विष्ण्वादिदेवतासु प्रत्येकमजामीकरणशक्तिप्रदर्शनमुखेन तज्जन्ययागस्तुतिपरतयैकवाक्यत्वेऽप्युपपत्तेर्वैश्वानरवाक्यन्यायेनोपक्रमोपसंहारस्यैकविषयतया प्रतीयमानैकवाक्यतात्यागेनानुपङ्गेण भिन्नवाक्यताया अयुक्तत्वात् तव्यप्रत्यये विधौ लक्षणापत्तेः "उपांशुयाजमन्तरा यजती"त्यत्रैवाप्राप्तार्थत्वेन लेट्त्वकल्पनया यागविधानं युक्तम्, नतु तव्योपात्तवाक्येषु वाक्यभेदापत्तेरर्थवादत्वस्यैव न्याय्यत्वादित्यभिप्रेत्य सिद्धान्तमाह—**उपक्रमेति**॥ एवंच पुरोडाशनैरन्तर्यापादिताया जामिताया अन्तरालकालसंबन्धिना विधेयेन निवृत्तिप्रतीतेर्यत्रान्तरालरूपगुणोपबन्धस्तत्रैव कर्मचोदनाप्रतीतेरन्तरावाक्य एव कर्मचोदनेत्यर्थः॥

**(मान्त्रवर्णिकवैकल्पिकविष्ण्वादिदेवताप्राप्त्या विष्ण्वादिवाक्यार्थवादत्वेनाक्षेपः पूर्वशास्त्रप्रवृत्त्याऽन्तरालकालविधानेनोपांशुयाजशब्दस्य यौगिकत्वेन चोपांशुविशिष्टस्यान्तराले विधानमित्यादिनिरूपणम्)**

**अत एव** तत्रैव मान्त्रवर्णिकदेवताकल्पनात् नारूपत्वमित्याह—**शाखाभेदेनेति**॥ ऐतरेयके आग्नेयैन्द्राग्नयाज्यानुवाक्यायुगलयोर्मध्ये "इदं विष्णुःप्रतद्विष्णुरि"त्युभयमाम्नातम्। **अथवा**—त्रिर्देवःपृथिवीतिवा प्रतद्विष्णुरित्यस्य स्थाने आम्नातम्। तैत्तिरीये तन्मध्ये "प्रजापते न त्वत्। स वेदस" इति युगलमाम्नातम्। तथैव ऐतरेयके एवं तन्मध्ये "अन्यं दिवो अग्नीषोमौ यो अघवामि"ति युगलमिति शाखाभेदेनाम्ना-

विकल्पेन तत्तद्देवताकल्पकत्वोपपत्तेः । तस्य च "तावब्रूता"-मित्यनेन कालसंबन्धात्फलसंबन्धः ॥

नच—उत्पत्तिशिष्टकालसंबन्धानामेवाग्नेयादीनां झटित्युपस्थितत्वेन फलसंबन्धापत्तेरुत्पन्नशिष्टकालसंवन्धस्योपांशुयाजस्य फलसंबन्धानापत्तिः, अन्यथा पुरोडाशान्तरालसंबन्धान्यथानुपपत्त्यैव पौर्णमास्यादिकाललाभेनोपांशुयाजस्य फलसंबन्धापत्तौ तावब्रूतामित्यस्यापि तत्फलत्वानुपपत्ते-रिति—वाच्यम्; तावब्रूतामित्येतदनन्तरमेवोपांशुयाजमन्तरा यजतीति पठितमिति वार्तिकदर्शनादस्यापि कालस्योत्पत्तिवाक्येनैव विधेयतया भिन्नवाक्यत्वाभावेन तुल्यबलत्वात्फलसंबन्धोपपत्तेः । अतो नायं समुदायानुवादः इति सिद्धम् । प्रयोजनं स्पष्टम् ॥ ४ ॥ इति चतुर्थमुपांशुयाजाधिकरणम् ॥

---

तमित्यर्थः **विकल्पेनापीति** ॥ दृष्टार्थत्वात् देवतात्रयस्य विकल्पः । एवंच मान्त्रवर्णिकदेवताभेदे नार्थवादसमर्पितदेवतावैशिष्ट्यकल्पनया विशिष्टविध्यङ्गीकारो युक्तः । अर्थवादत्वेनापि तदुपपत्तेः । नच जामितादोषापनयनार्थत्वेनान्तरालकालेऽनुष्ठानस्य फलवलादेव सिद्धेरन्तरालकालविधिवैयर्थ्यम्; तदाक्षिप्तान्तरालकालविधितः पूर्वप्रवृत्त्या अभ्युदयशिरस्कत्वार्थं तद्विध्युपपत्त्यान्तरालकाले उपांशुत्वविशिष्टयागभावनाविधानोपपत्तेः । यद्यपि उपांशुयाजशब्दस्य न यौगिकत्वम्, कुत्वापत्तेः; तथापि "छन्दसि दृष्टानुविधिरि"ति सूत्रात् कथंचित् कुत्वाभावं कृत्वा प्रतीयमानावयवार्थत्यागेनातिरिक्तशक्तिकल्पने प्रमाणाभावात् प्रोक्षणीशब्दवद्यौगिकमिति न दोष इत्यर्थः ॥

**( तावब्रूतामित्यस्य द्रव्यदैवतयागानां प्राप्तत्वात्तद्विधानासंभवेन विधिसरूपस्यापि य इष्ट्येतिवत्कालसंवन्धमात्रपरत्वम्, तस्य फलसंवन्धः फलमित्यादिनिरूपणम् )**

**तस्य चेति** ॥ अन्तरावाक्यविहितयागस्येत्यर्थः । इदंच वचनं पुराकल्पसरूपार्थवादरूपमपि सिद्धवदनुवादान्यथानुपपत्त्या विधिकल्पनेऽपि न तावद्यागस्य विधायकम्; अन्तरावाक्येनैव प्राप्तत्वात् । नापि भाष्योक्तरीत्याऽग्नीषोमदेवताविधायकम्; उभयोः कल्प्यत्वाविशेषे याज्यामन्त्रवर्णादेव प्राप्तेः । अत एव प्राप्तत्वान्नाज्यस्यापि; अतोऽप्राप्तपौर्णमासीकालविधायकम् । अतश्च यागैकत्वपक्षे यागानुवादेन कालविधानात्तद्विशेषणस्य अग्नीषोमदेवत्यत्वस्यानुवाद्यगतत्वेनाविवक्षितत्वात् त्रितयदैवत्यस्यापि फलसंवन्धसिद्धिः । नह्यत्र काले कर्मण उपादेयत्वेन प्राप्तस्यापि प्रयोगविषयत्वेन विधानात् तद्विशेषणविवक्षाप्रसक्तिरस्ति; उत्पत्तिवाक्य एवान्तरालकालश्रवणेनोत्पत्तिवत् प्रयोगस्यापि प्राप्तत्वेन तद्विषयत्वेन विधानानुपपत्तेः । अतो य इष्ट्येतिवत्कालसंवन्धमात्रकरणाद्दर्शपूर्णमासनामकत्वसिध्या तत्सिद्धिरित्यर्थः ॥

**( तावब्रूतामित्यस्यार्थवादस्यापि विध्येकवाक्यतया तद्विशिष्टविधिना पौर्णमासीकालोपांशुत्वान्तरालविशिष्टयागभावनाबोधकत्वात्, स्वतन्त्रविधित्वाभावस्य विधिरसायनेप्युपपादितत्वात् उत्पत्तिशिष्टपौर्णमासीकालकत्वेनोपांशुयाजफलसंवन्धसिद्धिः, अत एव शिरो वा एतद्यज्ञस्येत्याग्नेयादिप्रायपाठोऽप्युपपद्यते इत्यादि निरूपणम् )**

**नचेति** ॥ नच पौर्णमासीकालविधिवैयर्थ्यापत्त्यैव विलम्बितकालस्याप्युपांशुयाजस्य फलसंवन्धोपपत्तिः; अन्तरालकालस्य पौर्णमास्यामिवामावास्यायामपि सत्त्वेन तत्रापि तदनुष्ठानव्यावृत्त्यर्थत्वेन तत्सार्थक्यात् । अतः कथं फलसंवन्धप्रयोजनत्वमित्याशङ्कार्थः । **वार्तिकदर्शनादिति** ॥ **अपि च** जामि वा एतदित्येतदपि "आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्ति"ति प्रकृत्याम्नानात् पौर्णमास्यामेव विदधातीति गम्यत इति दशमान्त्याधिकरणवार्तिकदर्शनात् अस्य च स्वतन्त्रविध्युन्नायकत्वकल्पने प्रयोजनाभावात् उपांशुयाजमन्तरेतिविध्येकवाक्यतया पौर्णमासीकालोपांशुत्वान्तरालकालविशिष्टयागभावनाविधिप्रतीतेरुत्पत्तिशिष्टकालकत्वेनाऽऽग्नेयादिवदेव फलसंवन्धोपपत्तिरमावास्यायां तन्निवृत्तिश्च सिध्यतीत्यर्थः । **उत्पत्तिवाक्येनैव विधेयत्वादित्युक्त्याच**—या पौर्णमासीवाक्यस्य स्वतन्त्रविधित्वाभावे सति पौर्णमासीवाक्येऽपूर्वविधित्वमङ्गीकृत्यापूर्वविधिलक्षणाव्याप्तिरुपपादिता विधिरसायने, सा निरस्तेति सूचितम् । स्वयमपि विधिरसायने तथैव फलसंवन्धोपपत्तये दर्शितत्वेन पूर्वापरविरोधाच्च । अस्मिंश्च पक्षे अग्नीषोमीयांशेपि नियमविधित्वसंभवेऽपि "विष्णुरुपांशु यष्टव्यः" इत्यादिज्ञापकबलादेव तन्निरासेनानुवादत्वं, तथोपांशुपदेनैव उपांशुत्वविध्युपपत्तेर्नोपांशुपदस्य गुणविधित्वम्, अपितु अव्युत्पन्नं तत्प्रख्यन्यायेन वा नामधेयमित्यपि ध्येयम् । एवंच "शिरो वा एतद्यज्ञस्य क्रियते यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीय" इत्यर्थवादे उपांशुयाजत्वावच्छेदेन प्रधानप्रायपाठोऽप्युपपन्नो भवतीत्यभिप्रेत्य समुदायानुवादत्वनिरासमुपसंहरति—**अतो नायमिति** ॥

**( पूर्वोत्तरपक्षप्रयोजनम् )**

**स्पष्टमिति** ॥ पूर्वपक्षे त्रयाणां प्राधान्यादनुष्ठानम्, सिद्धान्तेत्वेकस्यैव देवताविकल्पेनेति स्पष्टमित्यर्थः ॥

**॥ इति चतुर्थमुपांशुयाजाधिकरणम् ॥**

### (५ अधिकरणम्।)

तत्रैव "आघारमाघारयती"ति श्रुते "अग्निहोत्रं जुहोती"त्यत्र च पूर्ववद्वाक्यभेदस्य दूषकत्वाभावात् "ऋजुमाघारयति" "सन्ततमाघारयति" "दध्ना जुहोति" "पयसा जुहोती"त्यादिवाक्यविहितकर्मणां यथायोगं समुदायानुवादकत्वोपपत्तिः। दध्यादिवाक्यानां निर्व्यापारे गुणमात्रे विध्यन्वयासंभवेनावश्यं गुणविशिष्टकर्मविधायकत्वात्। अतश्च रूपाभावाद्भेदकप्रमाणाभावाच्चाग्निहोत्रवाक्ये आघारवाक्ये वा न कर्मान्तरम्, अपितु तेषामेव समुदायसिद्ध्यर्थमनुवादः। तत्प्रयोजनंच सर्वेषामेवाग्निहोत्रसंज्ञकत्वेन फलसंबन्धसिद्धिः, इतरथा अग्निदेवत्यहोमस्यैव तदापत्तिः। आघारवाक्ये

### (पूर्वाधिकरणेन प्रत्युदाहरणसङ्गतेः प्रकरणसङ्गतेश्चोपपादनम्)

पूर्वाधिकरणे तव्यप्रत्ययस्य विधायकत्वाभावात् वाक्यभेदापत्तेःस्तुतेश्च प्रतीतेर्युक्तमर्थवादत्वम्, इहतु दध्यादिवाक्यानां दध्यादिगुणाप्राप्तेरनुवादत्वेनार्थवादतयैकवाक्यत्वानुपपत्तेर्भिन्नवाक्यतया सिद्धान्तेऽपि विधित्वस्याङ्गीकारात् शुद्धगुणविधेश्च वक्ष्यमाणरीत्याऽसंभवेन विशिष्टकर्मविध्यवश्यंभावेन युक्तस्समुदायानुवादः इति पूर्वपक्षोत्थानात् प्रत्युदाहरणरूपामनन्तरसङ्गतिं कर्मभेदाभेदफलकत्वाच्च प्रकृतसङ्गतिं च सूचयन् उदाहरणपूर्वकं पूर्वपक्षमाह—**तत्रैवेति** ॥ आघारवाक्यस्य समुदायानुवादत्वेऽपि तदनन्तरपठितोर्ध्वादिवाक्यविहितयागानामेव समुदायानुवादेन ततः पूर्वमग्निसंमार्गविधिना व्यवधानेन पाठः, तत्रैवाघारवाक्यविहिताघारस्यापीति सूचयितुं प्रकरणानुप्रवेशद्योतकं तत्रैवेत्युक्तम्। पूर्ववदित्यनेन पूर्वोक्तसङ्गतिः सूचिता ॥

### (भावनाया व्यापारविषयत्वेन दध्यादिवाक्येऽपि व्यापारविध्यवश्यंभावे दध्यादीनामुत्पत्त्यन्वयिगुणत्वेन विहितविधानायोगात् कर्मभेदावश्यंभावेऽग्निहोत्रवाक्ये समुदायानुवादत्वमेवेत्यादिनिरूपणम्)

**निर्व्यापार इति** ॥ विधेश्चेतनप्रवर्तनारूपत्वात् तस्याश्च प्रवृत्त्यनुकूलव्यापारत्वेन धात्वर्थावच्छिन्नभावनाविषयत्वस्यैकपदोपात्तत्वप्रत्यासत्त्या क्लृप्तस्य त्यागायोगात् व्यापारानात्मकगुणे विध्यसंभवाद्विशिष्टविध्यावश्यकत्वे विहितस्य पुनर्विध्यसंभवेनाभ्यासात् भेदः। नच विहितस्यापि फलनिमित्तादिसंबन्धवत् दध्यादिसंबन्धेन पुनर्विधानोपपत्तेरन्यपरत्वम्; स्वत उत्पन्नस्यापि फलादिसंबन्धे विनियोगस्य विध्युपपत्तावपि द्रव्यादिसंबन्धे उत्पत्त्यन्वयिगुणत्वेनोत्पत्तेरावश्यकत्वेन प्राप्तायाः पुनर्विधानानुपपत्तेर्भेदस्यावश्यकत्वात्। अतो दध्यादिवाक्येषु "यदग्नये च प्रजापतये च" "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा" इत्यादिवाक्येषु च स्वरूपवत्तु सर्वत्र गुणादभ्यासाद्वा कर्मभेदः। नह्यग्निहोत्रादिवाक्येष्वनुपात्तरूपेषु कर्मविधिः; वाक्यान्तरेणापि रूपालाभाच्च। नच—एवं दध्यादिहोमेषु स्ववाक्यतोऽन्यादिहोमेषु चाक्षेपेण द्रव्यस्य प्राप्तावपि स्ववाक्ये देवताभावात् वाक्यान्तरोपात्तदेवतामात्रविधेस्त्वानिष्टत्वादाक्षेपेण देवताया अप्राप्तेः कथं रूपवत्त्वं? इति—वाच्यम्; एकफलसाधनानामेषामेकप्रयोगविधिपरिग्रहेण सान्नाय्यवत्सकृदनुष्ठानोपपत्तेर्होमान्तरेष्वप्यपेक्षितानां द्रव्यदेवतादीनां प्रसङ्गेनोपकारकत्वोपपत्त्या तत्संभवात्। अनिरुक्तो वै प्रजापतिरनिर्दिष्टद्रव्यके आज्यमितिसामान्यवचनाभ्यां यथापेक्षितद्रव्यदेवतोपपत्तेश्च। नहि रूपवत्ताज्ञानं विधेयताज्ञानं प्रति कारणम्; अयोग्यतानिश्चयाभावमात्रेणैव योग्यतायाः ज्ञानाभावेऽपि श्रुतशब्दात् शाब्दबोधस्यानुभविकत्वात् तज्ज्ञानस्य कारणत्वानुपपत्तेः। अतोऽरूपवत्तानिश्चयाभावमात्रेण विधेयत्वोपपत्तेरेकतररूपान्वयमात्रेणापि चेतरकर्मव्यतिरिक्तत्वसिद्धेरनुष्ठानकाले तदपेक्षायां पूर्वोक्तरीत्या तदुपपत्तिः। अग्निहोत्रवाक्ये तु यद्यपि अग्निप्रजापतिभ्यां तत्संभवति; तथापि समुदायानुवादत्वेनाप्युपपत्तावदृष्टभेदापादककर्मान्तराङ्गीकारस्यायुक्तत्वमिति भावः ॥

### (अग्निहोत्रवाक्ये समुदायानुवादप्रयोजनम्)

एवंच दध्यादिवाक्यविहितहोमानां हवनरूपैकजातीयैकदेशपठितत्वलक्षणैकधर्मयोगाख्येन प्रचयेन धात्वर्थसमुदायस्येव भावनासमुदायस्यापि लाभात् यदाऽग्निहोत्रवाक्ये जुहुयादिति समुदायानुवादः, तदा अग्निहोत्रपदस्य वैश्वदेवपदवत् समुदायानुवादवैयर्थ्यभिया अग्निदेवत्यानग्निदेवत्यहोममात्रपरत्वोपपत्तेः फलनिमित्तसंबन्धोपपत्तिरूपं समुदायानुवादप्रयोजनमाह—**तत्प्रयोजनमिति** ॥ एवमूर्ध्वादिवाक्येष्वप्यूर्ध्वत्वादिगुणैरेव द्रव्यदेवतारूपैरुपांशुत्वेन उपांशुयाजस्येव कर्मपरिच्छेदसंभवात् तत्तद्गुणविशिष्टयागानां चतुर्गृहीताज्यद्रव्यकाणामाघारयतीत्ययं समुदायानुवादस्तत्प्रयोजनं यत्तावद्वार्तिके "इन्द्र ऊर्ध्वो अध्वर इत्याघारमाघारयती"ति मन्त्रविधावाघारैकत्वसिद्धिरित्युक्तम्। तदूर्ध्वमाघारयतीत्यत्रैव मन्त्रविधावपि मन्त्रविशिष्टाघाराणां मन्त्रवर्णकल्पितेन्द्रदेवताकाघारेण सह प्रयोगविध्यवगतयौगपद्यसिद्धिद्वारेन्द्रदेवताकत्वसिद्धिपूर्वकयागरूपतासिद्धिरिन्द्रदेवताकाघारेण यौगपद्यसिद्धिमात्रं वा प्रयोजनं कौस्तुभे द्रष्टव्यमित्यर्थः ॥

### (अग्निहोत्रवाक्यसार्थक्यार्थं पञ्चमविधिप्रकारानेकादृष्टकल्पनादिगौरवपरिहारार्थं च दध्ना जुहोतीत्यादीनां प्राप्ताप्राप्तविवेकेन गुणमात्रविषयत्वेनाग्निहोत्रवाक्य एव होमविधिरिति सिद्धान्तोपपादनम्)

अग्निहोत्रादिवाक्य एव कर्मविधिः, अन्यथा वैयर्थ्यापत्तेः,

समुदायानुवादप्रयोजनं तु कौस्तुभे द्रष्टव्यम् । नच दध्यादिहोमेषु देवताद्यभावः; समुदायानुवादबलेनैकप्रयोगविधिपरिग्रहावगतेः सकृदनुष्ठानेनाग्न्यादिहोमाङ्गभूतदेवतायाः प्रसङ्गेन दध्यादिहोमोपकारकत्वोपपत्तेरिति प्राप्ते—

सर्वत्र गुणमात्रविधानेन तृतीयविधिप्रकारोपपत्तौ पञ्चमविधिप्रकाराङ्गीकरणस्यान्याय्यत्वान्न दध्यादिवाक्येषु विशिष्टकर्मविधानम् । नच गुणे विध्यन्वयानुपपत्तिः; होमकर्मकगुणकरणकभावनायामेव विध्यन्वयेऽपि प्राप्ताप्राप्तविवेकेन विधिफलस्याज्ञातज्ञापनरूपस्य भावनायाः स्वरूपेण प्राप्तत्या गुणमात्रविषकत्वोपपत्तेः । अतएव सर्वत्र प्रातीतिके विशिष्टभावनाविधानेऽपि फलमादायैव षड्विधिप्रकारास्तेषां चोत्तरोत्तरस्य दौर्बल्यं पूर्वमुक्तम् । अतश्च प्राप्त्यभावादेव समुदायानुवादत्वासंभवादाद्यविधिविधया कर्मविधी एवाघाराग्निहोत्रवाक्ये । नच रूपज्ञानाभावात्कर्मविध्यनुपपत्तिः; तस्यानुष्ठानं प्रति कारणत्वेऽपि शाब्दबोधं प्रत्यकारणत्वात् । अतश्च विजातीयहोमत्वावच्छिन्नस्य विधानेऽवगते वाक्यन्तरेण रूपलाभेऽपि न काचित्क्षतिः । प्रयोजनं दध्यादिद्रव्य-

---

नच—समुदायानुवादकत्वेनार्थवत्तेति—वाच्यम्; दध्यादिवाक्येषु अनेकेषु विशिष्टविध्याश्रयणे पञ्चमविधिप्रकारापत्तेरनेकादृष्टकल्पनायाश्च कर्मविध्ययोगेन समुदायानुवादासंभवादित्यभिप्रेत्य सिद्धान्तमाह—**सर्वत्रेति** ॥ यद्यपि गुणस्य साक्षात् परंपरया वा विध्यन्वयः; तथापि गुणस्य कारकतया भावनायां प्रकारत्वेनान्वयात् प्रथमतस्तादृशगुणविशिष्टधात्वर्थावच्छिन्नभावनाविधायकस्यापि विधेः प्राप्ताप्राप्तविवेकेन फलतो गुणविषयत्वात् प्राप्ताया अपि धात्वर्थावच्छिन्नभावनायाः गुणविशिष्टत्वेन पुनर्विधानेऽपि विशेष्यांशेऽज्ञातज्ञापनफलाभावेऽपि विशेषणांशे तत्करणेन विधिसार्थक्योपपत्तेः संभवत्येव तृतीयविधिप्रकारेण गुणांशेऽपि विधिरित्यभिप्रेत्याह—**होमकर्मकेति** ॥ उत्पत्तिवाक्ये कर्मणः करणत्वेनान्वयेऽपि गुणविधौ तस्य प्राप्तत्वादनूद्यमानायां भावनायामपेक्षितत्वान्मत्वर्थलक्षणायाश्च कर्मत्वेनैवान्वयमभिप्रेत्य होमकर्मकेत्युक्तम् ॥

### ( षड्विधिप्रकाराश्रयणस्य सर्वत्र विशिष्टविधावपि न विरोधः वार्तिकाविरोधश्च )

**ननु** सर्वत्रैव विशिष्टभावनाविधानेन विधेरेकरूपत्वे सति षड्विधत्वमुद्दिदधिकरणे कथं प्रतिपादितमित्यत आह—**अत एवेति । तेषां चेति** ॥ अनेकविशेषणविधिकल्पनाकृतगौरवतदभावकृतलाघवाभ्यां प्राबल्यं पूर्वपूर्वस्योत्तरोत्तरस्य च दौर्बल्यमुक्तम् । येतु प्रातिपदिकार्थधात्वर्थयोः परस्परान्वयेन भावनानैरपेक्ष्येणैवाष्टौ विधिप्रकारानुपपादयन्ति, तेषां निरासश्च वार्तिककृता कृतः,नत्वस्मदुपपादितरीत्योक्तषड्विधप्रकारस्येत्यर्थः॥

### ( विद्वद्वाक्येन विहितेऽपि कर्मणि आग्नेयवाक्येन विशिष्टविधिशङ्कातन्निरासौ प्रासङ्गिकौ )

यद्यपि चानया रीत्या विद्वद्वाक्यविहिताया भावनायाः प्राप्ताया अप्याग्नेयादिवाक्ये द्रव्यदेवताविशिष्टत्वेन पुनर्विधानं संभवति; तथापि भावनायामनेकगुणवैशिष्ट्यसंभवेऽपि श्रुतविधेरनेकगुणविषयत्वस्वीकारे आवृत्तिप्रसङ्गाद्वाक्यभेदान्न तत्स्वीकारः । यद्यपि श्रुतविधेः शब्दबोध्यार्थस्य विशिष्टरूपेणैक्यान्नावृत्तिः; तथापि तत्र तात्पर्यविषयीभूतार्थभेदेन गौरवलक्षणो वाक्यभेदोऽस्त्येव । अत एवोक्तं वार्तिके—विधित्वे भावनास्थेऽपि तादर्थ्यं प्रविभज्यते । विशेषणफले चास्मिन् वाक्यभेदो भविष्यति इति । प्रकृते त्वेकदध्यादिगुणविषयत्वान्न तत्प्रसङ्ग इत्याशयः ॥

### ( दध्यादिवाक्येषु केवलगुणविधित्वेऽपि यदग्नयेचेतिवाक्ययोरनेकगुणविधाने वाक्यभेदात् अग्नेयवाक्य इव चतुर्णां कर्मणां विधानास्यावश्यकत्वेनाग्निहोत्रवाक्यतदनुवादत्वशङ्कापरिहारौ )

**ननु**—दध्यादिवाक्येषु तृतीयविधिप्रकाराश्रयणेन कर्मविधीनामभावात् समुदायानुवादत्वासंभवेऽपि "यदग्नयेचेति वाक्ययोः प्राप्तकर्मानुवादेनानेकगुणविध्यसंभवे कर्मान्तरविधानस्यावश्यकत्वे उत्पत्तिवाक्यशिष्टदेवतासमुच्चयानुरोधेनाग्नेयवदेकस्मिन् वाक्ये कर्मद्वयविध्यवगतेश्चतुर्णां कर्मणां "अग्निहोत्रं जुहोती"ति समुदायानुवादो भविष्यति—**इति चेत्**—**न**; तत्रापि मन्त्रवर्णत एवाग्न्यादिप्राप्तेस्तत्समुच्चितप्रजापतिमात्रविधानेन वाक्यभेदाप्रसक्तेस्तत्प्रख्याधिकरणे उक्तत्वेन कर्मान्तरविध्यप्रसक्त्या तृतीयविधिप्रकारोपपत्तेरित्यभिप्रेत्य समुदायानुवादत्वनिरासमुपसंहरन्नग्निहोत्रादिवाक्य एव कर्मविधिमुपपादयति—**अतश्चेति** ॥

### ( अग्निहोत्राघारवाक्ययोः पूर्वोत्तरपक्षप्रयोजननिरूपणम् )

**दध्यादिद्रव्यसमुच्चयेति** ॥ अग्निहोत्रवाक्ये समुदायानुवादपूर्वपक्षे दध्यादिदशद्रव्याणि सान्नाय्यवत्सहोपादाय संप्रतिपन्नदेवताकत्वात् सकृद्धोम इति दध्यादिसमुच्चयः । सिद्धान्त एकस्मिन्नेवाग्निहोत्रकर्मणि तेषां विकल्प इत्यर्थः । एतच्चाघारवाक्येऽपि पूर्वोत्तरपक्षप्रयोजनस्याप्युपलक्षणम् । तच्च पूर्वपक्षे ऊर्ध्वत्ववादीनां मध्ये यस्यैव दैवादन्तरायस्तदोर्ध्वत्वैकाभिव्यंग्यजात्यवच्छिन्नस्यानिष्पत्तेः पुनस्तत्कर्मणि आवृत्तिः। सिद्धान्तेतु कर्मभेदाभावात् गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वान्नावृत्तिः, किन्तु गुणलोपनिमित्तप्रायश्चित्तमात्रमिति ज्ञेयम् ॥

**॥ इति पंचममाघाराग्निहोत्राधिकरणम् ॥**

समुच्चयविकल्पाभ्यां स्पष्टम् ॥ ५ ॥ इति पंचममाघाराग्निहोत्राधिकरणम् ॥

( ६ अधिकरणम्। )

द्रव्यसंयोगात् ॥

"अग्नीषोमीयं पशुमालभेते"ति श्रुतम्। तथा "सोमेन यजेते"ति च। तत्राऽऽद्यविधिप्रकारस्यासंभवान्न पूर्ववत्कर्मविधित्वम्, अपितु समुदायानुवादत्वमेव; कर्मप्राप्तिस्तु पशौ "हृदयस्याग्रेऽवद्यति अथ जिह्वाया" इत्यादिभिः उत्पत्तिशिष्टपशुसाध्ये यागे हृदयादीनां साधनत्वानुपपत्तेर्न तदुद्देशेनावदानाख्यसंस्कारविधिः। अतो विहितानां हृदयाद्यवदानानां पशुप्रभवद्रव्यवृत्त्यवदानत्वसादृश्यात्सान्नाय्यावदानप्रकृतिकत्वावगतेः सान्नाय्यवदेव हृदयादीनां यागसाधनत्वस्य पूतीकवदनुमानाद्यावद्धृदयादियागा एव विधीयन्ते तांश्च लक्षणया आलभतिना अनूद्याग्नीषोमौ देवता विधीयते। पशुपदं च हृदयादीनां छागप्रकृतिकत्वस्य मन्त्रवर्णप्राप्तत्वाल्लक्षणया हृदयादिपरम्।

---

( पूर्वाधिकरणेन प्रत्युदाहरणसङ्गतिनिरूपणम् )

दध्यादिवाक्यैरग्निहोत्रवाक्यविहितकर्मानुवादेन गुणमात्रविधानस्य कर्तुं शक्यत्वेन प्रकृतकर्माभावात् समुदायानुवादत्वासंभवेऽपीह पशुसोमवाक्यविहितयागीयद्रव्योद्देशेन हृदयादिविषयकावदानादिविधिभिरवदानादिसंस्कारविध्यनुपपत्तेः कर्मविध्यवश्यंभावात् प्रकृतकर्मसत्त्वे भवतु समुदायानुवादत्वमित्येवं पूर्वपक्षोत्थानेन प्रत्युदाहरणसंगतिं सूचयन्नुदाहरणमाह—अग्नीषोमीयमिति ॥

( पूर्वाधिकरणे आघारवाक्यस्येवात्र सोमवाक्यस्य प्राथम्यशङ्कापरिहाराभ्यां पशुवाक्यप्राथम्ये निमित्तोपपादनम् )

पूर्वसूत्रे आघाराग्निहोत्रयोः अङ्गाङ्गिभावाभावेनाभ्यर्हितं पूर्वं निपततीत्यस्याविषयत्वात् अल्पाच्तरत्वेनाघारशब्दस्य पूर्वनिपातेऽपीह पशुशब्दस्य घ्यन्तत्वेऽपि "लक्षणहेत्वोः क्रियायाः" इत्यत्र घ्यन्तस्य परनिपातेन घ्यन्तत्वस्य नियामकत्वासंभवेन सोमस्य प्राधान्यादभ्यर्हितत्वेन सूत्रे पूर्वनिपातप्राप्तावपि न्यायेनोपपादके शास्त्रे पशौ पूर्वपक्षस्य क्लिष्टत्वेन न्यायव्युत्पादनादरविषयत्वेनाभ्यर्हितत्वमभिप्रेत्य पशुशब्दस्य प्रथमग्रहणात् तदभिप्रायेण स्वयमपि सोमवाक्यात् प्राक् पशुवाक्यमुदाहृतम् ॥

( अग्नीषोमीयवाक्ये प्रथमविधिप्रकारासंभवात् हृदयादीनामुत्पत्तिशिष्टगुणावरोधन्यायेन पशुयागे कथमप्युपयोगः )

अग्निहोत्रवाक्ये शुद्धधात्वर्थविधानरूपाद्यप्रकारस्य संभवेऽपीह द्रव्यदेवतोपादानेन विशिष्टविधेस्सिद्धान्तेप्याश्रयणात्तल्लाभेन कर्मविधित्वानुपपत्तेः समुदायानुवादत्वमेवेति पूर्वपक्षमाह—तत्रेति ॥ यद्यप्यग्नीषोमीयवाक्ये द्रव्यदेवतासंबन्धादाग्नेयवाक्य इव लक्षणया यागविधानमुपपद्यते; तथापि तत्रोत्पत्तिशिष्टस्य पशोरवदानेन नाशापत्तेः श्रुतयागसाधनताबाधान्न हृदयादिवाक्यैस्तदीयद्रव्योद्देशेनावदानसंस्कारविधिसंभवः। द्वितीयानिर्दिष्टानां हृदयादीनामेव संस्कार्यत्वप्रतीतेश्च। नवा हृदयादीनां भूतभाव्युपयोगरहितानां तद्विधिसंभवः। पश्ववरुद्धत्वेन सक्तूनामिवोपयोगकल्पनानुपपत्तेश्च।

---

उपयोगकल्पनेऽपि वाऽतिदेशादेव तत्प्राप्तेः पुनर्विधिवैयर्थ्याच्च। अतो हृदयाद्युद्देशेन विहितानामवदानानां संस्कारत्वायागसाधनत्वानुमानेन तत्र कर्मप्रतीतिरित्यभिप्रेत्य पूर्वपक्षमुपपादयति—अत्र हीति पूतीकवदनुमानादिति ॥

( पूतीकवाक्ये सोमाभिषवस्येवात्र सान्नाय्यावदानप्रत्यभिज्ञानाद्यागकल्पनोपपत्तिः )

यथा पूतीकानभिषुणुयादिति पूतीकसंस्काराभिषवविधेः यागसाधनत्वं विनाऽनुपपद्यमानत्वेन पूतीकानां यागसाधनत्वानुमानं, तद्वदिहापीत्यर्थः। यद्यपि पूतीकेषु सोमाभिषवस्यैव प्रत्यभिज्ञायमानस्य पूतीकसंबन्धित्वेन विधानात्तस्य च यागीयद्रव्यसंस्कारकत्वदर्शनात् पूतीकानां यागीयत्वानुमानेऽपीह सान्नाय्यावदानस्यैव यागीयद्रव्यसंस्कारकत्वेन क्लृप्तस्याप्रत्यभिज्ञायमानत्वेन हृदयाद्युद्देशेन विधानायोगान्न तेषां यागीयत्वानुमानं सुकरम्; तथाप्यत्र प्रकरणान्तरन्यायेनावदानान्तरस्यैव विधानात्तस्यच प्राणिद्रव्यकावदानत्वसामान्यात् सान्नाय्यावदानप्रकृतित्वावगतेरतिदेशेन यागीयद्रव्यवृत्तित्वस्यापि प्राप्तेः प्रत्यवदानमवदेयद्रव्याणां यागसाधनत्वकल्पनया यागभेदोऽवगन्तव्य इत्येवमुपपादयितुं पशुप्रभवेत्याद्युक्तम्। अस्मिंश्च पक्षे समुदायानुवादरूपेणाग्नीषोमवाक्यगतयजिना सर्वेषामनुवादाद्यागोद्देशेन देवताविधिरिति भावः ॥

( पशुपदस्य लक्षणया हृदयपरत्वोपन्यासः )

ननु—एवमग्नीषोमदेवतायाः पशुप्रकृतित्वस्यच विधाने वाक्यभेदस्य देवतातद्धितस्य पशुपदसामानाधिकरण्यानुपपत्तेश्च प्रसक्तिरित्यत आह—पशुपदं चेति ॥ छागस्य हविष इति मन्त्रवर्णस्य हृदयादियागाङ्गत्वात् तत एव पशुप्रकृतित्वप्राप्तेर्लक्षणया हृदयादिपदस्यानुवादाद्देवतामात्रविधानेन तदप्रसक्तिः। एवंच पशुवाक्ये विशिष्टविध्यभावात् लाघवमपीत्यर्थः ॥

( अग्नीषोमीयवाक्यस्य पशुपदलक्षितहृदयादीनां देवतासंबन्धबोधनद्वारा कल्पिततावद्यागपरत्वमितिपक्षान्तरोपपादनेन पूर्वपक्षोपसंहारः )

यागीयद्रव्यवृत्तित्वस्य सान्नाय्यावदानाङ्गत्वादतिदेशेन

**अथवा**—हृदयादिवाक्यविहितावदानाक्षिप्तस्पर्शनेवालभतिना शक्त्यैवानूद्य पशुपदलक्षितहृदयादीनां प्रत्येकं देवतासंबन्धे कृते तावन्तो यागा देवतासंबन्धकल्पितास्तेनैव विधिना विधीयन्ते। सर्वथा पशुपदं समुदायानुवादः।

तथा सोमेऽपि "ऐन्द्रवायवं गृह्णाति" "मैत्रावरुणं गृह्णाती"त्यादिवाक्यैर्द्रव्यदेवतासंबन्धानुमितयागविधानम्; ग्रहणे देवतान्वयानुपपत्तेः। द्रव्यं "चाण्या धारया गृह्णाती"ति प्रकृतं धारासर्थं द्रवं तद्धितोपात्तम्। सोमवाक्ये तु तत्प्रकृतित्वेन सोमलता विधिर्व्रीहिविधिवत्॥

"सोममभिषुणोती"त्यादिसंस्कारविध्यन्यथानुपपत्त्यैव वा "अध्वर्युं वृणीत" इतिवत्सोमप्राप्तेः सोमपदं नामधेयम्। सर्वथा यजिः समुदायानुवादः। तत्प्रयोजनं चास्मिन्पक्षे

---

प्राप्त्यभावेन यागानुमानासंभवमभिप्रेत्य पक्षान्तरमाह—**अथवेति**॥ हृदयाद्युद्देशेनावदानान्येव विधीयन्ते, तेषां चोपयोगापेक्षायां पशुवाक्येन पशुपदलक्षितहृदयोद्देशेन देवताविधाने सति द्रव्यदेवतासंभवात् तत्रैवाग्नीषोमीयवाक्ये आघारयतीतिवत् यागकल्पनयोपयोगकल्पनेन यागा विधीयन्ते। आलभतिशक्यार्थस्त्वनुवाद इत्यर्थः। एवंच हृदयस्याग्रेऽवद्यतीति क्रमदर्शनमेकादश वै पशोरवदानानीति समुच्चयदर्शनञ्चोपपद्यते। अन्यथा एकस्मिन् यागे हृदयादीनां विकल्पापत्तेस्तदनुपपत्तिरित्यभिप्रेत्य पशुपदस्य समुदायानुवादत्वमुपसंहरति—**सर्वथेति**॥

### ( पशुपदसमुदायानुवादत्वप्रयोजननिरूपणम् )

अस्मिंश्च पक्षे अग्नीषोमवाक्य एव आघारयतीत्यत्रेव यागविधानादालभतिपदस्य समुदायानुवादत्वाभावात् पशुपदं समुदायानुवाद इत्युक्तम्। तत्प्रयोजनं प्रत्येकं हृदयादीनामुद्देशेन साहित्याविवक्षया देवतासंबन्धसिद्धिद्वारा पश्चात् प्रत्येकं यागकल्पनया आलभतिना लक्षणया तेषां यागानां विधानसिद्धिरित्याशयः॥

### ( ऐन्द्रवायवादिवाक्येषु यागविधिकल्पनया प्राप्तसर्वयागानुवादेन सोमेन यजेतेतिवाक्ये धाराप्रकृतित्वेन व्रीहिवत्सोमविधानमिति पूर्वपक्षोपपादनम् )

ऐन्द्रवायवमित्यादिषु ऐन्द्रवायवमिति देवतातद्धितेन इन्द्रवाय्वादीनां देवतात्वप्रतीतेस्तस्य त्यज्यमानद्रव्योद्देश्यत्वरूपस्य यागं विना ग्रहणेऽन्वयासंभवात् ग्रहणेनैन्द्रवायवं कुर्यादिति अर्थानुपपत्तेः द्रव्यदेवतासंबन्धात् गृह्णातिना लक्षणया यागा एव विधीयन्त इत्याह—**तथेति**॥ **ननु** तद्धितेन द्रव्यसामान्यावगतावपि विशेषानवगमे कथं तत्संबन्धबलात् यागलक्षणेत्यत आह—**द्रव्यंचेति**॥ अतः "सोमेन यजेते"त्यत्र यागविधौ तद्धितस्य द्रवद्रव्यवाचित्वात् तदुद्देशेन विधीयमानस्य ग्रहणाख्यसंस्कारस्य लतोद्देशेन विधानानुपपत्तेर्द्रवद्रव्यस्य च भूतभाव्युपयोगासंभवेन विनियोगभङ्गस्यावश्यकत्वात् तेष्वेव विशिष्टयागविधानात् तत्तन्निर्दिश्यमानदेवतारूपगुणात् भिन्ना एव यागा इत्यर्थः। किं तर्हि सोमेन यजेतेत्यनेन विधीयत इत्यपेक्षायामाह—**सोमवाक्येत्विति**॥ अत एव धारया गृह्णातीत्यत्रार्थप्राप्तग्रहणानुवादेन धारामात्रविधानेऽपि धाराया द्रवद्रव्यमात्रविषयत्वात् तदधिकारसिद्धेरैन्द्रवायवमिति तद्धितेन धारासमर्थप्रकृतद्रवद्रव्याभिधानेन तदवरुद्धेषु यागेषु सोमस्य द्रव्यत्वेन विधिपक्षस्य प्राचीनैरुक्तस्याप्यसंभवात् सोमेन यजेतेत्यनेन समुदायानुवादकयजिना सर्वयागानुद्दिश्य प्रकृतित्वेन सोमविधिर्नतु तत्र विशिष्टविधिरित्यर्थः। **ननु**—सोमरसप्राप्तौ तत्र प्रकृतिविधानं युज्यते। नह्यत्र धारासमर्थद्रव्यत्वेन सोमरसः प्राप्यते, तस्योदकादिविषयत्वेनापि संभवात्, सोमरसत्वेन प्राप्तौच पुनः प्रकृतिविधानानर्थक्याचेत्याशङ्कानिरासाय व्रीहिविधिवदित्युक्तम्। ततश्चात्र तद्दृष्टान्तेन विकारानुवादेन प्रकृतिविध्यभावेन विकृतिप्राप्त्यनपेक्षणात् यागोद्देशेन व्रीहिवदत्र सोमस्यापि विधाने सति पुरोडाशावरुद्धे व्रीहीणां निवेशायोगेन परंपरया प्रकृतित्वेन करणत्वाश्रयणवदिहापि तदुपपत्तिरित्यर्थः॥

### ( सोमेन यजेतेत्यत्र सोमपदनामत्वेन पूर्वपक्षप्रकारान्तरम् )

**अथवा**—धाराशब्दस्य ससंबन्धिकत्वात् गृह्णातेश्च सकर्मकत्वात् प्रतिसंबन्ध्यपेक्षया प्रकृतः पावनादिसंस्कारसंस्कृतः पूतभृदाहवनीयपात्रस्थः सोमरस एव तत्त्वेन संबध्यते। ततश्च सोमसंस्कारविध्यन्यथानुपपत्त्या "अध्वर्युं वृणीत" इतिवत् विनियोगेन सोमप्रकृतित्वस्यापि प्राप्तेरनुवाद एवात्र सोमशब्दो नामधेयमिति पक्षान्तरमाह—**सोममिति**॥ सोमवाक्ये विशिष्टकर्मान्तरविधिविधाने गौरवापत्तेस्तत्तद्याज्यापुरोनुवाक्यानां च लिङ्गप्रकरणक्रमैरैन्द्रवायवादियागेष्वेव निवेशोपपत्तौ प्रकरणमात्रेणाश्रुतवैकल्पिकदेवताकल्पितत्वानुपपत्त्या रूपालाभाचायुक्तत्वात् ऐन्द्रवायवादिवाक्यविहितानां यागानामेव तत्प्रख्यन्यायेन नामधेयं सोमपदम्। तत्र सत्यपि ज्योतिष्टोमनामान्तरे स एव यज्ञः पञ्चविध इत्यत्र पशुः सोम इति नामान्तरेणापि व्यवहारदर्शनात् न वैयर्थ्यमपीत्यर्थः॥ एवं सोमपदस्य द्वय्यां गतौ पूर्वस्मिन् पक्षे सोमपदस्य विधेयेऽपि समर्पकत्वेन यजेस्समुदायानुवादत्वाभावात् उत्तरस्मिन् पक्षे समुदायानुवादत्वेन पक्षद्वयमपि निर्बाधमिति सर्वथापदेन सूचयन्नाह—**सर्वथेति**॥

### ( सोमपदनामत्वपक्षे संकल्पोल्लेखस्य स्पष्टत्वात् प्रयोजनान्तरनिरूपणम् )

यजिपदस्य पक्षद्वयेऽपि अनुवादत्वे अनेकयागपरत्वात् तदभावे एकयागपरत्वात् प्रयोजनं स्पष्टत्वादुपेक्ष्य सोमपदस्य

सोमद्रव्यकयागमात्रानुवादादस्तुतशस्त्राणामपि फलसंबन्धः। ज्योतिष्टोमपदं च वैश्वदेववद्गौणम्। समुदायानुवादाभावे हि तद्वशात् सस्तुतशस्त्राणामेव यागानां फलसंबन्धापत्तिः तेषामेव ज्योतीरूपस्तोमसंबन्धापत्तिः। सिद्धान्ते तु यागस्यैकत्वात्फलवाक्यस्थयजिनाऽभ्यासलक्षणापत्तेर्विजातीययागत्वावच्छिन्नस्यैव फलसंबन्धः। ज्योतिष्टोमपदे बहुव्रीह्यर्थस्तु स्वसंबन्ध्यभ्यासघटितसमुदायाश्रयत्वरूपः। अतः समुदायानुवादादेव ताविति प्राप्ते—

पशुपदे हृदयादिलक्षणायां प्रमाणाभावात्तत्रैव विशिष्टयागविधिः। हृदयादिवाक्यैश्च हृदयाद्युद्देशेन संस्कारमात्रम्। पशोश्च न साक्षाद्धविष्ट्वेन विधानम्, किंतु विशसनादिविधिरूपतात्पर्यग्राहकानुरोधेन हृदयादिप्रकृतित्वेनैव; करणत्वस्य

---

नामत्वे संकल्पोल्लेखादिप्रयोजने विद्यमानेऽपि विभवात् प्रयोजनान्तरमप्याह—**प्रयोजनंचेति**—**वैश्वदेववदिति** ॥ प्राचीनप्रवणादिवाक्यगतवैश्वदेवपदवदित्यर्थः ॥ **तद्वशादिति** ॥ त्रिवृदादीनि ज्योतींषि स्तोमा यस्येति व्युत्पत्तिसिद्धज्योतीरूपस्तोमवदर्थकज्योतिष्टोमनामवशादित्यर्थः ॥ **सस्तुतशस्त्राणामिति** ॥ तेच प्रातस्सवने ऐन्द्राग्नवैश्वदेवौ माध्यन्दिनसवने माहेन्द्रस्तृतीयो मरुत्वतीयश्च तृतीयसवने आग्रयणादित्यसावित्रवैश्वदेवा एकश्चमसाभ्यास इत्येवं द्रष्टव्याः। कथं तर्हि ज्योतिष्टोमनामसत्व अस्तुतशस्त्राभ्यासानां तत्सिद्धिरित्यत आह—**सिद्धान्तेत्विति** ॥ एवं च यागानामदृष्टार्थत्वेन समुच्चयाद्विभिन्नदेवताकानां क्रमापेक्षणादा"श्विनो दशमो गृह्यते तं तृतीयं जुहोति दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाती"ति क्रमसमुच्चयदर्शनमुपपद्यते। अन्यथा यागैकत्वादङ्गभूतग्रहणानुरोधेन आवृत्त्यनुपपत्तेरनेकेषामपि ग्रहणानां यागीयद्रव्यसंस्कारार्थत्वेनैकार्थ्याद्विकल्पेन देवतानामपि विकल्पापत्तेस्तदनुपपत्तिरित्यभिप्रेत्य पूर्वपक्षमुपसंहरति—**अत इति** ॥

## (ऐन्द्रवायवं गृह्णातीत्यादीनां यागपरत्वेऽपि आश्विनो दशमो गृह्यते इति ग्रहणक्रमाद्युपपत्तिवर्णनम्)

यद्यपि यागक्रमसमुच्चयोपपत्तावपि पूर्वपक्षे गृह्णातिना लक्षणया यागानामेव विधानेन ग्रहणविध्यभावेन तेषां भेदाभावात् ग्रहणक्रमसमुच्चयदर्शनानुपपत्तिस्तदवस्था; तथापि दशमुष्टिपरिमितसोमरसस्य तथाऽभिषवपावनपूतभृदाहवनीयादिपात्राधारत्वादिसंस्कारसंस्कृतस्य तत्तद्यागाङ्गत्वेन विनियुक्तस्याल्पं जुहोतीति वचनेन चतुरवत्तोद्देशेन होमविधिवत् अल्पमुद्दिश्य होमाख्यसंस्कारविधानात् होमानुवादेन च ग्रहैर्जुहोति चमसैर्जुहोतीत्यादिवचनैर्जुह्वादिवत् करणतया पात्रकरणकहोमसंस्कार्यत्वानुपपत्तेरावश्यकं प्रतियागं ग्रहणभेद इति न दोषः ॥ अत्रच ग्रहेषु दशत्वसङ्ख्यैवंप्रकारेण ज्ञेया ताण्ड्यब्राह्मणे अष्टमखण्डे बहिष्पवमानस्तोत्रावान्तरप्रकरणे नवाऽध्वर्युः प्रातस्सवने ग्रहान् गृह्णाति तानेव तत्पावयन्तीत्याम्नायते। तद्भाष्ये श्रीविद्यारण्यगुरुभिः—उपांशुरन्तर्याम्श्च वायव्यश्चैन्द्रवायवः॥ ततश्च मैत्रावरुणः शुक्रो मन्थी तपः परः। तत आग्रयणो नाम ध्रुवो नवम इष्यत इति पूर्वाचार्यकृतसंग्रहश्लोकेन नवत्वमुपपादितम्। तदपेक्षयैव प्रवृत्तया आश्विनो दशमो गृह्यत इति श्रुत्या आश्विनस्य दशमत्वमुक्तमित्याश्विनान्ता दशग्रहास्तेषां च दशमत्वं प्रातस्सवनानुष्ठीयमानत्वरूपकोपाधिना ज्ञेयम् ॥ **एतेन**—यत्प्रकाशकारैरैन्द्रवायवमैत्रावरुणशुक्रमन्थ्यतिग्राह्यत्रयतपोक्थ्याश्विनान्ता दशग्रहा इति व्याख्याय एषां धाराग्रहत्वरूपैकधर्मयोगात् दशत्वमित्युक्तं, तदश्विनां तादृशग्रहक्रमप्रदर्शनस्य वेदभाष्यकारोक्त्या विरुद्धत्वात् बहिष्पवमानस्तोत्रानन्तरमनुष्ठीयमानेऽपि आश्विनग्रहे धारातो ग्रहणस्य क्वाप्यनाम्नानेनाधाराग्रहत्वादयुक्तमित्युपेक्ष्यम्। **एतेन**—वायव्यमपहायोक्थ्यग्रहेणाश्विनान्तानां दशग्रहत्वं सोमनाथेनोक्तमपि—**अपास्तम्**; अत एव याज्ञिकानां उपांश्वन्तर्यामवायवैन्द्रवायवमैत्रावरुणशुक्रमंथ्यातिग्राह्यत्रपोक्थ्यमरुत्वतीयध्रुवाणामेव धाराग्रहत्वप्रसिद्धिः? परं मीमांसकानामिति विशेष इत्यलं विस्तरेण ॥

## (अग्नीषोमीयवाक्ये पशुपदस्य हृदयादिपरत्वे लक्षणापत्तेः पशोःप्रकृतित्वेन विधाने वाक्यभेदापत्तेश्च विशिष्टविधानम्, हृदयवाक्ये यागानुपस्थित्या हृदयाद्युद्देशेन संस्कारमात्रविधानम्, पशोः प्रकृतित्वेन विधानमिति सर्वोपपत्त्या सिद्धान्तः)

पूर्वपक्ष्युपपादितप्रकारद्वयेऽपि साधारणं दूषणं दर्शयन् सिद्धान्तमाह—**पशुपद इति** ॥ हृदयादिमांसे पशुशब्दप्रयोगस्य पशुत्वाभिव्यक्तेर्वाऽभावात् पशुपदे तल्लक्षणापत्तेः पशुप्रकृतित्वेन विधाने च देवताया अपि विधानात् वाक्यभेदापत्तेरग्नीषोमीयवाक्य एव विशिष्टकर्मविधानं युक्तम्। अवद्यतिवाक्येषु तु यजिशब्दाश्रवणेन देवताया अप्यश्रवणेनच यागोपस्थापनासंभवात् अवदानमात्रस्य वत्सालंभवद्यागानुमापकत्वानुपपत्तेः न कर्मविधानमित्यर्थः। किंतर्हि हृदयादिवाक्यैर्विधीयते? इत्यपेक्षायामाह—**हृदयादिवाक्यैरिति**॥ उत्पत्तिशिष्टपशुसाधनताया विशसनावदानादिसंस्कारविधिविरोधं परिहरति—**पशोश्चेति** ॥

## (पशुदेवतासंबन्धोऽपि प्रकृतित्वेनेति निरूपणम्)

**करणत्वस्येति** ॥ उत्पत्तिवाक्ये पशुमिति द्वितीयालक्षितस्येत्यर्थः। **अत एव**—अग्नीषोमदेवतासंबन्धोऽपि पशोः हृदयादिप्रकृतित्वेनैवेति नाग्नीषोमीयं पशुमिति तद्धितस्य

साक्षादिव परम्परयापि तात्पर्यग्राहके सत्युपपत्तेः । अतए-
वातिदेशप्राप्तावदानसंबन्धोऽपि हृदयादीनां हविष्ट्वसिद्ध्यर्थ-

स्तदितराङ्गानां हविष्ट्वपरिसंख्यार्थश्चेत्यादि कौस्तुभे द्रष्टव्यम् ।
सोमेऽपि नैन्द्रवायवादिवाक्यैर्यागविधिः गौरवात्, किंतु

---

सामानाधिकरण्यस्य चानुपपत्तिः । अतश्च यथैव व्रीहिपदेनै-
वार्थात् तंडुलादीनामपि साधनत्वावगतेस्तदुद्देशेन पेषणादि-
विधिः, तद्वदिहापि पशुपदेनैव हृदयादीनां साधनत्वावगतौ
युक्तस्तदुद्देशेनावदानादिसंस्कारविधिरिति भावः ॥

**( अतिदेशप्राप्तस्याप्यवदानस्य पुनर्विधानं प्रत्ये-
कावदानसिद्ध्यर्थमित्युपपादनम् )**

यद्यपि हृदयादीनां प्रदेयत्वरूपयागसाधनत्वलक्षणहविष्ट्वेन
तत्संस्कारार्थस्य मध्यपूर्वार्धापादनकावदानस्यातिदेशेनैव प्रा-
प्तेरेतद्विधिवैयर्थ्यम्; तथाप्यतिदेशप्राप्तस्यैव हृदयादिसंस्का-
रार्थत्वेन पुनर्विधानं नानुपपन्नम् । तत्प्रयोजनं च तेषां प्र-
त्येकं हविष्ट्वसिद्धिः । अन्यथा पशोर्विशसनविधानादवयव-
द्वारा साधनत्वावगतावपि अवयवानां प्रत्येकं साधनत्वानव-
गतेः अवयविनो व्यासज्यसर्वावयवनिष्ठत्वेन तत्साधनत्वा-
नुपपत्त्या अवयवानामपि समुदितानामेव साधनत्वप्राप्तेः स-
मुदितसंस्कारार्थत्वेन कृत्स्नस्यैवातिदेशतः सन्निधावपि तस्य
प्रत्येकं हृदयादिसंस्कारार्थत्वेन विधानात् पूतीकानामिव हृद-
यादीनामपि प्रत्येकं हविष्ट्वावगमात् प्रत्येकं मध्यपूर्वार्धावदा-
नसिद्धिः । एवंचैकादशावदानसंस्कृतद्रव्यमात्रवृत्तिहविष्ट्वतात्प-
र्यसहकृतेन पशुशब्देनापि तावन्मात्रप्रकृतित्वेन पशुविधान-
मिति तदितरावयवानां अवदानपरिसङ्ख्याफलकयागसाधन-
त्वरूपहविष्ट्वपरिसङ्ख्यादिफलं लभ्यत इति कौस्तुभोक्तयुक्त्या
प्रकृतावदानविधिवैयर्थ्यं परिहरति—**अत एवेति** ॥

**( एकादशावदानानीत्यनेनैतरावयवपरिसङ्ख्या-
सिद्धिरिति न्यायसुधानिरासः )**

इत्यादीत्यादिपदेन यदत्र न्यायसुधाकृता "एकादश वै प-
शोरवदानानि तानि द्विर्द्विरवद्यती"ति वाक्ये "एकादश वै" इ-
त्यस्य पृथग्वाक्यत्वमङ्गीकृत्य तस्यैवेतरावयवपरिसङ्ख्यापरत्व-
मुक्तम्, तत्पञ्चावदानसंपादकत्रित्ववाधेन तद्द्वित्वविधाय-
कस्य तानीत्यस्य विशेषसमर्पकत्वेनैवैकादश वै इत्यस्य तदे-
कवाक्यतोपपत्तौ परिसङ्ख्याफलकत्वाङ्गीकारेण भिन्नवाक्यत्वे
प्रमाणाभावात् तस्यैव परिसङ्ख्याफलकत्वाङ्गीकारे हृदयादि-
वाक्यानां वैयर्थ्यस्य दुष्परिहरत्वात् अयुक्तमिति कौस्तुभो-
क्तविशेषान्तरस्य संग्रहः सूचितः ॥

**( हृदयादीनां क्रमसमुच्चयदर्शनोपपत्तेर्दशमे वक्ष्य-
माणत्वात् पशुवाक्ये तस्य शेषो नास्तीति
सोमवाक्यसिद्धान्तोपक्रमः )**

अतोऽवदानविधिवैयर्थ्याभावात् पशुवाक्य एव यागवि-
धानेऽपि हृदयादीनां चावयविसाधनत्वान्यथानुपपत्त्या समु-
च्चितानामेव साधनत्वावगतेः क्रमसमुच्चयदर्शनस्याप्युपपत्ति

दशमे वक्ष्यमाणत्वादुपेक्ष्य पशुवाक्ये सिद्धान्ते न किंचिदव-
शिष्यते इत्यनुसंधाय सोमवाक्ये सिद्धान्तमाह—**सोमेऽ-
पीति** ॥ सोमयागविषयेऽपीत्यर्थः । गौरवपदं लक्षणापत्तेरप्यु-
पलक्षणम् ॥

**( अर्थप्राप्तग्रहणानुवादेनैन्द्रवायवादिदेवतामा-
त्रविधानं, देवताविशिष्टग्रहणविधानमिति
वार्तिककृदुक्तं प्रौढिवादमात्रमिति प्रका-
शकारमतनिरूपणम् )**

अत्र चैन्द्रवायवादिवाक्येषु यागविध्यसंभवेऽपि अर्थप्राप्त-
ग्रहणानुवादेनैन्द्रवायवादिदेवतानामेव विधानम् । नच— अ-
गृहीतेनापि यागसंभवस्य वार्तिक एवोक्तत्वात् न ग्रहणस्यार्था-
दाक्षेप इति—युक्तम्; यागार्थं तदनाक्षेपेऽपि होमरूपप्रति-
पत्तेर्यागसमकालीनत्वस्य स्वयमेव सर्वप्रदानाधिकरणे वार्ति-
ककृता साधितत्वात् तदर्थमवत्तहोमेनावदानस्येव ग्रहणस्या-
क्षेपोपपत्तेः । अत एव ग्रहणस्य प्राप्तत्वात् देवताविशिष्टरू-
पेणादृष्टार्थतया **अथवा**—देवताविशिष्टग्रहणानामेवादृष्टार्थ-
तया विधानमत्र वार्तिककृतोक्तं प्रौढिवादमात्रोक्तमित्युक्तम्
प्रकाशकारैस्तन्निरासमेवकारेण सूचयन् ऐन्द्रवायवादिवाक्ये
विशिष्टग्रहणविधानमाह—**किन्त्विति** ॥

**( ऐन्द्रवायववाक्ये ग्रहणोद्देशेन सोमरसीयग्रह-
णोद्देशेन वा देवताविशिष्टरससंबन्धस्य देवता-
संबन्धस्य वा विधाने वाक्यभेदाद्यापत्त्योपां-
शु गृह्णातीत्यादाविव ग्रहणस्यापि विधानं
तत्प्रयोजनं च )**

**अयमर्थः**—उपांशुं गृह्णात्यन्तर्यामं गृह्णातीत्यत्रोपांश्वन्त-
र्यामादिपदानां नामधेयत्वेन विधेयान्तराभावेन वैयर्थ्यानुप-
पत्त्या ग्रहणविधेस्तावदावश्यकत्वम् । ऐन्द्रवायवादिवाक्येऽपि
प्राप्तग्रहणानुवादेन देवतासंबन्धस्यैव ग्रहणे देवताविशिष्टर-
सरूपसंस्कार्यसंबन्धस्यापि विधाने वाक्यभेदापत्तेर्ग्रहणमात्र-
स्योद्देश्यत्वे प्राकरणिकयत्किंचिद्द्रव्यग्रहणेऽपि तदापत्तेः सोम-
रसीयत्वेन विशेषणे विशिष्टोद्देशापत्त्या तद्विधेरावश्यकत्वमेव ।
अतोऽन्यतः संभवत्प्राप्तिकत्वेऽपि ततः पूर्वप्रवृत्त्यङ्गीकारेण
विशिष्टग्रहणविधानं तद्धितोपात्तद्रव्यसंस्कारार्थमेतैर्वाक्यैः क्रि-
यते । ऐन्द्रवायवमित्यादौ प्रकृत्यर्थभेदात् प्रत्ययार्थद्रव्यभेदः
तावच्छब्दान्तरन्यायादेव सिद्ध इति तत्तद्वाक्ये तत्तद्द्रव्योद्दे-
शेन विशिष्टतद्विधानं नायुक्तम् । तत्प्रयोजनंच देवतांशे प्र-
त्ययार्थद्रव्यभेदस्य ग्रहणाङ्गत्वस्यच सिध्यैतस्याव्यक्तत्वसिद्धिः ।
एतद्विध्यभावेहि याज्यापुरोगादिमन्त्राम्नानाद्यागाङ्गभूतानामेव
देवतानां निर्वाप इव ग्रहणे . तत्तन्मन्त्रवर्णादुपकारकतामात्रं

देवताविशिष्टग्रहणस्यैव तद्धितोपात्तद्रव्योद्देशेन विधिः। संभवति च देवतात्वस्य निरूपकतासंबन्धेन ग्रहणवैशिष्ट्यायोगेऽपि ग्रहणकालीनोच्चारणकर्मीभूतवृत्तित्वसंबन्धेन ग्रहणे वैशिष्ट्यम्। अतश्च देवतायाः ग्रहणाङ्गभूताया अपि यागापेक्षायां सोमवाक्यविहितयागस्यैव देवतापेक्षस्योपपादकत्वमात्रकल्पनाल्लाघवम्, सोमपदं तु संस्कारविध्यन्यथानुपपत्त्या संभवत्प्राप्तिकत्वेऽपि सक्तुव्यावृत्तिफलकसोमनियमार्थं

स्यात्, सतित्वस्मिन् प्रत्यक्षविधौ ग्रहणाङ्गत्वप्रतीतेः याग एवोपकारकतामात्रावसायाद्याज्यादिमन्त्राणामपि तदकल्पकतया यागस्याव्यक्तत्वसिध्योद्भिदादीनां तद्विकृतित्वं लभ्यते। ग्रहणांशेतु द्रव्यसंस्कारकतया दृष्टविधयाऽर्थतः प्राप्तस्यापि स्वतन्त्रादृष्टार्थत्वलाभः। ग्रहणविधीनां प्रयोजनापेक्षायां प्रयोजनान्तरासंभवे प्रयाजादिवत् आरादुपकारकत्वकल्पनेऽपि न दोषः। अत एव तत्तद्देवतावरुद्धग्रहणानां गुणात् भेदे सति विधेः पुनः श्रुतिवलाददृष्टस्यैव प्रयोजकतास्वीकारेण प्रयोजकीभूतादृष्टानुरोधेन तत्तद्देवत्यानां ग्रहणानां प्रयाजानुयाजवत् समुच्चयावगतेस्तदनुरोधेन ग्राह्यद्रव्याणामपि समुच्चयाद्विभिन्नदेवताकद्रव्यभेदवलेन यागावृत्तिसिद्धेः क्रमसमुच्चयदर्शनस्याप्युपपत्तिः॥ **नच**—अवयवशो ग्रहणेन ग्राह्यभेदात् ग्रहणाभ्यासोपपत्तिर्भेदेन गृहीतस्यैकीकरणे न यागाभ्याससिद्धिरिति तद्विषयक्रमसमुच्चयदर्शनानुपपत्तिः **इति—वाच्यम्**; भेदेन गृहीतस्यैकीकरणायोगात् भेदावस्थितस्यैव यागनिष्पादकत्वावगतेर्यागाभ्यासंच विना भेदेन गृहीतस्य तत्साधनत्वासंभवेन यागाभ्यासस्यावश्यकत्वेन तदुपपत्तेः॥

**(देवताविशिष्टग्रहणस्य सोमरससंस्कारार्थत्वेन विधाने एकप्रसरताभङ्गनिरासः विशिष्टविध्युपपादनं च)**

यत्तु अस्मिन् पक्षे ऐन्द्रवायवपदे एकप्रसरताभङ्गापादनं, तेषां तदुद्देश्यद्रव्यस्य विधेयदेवतानिरूपितत्वाभावात् "स्रुष्टीरुपदधाती"त्यत्र मन्त्रविशिष्टोपधानविधेरिष्टकासंस्कारार्थत्वेन स्वयमेवाङ्गीकृतत्वात् तेन न्यायेनेहापि तस्यादोषत्वादयुक्तमिति व्यक्तं कौस्तुभे। **एतेन**—विशिष्टविधौ गौरवापत्तेर्ग्रहणमात्रमेव विधीयते। ऐन्द्रवायवादिपदन्तु मन्त्रवर्णप्राप्तदेवतानुवादमित्यपि—**परास्तम्**; ऐन्द्रवायवादिपदवैयर्थ्यापत्त्या ग्रहणाङ्गत्वप्राप्तिफलकस्य विशिष्टविधेरप्यङ्गीकारात्। अतो युक्तं देवताविशिष्टग्रहणस्यैव विधानमिति। विस्तरश्च कौस्तुभे द्रष्टव्यः॥

**(ग्रहणे देवतान्वयानुपपत्तिपरिहारः ऐन्द्रवायववाक्ये यागकल्पनानिरासश्च)**

ग्रहणे देवतान्वयानुपपत्तिं परिहरति—**संभवति चेति**। **कर्मीभूतेति**॥ तच्च देवतावाचकं पदं तद्वृत्तित्वसंबंधेनेत्यर्थः। **देवतापेक्षस्येति**॥ सोमयागस्य देवतापेक्षाया ग्रहणाङ्गभूतदेवताभिः प्रसङ्गेनैवोपकारलाभेन शान्तेस्तस्यैवोपपादकत्वमित्यर्थः। **एतेन**—यागापेक्षायां आग्नेयवाक्य इव यत्रापेक्षा तत्रैव यागकल्पनं न्याय्यम्, नतु वाक्यान्तर इति ग्रहणवाक्येष्वेव यागविधानं युक्तमिति—**निरस्तम्**; आग्नेयवाक्ये पुरुषव्यापाराश्रवणेनापर्यवसानात् तत्र यागकल्पनोपपत्तावपि इह ग्रहणरूपपुरुषव्यापारश्रवणेन पर्यवसाने सत्यभिहितद्रव्यदेवतासंबन्धनिर्वाहकमात्रापेक्षायां सोमवाक्य एव श्रुत्या विहितयागस्य तन्निर्वाहकत्वोपपत्तेरश्रुतयागविधानकल्पनस्यान्याय्यत्वात्। **संस्कारविध्यन्यथेति**॥

**(प्रदेयत्वेन प्रकृतित्वेन वा सोमस्य प्राप्तत्वात् सोमेन यजेतेत्यत्र सोमपदं नामधेयमित्याशङ्कानुवादः)**

**अयमर्थः**—नह्यत्र सोमस्य प्रदेयत्वेन विधिर्युक्तः; संस्कारविधिवैयर्थ्यापत्तेः। नापि प्रकृतित्वेन; तस्य संस्कारविध्यन्यथानुपपत्त्यापि सिद्धेः। ग्रहणवाक्ये तावत् तद्धितोपात्तद्रव्यस्य ग्रहणसंस्कृतस्य विनियोगापेक्षायां देवतासंबन्धान्यथानुपपत्त्यवगततत्तद्यागाभ्यासेषु प्रदेयत्वेन विनियोगकल्पनं नानुपपन्नम्। सर्वनामार्थकस्य तद्धितस्य द्रव्यविशेषतात्पर्यग्राहकापेक्षायां सन्निधानद्वारा वाक्यप्रमितद्रवद्रव्यविषयत्वसिद्धिः। तत्रहि तत्तद्वाक्यप्राप्तग्रहणविशेषानुवादेन धारामात्रविधानम्। अल्पपरिमाणेषु पात्रेषु स्थूलया धारया ग्रहणे कृते पात्राद्बहिरपि पातापत्तेरणुत्वस्य प्राप्तत्वान्नाणुत्वस्यापि विधानम्। धारायाश्च प्रतिसंबन्ध्यपेक्षायां गृह्णातेश्च कर्माकाङ्क्षायामुत्तरार्धादिवत् स्वतन्त्रजलादिप्रतिसंबन्ध्याक्षेपकत्वानुपपत्तेः प्रकृतसोमं पावयतीत्यादिवाक्यप्रमितसोमप्रकृतिकद्रवद्रव्यविषयकत्वसिद्धिः। पावनवाक्ये सोमपदस्य लतापरत्वासंभवेन लक्षणया लतासंबन्धिरसपरत्वात्। एवंच संस्कारविध्यन्यथानुपपत्त्या सोमप्रकृतित्वस्यापि प्राप्तिर्नानुपपन्ना। **एतेन**—सत्यपि सन्निधाने धाराया द्रवद्रव्यमात्रसाधारणत्वात् सोमरसविषयत्वनियमे प्रमाणाभावे सति सोमस्याप्राप्तिरिति शास्त्रदीपिकोक्तं—**अपास्तम्**;—**इति**॥

**(संस्कारविध्यन्यथानुपपत्त्या सक्तूनामपि प्राप्त्या तद्व्यावृत्तिफलनियमविधित्वोपपादनम्)**

**सक्तुव्यावृत्तीति**॥ संस्कारविध्यन्यथानुपपत्त्या सोमवत् सक्तूनामपि विनियोगकल्पनया विकल्पेन प्राप्त्यापत्तेः पक्षप्राप्तसक्तुव्यावृत्तिफलकनियमार्थं सोमविधानम्। ततश्चोत्पत्तिशिष्टसोमावरोधात् संस्कारविध्यन्यथानुपपत्त्या सक्तूनां तत्र विनियोगकल्पनासंभवान्न विकल्पप्रसक्तिरि-

न विरुध्यते। यथा चैवं सति ग्रहणानां समुच्चयो यागस्य च प्रतिग्रहणमावृत्तिस्तथा सर्वं कौस्तुभ एव निरूपितम्। प्रयोजनं पशुविकारे हृदयादियागान्यतमप्रकृतिकत्वाच्चैकादशावदानगणप्राप्तिः पूर्वपक्षे, सिद्धान्ते तु सेति द्रष्टव्यम्। सोमे चाव्यक्तत्वसिद्धिरेव ॥ ६ ॥ इति षष्ठं पशुसोमाधिकरणम् ॥

( ७ अधिकरणम् ॥ )

**पृथक्त्वनिवेशात् ॥**

"आमनमस्यामनमस्य देवा इति तिस्र आहुतीर्जुहोति" "आज्यभागौ यजती"त्यादौ एकत्वातिरिक्तसङ्ख्यायाः स्वाश्रयप्रतियोगिक–स्वाश्रयवृत्तिभेदव्याप्तत्वेन न तावत्साक्षाद्भावनाभेदबोधकत्वम्; तस्या उक्तसङ्ख्याश्रयत्वाप्रतीतेः। नापि धात्वर्थभेदबोधकत्वम्; तस्य पूर्वप्रमितैकत्वसङ्ख्यावरुद्धत्वेन "एकादश प्रयाजान् यजति" "विराट्संपन्नमग्निहोत्रं जुहोती"त्यादिवत्सङ्ख्यान्तरसंबन्धानुपपत्तेरेतत्सङ्ख्याया अभ्यासविषयत्वप्रतीतेरकर्मान्तरत्वमिति प्राप्ते—

नात्र सङ्ख्यान्तरावरोधः। सा हि न तावत्तिङुपात्ता तस्याः कर्तृवृत्तित्वात्। नचानवच्छिन्नस्यान्वयानुपपत्तेः

---

त्यर्थः। **यथाचैवं सतीति** ॥ सिद्धान्ते यागैकत्वे सतीत्यर्थः। **कौस्तुभ एवेति** ॥ व्याख्यातपूर्वमेतत् ॥

**( सोमवाक्यसिद्धान्तप्रयोजनम् )**

**सोमे चेति** ॥ ऐन्द्रवायववाक्यैश्च यागविधावैन्द्रवायवेन यजेतेतिवचनव्यक्त्यापत्तेर्ज्योतिष्टोमस्यापि स्वार्थविहितद्रव्यदेवताकत्वलक्षणव्यक्तचोदनत्वादेकाहाहीनसत्रेष्वव्यक्तचोदनात्वेन ज्योतिष्टोमसादृश्याभावान्न तदीयविध्यन्तप्रवृत्तिः। सोमवाक्येनतु यागविधौ द्रव्यश्रवणेऽपि स्वार्थविहितदेवताराहित्येन ज्योतिष्टोमस्यापि अव्यक्तचोदनत्वेन तत्सादृश्यादेकाहादिषु ज्योतिष्टोमविध्यन्तप्रवृत्तिरित्यव्यक्तस्तु सोमस्येत्यष्टमाधिकरणे वक्ष्यमाणं प्रयोजनमित्यर्थः। **यत्तु वार्तिके**—कर्मभेदे सति एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वादित्यष्टमाधिकरणन्यायेनैकस्य ऐन्द्रवायवादिवाक्यविहितस्य यागस्य विकृतौ विकल्पेन विध्यन्तातिदेशात् विकल्पेनैकस्य धर्माः कार्याः सकृच्च यागाः कार्याः कर्मैक्ये यथाप्रकृतीति प्रयोजनान्तरमुक्तम्। तच्च वाक्येऽश्रूयमाणदेवताकत्वरूपविशेषसादृश्येनोपांशुयाजातिदेशस्य एकाहादिषु प्राप्त्यैन्द्रवायवादियागानामन्यतमातिदेशस्यैव प्राप्तौ प्रमाणाभावात् विकल्पेन धर्मप्राप्त्यनापत्तेः न युक्तमित्येवकारेण सूचितम्। **अत एव कौस्तुभे**—उपांशुयाजीयविध्यन्त एव पूर्वपक्षे प्रयोजनत्वेनोक्तः ॥

**॥ इति षष्ठं पशुसोमाधिकरणम् ॥**

**( अध्यायसङ्गतेः अभ्यासाधिकरणेन प्रत्युदाहरणसङ्गतेः अनन्तराधिकरणेन उपजीव्योपजीवकभावसङ्गतेश्च निरूपणम् )**

सङ्ख्यया कर्मभेदचिन्तनादध्यायसङ्गतिः। तथा अभ्यासाधिकरणेऽभ्यासात् साधितस्य कर्मभेदस्यापवादार्थं प्रवृत्ते पौर्णमास्यधिकरणन्याये पौर्णमासीवदुपांशुयाजः स्यादित्याद्यैस्त्रिभिरधिकरणैरपोदिते सति अभ्यासनिमित्तभेदापवादभूतायाः समुदायानुवादचिन्तायाः पौर्णमास्यधिकरणकृतायाः बुद्धिस्थीकरणात् तद्द्वारा समुदायानुवादापवादाभ्यासचिन्ताया बुद्धिस्थत्वादभ्यासेऽसकृच्छ्रवणाद्युक्ता भेदकता, प्रकृतेतु सकृच्छ्रवणस्य न कर्मभेदकत्वमिति पूर्वपक्षोत्थानादभ्यासाधिकरणप्रकरणेन सह प्रत्युदाहरणसङ्गतिः, तथा सोमयागैक्येऽप्यभ्यासेन क्रमसमुच्चयोपपत्तिवत् त्रित्वादिसङ्ख्याया अप्यभ्यासेनोपपत्तेर्न भेदकतेत्यनन्तरोक्ताभ्यासोपजीवनेन पूर्वपक्षीकरणादनन्तरसङ्गतिं च स्पष्टत्वादुपेक्ष्य सङ्ख्यया कर्मभेदोदाहरणपूर्वकं पूर्वपक्षमेवाह—**आमनमसीति** ॥

**( आमनमसीत्यस्य विवरणम्, आदिपदार्थस्य द्वादश द्वादशानि जुहोतीत्यस्य विवरणं च )**

"वैश्वदेवीं सांग्रहणीं निर्वपेत् ग्रामकाम" इति प्रकृत्येदमाम्नातम्। आदिपदेनाग्नौ वसोर्धारां विधाय श्रुतस्य "द्वादशद्वादशानि जुहोती"त्यादेः संग्रहः। अत्रच "वाजश्च मे प्रसवश्च मे" इत्याद्यैर्द्वादशमन्त्रैः प्रत्येकमाहुतिरेकं द्वादशं तादृशानि द्वादश जुहोतीत्यर्थः। विशेषतश्चेदं द्वादशे विचारयिष्यते। ततश्च यथा चतुश्चत्वारिंशदधिकशतमाहुतयः संपद्यन्ते तथा करोतीति भावः ॥

**( सङ्ख्यायाः स्वानाश्रयभावनाभेदकत्वाभावः )**

तिस्र इति पदोपात्तायाः सङ्ख्यायाः सत्यपि मुख्यविशेष्यभूतभावनान्वये धात्वर्थरूपाहुतिपदसामानाधिकरण्यदर्शनात् स्वाश्रयकरणकत्वसंबन्धेन तदाश्रयणात् तदनाश्रयभावनाभेदबोधकत्वासंभवमभिप्रेत्याह—**तस्या इति। पूर्वप्रमितैकत्वेति** ॥

**( धात्वर्थस्यानवच्छिन्नस्य भानासंभवादवच्छेदकतया प्राथमिकैकत्वसङ्ख्यावरोधाद्धात्वर्थभेदकत्वाभावः )**

यद्यपि जुहोतीत्याख्यातोपात्तैकत्वं कर्तृगामित्वान्न धात्वर्थवृत्तित्वेन प्रमितम्; तथाप्यनवच्छिन्नस्य धात्वर्थस्य भावनान्वयित्वानुपपत्तेरवच्छेदकीभूतसङ्ख्यापेक्षायां प्रथमातिक्रमे कारणाभावादेकत्वस्यैव धात्वर्थवृत्तित्वेन प्रमा नानुपपन्नेत्यर्थः। **एकादशेति** ॥ प्रयाजेषु पञ्चत्वसङ्ख्यावरोधादग्निहोत्रे चैकत्वसङ्ख्यावरोधे सति श्रूयमाणैकादशत्वदशसङ्ख्ययोः प्रयोगाभ्यासपरत्वम्, नतु कर्मभेदकत्वम्। तद्वदिहापीत्यर्थः ॥

प्रथमातिक्रमे च कारणाभावाद्धात्वर्थे एकत्वसङ्ख्यानुमानमिति—वाच्यम्; श्रुतसङ्ख्यासत्त्वे कारणाभावस्यासिद्धत्वेनानुमानाप्रसरात्। अतएव प्रयाजैकादशत्वस्थले यत्र प्रकृतौ अनुमानप्रसरस्तत्राभ्यासविषयत्वम्। नचैवं विराड्संपत्तिवाक्यादावपि उत्पत्तिवाक्ये एकत्वानुमानानापत्तिः; तादृशस्थले स्वोपजीव्योत्पत्तिवाक्यजन्यशाब्दबोधनिर्वाहार्थं

## (सङ्ख्यायाः तिस्र आहुतीरिति धात्वर्थसामानाधिकरण्यात् तद्वृत्तित्वप्रतीतेरेकत्वसङ्ख्यानवरोधात् कर्मभेद इति सिद्धान्तः)

"तिस्र आहुतीरि"ति सामानाधिकरण्यात् धात्वर्थवृत्तित्वप्रतीतेः कर्मभेदकत्वमेव युक्तम्। प्रयाजानान्तु प्रत्येकैकत्वेन प्रचयविशिष्टपञ्चत्वेनवोत्पत्तौ निर्ज्ञातसङ्ख्यत्वात् श्रुतैकादशत्वसङ्ख्याया अन्यथानुपपन्नत्वेन गत्यभावान्नानुमितसङ्ख्याबाधकत्वम्, प्रकृतेतु यावद्धात्वर्थे सङ्ख्याऽनुमातुमारभ्यते तावत् प्रत्यक्षश्रुतया सङ्ख्यया निराकाङ्क्षीकरणान्नानुमानप्रसरः॥ **किंच** संख्याश्रवणाभावादेवैकत्वं कल्पनीयम्। नह्यत्र त्रित्वश्रवणे सति सोऽस्तीति धात्वर्थावच्छेदकत्वं श्रुतसङ्ख्याया एव युक्तमिति अनुमानप्रतिबन्ध एवेत्यभिप्रेत्य सिद्धान्तमाह—**नात्रेति**॥

## (उत्पत्तिवाक्ये सङ्ख्याश्रवणे सङ्ख्यान्तराननुमानं, तदश्रवणे तदनुमानम्, अनुमिताया अपि सङ्ख्याया उत्पन्नशिष्टसङ्ख्यया न बाधः, इत्यादि कौस्तुभविस्तरनिरूपणम्)

**कौस्तुभे विस्तर इति**॥ यत्रोत्पत्तिवाक्ये सङ्ख्याश्रवणं तत्रानुमानप्रवृत्तेः पूर्वमेव श्रुतसङ्ख्याया भावनान्वयात् तन्निर्वाहाय धात्वर्थसंबन्धावश्यंभावेन तयैव निराकाङ्क्षत्वोपपत्तेर्न पश्चात् सङ्ख्यान्तरानुमानप्रसरः। यत्र तूत्पत्तिवाक्ये सा न श्रुता, उत्पन्नवाक्यस्य तदनुवादेन सङ्ख्याविधायकत्वात् तदुत्तरप्रवृत्तिकत्वेन तदुपजीव्यकत्वं तत्रोत्पत्तिवाक्ये स्ववाक्यार्थावधारणकाले परिच्छेदकीभूतसङ्ख्यानुमाने नैव कश्चन दोषः। अत एव उपजीव्यत्वात् उत्तरकालप्रवृत्तेनोत्तरेण श्रुतेनापि न पूर्वप्रमितस्य दुर्बलस्यापि बाधः। नह्युत्पन्नशिष्टाया अगतिकत्वमस्ति; अभ्यासद्वारकतयाप्युपपत्तेः, प्रकृते त्वश्रुतसङ्ख्यानुमानात् पूर्वमेवश्रुतायाः सङ्ख्यायाः भावनान्वयद्वारा विध्यन्वयप्रतीतेरौत्तरकालिकत्वाभावेनानुमानप्रतिबन्धात् युक्ता भेदकतेति वैषम्यम्। अत एव उत्पत्तिवाक्यगतसङ्ख्याया अपि यत्र न विध्यन्वयो विशिष्टविधिगौरवापत्तेः तत्र मन्त्रवर्णप्राप्तदेवतानुवादकत्वेन स्वाश्रयदेवत्यायागवृत्तित्वसंबन्धेनैकत्वलक्षणार्थं सत् प्रातिपदिकलक्षिततद्देवत्ययाग एवान्वेतीति शक्यार्थस्य विध्यन्वयाभावान्न धात्वर्थभेदकता यथा "समिधो यजती"त्यादाविति कौस्तुभे विस्तर इत्यर्थः॥

पूर्वप्रवृत्तस्यानुमानस्यौत्तरकालिकेन सङ्ख्याश्रवणेन बाधायोगात्तस्याभ्यासविषयत्वप्रतीतेः, प्रकृते तु शाब्दबोधात् पूर्वमेवेतरपदार्थवत्सङ्ख्याया अपि प्रतीतेर्युक्तः शाब्दबोधोत्तरकालीनानुमानप्रतिबन्ध इति कौस्तुभे विस्तरः। अतश्च सिद्धमुत्पत्तिवाक्यगतकर्मसमानाधिकरणविधेयसङ्ख्यायाः कर्मभेदकत्वम्। भावनाभेदस्तु शब्दान्तरादेव। प्रयोजनं

## (विधेयसङ्ख्यायाः कर्मसामानाधिकरण्ये कर्मभेदकत्वं तदभावे तन्नेति निरूपणम्)

**कर्मसमानाधिकरणेति**॥ अत एव कर्मसामानाधिकरण्याभावादेव "न त्रिर्वेदिं प्रोक्षती"त्यादौ कर्मभेदकत्वम्। त्रिरित्यस्य क्रियाभ्यासवृत्तिगणनार्थकसुच्प्रत्ययान्तत्वेनाभ्यासवृत्तिसङ्ख्याप्रतिपादकत्वादित्यर्थः॥

## (भावनाभेदस्तु शब्दान्तरादित्यत्र पूज्यपादोक्तशब्दान्तरमेव विवक्षितं, न तु मूलोक्तं, ऐन्द्रवायवादिवाक्येतु कौस्तुभोक्तमन्यदित्यादि निरूपणम्)

सङ्ख्याया धात्वर्थभेदकत्वेऽपि कथं भावनाभेद इत्यत आह—**भावनाभेदस्त्विति**॥ यद्यपि समानपदोपात्तधात्वर्थाविरोधे पदान्तरोपात्तधात्वर्थस्यावच्छेदकत्वायोग इत्येवं गुणन्यायसंकीर्णशब्दान्तरन्यायान्न भावनाभेदस्संभवति, नाप्यपर्यायधातुनिष्पन्नमाख्यातरूपं मूलोक्तं शब्दान्तरस्वरूपम् पर्यायधातोरेवाऽऽख्यातनिष्पत्तेः; तथापि कार्यतावच्छेदकतत्तद्धोमत्वभेदात् कारणतावच्छेदकयत्नत्वेऽपि वैजात्यमित्येवंविधात् स्वोक्तशब्दान्तरायुक्त एव तद्भेद इत्येवकारेण सूचितम्। भावनानां भेदेऽपि चैकपदोपादानेन युगपत्प्रतीतेर्भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यरूपैकवाक्यत्वलक्षणस्य संभवान्न वाक्यभेदः। **एतेन**—एकप्रातिपदिकोपात्तानेकाग्नीषोमविशिष्टदेवतैकतावत् एकधातूपात्तानेकहोमविशिष्टभावनाया अप्यैक्यमेवास्तु, यत्र निरपेक्षोत्पन्नानां करणता फलवाक्ये श्रुता तत्र करणतानामभेदे प्रमाणाभावेऽपि यत्रोत्पद्यमानान्येव कर्माणि भिन्नानि तत्र करणताभेदस्य भावनाभेदमन्तरेणासंभवरूपशब्दान्तरन्यायस्याप्रवृत्तेरित्यपि—**अपास्तम्**; अस्मदुक्तशब्दान्तरन्यायस्याविकलत्वात् इति भावः। यद्यपि पूज्यपादोक्तशब्दान्तरन्यायस्याप्यव्यापकत्वम्। ऐन्द्रवायवमित्यादौ प्रकृत्यर्थभेदेन प्रत्ययार्थद्रव्यभेदे तत्र तत्र वार्तिकादौ कौस्तुभेच शब्दान्तरन्यायेनोपपादितेऽसंभवात्। अत एव एकप्रकृत्यर्थावरुद्धे प्रत्ययार्थे प्रकृत्यन्तरस्य निवेशायोगरूपगुणन्यायसंकीर्णशब्दान्तरस्यैव भेदकत्वं तत्साधारणं वक्तुं युक्तम्; तथापि उक्तरीत्या संख्यास्थले तस्य भावनाभेदकत्वासंभवात् भावनाभेदप्रयोजकं शब्दान्तरं पूज्यपादोक्तमेव। देवतात्वादिभेदप्रयोजकं त्वस्तु नाम तादृशम-

वेदिप्रोक्षणमन्त्रवत्पूर्वपक्षे सकृन्मन्त्रः, सिद्धान्ते तु तदावृत्तिरिति ।

भाष्यकारेण तु "सप्तदश प्राजापत्यान्पशूनालभेते"ति वाक्ये यागभेदाभेदचिन्ता कृता। तत्र यद्यपि देवतात्वविशि-

---

न्यत् । यदित्वैकरूप्ये आग्रहस्तदा विभिन्नप्रकृत्यर्थत्वमेव शब्दान्तरम् । तच्च क्वचित्कार्यतावच्छेदकभेदज्ञापनेन क्वचिच्च स्वावरोधकृतभेदज्ञापनेन प्रत्ययार्थभेदज्ञापकमित्याद्यूह्यमिति ॥

## ( गुणात्सङ्ख्याया वैलक्षण्यनिरूपणपूर्वकं सङ्ख्यायास्स्वतन्त्रमानत्वनिरूपणम् )

नच—न सङ्ख्या स्वतन्त्रं मानम्, एकस्मिन् कर्मण्यनिशमानत्वसाम्येन गुण एवान्तर्भावादिति—वाच्यम्; अनिविशमानत्वसाम्येऽप्युत्पत्तिगतसङ्ख्यायाः प्रमाणान्तरसिद्धोत्पत्तिकस्यैव कर्मणो भेदकत्वमात्रबोधकत्वात् । "तिस्र आहुतीरि"त्यत्र हि शब्दान्तरादिनैवोत्पत्तिपरत्वावधारणम्, नतु सङ्ख्यायास्तत्र व्यापारः, अपित्वनेकत्वबोधमात्रे । गुणस्य सत्यामेयादावुत्पत्तिवाक्यगतस्य भेदकत्वे उत्पन्नवाक्यगतस्याप्यनिविशमानत्वेन स्वविशिष्टकर्मोत्पत्तिद्वारा भेदबोधकत्वमिति वैषम्यम् । अतो युक्तं सङ्ख्याया मानान्तरत्वमिति ॥

## ( पूर्वोत्तरपक्षप्रयोजनं, प्रकाशकारोक्तस्यापि प्रयोजनस्य स्वाविरोधः, तदीयविकल्पनिरासश्च )

**वेदिप्रोक्षणमन्त्रवदिति** ॥ "त्रिर्वेदिं प्रोक्षती"ति विहितस्य प्रोक्षणस्यैकस्यैव त्रिरभ्यासविधानेऽपि कर्मण एकत्वात् कर्मादेः सकृत् पठितमन्त्रान्तकालकत्वाविरोधात् सकृदेव "वेदिरसि बर्हिषे त्वा स्वाहा" इति मन्त्रः प्रयोक्तव्य इत्येकादशान्त्यपादे वक्ष्यते । तद्वदिहापि कर्मण एकत्वात् तस्य त्रिरभ्यासेऽप्यामनमस्यामनस्येति मन्त्रस्य सकृत्प्रयोगः पूर्वपक्षे, सिद्धान्ते तु यथासङ्ख्यं मन्त्रत्रयस्य कर्मत्रयाङ्गत्वात् प्रतिकर्मैकैकमन्त्रपाठेनावृत्तिरित्यर्थः । यद्यपि **प्रकाशकारैः**—इदं प्रयोजनं यत्रैवंजातीयके एकस्यैव मन्त्रस्य विनियोगस्तत्रैव ज्ञेयम् । यत्र त्वामनहोमेषु "आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोती"ति वाक्ये आमनमस्यामनस्येति प्रतीकेन "आमनमस्यामनस्य देवा ये सजातास्समनसः । आमनमस्यामनस्य देवा ये कुमारास्समनसः । आमनमस्यामनस्य याः स्त्रियः समनस" इति मन्त्रत्रयस्य विनियोगस्तत्र **गुणानां च परार्थत्वादिति** न्यायेन पूर्वपक्षे अभ्यासाङ्गत्वे प्रमाणाभावात् एककर्माङ्गत्वेन मन्त्रत्रयस्य विकल्पः, सिद्धान्तेतु त्रिषु कर्मसु त्रयो मन्त्रा अङ्गमिति प्रयोजनमुक्तम्; तथापि विकल्पेनापि प्राप्तस्यैकस्यैव मन्त्रस्य सकृदेव प्रयोग इत्युक्तप्रयोजनस्य सिद्धिरविकलैव । यत्तु तेषां विकल्पाभिधानं, तत्तु कर्मण एकत्वेऽपीतिकरणोपात्तमन्त्रत्रयस्य समुच्चयप्रतीतेर्युक्तमित्युपेक्षितं पूज्यपादैः ॥

## ( इतिकरणविनियोगेऽपि सिद्धान्ते यथासङ्ख्यं मन्त्रत्रयस्यैकैककर्माङ्गत्वनिरूपणम् )

कथं तर्हि सिद्धान्ते न समस्तस्यैकैककर्मसाधनत्वमिति चेत्, उच्यते, कर्मत्रयपक्षे हि मन्त्रत्रयस्यापि प्रत्येकं मन्त्रत्वप्रसिद्धेः समसङ्ख्यन्यायसहकृतात् "मन्त्रान्तेन कर्मादिः सन्निपात्य" इति वचनादेकैकस्य एकैककर्माङ्गत्वेऽपीतिकरणावगतसमुच्चयस्य कर्मत्रयसमुच्चयाभिप्रायेणाप्युपपत्तौ न कश्चन दोषः । अत एवैतादृशविषय एवावृत्तिसिध्यर्थत्वेन "मन्त्रान्तेन कर्मादि"रित्येतद्वचनसार्थक्यमेकादशे पूज्यपादैर्वक्ष्यते । यद्यपि संहितायाम् "आमनमस्यामनस्य देवा ये सजाताः कुमारास्समनसो ये महान्तः" इत्यादिरेको मन्त्रस्तथा "आमनमस्यामनस्य देवा याः स्त्रियः समनसः" इत्यादिरपरश्चेति द्वावेव मन्त्रावाम्नातौ; तथापि सजाताः कुमारा इति पदभेदमवलम्ब्य सजाता इत्यस्यानन्तरं समनस इत्यग्रिमानुषङ्गेण कुमारा इत्यस्मात् पूर्वं आमनमस्यामनस्येति पूर्वानुषङ्गेण च मन्त्रत्रयं ज्ञेयम् । प्रयोजनान्तरं च कौस्तुभे द्रष्टव्यम् ॥

## ( वृत्तिकारीयोदाहरणपरित्यागेन भाष्यकारेणोदहरणान्तरे भेदाभेदचिन्ताया निमित्तनिरूपणम् )

एतच्चोदाहरणं वृत्तिकारेण दर्शितमप्यत्र सङ्ख्यायाः कर्मसामानाधिकरण्येन क्रियागतभेदकत्वस्य स्फुटत्वेन पूर्वपक्षानुत्थानादयुक्तमिति तुशब्देन सूचयन् तदभिप्रायेण भाष्यकारेणोदाहरणान्तरे भेदाभेदौ चिन्तितौ । तां चिन्तां दर्शयति **—भाष्यकारेण त्विति** ॥

## ( प्राजापत्यानित्यत्र प्रकृतिप्रत्ययतदर्थादिविवेकः )

प्राजापत्यानिति पदे प्रकृत्या प्रजापतिः तद्धितेन देवताविशिष्टं द्रव्यं पश्वाख्यं द्वितीयया च लक्षणया करणत्वं बहुवचनेन बहुत्वमुच्यत इति वस्तुस्थितिः । पशुपदं च द्रव्यविशेषतात्पर्यग्राहकं । तत्र पदद्वयेऽपि बहुत्वस्य सामानाधिकरण्यसंबन्धेन करणत्वेनान्वितस्यापि पार्ष्ठिको द्रव्येणैवान्वयः । एवं स्थिते बहुवचनोपात्तबहुत्वान्वयायैकशेषस्यावश्यकत्वे सति किन्तु अयं तद्धितान्तानामेकशेषः कृतो भवेत्, किंवा कृतैकशेषाणां पश्चात्तद्धितसङ्गतिः । "प्रत्ययार्थबहुत्वं हि प्रत्यक्षमुपलभ्यते । तत्कृतं चैकशेषत्वमिति न प्रकृतौ भवेदि"ति वार्तिके तद्धितप्रत्ययोत्तरश्रूयमाणबहुत्वान्वयानुरोधेन प्रत्यये भासमानमप्येकशेषं न्यायसुधाकृता केवलप्रत्ययप्रयोगासंभवात् तद्धितस्यापि देवताविशिष्टद्रव्यवाचित्वात् तन्मात्रैकशेषेऽपि विशिष्टे तद्धितार्थं एव बहुत्वान्वयापत्त्या द्रव्यदेवतान्वयभे-

ष्टद्रव्यविशेषवाची तद्धितः, यद्यपि च प्राजापत्यपद एवैकशेषः; तथापि तदुत्तरविभक्त्युपात्तायाः सङ्ख्यायाः प्रकृत्यर्थे विशेष्य एवान्वयः नतु विशिष्टे। द्वौ त्रय इत्यादौ तथैव व्युत्पत्तेरिति तावदविवादम् । सोऽपि च न द्रव्ये देवतात्वान्वयोत्तरम्; तथा सति देवतात्वप्रतिसंबन्धिनि द्रव्ये साहित्यानवगमेन प्रत्येकवृत्तिपशुत्वावच्छिन्न एव तत्संबन्धप्रती-

---

दात् यागभेदापत्तेः पूर्वपक्षानुत्थानापत्तेः उपेक्ष्य तद्धितस्य सर्वनामार्थवृत्तित्वात् सर्वनाम्नश्च सन्निहितपशुपरामर्शित्वात् बहुवचनान्तपशुपदानुरोधेन अस्यचास्यचास्यचेत्येते तेषामित्येवं सर्वनाम्न एव एकशेषकल्पनया बहुत्वसङ्ख्यावच्छिन्नसर्वनाम्न एव एकशेषकल्पनया बहुत्वसङ्ख्यावच्छिन्नसर्वनामार्थ एव प्रजापतिर्देवता एषामिति तद्धितोत्पादात् तदुत्तरबहुवचनस्यानुवादत्वात् बहूनां पशूनां एकदेवतासंबन्धेन कर्मैकत्वमिति पूर्वपक्षस्साधितः । तमश्रुतसर्वनामैकशेषकल्पने प्रमाणाभावात् तद्धितस्य विशिष्टवाचित्वेऽपि बहुत्वस्य वक्ष्यमाणरीत्या विशेष्य एवान्वयोपपत्तेः पूर्वपक्षोत्थानसंभवात् अयुक्तत्वेन सूचयन् तद्धितैकशेषमेव पार्थसारथिदर्शितमङ्गीकृत्य पूर्वपक्षमाह—**तत्र यद्यपीति** ॥

**( तद्धितमात्रस्यैकशेषनिरूपणम् )**

केवलप्रत्ययप्रयोगासंभवेन प्रत्ययैकशेषासंभवं परिहर्तुं यद्यपि चेत्याद्युक्तम् । 'गर्गस्यापत्यानीत्यर्थे गर्गादिभ्यो यञि-' त्यनेन यञ्प्रत्ययत्रयप्राप्तेः तत्र यथा गर्ग=य य य इति समुदायस्य तद्धितान्तत्वेन प्रातिपदिकत्वात्ततः प्रथमाविभक्तौ परभूतायामेकशेषो महाभाष्ये उक्तस्तथेहापि बहुवचनानुरोधेन प्रजापति=य य य इत्येवमेकशेषस्तेन प्रजापतिर्देवतैषामित्यर्थे पश्चात्तद्धितः, नतु प्राजापत्यश्च प्राजापत्यश्चेति सप्तदशकृत्व उच्चार्य कृततद्धितैकशेष इत्यर्थः ॥

**( प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वन्यायविरोधेन देवतान्वयात्पूर्वं द्रव्यसङ्ख्यान्वयप्रतिपादनम् )**

एवंचैकशेषितयप्रत्ययार्थे द्रव्ये बहुत्वान्वयो देवतान्वयोत्तरं ततः पूर्वमेववेत्युभयथापि संभवे नियामकं वक्तुं प्रथमतः शुद्धविशेष्ये तदन्वयं साधयति—**तथापीति । तथैव व्युत्पत्तेरिति** ॥ यद्यपि प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थाभिधायित्वेन प्रजापतिवृत्तिदेवतात्वविशिष्टे द्रव्य एव प्रकृत्यर्थे बहुत्वान्वयापत्तेर्न्यायसुधाकारापादितयागभेदापत्तिर्दुर्वारा; तथापि सङ्ख्यारूपप्रत्ययार्थस्य प्रकृत्यर्थविशेष्यान्वयित्वमेव; अन्यथा द्वौ त्रय इत्यादौ द्वित्वादिविशिष्टे सङ्ख्यान्वये चतुर्णां नवानां वा प्रतीत्यापत्तेः । अतस्तत्र विशेष्यमात्रेऽन्वयवदिहापि विशिष्टस्य तद्धितान्तार्थत्वेऽपि विशेष्यमात्र एव सङ्ख्यान्वय इत्यविवादमित्यर्थः । **तत्संबन्धप्रतीतेरिति** ॥

तेरनेकत्वावगमात्संबन्धभेदेनानेकयागादिकल्पनागौरवापत्तेः। अतो लाघवाद्देवतात्वान्वयात्पूर्वमेव सङ्ख्यान्वयः। तदाहि बहुत्वावच्छिन्न एवैकदेवतासंबन्धादेकयागादिकल्पनाल्लाघवम्।

नच प्रकृतिप्राप्तैकपशुनिष्पन्नैकादशावदानगणैकत्वानुरोधेन सङ्ख्याया देवतात्वान्वयोत्तरमन्वयः; पशुगतैकत्वस्य श्रुत-

---

**( द्रव्ये सङ्ख्यान्वयपक्षेऽपि श्रुतसप्तदशत्वेन प्राकृतपश्वेकत्वबाधनिरूपणम् )**

**ननु**—लाघवसत्त्वेऽपि सन्देहे वाक्यशेषस्थानीयातिदेशादेवास्तु निर्णयः। सहि प्रकृतितः एकपशुनिष्पन्नैकादशावदानगणमेकं प्रापयति । प्रकृतौ पशुमालभतेति हृदयादिप्रकृतिभूतपशुगतैकत्वस्यापि विवक्षेत्येकस्यैवावदानगणस्याङ्गत्वात् यागैकत्वे तस्य सवनीयातिदेशेनैकस्यैव प्राप्तेः सप्तदशपशुप्रकृतित्वानुपपत्तिः । **यस्तु शास्त्रदीपिकायां**—पूर्वपक्षे एकादशिनीविकारत्वेनैकादशावदानगणैकताप्राप्तावपि चोदकविरोधः सिद्धान्ते आपादितः । स "तत्प्रवृत्तिर्गणेषु स्यादि"त्याष्टमिकन्यायस्य भिन्नयागतायां गणत्वेन एकादशिनीविकारत्वोपपादकत्वेऽपि एकयागपक्षे तदप्रवृत्त्या सुत्याकालत्वसामान्येनैकादशिनीवत् सवनीयविकारत्वस्यैव वार्तिके उक्तत्वादुपेक्ष्यः। यत्तु सोमनाथेन सुत्याकालत्वसाम्यापेक्षयैककालालम्भनीयगणसंबन्धित्वसादृश्यस्य आधिक्यादेकादशिनीविकारत्वं समर्थितम्, तत्तदपेक्षयापि शीघ्रोपस्थितैकयागत्वरूपान्तरङ्गसादृश्यस्याधिक्यात् सवनीयविकारत्वस्यैव प्राप्तेरेकादशिन्याः स्वतन्त्रकर्मत्वाभावेन गणसंबन्धित्वेन तद्विकारत्वस्य सिद्धान्तेऽप्यनङ्गीकारात् तदन्तर्गतैकतरयागेच पर्याप्तिसंबन्धेन गणत्वसत्त्वेऽपि पशुगणसंबन्धित्वानुपपत्तेरयुक्तमित्युपेक्ष्यम् । यद्यपि चौपदेशिक्या पशुसङ्ख्यया आतिदेशिक्या बाधः स्यात्; तथापि हृदयाद्येकत्वस्य भिन्नविषयत्वेन बाधाभावात् हृदयाद्येकगणस्य सप्तदशप्रकृतित्वानुपपत्तिस्तदवस्थैव, यागभेदे तु प्रतियागमतिदेशभेदात् तावतां गणानां प्राप्तेस्तावत् पशुप्रकृतित्वोपपत्तिः । अतोऽतिदेशेनैव वाक्यशेषस्थानीयेन निर्णयोपपत्तेर्देवतात्वान्वयोत्तरं द्रव्यमात्रे विशिष्ट एव बहुत्वान्वयाद्यागभेद एवेत्यभिप्रेत्य प्राचां सिद्धान्तयुक्तिमाशङ्क्य निराकरोति—**नचेति । पशुगतैकत्वस्येति** ॥

**( वाक्यशेषस्थानीयेनातिदेशेनाविरोधात्तेन निर्णय इति देवतात्वान्वयोत्तरमेव द्रव्यान्वयासंभवोपपादनम् )**

प्रकृतौ हि पशुशास्त्रस्य विशसनादिरूपतात्पर्यग्राहकानुरोधेन सर्वावयवद्वारा पशुसाधनताबोधकत्वे प्राप्तेऽपि हृदयादिशास्त्रैरितरावयवपरिसङ्ख्याकरणादर्थात् पशुशास्त्रैर्हृदयादिसाधनता-

सप्तदशत्वेन बाधात् अवदानगणैकत्वस्य च प्रकृतावार्थिकत्वेनेहानतिदेशात्। अतो देवतासंबन्धभेदे प्रमाणाभावान्न यागभेदः। अस्तु वा समानाभिधानश्रुत्या बहुत्वान्वयात्प्राग्देवतात्वान्वयेन संबन्धभेदस्तथापि लाघवाद्यागैकत्वम्। यथैव हि सिद्धान्तेऽनेके यागाः सकृदनुष्ठानेनोपपाद्यन्ते, तथा मन्मतेऽप्येकेन यागेनानेके देवतासंबन्धा इति प्राप्ते—

समानाभिधानश्रुत्या देवतात्वस्यान्तरङ्गत्वात्सङ्ख्यान्वयात्पूर्वान्वयित्वम्; पशूनां प्रत्येकं स्वत्वाश्रयत्वेन स्वत्वध्वंसानुकूलव्यापारात्मकयागकरणत्वरूपहविष्ट्वस्य प्रत्येकवृत्तितया सूक्तहविषोरित्यादिस्मृत्यनुसारेण हविष्ट्वावच्छेदकपशुत्वावच्छेदेनैव देवतासंबन्धौचित्याच्च। अतश्च बहुत्वानवच्छिन्नस्यैव प्रतिसंबन्धित्वात्प्रतिसंबन्धितावच्छेदकस्य प्रत्येकवृत्तित्वेन प्रतिसंबन्धिभेदप्रतीतेस्तद्भेदेन संबन्धभेदसिद्धिः। नच संबन्धभेदेऽपि यागैकत्वम्; संबन्धानां यागैकत्वानेकत्वाभ्यामुभयथाप्युपपत्तौ लाघवापेक्षया पश्वेकताप्रासिचोदकस्य शास्त्रतया बलवत्त्वेन नियामकत्वात्। अतस्तदनुरोधेनैव सर्वत्र यागभेदो भावनाभेदश्चेति सिद्धम्। प्रयोजनं यागैकत्वे एकपशुविस्मरणेऽपि तस्य जातत्वान्न पुनर्यागकरणं, सिद्धान्ते तु तदिति ॥ ७ ॥

## इति सप्तमं संख्याकृतकर्मभेदाधिकरणम् ॥

---

बोधकत्वात् तत्रच पशुगतैकत्वेन हृदयाद्येकत्वस्यार्थसिद्धत्वान्न तद्गतैकत्वांशेऽपि विधिकल्पनम्। यद्यपि चावदानविध्यन्यथानुपपत्त्या हृदयादिसाधनविधिकल्पनम्; तथापि तद्गतैकत्वस्यार्थसिद्धत्वान्नैव विधेयत्वमावश्यकम्। अतश्च यथैव हृदयादिगणस्य यागसाधनस्यापि पशुगतैकत्वानुरोधात् एकत्वं प्रकृतौ, तथैव तद्गतौपदेशिकसप्तदशत्वेनैकत्वबाधात् तदनुरोधेन हृदयादिगणे सप्तदशत्वमिति यागैकत्वेऽप्यार्थिकस्यातिदेशाभावात् श्रुतसङ्ख्यया बाधाच्चातिदेशाविरोधान्न तस्य निर्णायकत्वसंभव इत्यर्थः ॥

### ( पशूनां प्रत्येकं करणयोग्यतोपपादनम् )

**पशूनामिति** ॥ यत्रहि प्रमाणान्तरेण प्रत्येकवृत्ति करणत्वं तत्तदुत्पत्तिवाक्येष्ववगतम्, तत्र प्रत्येककरणताश्रयाणामेव पाश्चिके बहुत्वान्वये सति करणानामेव समुच्चयः, नतु समुदितानां करणत्वमेकं। यत्रतु प्रमाणान्तरेण न तद्भेदावगमस्तत्र लाघवेनैकस्यैव करणत्वस्य कल्पनादेककरणताश्रय एव पाश्चिकस्तदन्वय इति समुदितानां तत्र करणत्वम्। अतो यत्र प्रमाणान्तरेणैवैका करणता प्रतीयते, तत्रैव समुदितानां करणत्वे सिद्धे प्रकृते पशूनां यागकरणत्वयोग्यतायाः प्रत्येकमेव प्रतीतेः प्रत्येककरणताश्रये द्रव्ये बहुत्वस्यान्वयात् पशुत्वावच्छिन्नस्यैव देवतात्वप्रतिसंबन्धित्वम्। नहि पशुसमुदाये एकं स्वत्वमस्ति; प्रमाणाभावात्, यथेष्टविनियोगादिरूपस्य स्वत्वकार्यस्य प्रत्येकं दर्शनाच्च, समुदायस्य स्वातन्त्र्येण विनियोगानर्हत्वाच्च। अतः प्रत्येकं पशूनां स्वत्वाश्रयत्वात् तद्ध्वंसानुकूलव्यापाराख्ययागकरणत्वमपि प्रत्येकमेवेति तदर्थविहितदेवतातद्धितेनापि प्रत्येकमेव देवतात्वसंबन्धावगतिः। अत एव करणत्वविशिष्टपशुबोधकशब्दस्यैव तात्पर्यग्राहकत्वम्, नतु बहुवचनस्यापि; तदर्थस्य हविष्ट्वानवच्छेदकत्वादित्यर्थः। अतश्च यागसाधनत्वे योग्यतावच्छेदकपशुत्वावच्छिन्नस्यैव बहुत्वावच्छिन्नस्य देवतासंबन्धात्तस्य च प्रतिसंबन्धितापर्याप्त्यधिकरणताभेदेन भिन्नत्वात् भेदसिद्धिरित्याह—**अतश्चेति** ॥

### ( सप्तदशत्वे तद्धितोपात्तदेवतात्वस्य सङ्ख्यान्वयात्पूर्वं द्रव्यान्वय एव यागभेदसाधक इति निरूपणम् )

**अतस्तदनुरोधेनैवेति** ॥ यत्तु शास्त्रदीपिकायां द्रव्यस्य तद्धिताभिहितस्य विशिष्टस्यैव बहुत्वावगममात्रादेतादृशे विषये यागभेदसाधने "वसन्ताय कपिञ्जलानालभते" इत्यादौ तद्धिताभावे बहुत्वावच्छिन्नेष्वेव देवतासंबन्धाद्यागभेदानापत्तेर्न केवलं बहुत्वान्वयात् पूर्वं देवतात्वस्य तद्धितोपात्तस्य द्रव्येऽन्वयो योगभेदसाधकः किन्तु एकपशुनिष्पन्नैकादशावदानगणैकताप्रापकचोदनानुग्रह एवेत्युक्तम्, तन्निरसितुमेवकारः। ततश्च वसन्तवाक्ये पूर्वोक्तरीत्याऽवदानगणगतैकत्वस्याऽऽर्थिकत्वेनानतिदेशे सति न तेन यागभेदः, किंतु चतुर्थ्युपात्तस्य त्यज्यमानद्रव्योद्देश्यत्वाख्यस्य देवतात्वस्य त्यज्यमानद्रव्यत्वरूपहविष्ट्वं विनानुपपत्तेः कपिञ्जलानां च प्रत्येकमेव यागसाधनत्वाख्यहविष्ट्वयोगात् प्रतिसंबन्धितावच्छेदककपिञ्जलत्वावच्छिन्ने प्रत्येकं देवतासंबन्धभेदादेवेत्यर्थः। अनेनैव न्यायेन "सप्तदश मारुतीस्त्रिवृत्सा उपकरोति सप्तदश प्रश्नीरुक्षणस्तान् पर्यग्निकृतानितरा आलभन्ते प्रेतरानुत्सृजन्ति" इत्यत्र च पर्यग्निकरणान्ताङ्गरीतिविधानादेकादशावदानगणप्राप्त्यभावे यागभेदोपपादनं ज्ञेयम्, नतु प्राचीनोक्तरीत्येति सूचयितुं सर्वत्रेत्युक्तम्। यत्तु परस्वद्वाक्ये यथाश्रुतनवमोपान्त्याधिकरणगतशास्त्रदीपिकाग्रन्थस्वारस्यात् प्रकाशकाराणां यागैक्योक्तिः, तद्दूषणं कौस्तुभ एव द्रष्टव्यम्। अतः परस्वद्वाक्ये न्यायसुधाकारोपपादितो यागभेद एव युक्त इति भावः ॥

### ( पूर्वोत्तरकल्पप्रयोजननिरूपणम् )

**प्रयोजनमिति** ॥ एकपशुविस्मरणेन षोडशभिः कृतेऽपि यागे यागस्य जातत्वान्न पुनर्यागकरणं पूर्वपक्षे। सिद्धान्तेतु तत्पशुद्रव्यकयागान्तरानुष्ठानमित्यर्थः। प्रयोजनान्तराणि प्राचीनैर्दर्शितानि कौस्तुभे द्रष्टव्यानि ॥

## ॥ इति सप्तमं सङ्ख्याकृतकर्मभेदाधिकरणम् ॥

## ( ८ अधिकरणम् । )

**संज्ञा च** ॥ ज्योतिष्टोमं प्रकृत्य "अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते"ति श्रुतेषु ज्योतिरादिपदानां गुणविशेषे प्रसिद्ध्यभावात् द्योतनात्मकत्वेन प्रसिद्ध्युपपादने कर्मण्यपि तदापत्तेरेतच्छब्देन च तद्विधाने वाक्यभेदाद्यापत्तेस्तेषां नामत्वं तावदविवादम् । तच्च न प्रकृतस्य यागस्य; ज्योतिष्टोमसंज्ञाविरोधात् संज्ञाकार्यस्य व्यवहारस्यैकेनैव सिद्धेरितरवैयर्थ्याच्च । नच विनिगमकाभावाद्विकल्पः; अथशब्दस्य पूर्वकर्माधिकारविच्छेदकस्य नियामकत्वात् । अतएव "वसन्ते वसन्ते ज्योतिषे"तिवन्नाख्याविकारत्वाशङ्का; तस्याविच्छिन्नेऽधिकारे समाम्नानेन तथाङ्गीकारात् । नचैवमधिकारविच्छेदाभावे उद्भिदादिसंज्ञातो भेदानापत्तिः, ज्योतिष्टोमसंज्ञाया उत्पत्तिशिष्टत्वाभावेन द्वयोरपि विकल्पो वैपरीत्यं वा किं न स्यादिति—वाच्यम्; सोमयागे क्लृप्तप्रवृत्तिनिमित्तकज्योतिष्टोमसंज्ञाव-

---

### ( गुणकृतकर्मभेदाधिकरणात्पूर्वं संज्ञाकृतकर्मभेदाधिकरणप्रवृत्तिबीजसङ्गत्यादिनिरूपणम् )

यद्यपीह षड्विधः कर्मभेदो वक्ष्यते । शब्दान्तरमभ्यासः सङ्ख्या गुणः प्रक्रिया नामधेयमित्यध्यायोपक्रमभाष्ये उद्देशक्रमदर्शनात् सङ्ख्यागुणयोः कर्माङ्गत्वसाम्याच्च सङ्ख्यानन्तरं गुणचिन्ता प्राप्नोति; तथापि गुणादिविचारस्यानेकाधिकरणसाध्यत्वेन बह्वायाससाध्यत्वात्सङ्ख्यावत् संज्ञाया भेदकत्वविचारस्यैकाधिकरणविचारपर्यवसायित्वेनाल्पत्वात् बुद्धिविक्षेपकत्वाभावेनादौ सूत्रकृता निबद्धं संज्ञाविचारं विवक्षुर्भेदविचारेण पादाध्यायसंगतिं, तथा पृथक्त्वनिवेशाख्यहेतुसाम्यात् दृष्टान्तसंगतिं, **अथवा**—सङ्ख्यावत् संज्ञायाः स्वसमानाधिकरणस्वाश्रयप्रतियोगिकभेदव्याप्तत्वरूपपृथक्त्वनिवेशित्वास्वभावान्न भेदकत्वमित्येवं पूर्वपक्षोत्थानेन प्रत्युदाहरणरूपां वाऽनन्तरसङ्गतिं पूर्वपक्षं च स्पष्टत्वादप्रदर्श्यैव यथासूत्रमुदाहरणपूर्वकं सिद्धान्तमेवाह—**ज्योतिष्टोममिति** ॥ "दक्षिणेन यजेते"त्यस्याग्रे "एतेनार्द्धिकामो यजेते"त्यपि श्रुतम् । **अथैष ज्योतिरि**त्यथैष गौरथैष आयुरित्युदाहरणान्तरस्याप्युपलक्षणम् ॥

### ( शब्दान्तराभ्यासगुणप्रकरणान्तरैः कर्मभेदस्य प्रकृतेऽसंभवात्संज्ञयैव तस्योपपादनम् )

तत्रैष ज्योतिरित्यादीन्यस्तीत्यध्याहारेऽपि विभज्यमानसाकाङ्क्षत्वाभावात् त्रीणि वाक्यानि । एतेनेत्यपि "तस्मिन् सीदे"तिवत् चतुर्थं वाक्यम् । यद्यपि भावनामात्रभेदकस्य शब्दान्तरस्यात्र धात्वर्थस्य भावनानवच्छेदकत्वेन न संभवः, नापि विधिपुनःश्रवणरूपाभ्यासस्य, विधेरश्रवणात्, सहस्रदक्षिणादिवाक्ये तत्सत्त्वेऽपि गुणपरत्वेनान्यपरत्वात् । नापि गुणस्य, ज्योतिरादिपदानां गुणे रूढत्वेनाप्रसिद्धेः । नापि प्रकरणान्तरस्य; अनुपादेयगुणाभावात्, ऋद्धिवाक्ये तत्त्वेऽपि एतच्छब्देन पूर्वकर्मपरामर्शेन सन्निध्यभावाच्च, तथापि संज्ञारूपप्रमाणान्तरेण भेदं साधयितुं नामत्वं साधयति—**ज्योतिरादिपदानामिति** ॥

### ( ज्योतिश्शब्दस्य द्युतिधातुकत्वेन द्योतनात्मकत्वस्य कर्मसाधारण्योपपादनम् )

**द्योतनात्मकत्वेनेति** ॥ द्युतिधातोर्द्युतेरिसन्नादेश्च ज इत्यौणादिके इसिन् प्रत्यये कृते आदिभूतदकारस्य जादेशे च कृते ज्योतिरादिशब्दनिष्पत्तेर्द्योतनात्मकत्वेन प्रसिद्धिरित्यर्थः । **कर्मण्यपीति** ॥ स्वफलसाधनत्वेन ज्योतिः शब्दस्य समस्तफलसाधनत्वेन विश्वज्योतिःसर्वज्योतिःपदयोश्च कर्मण्यप्युद्भिच्छब्दस्येव मुख्यार्थतयैव तदापत्तेरित्यर्थः ॥

### ( वाक्यभेदोत्पन्नशिष्टज्योतिरादिगुणतत्प्रख्यन्यायैर्ज्योतिरादिनामत्वोपपादनम् )

**तद्विधान इति** ॥ एतच्छब्देन पूर्वनिर्दिष्टगुणविधाने प्रकृतिज्योतिष्टोमोद्देशेन ज्योतिरादिगुणस्य सहस्रदक्षिणादिगुणस्य च विधाने वाक्यभेदस्यादिपदोपात्तोत्पन्नशिष्टज्योतिरादिगुणनिवेशस्य चापत्तेरित्यर्थः ॥ **अविवादमिति** ॥ एवं गवादिपदानामपि दक्षिणात्वेन सार्वकाम्यवाक्यप्राप्तफलत्वेन च प्राप्तेस्तत्प्रख्यन्यायेन च नामत्वमविवादं ज्ञेयमित्यर्थः ॥

### ( नामैकदेशे नामग्रहणन्यायेन ज्योतिरादिना म्नामभेदकत्वशङ्का )

**ननु** नामत्वेऽपि प्रकरणात् भामा सत्यभामेतिवत् स्वार्थवाचकपदघटितपदवत्त्वसंबन्धेन वसन्तवाक्ये ज्योतिःपदस्येवात्रत्यज्योतिरादिपदानामपि ज्योतिष्टोमनामत्वोपपत्तिः । संभवति च ज्योतीरूपस्तोमसंबन्धेन ज्योतिष्टोमनाम्न इव तादृशस्तोमसंबन्धेनैतेषामपि तन्नामत्वम् । अतः कथं तेनापि भेदसिद्धिरित्यत आह—**तच्चेति** ॥

### ( अथशब्दस्यानन्तर्यपूर्वप्रकृतापेक्षित्वपरत्वनिरासेनाधिकारविच्छेदकत्वेन नामैकदेशन्यायाप्रवृत्तिनिरूपणम् )

**अथशब्दस्येति** ॥ नह्यत्राथशब्दस्यानन्तर्यार्थत्वं शङ्कितुं शक्यम्; आनन्तर्यप्रतियोगिनः कर्मान्तरस्यासत्त्वेन तदर्थकत्वानुपपत्तेः, काम्यानां कर्मणामेकप्रयोगविधिपरिग्रहाभावेन क्रमासंभवस्य पञ्चमे वक्ष्यमाणत्वाच्च, उत्तरकालतामात्रस्य तु प्राप्तत्वेनाथशब्दवैयर्थ्यापत्तेश्च, नापि पूर्वप्रकृतापेक्षित्वपरत्वम्; संहत्य फलसाधनत्वाभावादङ्गाङ्गिभावाभावाच्च तदनपेक्षणात् । अतः परिशेषादथ शब्दानुशासनमित्यादिवदधिकारविच्छेदद्योतनपूर्वकमधिकारान्तरप्रतिपादनार्थत्वमेवेति तस्य नियामकस्य सत्त्वात् न पूर्वप्रकृतयागसंज्ञात्वं विकल्पेनापीत्यर्थः ॥

रुद्धे उद्भिसंज्ञायाः कथमपि निवेशानुपपत्तेस्तस्या भेदकत्वात्। अतएव यत्र न किंचिन्नियामकमस्ति तत्र संकल्पादौ संज्ञयोर्विकल्प एव। प्रकृते तु अथशब्देन विच्छेदाद्भेदकत्वमेव संज्ञायाः; सहस्रदक्षिणेन यजेतेत्येतावतैव प्रकृतयागानुवादेन गुणविध्युपपत्तौ एतच्छब्दान्तस्य ज्योतिरादिवाक्यस्य वैयर्थ्यप्रसङ्गाच्च । अतो द्योतनादियोगेन ज्योतिरादिसंज्ञं कर्मत्रयं सोमयागप्रकृतिकं तत्तद्वाक्यैरुत्पन्नं सहस्रदक्षिणकं "य एतेन ऋद्धिकामो यजेते"ति वाक्येन फले विधीयते इति संज्ञया कर्मभेदः ॥ ८ ॥ **इत्यष्टमं संज्ञाकृतकर्मभेदाधिकरणम् ॥**

**( ९ अधिकरणम् । )**

**गुणश्च** ॥ वैश्वदेव्यामिक्षेत्यत्र द्रव्यदेवताविशिष्टे यागे विहिते तदनुवादेन वाजिभ्यो वाजिनमित्यत्र न गुणमात्र-

---

**( अथशब्दस्य प्रधानकर्मविच्छेदकत्वं नतु प्रयोगविच्छेदकत्वमिति निरूपणम् )**

**एतेन**—अथशब्देन पूर्वसंज्ञावच्छिन्नप्रयोगस्यैवाधिकारविच्छेदात् तदनुरोधेन चैतच्छब्दस्य संज्ञान्तरयुक्तप्रयोगपरामर्शित्वावगतेस्तत्र सहस्रदक्षिणादिव्यवस्थार्थत्वेन संज्ञान्तरसार्थक्यमित्यपि—**अपास्तम्**; कर्मण एव प्रधानत्वेन परस्फूर्तिमत्त्वेनाथशब्देनाधिकारविच्छेदप्रतीतेः । **अतएवेति** ॥ सोमयागाधिकारमध्यवर्तिनीहि संज्ञा तद्विषयिणीति शीघ्रं निश्चीयते, न विच्छिन्नाधिकारिकेत्यर्थः ॥ **कथमपीति** ॥ भामासत्यभामापदन्यायेनापीत्यर्थः ॥

**( ज्योतिष्टोमपदस्य तद्विध्यन्तप्रापकत्वेन सार्थक्यसंभवाद्भेदकत्वमेवेति निरूपणम् )**

**अतएव यत्रेति** ॥ यथा "वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवती"ति वाक्ये वैश्वानरप्रायणीयपदयोः कथमपि न सार्थक्यम्; वैश्वानरदेवस्य ग्रहाम्नानात् तदीयवैश्वानरदेवतया यागेऽपि प्रसङ्गेनोपकारजननान्नामत्वं वैश्वानरपदस्य, प्रायणीयपदस्य प्राथम्यगुणयोगेन नामत्वम्, तत्र विनिगमनाविरहात् सङ्कल्पोल्लेखादौ विकल्प इष्ट एव, ज्योतिष्टोमपदं तु गणत्वसामान्येन प्राप्तद्वादशाहविध्यन्तापोदितज्योतिष्टोमविध्यन्तप्रापकं सन्न व्यर्थमिति न तस्य संकल्पोल्लाखादौ विकल्प इत्यर्थः । तेन यत्र पूर्वस्मिन् कर्मणि एकसंज्ञावरुद्धेऽपि संज्ञान्तरस्य कार्यान्तरकल्पनया सार्थक्यम् यत्र वा विनिगमनाविरहेण द्वयोरपि विकल्पस्तत्र संज्ञायां कर्मभेदकत्वाभावेऽपि यत्र पूर्वकर्मणि संज्ञान्तरवैयर्थ्यं तत्र तेन स्वविषयसिध्यर्थं कर्मान्तरकल्पनमावश्यकमेवेत्याह—**प्रकृते त्विति** ॥ अतोऽथैष ज्योतिरित्यादिषु त्रिषु वाक्येषु त्रीणि कर्माणि तत्तत्संज्ञायुक्तानि विधीयन्ते । तेषां च यागरूपत्वं सादृश्यप्रमाणकातिदेशोत्तरं गुणवाक्ये यजतिनानुवादाद्वा निर्णीयते । तेषां चोत्तरवाक्यद्वय एतच्छब्देनानुवादेन गुणफलविधानम् । एतेनेत्येकवचनं समुदायाभिप्रायेणोपात्तं राजसूयपद इव बहुत्वलक्षणार्थम् ॥

**( विश्वज्योतिरादिवाक्ये प्रयोगाधिकारविच्छेदोपपादनम् )**

विश्वज्योतिः सर्वज्योतिर्वाक्ययोरथशब्दस्तु न पूर्वयागाधिकारविच्छेदार्थः, तथात्वे तस्य फलान्तरकल्पनापत्तेः, अपितु प्रयोगान्तरोत्पत्त्यधिकारार्थ इति सर्वथा सिद्धो भेद इति सिद्धान्तमुपसंहरति—**अत इति** ॥

**( संज्ञायाः गुणशब्दान्तराभ्यां वैषम्यम्, पूर्वोत्तरकल्पप्रयोजननिरूपणं च )**

नचैवं संज्ञाया अपि गुण एवान्तर्भावः शङ्क्यः; गुणस्य निवेशासंभवेन भेदकत्वेऽपि संज्ञायाः पूर्वस्य कर्मणो नियमेन तत्कार्यनैराकाङ्क्ष्यावगमेन स्ववैयर्थ्यभिया भेदकत्वेन च वैषम्यात् । एवं यद्यपि संज्ञा शब्दान्तरम्; तथापि शब्दान्तरे स्वानुरञ्जकधात्वर्थभेदाद्भावनाभेदः, प्रतियोगिभेदादिवाभावभेदः । संज्ञातु पदान्तरत्वान्निष्पन्नरूपाभिधानात् तदनुरक्तभावनानवगतेर्धात्वर्थभेदमात्र एव पर्यवसति तद्भेदात्तु शब्दान्तरन्यायेन भावनाभेद इति वैषम्यं द्रष्टव्यम् । तदुक्तं सन्निधौ त्वविभागादित्यधिकरणान्ते आचार्यैः—"स्वरूपानभिधायित्वात् संज्ञा शब्दान्तरात् पृथक् । व्यासज्यसमवायाच्च सङ्ख्या भिन्ना गुणान्तरात्" इति । प्रयोजनं पूर्वपक्षे सहस्रदक्षिणया विकल्पः । सिद्धान्ते सहस्रदक्षिणाधर्मकं काम्यं यज्ञान्तरमिति स्पष्टत्वान्नोक्तम् ॥

**॥ इति अष्टमं संज्ञाकृतकर्मभेदाधिकरणम् ॥**

---

**( संज्ञाधिकरणेन गुणाधिकरणस्यावसरसंगत्यादिनिरूपणम् )**

पूर्वत्रानिविशमानत्वसाम्येन सन्निहितप्रतियोगिकभेदकत्वेनच प्रकरणान्तरापेक्षया संज्ञाविचारानन्तरं शीघ्रोपस्थितिकतया गुणकृतभेदचिन्तामारभमाणोऽवसराख्यामनन्तरसङ्गतिं तथा पूर्वपक्षं चाशङ्कानिरासव्याजेन सुनिरस्ततया स्पष्टत्वाद् प्रदर्श्योदाहरणप्रदर्शनपूर्वकं सिद्धान्तमेव प्रतिजानीते—**वैश्वदेव्यामिक्षेति** ॥

**( वैश्वदेवीमामिक्षामितिवाक्यस्येव वैश्वदेव्यामिक्षेतिवाक्यस्यापि यागविधायकत्वम् )**

यद्यपि तैत्तिरीये "आग्नेयमष्टाकपालं निर्वपतीत्याद्यानुपूर्व्या वैश्वदेवीमामिक्षामिति पाठात्तत्रच पूर्वतननिर्वपतिपदानुषङ्गेण लक्षणया यागविधानमिति न वैश्वदेव्यामिक्षेत्यनेन द्रव्यदेवताविशिष्टयागविधानम्; तथापि "तप्ते पयसि दध्यानयति सा

विधिः; प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्यभेदापत्तेः। नच—वाजमन्नमामिक्षारूपं विद्यते येषामिति व्युत्पत्त्या विश्वदेवान् तद्विशिष्टयागं वोद्दिश्य वाजिनमात्रस्य विकल्पेन समुच्चयेन वा विधिरस्त्विति—वाच्यम्; वाजिशब्दस्य रूढत्वेन विश्वदेवानुवादानुपपत्तेः, उत्पत्तिशिष्टद्रव्यावरोधे द्रव्यान्तरस्य निवेशानुपपत्तेश्च। एतेन आमिक्षाऽनुनिष्पन्नवाजिनसंबन्धप्राप्त्या वाजिनपदं आमिक्षायागनामधेयमङ्गीकृत्य तदुद्देशेन वाजिदेवताविधिरित्यपि—अपास्तम्; उत्पत्तिशिष्टदेवतावरोधे देवतान्तरस्य निवेशानुपपत्तेः। किंचा-

वैश्वदेव्यामिक्षे"ति वाक्यस्यापि मीमांसकैर्लिखितत्वादिहापि भाष्यकारादिभिस्तथैवोदाहृतत्वात् तदभिप्रायेण यजेतेत्यध्याहारेण विभक्तिविपरिणामेन वैश्वदेव्यामिक्षया यजेतेति कल्पितविधिना विशिष्टविधानं नानुपपन्नमिति ज्ञेयम्। वाजिनवाक्यमात्रस्य उदाहरणत्वेऽपि एतत्प्रतियोगिकमिह कर्मणो भेदं ज्ञापयितुमेतदुपादानम्॥

( वाक्यभेदापादकगुणस्य सदृष्टान्तं कर्मभेदकत्वोपपादनम् )

**वाक्यभेदापत्तेरिति**॥ यथा पौर्णमास्यधिकरणे प्रसङ्गादुपपादितेन वाक्यभेदापादकगुणेन कर्मान्तरत्वस्यैवापत्तेर्न द्रव्यदेवतारूपगुणमात्रविधिरित्यर्थः।

( विश्वदेवविशिष्टयोगोद्देश्यत्वे विशिष्टोद्देशनिबन्धनवाक्यभेदपरिहारः। वाजिपदार्थो विश्वदेवा एव नाश्व्यादिरितिच निरूपणम् )

**यागं वेति**॥ वाजिभ्यो वाजिनेन यजेतेति श्रुतानुमितैकदेशनिष्पन्ने वाक्ये यागस्योपादानात् तत्रच विश्वदेवदेवताकयागस्यैवोद्देश्यत्वे वाजिभ्य इतिपदं तात्पर्यग्राहकमिति विशिष्टोद्देशे वाक्यभेदानापत्तेस्तद्विशिष्टं यागं वेत्युक्तम्। येषामिति व्युत्पत्तिप्रदर्शनेन सर्वनाम्नां सन्निहितपरामर्शित्वसंभवेऽऽसन्निहितपरामर्शकत्वायोगादेकस्याश्व्यादेर्बहुवचनबलात् मरुतां वा न वाजिपदेन ग्रहणमिति सूचितम्॥ **समुच्चयेन वेति**॥ यदि तात्पर्यग्राहके वाजिपदे वाजिरूपाया आमिक्षाया विशेषणत्वम्, ततः समुच्चयः। यद्युपलक्षणत्वं तत एकार्थत्वाद्विकल्प इत्यर्थः॥

( आमिक्षाया उत्पत्तिशिष्टत्वात्, कर्मभेदेनापि वाजिनवाक्यसार्थक्याय कर्मभेदोपपादनम् )

**ननु**—आमिक्षावद्विश्वदेवदेवताकयागोद्देशेन वाजिनविधानस्य तस्मिन्नेव यागे वाजिनमिति विधिनैवाङ्गीकारेणोत्पत्तिशिष्टत्वेन प्राबल्यमामिक्षाया इत्याह—**किंचेति**॥ यागकल्पकस्य द्रव्यदेवतासंबन्धस्य आमिक्षायामेकपदोपादानात्प्रतीतेर्भिन्नपदोपात्तदेवतासंबन्धात् वाजिनादामिक्षायाः प्राबल्येन तेनैव निराकाङ्क्षीकृते यागे न वाजिनस्य निवेशस्संभवति। नह्यत्र तस्मिन्नेव यागे वाजिनमित्यत्र आमिक्षायागानुवादाभावे वैयर्थ्यमापद्यते; कर्मान्तरविधानेनापि चारितार्थ्यादिति भावः॥

मिक्षायाः पार्ष्ठिको देवतासंबन्धः पदश्रुत्या, वाजिनस्य तु वाक्येनेति दौर्बल्यम्। तद्धितस्य हि देवतात्वविशिष्टे द्रव्यविशेषे शक्तिः, आमिक्षापदंच तात्पर्यग्राहकमिति प्राञ्चः।

**वस्तुतस्तु**—आमिक्षादौ द्रव्ये देवतात्वे च भिन्ना शक्तिः। निरूपकत्वंतु संसर्गः, देवतात्व एव वा शक्तिर्द्रव्ये लक्षणा, द्रव्यविशेषे एव वा शक्तिर्देवतात्वे लक्षणा, द्रव्यसामान्य एव वा शक्तिरामिक्षापदेन तु विशेषनिर्णयः इत्येते पक्षाः कौस्तुभ एवोपपादिताः। सर्वथा आमिक्षाद्रव्यस्य देवतासंबन्धः पदश्रुत्येति सिद्धम्।

( देवतात्वविशिष्टद्रव्यविशेष एव तद्धितार्थ इति प्राचीनमतनिरूपणम् )

**तद्धितस्यहीति**॥ तद्धितपदश्रवणे देवतात्वविशिष्टद्रव्यबोधावश्यंभावात् सास्य देवतेत्यनुशासनाच्च देवतात्वविशिष्टे द्रव्ये तद्धितस्य शक्तिः। अस्मिंश्चानुशासने सेतिपदेन विश्वदेवदेवताऽनुशिष्टापि न तद्धितार्थः; विश्वदेवप्रातिपदिकादेव तद्बोधोपपत्तेः। देवतात्वमात्रबोधकत्वेच आमिक्षापदसामानाधिकरण्यानुपपत्तेरस्येति सर्वनामार्थबुद्धिस्थद्रव्यबोधकत्वमप्यावश्यकम्। **अतएव**—सास्य देवतेति सर्वनामार्थत्वानुशासनवैयर्थ्यापत्तेरेव नागृहीतविशेषणन्यायेन देवतात्व एव शक्तिर्द्रव्यस्य व्यक्तिन्यायेन बोध इत्यपि—**अपास्तम्**; तथात्वे संप्रदाने चतुर्थीतिवत् देवतायां तद्धित इत्यनुशासनापत्तेः। **अतएव**—देवतात्वस्य प्रत्ययार्थद्रव्ये प्रकृत्यर्थसंसर्गविधया भानमित्यपि—**अपास्तम्**, अतो देवतात्वविशिष्टे सर्वनामार्थे द्रव्ये शक्तिः। प्रकृत्यर्थस्य आधेयतासंबन्धेन देवतात्वे तस्यच निरूप्यत्वसंबन्धेन सर्वनामार्थे वैशिष्ट्यमिति देवतात्वस्य यद्यपि प्रथमबोधे वैशिष्ट्यं नमिक्षापदोपात्तार्थे; तथाप्यामिक्षापदस्य द्रव्यविशेषतात्पर्यग्राहकत्वात् सर्वनामार्थो द्रव्यमामिक्षाभिन्नमिति पार्ष्ठिकबोधस्वीकारादामिक्षाया देवतात्वसंबन्धः पदश्रुत्या। चतुर्थ्यर्थो यद्यपि लक्षणया देवतात्वं भवेत्; तथापि तावन्मात्रमेव साऽभिधत्ते, नतु वाजिनसंबन्धित्वेन, तत्तु वाजिनमिति पदान्तरादेवेति समभिव्याहाररूपवाक्यात् पूर्वमेव देवतात्वप्रतिसंबन्धित्वेन शीघ्रोपस्थितिकया आमिक्षया निराकाङ्क्षत्वान्न वाजिनस्य निवेशः संभवतीत्यर्थः॥

( पौर्णमास्यधिकरणसिद्धान्तानुपपत्त्योक्तप्राचीनमतनिरासः )

अस्मिंश्च प्राचीनमते देवतात्वस्य द्रव्ये वैशिष्ट्यव्युत्पत्तेः पौर्णमास्यधिकरणे विद्वद्वाक्यविहितकर्मानुवादेनाग्नेयवाक्ये रूपविधानस्य वाक्यभेदादिना दूषितस्यासङ्गतत्वापत्तेः पृथगेव देवतात्वे द्रव्येच तस्य शक्तिः। तयोश्च कारकत्वात् साक्षादेव भावनान्वयः, पार्ष्ठिकस्तु देवतात्वस्य द्रव्येण द्रव्यस्यच यागेन

किंच विश्वेषां देवानां तद्धितेन देवतात्वं शक्त्योक्तम्; अनुशासनस्वरवात्, वाजिनां तु संप्रदानत्ववाचिन्या चतुर्थ्या सांप्रतिकलक्षणया; त्यज्यमानद्रव्योद्देश्यत्वविशिष्टप्रतिग्रहीतृत्वरूपसंप्रदानत्वैकदेशत्वाद्देवतात्वस्य, तस्याः प्रतिग्रहीतृत्वाभावात्। निरुक्तधर्मसमनियतसंप्रदानत्वव्यापकदेवतात्वरूपाखण्डोपाधिस्वीकारे तु सुतरां लक्षणा। अतोऽपि दुर्बलत्वम्। तस्माद्वाजिनवाक्येऽपि गुणाद्द्रव्यदेवताविशिष्टं कर्मान्तरमेव वाजिनप्रतिपत्त्यर्थमामिक्षायागाङ्गत्वेन विधीयते। गुणस्य च पूर्वत्रानिविशमानत्वेन भेदकता। सा च क्वचिद्वाक्यभेदापत्त्या क्वचित्प्रबलगुणावरोधात् क्वचिदेकप्रसरताभङ्गादित्यनेकप्रकारिकेति ध्येयम् ॥९॥ **इति नवमं गुणकृतकर्मभेदाधिकरणम् ॥**

**( १० अधिकरणम् । )**

**अगुणे तु** ॥ यत्र तु नोत्पत्तौ गुणश्रवणं; यथाऽग्निहोत्रं जुहोतीति, तत्र तदनुवादेन दध्ना जुहोति, पयसा जुहोतीत्यादिभिः सर्वैरेव गुणविधानं विकल्पेन; तत्र खले कपोतन्यायेन सर्वेषामेव युगपत्प्रवृत्तेरेकावरुद्धत्वाभावादिति प्रत्युदाहरणमात्रम् ॥ १० ॥ ॥ २७ ॥ **इति दशमं गुणात्कर्मभेदापवादाधिकरणम् ॥**

**( ११ अधिकरणम् । )**

**फलश्रुतेः** ॥ अग्निहोत्रं प्रकृत्य "दध्नेन्द्रियकामस्य जुहुयादिति श्रुते, स एव होमो दधिविशिष्टः फलोद्देशेन विधीयते। नच प्राप्तकर्मानुवादेन गुणसंबन्धः फलसंबन्धश्चेति वाक्यभेदः; प्राप्तानामपि कर्मणां राजकर्तृविशिष्टानां फलो-

---

संबन्धो युक्त इत्यभिप्रेत्य निष्कृष्टानि पक्षान्तराण्याह—**वस्तुतस्त्विति** ॥

**( आमिक्षानुनिष्पन्नवाजिनप्रतिपत्त्यर्थयागपरत्वं वाजिनवाक्यस्येत्युपपादनम् )**

**वाजिनप्रतिपत्त्यर्थमिति** ॥ आमिक्षानुनिष्पन्नजलरूपस्य वाजिनस्य प्रतिपत्त्याकाङ्क्षयाऽऽकाङ्क्षितविधित्वलाभात् प्रतिपत्त्यर्थं यागान्तरं विधीयत इत्यर्थः ॥

**( गुणस्य पूर्वत्रानिविशमानत्वेन वाक्यभेदापत्त्या च भेदकत्वमिति शास्त्रदीपिकाया एकप्रसरताभङ्गापत्त्युपलक्षणत्वम् )**

**यत्तु शास्त्रदीपिकायां**—उत्पत्तिशिष्टगुणावरोधेन स्वनिवेशमलभमानत्वेन क्वचित् गुणस्य भेदकत्वम्, क्वचित्तु वाक्यभेदापत्त्येति द्वैविध्यं गुणस्य भेदकत्वे—**उक्तं** तदुपलक्षणम्; तृतीयप्रकारस्यापि संभवादिति सूचयितुं प्रकारत्रयसाधारण्येन गुणस्य भेदकत्वे अनुगतरूपमाह—**गुणस्य चेति—एकप्रसरताभङ्गेति** ॥ वषट्कर्तृवाक्य इति शेषः ॥

**( वाससा क्रीणातीत्यादिषु न गुणात्क्रयभेद इति न्यायसुधाकारमतनिराससूचनम् )**

**यत्तु**—अत्र न्यायसुधाकृताऽरुणावाक्येऽनेकगुणोपादानेन विशिष्टक्रयविध्यवश्यंभावेन तेन विहिते क्रये उत्पत्तिशिष्टैकहायन्यादिगुणावरोधेऽपि "वाससा क्रीणातीत्यादिभिर्विहितानामुत्पन्नशिष्टानामपि वासःप्रभृतिद्रव्याणां विक्रेत्रानतिरूपकार्यभेदान्निवेशसंभवान्न वासःप्रभृतिवाक्येषु गुणात् क्रियान्तरविधानमित्युक्तम्, तद्दूषणं कौस्तुभे द्रष्टव्यम्। अरुणाधिकरणे चेहापि वक्ष्यते विस्तरभयान्नोच्यते ॥

**( पूर्वोत्तरकल्पप्रयोजनम् )**

प्रयोजनमामिक्षावाजिनाभ्यामथवैकतरेण वाऽऽमिक्षायागानुष्ठानं पूर्वपक्षे। सिद्धान्ते तु केवलयाऽऽमिक्षया तु वैश्वदेवयागः। वाजिनेन च यागान्तरानुष्ठानमिति स्पष्टत्वान्नोक्तम् ॥

**॥ इति नवमं गुणकृतकर्मभेदाधिकरणम् ॥**

स्पष्टार्थमेतत् ॥

**॥ इति दशमं गुणात्कर्मभेदापवादाधिकरणम् ॥**

**( प्रपूर्वाधिकरणेनापवादिकसङ्गतिनिरूपणम् )**

प्रपूर्वाधिकरणे वाक्यभेदापादकस्य गुणस्य भेदकत्वोक्तेरिहापवादकरणादापवादकीमनन्तरसङ्गतिं स्पष्टत्वादप्रदर्श्योदाहरणपूर्वकं पक्षद्वयेन पूर्वपक्षमाह—**अग्निहोत्रमिति** ॥

**( दध्ना जुहोतीति दध्नः प्राप्तावपीन्द्रियकामप्रयोगे नियमेन प्राप्त्यसंभवाद्गुणफलसंबन्धकथनम् )**

प्राचीनैरनुक्तमपीमं पक्षं युक्तिविभवादुपपादयति—**स एव होम इति** ॥ द्वितीयं पक्षमाशङ्क्य निराकरोति—**नचेति** ॥ यद्यपि गुणस्य दध्ना जुहोतीत्यनेनैव प्राप्तत्वात् तद्वाचकपदस्यानुवादत्वेन नामधेयत्वेन वोपपत्तेः केवलफलसंबन्धमात्रकरणाद्वाक्यभेदः सुपरिहरः; तथाप्यग्निहोत्रप्रयोगे द्रव्यान्तराणामपि विहितत्वेन प्राप्तेरिन्द्रियकामप्रयोगे नियमेन प्राप्त्यभावात् पाक्षिकानुवादत्वनामत्वयोरसंभवेन तद्विधानस्यावश्यकत्वात् वाक्यभेदं दुष्परिहरं मत्वा प्रकारान्तरेण परिहरति—**प्राप्तानामपीति** ॥ अनुमत्यादीष्टीनामहादिपशूनां पवित्रादिसोमयागानां प्रातिस्विकतत्तदुत्पत्तिवाक्यैर्विहितानां राजसूयवाक्येन फलसंबन्धस्य राजकर्तृसंबन्धस्य च विधाने प्राप्तेऽपि वाक्यभेदः यथाच कर्तुः प्रयोगाङ्गत्वाद्वाक्यान्तरेण राजसूयप्रयोगाविधानात् प्रयोगस्य चोत्पत्तिवत् क्रियाविषयत्वात् कर्तृविशिष्टराजसूयप्रयोगभावनायाः फलोद्देशेन विधा-

द्देशेन राजसूयवाक्ये विधानवदिहापि तदुपपत्तेरिति प्रथमः पक्षः।

द्वितीयस्तु नात्र राजसूयन्यायः। कर्तुर्हि प्रयोगान्वयित्वात् फलस्य च विनियोगान्वयित्वादुत्पन्नस्यापि कर्मणः प्रयोगविधौ फलविशिष्टविनियोगस्य कर्तुश्च वैशिष्ट्योपपत्तिः, प्रकृते तु दध्न उत्पत्त्यन्वयित्वेन प्राप्तोत्पत्त्यनुवादेन गुणविधिः फलविशिष्टविनियोगविधिश्चेति वैशिष्ट्याभावाद्वाक्यभेदः। अतो गुणात् कर्मभेदः। दधिविशिष्टं च तत् फलोद्देशेन विधीयते, न दधिमात्रम्; भावार्थाधिकरणविरोधापत्तेः। सत्यपि दर्विहोमत्वे दधिद्रव्यकहोमत्वसादृश्याच्च अग्निहोत्रहोमातिदेशेन रूपलाभः।

सिद्धान्तस्तु यत्र द्वयोरपि धात्वर्थगुणयोरप्राप्तिः सम्भवत्प्राप्तिः प्राप्तिरेव वा धात्वर्थस्यैव वा अप्राप्तिः, यथा "सोमेन यजेत" "उरुप्रथा उरुप्रथस्वेति पुरोडाशं प्रथयति" "ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यः कामयेत यथा पूर्वं प्रजाः कल्पेरन्" "अग्निहोत्रं जुहोती"त्यादौ, तत्र भावार्थाधिकरणन्यायः, यत्रतु गुणस्यैवाप्राप्तत्वाद्विधेयत्वं, तत्र तस्यैव फलसम्बन्धः। न च दध्नोऽपि नियता प्राप्तिः, अपि तु विकल्पेन। अतः पाक्षिकानुवादत्वपरिहाराय तस्यैव वि-

---

नमवेष्ट्यधिकरणदर्शितन्यायसुधोक्तरीत्याऽङ्गीकृत्य परिह्रियते, एवमिहापि तत्परिहारः सुलभ इत्यर्थः॥

## (राजसूयवाक्ये इव प्रकृते न विशिष्टगुणकर्मणः फलसंबन्ध इति पक्षान्तरेण पूर्वपक्षोपपादनम्)

द्रव्यदेवतादीनामुत्पत्तिपरिचायकत्वादुत्पत्तावन्वयस्य फलादीनामङ्गितापरिचायकत्वादङ्गाङ्गितासंवन्धबोधकरूपविनियोगविध्यन्वयस्य कर्तृदेशकालादीनां कर्तव्यतापरिचायकत्वात् कर्तव्यताबोधकप्रयोगविध्यन्वयित्वस्य चैकादशे वक्ष्यमाणत्वात् राजसूयवाक्ये उत्पन्नानामपि कर्मणां तत्तद्देशकालविधिषु दैशिककालिकप्रयोगाणां प्राप्तावप्यप्राप्तकर्तृसंबन्धितया प्रयोगविधौ फलविशिष्टविनियोगस्य कर्तुश्चान्वयोपपत्तिः, प्रकृते तु विनियोगविशिष्टप्रयोगान्वयिगुणाभावेन तद्विशिष्टकर्मप्रयोगविनियोगयोरसंभवात्तदनुरोधेन कर्मोत्पत्त्यन्तरस्याऽऽवश्यकत्वादन्यथोत्पत्त्यनुवादेन दध्नः इन्द्रियोद्देशेन होमविनियोगस्यच विधौ वाक्यभेदापत्तेरपरिहारात् कर्मान्तरत्वमेव युक्तमित्यभिप्रेत्य द्वितीयं पक्षमाह—**द्वितीयस्त्विति**॥

## (दध्नः फलसंबन्ध इति सिद्धान्तस्य भावार्थाधिकरणन्यायविरोधेन निरासः)

सिद्धान्ते होमाश्रितस्य दध्नः फलसंबन्धाङ्गीकारं दूषयति—**न दधिमात्रमिति**॥ भावार्थाधिकरणे उपपदार्थस्य फलभावनाकरणत्वनिराकरणेन धात्वर्थकरणत्वस्य स्थापनात्तेन विरोधापत्तेरित्यर्थः। रूपाभावात् कर्मान्तरविध्यनुपपत्तिं परिहरति—**सत्यपीति**॥ सत्यपि दर्विहोमत्वे आकाङ्क्षावशेन दधिद्रव्यकत्वसादृश्येनाग्निहोत्रधर्मातिदेशः। नहि दर्विहोमानामपूर्वत्वमिति राजाज्ञा। कृत्स्नविधानत्वात्प्रकृतिविशेषनिर्णयाभावाच्च तदिति ह्यष्टमे वक्ष्यते। नचात्र तद्द्वयमप्यस्ति; अतो रूपलाभाद्युक्तं कर्मान्तरत्वमित्यर्थः॥

## (भावार्थाधिकरणविषयविवेचनपूर्वकं दध्नेन्द्रियकामस्येतिवाक्ये तदप्रवृत्त्या दधिरूपगुणविधानोपपादनम्)

**यत्रेति**॥ सोमेन यजेतेत्यत्रोभयोरप्यप्राप्तिः, उरुप्रथेतिवाक्ये प्रथनस्य पुरोडाशत्वान्यथानुपपत्त्या मन्त्रस्यच लिङ्गादर्थप्राप्त एव तस्मिन् प्राप्तिरित्युभयोः संभवत्प्राप्तिः। ऐन्द्रवायववाक्ये द्वयोर्नियता प्राप्तिः। अग्निहोत्रवाक्ये धात्वर्थस्यैवाप्राप्तिः। तत्र भावार्थाधिकरणन्यायेन धात्वर्थस्यैव विधानम्। यत्रतु धात्वर्थप्राप्तौ धात्वर्थस्यापि विधाने गौरवापत्तेर्गुणस्यैवाप्राप्तत्वात् विधानम्, तत्र तस्यैव विधेयत्वात् तृतीयान्तत्वेन निर्देशाच्च फलभावनां प्रति स्वनिरूपकफलोद्देश्यकत्वरूपं करणत्वम्। नच दधिपयसोस्तत्प्रख्यन्यायेन नामत्वम्; येनोपपदार्थविधानं न संभाव्येत, फले गुणविधित्वेनाप्युपपत्तौ निरर्थप्रायनामत्वकल्पनस्यायुक्तत्वादित्यर्थः॥ **पाक्षिकानुवादत्वेति**॥

## (ऐन्द्रवायवाग्रानित्यत्र पाक्षिकानुवादत्वेऽपि दधिवाक्ये न तत्संभव इत्युपपादनम्)

नचैन्द्रवायवाग्रानितिपदस्य शुक्राग्रतया विकल्पात् पाक्षिकानुवादत्ववत् इहापि तदङ्गीकारे न दोषः; पाक्षिकानुवादत्वसाम्येऽपि ऐन्द्रवायवाग्रतायाः फलसंबन्धे तस्याः काम्यत्वेन बृहत्सामत्वपक्षेऽपि प्राप्त्यापत्तेर्यदि रथन्तरसामेत्येतद्वाक्यगतयदिरथन्तरसामपदाभ्यामैन्द्रवायवाग्रतापदस्य पाक्षिकानुवादत्वस्वीकारेऽपीह दधिपदे तत्स्वीकारे प्रमाणाभावेन विशिष्टविधिगौरवपरिजिहीर्षया च गुणमात्रविधानस्यैव युक्तत्वेन वैषम्यादित्यर्थः॥

## (सिद्धस्य दध्नो होमाश्रितदधिकरणकभावनान्तरपरत्वमेवेन्द्रियकामवाक्यस्येत्याद्युपपादनम्)

तत्रच दधित्वजातेस्तल्लक्ष्यव्यक्तेर्वा फलार्थं विधानेऽपि तस्य सिद्धरूपत्वेन यागादिवत् क्रियान्तरानपेक्षस्य फलजनकत्वं न तावत् संभवति। तथात्वे विधिं विनापि फलकामनायां सत्यां करणसत्त्वेन फलोत्पत्त्युपपत्तेः करणविधिवैयर्थ्यापत्तेः। नहि कार्यकारणभावो विधिना जन्यते, अपितु बोध्यते। नच तद्बोधस्य यागादाविव किंचित् फलमस्ति; तमन्तरेणापि कारणस्य सत्त्वेन फलोपपत्तेः। अतएवेतिकर्तव्यताविधय एव परमुपयुज्यन्ताम्, नतु दधिरूपकारणविधिरपि।

धेयत्वात् फलसम्बन्धः । करणीभूतगुणसत्त्वेन वचनं विनाऽपि फलोत्पत्तिसम्भवाद्वचनवैयर्थ्यप्रसङ्गेन स्वकृतिसाध्यधात्वर्थस्य दृष्टविधया गुणसम्बन्धिन आश्रयस्यापेक्षायां प्रकरणाद्धोमस्याश्रयत्वलाभाज्जुहोतिः साधुत्वार्थमनुवादः । दधिकरणकं भावनान्तरमेव तु फलोद्देशेन विधीयते; प्राप्तभावनानुवादेनोभयकरणे वाक्यभेदात् ।

केचित्तु—करणत्वविशिष्टं दधि, दधिकरणत्वं वा तृतीयोपात्तं फलकरणत्वेन विधीयते, तृतीयार्थकरणत्वस्य निरूपकापेक्षैव चाश्रयापेक्षेति—आहुः तन्न, यागवैषम्ये प्रवाक्यभेदापादकगुणाद्भेदस्यावश्यकत्वम् । अत एव भावनान्तरस्याप्यवच्छेदकीभूतधात्वर्थविशेषापेक्षायां सन्निधिप्राप्ते होम एवावच्छेदकत्वेन संबध्यमानेऽपि न तदंशेऽपि विधेयत्वम्; अन्यतः प्राप्तत्वात्, किंतु होमावच्छिन्नं प्रत्ययोपात्तं भावनान्तरमेव दधिकरणकं विधीयत इत्यर्थः ॥

---

अतो विधिसार्थक्याय दृष्टविधया कृतिसाध्यधात्वर्थविशेषरूपाश्रयसंबन्धित्वापेक्षायां योग्यताबलात् स्वसाध्यभोजनहोमादिरूपानेकधात्वर्थप्रसक्तावपि प्रकरणेनाधिकाराख्येन विधिकल्पनद्वारा होमस्यैवोपनयात् न तेषामाश्रयत्वप्रसक्तिः । अतएव कल्पितेनापि विधिना न दधिहोमयोरङ्गाङ्गिभावो बोध्यते; गौरवात्, क्लृप्तप्रयोजनवत्त्वाच, अपितु लोकसिद्धकार्यकारणभावनियममात्रम्-दध्ना होमः कर्तव्य इति । नच—दधिजन्यहोमकर्तव्यताया अपि दध्ना जुहोतीत्यनेनैव सिद्धेरिन्द्रियकामवाक्यवैयर्थ्यमिति—वाच्यम्; तद्विध्यभावे दधिविशिष्टहोमानुष्ठानस्येन्द्रियरूपफलोद्देश्यताया असिद्धेरिन्द्रियकामनाया अधिकारिविशेषणत्वज्ञापकत्वेन तत्सार्थक्यात् । अतश्च शुद्धदधिविधिना तस्य क्रत्वङ्गत्वबोधनेऽपि अनेन तस्य फलार्थतया विधानात् होमाश्रितदधिकरणकं भावनान्तरमेव विधीयते । धातुस्तु प्रकरणप्राप्ताश्रयसंबन्धानुवादकः साधुत्वमात्रार्थ इत्यभिप्रेत्याह—**करणीभूतेति** ॥

**( ज्योतिष्टोमस्य पशुकाममुक्थ्यं गृह्णीयादित्यादीनामाश्रयत्वेनान्वयनिरूपणम् )**

अत्रच गुणस्य सिद्धरूपस्य कृतिसाध्यधात्वर्थोपक्षिप्तत्वेनाश्रयतया होमान्वयोपपादनमुत्सर्गमात्रेण ज्ञेयम् । "पशुकाम उक्थ्यं गृह्णीयादित्यादौ समाप्तिरूपसंस्थादिगुणस्य साक्षादेव कृतिसाध्यत्वात् कृतोराश्रयविषयापेक्षयाऽश्रयत्वानुपपत्तेः; अतस्तत्र समाप्तेः ससंबन्धिकत्वेनैवापेक्षया ज्योतिष्टोमस्याश्रयत्वमिति ध्येयम् । एवंच भावनायाः करणाकाङ्क्षयाऽन्वितस्यापि दध्नः करणत्वं यावदाश्रयान्वयं न निर्वहतीत्येवं करणाकाङ्क्षयैवाश्रयग्रहणम्, नत्वाश्रयाकाङ्क्षा चतुर्थीति भावः ॥

**( फलस्य विजातीययत्नजन्यत्वसिद्ध्यर्थं तत्संबन्धस्याप्यावश्यकत्वेन वाक्यभेदेन भावनाभेदकथनम् )**

यत्तु अत्र भवदेवेन धात्वर्थवत् भावनाया अपि प्रत्यभिज्ञानस्य तुल्यत्वात् न भावनाभेदे प्रमाणम् । नच प्राप्तभावनानुवादेन गुणसंबन्धस्य फलसंबन्धस्यच विधाने वाक्यभेदापत्तेर्गुणादेव भेदो भावनायाः, फलसंबन्धस्य रागतः प्राप्तत्वेनाविधेयत्वादित्युक्तं, तन्निरस्यति—**प्राप्तभावनेति** ॥ इन्द्रियाख्यफलस्य जन्यत्वेन व्यापारमात्रजन्यत्वावगमेऽपि लोकाद्विजातीययत्नजन्यत्वानवगमात् विशेषतश्चाग्निहोत्रहोमानुकूले यत्ने स्वर्गजनकतयाऽवगते वाक्येनैव विधेयत्वावश्यंभावे

**( दधिकरणत्वस्य करणीभूतदध्नो वा करणत्वेन भावनान्वय इति पार्थसारथिमतनिरूपणम् )**

एवं तावद्दधिवृत्तिकरणतेन्द्रियनिरूपिता, तस्यच दध्यादिरूपस्य गुणस्य स्ववृत्तिकरणतासंपादनाय या कृतिसाध्यधात्वर्थविशेषापेक्षा, सैव आश्रयाकाङ्क्षा । तयाच होमस्यान्वय इति स्वमतमभिधाय पार्थसारथ्यादिभिः तृतीयोपात्तं करणत्वं करणतासंबन्धेनेन्द्रियभावनान्वयीति दध्नो धर्मित्वेन प्राधान्यात् करणताशक्तिमतो दध्नः करणत्वम्, **अथवा**—प्रकृत्यर्थापेक्षया प्रत्ययार्थप्राधान्यात् दधिकरणत्वस्यैव वा करणत्वम् । द्वितीयकरणत्वस्यतु समभिव्याहारगम्यत्वात् संसर्गमर्यादया भानमङ्गीकृत्य तृतीयोपात्तदधिकरणत्वस्य निरूपकापेक्षायां प्रतिसंबन्धिविधयैव प्राकरणिकाश्रयलाभ इत्युक्तम् । तदुपपादनपूर्वकं निरस्यति—**केचित्त्विति** ॥

**( यागस्य यथा करणत्वं नतु यागकरणत्वस्य करणत्वं तथा प्रकृतेऽपीति पूर्वतनमतनिरासः )**

**यागवैषम्य इति** ॥ "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत" इत्यनुशासनाद्यागगतकर्मत्वकरणत्वयोरपि पदार्थविधया भानस्य भावार्थाधिकरणे व्युत्पादितत्वात् तत्रापि यागकरणत्वस्यैव करणत्वापत्तेर्वैषम्ये प्रमाणाभावात् । तत्रच निरूपकतासंसर्गापेक्षया करणतासंसर्गस्य गुरुभूतत्वेन परिहार इहापि तत्परिहारोपपत्तेरयुक्तः । यद्यपि दधिकरणत्वनिरूपको होम एव शब्दादानीयते; तथापीन्द्रियपदवैयर्थ्यानुपपत्त्या होमद्वारा पारंपरिकमिन्द्रियनिरूपितमिति स्वीकारे न कश्चिद्दोष इत्यर्थः ॥

**( पार्थसारथीयाश्रयत्वनिर्वचननिरासपूर्वकं मन्थ्यग्रताजन्यग्रहणसाधारणमदृष्टाद्वारकसंबन्धेन गुणविशेषावच्छिन्नत्वमाश्रयत्वमिति निर्वचनम् )**

अत्रच यत्र विधीयमानो गुणः कारकतामापद्यते, स आश्रय इत्याद्यौदुम्बराधिकरणशास्त्रदीपिकाग्रन्थस्वारस्येन विधीयमानगुणजन्यत्वमाश्रयलक्षणं कुर्वन्ति, तन्मन्थ्यग्रानभिचर-

माणाभावात्। सर्वथा सिद्धो गुणफलसम्बन्धः। प्रयोजनं दध्नो न प्रतिनिधिरुल्लेखविशेषो वा सिद्धान्ते द्रष्टव्यम्॥११॥

इत्येकादशं गुणकामाधिकरणम्॥

(१२ अधिकरणम्।)

समेषु॥ "त्रिवृदग्निष्टुदग्निष्टोम" इत्यनेन विहितस्याग्निष्टुद्यागस्य फलसम्बन्धे "तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेते"त्यनेन कृते पश्चादाम्नातम्। "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते"ति।

---

न्नित्यादिगुणफलविधौ ग्रहणानां मन्थ्यग्रताजन्यत्वादर्शनादयुक्तम्, किन्तु अदृष्टाद्वारकसंबन्धेन गुणविशेषावच्छिन्नत्वमेवाश्रयत्वमिति कौस्तुभे द्रष्टव्यम्।

## (प्राचीनाभिमतसिद्धान्तप्रयोजननिरासपूर्वकं पूर्वोत्तरकल्पप्रयोजननिरूपणम्)

**प्रयोजनमिति**॥ आद्ये पक्षे आरम्भोत्तरं दध्यपचारे प्रक्रान्तसमापनानुरोधेन प्रतिनिध्युपादानम्। ततः प्राक् दध्यभावे अनारम्भ एव। द्वितीये यद्यपि "एतद्यज्ञस्य छिद्यते यदन्यस्य तन्त्रे प्रतते अन्यस्य तन्त्रं प्रतायते" इति निषेधादेकप्रयोगमध्येऽपरस्य काम्यस्य प्रयोगासंभवादग्निहोत्राद्बहिरनियतकालो दधिहोमः सकृदेव दर्विहोमत्वादपूर्वः कर्तव्य इति प्रयोजनमुक्तं प्राचीनैः; तथापि दर्विहोमत्वेऽपि अग्निहोत्रधर्मातिदेशस्य पूर्वपक्षे स्थापितत्वादग्निहोत्रकाल एवानुष्ठानस्य तन्त्रेण प्राप्तौ तदीयप्रयोगाद्बहिरनुष्ठानाप्रसक्तेरयुक्तमिति संकल्पादौ तत्तत्फलार्थं कर्मद्वयमपि तन्त्रेण करिष्य इत्युल्लेखप्रयोजनं कौस्तुभोक्तं द्रष्टव्यमिति विशेषसिद्धान्तपदयोरुपादानाद्व्यतिरेकेण सूचितम्॥

## (गुणफलविधिस्थले आश्रयस्यादृष्टार्थत्वेऽपूर्वभेदोपीतरथा तदैक्यमिति निरूपणम्)

अत्रच दधिकरणकेन्द्रियकर्मकभावनाभेदात् गुणजन्यमपूर्वमेकम्। स्वर्गप्रयुक्तस्यैव होमस्याश्रयत्वात् होमजन्यस्वर्गानुकूलमपरमित्यपूर्वस्यापि भेदः। यत्रतु प्रणयनादेर्दृष्टविधयैवोत्तरदेशप्राप्तिरूपस्वकार्ये उपयोगस्तत्र गुणजन्यमेवापूर्वमिति॥ अत एव होमस्यापि दधिनिष्ठकरणतासंपादकत्वेनापूर्वाजन्यत्वान्नैवेन्द्रियानुकूलं होमजन्यमपरमप्यपूर्वमिति द्रष्टव्यम्॥

## (सादृश्याभावेऽपि आश्रयधर्मातिदेशेन भावनान्तरेतिकर्तव्यताकाङ्क्षानिवृत्तिरिति निरूपणम्)

भावनान्तरस्य चेतिकर्तव्यताकाङ्क्षायां यद्यपि न प्रकरणादाश्रयस्यैवेतिकर्तव्यतात्वेन ग्रहणं संभवति; स्वर्गादिसंयुक्तस्य होमस्य प्रकरणाविषयत्वात्। नच—अङ्गत्वाभावेऽप्याश्रयस्य सतः प्रसङ्गेनेतिकर्तव्यताकाङ्क्षानिवर्तकत्वोपपत्तेर्नातिरिक्तेतिकर्तव्यताकाङ्क्षेति—वाच्यम्; आश्रयस्य करणतानिर्वाहकत्वेन करणकोटावन्तर्भावात् तदनुग्राहकेतिकर्तव्यताया भेदेनैवापेक्षितत्वात्। तथाप्याश्रयतो धर्मातिदेशात्तन्निवृत्तिः। सादृश्याभावात् कथं कल्पितवचनातिदेशः? सादृश्यकार्यस्य प्रकृतिविशेषोपस्थापनस्य प्रकरणेनैव सिद्धेरिह तदनपेक्षणात्। अतो युक्तो धर्मातिदेशः। तत्र केषांचिदेव धर्माणां सः केषांचित्तु नेति विवेकः कौस्तुभे द्रष्टव्यः॥

॥ इत्येकादशं गुणकामाधिकरणम्॥

---

## (वायव्यरेवतीवाक्ययोर्यथासिद्धान्तं निष्कृष्टार्थविवेकः। पूर्वाधिकरणेनापवादिकसंगतिश्च)

अधिकरणविषयवाक्यमुदाहरति—**त्रिवृदिति**॥ एतच्च भेदप्रतियोगिप्रदर्शनमात्रार्थमुदाहृतम्। रेवतीवाक्यमात्रस्यैव विचारविषयत्वात्। ताण्ड्यब्राह्मणे प्रथमतो "यो पूत इव स्यादग्निष्टुता यजेताग्निनैवास्य पाप्मानमपहत्य त्रिवृता तेजो ब्रह्मवर्चसं दधाती"त्येकं त्रिवृदग्निष्टुतं विधाय तत्र त्रिवृत्त्वे दोषं संकीर्त्य चतुष्टोममग्निष्टुद्यागान्तरं विधाय "त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वि"ति पठित्वा "एतस्यैव रेवतीष्वि"त्याम्नातम्। तत्र यद्यपि प्रथमान्तपदत्रयं यजेतेत्यनेनान्वयायोग्यम्; तथापि कर्तव्य इति पदाध्याहारेण त्रिवृदादिगुणद्वयविशिष्टाग्निष्टुत्संज्ञकयागविधानम्। तत्र एतेषां षण्णामग्निष्टुतां देवताधिकरणगतपरिमलले‌खनाग्निकायित्वेन समाम्नानात् तेषां च पूर्वस्योत्तरेष्वतिदेशस्याष्टमे प्रसाधनात् पूर्वयागात् त्रिवृत्पञ्चदशसप्तदशैकविंशरूपचतुष्टोमकत्वस्य प्राप्तस्य बाधेन सर्वस्तोत्रेष्वपि त्रिवृत्त्वविधानम्। अतएव तस्मादेवाग्निष्टोमसंस्थाविधायकमग्निष्टोमपदमिति न शक्यते वक्तुम्; तथापि राजन्यनिमित्तकाग्निष्टोमसंस्थाविकारभूतात्यग्निष्टोमताव्यावृत्तिफलकत्वेनाग्निष्टोमसंस्थाविधानपरं द्रष्टव्यम्। **यत्तु कौस्तुभे**—एतत्पूर्वभावियागस्य उक्थ्यसंस्थाकस्य निकायित्वेनैतद्यागप्रकृतित्वावसायात्तत उक्थ्यसंस्थाया एव प्राप्यमाणत्वेनाग्निष्टोमसंस्थायाः प्रतिप्रसवार्थतया विधानपरमिति पक्षान्तरं पूज्यपादैरुक्तम्, तत्ताण्ड्ये पूर्वं चतुष्टोमाग्निष्टुद्यागस्य विधानेऽपि तस्योक्थ्यसंस्थत्वेनानाम्नानात्किंमूलमिति चिन्त्यम्। अग्निष्टुत्पदं वाग्निदेवत्यमन्त्रसाध्यस्तोत्राम्नानात् तत्प्रख्यन्यायेन नामधेयम्। "तस्य वायव्यास्वि"ति वाक्येनो 'पत्वा जामयो गिर' इत्यादिवायव्यऋगधिकरणत्वैकविंशतिस्तोमकत्वविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालविशिष्टयागप्रयोगस्य फलार्थं विधानम्। तत्राग्निष्टोमस्तोत्रे पूर्वातिदेशेन प्राप्तस्यैव विंशस्तोमस्य त्रिवृत्त्वेन बाधितस्य प्रतिप्रसवः। एवमतिदेशप्राप्तानां यज्ञा यज्ञावो इति मन्त्राणां बाधेन वायव्या-

तत्रापि पूर्ववदाद्यः पूर्वपक्षः राजसूयन्यायेन स्वकारकविशिष्टाग्निष्टोमस्तोत्रभावनाविशिष्टक्त्वाप्रत्ययार्थभूतकालकर्त्रादिरूपप्रयोगान्वयिगुणसत्त्वेन विनियोगविशिष्टप्रयोगविधिसम्भवात् । इष्यते चायमेव प्रकारो वायव्यवाक्ये सिद्धान्तिनाऽपि ।

द्वितीयस्तु नात्र राजसूयन्यायः; प्रयोगस्य अग्निष्टोमस्तोत्रोत्तरकालत्वस्य च वायव्यवाक्येनैव प्राप्ततया तदनुवादेन रेवतीविधिः फलोद्देशेन अग्निष्टुद्विनियोगविधिश्चेति वाक्यभेदात् । वायव्यवाक्ये हि अतिदेशेन सम्भवत्प्रासिकमग्निष्टोमस्तोत्रोत्तरकालतादि ततः पूर्वप्रवृत्त्यङ्गीकारेण प्रयोगविशेषणतया विहितम् । न त्वत्र; वायव्यवाक्यस्यापि क्लृप्तत्वेनास्य पूर्वप्रवृत्त्यङ्गीकारानुपपत्तेः । नच विनिगमनाविरहः; प्राथम्यस्यैव नियामकत्वात् । अतो लाघवाद् गुण एव रेवत्यधिकरणकवारवन्तीयाख्यो रेवत्याख्य एव वाऽप्राप्तत्वात् फलोद्देशेन विधीयते। "वारवन्तीयमग्निष्टोमसाम कार्यमिति प्राकरणिकेन वाक्येन वारवन्तीयस्यापि प्राप्तत्वात् । नचा-

मन्त्राणां विधानम् । रेवतीवाक्ये 'रेवतीर्नः सधमाद'इत्यादिरेवतीऋगधिकरणकवारवन्तीयसामकाग्निष्टोमस्तोत्रभावनोत्तरकालविशिष्टयागभावनायाः फले विधानम् । तेन रेवतीभिर्वारवन्तीयाधारभूताया 'अश्वं नत्वा वारवन्तं वंदध्या' इति योनेस्तदुत्तरयोश्च बाधः । यद्यप्यग्निष्टोमस्तोत्रस्य सर्वान्त्यत्वेन तद्भावनाया यागप्रयोगपूर्वकालत्वं संभवति; तथापि सर्वाङ्गानुष्ठानसौकर्यार्थमादितोऽवधारणादग्निष्टोमस्तोत्रस्यापि तत्सिद्धेर्वाचा करोति मनसा करोतीत्यादावध्यवसानेऽपि करोतेः प्रयोगादध्यवसानापरपर्यायप्रतिपत्तिपूर्वकालत्वेन **अथवा**—मुखं व्यादाय स्वपितीत्यादाविव लक्षणया समकालत्वेन क्त्वाप्रत्ययोपपत्तिर्द्रष्टव्येति विवेकः ॥ तत्र पूर्वाधिकरणोपपादितयोर्गुणफलसंबन्धधात्वर्थाभेदयोरेवापवादकरणादापवादिकीमनन्तरसङ्गतिं स्पष्टत्वादप्रदर्श्यैव पूर्वपक्षमाह—**तत्रापीति** ॥

### ( रेवतीवाक्ये विनियोगप्रयोगयोरेव राजसूयन्यायेन विधानान्न कर्मभेद इति कथनम् )

प्रकृतप्रत्यभिज्ञानात् एतच्छब्दश्रुतेः प्रमाणाभावाच्च न तावत्कर्मान्तरम् । सिद्धान्ते वक्ष्यमाणरीत्यैव चाश्रयालाभात् नापि गुणफलसंबन्धः । अतो वायव्यवाक्यवदेव रेवत्यधिकरणकाग्निष्टोमस्तोत्रभावनोत्तरकालविशिष्टस्य तस्यैव कर्मणः प्रयोगस्य फले विधानमित्याद्यः पक्ष इत्यर्थः । नहि अत्र दध्यादिरूपगुणस्येवोत्पत्त्यन्वयित्वेनोत्पत्त्यन्तरापादकत्वसंभवः; कर्तृकालादिरूपस्य प्रयोगान्वयितया प्रयोगविशेषणत्वस्य त्वयापि वक्तव्यत्वादिति सूचयितुमिष्यते चेत्युक्तम् ॥

### ( अक्लृप्तकार्यकल्पनाभिया सामाङ्गत्वेन न रेवत्या विधानं किंतु स्तोत्राङ्गतयेत्युपपादनम् )

**तदनुवादेनेति** ॥ अग्निष्टोमस्तोत्रानुवादेनेत्यर्थः । यद्यपि रेवतीनां सामाधारतैवाग्निष्टोमसामपदसमभिव्याहारात् प्रतीयते; तथापि अक्लृप्तकार्यकल्पनापत्तेर्न सामाङ्गत्वेन रेवतीविधिः, किंतु पार्ष्ठिकान्वयलभ्यं सामसंबन्धमनूद्य विशेषणप्रधानमग्निष्टोमशब्दं अङ्गीकृत्य स्तोत्राङ्गतयैव मन्त्रविध्युक्तिरिति भावः । रेवत्याख्यगुणमात्रस्य विधाने विलिङ्गैतच्छब्देन परामर्शायोगात् तद्विशिष्टवारवन्तीयगुणमाह—**रेवत्यधिकरणकेति** ॥ **अप्राप्तत्वादिति** ॥ एतदेवोपपादयति—**वारवन्तीयमिति** ॥

### ( रेवतीवारवन्तीययोः पार्ष्ठिकबोधेन वैशिष्ट्ये रेवतीविशिष्टवारवन्तीयस्य धात्वर्थस्यापि अक्रियारूपस्य यागाश्रयेण अग्निष्टोमस्तोत्राश्रयेण वा फलसंबन्धः )

अत्र चाद्ये पक्षे एतच्छब्दोपपत्तावपि नाग्निष्टोमस्तोत्रस्य रेवत्यङ्कस्य फलसंबन्धः; अग्निष्टोमसामपदस्य विशेषणप्रधानत्वे लक्षणापत्तेः, अपितु रेवत्यधिकरणकवारवन्तीयसाम्न एव ॥ यद्यपि रेवतीवारवन्तीययोः कारकत्वात् परस्परवैशिष्ट्यासंभवः; तथापि क्त्वाशब्दोक्तभावनायां प्रथमतो द्वयोरन्वयाङ्गीकारेण पार्ष्ठिकबोधे रेवतीनां वारवन्तीयवैशिष्ट्ये बाधकाभावाद्रेवतीषु कृत्वा वारवन्तीयं तेन फलं भावयेदित्यर्थे नानुपपत्तिः । तस्य च स्वरसमाहारात्मकस्य ध्वन्यादिशब्दरूपतया सौभरादिवत् सिद्धरूपत्वेनाऽऽश्रयापेक्षायां प्रकृताग्निष्टुद्यागस्यैवाऽऽश्रयत्वोपपत्तेर्यजेतेत्यनुवादः । नच गायतिधातुवाच्यत्वात् साम्नः क्रियारूपत्वम्; 'गडि वदनैकदेशे' इत्यादौ गण्डादीनां धातुवाच्यत्वेऽपि सिद्धरूपत्वेनाक्रियात्मकत्वात् सामशब्दस्य सामार्थोपायः कश्चिद्गौणः स्वर इति श्रुतेः षड्जादिस्वरसमाहारवाचित्वात् स्वरशब्दस्य "मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ।" इत्यादिसङ्गीतशास्त्रपर्यालोचनया सिद्धरूपवारवन्तीयसंयोगविभागजनितध्वन्यात्मकशब्दविशेषवाचित्वावगमेन वारवन्तीयादेः सिद्धत्वावगतेश्च । अतस्तस्याश्रयापेक्षायां युक्तमेव तस्याश्रयत्वम् । शक्यते हि साम्ना ऋगक्षराभिव्यक्तिद्वारा स्तोत्रमिव यागः साधयितुम् । अतश्च सौभरसाम्नः स्तोत्राश्रितत्वमिव वारवन्तीयस्यापि यागाश्रितत्वं तदीययाज्यादिमन्त्राधारतयोचैष्ट्वादिवत् न विरुध्यते । अतएव रेवतीनामपि याज्यादिकार्ये निवेशोऽप्युन्नेयः । काम्येनच वारवन्तीयेन सामान्यविधिप्राप्तस्यैकश्रुत्यादेर्बाधेऽपि न क्षतिः । यदित्वग्निष्टोमसामेत्यनुवादानुपपत्तिराशङ्क्येत, तदाग्निष्टोमस्तोत्रस्यैव वायव्यावाक्ये विशिष्योपस्थितेस्तस्यैवाश्रयत्वम् । तस्य चाग्निष्टुद्यागसंबन्धित्वेन प्राप्तेर्यजिषच्छ्यन्तैतच्छब्दकृत्वाप्रत्ययानामनुवादत्वमिति न कश्चिद्दोषः ॥

### ( रेवत्या अग्निष्टोमसंबन्धस्य फलसंबन्धस्य च विधानेऽपि भावनोपसर्जनभावनान्तराङ्गीकारादवाक्यभेदः )

न्यपक्षे तृतीयान्तेनैतच्छब्देन विलिङ्गसङ्ख्यत्वाद्रेवतीमात्रनिर्देशानुपपत्तिः; तेन रेवतीविशिष्टवारवन्तीयनिर्देशेऽपि दाक्षायणयज्ञन्यायेनाप्राप्तरेवतीमात्रस्यैव फलसंबन्धोपपत्तेः। अतो दधिन्यायेन गुणफलसंबन्ध एव युक्तः।

सिद्धान्तस्तु नात्राश्रयलाभः शक्यते वक्तुम्। यागस्य तावत्प्रकृतत्वेऽपि अग्निष्टोमसामेत्यनुवादानुपपत्तेर्न साक्षादाश्रयत्वम्। अग्निष्टोमस्तोत्रद्वारा तस्यैव वा साक्षादाश्रयत्वं तु अग्निष्टोमस्तोत्रस्यातिदेशतः स्तोत्रान्तरसाधारण्येनोपस्थितत्वादनाशङ्क्यम्। नच वायव्यवाक्येन तस्यौपदेशिकी विशिष्योपस्थितिः; आतिदेशिकर्ग्बाधसंभवे औपदेशिकतद्बाधस्यान्याय्यत्वेन विशिष्योपस्थितेराश्रयत्वासाधकत्वात्। नच साम्नो गायतिधातुवाच्यत्वेन क्रियारूपत्वादाश्रयालाभेऽपि न क्षतिः; साम्नो ध्वन्यात्मकस्वरसमाहाररूपत्वेन वाक्यशेषादौ प्रसिद्धस्य सिद्धरूपतया धातुवाच्यत्वस्याप्रयोजकत्वात्, अन्यथा सौभरस्यापि स्तोत्राश्रयत्वानुपपत्तेः, वारवन्तीयसाम्ना आश्रयानपेक्षणे अग्निष्टोमसामेत्याद्यनुवादानुपपत्तेश्च। अतः साम्न आश्रयसापेक्षत्वान्न तावत्प्रकरणेनाश्रयलाभः। नच—वारवन्तीयमग्निष्टोमसाम कार्यमिति प्राकरणिकेन वाक्येनैव गौरवभिया अङ्गत्वाविधानादाश्रय-

---

द्वितीये पक्षे यद्यपि रेवतीनामग्निष्टोमस्तोत्रमात्रवृत्तित्वं नान्यतो लभ्यते, येन तस्याश्रयत्वेन प्राप्त्याऽग्निष्टोमसोमेत्यनुवाद उच्येत; तथापि रेवतीनामग्निष्टोमस्तोत्ररूपाश्रयसंबन्धस्यानेनैव विधानेन न कापि क्षतिः। नच वाक्यभेदः; क्त्वाशब्दोक्तभावनायां रेवतीष्वग्निष्टोमस्तोत्रं प्रकृत्वेत्येवमन्वयेन तस्या उत्तरभावनायामन्वयाङ्गीकारेण तदप्रसक्तेः। अतश्च यथैव सिद्धान्ते रेवत्यादिविशिष्टस्तोत्रभावनाविशिष्टयागभावनाविधानं क्त्वाशब्दबलादङ्गीक्रियते, एवं ममाप्याश्रयभावनाविशिष्टगुणभावनाविध्यङ्गीकारेऽपि न क्षतिरिति भावः॥

### (प्रथमपूर्वपक्षस्य द्वितीयपक्षोपक्रम एव दूषितत्वाद्द्वितीयपक्षे स्तोत्रद्वारा यागस्य स्तोत्रस्य वाऽश्रयत्वासंभवोपपादनम्)

प्रथमपूर्वपक्षस्य द्वितीयपक्ष एव दूषितत्वात् तद्दूषणमुपेक्ष्य द्वितीयं पक्षं प्रकरणादाश्रयलाभोपपादने किं यागस्य साक्षादाश्रयत्वम्? उताग्निष्टोमस्तोत्रद्वारा वेति विकल्पाशयेन दूषयन् सिद्धान्तमाह—**सिद्धान्तस्त्विति**॥ **आश्रयत्वमिति**॥ अग्निष्टोमस्तोत्रस्यादृष्टविधया यागाङ्गत्वात् तद्द्वारा यागस्याश्रयत्वोपपत्तिरसंभवदुक्तिकेति तुशब्देन सूचितम्। दृष्टविधया हि कृतिसाध्यधात्वर्थसंबन्धित्वं गुणस्यापेक्षितम्। अदृष्टविधया हि तदाश्रयणे गुणस्याश्रयं विनापि फलकरणत्वस्यादृष्टद्वारोपपत्तेराश्रयस्याकाङ्क्षाया एवाभावप्रसङ्गात्। अतएव आश्रयलक्षणे अदृष्टाद्वारकसंबन्धेन गुणविशेषावच्छिन्नत्वं निवेशितं पूर्वाधिकरणे। अतो न तद्द्वाराश्रयत्वमित्यर्थः। दूषणान्तरमप्याह—**अग्निष्टोमस्तोत्रस्येति**॥

### (रेवतीनामातिदेशिकर्ग्बाधकत्वमेव युक्तमिति सर्वस्तोत्राश्रयत्वापत्त्युपपादनम्)

**आतिदेशिकेति**॥ औपदेशिकी ह्यग्निष्टोमस्तोत्रस्योपस्थितिर्वायव्यर्गधिकरणत्वेनेति रेवतीभिरौपदेशिकवायव्याबाधप्रसङ्गापेक्षयाऽतिदेशप्राप्तसर्वस्तोत्राश्रयत्वाङ्गीकारेण तदीयातिदेशप्रापितर्ग्बाधस्य न्याय्यत्वेन सर्वस्तोत्राणामेवाश्रयत्वापत्तिरित्यर्थः॥ नच—काम्येन नित्यबाधो न्यायसिद्ध एवेति—वाच्यम्; रेवत्यधिकरणवारवन्तीयसाम्नो गुणत्वपक्षे साम्नः काम्यत्वेऽपि रेवतीनां तदभावात्, रेवतीनां गुणत्वपक्षेऽपि यावत्ताभिरातिदेशिकर्ग्बाधः संभवति, न तावदौपदेशिकवायव्याबाध उचित इति भावः॥

### (साम्नः क्रियारूपत्वपरवार्तिकदूषणम्)

यत्तु वार्तिके—आत्मना ह्यक्रियारूपैर्गुणैराश्रीयते क्रिया। वारवन्तीयगीतेस्तु क्रियायाः किं प्रयोजनम्॥ इत्यादिना साम्नः क्रियारूपत्वेनाऽऽश्रयाकाङ्क्षाभावान्न गुणफलसंबन्ध इत्युक्तम्, तत्प्रौढ्येति दूषयितुमनूद्य दूषयति—**नचेति**॥ व्याख्यातपूर्वमेतत्।

### (चतुष्टोमप्रकरणगतस्य वारवन्तीयमग्निष्टोमसाम कार्यमिति वचनस्याग्निष्टुत्प्रकरणगतत्वोपपादनम्)

**प्राकरणिकेनेति**॥ यद्यपीदं वचनं एतदग्निष्टुद्यागात् पूर्वं चतुष्टोमाग्निष्टुत्प्रकरणे ताण्ड्यब्राह्मणे आम्नातम्, नैतदग्निष्टुत्प्रकरणे; तथापि चतुष्टोमस्य निकायित्वेनोत्तरैतदग्निष्टुत्प्रकृतित्वादतिदेशप्राप्तवचनातिदेशत्वेन प्राकरणिकवाक्येनेत्युक्तम्। अतएव "अथ पुनर्विशिष्टे यागे उपादीयमाने तद्रेवतीषु वारवन्तीयं साम कथं भवतीत्युच्यते" इत्याशङ्कोत्तरपरं वचनादिति भाष्यमातिदेशिकवचनं द्रष्टव्यमिति वार्तिके व्याख्यातम्॥

### (रेवतीगुणत्वपक्षेण वारवन्तीयवाक्यस्य प्राकरणिकस्याश्रयसमर्पकत्वनिरासः)

**गौरवभियेति**॥ परोद्देशप्रवृत्तकृतिकारकत्वरूपाङ्गत्वापेक्षया कर्मत्वरूपाश्रयत्वस्य लघुभूतत्वमित्यर्थः॥ नचास्मिन् पक्षे आतिदेशिकर्ग्बाधापेक्षयौपदेशिकर्ग्बाधापत्तिर्दूषणम्; स्तोत्रान्तराणामाश्रयित्वे तदीयानामृचां साम्नश्च बाधापत्तेरुभयबाधापेक्षयौपदेशिकवायव्याबाधस्योचितत्वेनाग्निष्टोमस्तोत्रस्याश्रयत्वौचित्यादिति भावः॥ एवमाश्रयलाभसंभवेन रेवत्याधारवारवन्तीयगुणस्य फले विधानमिति प्रथमपक्षस्याश्रयला-

समर्पणमिति—वाच्यम्; साम्नो गुणत्वपक्षे तल्लाभोपपत्तावपि रेवतीमात्रस्य गुणत्वे तदयोगात्। साम्नो गुणत्वं तु विधेरप्राप्तरेवतीमात्रसङ्क्रमादेवासंभवि। फलपदाभावे हि विधिर्यद्विषये अप्राप्ततया व्याप्रियते तस्यैव प्रयोजनाकाङ्क्षया फलसंबन्धो यथा गोदोहनादेः। तदत्र पशुपदाभावे वारवन्तीयस्य प्राकरणिकवाक्येनैव प्राप्तत्वाद्विधिरप्राप्तरेवतीमात्रविषयः संपद्यत इति तस्यैव फलसंबन्धो वाच्यः। नचास्याश्रयः केनापि प्रकारेण लब्धुं शक्यः। नच प्रकारान्तरेणालाभेऽपि अनेनैव वाक्येन आश्रयविशिष्टगुणविधानादाश्रयगुणोभयविशिष्टभावनाविधानाद्वा तल्लाभोपपत्तिः, क्लृप्तप्रयोजनत्वाल्लाघवेनाश्रयतासंबन्धेनैव वैशिष्ट्याङ्गीकाराच्च न गुणाङ्गतापत्तिरिति—वाच्यम्; आश्रयस्य गुणान्वयाव्युत्पत्तेः, कर्मत्वातिरिक्तस्याश्रयत्वस्य दुर्वचत्वेन भावनायाः फलाश्रयरूपोभयकर्मकत्वाङ्गीकारे एककर्मकत्वभङ्गापत्तेश्च। नच—क्त्वाशब्दोक्तायामाश्रयस्य अग्निष्टोमस्तोत्रस्य कर्मत्वात्तदुत्तरकालताविशिष्टगुणभावनाया आख्यातोपात्तायाः पशुकर्मकत्वान्नैकस्या भावनाया द्विकर्मकतापत्तिरिति—वाच्यम्; गुणभावनाया अवच्छेदकीभूतधात्वर्थापेक्षायां यागस्यावच्छेदकत्वाङ्गीकारे रेवतीनां यागकरणत्वापत्त्या स्तोत्रं प्रति करणत्वानापत्तेः, स्तोत्रस्यैवावच्छेदकत्वाङ्गीकारे तु धात्वर्थद्वयावच्छिन्नभावनाद्वयाभावात् क्त्वाप्रत्ययानुपपत्तिः। नच—रेवतीविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालविशिष्टरेवतीकरणकयागाश्रयकभावनैव फलोद्देशेन विधीयतामिति—वाच्यम्; आख्यातोपात्तभावनाया द्विकर्मकत्वापत्तेस्तदवस्थत्वात्। नच प्रकरणाद्यागस्याश्रयत्वोपपत्तेर्न द्विकर्मकत्वम्, तथात्वेऽपि तृतीयान्तैतच्छब्दस्य धातुपारार्थ्यभयेन यागपरामर्शित्वस्यैवापत्तौ रेवत्यादिपरामर्शकत्व एव प्रमाणाभावात्, अतस्तदपेक्षया लघुभूतकर्मान्तरविधानमेव न्यायः। तथाहि—निकायित्वेनैतस्याग्निष्टुद्यागविकारत्वाद्वारवन्तीयं प्राप्तमेवानूद्यते। केवलं रेवतीविशिष्टस्तोत्रभावनोत्तरकालताविशिष्टयागान्तरभावनैव

---

भादसंभवं प्राचीनोक्तं शिथिलमनुसंधाय वारवन्तीयगुणस्यात्र प्राप्ततया विधेयत्वाभावेन तदसंभवमुपपादयति—**साम्न इति** ॥ **वस्तुतस्तु**—प्राकरणिकस्याप्यस्य वाक्यस्यातिदेशप्राप्तस्यापि चतुष्टोमवारवन्तीयसाम्नोऽग्निष्टोमस्तोत्राङ्गत्वबोधकत्वम् इहचाश्रयसंबन्धबोधकत्वमिति वैरूप्यापत्तिः। अन्यथा वायव्याधिकरणत्वेनाप्येतदग्निष्टोमस्तोत्रे वारवन्तीयस्याङ्गत्वेन प्राप्त्यनापत्तेर्नाश्रयसंबन्धबोधकत्वं तस्य संभवतीति **तल्लाभोपपत्तावपि** इत्यपिशब्देनोक्तम् ॥

**( अग्निष्टोमस्तोत्ररूपाश्रयविशिष्टगुणविधानस्याश्रयत्वस्य कर्मत्वरूपत्वाद्वैशिष्ट्यासंभवादिना निरासः )**

**क्लृप्तप्रयोजनत्वादिति** ॥ अग्निष्टोमस्तोत्ररूपाश्रयस्यातिदेशेनैतद्यागाङ्गतया क्लृप्तप्रयोजनत्वादित्यर्थः ॥ अग्निष्टोमस्तोत्राश्रयविशिष्टरेवतीनां फले विधानेऽप्युभयोरपि कारकत्वाद्वैशिष्ट्यासंभव इत्याह—**आश्रयस्येति** ॥ **ननु** सोमादिवदेव प्रथमत उभयोरपि गुणभावनायामन्वयाङ्गीकारेण पार्ष्ठिकं तयोर्वैशिष्ट्यं संभवत्येवेत्यत आह—**कर्मत्वातिरिक्तेति** ॥ गुणभावनायामन्वयो न तावत्करणत्वेन; तथात्वे भावार्थाधिकरणन्यायप्रवृत्त्या तस्यैव फलसंबन्धापत्तेः, करणत्वेनोपस्थितस्य गुणसंबन्धायोगाच्च। नापीतिकर्तव्यतात्वेन; क्लृप्तप्रयोजनत्वात्, गुणाङ्गत्वापत्तेश्च, अतः परिशेषात् कर्मत्वेन, तदाश्रयणे यदीप्सितकर्मत्वेन, तदोद्देश्यानेकत्वात् वाक्यभेदापत्तिः, गुणस्याश्रयाङ्गतापत्तिश्च, यदित्वनीप्सितकर्मत्वेन, तदापि फलस्यापि कर्मत्वेनान्वयात् भावनाया द्विकर्मकत्वाद्वाक्यभेदापत्तिरित्यर्थः। **स्तोत्रस्यैवेति** ॥ स्तोत्रस्यावच्छेदकाङ्गीकारे यजेतेत्यनुवादानुपपत्तिरपि तुशब्देन सूचिता ॥

**( भवनाभेदशङ्का )**

**क्त्वाप्रत्ययेति** ॥ समानकर्तृकयोः क्रिययोः पूर्वकालीनक्रियावाचकधातोः परतो विहितस्य क्त्वाप्रत्ययस्य क्रियाभेदाभावेऽनुपपत्तिरित्यर्थः ॥

**( रेवतीकरणयागाश्रयभावनाबोधोपपत्तिः )**

**नचेति**। यद्यपि रेवतीष्विति पदमग्निष्टोमस्तोत्रभावनान्वयीति न रेवतीकरणकयागाश्रयकभावनाबोधःसंभवति; तथाप्येतेनेत्येतच्छब्दस्य वारवन्तीयवाचिनोऽपि दाक्षायणपदवत् रेवतीगुणपरामर्शकत्वोपपत्तेः रेवतीकरणकयागाश्रयकभावनाबोधोपपत्तिरित्याशयः। लघुभूतत्वमेवोपपादयति—**तथाहीति**।

**( वारवन्तीयपदानुवादत्वसमर्थनम् )**

**अग्निष्टुद्यागविकारत्वादिति** ॥ त्रिवृदग्निष्टुदग्निष्टोमः इति वाक्यविहितपूर्वाग्निष्टुतस्तत्पूर्वतनचतुष्टोमाग्निष्टुद्विकारत्वात् तदतिदेशपरंपरया प्राप्तत्वाद्वारवन्तीयपदमनुवादः। यद्यपि चाग्निष्टोमस्तोत्रस्य वारवन्तीयस्य चातिदेशात् प्राप्तौ तदुद्देशेन विधाने वैशिष्ट्यासंभवात् वाक्यभेदः प्राप्नोति; तथापि वैशिष्ट्यसंपत्तये "विशिष्टविधिसन्दष्टं प्राप्तं यच्च विधीयते" इति विशिष्टविधिसन्दष्टन्यायेनातिदेशप्रवृत्तेः पूर्वप्रवृत्त्यङ्गीकारेण वा वायव्यावाक्य इव विधानेऽपि प्राप्तत्वादनूद्यत इत्युक्तम् ॥

**( एतस्यैवेति षष्ठ्यन्तस्य प्रकृतिविकृतिभावबोधकत्वम् )**

**ननु**—षष्ठ्यन्तैतच्छब्दबलात् कर्मान्तरस्याप्यस्य पूर्वक-

फलोद्देशेन विधीयते । षष्ठ्यन्तैतच्छब्दः प्रकृतिविकारभावानुवादकः । तृतीयान्तैतच्छब्दः प्रस्तोष्यमाणकर्मवचनो न दुष्यति । उत्तरकाललक्षणो गुणश्च प्रयोगान्वयित्वादवेष्टिवद्यद्यपि तद्भेदमेवापादयेत्; तथापि कालस्यात्र संभवत्प्राप्तिकस्य वाक्यभेदपरिहारार्थं विधेयत्वेऽपि तात्पर्यगत्या यागे परम्परासंबन्धेन विधेयस्य रेवत्याख्यस्य गुणस्योत्पत्त्यन्वयित्वात्कर्मभेदबोधकत्वाविघातः ॥ १२ ॥ इति द्वादशं रेवत्यधिकरणम् ।

---

( १३ अधिकरणम् । )

**सौभरे** ॥ ब्रह्मसामाख्यं स्तोत्रं प्रकृत्य समाम्नातैः—यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत

---

र्माङ्गत्वप्रतीतेः कथं फलोद्देशेन विधानमित्यत आह—**षष्ठ्यन्तैतदिति** ॥ एतत्पदस्याप्युद्देश्यसमर्पकत्वे उद्देश्यानेकत्वप्रयुक्तवाक्यभेदापत्तिः, पूर्वयागप्रकृतिकत्वरूपसंबन्धानुवादकत्वे तु तदनापत्तिः ॥

### ( सर्वनाम्नां प्रस्तोष्यमाणपरामर्शित्वेन तेनेत्यस्योपपत्तिः )

**तृतीयान्तेति** ॥ यद्यपि पूर्वपरामर्शित्वं सर्वनाम्नाम्; तथापि अथैष ज्योतिरित्यादिवाक्यगतैतच्छब्दस्य प्रस्तोष्यमाणकर्मवचनत्वस्यापि दृष्टत्वात् सर्वनाम्नां पूर्वपरामर्शित्वत्यागेन प्रस्तुतप्रस्तोष्यमाणसाधारण्येन सन्निहितमात्रवाचिताङ्गीकारादिहापि तस्य न विरोध इत्यर्थः ॥

### ( अवेष्टौ प्रयोगान्वयिकर्तृविधान एव तात्पर्याद्यथा प्रयोगभेदमात्रं तथा प्रकृते तादृशकालविधानात्तदेवेति शङ्का )

**अवेष्टिवदिति** ॥ राजसूये राजकर्तृके अवेष्टिसंज्ञकाः पृथक् प्रयोगाः पञ्चेष्टीराम्नाय "यदि ब्राह्मणो यजेते"त्यादिश्रुतैर्वाक्यैः ब्राह्मणकर्तृत्वस्य विधानात् कर्तुश्च प्रयोगान्वयित्वेन राजकर्तृकपूर्वप्रयोगे निवेशासंभवादवेष्टेः प्रयोगान्तरमेव विधीयते इत्युत्तरत्र वक्ष्यते, तथेहापि उत्तरकाललक्षणगुणस्य प्रयोगान्वयित्वात् पूर्वयागीयवायव्यावाक्यविहितप्रयोगात् प्रयोगान्तरमेवापद्यते न कर्मान्तरत्वमित्यर्थः । **संभवत्प्राप्तिकस्येति** ॥ यद्यग्निष्टोमस्तोत्रभावना प्राप्तत्वान्न विधीयेत, तदाऽविधेयक्रियाविशेषणत्वेन रेवतीनां विधानायोगात् श्रुतेन यजेतेत्यनेन विधिना विधेयत्वेच पूर्वोक्तो वाक्यभेदः । अतस्तस्याः प्राप्ताया अपि विधाने सति तस्या उत्तरकालत्वसंबन्धेनोत्तरभावनान्वयेन यदुत्तरकालत्वं तस्य वायव्यावाक्येनाप्राप्तस्य रेवतीगुणफलसंबन्धोभयविधानकृतवाक्यभेदपरिहारार्थं क्त्वाशब्दोक्तभावान्वयाङ्गीकारेण विधेयत्वेऽपीत्यर्थः ॥

### ( रेवतीगुणस्य तात्पर्यगत्या विधीयमानस्य कर्मभेदापादकत्वम्, स्तोत्रमात्रभेदकत्वशङ्कानिरासश्च )

**अविघात इति** ॥ सर्वत्रहि सङ्ख्यावद्गुणस्यापि विधेयस्यैव भेदकत्वादिहच पूर्वोक्तरीत्या रेवतीनां फलविधानानुपपत्तेः पूर्वयागेच वायव्यावरोधे निवेशासंभवाद्रेवतीविशिष्टयागभावनाया विधौ रेवतीवैशिष्ट्यस्याग्निष्टोमस्तोत्रद्वारकतया यागे आश्रयितव्ये वारवन्तीयमग्निष्टोम साम कृत्वेत्यनुवादस्य तात्पर्यग्राहकत्वमात्राङ्गीकारात् तात्पर्यगत्या विधीयमानो रेवतीगुणः उत्पत्त्यन्वयित्वेन कर्मोत्पत्त्यन्तराक्षेपकत्वात् कर्मान्तरत्वापादक इत्यर्थः ॥ **नन्वेवं** तर्हि रेवतीगुणस्य अग्निष्टोमस्तोत्रान्वयित्वात्तद्भेदकत्वमेव स्यान्न यागभेदकत्वमिति शङ्कानिरासोऽविघातपदेन सूचितः । तथात्वे फलोद्देशेन यागविनियोगवत् प्रयोगान्तरस्यापि अवश्यविधेयत्वापत्तेर्लाघवेन कर्ममात्रभेदकत्वस्यैव युक्तत्वादित्यर्थः ॥

### ( पूर्वोत्तरकल्पप्रयोजनम् )

प्रयोजनं पूर्वपक्षे पूर्वाग्निष्टुत्येव काम्यगुणानुष्ठानात् सिद्धान्तेच निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यादिति आष्टमिकन्यायादतिदिष्टपूर्वाग्निष्टुद्धर्मकयागान्तरानुष्ठानात् स्पष्टमिति नोक्तम् ॥

॥ इति द्वादशं रेवत्यधिकरणम् ॥

---

### ( नित्यविधिसन्निधिपठितकामार्थविनियोजकवाक्यमेवैतदधिकरणविषय इति निरूपणम् )

ताण्ड्यब्राह्मणे "षोडशिसंस्थावान्तरप्रकरणे सौभरमुक्थ्यानां ब्रह्मसाम भवती"त्यनेन षोडश्यपूर्वसाधनीभूतब्रह्मसामस्तोत्रोद्देशेन समाम्नायावगतं सौभरं नित्यतया विहितम् । तथैवातिरात्रसंस्थावान्तरप्रकरणे "यदि बृहत्सामाऽतिरात्रः स्यात्, सौभरमुक्थ्यानां साम कार्यम् । तथा यदि रथन्तरं साम सौभरमुक्थ्येषु कुर्यादि"ति वचनाभ्यां क्रमेण उक्थ्यत्रयोद्देशेन नैमित्तिकतयापि विहितम् । एवं समाम्नानेऽपि नित्यविधिसन्निधौ पठितम् यत् तस्यैव कामार्थत्वेन विनियोजकवाक्यमात्रं प्रस्तुताधिकरणविचारोपयुक्तमित्युदाहरति—**ब्रह्मसामाख्यमिति** ॥

### ( फलत्रयोद्देशेन स्तोत्राश्रितसौभरविधानोपपादनम् )

सौभरसाम्नश्च षड्जादिस्वरसमूहात्मकध्वन्यादिशब्दात्मकत्वेन सिद्धरूपत्वस्य पूर्वाधिकरणे साधितत्वात्तस्य फलसंबन्धे आश्रयापेक्षायां प्रकरणात् ब्रह्मसामस्तोत्रस्य आश्रयत्वमिति बोधयितुमाश्रितमित्युक्तम् । ततश्च सौभरस्यापि क्रत्वर्थतया

"इत्येतैर्वाक्यैरुक्तस्तोत्राश्रितं सौभरं साम फलत्रयोद्देशेन विधीयते, उद्देश्यानेकत्वेन स्तुवीतेत्यस्यानुषङ्गेण वाक्यभेदप्रतीतेः । सौभरे च शाखाभेदेन निधनाख्यान्तिमसामावयवाधारतया हीष् ऊ ऊर्क् इत्यादीन्यक्षराण्याम्नातानि ।

तदेवं सौभरं प्रकृत्य "हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊ इति स्वर्गकामाय ऊर्गित्यन्नाद्यकामाये"ति श्रुतम्। तत्र वृष्टिकामादिशब्दानां फलपरत्वात्तदुद्देशेनैव हीषादयो गुणा विधीयन्ते । सौभरंच प्रकृतत्वाद्यूपादिवदाश्रयः । निधनाधारतया हीषादिपाठस्यैव नियामकत्वाद्भागान्तरे स्तोभाद्यक्षरान्तरबाधापत्तेश्च न निधनातिरिक्तभागस्याश्रयत्वापत्तिः । नच लाघवाद्वृष्टिसाधनसौभरीयनिधनेऽनियमेन प्राप्तानां हीषादीनां नियममात्रकरणाद्व्यवस्थार्थत्वं शङ्क्यम्; तथात्वे वृष्टिकामादिपदैः तत्तत्साधनीभूतसौभरलक्षणापत्तेः, तस्य च निधनविशेषणत्वे विशिष्टोद्देशापत्तेश्च । अतः सौभरफलात् फलान्तरार्थानि हीषादीनीति प्राप्ते—

प्राप्तत्वादुभयोर्धात्वर्थोपपदार्थयोः प्राप्तावैन्द्रवायवग्रानितिवत् धात्वर्थस्यैव विधानं यद्यपि प्राप्नोति; तथापि स्तोत्रस्यैव फलसंबन्धे तस्य बहिःक्रतुप्रयोगापत्तेस्तत्र सौभरस्याप्राप्तस्यापि विधाने विशिष्टविधिगौरवापत्त्या न तदाश्रयणमिति भावः ।

**एतेन**—सौभरस्य गीतिरूपक्रियावाचित्वाद्वारवन्तीयवदाश्रयानपेक्षणात् स्तुवीतेत्यनुवादानुपपत्तिमाशङ्क्य स्तुवीतेत्यनेनैकवाक्यत्वात् तदनुवादान्यथानुपपत्त्यैव तृतीयान्तसौभरपदेन सौभरविशिष्टकरणत्वस्यैव करणतासंबन्धेन विधानात्तस्य निरूपकापेक्षायामाश्रयत्वेन स्तोत्रस्यान्वयात् तदनुवादोपपत्तिः, वारवन्तीयस्तु द्वितीयान्तत्वेन करणत्वाभावात् कृत्वाशब्दार्थं प्रति कर्मत्वान्नाश्रयापेक्षेति यत् शास्त्रदीपिकायां प्रयासकरणं तत्—**अपास्तम्**; वारवन्तीयस्याप्येतेनेति तृतीयान्तेन परामर्शात् करणत्वोपपत्तेर्वैषम्ये प्रमाणाभावाच्च । इत्येतैर्वाक्यैरिति यदुक्तं तस्योपपत्तिमाह—**उद्देश्यानेकत्वेनेति** । यो वृष्टिकाम इत्येवं यच्छब्दत्रयस्य तच्छब्दत्रयसापेक्षत्वात् स सौभरेण स्तुवीतेत्येवमनुषङ्गेण प्रत्येकान्वयात् भिन्नवाक्यतैवेष्टेत्यर्थः ॥ **निधनाख्येति** ॥ साम्नो हि प्रस्तावोद्गीथप्रतीहारोपद्रवनिधनाख्याः पञ्च भक्तयः । तेषु यन्निधनाख्योऽन्तिमः सामावयवस्तदाधारतयेत्यर्थः ॥

### (भावनाभेदस्य प्रासंगिकत्वात् अपवादाच्च संगतिद्वयनिरूपणं संशयाकारनिर्देशश्च)

तत्र सङ्ख्यावत् गुणस्यापि साक्षात् भावनाभेदकत्वायोगादिह गुणप्रकरणे धात्वर्थभेदाभेदयोः विचार्यत्वादत्रचोभयथापि धात्वर्थभेदात् प्रकरणासङ्गतावपीन्द्रियकामाधिकरणात्प्रभृति प्रासङ्गिकभावनाभेदस्यापि विचार्यत्वात् तत्सङ्गतिं तथेन्द्रियकामाधिकरणरेवत्यधिकरणयोः द्वयोरप्यपवादादापवादिकीमनन्तरसङ्गतिं तथा किं हीषादिस्तोभाक्षराणि प्रकृतसौभराश्रितानि वृष्ट्याद्यर्थत्वेन विधीयन्ते, उत वृष्ट्याद्यर्थं सौभर एवानियमेन प्राप्तानि नियम्यन्त इति संशयंच स्पष्टत्वादप्रदर्श्य पूर्वपक्षमेवाह—**तत्रेति** ॥

### (स्वत एव साध्यसौभराश्रयहीषादिविधिरिति पूर्वपक्षः)

**फलपरत्वादिति** ॥ स्वर्गकामाधिकरणन्यायेन लक्षणया फलपरत्वादित्यर्थः । **तदुद्देशेनैवेति** ॥ तादर्थ्यचतुर्थ्या हीषादीनां शेषत्वापरपर्यायतादर्थ्यस्य वृष्ट्यादीनां शेषित्वापरपर्यायोद्देश्यत्वस्यच प्रतीतिस्तदुद्देशेन विधाने हेतुत्वेनैवकारेण सूचिता। **सौभरं चेति**॥ हीषाद्यक्षराणि तावत्सिद्धरूपाणि सामभागपरिपूरकत्वेन योग्यत्वात् प्रकृतं सौभराख्यं सामैवाश्रयत्वेन गृह्णन्ति। युक्तंहि तस्य स्वावयवद्वारा स्तोभाधारत्वात् दृष्टविधया हीषादिसंबन्धित्वमिति भावः । साम्नः स्वावयवद्वारा स्तोभाक्षरसाध्यत्वादाश्रयत्वमित्यर्थः । साम्नः सिद्धरूपत्वेन साध्यत्वाभावादाश्रयत्वानुपपत्तिं परिहर्तुं यूपादिवदित्युक्तम् । ततश्चोत्पादनक्रियाविष्टत्वेन यूपे खदिराश्रयत्वस्येवोच्चारणक्रियाविष्टत्वेन कृतिसाध्यत्वात् ध्वन्यात्मकशब्दस्य नित्यतानङ्गीकाराच्च तस्याप्याश्रयत्वस्योपपत्तिरिति भावः ॥

### (निधनपदानुवादत्वेन हीषादेर्निधनस्थानकत्वस्यापि विधानशङ्कानिरासः)

**ननु** हीषादेर्निधनस्थानकत्वस्य फलसंबन्धस्य च विधाने वाक्यभेदापत्तिरित्यत आह—**निधनाधारतयेति** ॥ अतश्च निधनपदस्यानुवादत्वेन विधेयसमर्पकत्वाभावात् न तदापत्तिरित्यर्थः ॥

### (सिद्धान्ताभिमतनियमविधित्वासंभवेनापूर्वविधित्वमेव युक्तमिति निरूपणेन परिहारः)

यत्तु सिद्धान्ते—पूर्वपक्षेऽपूर्वविधित्वापत्तेर्नियमविधित्वलाभाय न गुणफलसंबन्ध इत्युच्यते, तदनुवदति—**नचेति** ॥ किंनिधनपदमुद्देश्यसमर्पकं उत वृष्टिकामपदं वा । **नाद्यः**; तस्य पाठत एव प्राप्तिसंभवेन वैयर्थ्यात्, वृष्टिकामपदेन विशेषणे विशिष्टोद्देशापत्तिः । वृष्टिकामपदे सौभरलक्षणापत्तिश्च । **अतएव न द्वितीयः**; वृष्ट्यादिसाधनसौभरवृत्तिनिधनोद्देशेनापि हीषादेः पाठतः प्राप्तत्वेन विधानासंभवाच्च । यदितु वृष्ट्यादिसाधने सौभर इव तदसाधनसौभरनिधनेऽपि कदाचिद्धीषादेः प्राप्तिसंभवात् तद्व्यावृत्तिफलको नियमविधिरित्युच्यते, तदा नित्यनैमित्तिकसौभरप्रयोगनिधनाधारस्तोभाक्षराभावेन सापेक्षत्वापत्तिः । अतो लघुभूतस्यापि नियमविधेरसंभव इत्यभिप्रेत्य दूषयति—**तथात्व इति** ॥ अतः सौभरस्य हीषादिनिधनस्यच फलभूते द्वे वृष्टी तदुभयमेलनान्महती वृष्टिरिति पूर्वपक्षे प्रयोजनं दर्शयन् तमुपसंहरति—**अत इति**॥

नियमविधिलाघवानुरोधाद्वृष्टिकामादिपदैर्वृष्टिसाधनसौभरलक्षणामङ्गीकृत्यापि हीषादिनियमविधिरेवाश्रीयते। पक्षप्राप्तिश्च पाठान्निधनस्थान एवेति नियमस्यापि तत्स्थानकत्वलाभः। **वस्तुतस्तु**—नियमविधिलाघवानुरोधेन हीषादेर्वृष्ट्याद्यर्थतैव स्वसाधनसौभराधारत्वसंबन्धेनाश्रीयत इति न लक्षणापि। संबन्धघटकीभूतंच सौभरं न सौभरत्वावच्छिन्नम्, अपितु सौभरविशेष एव। शाखाभेदेन हि क्वचिद्विजातीयानि सौभराणि निधनान्तरयुक्तानि समाम्नातानि। तत्रच हीषः पक्षेऽप्यप्राप्तत्वान्न तस्य सौभरस्य संबन्धघटकत्वम्, अपितु यज्जातीयसौभरे हीषादीन्यनियमेन समाम्नातानि तज्जातीयस्यैव तत्। अतश्च वृष्ट्यर्थं निरुक्तसंबन्धेन हीषेवेति नियमकरणात्संबन्धघटकीभूतसौभरे निधनान्तरव्यावृत्तिवद्विजातीयसौभरान्तरस्यापि वृष्ट्याद्यर्थत्वव्यावृत्तिसिद्धिः। अतश्च तन्नित्यप्रयोगविषयमेव संपद्यत इति विवेकः॥ १३॥ इति त्रयोदशं सौभराधिकरणम्।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां द्वितीयाऽध्यायस्य द्वितीयः पादः॥

## (आश्रयलाभेन गुणविधित्वेऽपि नियमविधिलाघवानुसारेण व्यवस्थापकत्वमेव युक्तमित्युपपादनम्)

प्राचीनैराश्रयालाभात् गुणफलसंबन्धविधानस्य दूषितस्यापि पूर्वोक्तरीत्या आश्रयलाभसंभवेनायुक्ततां तद्दूषणस्य मत्वा नियमविधिलाघवमात्रेणैव सिद्धान्तमाह—**नियमविधीति**॥

## (नियमविधिलाघवेनान्यत्रेव लक्षणाश्रयणमपि न दोषायेत्यादिविवेचनम्)

फलत्रयार्थमपि सौभरं योगसिद्ध्यधिकरणन्यायेनैकस्मिन् प्रयोगे सकृदुच्चरितमेकमेव फलं साधयति, नेतरत्; सौभराङ्गत्वेनैकार्थत्वात् त्रीण्यपि तानि विकल्पेन प्राप्येरन्। ततश्च वृष्टिफलार्थे सौभरप्रयोगे यथा हीषः प्राप्तिः, तथाऽन्यान्यपि विकल्पेन प्राप्येरन्निति हीषः पक्षे प्राप्तस्य युक्तो नियमः। सोऽपिच विधेयहीषादिगतफलसंभवे उद्देश्यगतत्वेन तत्फलाङ्गीकारस्यान्याय्यत्वात् शेषनियम एव॥ प्रत्यक्षस्यापि पाठस्य विधिकल्पनया सामान्यमुखेनच वृष्टिकामप्रयोगमुपारूढस्य मन्थरप्रवृत्तिकतया ततः पूर्वप्रवृत्त्यङ्गीकारेणात्र हीष एव विधेयत्वात्। अतश्च तद्गतस्यैव नियमस्य फलत्वात् शेषिनियमाभावेन नित्यनैमित्तिकसौभरीयप्रयोगे हीषादिप्राप्त्यविघात इति हीषादिनियमविधिरेवेत्येवकारेण सूचितम्। नियमविधिलाघवानुरोधेन वार्त्रघ्नीपौर्णमासीपदे पौर्णमासीप्रधानसंबन्ध्याज्यभागलक्षणायाः प्रयाजशेषवाक्ये विभक्त्योर्लक्षणायाश्चाङ्गीकारात् इहापि तस्या अदुष्टत्वमपिना सूचितम्॥ **पाठादिति**॥ यदि तु पाठस्य निधनाख्यद्वारसंबन्धेन कृतार्थत्वान्न नित्यनैमित्तिकप्रयोगे श्रुतिकल्पकत्वमिति तत्प्रयोगे हीषाद्यप्राप्तिस्तदवस्थेत्युच्येत, तदा वृष्टिसाधनसौभरमात्रलक्षणायामपि लघुभूतनियमफलकत्वलाभायैव निधनस्थानकत्वलाभः। एतद्विध्यभावेहि पाठेन निधन एवानियमेन हीषादि प्राप्येत। ततश्च विधिफलसामर्थ्यादेव निधनस्थानकत्वलाभः, न तु पाठात्। अतएव नियमापेक्षितपाक्षिकत्वसिद्ध्यर्थं कल्पितापि श्रुतिः सामान्यतो यत्किंचित्प्रयोगवृत्तिसौभरीयनिधनसंबन्धितयैव कल्प्यत इति युक्तम्। तया हीषादेर्नित्यनैमित्तिकप्रयोगविषयत्वं वृष्ट्यर्थसौभरेच निधनस्थानकत्वमिति कौस्तुभे द्रष्टव्यम्॥

## (लक्षणां विनैव पूर्वोक्तार्थसाधनम्)

यथैव वासिष्ठानां नाराशंसो द्वितीयः प्रयाज इत्यत्र वासिष्ठाभिलषितफलजनकदर्शपूर्णमासाङ्गद्वितीयप्रयाजद्वारा वासिष्ठार्थत्वेन नाराशंसमन्त्रविधानमङ्गीकृतम्, तद्वदिहापि परंपरासंबन्धेन वृष्ट्यर्थहीषादिनियमविध्युपपत्तेर्न लक्षणापीति पक्षान्तरमाह—**वस्तुतस्त्विति**॥ **सौभरविशेष एवेति**॥ हीषादिनिधनघटितसौभरविशेष एवेत्यर्थः। **अतश्चेति**॥ वृष्टौ हीषेव विजातीयसौभरद्वारा कुर्यादिति नियमविध्यर्थे फलिते वृष्ट्यर्थसौभरविधावपि वृष्ट्यर्थं विजातीयानां सौभराणां विकल्पेन प्राप्तानां हीष्निधनकस्यैव सौभरविशेषस्य वृष्टिसाधनता नान्येषामित्यपि नियमान्तरं फलितं भवति। नहि भिन्ननिधनकसौभरस्य वृष्ट्याद्यर्थत्वेन तादृशनियमान्तराभावे वृष्टौ हीषेवेति नियमः कथमपि संपादयितुं शक्यते। निधनान्तरयुक्तस्यापि सौभरस्य तदर्थं क्रियमाणत्वात्॥

## (कांस्यभोजिन्यायस्वरूपं, तेन प्रकृतार्थनिर्णयः, पूर्वोत्तरकल्पप्रयोजनं च)

अतश्च यथैव शिष्याचार्ययोः सह भोजनप्राप्तौ शिष्यस्य कांस्यभोजित्वनियममनियतपात्रभोज्याचार्योऽनुरुन्धानो लोके दृश्यत इति द्वादशाधिकरणे कांस्यभोजिन्याये वक्ष्यते, तेन न्यायेन वृष्ट्यर्थसौभरविधिरनियतसौभरग्राह्योपि द्वितीयनियममनुरुन्धानो हीषादिनिधनघटितसौभरविशेषमेव गृह्णातीति सिद्धं नियमान्तरमित्यर्थः। क्व तर्हि शाखान्तरस्थसौभरस्य निवेश इत्यपेक्षायामाह—**अतश्चेति**॥ सिद्धान्ते सौभरफलात् वृष्ट्यादेर्नातिरिक्तं वृष्ट्यादिफलं हीषादिभ्य इति प्रयोजनं व्यतिरेकत एव ज्ञातुं शक्यमिति नोक्तम्॥

॥ इति त्रयोदशं सौभराधिकरणम्॥

इति कविमण्डन-खण्डदेवशिष्य-शंभुभट्टविरचितायां भाट्टदीपिकाव्याख्यायां प्रभावल्यां द्वितीयाऽध्यायस्य द्वितीयः पादः॥

अथ तृतीयः पादः ।

( १ अधिकरणम् । )

**गुणस्तु** ॥ ज्योतिष्टोमे "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान्ग्रहान्गृह्णीयात्, यदि बृहत्सामा शुक्राग्रानि"ति श्रुतम् । तत्र यदिशब्दोपात्तस्य निमित्तत्वस्य न तावद्रथन्तरे बृहति वान्वयः; तस्य विशेषणत्वेन वृत्त्यनर्हत्वात् । नाप्यन्यपदार्थे; तस्य कादाचित्कत्वाभावात् । नापि विशिष्टे ज्योतिष्टोमे; सामान्तराणामपि नियतत्वेन बृहद्रथन्तरयोरन्ययोगव्यावृत्त्या विशेषणत्वासंभवात्, ज्योतिष्टोमत्वावच्छेदेनायोगस्यापि व्यावर्तयितुमशक्यत्वाच्च । अतः समासार्थस्य केवलरथन्तरसामकत्वस्य प्रकृते कर्मणि वा । उभयथापि कादाचित्कत्वाभावात् बहुव्रीह्यन्तपदवैयर्थ्यापत्तेरैन्द्रवायवाग्रत्वशुक्राग्रत्वयोर्विकल्पापत्तेश्च न तत्रापि तदन्वय इत्यर्थः ॥

( भाष्योदाहृतजगत्सामान्तवाक्यानुदाहरणे निमित्तनिर्देशेन विषयवाक्यसंग्रहः )

**अत्रभाष्ये**—"यदि रथन्तरसामेत्यादि यदि जगत्सामा आग्रयणाग्रान्गृह्णाती"त्यन्तमुदाहृतम् । तत्र जगत्सामवाक्ये कृत्स्नक्रतुसंयोगहेतुकप्रकृतानिवेशहेतोः पूर्वपक्षसाधकतया सूत्रे उपात्तस्याऽसंभवात् जगच्छब्दार्थाभावेनैव प्रकृतकर्मण्यनिवेशस्य दशमे साधयितव्यत्वात् सिद्धान्तासंभवेन व्यर्थस्तदुपन्यास इत्यभिप्रेत्य प्रस्तुतविचारोपयोगितया आद्यं वाक्यद्वयमेवोदाहरति—**ज्योतिष्टोम इति** ॥

( विषयवाक्यार्थः प्रासङ्गिकी पूर्वपादसंगतिः अध्यायसंगतिश्च )

येषु दारुपात्रेषु तत्तद्देवताभेदेन सोमरसो गृह्यते ते ग्रहाः ऐन्द्रवायवमैत्रावरुणाश्विनाद्याः प्रातस्सवने गृह्यन्ते । तत्र रथन्तरसामत्वपक्षे ऐन्द्रवायवमादितः कृत्वा ते ग्रहा ग्राह्याः । बृहत्सामत्वपक्षे शुक्रमादितः कृत्वा ते ग्रहा ग्राह्या इत्युदाहृतवचनार्थः । पूर्वपादे पक्षद्वयेऽपि निश्चितविधेयत्वस्य गुणस्य क्व पूर्वत्रासंभवात् भेदकत्वं क्व वा फले विधानेन व्यवस्थार्थत्वेन वा पूर्वत्र संभवादभेदकत्वमिति निर्णीते अधुना सन्दिग्धविधेयत्वस्य गुणस्य क्व विधेयत्वात् भेदकत्वं क्व वा तदभावादभेदकत्वमिति निर्णयार्थं चिन्तान्तरारम्भ इति प्रासङ्गिकीमथवाऽवसररूपां वा पादसङ्गतिं भेदाभेदनिरूपणादध्यायसङ्गतिंच पादान्तरत्वादनन्तरसङ्गत्यभावेऽप्यक्षतिंच स्पष्टत्वादप्रदर्श्य पूर्वपक्षमेवाह—**तत्रेति** ॥

( यदिशब्दस्य निमित्तपरत्वनिरासः )

यद्यपि यदि राजन्यं वैश्यं वा याजयेदित्यादौ यदिशब्दो निमित्तपरतया दृष्टः; तथापीह विशेषणस्य विशेष्यस्य विशिष्टस्य वा निमित्तत्वासंभवान्न तत्प्रतिपादकतया नैमित्तिकोऽग्रतागुणः क्रत्वङ्गतया विधातुं शक्यत इति पूर्वपक्षोपपादकतयोपपादयति—**यदिशब्दोपात्तस्येति** ॥ **वृत्त्यनर्हत्वादिति** ॥ बहुव्रीह्यन्तपदे प्रथमोपनिपतितस्य रथन्तरादिशब्दस्यान्यपदार्थोपसर्जनीभूतस्वार्थप्रतिपादकत्वेन तस्मिन् पदान्तरोपात्तनिमित्तत्वान्वये रथन्तरपदस्य सापेक्षतया सविशेषणानां वृत्तिनिषेधात् वृत्त्यनर्हत्वापत्तेः केवलरथन्तरमात्रस्य निमित्तत्वे अग्नावपि विद्यमानस्य निमित्तत्वापत्तेश्चायुक्तं रथन्तररूपविशेषणस्य निमित्तत्वमित्यर्थः । **कादाचित्कत्वाभावादिति** ॥ अन्यपदार्थः सोमद्रव्यं, तत्साध्यो यागो वा । उभयथापि कादाचित्कत्वाभावात् बहुव्रीह्यन्तपदवैयर्थ्यापत्तेरैन्द्रवायवाग्रत्वशुक्राग्रत्वयोर्विकल्पापत्तेश्च न तत्रापि तदन्वय इत्यर्थः ॥

( अयोगव्यावृत्त्याऽन्ययोगव्यावृत्त्या वा क्रतौ रथन्तरविशेषणत्वासंभवात् विशिष्टनिमित्तत्वपक्षेन रथन्तरनिमित्तत्वम् )

**नापि विशिष्ट इति** ॥ विशिष्टे तदन्वयपक्षेऽपि किमन्यपदार्थो विशेषणं विशेष्यं वा । **नाद्यः**; 'सप्तमीविशेषणे बहुव्रीहा'विति सूत्रेण रथन्तरशब्दस्य पूर्वनिपातेन विशेषणत्वप्रतीतेर्विशेष्यत्वायोगेन व्युत्पत्तिभङ्गापत्तेः । नच—विग्रहवेलायामन्यपदार्थस्य क्रतोः षष्ठ्यन्तत्वेन विशेषणत्वस्य रथन्तरस्य प्रथमान्तत्वेन विशेष्यत्वस्य च प्रतीतेर्वैशिष्ट्यसंभव इति—वाच्यम्; विग्रहवाक्यस्यावैदिकतया तदुपात्तविशेषणविशेष्यभावेन निमित्तत्वान्वयानुपपत्तेः, ग्रहाग्रतानिमित्तभूते रथन्तरे प्रकरणादेव क्रतुमत्त्वसिद्धेः स्वायोगव्यावृत्त्या क्रतोर्विशेषणत्वस्य वैयर्थ्याच्च, क्रत्वन्तरयोगव्यावृत्त्या विशेषणत्वस्योपदेशेन तद्व्यावृत्तेः प्रमाणाभावादेव सिद्धत्वेन वैयर्थ्याच्च । अतिदेशेन तद्व्यावृत्तेस्तस्याप्यनिष्टत्वाच्चेति क्रतोर्विशेषणत्वपक्षमयुक्तं मत्वा संभवदुक्तिकं द्वितीयं पक्षं निरस्यति—**ज्योतिष्टोम इति** ॥

( रथन्तरमात्रसाधनत्वविधाने वाक्यापत्तेः विषमशिष्टविकल्पायोगेन तदनङ्गीकारेणापि निमित्तत्वानुपपत्तेश्च कर्मभेदस्यैव मुख्यत्वम् )

गायत्र्यादीनां सामान्तराणामपि स्तोत्रान्तरसंबन्धितया ज्योतिष्टोमे विशिष्य विहितत्वेन तद्व्यावृत्त्या रथन्तरादेर्विशेषणत्वानुपपत्तिरित्यर्थः । **ज्योतिष्टोमत्वावच्छेदेनेति** ॥ शङ्खः पाण्डुर एवेत्यादौ पाण्डुरत्वादेर्विशेष्यतावच्छेदकावच्छेदेन स्वायोगव्यावृत्त्या विशेषणत्वस्य दृष्टत्वेऽपि प्रकृते तदसंभवः; नहि गायत्र्यादिसामान्तरकार्यावच्छिन्ने क्रतौ शक्यो रथन्तरायोगो व्यावर्तयितुमित्यर्थः । अतो रथन्तरमेवास्य सामेति समासार्थावगमात् तस्यच प्रकरणेनाप्राप्तत्वेन निमित्तत्वानुपपत्तेर्विधेयत्वावगमात् प्रकृते ज्योतिष्टोमे केवलरथन्तरसामत्वस्य विधाने ऐन्द्रवायवाग्रतादेरपि विधाने वाक्यभेदापत्तेः तदङ्गीकारेणापि तद्विधाने केवलरथन्तरसामकत्वस्य ज्योतिष्टोमे साक्षादनन्वयित्वेन स्तोत्रसाधनमन्त्रद्वारा निवेशस्य वाच्यत्वे तेषु सामान्तरस्य विशिष्याम्नानसिद्धत्वेन

ग्रहाग्रतानिमित्तत्वेन निवेशायोगादुभयविशिष्टकर्मान्तरमेव विधीयते, यदिशब्दस्त्वविवक्षितार्थ इति प्राप्ते—

बृहद्रथन्तरयोर्ज्योतिष्टोमे पाक्षिकत्वात्स्वायोगव्यावृत्त्या परस्परायोगव्यावृत्त्या वा विशेषणत्वोपपत्तिः। नच ज्योतिष्टोमत्वावच्छेदेन तदभावः; स्वावान्तरकार्यपृष्ठस्तोत्रत्वावच्छेदेन तदुपपत्तेः, अन्यथा तवापि साक्षाद्यागे प्रोक्षणावघातादौ तदसंभवावश्यम्भावात्। अतो युक्तैव रथन्तरविशिष्टस्य क्रतोर्निमित्तता।

वस्तुतस्तु—न क्रतोर्निमित्तान्तर्भावः; प्रयोजनाभावात्, प्रकरणावगतक्रत्वङ्गत्वबलेनान्यपदार्थसंबन्धस्यानुवादत्वात्, अन्यथा ज्योतिष्टोमरूपान्यपदार्थस्य विकृतावभावेन शुक्राग्रतादेरनापत्तेः। अतो लक्षणयापि रथन्तरमेव निमित्तम्, नैमित्तिकोऽग्रताविशेषः प्रकृतापूर्वसाधनीभूतग्रहोद्देशेन विधीयते। न च पाठादैन्द्रवायवाग्रत्वनियमस्य प्राप्तेस्तद्विधिवैयर्थ्यम्; ततः पूर्वमेव नैमित्तिकतया विधानात्। तत्प्रयोजनं च निमित्ताभावे प्रकृतौ विकृतौ च

---

विषमशिष्टविकल्पायोगादनिविशमानरथन्तरमात्रसामत्वगुणस्य भेदकत्वादुभयविशिष्टकर्मान्तरविधिरेवायम्। तत्रचाव्यक्तत्वात् ज्योतिष्टोमातिदेशप्राप्तसर्वस्तोत्रेषु रथन्तरसाम्नो निवेशस्तत्रैव चावान्तरप्रकरणादग्रताविशेषोऽङ्गमित्यभिप्रेत्य पूर्वपक्षमुपसंहरति—अत इति॥

**( यदिशब्दस्याविवक्षितत्वेन विध्युपपत्तिनिरूपणम् )**

विधायकस्य स्यादित्यादेर्यदिशब्दोपहतविधिशक्तित्वात्कर्मान्तरविधायकत्वानुपपत्तिं परिहरति—**यदिशब्दस्त्विति**॥ यदिशब्दस्य प्राप्तिद्योतकमात्रत्वेन प्रमाणान्तरेण प्राप्त्ययोगे "यदाग्नेय" इत्यादिष्विवाविवक्षितार्थत्वमित्यर्थः। यानितु "यदिशब्दपरित्यागो रुच्यध्याहारकल्पना। व्यवधानेन संबन्धो हेतुहेतुमतोश्च लिङि"त्यादिना वार्तिके यदिशब्दान्वयाय प्रकारान्तराणि दर्शितानि, तदुपपादनं कौस्तुभे द्रष्टव्यम्॥

**( पूर्वपक्षिणापि अवान्तरकार्यद्वारैव विशेषणत्वं वक्तव्यमित्यादिनिरूपणम् )**

यदिशब्दोपात्तनिमित्तत्वस्य रथन्तरविशिष्टक्रतुरूपविशेष्यान्वयेऽपि एकार्थीभावलक्षणसामर्थ्यविघातेन समासोपपत्तेस्तत्रच गायत्र्यादिसामान्तरकार्यावच्छिन्ने क्रतौ रथन्तरायोगस्य प्राप्त्या तद्व्यावृत्तिसिद्धेः संभवत्येव रथन्तरस्य विशेषणत्वम्। अतो,नानिविशमानतेत्यभिप्रेत्य सिद्धान्तमाह—**बृहद्रथन्तरयोरिति**॥ एकपृष्ठस्तोत्ररूपावान्तरकार्यद्वारा क्रतौ द्वयोरपि योगप्राप्तौ परस्परव्यावृत्त्या वा विशेषणत्वमित्यर्थः। **स्वावान्तरेति**॥ स्वावान्तरकार्यद्वारा सर्वेणापि विशेषणेन विशेष्यमवच्छेत्तव्यम्। अस्तिच बृहद्रथन्तरयोः पृष्ठरूपावान्तरकार्ये व्याप्यवृत्तितेति तद्द्वारा सा क्रतावप्यवच्छेदकावच्छेदेन व्याहतैवेत्यर्थः। विपक्षे बाधकमाह—**अन्यथेति**॥ कर्मान्तरत्ववादिनोऽपि रथन्तरसामत्वायोगस्य प्रोक्षणादौ सर्वथा विद्यमानस्य व्यावृत्त्यसिद्धेर्विशेषणत्वानुपपत्तिस्तुल्येत्यर्थः। यद्यप्यतिदेशप्राप्तसामान्तरव्यावृत्त्या पूर्वपक्षे तस्य विशेषणत्वं नायोगव्यावृत्त्या; तथापि साक्षात् क्रतौ सामान्तरयोगस्यासंभवात् तद्व्यावृत्त्या रथन्तरसामत्वस्य विशेषणत्वमनुपपन्नमेव। अतः स्तोत्ररूपावान्तरकार्यद्वारैव सामान्तरवत्त्वस्य क्रतौ प्राप्त्या तद्द्वारैव रथन्तरसामत्वविशेषणेन व्यावृत्तिः

कर्तव्या। साच ममापि तुल्येति साक्षाद्याग इत्यनेन सूचितम्॥

**( विकृतौ विशेष्याभावेनैन्द्रवायवाग्रतानापत्त्या रथन्तरसाममात्रनिमित्तत्वोपपादनम् )**

**अन्यथेति**॥ ज्योतिष्टोमे निमित्ते तदपूर्वसाधनीभूतग्रहणाङ्गत्वेनाग्रताविधानेऽपि सत्यपि विकृतावङ्गितावच्छेदकरूपाक्रान्तत्वे चोदकरहितायां तद्धोमस्येव निमित्तरहितत्वात् तदग्रताप्राप्त्यनापत्तिरित्यर्थः॥

**( विशेषणान्वयस्यैव न्यायसिद्धत्वाल्लक्षणापि न दोषायेत्यादि निरूपणम् )**

**लक्षणयापीति**॥ यद्यप्यन्यपदार्थोपसर्जने रथन्तरे निमित्तत्वान्वयोऽव्युत्पन्नः; तथापि शाब्दबोधे विशिष्ट एवान्वितस्यापि निमित्तत्वस्य विशेष्ये विशिष्टे वा कादाचित्कत्वाभावेन बाधे सति विधिनिषेधौ विशेषणे संक्रामतो विशेष्ये बाध इति न्यायेन शिखी ध्वस्त इत्यादिवत् विशेषणे संक्रान्त्युपपत्तिरूपं युक्त्यन्तरं यथाऽनुक्तसमुच्चयार्थकादिना सूचितम्, तथा यदिशब्दस्याविवक्षितार्थत्वाकल्पनापेक्षया लक्षणया अदुष्टत्वमपि सूचितम्। नच प्रकरणलभ्यान्यपदार्थानुवादे प्रयोजनाभावः, वैरूपसामेत्यादौ वैरूपादीनां बहुव्रीह्यन्तनिर्देशसादृश्येन पृष्ठस्तोत्र एव निवेशरूपप्रयोजनस्य दशमे वक्ष्यमाणत्वात्। अतो रथन्तरमेव निमित्तम्। तस्यच प्रकृतावेव निवेशात्तत्रैवाग्रताविशेषो नैमित्तिको विधीयत इत्याह—**नैमित्तिकन्त्विति**॥

**( बृहद्विरोधिनो रथन्तरस्य रथन्तरविरोधिनो बृहतश्च निमित्तत्वम् )**

**प्रकृतौ विकृतौ चेति**॥ रथन्तरमात्रस्य निमित्तत्वेऽपि अप्रवृत्तप्रवर्तकत्वात् विधेरस्मिन् सति कुर्यादिति कादाचित्क्याः कर्तव्यताया विध्यर्थत्वात् कादाचित्केनैव निमित्तेनान्वयात् यदिशब्दोपात्तस्य निमित्तत्वस्य कादाचित्कत्वव्याप्यत्वात् कादाचित्कत्वस्यच बृहद्रथन्तरयोरन्योन्यविरोधप्रयुक्तत्वात् बृहद्विरोधिनो रथन्तरस्य रथन्तरविरोधिनो बृहतश्च निमित्तत्वं ज्ञेयम्। विरोधिताच क्वचिद्वैकल्पिकत्वात् क्वचित् बाधकसत्त्वात् भवति, यथा प्रकृतौ वैकल्पिकत्वात् विकृतावपि यत्र नैकतरनियमस्तत्रान्यतराग्रताया लोपो निमित्ताभावात्, यत्रतु तन्नियमस्तत्र विरोधिसामान्तरसत्त्वे बाधकस-

लोपः। यद्यपि च सर्वत्र निमित्तस्य सत्त्वे नैमित्तिकावश्यकत्वमात्रं प्रमेयम्; तथापि तस्यात्र पाठादेव सिद्धेस्तदभावे तदभाव एव प्रमेयं बोध्यम्। तस्मान्न कर्मान्तरविधिः ॥ १ ॥ ३१ ॥ इति द्वितीये रथन्तरसामाधिकरणम् ॥

( २ अधिकरणम् )

अवेष्टौ ॥ राजसूये राजकर्तृके प्रत्येकदक्षिणाम्नानादवेष्टिसंज्ञकाः पञ्चेष्टयः पृथक्प्रयोगाः समाम्नाताः। तदवान्तरप्रकरणे "यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिघारयेत् यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवमि"ति श्रुतम्।

तत्रापि पूर्ववद्ब्राह्मणकर्तृकत्वादि निमित्तमेव; यदि शब्दश्रुतेः, राजसूयस्य त्रैवर्णिककर्तृकत्वेन ब्राह्मणादेः प्राप्तत्वाच्च, राजशब्दस्य प्रजापालनकर्तरि सर्वलोकप्रसिद्धेः

---

त्वात् सेति। तत्र रथन्तरादेर्निमित्तस्य सत्त्वेन तत्तदग्रताप्राप्तावपि यत्र सत्रादौ द्वयोरपि समुच्चयाद्विरोधिताभावस्तत्र निमित्तत्वाभावात् तत्तदग्रतालोप एवेत्यर्थः ॥ **पाठादेवेति**॥ एतच्चैन्द्रवायवाग्रतामात्रविषयम्। शुक्राग्रताविधौ तु तस्याः पाठादिना संभवत्प्राप्तिकत्वाभावेन निमित्ते नैमित्तिकावश्यकत्वप्रमेयस्यैवावश्यबोध्यत्वादिति ध्येयम्। सिद्धान्तमुपसंहरति —**तस्मादिति** ॥

**( पूर्वोत्तरकल्पप्रयोजननिरूपणम् )**

प्रयोजनं पूर्वपक्षे ज्योतिष्टोमाङ्गभूतं सोमयागान्तरं बृहन्मात्रसामकं रथन्तरमात्रसामकंच कार्यम्, सिद्धान्ते नेति, तथा ज्योतिष्टोमे रथन्तरसामत्वाभावेऽपि पाठप्राप्तैन्द्रवायवाग्रतैव पूर्वपक्षे, सिद्धान्ते नेतिच स्पष्टत्वान्नोक्तम् ॥

**॥ इति प्रथमं ग्रहाग्रताया ज्योतिष्टोमाङ्गताधिकरणम् ॥**

---

**( आग्नेयादिपञ्चावेष्टिपृथक्प्रयोगत्वम्। तेषां च प्रतियोगिविधयाऽत्रापेक्षितानां निर्देश इत्युपपादनम् )**

राजसूये "आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो वही दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा" इतिवाक्यैरवेष्टिसंज्ञकेष्टयः पञ्च विहिताः। अत्रैकावेष्टिसंज्ञायोगेऽपि साकमेधवदुत्पत्तिवाक्ये प्रत्येकं दक्षिणाम्नानात् दक्षिणायाश्च कर्त्रानत्यर्थत्वात् तद्भेदेन कर्तृत्वभेदप्रतीतेस्तद्भेदेन च प्रयोगभेदावगतेः एकैकं कर्माभ्यन्वाधानादि ब्राह्मणतर्पणान्ताङ्गविशिष्टं भेदेनानुष्ठेयमित्येकादशे वक्ष्यमाणमभिप्रेत्य विचारयिष्यमाणवाक्यविधेयप्रयोगान्तरप्रतियोगिविधेयाऽपेक्षितानि पूर्वकर्मप्रयोगविधायकवाक्यान्यादावुदाहरति—**राजसूय इति** ॥

**( फलान्तरशङ्कानिरासः सिद्धान्तसाधकनिर्देशश्च )**

फलान्तरशङ्कानिवृत्त्यर्थं राजसूय इत्युक्तम्। सिद्धान्तसाधकतया राजकर्तृक इतिच। प्रस्तुतविचारविषयवाक्यमुदाहरति —**तदवान्तरेति** ॥

**( यदि ब्राह्मणो यजेतेति विषयवाक्यनिर्देशस्तदर्थश्च वैश्यवाक्ये मध्ये निधनस्यानुवादश्च )**

यदि ब्राह्मणो यजेत तदा पञ्चानामप्येतेषां हविषां वेद्यामासादने पञ्चमस्थाने पठितस्य बार्हस्पत्यस्य तृतीयस्थाने मध्यमे आसादनं कृत्वा अवशिष्टहविषां प्रत्येकं क्रमेणाहवनीये प्रक्षेपानन्तरं तद्धविःसंस्कारार्थोपस्तरणाभिघारणाज्यशेषेण जुहूस्थेन बार्हस्पत्यस्य मध्ये आसादितस्याभिघारणं कृत्वाऽन्ते तस्य होमः कर्तव्यः। एवमितरयोरपि ज्ञेयमित्युदाहरणवाक्यत्रयस्यार्थः। वैश्यवाक्ये स्वत एव वैश्वदेवस्य तृतीयस्थाने पठितत्वात् तेनैव मध्ये निधानप्राप्तेर्मध्ये निधानविधिर्नित्यानुवाद इति विशेष इत्युक्तमधिकरणमालायाम् ॥

**( कर्त्रादीनां भावनाप्रयोगभेदकत्वेन प्राकरणिकसङ्गतिः )**

तत्र गुणादीनां विध्यापादनद्वारा भेदकत्वात् कर्त्रादीनां च गुणानां भावनोत्पत्तावनन्वयित्वेन तद्विध्यापादनद्वारा तद्भेदकत्वायोगेऽपि प्रयोगान्वयित्वात् तद्विध्यापादनद्वारा भावनाप्रयोगभेदकत्वनिरूपणात् प्राकरणिकीं सङ्गतिं च स्पष्टत्वादप्रदर्श्य पूर्वपक्षमेवाह—**तत्रापीति** ॥

**( ब्राह्मणकर्तृकत्वे निमित्ते मध्ये निधानगुणविधिरिति पूर्वपक्षः )**

ब्राह्मणस्य कर्तृतासंबन्धेन यदिशब्दोपात्तनिमित्तान्वयित्वोपपत्तेः विशिष्टविधिगौरवप्रसङ्गाच्च तस्यामेवेष्टौ तत्तत्कर्तृत्वे निमित्तत्वे मध्ये निधानादिगुणविधिरित्यर्थः। प्राप्त्यभावं निरस्यति—**राजसूयस्येति** ॥

**ननु**—राजसूयवाक्ये राजशब्दश्रवणात्तत्पदवाच्यराजत्वजातिमत एवाधिकारप्रतीतेस्तद्रहितब्राह्मणादेस्तत्र कथं प्राप्तिरित्यत आह—**राजशब्दस्येति। प्रजापालनकर्तरीति** ॥ यथैव कुलालनापितचोरादिशब्दानां तत्तत्क्रियाकर्तृत्वे शक्तिः सर्वलोकप्रसिद्धेस्तथैव तदविशेषादन्याप्रेरितप्रजापालनकर्तृत्वे राजपदस्य शक्तेस्तद्वत्त्वेन ब्राह्मणादीनामपि तत्पदवाच्यत्वेन तत्राधिकारात् प्राप्तिरित्यर्थः ॥

**( लाघवानुगृहीताया अपि द्रविडप्रसिद्धेः सर्वत्रोक्तप्रसिद्धितो दुर्बलत्वात् जातिं विहायापि राजशब्दप्रयोगः )**

**ननु**—सखण्डोपाधेः शक्यतावच्छेदकत्वकल्पने गौरवा-

क्षत्रियमात्रे द्रविडप्रसिद्धेस्तु म्लेच्छदेशप्रसिद्धित्वेनासाधकत्वात्, व्याकरणप्रसिद्धेस्तन्मूलकत्वेनानियामकत्वाच्च, सर्वलोकप्रसिद्धेः श्रौतयदिशब्दमूलकत्वाच्च । अतो ब्राह्मणादिकर्तृकत्वे निमित्ते मध्येनिधानपूर्वकप्रत्याहुत्यभिघारणविशिष्टपञ्चहविष्कैकेष्टिप्रयोगो राजसूयान्तर्गतो विधीयते । प्रत्येकप्रयोगाश्च पञ्चानुलोमविषया इति बोध्यम् । "एतया-

पत्तेर्द्रविडानामपालयत्यपि क्षत्रिये राजशब्दप्रयोगात् तज्जातिवाचित्वमेव लाघवाद्युक्तमित्यत आह—**क्षत्रियमात्र इति** ॥ द्रविडानां प्रत्यन्तदेशवासित्वेन ('प्रत्यन्तो म्लेच्छदेशः स्या'दिति कोशात्) तत्प्रसिद्धेर्म्लेच्छदेशप्रसिद्धित्वेन न पीलुशब्द इव राजशब्देऽपि शक्तिग्रहसाधकत्वम् । नहि शक्तिग्राहकप्रमाणगत एव प्राबल्ये निर्णायके सति सन्देहाभावे स्वतोऽप्रमाणभूतस्य लाघवस्य निर्णायकत्वं युज्यते । अतएव जातिं विहायापि सर्वेषां प्रयोगस्य निर्णायकत्वान्न बर्हिराज्यादिशब्दानामिवेह जातिवाचित्वं युक्तमित्यर्थः ॥

**(व्याकरणस्मृतेरपि साधुत्वान्वाख्यानमात्रार्थत्वं न शक्तिग्राहकत्वमिति कथनम्)**

**ननु**—तस्य कर्मेत्यर्थे 'ब्राह्मणादिभ्यश्चे'ति सूत्रेण ब्राह्मणादिगणपठितराजशब्दात् परतः ष्यञ्प्रत्ययेन, **अथवा**—'पत्यन्तपुरोहितादिभ्यो यगि'ति सूत्रेण पुरोहितादिगणपठितत्वेन तस्माद्यक्प्रत्ययेन वा राजशब्दस्य राज्ञः कर्म राज्यमित्येवं प्रजापालनकर्मणि व्युत्पत्ते राजशब्दस्य ब्राह्मणशब्दवत् प्रजापालनकारिवाचित्वानवगमात्सिद्धवन्निर्देशेन जातिवाचितैवाध्यवसीयते। ततश्च दुर्बलप्रसिद्धेरपि प्रबलव्याकरणस्मृत्युपष्टब्धत्वेन प्राबल्योपपत्तेर्जातिवाचित्वमेव युक्तमित्यत आह—**व्याकरणेति** ॥ व्याकरणस्मृतेस्साधुत्वान्वाख्यानमात्रत्वेन शक्तिग्रहे प्रमाणाभावात्, तत्त्वेपिवा प्रजापालनकर्तुः राज्ञो यत् प्रजापालनरूपं कर्म तत् राज्यमित्यर्थे राज्यशब्दव्युत्पत्तावपि राजशब्दस्य प्रजापालनकर्तृवाचित्वानिवारणात् तस्या अपि द्रविडप्रसिद्धिमूलकतया नियामकत्वानुपपत्तिः । नचैतावता राज्यशब्दशक्तिग्रहणस्य राजशब्दव्युत्पत्तिग्रहसापेक्षत्वम्; राजकर्मत्वेनावोधेऽपि प्रजापालनत्वेन बुद्धस्यैव तस्य शक्यतावच्छेदकत्वोपपत्तेः । **किंच**—सार्वलौकिकप्रसिद्धेरपि "न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतिनः । न शूद्रराज्ये वसेदि"त्यादिस्मृत्युपष्टब्धत्वान्न केवलं प्रसिद्धेरेव क्षत्रियस्य तद्बोध्यत्वम्। **एतेन**—क्षत्रियस्यैव प्रजापालनं परमो धर्मः । राजा सर्वस्येष्टे ब्राह्मणमित्यादिमन्वादिस्मृतीनामपि तदुपष्टम्भकत्वादिति—**निरस्तम्**; तासां क्षत्रियमात्रोद्देशेन पालनावश्यकताविधायकत्वेऽपि रागादिना ब्राह्मणादावपि पालयितृत्वसंभवात्। अतो नासामुपष्टम्भकत्वमित्यर्थः । प्रत्युतार्यावर्तप्रयोग एव विशेषतः श्रुत्युपष्टब्ध इत्याह—**सर्वलोकेति** ॥ प्रजापालनकर्तृत्वाविशेषेपि उपनयाधानविधिसिद्धाग्निविषयोरभावेन शूद्रस्य व्यावृत्तावपि त्रैवर्णिकानां राजसूयेऽधिकारस्याव्याहतत्वात् तदन्तर्गतावेष्टावपि तेषामधिकारात् ब्राह्मणादीनां कर्तृत्वेन प्राप्तेः राजन्यवाक्येऽनियमेनैव राज्ञः कर्तृतया प्राप्ते-

निमित्तत्वस्यैवाश्रयणात् तत्साहचर्यादिहापि ब्राह्मणादिवाक्ययोरपि निमित्तत्वमेव युक्तमित्यभिप्रेत्य पूर्वपक्षोपसंहारव्याजेन पूर्वपक्षे नैमित्तिकं विधेयविवेकं दर्शयति—**अत इति** ॥

**(पूर्वोत्तरपक्षयोः प्रयोगभेदे सत्यपि पूर्वपक्षे पञ्चहविष्कैकप्रयोगो राजसूयान्तर्गत इति निरूपणम्)**

**अयमर्थः**—नात्राभिघारणमात्रं नैमित्तिकतया विधीयते; मध्ये निधानानुवादासंभवात्, अतो मध्ये निधानविशिष्टाभिघारणस्य पञ्चहविष्कैकेष्टिप्रयोगं विनाऽनुपपद्यमानस्यैकैकहविष्कैकेष्टिप्रयोगेष्वनिवेशान्मध्ये निधानरूपविशेषणसामर्थ्यात् तद्विशिष्टाभिघारणस्य प्रयोगान्तराक्षेपकत्वम् । ततश्च पूर्वोत्तरपक्षयोः प्रयोगान्तराक्षेपकत्वे तुल्येऽपि निमित्तार्थत्वपक्षे राजसूयान्तर्गतोऽपि नैमित्तिकः पञ्चहविष्कैकेष्टिप्रयोगः सिध्यति । विधायकत्वपक्षेतु राजसूयाद्बहिरेव तादृशं प्रयोगान्तरमिति प्रयोजनभेदोऽनुसन्धेयः—**इति** । क्व तर्हि निमित्तार्थत्वपक्षे राजसूयान्तर्गतानां प्रत्येकप्रयोगाणां निवेश इत्यपेक्षायामाह—**प्रत्येकेति** ॥ अनुलोमानां तत्तत्पितृगतजातिमत्त्वाभावेऽपि तत्तन्मातृगतजातिसद्भावस्य तत्तत्स्मृतिपूक्तेब्राह्मणात् क्षत्रियायामुत्पन्नस्य राजत्वजातिमत्त्वेन राजसूयेऽधिकारात् तद्विषयाः प्रत्येकप्रयोगा इत्यर्थः । यदातु तस्यापि "यदि राजन्यमि"ति वाक्येन पञ्चहविष्कैकेष्टिप्रयोगस्यैव प्राप्तेर्न प्रत्येकप्रयोगाणां निवेश इत्यालोच्यते, तदा प्रत्येकप्रयोगाणामप्यनवकाशतया बाधासंभवात् तत्तत्कर्तृभिस्तेषामपि समुच्चयेनानुष्ठानमिति द्रष्टव्यमिति बोध्यमितिपदेन सूचितम् ॥

**(एतयान्नाद्यकामं याजयेदित्यनेन प्रयोगद्वयस्यापि बहिः फलार्थं विधानम्)**

**ननु**—एवमेतया अन्नाद्यकामं याजयेदिति विधेरन्नाद्यार्थत्वेनापि प्रयोगान्तरापत्तिरित्यत आह—**एतयेति** ॥ अस्मिंश्च वाक्ये प्रयोगान्वयिगुणान्तराभावेन तद्भेदाप्रसक्तेः कर्त्रपेक्षायां राजसूयवाक्यगतावेष्टिकर्तृक्षत्रियेणैव नैराकाङ्क्ष्यात्तस्यैवोपस्थितत्वात् कर्तृत्वेनान्वयोपपत्तेर्विनियोगान्वयिगुणसत्त्वेनावेष्टिमात्रस्यैव विनियोगान्तरमात्रं क्रियते । एवंच युगपत्प्रयोगे च योगसिध्यधिकरणन्यायेनानेकफलजननायोगात् बहिरपि तत्तत्प्रयोगाणामन्नाद्यार्थमनुष्ठानमित्यर्थः ॥

**(द्रविडप्रसिद्धेरपि श्रुतिस्मृत्यनुगृहीतायाः प्रामाण्येन जातिमत एवात्र विवक्षितेति सिद्धान्तोपक्रमः)**

स्मृतेः प्रसिद्धिद्वयेप्यनुग्राहकत्वसाम्येऽपि द्रविडप्रसिद्धेः

न्नाद्यकामं याजयेदि''त्यनेन चोभयोरपि नित्यनैमित्तिकप्रयोगयोः फलार्थं बहिःक्रत्वनुष्ठानमिति न ब्राह्मणादिगुणस्य भेदकत्वमिति प्राप्ते—

''राजानमभिषिञ्चेदि''ति श्रुतौ राजोद्देशेनाभिषेकविधानादभिषेकाधिकारिकराज्ययोगात्प्रागेव राजशब्दस्य क्षत्रियवाचित्वप्रतीतेस्तस्य कर्मणीत्यधिकृत्य ''पत्यन्तपुरोहितादिभ्यो यक्'' इति स्मृत्या पुरोहितादिगणपठिताद्राजशब्दाद् यगादिविधानेनच राज्यशब्दस्य राजशब्दप्रसिद्धिपूर्वकत्वावगतेः द्रविडप्रयोगानुसारेण राजशब्दः क्षत्रियवचन एव । अतश्चावेष्टौ ब्राह्मणादीनां प्राप्त्यभावाद्विधेयत्वावगतेः कर्तृरूपाद् गुणादवेष्टिप्रयोगान्तरमेव पञ्चहविष्कैकेष्टिरूपं समस्तगुणविशिष्टं बहिःक्रतु विधीयते । तस्यचोक्तवचनेनान्नाद्यं फलम् । अन्तःक्रतु प्रत्येकं पञ्च प्रयोगा एव । यद्यपिच पूर्वपक्षसिद्धान्तयोः पञ्चहविष्कैकेष्टिप्रयोगस्तुल्यः; तथापि ब्राह्मणादिगुणस्य पूर्वपक्षे न भेदकत्वं सिद्धान्ते तु तदिति विशेषः । तत्प्रयोजनं च पक्षद्वयोपपादनेनैवोक्तम् ।

नचैवं राजन्यवाक्ये तस्य प्राप्तत्वाद्विधेयत्वाभावेन भेदकत्वानापत्तिः; राजन्यपदस्याभिषिक्तानभिषिक्तक्षत्रियमात्रवा-

---

सकलप्रमाणमूर्धन्यश्रुत्यनुग्राह्यत्वात् प्रामाण्ये विश्वसनीयतरत्वोपपादनेन सिद्धान्तं साधयति—**राजानमिति** ॥ अभिषेके हि पालनाधिकारसंपादकत्वेनैव विधेयत्वादित्यर्थः ॥ इदानीं राज्यशब्दस्य यक्प्रत्ययान्तत्वेनानुशासनात्ततः पूर्वं राजप्रकृत्यर्थनिर्णयावश्यकतयापि द्रविडप्रसिद्धेः स्मृत्युपष्टब्धत्वमपीत्याह—**तस्य कर्मणीति** ॥

**( राज्यायैवेतिश्रुतौ प्रत्ययस्याकारस्योदात्तत्वश्रवणोपपत्त्यर्थं यगन्तस्यैव युक्तत्वनिरूपणम् )**

यद्यप्यत्र ष्यञ्यगन्यतरप्रत्ययेनापि राज्यशब्दव्युत्पत्तिः समाना; तथापि लोके विशेषाभावेऽपि ''राज्यायैवेत्यभिषिच्यन्ते राजेत्येतानभिषिक्तानाचक्षते'' इत्यादिश्रुतौ राज्यशब्दगतप्रत्ययस्याकारस्योदात्तस्वरत्वोपलंभात् यक्प्रत्ययान्ततैव युक्ता । तदाहि ''कर्षात्वतो घञोऽन्त उदात्त'' इति सूत्रादन्त इत्यनुवर्तमाने तद्धितस्येतिचानुवर्तमाने कित इत्यनेन यकाराकारस्याद्यन्तवदेकस्मिन्नित्येकवद्भावेनोदात्तत्वविधानात् यकारान्तत्वेन प्रत्ययोदात्तत्वं लभ्यते । ष्यञन्तत्वेतु ञ्नित्यादिर्नित्यमित्यनेनाद्युदात्तविधानात् प्रकृतिस्थरेफाकारोदात्तत्वं स्यादिति न्यायसुधोपपादितं यगन्तत्वनिश्चयमभिप्रेत्य पत्यन्तपुरोहितादिभ्य इत्येवोपन्यस्तम् ॥

**( ब्राह्मणादिकर्तृकप्रयोगान्तरविधानमिति तस्य बहिःक्रत्वनुष्ठानादिनिरूपणम् )**

**वचन एवेति** ॥ तथाचार्यावर्तप्रयोगस्तु राजकार्यकारित्वगुणयोगेन गौण इत्येवकारेण सूचितम् । अतो ब्राह्मणादीनां कर्तृत्वेनाप्राप्तेर्निमित्तत्वायोगेन विधेयत्वावश्यकत्वात् प्राप्तयागानुवादेन ब्राह्मणादिकर्तृत्वादिरूपानेकगुणविधौ वाक्यभेदापत्तेर्ब्राह्मणादिकर्तृत्वरूपात् पूर्वत्रानिविशमानात् गुणात् प्रयोगभेद इत्यभिप्रेत्य सिद्धान्ते विधेयं दर्शयति—**अतश्चेति** ॥ प्रयोगान्तरस्य च धर्मिग्राहकप्रमाणसिद्धं राजसूयबहिर्भावमभिप्रेत्य बहिःक्रत्वित्युक्तम् । ततश्च ब्राह्मणादिश्रवणानविच्छिन्ना अवेष्टिप्रयोगा भिन्ना एव राजसूयान्तर्गता इत्यर्थः । बहिःक्रत्वनुष्ठेयप्रयोगान्तरस्यैव फलापेक्षायामपेक्षितविधित्वलाभेन 'एतया अन्नाद्यकाम'मितिवाक्येन फलसंबन्धः, नतु राजसूयान्तर्गतस्य; तस्य स्वाराज्यफलेनैव निराकाङ्क्षत्वेनानाकाङ्क्षितविधित्वापत्तेरित्यभिप्रेत्याह—**तस्यचेति** ॥ **एतेन**—प्रकृतपरामर्शार्थैतच्छब्दनिर्दिष्टावेष्टिमात्रपुरस्कारेणान्नाद्याम्नानात् निरवकाशान्नाद्यावरोधेन निराकाङ्क्षावेष्टिस्तद्व्यतिरिक्तविषये सावकाशं स्वाराज्यफलं नाङ्गीकरोतीत्यपि—**अपास्तम्**; अन्नाद्यस्यापि ब्राह्मणकर्तृकप्रयोगे सावकाशत्वात् । अतो राजसूयप्रकरणपाठसार्थक्यार्थमेकैकहविष्केष्टिप्रयोगाः स्वाराज्यार्था इत्यभिप्रेत्याह—**अन्तःक्रत्विति** ॥ **एतेन**—एकैकहविष्कैकेष्टीष्टिपञ्चकयोः राजसूयमहाप्रयोगान्तःपातेऽपि द्विविधस्यापि प्रयोगस्यान्नाद्यफलकत्वं पूर्वपक्ष्युक्तं—**अपास्तम्**; सन्निधानाविशेषेऽप्यनाकाङ्क्षितसंबन्धस्यान्याय्यत्वेन ब्राह्मणादिकर्तृकप्रयोगान्तराणामेव तत्फलकत्वौचित्यादिति भावः ॥

**( पूर्वोत्तरकल्पप्रयोजने )**

**तत्प्रयोजनमिति** ॥ पूर्वपक्षे अवेष्टे राजसूयान्तर्गतप्रयोगस्य ब्राह्मणादिकर्तृकप्रयोगात् भेदेऽपि उभयोः स्वाराज्यार्थत्वे विद्यमाने एवान्नाद्यार्थमप्यनुष्ठानम्, सिद्धान्तेतु अन्नाद्यार्थमेव प्रयोगान्तरम् । स्वाराज्यार्थन्तु भिन्ना एवेति पक्षद्वयस्योपपादनेन व्यक्तमित्यर्थः ॥

**( राजन्यवाक्ये राजन्यपदानुवादत्वेन राजन्यकर्तृकपञ्चहविष्केष्टेः स्वाराज्यफलार्थत्वेनान्तःक्रत्वनुष्ठानशङ्का )**

**ननु**—ब्राह्मणवैश्यवाक्ययोः तद्विधानेऽपि राजन्यवाक्ये राज्ञो राजसूये प्राप्तत्वेनाविधेयत्वात् नित्यप्राप्तत्वेन निमित्तत्वायोगेऽपि यदिशब्दस्य ब्राह्मणवैश्यवाक्ययोरिव परित्यागादिना राजन्यस्यानुवादमात्रत्वोपपत्तेर्मध्येनिधानस्य पञ्चेष्टिप्रयोगेष्वनिवेशेन प्रयोगान्तरविधायकत्वेऽपि तस्य स्वाराज्यफलार्थं राजसूयान्तःपातेनैव विकल्पेन समुच्चयेन वा करणोपपत्तेर्बहिःप्रयोगभावानापत्तिरित्यभिप्रेत्याशङ्कते—**नचेति** ॥ राजन्यपदस्यानुवादमात्रत्वे वैयर्थ्यापत्तेस्तस्याश्चाभिषिक्तानभिषिक्तक्षत्रियमात्रवाचित्वेनानभिषिक्तक्षत्रियस्य राजसूयेऽप्राप्तत्वेन विधेयत्वात् ब्राह्मणादिवाक्यन्यायेन क्षत्रियमात्रपुरस्कारेणाभिषिक्ताधिकारिराजसूयान्तर्गतप्रयोगापेक्षया प्रयोगान्तरविधानेन तदुपपत्तिरित्याशयेन परिहरति—**राजन्यपदस्येति** ॥ कथं राजसूये अभिषिक्तस्यैवाधिकारः? इत्यत आह

चित्वेन राजसूयेऽप्राप्तस्यैव तस्य विधेयतया भेदकत्वोपपत्तेः। राजसूये हि राजपदस्य क्षत्रियमात्रशक्तस्यापि "राजेत्येतानभिषिक्तानाचक्षत" इति निरूढलक्षणातात्पर्यग्राहकाल्लिङ्गादभिषिक्तक्षत्रियमात्रस्यैवाधिकारः। अतः सिद्धं त्रिष्वपि वाक्येषु गुणस्य प्रयोगभेदकत्वम्। यदिशब्दश्चाभिघारयेदिति लिङः प्रयोज्यत्वापरपर्यायहेतुमदर्थकत्वे आख्यातद्वयैकवाक्यत्वे च तात्पर्यग्राहकः। तेन मध्ये निधानपूर्वकप्रत्याहुत्यभिघारणप्रयोजकीभूतैर्ब्राह्मणादिकर्तृकैर्यागैरिष्टं भावयेदिति वाक्यार्थो बोध्यः ॥२॥ इति द्वितीयमवेष्ट्यधिकरणम् ॥

(३ अधिकरणम्।)

**आधाने** ॥ "वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यः" इति श्रुतम्। तथा "वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमि"ति च। तत्र सर्ववर्णसाधारणानां क्रतूनामग्निविद्यासाध्यत्वादग्नेश्च उपायभूतस्याधानस्य "य एवं विद्वानग्निमाधत्ते" इत्यनेनानन्याक्षिप्तशक्तिकेनाग्न्युद्देशेनाधानविधायिना प्राप्तत्वादाधाने

**—राजसूये हीति। निरूढलक्षणेति** ॥ अस्यच शक्तिग्राहकत्वेऽभिषेकजन्यादृष्टवत्त्वेन शक्तिकल्पने शक्यतावच्छेदकत्वे गौरवापत्तेर्न शक्तिग्राहकत्वम्, अपितु क्षत्रियत्वजातौ लाघवेन शक्तस्य निरूढलक्षणातात्पर्यग्राहकत्वमात्रम्। अत एव राजसूये "ईश्वरो वा एष दिशोनून्मदितोर्यद्विशोनुव्यवस्थापयती"त्यर्थवादे ईश्वरत्वेन कीर्तनस्य कंटकोद्धरणप्रजापालने विना क्षत्रियमात्रेऽसंभवात्तत्रचाभिषिक्तस्यैवाधिकाराल्लाक्षणिकार्थस्यैव ग्रहणादधिकार इत्यर्थः। एतच्च विभवादुक्तम् ॥

**( राजन्यपदस्याभिषिक्तपरत्वेनानुवादत्वेप्यन्नाद्यार्थप्रयोगस्य बहिःकृत्वनुष्ठानमिति सिद्धान्तकथनम् )**

**वस्तुतस्तु**—ब्राह्मणादिवाक्यगतयजतेरिहानुषङ्गे सत्यवैरूप्याय मध्येनिधानरूपगुणविधिसामर्थ्याच्च प्रयोगभेदस्य सिद्धेः तस्यचान्नाद्यवाक्यैकवाक्यतया अन्नाद्यकामो राजन्य ऐन्द्रं मध्य इत्यादिवाक्यलभ्यस्यान्नाद्यार्थमभिषिक्तकर्तृकत्वेन राजन्यपदस्यानुवादत्वेऽपि योगसिद्ध्यधिकरणन्यायेन राजसूयान्तरानुष्ठाने स्वाराज्योत्पत्तावपि अन्नाद्यफलानुत्पत्तेस्तदनुरोधेन बहिःप्रयोग उपपद्यत एव। वार्तिकेऽप्ययमेव पक्ष आदृतः। स्पष्टमन्यत्। प्रयोजनं पक्षद्वयोपपादनेनैव स्पष्टमिति नोक्तम्। यथाचात्र पक्षद्वयेऽपि तत्र दक्षिणानामेकैकप्रयोगावरुद्धत्वेन समुदितैकप्रयोगे प्राप्त्यभावेऽपि दक्षिणाप्राप्तिस्तथैकादशे वक्ष्यते ॥

॥ इति द्वितीयमवेष्ट्यधिकरणम् ॥

---

**( उपनयस्यापि स्वविधिप्रयुक्तत्वाभावस्यैतन्न्यायसिद्धत्वात्पूर्वपक्षप्रयोजनस्य कर्मसु शूद्राधिकारस्योपपत्तिः )**

आधानस्य स्वविधिप्रयुक्तत्वाभावपूर्वपक्षे शूद्रस्यापि कर्मस्वधिकार इति प्रयोजनस्य शूद्रस्यानुपनीतत्वेनाध्ययनाभावादविद्वत्त्वेन कर्माधिकारासंभवं निरसितुमाधानवाक्यवदुपनयनविधिवाक्यान्यपि सूत्रास्पृष्टान्यपि विचारविषयतया सहैवोदाहरति—**वसन्त इति** ॥ ततश्चोपनयनवाक्येष्वप्युपनयस्य पूर्वपक्षेऽविधानात् कर्मविधिभिराक्षेपस्य त्रैवर्णिकेष्विव शूद्रेऽपि संभवेन विद्वत्तोपपत्तेस्तत एव तस्याधिकार इति प्रयोजनत्वाविघात इति भावः ॥

**( पादाध्यायसंगतिः पूर्वाधिकरणेन प्रत्युदाहरणसंगतिः आतिदेशिकसंगतिर्वेत्यादिनिरूपणम् )**

सिद्धान्ते स्वस्ववाक्यैराधानविधिद्वारा आधानस्य गुणात् भेदात् पूर्वपक्षे चाविधानेन भेदाभावात् पादाध्यायसङ्गती यथा अवेष्टौ ब्राह्मणादीनां प्राप्त्यभावेन निमित्तत्वायोगात् विधेयत्वेन प्रयोगभेदसंभवेऽपीह तत्प्राप्तिसंभवात् भवतु निमित्तार्थत्वमित्येवं पूर्वपक्षोत्थानात् प्रत्युदाहरणरूपेण **अथवा**—यथा पूर्वत्र निमित्तार्थत्वमाशङ्क्य तन्निरासेन विधेयत्वमेवमिहापीत्यातिदेशिकीं वाऽनन्तरसङ्गतिं संशयंच स्पष्टत्वादप्रदर्श्य पूर्वपक्षमेवाह—**तत्रेति** ॥

**( क्रतुविधीनामग्निविद्यासाध्यत्वम् )**

स्वर्गकाममात्रस्याधिकारात् स्वर्गकामत्वस्य च सर्ववर्णेषु संभवात् **सर्ववर्णेत्युक्तम्। अग्निविद्यासाध्यत्वादिति**॥ "यदाहवनीये जुहोती"त्यादिविधिभिराहवनीयादीनामङ्गतया विधानादग्निसाध्यत्वम्। अध्ययनंच विना मन्त्रादिपाठासंभवात् विद्यासाध्यत्वमित्यर्थः॥

**( क्रतुविधेरध्ययनविद्ययोः कार्यकारणभावस्य लोकसिद्धत्वेन विद्याक्षेपेऽपि अलौकिकाहवनीयसाधनाधानाक्षेपासंभवशङ्का )**

**ननु**—अध्ययने विद्याजनकत्वस्य लोकतोऽवगतेरुपायत्वावगत्या क्रतुविधिभिराक्षेपसंभवेऽप्यदृष्टरूपाहवनीयोपायत्वस्यान्यतोऽनवगतेः कथं क्रतुविधिभिरनङ्गभूतस्याऽऽधानस्याक्षेप इत्यत आह—**अग्नेश्चेति** ॥ ब्राह्मणवाक्येष्वाधानविधिरत्रेवेति विनिगमनाविरहपरिहाराय—**अनन्याक्षिप्तेत्युक्तम्**। अत्र विधेयान्तराभावादाधानस्यैव विधिः, ब्राह्मणादिवाक्येषु तु वसन्तादिगुणविधौ संभवति न विशिष्टविधिराश्रयितुं युक्त इत्यर्थः। एवंच य एवं विद्वानिति विद्वत्तानुवादस्यापि क्रतुविध्याक्षिप्तविद्वत्तयैवोपपत्तेर्विद्वद्वाक्येनोपायत्वयाऽऽधानस्यावगतस्य क्रतुविधिभिरेवाक्षेपात् तस्यच चतुर्वर्णसाधारण्येन प्राप्तेर्निमित्तार्थं ब्राह्मणादिश्रवणम् ॥

ब्राह्मणादीनां प्राप्तेर्निमित्तार्थं श्रवणम् । ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः काल आधानाङ्गत्वेन विधीयते । अथवा—ऽस्त्वेतस्य—"अथ संभारान्संभरती"ति विध्यन्तरशेषस्य वर्तमानापदेशता, तथापि "संभारेष्वग्निमादधाती"त्ययमाधानप्रापको विधिः । अत्रहि न संभारा विधेयाः प्रमाणान्तरप्राप्तत्वात् । नापि तदधिकरणत्वं, तस्मिन्नाधीयतामयमिति मन्त्रवर्णादेव प्राप्तत्वात्, अत आधानमात्रविधिरयम् ।

अथवा—प्राप्ताधानानुवादेन कालविधिरात्मनेपदार्थस्यानाधातुराहवनीयत्वाभावरूपस्य च विधिरिति वाक्यभेदापत्तेः "जातपुत्रः कृष्णकेशोऽग्नीनादधीते"त्ययमाधानप्रापको विधिः । उक्तवाक्ये तु अभ्युदयशिरस्कतया मन्त्रव-

( ब्राह्मणकर्तृकत्वे निमित्ते केवलाधानोद्देशेन निमित्तान्वयव्यतिरेकानुविधाय्यधिकरणताकत्वेन कालविधिः )

नच यदिशब्दाभावे निमित्तत्वबोधासंभवः; स्वरूपेण प्राप्तस्य निमित्तत्वेनैवान्वेतुं योग्यतया तेन रूपेण यदिशब्दाभावेऽप्यन्वयोपपत्तेरित्यभिप्रेत्याह—**निमित्तार्थं श्रवणमिति** ॥ विधेयं दर्शयति—**ब्राह्मणकर्तृकत्व इति** ॥ आधानस्याभ्युत्पत्त्यैव प्राप्तेराधानमात्रस्यैवोद्देश्यत्वान्न विशिष्टानुवाददोषापत्तिरिति सूचयितुं **आधानाङ्गत्वेनेत्येतदुक्तम्** । इदमुपनयनस्याप्युपलक्षणम् । ततश्च तदुद्देशेन वसन्तादिकालाधिकरणतानियमो विधीयते इत्यर्थः । अत एव कालस्य सन्ध्यावन्दनादिवत् निमित्ताधीनानुष्ठानविषयत्वरूपनैमित्तिकत्वासंभवेऽपि निमित्तान्वयव्यतिरेकानुविधाय्यधिकरणताकत्वेनैव तदिति द्रष्टव्यम् ॥

( आधानोपनयनयोरुद्देश्यत्वेऽपि नैमित्तिकविधावत्र न वाक्यभेदादिकमिति सर्वसाधारण्यमाधानस्येति कथनम् )

आधानोपनयनयोरीप्सिततमत्वाख्योद्देश्यत्वेऽपि विजातीयानेकोद्देश्यत्वान्न वाक्यभेदः । नवा कालस्यानुपादेयत्वेनोद्देश्यत्वेऽपि विधेयत्वात्सः । एवंच ब्राह्मणादेः कालान्तरव्यावृत्तेः ब्राह्मणाद्यतिरिक्तस्य शूद्रादेरनियतकालकत्वमिति सिद्धमिति भावः ॥

( काले निमित्ते ब्राह्मणादिकर्तृनियमविधानमिति पक्षान्तरोपलक्षणत्वनिरूपणम् )

अत्र वसन्तकाल इत्युपलक्षणम् । क्रतुविधिभिः सर्ववर्णसाधारण्येनाधानोपनयनाद्याक्षेपसंभवात् । नह्याधानाक्षेपेऽपि क्रतुप्रयोगान्तःपातित्वेन तस्याक्षेपः, अग्नीनामन्ते प्रतिपत्तिविधानेन पात्रवत् साधारणत्वानुपपत्त्या प्रयोगाद्बहिरेवानियतकालकर्तृत्वप्राप्तेः, उपनयनस्य त्वध्ययनार्थत्वे सामर्थ्यादेव प्रयोगबहिर्भावः । अतश्चाग्निहोत्रादिपूर्वभावितयाऽनियतकाले प्रसक्तयोराधानोपनयनयोर्वसन्तादिकालकत्वे निमित्ते ब्राह्मणादिकर्तृतानियमोऽपि विधातुं शक्यते । अस्मिंश्च पक्षे वसन्तातिरिक्तहेमन्तादिकालकस्याप्याधानस्य ब्राह्मणाद्यनियतकर्तृत्वसिद्धिः । सर्वथा ब्राह्मणादिवाक्येषु नोभयविशिष्टाधानविधिः; गौरवादन्यतः प्राप्तिसंभवाच्चेति ध्येयम् ॥

( य एवं विद्वानित्यस्य संभारविध्यर्थवादत्वेनाधानप्रापकत्वाभावात् संभारेष्वग्निमादधातीत्याधानविधानमिति पक्षान्तरानुसरणम् )

विद्वद्वाक्यस्य यच्छब्दोपबन्धाद्वर्तमानापदेशाच्च नाधानविधायकत्वसंभव इत्यस्वरसात् पक्षान्तरमाह—**अथवेति** ॥ लेट्त्वकल्पनया विधित्वाशङ्कां निरसितुं विध्यन्तरशेषत्वोपन्यासः । इदंहि वचनं सपत्नं भ्रातृव्यमवर्त्ति सहत इत्यर्थवादसहितं "अप उपसृजती"त्यादिविशेषविधिविहितानामुदकादिसंभाराणामथ संभारान् संभरतीति यः सामान्यतः स्थापनविधिस्तस्य शेषः । यो विद्वानेवमुदकादिस्थापनपूर्वमग्निमाधत्ते स स्थापनरूपाङ्गसामर्थ्यात्सहायसंपन्नमपि वैरिणं वर्तनरहितं कुर्वीत इत्यर्थवादेन स्थापनप्रशंसाकरणात् विधिशेषभूतत्वेन लेट्त्वकल्पनया विधायकमित्यर्थः । **प्रमाणान्तरेति** ॥ वार्क्षपार्थिवसंभाराणां वाक्यान्तरप्रमितत्वादित्यर्थः । **आधानमात्रविधिरिति**चात्र न्यायसुधाकृदुपपादितसंभाराधिकरणत्वविशिष्टाऽऽधानविधिनिरासः सूचितः । तथात्वे नक्रादिवाक्येष्वपि विशिष्टाधानविध्यापत्तेस्तुल्यत्वेन विनिगमनाविरहापत्तेः । अतो विधेयान्तराभावादेवात्रैवाधानविधेरङ्गीकार्यत्वात् शुद्धाधानविधिरेवायम् । तत्रच प्रयोगान्वयिनो गुणादेरश्रवणात् प्रधानविधिभिरेवच प्रयाजादिष्विव प्रयोगस्य प्राप्तेश्च नैव विधानम्, अपितु गुणवाक्यानुसारादाहिताग्निपर्यायाग्निमात्रोद्देशेन विनियोगस्योत्पत्तेश्च करणमात्रमिति क्रतुविधिप्रयुक्ताऽऽधानाङ्गत्वमेवेह वसन्तादिविधेरित्यर्थः ॥

( आधानकर्तुरपि प्रापकवचनान्तरेणाधानविधानमिति पक्षान्तरानुसरणम् )

**कालविधिरिति** ॥ वसन्तादिवाक्येष्विति शेषः । संभारवाक्ये आत्मनेपदानिर्देशात् अनाधातारं प्रत्याहवनीयत्वाभावानवगतेरन्येनाहितानामपि क्रमेणान्यस्याहवनीयत्वसंभवेन तद्व्यावृत्तिफलकस्याधातृमात्रसंबन्ध्याहवनीयत्वस्याप्राप्तेर्वसन्तवाक्येषु तस्य विधानावश्यकत्वेन वाक्यभेदापत्तिरित्यर्थः । जातपुत्रवाक्येतु आत्मनेपदश्रवणेन तदर्थविशिष्टाधानविधावुक्ते किं तर्हि संभारवाक्ये विधीयते ? इत्यपेक्षायां तस्मिन्नाधीयतामिति मन्त्रवर्णकल्प्यसंभाराधिकरणत्वविधेः पूर्वप्रवृत्त्यङ्गीकारेण संभाराधिकरणतैव विधीयतेऽभ्युदयशिरस्कत्वार्थमित्युत्तरमाह—**उक्तवाक्ये त्विति** ॥ वस-

र्णात्पूर्वमेवाधिकरणत्वविधिः। एवंच जातपुत्रवाक्ये वयोऽवस्थाविशेषलक्षणाऽपि नापद्यते। सर्वथा आधानप्राप्तेर्निमित्तार्थानि ब्राह्मणादिश्रवणानि न भेदकानि॥

तथा विद्यासाधनतया अध्ययनं तत्साधनत्वेनोपनयनं चार्थप्राप्तम्। अध्ययनस्य तु स्वाध्यायोऽध्येतव्य इत्यनेन नियमोऽपि। अतः सर्वसाधारण्येन प्राप्तोपनयनोद्देशेन ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः कालो विधीयत इति प्राप्ते—

सर्वकर्तृकत्ववत्सर्वकालकत्वस्यापि आधानादौ प्राप्तिसंभवेन ब्राह्मणकर्तृकत्वे निमित्ते कालविधिः काले वा निमित्ते कर्तृविधिरित्यत्र विनिगमनाविरहादुभयविशिष्टाधानादिविधिरेव। उपनयनस्य च पक्षे सम्भवत्प्राप्तिकत्वेन सुतरां विध्युपपत्तिः। अतएव विनिगमनाविरहात्कर्तृकालादिरूपस्य प्रयोगान्वयिगुणस्य प्रयोगविध्यापादकत्वावश्यम्भावे एतद्विधिविहितप्रयोगानुवादेनैव जातपुत्रादिवाक्येषु वयोऽवस्थाविशिष्टकर्तृविधिः। आत्मनेपदार्थस्य चोत्पत्त्याद्यन्वयिनो गुणस्य श्रवणादुत्पत्त्यादिकमप्यत्रैव, न तु जातपुत्रादिवाक्ये; वाक्यभेदापत्तेः। प्राथम्याद्वा ब्राह्मणवाक्ये एवोत्पत्त्यादि, इतरयोस्तु प्रयोगमात्रम्। तेन सिद्धोऽत्रापि गुणात्प्रयोगभेदः। एतयोश्चाधानोपनयनयोरग्निविद्याफलत्वेऽपि अकरणे प्रत्यवायादिश्रवणान्नित्यत्वमपि। एवंच स्वविधिप्रयुक्ताधानोपनयनजन्याग्निविद्यालाभे क्रतुविधयो नाग्निविद्ये तदुपायान्वा प्रयुञ्जत इति तद्रहितस्य शूद्रादेरनधिकार इति प्रयोजनं षष्ठे वक्ष्यते॥ ३॥ इति तृतीयं आधानादिस्वविधिप्रयुक्तत्वाधिकरणम्॥

---

न्तादिवाक्यानां आधानविधायकत्वे तत्प्राप्ताधाने जातपुत्रकृष्णकेशत्वादिगुणद्वयविधाने वाक्यभेदापत्तेः सिद्धान्ते अर्धमन्तर्वेदीतिवत् जातपुत्रकृष्णकेशपदयोर्वयोऽवस्थालक्षणाऽऽपद्यते, ममत्वत्रैव विशिष्टाधानविधानात् सा नापद्यत इत्यपि लाघवं दर्शयति—**एवंचेति**॥

## (वीप्साद्यभावेन सप्तम्या अविनिगमकत्वात् कालविधौ कर्तृविधौ च विनिगमनाविरहाद्वसन्तवाक्ये विशिष्टाधानविधानम्)

**विनिगमनाविरहादिति**॥ नच—सप्तम्या एव नियामकत्वमिति—वाच्यम्; वीप्साद्यभावे कालवाचकपदोत्तरसप्तम्यास्तद्बोधकत्वादर्शनात्, अन्यथा वसन्ते वसन्ते ज्योतिषेत्यत्र वीप्सोपादानवैयर्थ्यापत्तेः, ब्राह्मणपदस्यापि कर्तृवाच्याख्यातपदसामानाधिकरण्येनोद्देश्यत्वानुपपत्तेश्च। अत उभयोरपि निमित्तत्वस्यासंभवात् विशिष्टाधानविधिरेव युक्त इत्यर्थः॥

## (उपनयनवाक्ये नियमविध्यावश्यकत्वम्)

**सुतरामिति**॥ क्रतुविधीनां नियमेन ज्ञानाक्षेपकत्वेऽपि तत्साधनस्याऽध्ययनस्य तद्विधिं विनाप्युपायान्तरेण ज्ञानसंभवेन नियमेन तैरनाक्षेपादनुपनीतस्याप्यध्ययनसंभवेन तदुपायभूतोपनयनस्यापि नियमेनाक्षेपानुपपत्तेः पक्षे प्राप्तस्योपनयनस्य सुतरां नियमविधिरावश्यक इत्यर्थः॥

## (आधानोपनयनयोः स्वविधिप्रयुक्तत्वेन शूद्राधिकारनिरासः)

वसन्तादिवाक्यानां केवलोत्पत्तिविनियोगपरत्वाङ्गीकारे प्रयोगान्वयिगुणानां कर्तृकालादीनामनन्वयापत्तेः प्रयोगस्याप्यत्रैव विधेयत्वावश्यकत्वे सत्याधानोपनयनयोः स्वविधिप्रयुक्तयोरेव लाभात् क्रतुविधीनां तत्प्रयोजकत्वाकल्पनात् तदधिकारिणामेव च त्रैवर्णिकानां लाभे न शूद्रस्याप्यधिकारित्वकल्पनया अग्निविद्योपायाक्षेपकत्वकल्पनमित्यपि लाघवमनुसंधाय वसन्तादिवाक्येषु प्रयोगविध्युपपादनव्याजेन जातपुत्रवाक्ये लक्षणयापि विधेयं दर्शयति—**अत एवेति**॥ **उत्पत्त्यादिकमप्यत्रैवेति**॥ ततश्च प्रयोगभेदवत् आधानस्वरूपस्यापि भेद इत्यर्थः॥

## (स्वविधिप्रयुक्तयोरग्निविद्ययोरकरणे प्रत्यवायश्रवणान्नित्यत्वम् नतु नित्यक्रतुविधिभिराक्षेपेणेति निरूपणम्)

नच—अग्निविद्ययोः स्वस्वविधिप्रयुक्तत्वेपि नित्यतावेदकप्रमाणाभावेन नियमेन करणानापत्तेस्तदर्थं नित्यैः क्रतुविधिभिः तदाक्षेपोप्यावश्यक इति—वाच्यम्; नित्यानामपि क्रतुविधीनां लाघवेन परप्रयुक्ताग्निविद्योपजीवित्वे प्रमिते स्वस्वविधिसिद्धाग्निविद्यावतस्तदकरणे प्रत्यवायोत्पत्तावपि तद्रहितस्य तदुत्पत्तौ प्रमाणाभावेन तदाक्षेपकत्वानुपपत्तेः। **एतेन**—क्रतुविधीनां नित्यत्वादाधानादिविधीनामपि फलतो नित्यत्वमिति पार्थसारथ्युक्तं—**अपास्त**मित्यभिप्रेत्य अन्यथा तयोर्नित्यत्वं साधयति—**एतयोश्चेति**॥ "अनधीयाना व्रात्या भवन्ति" "स्थाणुरयं भारहारः किलायमधीत्य वेदं न विजानाति योऽर्थम्" "ब्रह्मक्षत्रविशां काल औपनायनकः परः। अत ऊर्ध्वं पतन्त्येते"—इत्यादिना अध्ययनज्ञानोपनयनानामकरणे प्रत्यवायश्रवणात्, "नानाहिताग्निर्म्रियेतेति"श्रुत्या अनाहिताग्नित्वस्योपपातकेषु पाठाच्च आधानाकरणे प्रत्यवायप्रतीतेश्च नित्यत्वमेतयोरित्यर्थः॥

## (एतदधिकरणप्रयोजनपरतया अपशूद्राधिकरणसार्थक्यम्)

अपशूद्राधिकरणस्य पौनरुक्त्यं परिहरति—**एवंचेति**॥ अत्र वसन्तादिवाक्येषु आधानविधित्वस्य साधितस्याऽपशूद्राधिकरणं प्रयोजनकथनार्थमित्यर्थः॥

## ॥ इति तृतीयं आधानादिस्वविधिप्रयुक्तत्वाधिकरणम्॥

( ४ अधिकरणम् । )

**अयनेषु** ॥ दर्शपूर्णमासयोः "दाक्षायणयज्ञेन स्वर्गकामो यजेते"ति श्रुतम् । तथा "साकंप्रस्थायीयेन यजेत पशुकाम" इति श्रुतम् । लोके अप्रसिद्धत्वादुद्भिदादिवन्नामधेयत्वावगतेः संज्ञया अभ्यासाद्वा कर्मान्तरं विधीयते, फलसंबन्धस्यापि सार्वकाम्यवाक्यवशादेव प्राप्तत्वेनान्यपरत्वाभावादिति प्राप्ते—

**( अयनेष्विति बहुत्वोपपत्त्यर्थं साकंप्रस्थानवाक्योदाहरणम् )**

सूत्रे अयनेष्विति पदोपादानेन दाक्षायणयज्ञवाक्यस्योदाहरणत्वोक्तावपि बहुवचनोपादानसूचितसमानन्यायात् साकंप्रस्थायीयवाक्यमपि सहैवोदाहरति—**दर्शपूर्णमासयोरिति** ॥

**( दर्शपूर्णमासयोरित्युक्तिप्रयोजनम् )**

पूर्वपक्षे कर्मभेदप्रतियोगिज्ञानाय सिद्धान्तेचावृत्तिरूपगुणसंबन्धिज्ञानायच **दर्शपूर्णमासयोरित्युक्तम्** ॥

**( अध्यायपादानन्तरसंगतिनिरूपणम् । दाक्षायणयज्ञपदस्य नामत्वेन पूर्वपक्षश्च )**

पूर्वपक्षे कर्मभेदेन भावनाभेदात् सिद्धान्ते गुणफलसंबन्धेऽपिच भावनाभेदात् प्रकरणसङ्गतिं तथा गुणपरत्वनामधेयत्वसन्देहेनानिश्चितविधेयतागुणस्य भेदकत्वाभावेऽपि संज्ञाभ्यासाभ्यां भेदकत्वाभेदकत्वविचारात् पादसङ्गतिं तथाऽऽपवादिकीमनन्तरसङ्गतिं च स्पष्टत्वादनुक्त्वा पूर्वपक्षमेवाह—**तथेति । लोकेऽप्रसिद्धत्वादिति** ॥ समुदायप्रसिध्या अवयवप्रसिध्या वाऽप्रसिद्धत्वादित्यर्थः । **उद्भिदादिवदिति**॥ तद्वद्यजिसामानाधिकरण्यान्नामत्वम् । अतएव "पयसा प्रवर्ग्येण चरन्ति" "पयसा दाक्षायणयज्ञेन" इत्यादिप्रसिद्धकर्मनामधेयप्रवर्ग्यपदसामानाधिकरण्यमपि सङ्गच्छते । अन्यथा व्रते द्रव्यानपेक्षत्वेन पयोविधानानुपपत्तेः । अतस्तद्वदेव संज्ञाभेद इत्यर्थः ॥

**( संनिधौ फलश्रवणस्यान्यपरत्वाभावादभ्यासात्कर्मभेदोपपत्तिः )**

**यत्तु**—अभ्यासात् कर्मभेदोक्तिःसन्निधौ पुनःश्रवणस्य फलपरत्वादन्यपरत्वेनाभ्युच्चयार्थेति प्रकाशकारैरुक्तम्, तन्निरसितुमाह—**फलसंबन्धस्यापीति** ॥ निरर्थकप्रायस्याभ्युदयशिरस्कत्वस्य कल्पनापेक्षया फलसंबन्धप्राप्तिमङ्गीकृत्य कर्मान्तरविधेरेव युक्तत्वादित्यर्थः ॥

**( साकंप्रस्थानवाक्येऽपि गुणफलसंबन्धाभावेन कर्मभेदोपपादनम् )**

एवं साकंप्रस्थानवाक्येऽपि प्रस्थानस्याप्याक्रमणविधिनैव प्राप्तेरविधेयत्वात् तदाश्रितसहत्वगुणविधेश्च प्रस्थानस्यावान्तरप्रकरणाभावेनाश्रयत्वानुपपत्तेः प्रकरणिनश्च सान्नाय्ययागस्यायोग्यत्वादेव तदनुपपत्तेश्चासंभवादावश्यकः कर्मान्तरविधिरिति भावः ॥

यद्यपि लोके गुणो न प्रसिद्धः; तथापि दक्षस्य यजमानस्येमे दाक्षा ऋत्विजस्तत्कर्तृकमयनं प्रयोगावृत्तिर्यस्य यज्ञस्येति व्युत्पत्त्याऽऽवृत्तिपरत्वावगतेः **साकं सह प्रस्थानं** यत्रेति व्युत्पत्त्या च सहत्वपरत्वावगतेर्नातिरिक्तशक्तिकल्पनया नामधेयपरत्वाध्यवसानम् । अतोऽप्राप्त आवृत्तिरूपः सहत्वरूपश्च गुण एव फलोद्देशेन विधीयते । आवृत्तिश्च कियतीत्यपेक्षायां "द्वे पौर्णमास्यौ द्वे अमावास्ये यजेते"ति

**( ज्योतिष्टोमवाक्य इव फलपरत्वावश्यकत्वान्नाभ्यासादवयवार्थस्य विशेषणस्यचावृत्तिसहत्वयोरेव फलार्थविधानेन संज्ञातो वा न नामत्वम् )**

न तावदभ्यासात्कर्मान्तरम्; प्रकरणानुग्रहायाभ्युदयशिरस्कत्वादिकल्पनयापि फलपरत्वसंभवे कर्मान्तरत्वस्यायुक्तत्वात् । अन्यथा ज्योतिष्टोमवाक्येऽपि कर्मान्तरत्वापत्तेः, अतोन्यपरत्वान्नाभ्याससंभवः । अवशिष्टं संज्ञया भेदं संज्ञात्वानुपपत्तेरयुक्तमित्यभिप्रेत्य सिद्धान्तमाह—**यद्यपीति । दक्षस्येति** ॥ उत्साहिनो यजमानस्येत्यर्थः । अतः आवृत्त्यादिगुणस्य फलोद्देशेन विधाने कथंभावाकाङ्क्षालक्षणप्रकरणानुग्रहाभावेऽप्यधिकाराख्यप्रकरणानुग्रहमभिप्रेत्य विधानमित्याह—**अतोऽप्राप्तेति** ॥ साकंप्रस्थाय्यसंज्ञके प्रयोगे सायंप्रातर्दोहकुम्भीभ्यां सह प्रस्थानात् सह प्रस्थानगुणयोगात् साकंप्रस्थायीयशब्देनासौ प्रयोगोऽभिधीयत इति न्यायसुधाकारादिलेखनात् सहप्रस्थानविशिष्टप्रयोगस्य फलविधानभ्रमं निरसितुं सहत्वरूपश्च गुण एवेत्युक्तम् । प्रस्थानस्यापि यागवत्प्राप्तत्वेनाविधेयत्वान्न गुणतया विधानम्, अपितु सहत्वविशेषणरूपस्यैवेत्यर्थः । यद्यप्यधिकाराख्यप्रकरणेन दर्शपूर्णमासस्य प्रधानस्यैवाश्रयत्वं लभ्यते, न तत्प्रयोगस्य; तथाप्यावृत्तेर्दाक्षपदवाच्यऋत्विक्संबन्धितया प्रतीतेर्विधेयसामर्थ्यानुरोधेन प्रयोगस्याश्रयत्वं नासुलभमिति भावः ॥

**( द्वे पौर्णमास्याविति फलार्थविहितावृत्तिविशेषणमेवेति निरूपणम् )**

द्वे पौर्णमास्यौ द्वे अमावास्ये इति द्वित्वविधेरनपेक्षितविधित्वापत्तेर्न तद्विहितद्वित्वस्य क्रतौ कथंभावेन ग्रहणम्, अपितु दाक्षायणवाक्यविहितफलार्थावृत्तिविशेषसमर्पकत्वमेवेत्यभिप्रेत्याह—**आवृत्तिश्चेति** ॥ तथाच पौर्णमास्यामाग्नेयाग्नीषोमीयौ । तदुत्तरप्रतिपद्याग्नेयदधियागौ । दर्शे आग्नेयैन्द्राग्नौ, तदुत्तरप्रतिपदि आग्नेयमैत्रावरुण्यामिक्षायागाविति क्रमेण पञ्चदशवर्षपर्यन्तमावृत्तिरित्यर्थः ॥

वाक्येन विशेषविधानाद् द्विरावृत्तिरेव । सहत्वं च प्रस्थाने केनेत्यपेक्षायां "सह कुम्भीभिरभिक्रामेदि"ति वचनात्कुम्भीभ्याम्। अनेनैव च वचनेन सहत्वाश्रयत्वं अभिक्रमणस्य विदधता अवान्तरप्रकरणाभावेऽपि तस्याश्रयत्वसिद्धिः । आवृत्तेस्तु प्रकरणाद्दर्शपूर्णमासावेवाश्रयः । अतोऽत्र संज्ञात्वाभावाद्गुणफलसंबन्धपरत्वेन चाभ्यासाभावान्न कर्मान्तरम् ।

**वस्तुतस्तु**—"पूर्वपदात्संज्ञायामग" इति स्मृत्या संज्ञात्वाभावे णत्वानापत्तेर्दाक्षायणपदे संज्ञात्वावश्यंभावेऽपि अवयवार्थप्रतीत्या योगरूढिस्वीकारादवयवार्थरूपावृत्तिरप्राप्तत्वात्फलोद्देशेन विधीयत इति न विरोधः ॥ ४ ॥

इति चतुर्थं दाक्षायणाधिकरणम् ॥

---

### ( सह कुम्भीभिरिति वाक्यस्य सहत्वनिरूपितकुम्भीस्वरूपसमर्पण एवोपयोग इति कथनम् )

**सहकुम्भीभिरिति** ॥ आज्यभागाभ्यां प्रचर्याग्नेयेन पुरोडाशेन अग्नीधे तु तौ प्रदाय सह कुम्भीभिरभिक्रामेदिति वचने हि प्रकरणात् विधेयसामर्थ्याच्च सान्नाय्याङ्गाभिक्रमणपदपर्यायक्रमणे कुम्भी साहित्याश्रयितासंबन्धेन प्रकरणानुमितवाक्येन दधिहोमसंबन्धवद्विधीयते, सहशब्दस्य निपातत्वेन निरूपितत्वसंबन्धेन कुम्भीपदार्थेऽन्वयव्युत्पत्तेः साहित्यनिरूपितकुम्भीनां विधानेऽपि न विधेयानेकत्वकृतो वाक्यभेदः । कुम्भीनां सान्नाय्याङ्गत्वात् अभिक्रमणे तद्धोमसाधनत्वस्य विधेयसामर्थ्यात् प्राप्तेर्न विशिष्टोद्देशोऽपि । पुरोडाशप्रचारोत्तरत्वादिरर्थादेव प्राप्तेरनुवादः ॥

### ( प्रकारद्वयेन कुम्भीभिरितिबहुवचनोपपत्तिः, अग्नीधे तौ प्रदायेत्याद्यनुवादत्वं च )

कुम्भीभिरिति बहुत्वमपि दोहयोः प्रत्येकं कुम्भीद्वयस्य विधानेन तच्चतुष्ट्वप्राप्तेरनुवादः। यत्तु बहुत्वं द्वित्वलक्षणार्थं सदनुवाद इति कौस्तुभे उक्तम्, तत् सायं सायं दोहप्रचारः प्रातः प्रातर्दोहप्रचार इति पक्षान्तरस्यापि विधानात् । तथाच कुम्भीद्वयस्यैवाभिक्रमणे साहित्यात्तदभिप्रायेणेति न विरोधः । एवं स्रुचामधोधारणस्य चेडावदानावधि निषिद्धत्वाद्योग्यतयैवान्यस्मै दानप्राप्तेः कर्मकरत्वात् प्राप्तमग्नीधे दानमनूद्यते । एवंच साहित्ये कुम्भीनिरूपितत्वस्य प्रस्थानेवान्तरप्रकरणाभावेऽपि आश्रयत्वस्य चोपपत्तिरित्यर्थः ॥

### ( पूर्वपदादिणत्वोपपत्त्यर्थं दाक्षयणनामत्वाङ्गीकारः )

**इतिस्मृत्येति** ॥ अनयाच गकारवर्जितपूर्वपदनिमित्तकस्य णत्वस्य संज्ञायामेव विधानात् संज्ञात्वाभावे तदनापत्तेः संज्ञात्वमावश्यकमित्यर्थः ॥

### ( पूर्वोत्तरकल्पप्रयोजनस्य )

प्रयोजनं पूर्वपक्षे सौर्यष्ठ्यादिवत् दर्शपूर्णमासप्रयोगात् वहिर्दाक्षायणयज्ञादिप्रयोगः । सिद्धान्ते दर्शपूर्णमासयोरेवावृत्त्यापि प्रयोग इति स्पष्टत्वान्नोक्तम् ॥

॥ इति चतुर्थं दाक्षायणाधिकरणम् ॥

---

( ५ अधिकरणम् ॥ )

**संस्कारश्च** ॥ "ईषामालभेत," "चतुरो मुष्टीन्निर्वपती"त्येताभ्यां विहितयोर्दार्शपूर्णमासिकयोरीषालम्भचतुर्मुष्टिनिर्वापयोरनुवादेनानारभ्याधीताभ्यां "वायव्यं श्वेतमालभेत भूतिकामः" "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम" इत्येताभ्यां श्वेतचरू गुणौ विधीयेते । आलम्भकर्मीभूता ईषा श्वेता कर्तव्येति । निर्वापश्च चरुशब्दलक्ष्यस्थाल्यां कर्तव्य इति । सर्ववृक्षाणां च वायुसंबन्धाद्वायव्यमित्यनुवादः । सौर्यमिति चाग्नेयस्यैव; तेजोदेवत्यत्वसामान्यात्, नतु देवताविधिः; यागाश्रवणात् । उभयत्रापि फलपदं सार्वकाम्यवाक्यप्राप्तफलप्रयोजकत्वानुवाद इति प्रथमः पक्षः ॥

### ( सङ्गतिनिरूपणादिकम् )

अत्रानिश्चितविधेयताकस्य देवतालक्षणगुणस्य भेदकत्वविचाराद्ध्यायपादसंगती तथा पूर्वाधिकरणोक्तस्य धात्वर्थमनूद्य गुणमात्रविधानस्यापवादादापवादिकीमनन्तरसङ्गतिं च स्पष्टत्वादनुक्त्वा विषयनिर्देशपूर्वकं पूर्वपक्षमेवाह—**ईषामालभेतेति** ॥ शकटगतो लाङ्गलदण्डवद्दीर्घः काष्ठविशेष ईषापदस्यार्थः ॥

### ( वायव्यसौर्यवाक्ययोर्लाघवार्थं गुणविधित्वाङ्गीकारः )

तत्र गुणविधिसंभवे विशिष्टविधिकल्पनस्याश्रुतयागकल्पनस्य चान्याय्यत्वात् गुणमात्रविधिपूर्वपक्षमाह—**इत्येताभ्यां विहितयोरिति। अनारभ्येति** ॥ कंचन यागं प्रकृत्यानाम्नातत्वात् अनारभ्याधीतत्वमित्यर्थः । श्वेतमित्यस्येषाकाष्ठमादाय चरुमिति द्वितीयायाश्च सप्तम्यर्थे लक्षणां चाङ्गीकृत्योपपत्तिमाह—**आलम्भकर्मीभूतेति** ॥ यदातु प्राकरणिकश्रौतशूर्पाविरोधान्न स्थाल्यधिकरणत्वविधिसंभव इत्युच्येत, तदा चरुपरिमितलक्षणया यथा चरुपरिमिता व्रीहयो भवन्ति तथा चरुं मुष्टिनिर्वापः कर्तव्य इत्येवं क्रियाविशेषणतया च द्वितीयाया अप्युपपत्तेश्चरुपदवाच्यस्थालीपरिमितत्वविधिरायपूर्वपक्षे द्रष्टव्यः ॥

### ( तृतीयसूत्रनिरसनीयं गुणविशिष्टं कर्मान्तरं फलोद्देशेन विधीयत इति द्वितीयपूर्वपक्षोपन्यासः )

अत्रैतत्पूर्वपक्षोत्तरत्वेन "यावदुक्तं वा कर्मणः श्रुतिमूलत्वादि"ति सूत्रमेकदा योजयित्वा "यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसंबन्धात्" इति तृतीयसूत्रस्य सिद्धान्त-

द्वितीयस्तु फलपदवैयर्थ्यप्रसङ्गात् प्राकरणिकाश्रयालाभेन च गुणफलसंबन्धानुपपत्तेः गुणविशिष्टं यावदुक्तं आलम्भनिर्वापाख्यं कर्मान्तरमेव फलोद्देशेन विधीयते इति ।

सिद्धान्तस्तु—वायव्यं सौर्यमित्यादितद्धितान्तपदवैयर्थ्यापत्तेर्द्रव्यदेवतासंबन्धानुमितो याग एवालभति—निर्वपति—धातुलक्षितो द्रव्यदेवताविशिष्टः फलोद्देशेन विधीयत इति । अतिदेशप्राप्तौ चालम्भनिर्वापौ न विधीयेते॥५॥ **इति पञ्चमं द्रव्यदेवतासंयुक्तानां यागान्तरताधिकरणम् ।**

परस्य पूर्वपक्षपरतयाप्यावृत्त्या योजनीयमित्यभिप्रेत्य तन्त्रेण विचारद्वयमारभमाणो द्वितीयं पूर्वपक्षमुपपादयति—**द्वितीयस्त्विति । फलपदवैयर्थ्यप्रसङ्गादिति** ॥ लोकेऽप्यालम्भनिर्वापयोः सत्त्वेन दार्शपौर्णमासिकयोरेव नियमेनोपस्थितौ प्रमाणाभावस्याप्युपलक्षणम् ॥

**( वायव्यसौर्यवाक्ययोरपि यागलक्षणम् । निर्वपतिस्तु प्रकृतिसादृश्यसिद्ध्यर्थमिति निरूपणम् )**

**द्रव्यदेवतेति** ॥ तद्धितेन हविर्भाक्त्वरूपदेवतात्वाभिधानात् तस्यच यागैकघटितत्वात् यागापेक्षायां प्रमाणान्तरेण तस्याप्राप्तत्वादनेनैव वाक्येन विधेयत्वाप्राप्तावध्याहारापेक्षया लक्षणाया लघुत्वात् तत्तद्धातुना यागो लक्ष्यते । शक्यार्थस्तु प्रमाणान्तरप्राप्तत्वादनूद्यते । लाक्षणिकपदोपादानप्रयोजनं च निर्वपत्यादिधातुमद्वाक्यसंवन्धित्वरूपप्रकृतिसादृश्यसिद्धिः । अतएवैतत्सजातीयं "सोमारौद्रं चरुं निर्वपेदि"ति प्रकृत्याम्नाते "परिश्रिते याजयेदि"ति परिश्रितगुणविधिपरे वाक्ये यजिनाऽनुवादरूपं लिङ्गमपि निर्वपतौ यागलक्षणायामुपपद्यते । यत् द्वयोः कटादिभिर्द्रव्यैर्वेष्टनं प्रधानकाले कर्तव्यम्, तत्परिश्रितशब्दार्थ इति भावः । यस्तु फलभोक्तृसंयोगो यागकल्पकत्वेन सूत्रे उक्तः, स प्रथमपूर्वपक्ष्यापादितसंस्कारकर्मत्वमात्रनिरासमूचनार्थ इति न दोषः ॥

**॥ इति पञ्चमं द्रव्यदेवतासंयुक्तानां यागान्तरताधिकरणम् ॥**

---

**( उपवर्षोदाहृतविषयवाक्योदाहरणं, संगतिनिरूपणं च )**

यद्यपि सूत्रकारेणोदाहरणसाध्यादि नोक्तं केवलं हेतुमात्रम्; तथापि श्रुतार्थापत्त्या तयोः कल्पनयोपवर्षवृत्तिकृतोदाहृतं वाक्यमुदाहरणत्वेन दर्शयन् आपवादिकीं सङ्गतिं स्पष्टत्वात् तथा फल्गुत्वात् पूर्वपक्षं चानुक्त्वा सिद्धान्तमेवाह—**यत्र त्विति** ॥

( ६ अधिकरणम् । )

**विशये** ॥ यत्र तु न देवताश्रवणं तत्र न यागकल्पना, अपि तु संस्कारमात्रविधानम्—यथाऽग्निहोत्रे वत्समालभेतेत्यत्रालम्भमात्रं वत्ससंस्कारकत्वेन विधीयते; आलभतेः स्पर्शमात्रवाचित्वात् ॥ ६ ॥ **इति षष्ठं आलम्भसंस्कारताधिकरणम् ॥**

( ७ अधिकरणम् । )

**संयुक्तस्तु** ॥ अग्नौ श्रुते "चरुमुपदधाति बृहस्पतेर्वा

**( वत्सोपावसर्जनेन धेनुवियोगाख्येन स्पर्शाप्राप्तेः वत्सनिकान्ता इत्यर्थवादोपपत्तेश्च वत्सस्पर्श एव विवक्षित इति कथनम् )**

न केवलमालभतौ द्रव्यसंबन्धमात्रेण यागकल्पनम्, अपितु द्रव्यदेवतासंबन्धेन; तस्य प्रकृते अभावान्न यागकल्पनेत्यर्थः । **संस्कारमात्रेति** ॥ वत्सालंभस्य प्रस्नवार्थत्वेन दृष्टार्थत्वायागविधिपक्षे अदृष्टार्थत्वापत्तिर्मात्रचा सूचिता । **वत्ससंस्कारत्वेनेति** ॥ यथैव वत्सं चोपावसृजतीत्यत्र द्वितीयासंयोगात् वत्समुद्दिश्योपावसर्जनविधिस्तथैवेह संस्कारविधिप्रायपाठात् वत्ससंस्कारकत्वेनैव स्पर्शविधिरित्यर्थः । नच—उपावसर्जनेनैव स्पर्शाख्यस्यालंभस्यार्थप्राप्तत्वान्न विध्युपपत्तिरिति—वाच्यम्; धेनुवियोगाख्योपावसर्जनेन धेनुसमीपधारणफलकाध्वर्युकर्तृकस्पर्शस्य नियमेन प्राप्त्यभावात्तदुपपत्तेः । अतएव—स्पर्शस्याध्वर्युकर्तृकत्वेऽपि दोहस्यान्येन करणान्न तदनुपपत्तिरिति भावः । अतएव वत्सनिकान्ता हि पशव इत्यर्थवादे पशूनां वत्सप्रियत्वाभिधानेन वत्सप्रिया माता, पुत्रचाटुकरणात्, तेनवा कृतचाटुना युज्यमानात् स्नेहात् प्रस्नविष्यतीत्येवं स्तुत्युपपत्तिः स्पर्शमात्राभिधायित्वे संभवतीत्यभिप्रेत्याह—**आलभतेरिति** ॥

**( अत्राधिकरणे पादाध्यायसंगत्योर्निरूपणम् )**

अत्रच सिद्धान्ते दार्शपौर्णमासिकेष्वालम्भाद्यमालम्भः संस्कार्यरूपानुपादेयगुणात् प्रकरणान्तरात् कर्मान्तरमित्यनिश्चितविधेयताकवत्साख्यगुणस्य भेदकत्वात् पादाध्यायसङ्गत्युपपत्तिरिति कौस्तुभे द्रष्टव्यम् ॥

**॥ इति षष्ठं आलंभसंस्कारताधिकरणम् ॥**

---

**( पादाध्यायानन्तरसंगतिविषयनिरूपणम् )**

अत्र पूर्वपक्षे निश्चितविधेयताकदेवतारूपगुणकृतभिन्नयागभावनातः उपधानरूपप्रतिपत्तिभावनाभेदात् सिद्धान्तेच तदभावात् पादाध्यायसंगती, तथा पूर्वत्र देवताऽश्रवणाद्यागकल्पनासंभवेऽपीह तत्सत्त्वात् संभवत्येव यागकल्पनमिति पूर्वपक्षोत्थानात् प्रत्युदाहरणरूपामातिदेशिकीमानन्तरसंगतिं स्पष्टत्वादनभिधाय उदाहरणपूर्वकं पूर्वपक्षमेवाह—**अग्नाविति** ॥ यद्यपि "नैवारश्चरुर्भवति बृहस्पतेर्वा एतदन्नं यन्नी-

"एतदन्नं यन्नीवारा" इत्यत्र यजमानस्यान्नं बृहस्पतेः कथं स्याद्? यदि न बृहस्पतिर्देवतेत्यर्थाद्बृहस्पतेर्देवतात्वावगतेस्तैत्तिरीयशाखायां "बार्हस्पत्यो भवती"ति तद्धितपदयुक्तवाक्यशेषश्रवणाच्च द्रव्यदेवतासंबन्धानुमितयागविधानमेवेदम्। तस्य चौषधद्रव्यकत्वेनाग्नेयातिदेशतः स्विष्टकृदादिप्रतिपत्तिप्राप्तौ "चरुमुपदधाती"त्यनेनोपधानं प्रतिपत्तित्वेन विधीयत इति प्राप्ते—

यद्यपि तैत्तिरीयशाखायां तद्धितश्रवणम्; तथापि विध्यभावाद्विध्यन्तरैकवाक्यत्वभङ्गापत्तेश्च नायं देवतातद्धितः। चरुमुपदधातीत्यनेन च स्थण्डिलनिष्पादकचरुसंस्कारकतयोपधानविधानात् देवतानाकाङ्क्षतया नार्थवादोन्नीतस्यापि देवताविधेः कल्पनम्। अत एव चर्वपेक्षितप्रकृतिद्रव्यस्यैव नीवाररूपस्य विधिकल्पनम्। अतश्च बृहस्पतेर्ब्राह्मणस्यान्नं नीवारा इत्येवं स्तुत्युपपत्तेर्न बृहस्पतेर्वा इत्ययं देवताकल्पनद्वारा यागकल्पक इति सिद्धम्॥ ७॥ इति सप्तमं नैवारचरोराधानार्थताधिकरणम्॥

---

वारा" इत्युक्त्वा चरुमुपदधातीति श्रुतमिति लिखितं कौस्तुभे; तथापि व्युत्क्रमेणापि लेखने यागार्थत्वपूर्वपक्षोपपत्तेः शास्त्रदीपिकानुसारेणायं वाक्यक्रमो लिखितः॥

**( बृहस्पतेरित्यनेन देवतासमर्पणमिति शाखान्तरानुसारेणापि निरूपणम् )**

तत्र नैवारवाक्ये तावद्द्रव्याक्षिप्तायां नैवारकरणिकायां भावनायामप्राप्तत्वेन विधिना विहितायां चरोः प्रयोजनाकाङ्क्षत्वात् भावनायाश्चावच्छेदकधात्वर्थापेक्षत्वात् यत्किंचिद्धात्वर्थकल्पनस्याऽऽवश्यकत्वे सत्यपि उपधानस्य द्वितीयया चरुसंस्कारकत्वेन तत्र करणत्वासंभवादवच्छेदकत्वानुपपत्तेरर्थाच्चरुद्रव्यकत्वसामर्थ्याद्यागस्यैवावच्छेदकत्वं कल्प्यत इत्यभिप्रेत्य पूर्वपक्षे कर्तव्ये देवताभावशङ्कां निरस्यति—**यजमानस्यान्नमिति**॥ बृहस्पतेरिति षष्ठ्या नीवारसंबन्धावगमात् संबन्धान्तराभावे देवतात्वस्यैव संबन्धत्वाङ्गीकारात् तस्यच यागं विनाऽनुपपत्तेर्यागत्वनिश्चय इत्यर्थः। देवतात्वरूपसंबन्धविशेषपरत्वं शाखान्तरगतवाक्योपसंहारेणापि प्रतीयत इत्याह—**बार्हस्पत्यो भवतीति**॥ "एतद्वै खलु साक्षादन्नं यदेष चरु"रिति पूर्वनिर्दिष्टचरुशब्दसमानाधिकरणबार्हस्पत्यशब्दस्य देवतातद्धितान्तत्वनिश्चयात् तत्तुल्यार्थत्वेनेहापि षष्ठ्या देवतात्वपरत्वावगतिरित्यर्थः॥

**( चरूपधानप्रतिपत्तित्वोपपादनम् )**

किं तर्हि उपधानवाक्येन विधीयते? इत्यपेक्षायामस्य यागस्य प्रकरणादग्न्यङ्गस्यौषधद्रव्यकत्वसादृश्येनातिदेशप्राप्तप्रतिपत्त्यन्तरबाधेनोपधानं प्रतिपत्तिर्विधीयते। ततश्च सिद्धो यागभावनातः प्रतिपत्तिभावनाया भेद इत्यर्थः। तदिदमाह—**तस्य चेति**॥

**( बार्हस्पत्य इति न देवतातद्धितः किंतु प्राग्दीव्यतीय इति निरूपणम् )**

सर्वत्रहि विध्यपेक्षित एवार्थोऽर्थवादकल्प्यविधिना विधीयते नत्वनपेक्षितः। तदिह "चरुमुपदधाती"त्यत्र चरुसंस्कारकतयोपधानविध्यन्यथानुपपत्त्या "अध्वर्युं वृणीते" इत्यत्रेव चरोर्विनियोगस्य स्थण्डिलनिष्पादकतया कल्पनात्तदन्यथानुपपत्त्यैव चरुकर्मकभावनायाः प्राप्तत्वेन नैवारवाक्ये विशिष्टविध्यनङ्गीकाराच्चरोः प्रकृतिद्रव्यापेक्षायां नीवारप्रकृतित्वमात्रविधानेन तत्र देवताया अनपेक्षणात् नार्थवादोन्नीतदेवताविधिकल्पनम्, नवा बार्हस्पत्यो भवतीत्यस्य विधित्वकल्पनया तद्विधिपरत्वकल्पनं युक्तमित्यभिप्रेत्य सिद्धान्तमाह—**यद्यपीति। देवतातद्धित इति**॥ अपितु प्राग्दीव्यतीयार्थविहितण्यप्रत्ययस्तद्धित इति शेषः।

**( यागकल्पनाभावेपि उपधानविशिष्टचरुविधानमेवेति निरूपणम् )**

**चरुसंस्कारकतयेति**॥ **एतेन**—स्थलनिष्पत्तेः श्रौतेष्टकावरुद्धत्वेन कल्पितविधिविधेयचरुसाध्यत्वानुपपत्त्या यागकल्पनासंभवादुपधानमेतदर्थकमेवेति प्रकाशकारोक्तं—**अपास्तम्**; चरोः कुम्भीष्टकादीनां चतसृणां मध्ये उपधानार्थं मध्यतनेष्टकानिष्कासनेन योजनेन तत्पूरणेन तदिष्टकास्थापनार्थतया विधेयत्वेनेष्टकाविरोधित्वाभावादर्थकर्मत्वपक्षेऽप्यानुषङ्गिक्याः स्थलनिष्पत्तेरावश्यकत्वेनेष्टकाविरोधस्य दुष्परिहरत्वात्। द्वितीयार्थबाधे प्रमाणाभावाच्चेति भावः॥

**बृहस्पतिशब्दस्य ब्राह्मणवाचित्वेन तत्संबन्धित्वमेव नैवारस्तुत्यर्थमित्यर्थवादोपपत्तिः )**

बृहच्छब्दस्य बृहतिधात्वर्थानुसारेण ब्रह्मशब्दवत् वेदवाचित्वात् पतिशब्दस्य पालयितृवाचित्वात् ब्राह्मणानांच "तपस्तप्त्वाऽसृजद्ब्रह्म ब्राह्मणान्वेदगुप्तये" इति वेदपालयितृत्वस्मरणात् बृहस्पतिशब्दस्य ब्राह्मणवाचित्वप्रतीते"र्मुन्यन्नं ब्राह्मणस्योक्तमि"तिच ब्राह्मणश्राद्धे वानप्रस्थाख्यमुन्यदनीयारण्यनीवारप्राशस्त्यस्मृतेर्ब्राह्मणसंबन्धित्वरूपं बार्हस्पत्यत्वमर्थवादे कीर्तितं नीवारस्तुत्यर्थम्, नतु बृहस्पतिदेवत्यत्वायेत्यभिप्रेत्यार्थवादोपपत्तिं दर्शयति—**अतश्चेति**॥ यद्यपिवा तैत्तिरीये "ब्रह्म वै देवानां" इत्यर्थवादाद्योगरूपाद्देवपुरोहितं बृहस्पतिमेव वदेत् बृहस्पतिशब्दो नतु केवलयोगेन ब्राह्मणम्; तथापि तत्संबन्धमात्रेणापि नीवारस्तुत्युपपत्तेर्न देवतात्वकल्पनं प्रमाणवदिति भावः। अतश्च नोपधानभावनातो यागभावनान्तरमित्यभिप्रेत्योपसंहरति—**इति सिद्धमिति**॥

**॥ इति सप्तमं चरोराधानार्थताधिकरणम्॥**

( ८ अधिकरणम् । )

**पात्नीवते** ॥ "त्वाष्ट्रं पात्नीवतमालभेते" त्यनेन द्रव्यदेवताविशिष्टं यागं विधाय "पर्यग्निकृतं पात्नीवतमुत्सृजन्ती" ति श्रुतम् । तत्रोभयदेवत्यस्य पूर्वयागस्य "आग्नेयं चतुर्धा करोती" तिवत्केवलपात्नीवतपदेनानुवादायोगात्पर्यग्निकरणादेश्च विधेयस्य गुणस्यातिदेशेनैव प्राप्तत्वादितराङ्गपरिसङ्ख्यायां च त्रैदोष्यापत्तेः पर्यग्निकृतपदस्यानुवादत्वमङ्गीकृत्य कर्मान्तरविधिरेवायमिति प्राप्ते—

प्रत्यभिज्ञानान्न कर्मान्तरम् । न चानुवादानुपपत्तिः; सत्यप्यग्नीषोमादिवत्त्वष्टृपत्नीवतोर्व्यासज्यवृत्तिदेवतात्वे मनोतास्थाग्निशब्दवल्लक्षणयाऽभिधानोपपत्तेः । **वस्तुतस्तु** पृथक्तद्धितश्रवणाद्देवताद्वयमेवेदम् । एकवाक्योपादानाच्च सतिकर्मान्तरविधिर्युक्त इत्यर्थः । यत्तु पक्षान्तरेण दर्शपूर्णमासप्रकृतिकत्वं कौस्तुभे उक्तम्, तत्पर्यग्निकृतशब्दस्य पशुपुरोडाशसाधारणतया पुरोडाशद्रव्यकत्वपक्षे देवतासादृश्यापेक्षया द्रव्यसादृश्यस्य बलवत्त्वाभिप्रायेणेति न विरोधः । यदातु पशुपरत्वं, तदोभयसादृश्येन पूर्वयागप्रकृतिकत्वे निस्सन्दिग्धेऽपि अग्नीषोमीयप्रकृतित्वं यत्पक्षान्तरेण वार्तिके उक्तं; तत्पूर्वपक्षत्वादनास्थयाऽग्नीषोमीयप्रकृतित्वेऽप्यविरोध इति न्यायसुधायां स्पष्टमेवानास्थयेत्यावेदितम् ॥

( प्रतियोगिज्ञानार्थं त्वाष्ट्रवाक्योदाहरणं, तत्र यागानुमाननिश्चयः, अध्यायपादाधिकरणसंगतयश्च )

पूर्वपक्षे पर्यग्निकृतवाक्ये कर्मभेदस्य साधनात् भेदप्रतियोगिज्ञानार्थं पूर्वयागविधायकं वाक्यमुदाहरति—**त्वाष्ट्रमिति** ॥ यजतिस्तु द्रव्यफलभोक्तृसंयोगादिति पूर्वोक्तन्यायेन यागानुमानस्य निस्सन्दिग्धत्वात् यागं विधायेत्युक्तम् । विषयवाक्यमुदाहरति—**पर्यग्निकृतमिति** ॥ पत्नीवद्देवतालक्षणस्यानिश्चितविधेयताकस्यैव भेदकत्वविचारात्प्रकरणसंगतिं पूर्वत्रार्थवादस्य देवतात्वबोधकत्वे निरस्तेऽपीह विधिगततद्धितस्य देवतात्वपरत्वनिश्चयादस्तु तर्ह्यत्र यागानुमानमिति पूर्वपक्षोत्थानात् प्रत्युदाहरणरूपामनन्तरसङ्गतिं च स्पष्टत्वादनुक्त्वा पूर्वपक्षमेवाह—**तत्रेति** ॥

(द्विदैवत्यस्यैकदैवत्यपदेनाननुवादात् पूर्वयागप्रकृतिको दर्शपूर्णमासप्रकृतिको वाऽन्ययागोऽत्राभिमतः । अग्नीषोमीयप्रकृतित्वोक्तिस्तु वार्तिकेऽनास्थयेति निरूपणम् )

यद्यपि पूर्वयागोपस्थापकं प्रकरणमस्ति; तथापि तस्य पत्नीवद्दैवतत्वासंभवेन तेन पदेनानुवादायोगात् कर्मान्तरत्वं साधयति—**उभयदेवत्यस्येति** ॥ **आग्नेयमिति** ॥ यथैवाग्नेयपदे सामर्थ्यभङ्गभयेन केवलाग्निपदादुत्पन्नतद्धितानुरोधेन नाग्नीषोमीयग्रहणम्, तद्वदिहापीत्यर्थः । विधेयान्तराभावादपीह यागान्तरविधेरावश्यकत्वं दर्शयति—**पर्यग्निकरणादेश्चेति** ॥ अङ्गान्तरसाधारण्येनातिदेशतः प्राप्तिं सूचयितुमादिशब्दोऽथवा पर्यग्निकरणोत्तरकालसंग्रहार्थो द्रष्टव्यः । **पर्यग्निकृतपदस्येति** ॥ पर्यग्निकरणकर्मीभूतद्रव्यवाचके पर्यग्निकृतपदे द्रव्यस्य विशेष्यस्य निष्कृष्य विधानेऽपि विशेषणांशे प्राप्तत्वादनुवाद इत्यर्थः । ततश्च द्रव्यदेवतासंबन्धस्य यागकल्पकस्य सत्त्वात् उत्सृजतौ यागलक्षणया कर्मान्तरविधिरित्याह—**कर्मान्तरेति** ॥ पत्नीवच्छब्दस्याश्विवाजिशब्दवद्रूढत्वेन देवतान्तरपरत्वान्न तावत् पूर्वयागमुत्सृजतिनाऽनूद्य तत्र विधानसंभवः; उत्पत्तिशिष्टत्वाष्ट्रावरोधात् । अत एव नानुवादः; नापि पर्यग्निकरणाव्यवहितोत्तरकालस्य तस्मिन् संभवः; निष्ठाप्रत्ययस्य व्यवहिताव्यवहितसाधारणभूतकालमात्रवाचित्वेन लक्षणापत्तेरिति विधेयान्तरनिरास एवकारेण सूचितः । अतोऽत्र देवतागुणसामान्येन पूर्वयागप्रकृ-

( विशेषणविशेष्यभावस्थले व्यासज्यवृत्तिदेवतात्वमिति न्यायसुधामतरीत्योभयदेवत्वेऽपि प्रत्यभिज्ञानोपपादनम् )

अग्निशुच्योस्तु देवतात्वेनान्वयात् तस्याश्चोद्देश्यत्वमात्रेण क्रियासाधनत्वात् अमूर्तस्य निर्गुणस्यापि चोद्देश्यत्वोपपत्तेः क्रियासाधनत्वान्यथानुपपत्त्या विशेषणविशेष्यभावानवगमेऽपि तदनभ्युपगमे प्रत्येकमन्वयायाख्यातस्यावृत्त्यापत्तेः प्रधानभूताख्याताावृत्तेश्चात्यन्तान्याय्यत्वात् प्रत्येकंच देवतापत्तेर्गुणभेदेनादृष्टकल्पनापादककर्मभेदप्रसङ्गादेकक्रियावशीकारावसायात् तदन्यथानुपपत्त्या विशेषणविशेष्यभावावगतिरिति चित्राधिकरणे न्यायसुधालेखनात् समानाधिकरणपदद्वये विशेषणविशेष्यभावाङ्गीकारेण तदुत्तरप्रत्ययेनैकमेव व्यासज्यवृत्ति देवतात्वमुच्यत इति तन्मतमनुसन्धायाह—**सत्यपीति** । **मनोतास्थेति** ॥ पशोरग्नीषोमदेवताकत्वेन "त्वं ह्यग्ने प्रथमो मनोते" ति मन्त्रगताग्निपदेन लक्षणयाऽग्नीषोमयोरभिधानं, तद्वदिहापि पात्नीवतशब्दप्रकृतिभूतपत्नीवच्छब्देन त्वष्टृपत्नीवल्लक्षणयाऽभिधानोपपत्तिरित्यर्थः ॥

( प्रत्येकतद्धितेन प्रत्येकदेवतात्वेपि पात्नीवतपदानुवादत्वं, उत्सृजतिनार्थप्राप्तत्यागानुवादः, तेनेतराङ्गोत्सर्गवादनिरासश्च )

पूर्वत्रास्वरसं सूचयन् पक्षान्तरेण अनुवादोपपत्तिं दर्शयति—**वस्तुतस्त्विति** ॥ विशेषणविशेष्यभावे विशेषणवाचकपदोत्तरप्रत्ययस्य साधुत्वमात्रार्थत्वकल्पनापत्तेस्तदपेक्षया तस्यार्थवत्त्वमभ्युपेत्य तत्तत्प्रत्ययोपात्तार्थैश्च तत्तत्प्रकृत्यर्थान्वयौचित्ये सति शब्दान्तरादिना देवतार्थभेदस्यावश्यकत्वात् द्वयोर्देवतात्वयोः प्रथमतो भावनान्वयेप्येकवाक्योपात्तत्वेनैकस्यां क्रियायां समुच्चयोपपत्तेः कर्मभेदाप्रसक्तेः देवतात्वभेदेऽपि न क्षतिरिति पृथक् तद्धितश्रवणादित्यादिनास्वरसः सू-

मुच्चयः। अतो डित्थडवित्थयोर्माता डित्थस्य मातेतिवच्छक्यत एव केवलेन पात्नीवतपदेनानुवादः। अतः पूर्वकर्मानुवादेन गुण एव विधीयते। नच विधेयाभावः; वृत्तपर्यग्निकरणस्यैव क्तप्रत्ययान्तार्थस्य विधेयत्वात्। तस्य च गृहमेधीयाज्यभागन्यायेन प्राकृतस्यैवातिदेशतः पूर्वप्रवृत्त्या विधेयत्वात् क्लृप्तोपकारकत्वेन च तेनैव नैराकाङ्क्ष्यादतिदेशकल्पनेनोत्तराङ्गानामर्थादेव निवृत्तौ त्रैदोष्यानापत्तेः। वृत्तपर्यग्निकरणत्वस्य च पूर्वाङ्गेष्वकृतेष्वसंभवात्तान्यप्याक्षिप्यन्ते। नच क्तप्रत्ययबलेन प्रमाणान्तरप्रमितत्वावगमादतिदेशाप्रतिबन्धकत्वम्; प्रोक्षिताभ्यामुलूखलमुसलाभ्यामित्यादाविव प्रमाणान्तराभावेऽपि एतद्विधिविधेयस्यापि क्तप्रत्ययोपात्तत्वे बाधकाभावात्॥ ८॥ इत्यष्टमं पात्नीवतानुवादत्वाधिकरणम्।

(९ अधिकरणम्।)

**अद्रव्यत्वात्**॥ अनारभ्य श्रुतं—"एष वै हविषा हविर्यजति योऽदाभ्यं गृहीत्वा सोमाय यजते" इति। तथा "परा वा एतस्यायुः प्राण एति योऽशुं गृह्णाती"ति। अत्र हविः सोमः स एव देवता स एव द्रव्यमिति प्रथमार्थवादस्यार्थः। प्राण आयुर्मर्यादामभिवर्धत इति द्वितीयस्य। तत्र न तावदत्र ग्रहणमेव ज्योतिष्टोमे विधीयते; संस्काररूपस्य ग्रहणस्यावघातादिवदंश्वदाभ्यनामकत्वानुपपत्तेः।

---

चितः। **अनुवाद इति**॥ उत्सृजतिना यागमुद्दिश्यपर्यग्निकरणविधानेऽपि प्रकरणात् पूर्वयागोपस्थितेः तस्यच वस्तुत एव पात्नीवतत्वात् पात्नीवतपदमनुवादः। अतएव न विशिष्टोद्देशोपि। **एतेन**—उत्सृजन्तीत्याख्यातेन यथोक्तपर्यग्निकरणविधौ अर्थसिद्ध उपरितनाङ्गोत्सर्गो धातुनाऽनूद्यते इत्यधिकरणमालोक्तं—**अपास्तम्**; उपरितनाङ्गोत्सर्गपरत्वे पर्यग्निकृतमित्यस्य कर्मत्वेनान्वयानुपपत्तेर्धात्वर्थस्योद्देश्यपरत्वे संभवत्यनुवादमात्रत्वस्यायुक्तत्वात्, वार्तिकेचोद्देश्यतयैव यागान्तर्गतत्यागरूपोत्सर्गपरत्वेनान्वयप्रतिपादनाच्चेत्यर्थः॥

(गृहमेधीयाज्यभागविधिरिव फलतःपरिसंख्यार्थं पुनःश्रवणम्)

**गृहमेधीयेति**॥ यथा गृहमेधीयेष्टिं प्रकृत्याज्यभागौ यजतीति पुनःश्रवणं फलतः परिसङ्ख्यार्थम्, तद्वदिह पर्यग्निकरणपुनःश्रवणमित्यर्थः। **ननु** अतिदेशलोपे सति पर्यग्निकरणपूर्वभाव्यङ्गानामपि परिसङ्ख्यापत्तिरित्यत आह—**वृत्तेति**॥ नात्र पर्यग्निकरणमात्रं गुणः, अपितु क्तप्रत्ययान्तत्वात् पशुगतं कृतपर्यग्निकरणत्वम्। तस्यच पूर्वाङ्गेष्वकृतेष्वसंभवात् तदङ्गानुष्ठानसिद्धिः। अतएव इडान्तेतिवदन्तशब्दाभावेऽपि न क्षतिरित्यर्थः। नचाज्यभागयोरनुष्ठेयतया प्रतीतयोः प्रमाणान्तरं विनापि गृहमेधीयाङ्गत्वप्रतीतेरतिदेशप्रतिवन्धकत्वोपपत्तावपि पर्यग्निकरणान्तत्वस्य क्तप्रत्ययेन प्रमाणान्तरविहितत्वावगतेरतिदेशोपजीवित्वेन तत्प्रतिवन्धकत्वानुपपत्तिरित्याशङ्कां निरस्यति—**नचेति**॥ निष्पन्नत्वप्रतीतेरेतद्विधिविधानोत्तरकालीनाभिप्रायेणोपपत्तेरित्यर्थः। नच—एवमेतद्विधिविधेयत्वे कृतपर्यग्निकरणत्वनिर्देशात् पर्यग्निकरणमात्रस्यैवानुष्ठानापत्तिरिति—वाच्यम्; अत्र पर्यग्निकरणान्तविध्यभावेनातिदेशतः प्राप्स्यमानेन पर्यग्निकरणेन यादृशी भूतपर्यग्निकरणता संबध्यते तादृश्या एव ततः पूर्वं विधानेन यथाप्राप्तोपादानात् तदन्तानुष्ठानोपपत्तेरिति भावः॥

(पूर्वोत्तरकल्पप्रयोजननिरूपणम्)

प्रयोजनं त्वाष्ट्रयागापेक्षया यागान्तरानुष्ठानं पूर्वपक्षे। सिद्धान्तेतु त्वाष्ट्रयागस्य पर्यग्निकरणान्ताङ्गानुष्ठानेन जीवत एव पशोर्यानि हृदयाद्यङ्गानि तेषां त्वष्टृपत्नीवदुद्देशेन याग इति स्पष्टत्वान्नोक्तम्॥

॥ इत्यष्टमं पात्नीवतानुवादत्वाधिकरणम्॥

(अनारभ्यत्वोक्तिप्रयोजनं, प्रथमार्थवादार्थनिरूपणोपयोगः, अध्यायप्रकरणानन्तरसंगतिश्च)

विषयवाक्यमुदाहरति—**अनारभ्येति**॥ प्रकृतस्य यागस्योपपादकस्य सत्त्वेन ग्रहणे देवतान्वयसंभववादिनः सिद्धान्तिनो हेतुनिरासाय पूर्वपक्षसाधकतयाऽनारभ्याधीतत्वोपन्यासः। तन्निरासश्चाग्रे व्यक्तीभविष्यति। सोमायायजत इत्यत्र सोमपदस्य लतेन्दुसाधारणत्वेऽपि "संदिग्धेषु वाक्यशेषादि"ति न्यायेन हविषा हविर्यजत इतिवाक्यशेषाद्वीरुत्सोमपरत्वावगतिसिध्यर्थं प्रथमार्थवादार्थमाह—**अत्रेति**। **प्राण इति**॥ प्राणवायुरेतस्य यजमानस्यायुर्मर्यादामतिक्रम्य वर्तते, वर्धते इत्यर्थः। पूर्वपक्षे यागान्तरे देवतालक्षणगुणस्य विधेयत्वात् सिद्धान्तेच ग्रहणे विधेयत्वात् स्वरूपेण निश्चितविधेयत्वस्यापि उद्देश्यनिरूपितत्वरूपेणानिश्चितविधेयताकस्य यागभेदकत्वाभेदकत्वविचारादध्यायप्रकरणसङ्गती। तथा पर्यग्निकृतवाक्ये यागानुवादेन गुणविधानादङ्गान्तरविधाने निरस्ते तत्प्रसङ्गादिहापि तन्निराकरणात् प्रासङ्गिकीमनन्तरसङ्गतिं च स्पष्टत्वादनभिधाय पूर्वपक्षमेवाह—**तत्रेति**॥

(देवताविशिष्टयागान्तरविधान एव तात्पर्यमित्युपपादनम्)

तत्र ग्रहणविध्यनुपपत्त्या यागान्तरविधिपूर्वपक्षं समर्थयितुं तदसंभवमुपपादयन् अंश्वदाभ्यपदयोर्नामधेयत्वमङ्गीकृत्य प्रथमतस्तद्विधिं निरस्यति—**न तावदिति**॥ **नामकत्वानुपपत्तेरिति**॥ ग्रहणस्य संस्कारकर्मणः संस्कार्यावच्छेदेनैव व्यवच्छेदसिद्धेरङ्गतया संकल्पादौच नामधेयानपेक्षणात् गृह्णातेः सकर्मकत्वान्नित्यं कर्मसाकाङ्क्षत्वेन तदभावे ग्रहणवि-

द्वितीयान्तयोस्तयोः संस्कार्यद्रव्यनामत्वाङ्गीकारे तु अव्यभिचरितक्रतुसंबन्धाभावान्न द्रव्यमात्रोद्देशेन ग्रहणविधिसंभवः । अतो द्रव्यदेवताविशिष्टयागान्तरविधानमेवेदम् ; अदाभ्यपदेन हिंसानर्हसोमाख्यद्रव्यस्यांशुपदेन च निर्यासद्रव्यस्याभिधानात् । द्वितीया चोभयत्र सक्तुन्यायेन । देवता त्वेकत्र सोमोऽन्यत्र प्रजापतये स्वाहेति मन्त्रवर्णात्प्रजापतिः । गृह्णातिश्चाद्येऽनुवादो द्वितीये यागलक्षकः । तयोश्च यागयोः प्राकरणिकैतत्समानजातीयतैत्तिरीयशाखास्थवाक्याज्ज्योतिष्टोमाङ्गत्वमिति प्राप्ते—

गृह्णतौ यागलक्षणायां प्रमाणाभावादाद्यवाक्ये गुणसंक्रान्तशक्तिना विधिना ग्रहणस्यैव विधेयत्वावगमाच्चोभयत्रापि ग्रहणमेवोक्तसंज्ञकं उक्तसंज्ञकद्रव्यसंस्कारकत्वेन वा विधीयते । एवंच विनियोगभङ्गोऽपि द्वितीयाया न कल्पितो भवति । देवता तु सोमरूपा आद्यवाक्ये ग्रहणे एवान्वेतीति देवताविशिष्टं ग्रहणमेव तत्र विधीयते, द्वितीये तु "उपयाम गृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामी"ति मन्त्रवर्णाद्ग्रहणाङ्गतया देवताप्राप्तिर्द्रष्टव्या । होममन्त्रस्तूत्तरभावियागोपकारकत्वमादाय नेयः । देवताविशिष्टग्रहणद्वये

---

धानानुपपत्तेरदाभ्यशब्दस्य हिंसानर्हसोमद्रव्यवचनत्वादंशुशब्दस्य निर्यासे शक्तत्वेन च नामत्वानुपपत्तेरित्यर्थः । सकर्मकत्वानुरोधेन द्रव्यपरत्वं वक्तव्यं निरस्यति—**द्वितीयान्तयोरिति** ॥ **द्रव्यमात्रोद्देशेनेति** ॥ द्रव्यमात्रोद्देशेन ग्रहणविधाने आज्यद्रव्यस्यापि तदापत्तेरदाभ्यवाक्ये यागविशिष्टद्रव्योद्देशेन तत्संभवेऽपि विशिष्टोद्देशत्वेन ज्योतिष्टोमे सोमदेवताया अप्राप्तत्वेन तस्या अपि विधेयत्वापत्त्या च वाक्यभेदापत्तेर्देवताविशिष्टग्रहणविधाने च समाप्तपुनरात्तत्वदोषापत्तेश्च न ग्रहणविधिसंभव इत्यर्थः । अस्तुवा ग्रहणे देवतावैशिष्ट्यम्, तथाप्यैन्द्रवायवं गृह्णातीत्यत्रेव प्रकृतस्य यागस्योपपादकस्याभावान्न तत्संभवः । अतो ग्रहणेऽसंभवन्निवेशदेवतारूपगुणाद्यागान्तरमेव विधीयत इत्यभिप्रेत्याह—**अत इति** ॥

**( प्राचीनसंमतातिदेशिकद्रव्यप्राप्तिपक्षनिरासः )**

प्राचीनैरंश्वदाभ्यपदयोर्यागान्तरनामधेयत्वाङ्गीकारेण गृह्णातिचोदनासामान्यात् ज्योतिष्टोमधर्मातिदेशेन द्रव्यदेवतासंबन्ध उपपादितः । तस्य यागत्वनिश्चयोत्तरमतिदेशप्रवृत्तेस्तस्यच द्रव्यदेवतासंबन्धवत्त्वाधीनत्वेन द्रव्यसंबन्धस्य प्रथमत आवश्यकत्वादनुपपत्तिं सूचयन्निव द्रव्यप्राप्तिमुपपादयति—**अदाभ्यपदेनेति** ॥ **एकत्र सोम इति** ॥ अदाभ्यवाक्ये सोमायेति चतुर्थ्यन्तपदसमर्पित इत्यर्थः ॥

**( यागविधावपि प्रथमवाक्ये गृह्णातिरनुवादः द्वितीये यागलक्षकः, यागद्वयमिदं ज्योतिष्टोमाङ्गम् )**

**आद्ये इति** ॥ आद्यवाक्ये यजतेः प्रत्यक्षत एव श्रवणात् तस्यच सोमद्रव्यकत्वसादृश्येन ज्योतिष्टोमविकारत्वात् तदतिदेशप्राप्तग्रहणानुवादः, द्वितीये यजत्यश्रवणाल्लक्षक इत्यर्थः । **एतत्समानजातीयेति** ॥ "देवा वै यत् यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा अदाभ्ये छन्दांसि सवनानि समवस्थापयन्नि"त्यादिना अदाभ्यस्य तथा "देवा वै प्रबाहुग्रहानगृह्णत स एतं प्रजापतिरंशुमपश्यत्तमगृह्णीते"त्यादिनांशोर्ज्योतिष्टोमप्रकरणे तैत्तिरीयाणां षष्ठे प्रपाठके षष्ठे काण्डे आम्नातं वाक्यद्वयं तस्मादित्यर्थः ॥

**( संस्कारस्य विधाने उक्तवाक्यतात्पर्यं, प्रथममते देवतावाप्तिर्वैधी, द्वितीये लैङ्गिकीत्यादिनिरूपणम् )**

**यागलक्षणायामिति** ॥ लक्षणापदमनुवादस्याप्युपलक्षणम् । **उक्तसंज्ञकमिति** ॥ ग्रहणस्य ग्राह्यसंस्कारत्वप्रसिद्धेर्ज्योतिष्टोमाङ्गताबलेन तदीयसोमसंस्कारार्थत्वप्रतीतेः शक्यार्थस्य प्राप्तत्वेन तत्प्रख्यन्यायेन ग्रहणनामत्वोपपत्तिरिति मूलानुयायिनां मतेन ग्रहणनामत्वे उक्ते सोमाख्यद्रव्यपरत्वेनैवोपपत्तौ कर्मकारकान्तराद्यध्याहारद्वितीयाभङ्गयोरन्याय्यत्वात् "यत्ते सोमादाभ्यं नाम जागृवी"ति मन्त्राददाभ्यपदस्य सोमद्रव्यपरत्वप्रतीतेश्च तत्रापरितुष्य द्रव्यनामत्वमेव न्यायसुधास्वारस्याद्युक्तमभिप्रेत्य पक्षान्तरमाह—**उक्तसंज्ञकद्रव्येति** ॥ देवताया अनिविशमानत्वं निरस्यति—**देवतात्विति** ॥ द्वितीयाभङ्गादिदोषापेक्षयैकस्मिन् समाप्तपुनरात्तत्वदोषाङ्गीकारे क्षत्यभावमभिप्रेत्य ग्रहण एवेत्युक्तम् । **देवताविशिष्टं ग्रहणमेवेति** । एवकारेण देवतायाः मन्त्रवर्णात् प्राप्त्याऽविधेयत्वस्य देवतामात्रविधानेन ग्रहणेऽविधेयत्वस्यच निरासः सूचितः । नहि "शुक्रं ते शुक्रेण गृह्णामी"ति लिङ्गविनियुक्तमन्त्रावरोधे सति सोमलिङ्गस्य यत्ते सोमेति मन्त्रस्य सन्निधिमात्रेण ग्रहणे प्राप्तिः संभवति । नवा देवतामात्रविधाने"अदाभ्यं गृहीत्वे"त्यस्यानर्थक्यं परिहर्तुं शक्यम् । अतोऽप्राप्तत्वाद्देवताविशिष्टग्रहणमेव विधेयं नत्वेकतरदित्यर्थः । कथं तर्हि "यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा प्रजापतये स्वाहे"ति मन्त्रयोर्होमीयदेवतालिङ्गकयोर्देवताया ग्रहणाङ्गत्वे उपपत्तिरित्यत आह—**होममन्त्रस्त्विति** ॥ ग्रहणे विधीयमानाया देवतायाः प्रसङ्गेन यागोपकारकत्वात् उत्तरभावियागोपकारकत्वमादाय होमसंबन्धोपपत्तेर्न तल्लिङ्गं ग्रहणे विहन्तीत्यर्थः ॥

**( प्रकाशकारसंमतपूर्वोत्तरकल्पफलनिरासेन प्रयोजनान्तरापादनम् )**

अत्रच प्रकाशकारैः पूर्वपक्षे विश्वजिदादिवत् कल्प्यफलसोमयागान्तरमिदम् । ज्योतिष्टोमाङ्गेतु ग्रहयागद्वयमधिकम-

च प्राकरणिकवाक्येन ज्योतिष्टोमाङ्गत्वस्य तदुपपाद्यत्वस्य च बोधोपपत्तेर्न कश्चिद्विरोधः। प्रयोजनं पूर्वपक्षे यागस्याङ्गत्वाद् यथाशक्तिन्यायविषयत्वं, सिद्धान्ते प्रधानत्वान्नेति ॥ ९ ॥ **इति नवममदाभ्यनामताधिकरणम् ॥**

---

### (१० अधिकरणम्।)

**अग्निस्तु** ॥ अनारभ्यैव श्रुतम् "य एवंविद्वानग्निं चिनोती"ति। तत्र चिनोतिना नाग्निसंस्कारार्थत्वेन चयनविधिः, अपितु अग्निसंज्ञकस्य यागस्यैव विधिः; "अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं द्विरात्रेणे"त्याद्युत्तरवाक्येषु अग्निष्टोमादियज्ञानामग्न्यनुयजनत्वरूपगुणाम्नानात्। नहि अग्न्यनुयजनत्वमग्नेरयागत्वेऽवकल्पते; देवदत्तमनुगच्छति यज्ञदत्त इत्यादौ तुल्यक्रियायोगे एवानुशब्ददर्शनात्। अतश्चाग्निसंज्ञकस्य यागस्य तस्मिन्नेव वाक्ये विधौ गौरवापत्तेर्विद्वद्वाक्य एव चिनोतिना लक्षणया तद्विधानम्। स चाव्यक्तत्वात् ज्योतिष्टोमविकारः। उत्तरवाक्यैश्च तस्य क्रत्वङ्गत्वसिद्धिः।

---

स्त्येव। सिद्धान्तेतु तावदेवेति प्रयोजनमुक्तम्। तत्पूर्वपक्षेऽपि प्राकरणिकवाक्ययोर्ग्रहणान्तरविधायकत्वे प्रमाणाभावेऽनारभ्याधीतैतद्वाक्यद्वयविहितयागद्वयविनियोजकत्वस्यैव सिद्धान्त इवोपपत्तावश्रुतफलकल्पनस्य चानापत्तेरयुक्तमित्यभिप्रेत्य स्वयमङ्गत्वानुरूपं प्रयोजनान्तरमाह—**प्रयोजनमिति** ॥

**॥ इति नवममदाभ्यग्रहनामताधिकरणम् ॥**

---

**(अध्यायाधिकरणसंगतयः। अग्निंचिनोतीत्यत्राग्नेः चयनोत्पाद्यत्वसंस्कार्यत्वयोरसंभवात् स्थण्डिलनिर्वर्तकतया संस्कार्यत्वविवक्षणे वाक्यवैयर्थ्यात् यागान्तरविधानमिति पूर्वपक्षः)**

विषयवाक्यमुदाहरति—**अनारभ्यैवेति** ॥ पूर्वाधिकरणविषयवाक्यसाम्यतासूचनेन प्रासङ्गिकीं पादादिसङ्गतिं तथातिदेशिकीमनन्तरसङ्गतिं च सूचयितुमेवकारः। विद्वद्वाक्ये न तावदग्निपदवाच्यस्य शुद्धस्य ज्वलनस्य चयनेनोत्पाद्यत्वरूपकर्मत्वसंभवः। नापि लौकिकाग्नेर्भूतभाव्युपयोगरहितस्य तत्संस्कार्यत्वम्। नाप्याहवनीयादिपरत्वेन तत्संभवः; तस्याधानैकजन्यत्वेन चयनोत्पाद्यत्वासंभवात्, अन्यथा चयनवाक्यगताग्निशब्देनाऽऽहवनीयादौ निरूढलक्षणायामपि प्रमाणाभावात्। नापि चयनसंपादितस्थण्डिलाधारतासंबन्धेन तस्य संस्कार्यत्वसंभवः; तथात्वे त्वेतादृशसंस्कारकतया चयनस्येष्टकाभिरग्निं चिनुत इति वाक्यान्तरेणैव प्राप्तेरेतद्विधिवैयर्थ्यापत्तेः। अतः सर्वथा चयनविध्यसंभवेन वैयर्थ्यमापाद्य यागान्तरविधानपूर्वपक्षं साधयति—**तत्रेति** ॥

**(वार्तिकोक्तपूर्वपक्षप्रकारतन्निरासाभ्यां प्रकृतपूर्वपक्षापेक्षितवाक्योदाहरणम्)**

अत्र वार्तिके 'अथातोऽग्नि'मित्यादिवाक्येष्वग्निं यजतीति सामानाधिकरण्येन यागनामत्वावगमात् उत्पत्तिवाक्येऽपि चिनोतेर्यागपरत्वम्। अथात इत्यादिवाक्यचतुष्टयेन तद्यागानुवादेन तत्तत्संस्थापकत्वविधिः। द्विरात्रादिवाक्यैः दशभिर्द्विरात्रादिकालास्तत्रैव वैकल्पिका विधीयन्ते। तत्रत्यानुशब्दश्च 'एष वाव प्रथमो यज्ञो यज्ञानामि'त्यनेन प्राप्ताग्निष्टोमोत्तरकालतानुवादः उक्थ्यादिवाक्येषुच यजतिमात्रस्यैवानुषङ्गो नानुशब्दस्य; अनुवादत्वासंभवात्, तस्यच यागान्तरस्य ऋध्नोत्येवेत्यार्थवादिकं रात्रिसत्रे प्रतिष्ठेव ऋद्धिः फलमिति यागत्वसाधकं पक्षान्तरमुक्तम्। तदग्निपदस्य रूढस्य सामानाधिकरण्यमात्रेण नामत्वायोगात् सामानाधिकरण्यस्यचाग्निशब्देऽनुशब्दयोगनिमित्तद्वितीयान्तत्वेन दुरुपपादत्वात् अन्यथाऽनुशब्दसापेक्षत्वापत्तेरिति कौस्तुभे दर्शितरीत्याऽयुक्तमभिप्रेत्य वार्तिकोक्तपक्षान्तरमवलम्ब्य यागरूपत्वं साधयितुमुपयुक्तानि वाक्यान्युदाहरति—**अथातोऽग्निमिति** ॥ इत्याद्युत्तरवाक्येष्वित्यादिशब्देन तं त्रिरात्रेणेत्याद्येकादशरात्रान्तानां नवानां वाक्यानां संग्रहः। तमुक्थ्येनेत्येतदनन्तरं तं षोडशिनेत्येतदपि द्रष्टव्यम् ॥

**(आहवनीयाबाधेन प्रक्षेपाधाराहवनीयाधारतया विद्वद्वाक्ये चयनविधिरिति पूर्वपक्षः)**

अत्रोत्तरवाक्येषु अग्निष्टोमवाक्यगतानुयजतिपदयोरनुषङ्गः। **अग्न्यनुयजनत्वरूपेति** ॥ अथातोऽग्निमिति द्वितीयाया लक्षणार्थकानोः "अनुर्लक्षणे"ति सूत्रेण कर्मप्रवचनीयसंज्ञाविधानात् तद्योगनिमित्तत्वादग्निष्टोमादिवृत्त्यनुयजनप्रतियोगित्वार्थत्वावगतेरग्निप्रतियोगिकानुयजनत्वरूपाम्नानमित्यर्थः। गुणप्रकरणसङ्गतिं सूचयितुं **गुणेत्युक्तं**। तस्य गुणस्याविद्यमानत्वेन भेदकतां साधयति—**नहीति** ॥ यागत्वे निश्चिते तत्राऽऽहवनीयप्राप्त्या तत्प्रख्यन्यायेन नामत्वमग्निपदस्याभिप्रेत्याह—**अतश्चेति। तस्मिन्नेवेति** ॥ अथातोऽग्निमित्यस्मिन्नेव वाक्ये तद्विधौ तद्यागतत्प्रतियोगिकानुभावस्यापि विधानेन विशिष्टविधिगौरवापत्तेरित्यर्थः। विद्वद्वाक्य एवेत्येवकारेणान्याक्षिप्तत्वेन यागविधिपरत्वसूचनेनेष्टकावाक्यस्य तद्विधित्वनिरासः सूचितः। तत्रेष्टकानां यागे करणत्वानुपपत्त्या शक्यार्थस्यैव चयनस्य विधेयत्वादित्याशयः। **उत्तरवाक्यैश्चेति** ॥ कालविधिपरेष्वप्येषु वाक्येषु फलवतोऽग्निष्टोमादेरुपस्थितत्वात् तद्वाचकपदान्तरकल्पनया कल्पितवाक्येन तदुद्देशेन विनियोगविधानात् क्रत्वङ्गत्वसिद्धिः।

"इष्टकाभिरग्निं चिनुते" इत्यनेन चयनस्य प्राप्तत्वाच्चिनोतिर्निर्वपतिवदनुवादश्रयनस्येति प्राप्ते—

पाकमनुभुङ्क्ते इत्यादौ तुल्यक्रियायोगाभावेऽप्यनुशब्ददर्शनान्न तदनुरोधेनाग्निशब्दस्य चयनशब्दस्य च यागपरत्वकल्पना युक्ता। अतो विद्वद्वाक्ये चयनमेवाग्निसंस्कारार्थं विधीयते। अग्निशब्देनच यद्यपि शक्त्या ज्वलन एवाभिधीयते; तथापि तदर्थत्वे वैयर्थ्यापत्तेर्निरूढलक्षणया आहवनीयादिपरत्वावसायात्तदुद्देशेनैव चयनं संस्कारकतया विधीयते। संस्कारश्च सामर्थ्याच्चयननिष्पादितस्थण्डिलस्थापनरूपः। स्थापितस्याग्नेरुपयोगापेक्षायामथात इति वाक्येन तस्य ज्योतिष्टोमाङ्गत्वेन विधानम्। अत्रहि अग्निशब्देन चयननिष्पादितस्थण्डिलस्थापितोऽग्निश्चयनमेव वा लक्षणयाऽभिधीयते। अग्निष्टोमशब्दश्च जातिन्यायेन संस्थावचनोऽपि व्यक्तिन्यायेन ज्योतिष्टोममेव प्रचुरप्रयोगादभिधत्ते पार्थशब्द इवार्जुनम्। अतश्च ज्योतिष्टोमत्वमेव लाघवादुद्देश्यतावच्छेदकं न त्वग्निष्टोमसंस्थावत्त्वमपि। यद्यपि च चयनस्य ज्योतिष्टोमप्रयोगसंवलितत्वादनुष्ठानसादेश्यादेव तदङ्गत्वसिद्धिः; तथापि पशुकामश्चिन्वीतेत्यादिवाक्यैरग्नेः काम्यत्वावगमात् क्रत्वङ्गत्वप्रतिप्रसवार्थं तन्न विरुध्यते॥

---

इतरथा अग्निष्टोमोद्देशेनाग्न्यनुभावस्य अग्नेश्चाङ्गत्वेन विधाने वाक्यभेदापत्तेरिति भावः। **इष्टकाभिरिति**॥ यद्यपि पूर्वपक्ष्युपपादितरीत्याऽग्निपदवाच्यज्वलनाद्युद्देशेन न चयनविधिः संभवति; तथाप्यग्निपदवाच्ययागोद्देशेन तद्विध्युपपत्तेस्तस्य च साक्षाद्यागेऽसंभवे **आनर्थक्यतदङ्गन्यायेन** तदन्तरङ्गप्रक्षेपरूपाङ्गेऽवतारे आहवनीयाबाधेनापि चयननिवेशसंभवात् प्रक्षेपाधाराहवनीयाधारतया चयनविधानाच्चयनप्राप्तिरित्यर्थः॥

## (चयननिष्पादितस्थण्डिलस्थापनरूपाहवनीयसंस्कारविधान एव विद्वद्वाक्यतात्पर्यम्)

चिनोतेर्यागलक्षणाया इष्टकावाक्ये विशिष्टविधिगौरवस्य चाङ्गीकारापेक्षयैकत्र विद्वद्वाक्येऽग्निपद एव क्लृप्तामाहवनीये निरूढलक्षणामङ्गीकृत्य स्वनिष्पाद्यस्थण्डिलाधारतासंबन्धेन तत्संस्कारकतया चयनविध्युपपत्तौ यागपरत्वे प्रमाणाभावात् अनुशब्दस्योत्पत्तिवाक्ये उपयोक्ष्यमाणाहवनीयाद्याधारभूतस्थलनिष्पादकत्वस्यावगतस्य पूर्वकालत्वं विनाऽनुपपत्तेरुपसद्भिनत्वस्य चयने प्रमाणान्तरतः प्राप्तेरर्थादेवाग्निष्टोमादिषु प्राप्तपश्चाद्भावनानुवादकस्य भिन्नक्रियापश्चाद्भावेऽप्युपपत्तेर्न यागान्तरविधानम्, अपितु चयनविधानमित्यभिप्रेत्य सिद्धान्तमाह **—पाकमनुभुङ्क्ते इति**॥ देवदत्तमनुगच्छतीत्यादौ क्रियान्तरानुपादानादुपस्थितत्वात् गमनरूपक्रियैक्यप्रतीतावपीह चयनक्रियाया भिन्नाया विशेषणतया वा प्रतीतेस्तामादायाप्यनुशब्दोपपत्तिं दर्शयितुमाह**—अत्रहीति**॥ अथशब्देन स्थण्डिलनिष्पत्त्यानन्तर्योक्तेरतःशब्दे सार्वविभक्तिकं तसिमङ्गीकृत्येममित्यर्थात्सर्वनाम्नोभयपरामर्शात् स्थण्डिलस्थापितोऽग्निश्चयनं वाग्निशब्देनोच्यत इत्यर्थः। अग्निष्टोमपदश्रवणात् तत्संस्थाङ्गतयैव विधाने सति कथं ज्योतिष्टोमाङ्गत्वेन विधानमुक्तमित्यत आह**—अग्निष्टोमशब्दश्चेति**॥ इह यजतिसामानाधिकरण्येन संस्थावचनत्वानुपपत्तेर्बौधायनादिकल्पेषु ज्योतिष्टोममग्निष्टोमपदेनाभिधायैव सकलधर्माम्नानात् तत्रैव प्रचुरप्रयोगावगतेर्ज्योतिष्टोम एवाग्निष्टोमपदेनाभिधीयते। **एतेन**—अग्निष्टोमसंस्थाविधानं पूर्वपक्ष्युक्तं**—परास्तम्**; अत एव तस्य यागरूपत्वस्य सिद्धत्वाद्यजतिः साधुत्वार्थमनुवादः, अथातःशब्दावपि पूर्वोक्तरीत्या प्राप्तार्थत्वादनुवादौ। अतः केवलं ज्योतिष्टोमोद्देशेनाधिकरणीभूताहवनीयस्थापनरूपसंस्कारद्वारा चयनमङ्गतया विधीयत इत्यर्थः॥

## (ज्योतिष्टोमप्रयोगसंवलितस्यापि चयनस्य क्रत्वङ्गत्वप्रतिप्रसवः)

**संवलितत्वादिति**॥ दीक्षणीयादिसोमप्रयोगसंकीर्णसावित्रहोमोखासंभरणदीक्षणीयादिवैशेषिकगुणशिक्यप्रतिमोचनाद्यङ्गकलापवत्त्वेन ज्योतिष्टोमप्रयोगसंवलितत्वमित्यर्थः। **क्रत्वङ्गत्वप्रतिप्रसवार्थमिति**॥ एतच्च नित्यात्काम्यस्येत्यादिद्वात्रिंशत्तमश्लोकविवरणे विधिरसायनकृदुपपादितरीत्योक्तम्॥

## (अथात इत्यादिवाक्यानामप्राप्तक्रत्वङ्गत्वबोधनार्थत्वमिति स्वमतोपपादनम्)

**वस्तुतस्तु**—यावदनुष्ठानसादेश्येन पूर्वपूर्वप्रमाणकल्पनयाऽङ्गत्वं कल्पनीयम्, ततः पूर्वप्रवृत्तेन कामवाक्येन कामार्थत्वबोधनात् तद्बाधस्यैव प्राप्तेरप्राप्तक्रत्वङ्गत्वविधायकत्वमेव कौस्तुभोक्तं युक्तम्। **एतेन**—उत्पत्तौ ह्यग्नेः संस्कार्यत्वोक्तेश्चयनप्रकरणेच तन्निर्वृत्यतण्डुलोपर्याहवनीयस्थापनोक्तेः क्रत्वव्यभिचारिसंस्कार्यद्वारा क्रत्वङ्गत्वप्राप्तिरिति विधिरसायनोक्तं तदुपपादनं**—अपास्तम्**; अग्निचयनस्य काम्यत्वपक्षेऽग्निमिति द्वितीयाभङ्गेनाधारताया लक्षणयाश्रयनसंस्कार्यत्वस्याप्रावभाने चयनस्याग्न्यङ्गत्वानुपपत्तेः। काम्यचयनानुनिष्पादिनि स्थले आहवनीयस्थापनविधावपि परप्रयुक्तोपजीव्याहवनीयस्थापनं प्रति चयनस्याङ्गत्वात् प्रमाणाभावेनच तद्द्वारा क्रत्वङ्गत्वाप्राप्तेः। अतोऽप्राप्तक्रत्वङ्गत्वविधानमेव युक्तम्। **एतेन**—अग्नेः फलार्थस्याश्रयापेक्षायामग्निष्टोमादिरूपाश्रयसमर्पकत्वमेव तेषां वाक्यानामित्येकत्रिंशत्तमश्लोके विधिरसायनकारोक्तं**—अपास्तम्**; चयनक्रियाया एव फलार्थविधानेन गुणसंबन्धाभावेनाश्रयानपेक्षणादिति॥

अयं चाग्निः प्रकृतौ "अग्निः सोमाङ्गं वेच्छतामि"त्यादिवचनाद्वैकल्पिकः। अग्निपक्षे चोत्तरवेद्यां ह्यग्निश्चीयत इति वचनादुत्तरवेद्या समुच्चयः। तदभावे चोत्तरवेदिमात्रम्; उत्तरवेद्यामग्निं निदधातीति वचनात्। अतश्च तमुक्थ्येने-

## ( न्यायसुधाकारमतस्य दाशमिकाग्न्यतिग्राह्याधिकरणवार्तिकविरोधादिना प्रकाशकारैर्दूषणम् )

अत्रच संकर्षे द्वितीयाध्याये "मध्यमायामुपसद्यग्निश्चीयते प्रकृत्युपकृतत्वादि"त्यधिकरणे "उत्तरवेद्यांह्य ग्निश्चीयत" इति वचनेनाग्न्युत्तरवेद्योः समुच्चयेन भिन्नकार्यत्वात्, चयने उत्तरवेदिकार्यापन्नत्वाभावान्नोत्तरवेदिधर्माश्रिताः कार्या इति पूर्वपक्षवचनेन समुच्चयेऽप्यग्निधारणरूपोत्तरवेदिकार्यस्याग्निसंस्कार्यत्वानुपपत्त्या चयनेऽपि कल्प्यमानस्यैकत्वात् कार्यैक्येन भवन्त्येव तस्मिन् तद्धर्मा इति दूषयित्वा सिद्धान्तितम्। तदनुसारेण न्यायसुधायामप्यादृतस्य समुच्चयपक्षस्य दाशमिकविकल्पपरवार्तिककारोक्त्या विरोधाद्दूषणमित्थं प्रकाशकारैः कृतम्। दशमे ह्यग्न्यतिग्राह्याधिकरणे "तमुक्थ्येनेत्यादिवाक्यानामतिदेशतः औत्तरवेदिकविकल्पेन प्राप्तस्याग्नेर्नियमार्थत्वमाशङ्क्य सन्निहितगुणकामप्राप्तिप्रयोजनसंभवे विप्रकृष्टातिदेशसापेक्षनियमफलकत्वस्यायुक्तत्वान्निराकृतं वार्तिके। तत्रश्चाग्न्युत्तरवेद्योस्तत्र विकल्पस्यैवोक्तेस्तद्विरोधस्तावत् स्फुट एव। सोत्तरवेदिषु क्रतुषु चिन्वीते"ति समुच्चयविधित्वेन भासमानमपि वचनं न समुच्चयविधिपरम्। तैत्तिरीयशाखायामथातोऽग्निमित्यादिवाक्यानामाम्नानादुत्पन्नस्याग्नेः क्रतुसंबन्धबोधकत्वात्। तत्रचोद्देश्यभूतसोमयागविशेषप्रतिपित्सयोत्तरवेदिपदोपादानम्। यद्यपिवा विशेषवाक्यं स्यात्; तथापि तदुपसंहारार्थं स्यात्। यत्तु "उत्तरवेद्यां ह्यग्निश्चीयत"इत्यपरं, तद्धिशब्दाद्वर्तमाननिर्देशात् तस्यैव स्तुत्यर्थमर्थवादः। अतो विकल्प एव तयोः, अन्यथाग्निमात्रमिव ज्योतिष्टोमे उत्तरवेदिमात्रमपि तत्र नैव प्राप्नुयात् इति ॥

## ( प्रकाशकारमतनिरासेन दाशमिकाधिकरणविरोधेनच उत्तरवेद्यामग्निश्चीयत इत्युपपादनम् )

**तदयुक्तम्** ॥ सोत्तरवेदिमिति वाक्यस्य क्रतुसंबन्धपरत्वेऽपि चयनस्य सोमप्रयोगसंवलितत्वेन विधेयचयनसामर्थ्यादेव सोमयागविशेषोद्देश्यनिर्णयसंभवेन सोत्तरवेदिष्विति पदवैयर्थ्यापत्तेः। अतो यद्यपि तैत्तिरीयशाखायां क्रतुसंबन्धपरमपरं नैव वचनम्; तथापि उत्तरवेदिसहितक्रतूद्देशेन चयनस्यानेन विनियोगकरणेऽपि समुच्चितप्रजापतिविधानेनाग्निप्रजापत्योरिवेहापि अर्थात्समुच्चयो नासुलभः। **किंच** उत्तरवेद्यां हीत्यस्य विधायकत्वाभावे तयोर्विकल्पाङ्गीकारे चयननिरपेक्षोत्तरवेदेरिवोत्तरवेदिनिरपेक्षमेव चयनं प्राप्नुयात्। अत उत्तरवेद्याधारताप्राप्तये आवश्यके तस्य विधित्वे विधिकल्प-

क्त्वेवा तत एवाकामेन तयोः समुच्चयसिद्धिरिति समुच्चयपक्षमेव युक्तमभिप्रेत्य केवलोत्तरवेदिप्राप्तिं दाशमिकीं विकल्पोक्तिंच समर्थयितुमाह—**अयंचेति** । **इत्यादिवचनादिति** ॥ सत्रे समारोपकालविधिपरे वाक्ये यद्यग्निं चेष्यमाणा भवन्तीति सिद्धवत्पाक्षिकानुवादभूतकात्यायनवचनस्यादिशब्देन संग्रहः। ततश्चाग्नेः स्वाभावप्रतियोगित्वविषयो विकल्पः नतूत्तरवेदिप्रतियोगित्वविषय इत्यर्थः। **इतिवचनादिति** ॥ इदंहि वचनं न परंपरासंबन्धेनाधारविधानपरम्; तस्य चयनाधारताविधिबलादेव सिद्धेः, अपितु संयोगपृथक्त्वन्यायेन चयनाभावपक्षे साक्षादाहवनीयाधारताविधायकमिति सिद्ध उत्तरवेदिमात्रकः प्रयोगः। यद्यप्येतद्विधिविधेयस्य साक्षादाधारत्वस्य प्राकरणिकत्वात् तदवरोधे चयननिष्पाद्यस्थण्डिलस्य नाधारतया निवेशः संभवति; तथापि अग्निष्टोमपदस्य ज्योतिष्टोम एव शक्ततया अस्यापि निरवकाशत्वान्न बाधः। अतएव अग्न्यभावे अग्निधारणार्थोत्तरवेदेरग्निपक्षे तद्धारणार्थमसंभवादर्थादेकाग्निधारणरूपकार्ये संभवन्तं विकल्पमादाय दाशमिकी विकल्पोक्तिः न चयनाधारतया प्राप्तोत्तरवेदिसमुच्चयं विरुणद्धीत्यर्थः। **अतएव दशमे**—प्रकृतौ हि वैकल्पिकोऽग्निरुत्तरवेद्या वा निधातव्यः स्थले नेति ग्रन्थेनाग्निनिधानरूपकार्यापेक्षयैव विकल्प उक्तः ॥

## ( समुच्चयपक्षेपि चितावुत्तरवेदिधर्मोपपत्तिः )

नचैवमग्न्युत्तरवेद्योः समुच्चये भिन्नकार्यत्वापत्तेश्चितावुत्तरवेदिधर्मानापत्तिः; उत्तरवेदेः संयोगपृथक्त्वन्यायेन कार्यद्वयावगमात् तद्धर्माणामपि कार्यद्वयप्रयुक्तत्वावगतेश्चयननिष्पादितस्थण्डिलस्य साक्षादग्निधारणरूपकार्यार्थत्वेन तदंश उत्तरवेदिकार्यापन्नत्वेन तद्धर्मप्राप्त्युपपत्तेः। अतएव स्थण्डिलधारणरूपकार्यान्तरे समुच्चीयमानोत्तरवेद्यामपि तद्धर्मा भवन्ति। तत्र चयनोत्तरवेद्योः क्रियमाणेष्वविरुद्धेषु तन्त्रता, विरुद्धेष्वावृत्तिरिति कौस्तुभे द्रष्टव्यम्। **वस्तुतस्तु**—एकाग्निधारणकार्यार्थत्वेनाग्न्युत्तरवेद्योर्विकल्पेऽपि उत्तरवेदिपक्षे प्राप्तकादाचित्केष्यमाणत्वेनापि कल्पसूत्रकारवचनोपपत्तेः स्वतन्त्रस्वाभावप्रतियोगित्वविषयश्रुतिकल्पने गौरवात् किमिति स्वाभावप्रतियोगित्वेन विकल्पाश्रयणम्? तावताप्युत्तरवेदेश्चयनाधारताविधिबलात्तयोः समुच्चयस्याप्युपपत्तिरस्त्येवेति यथाश्रुतवार्तिकानुसारेणोत्तरवेदिप्रतियोगिकविकल्प एव युक्त इति॥

## ( अग्नेर्ज्योतिष्टोमाङ्गत्वे तमुक्थ्येनेत्यादिवाक्यसार्थक्यम् )

**ननु**—एवमग्नेर्ज्योतिष्टोमाङ्गत्वे तदतिदेशेनैव तत्प्राप्त्युपपत्तौ तमुक्थ्येनेत्यादिवाक्यानर्थक्यमित्यत आह—**अतश्चेति** ॥

त्यादिवाक्यानि वैकल्पिकत्वाद्विकृतिविशेषे तन्नियमार्थानि चयनाश्रितश्येनाकारतादिफलार्थगुणानां प्राप्त्यर्थानि चेति दशमे वक्ष्यते ॥ १० ॥ इति दशममग्निचयनासंस्कारताधिकरणम् ॥

---

( ११ अधिकरणम् । )

**प्रकरणान्तरे** ॥ कौण्डपायिनामयने "उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहुति मासं दर्शपूर्णमासाभ्यामि"त्यादि श्रुतम् । तत्र जुहोतिना अग्निहोत्रादिपदैश्च दूरस्थस्यापि कर्मण उपस्थितत्वात्तदनुवादेन "यदाहवनीये जुहोती"तिवन्मासादिरूपगुणविधिः, उपादेयवदनुपादेयस्यापि दूरस्थकर्मानुवादेन विधाने बाधकाभावात् । कर्तृबहुत्वकालादिरूपानेकगुणविशिष्टप्रयोगविधानाच्च न वाक्यभेदः । अतो न कर्मान्तरविधिः इति प्राप्ते—

---

अनेन प्रकारेण स्वाभावप्रतियोगित्वेन चयनस्य वैकल्पिकत्वादित्यर्थः ॥

**( तमुक्थ्येनेत्यादिवचनानां गुणकामप्रयोजनवत्त्वं नियमार्थत्वं च )**

अत्रच दशमे सन्निहितवक्ष्यमाणगुणकामप्राप्तिरूपप्रयोजनसंभवे दूरस्थतत्तदतिदेशप्राप्त्यपेक्षया पाक्षिकत्वाधीननियमफलकत्वं प्राचीनैर्दूषितम् । तद्गुणकामप्रयोजनस्याप्यतिदेशप्राप्त्यधीनवैयर्थ्यप्रतिसंधानसापेक्षतयातिदेशोपस्थित्यधीनत्वेन तुल्यत्वादतिदेशोपस्थितौ च झटिति तद्बोधितपाक्षिकत्वस्यैवोपस्थितौ नियमस्यैव फलत्वौचित्यादयुक्तमित्यभिप्रेत्याह—**तन्नियमार्थानीति** ॥ गुणकामप्राप्तिरूपं प्रयोजनं निर्बाधमेवेत्याह—**चयनाश्रितेति** ॥ गुणकामेषु आष्टमिकन्यायेन प्रणयनवल्लौकिकचयनस्याश्रयत्वव्यावृत्त्यर्थं चयने अपूर्वीयत्वविवक्षावश्यंभावे ज्योतिष्टोमप्रकरणाभावेऽपि अथातोग्निमिति वाक्येन ज्योतिष्टोमस्यैवोपस्थितत्वात् तदपूर्वसाधनीभूतस्यैव तस्याश्रयत्वापत्त्या विकृतौ प्राप्त्यभावात् ज्योतिष्टोमतुल्योपस्थितिसंपादनद्वारा चयनस्य तत्तदपूर्वसाधनतासिद्ध्यर्थं तत्तद्विधानेनाऽऽश्रयलाभोपपत्त्या तदाश्रितगुणकामप्राप्तिः फलमित्यग्न्यतिग्राह्याधिकरणे दशमे वक्ष्यत इत्यर्थः । अतएव अतिरात्रादिपदानां तत्तत्संस्थाकज्योतिष्टोमवाचित्वेऽपि ज्योतिष्टोमे चयनोपदेशस्याथातोऽग्निमित्यनेनैव सिद्धत्वावगत्या तत्संस्थाविकृतिपरत्वमेवेति द्रष्टव्यम् ॥ यद्यपि संस्थानां फलवत्त्वात् चयनं प्रति शेषित्वं संभवति; तथापि तदाश्रयज्योतिष्टोमसंबन्धिचयनोपदेशेनैव गुणकामप्राप्तिसंभवात् वैयर्थ्यं तदवस्थमेवेति यत्सोमनाथेन अतिरात्रादिपदानां केवलसंस्थापरत्वमेव न यागलक्षणेत्युक्तं तत् **—परास्तम्**; अतस्तत्तत्संस्थाविकृतिपरत्वमेव युक्तमिति ध्येयम् । यथाचात्र फलद्वयेन विधिसांकर्यस्यान्यत्राप्यङ्गीकारान्न दोषत्वम्, तथा कौस्तुभे प्रतिपादितं द्रष्टव्यम् ॥

**( पूर्वोत्तरकल्पप्रयोजननिरूपणम् )**

प्रयोजनं पूर्वपक्षे ऋद्धिफलकं चयनं ज्योतिष्टोमधर्मकं यागान्तरमनुष्ठेयम् । चयनेनोत्तरवेदिबाधः । अग्निष्टोमादावुत्तरवेदिरेव । सिद्धान्तेतु न यागान्तरमग्निष्टोमे चयनोत्तरवेद्योर्विकल्प इति स्पष्टत्वान्नोक्तम् ॥

**॥ इति दशममग्निचयनासंस्कारताधिकरणम् ॥**

---

**( विषयवाक्यसंग्रहः पारिशेषिकसंगतिश्च )**

**इत्यादिश्रुतमिति** ॥ मासं वैश्वदेवेन मासं वरुणप्रघासैः मासं साकमेधेन मासं शुनासीरीयेणेति यजेतेत्यनुषङ्गसहितानां वाक्यानामादिपदेन संग्रहः । प्रमाणान्तरनिरूपणेन गुणप्रकरणसङ्गत्यभावेऽपि पारिशेषिकीं सङ्गतिं स्पष्टत्वादनुक्त्वा पूर्वपक्षमेवाह—**तत्रेति** ॥

**( कर्मभेदाभावपूर्वपक्षोपसंहारः )**

**बाधकाभावादिति** ॥ कर्त्रादिवत् कृतिसाध्यत्वेन रूपेण विधानासंभवेऽपि पौर्णमास्यादिकालवत् कृत्यधिकरणत्वादिना विधेयत्वसंभवेन विधानायोग्यत्वरूपबाधकाभावादित्यर्थः । नच प्राकरणिकसायमादिकालावरोधरूपबाधकस्य सत्त्वान्मासादिरूपगुणनिवेशानुपपत्तेर्गुणात् भेदः; सायंप्रातःकालयोरमावास्यापराह्णादिकालवत् व्याप्यव्यापकभावेनोपपत्तौ विरोधाभावात् । नचात्यन्तसंयोगवाचिद्वितीयान्तमासपदोपदिष्टसातत्यविरोधो बाधकः, तस्याहारविहाराद्यनुरोधेन बाधावश्यंभावे जातेष्टिन्यायेन प्राकरणिककालोपसंग्रहस्य सिद्धान्त इवोपपत्तेः । नच जीवनाख्यनिमित्तेन विरोधः; सिद्धान्ते सायंप्रातःकालाभ्यामिव मासेनाप्यवच्छेदसंभवेन तदविरोधात्, काम्यप्रयोग एव मासनिवेशोपपत्तेश्च । नच कौण्डपायिनसत्रप्रकरणेनाननुग्रहो बाधकः, कौण्डपायिन एव दीक्षितत्वेन पर्युदस्तानामग्निहोत्रादीनां मासं प्रतिप्रसवविधानेन **अथवा** —अग्निहोत्राद्युद्देशेन मासकाले विहितेऽपि उद्देश्यत्वेनोपस्थितानां निराकाङ्क्षाणामग्निहोत्रादीनां संवत्सरपरिमितसत्रप्रयोगस्य षण्मासपरिमितसोमयागैरपरिपूरणादाकाङ्क्षावशेन सत्रप्रयोगवचनेन फले विधानेन वा तदनुग्रहोपपत्तेरिति भावः ॥ एवमितरबाधकनिरासे बाधकाभावादित्यनेन सूचिते प्राप्तकर्मानुवादेनोपसदां तदुत्तरकालत्वस्य मासस्य कर्तृबहुत्वस्य च विधाने यदनेकार्थविधानेन वाक्याभेदापत्तिरूपं बाधकं गुणकृतभेदापादकं भाष्यकारेण सिद्धान्ते उपन्यस्तम्, तत्सिद्धान्तसाधकत्वेनादरणीयत्वबुद्ध्या पृथक्परिहरति—**कर्तृबहुत्वेति** ॥ मासं दर्शपूर्णमासाभ्यामित्यादौ अनेकगुणाभावेनाव्यापकत्वाच्च तस्य कर्मान्तरासाधकत्वमभिप्रेत्य पूर्वपक्षमुपसंहरति—**अत इति** ॥

सर्वत्र प्रवर्तकस्य विधेः कृतिविषयत्वापरपर्यायं उपादेयत्वं प्रमाणत्वाचाज्ञातज्ञाप्यत्वाख्यं विधेयत्वं च प्रमेयम्। तदुभयमप्येकवृत्ति। समानाभिधानश्रुत्यादिना च धात्वर्थभावनावृत्तीत्युत्सर्गः। योग्योपपदसत्त्वे तु विशिष्टविधिगौरवभिया तन्मात्रवृत्ति। यथा यदाहवनीये जुहोतीत्यत्राहवनीयस्योपादेयत्वविधेयत्वोभयाश्रयत्वाद् योग्यत्वम्। अत एव तत्र धार्थानुवादापेक्षायां दूरस्थानामपि सर्वहोमानां कथंचिदनुवादः।

प्रकृते तु मासस्यानुपादेयत्वादुपादेयत्वं धात्वर्थ एव वाच्यम्। अतस्तत्सामानाधिकरण्येन विधेयत्वमपि तत्रैवेति विहितस्य विधानायोगाद्भेदः। एवं सत्यपि यदि सायं जुहोतीत्यादिवत्प्रत्यभिज्ञापकं संनिध्यादि प्रमाणं भवेत्ततोऽगत्या कालादावपि विधेयत्वं कर्मणि च प्राप्तेऽप्युपादेयत्वमिति वैयधिकरण्यमप्याश्रीयेत, न त्वेतदस्ति; नच सन्निध्याद्यभावेऽपि नाम्न एव पूर्वकर्मोपस्थापकता। अग्निहोत्रं जुहोतीत्यनेन जुहोतिना हि यादृशी विजातीयहोमत्वप्रकारिका होमोपस्थितिस्तादृश्येव सन्निधिनोपनीता युक्तं यत्सायं जुहोतीत्येतद्वाक्यस्य जुहोतेरपि स्वविषयविषयत्वमापादयन्ती भवति तद्गतविधेयार्थकत्वप्रतिबन्धिका। अग्निहोत्रादिनाम तु अग्निदेवताकहोमत्वप्रकारकहोमविशेष्यकबोधं जनयत् जुहोतेर्न पूर्वकर्मोपस्थापकत्वमापादयितुं क्षमम्। नहि अग्निदेवताकं पूर्वं कर्मैवेत्यत्र प्रमाणमस्ति; विजातीयहोमत्वस्य नाम्नाऽनुपस्थितेः, अन्यथा पर्यायत्वेन सह प्रयोगानापत्तेः, अतिप्रसङ्गनिराकरणस्य प्राचीनप्रयोगाभावेनैवोद्भिदधिकरणे स्थापितत्वेन योगरूढ्यनङ्गीकाराच्च, अन्यथा मत्वर्थलक्षणादिभिया अतिप्रसङ्गभङ्गार्थमपि रूढ्यङ्गीकारे सोमादावपि तदापत्तेः। अतो न नाम्ना तदुपस्थितिः। अतएव यत्र नामैवानुपादेयगुणयोगेन श्रुतं न तु धातुः यथा सर्वेभ्यो दर्शपूर्णमासावित्यादौ, तत्र नामार्थस्यैवोपादेयत्वसामानाधिकरण्येन विधेयत्वप्रसक्तौ नामजन्योपस्थित्या तत्प्रतिबन्धान्न कर्मान्तरम्। अस्तुवा तद्वाक्यस्य प्राकरणिकत्वादकर्मान्तर-

---

(प्रकरणान्तरात्कर्मभेदप्रतिज्ञा)

प्रमाणान्तरेण भेदासंभवेऽपि प्रकरणान्तरात् भेदं साधयितुं प्रकरणान्तरस्वरूपोपपादनस्यापेक्षितत्वेनावश्यकं तत् प्रदर्शयन् सिद्धान्तमाह—**सर्वत्रेति**॥ श्रुत्यादिनेत्यादिपदेन धात्वर्थवृत्तित्वोपपादकपदश्रुतिसंग्रहः॥ उत्सर्गस्यापवादमाह—**योग्येति**॥

(आहवनीयस्योपादेयत्वात् यदाहवनीयवाक्येन कर्मभेदः)

**योग्यत्वमिति**॥ यद्यप्याधानविधिसिद्धत्वेनाऽऽहवनीयस्यानेनोपादेयताविधेयत्वाख्यविधिव्यापारविषयत्वं न ज्ञाप्यते; तथापि वाजपेयाधिकरणे कौस्तुभोक्तरीत्या प्रादुष्करणादिविशिष्टत्वेन रूपेण होमार्थं तद्विषयत्वान्न तद्विघात इति भावः। **अतएवेति**॥ विशिष्टविधिगौरवापत्तिभिया उपपदार्थमात्रस्य विधेयत्वावश्यकत्वादेवेत्यर्थः। तत्तत्प्रापकविध्युपस्थापकप्रमाणान्तराभावेऽपि जुहोतिनैव तानुपस्थाप्यानुवादः कथंचिच्छब्देन सूचितः। कालादौ कृतिव्याप्यत्वरूपोपादेयत्वासंभवेऽपि कृत्यधिकरणत्वादिना विधेयत्वं कर्मणि पुरुषकृतिव्याप्यत्वरूपमुपादेयत्वं च। अतएव कालादेर्विधिसंस्पर्शाद्विवक्षाङ्गत्वं चोपपद्यत इत्यर्थः॥

(प्रकृतेऽपि नाम्नो होमोपस्थापकत्वशङ्का)

**ननु** प्रकरणापेक्षयापि प्रबलस्य नाम्नः सन्निधायकप्रमाणस्य सत्त्वादुपादेयत्वविधेयत्वयोः सामानाधिकरण्यप्रतिबन्धकत्वोपपत्तेर्न भेदसिद्धिरित्याशङ्कामनूद्य परिहरति—**नचेति**॥ **यादृशीति**॥

(लिङ्गसङ्ख्याप्रकारकबोधजनकेन नाम्नाऽतादृशधात्वर्थोपस्थापनासंभवान्न नाम्नो धात्वर्थविधेयत्वप्रतिबन्धकत्वम्)

लिङ्गसङ्ख्यानन्वयित्वेनेत्यर्थः। नाम्नः खण्डवाक्यार्थबोधदशायां लिङ्गसङ्ख्याप्रकारकस्वार्थबोधकत्वेन तदप्रकारकधातुपदबोध्यधात्वर्थवृत्तिविधेयत्वस्य समानप्रकारत्वाभावेन नाम्ना प्रतिबद्धुमशक्यत्वम्। धातोर्हि सन्निधिविषयीभूतपूर्वकर्मपरत्वे प्रमापिते विधेयार्थकत्वं प्रतिबध्यते। अतश्च सन्निधिनाऽग्निहोत्रं जुहोतीत्येतद्वाक्यगतजुहोतिपदबोध्यस्य लिङ्गसङ्ख्यानन्वयिन एव होमविशेषस्य प्रकारतयोपस्थापितस्य सायंजुहोतीत्येतद्वाक्यगतजुहोतिबोध्यत्वप्रमापणाद्युक्ता तस्य तद्वाक्यगतजुहोतिवृत्तिविधेयत्वप्रतिबन्धकता, प्रकृतेतु लिङ्गसङ्ख्यान्वयिहोमविशेषत्वप्रकारकतया नाम्नोपस्थापितस्य मासाग्निहोत्रवाक्यगतजुहोतिना बोधयितुमशक्यत्वेन न नाम्नस्तद्वृत्तिविधेयार्थप्रतिबन्धकत्वसंभव इत्यभिप्रेत्य वैषम्यं दर्शयति—**अग्निहोत्रादिनाम त्विति**॥ **नहीति**॥ अग्निदेवताकहोमत्वस्यैवाग्निहोत्रपदेनाभिधानात् तस्यापूर्वेऽपि होमेऽबाधितत्वेन संभवे तत्पदप्रवृत्तेरुपपत्तेस्तेन पूर्वकर्मण एवोपस्थितौ प्रमाणाभाव इत्यर्थः। विजातीयहोमत्वेन शक्यभावेऽतिप्रसङ्गापत्तिं निरस्यति—**अतिप्रसङ्गेति**॥ अस्तुवा नाम्नो विजातीयहोमत्वप्रकारकबोधजनकत्वम्, अन्यथा मासाग्निहोत्रे गौणत्वेन नामातिदेशकत्वानुपपत्तेः, तथापि तदुपस्थितेर्नामातिदेशविधया भेदानुगुणत्वेन न विधेयताप्रतिबन्धकत्वमिति भावः॥

(सर्वेभ्यो दर्शपूर्णमासा इत्यस्यानारभ्याधीतत्वे नाम्ना कर्मभेदः प्राकरणिकत्वे न कर्मभेदः)

**न कर्मान्तरमिति**॥ अपित्वश्रुतकर्तव्यपदाध्याहारेण

त्वम् । अतः प्रकृते नाम्नो विधेयार्थकत्वस्य जुहोतौ प्रतिबन्धायोगादनुपादेयगुणयुक्तानुपस्थितिरूपप्रकरणान्तरात्सिद्धं कर्मान्तरत्वम् ।

अत्र चानुपादेयगुणयोगस्य स्ववृत्त्युपादेयतापनयनद्वारा पारिशेष्याद्धात्वर्थवृत्त्युपादेयत्वापादनं व्यापारः । अनुपस्थितेरुपादेयत्वसामानाधिकरण्येन विधेयताप्रतिबन्धः सः । अतएव न प्राचीनोक्त अनुपादेयगुणयोग एव प्रयोजकोऽपि तु उपादेयगुणसामान्याभाव एवेति ध्येयम् । अतः सिद्धं कालविशिष्टकर्मान्तरविधानमेवेदम् । एवं "सरस्वत्या दक्षिणेन तीरेणाग्नेयोऽष्टाकपाल"—इति देशरूपानुपादेयस्य; आग्नेयपदस्य साधारणत्वेन पूर्वकर्मोपस्थापकत्वाभावात् । निमित्तस्य तु "सत्रायाऽऽगूर्य विश्वजिता यजेते"ति । आगूरणं

---

नामोपस्थितकर्मणोरेव फलसंबन्धमात्रमित्यर्थः । एतच्चानयोर्वाक्ययोर्भवदेवोक्तमनारभ्याधीतत्वमङ्गीकृत्य प्रतिबन्धकसन्निध्यभावेन नाम्न एव प्रतिबन्धकत्वमुक्तम् ॥ **वस्तुतस्तु**— "सार्वकाम्यमङ्गकाम्यैः प्रकरणादि"ति सूत्रे प्राकरणिकत्वमेवोक्तम् । तदा नाम्नः आख्यातसामानाधिकरण्यसत्त्वेऽपि "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"त्यत्रेव सन्निधेरेव शक्यं प्रतिबन्धकत्वं वक्तुं इत्यकर्मान्तरत्वं सुलभमेवेति पक्षान्तरेणाह—**अस्तु वेति** ॥

### ( विविदिषादिवाक्येऽप्रकरणेऽपि नाम्नः कर्मोपस्थापकत्वनिरूपणम् )

अतएव—विविदिषावाक्ये यत्र न प्रकरणं तत्र पूर्वं सह त्वात्मयाजी यो वेदेदमनेनाङ्गं संस्क्रियते इहेदमनेनाङ्गमुपधीयत इति पूर्वतनैतच्छब्देन स यदेव यजेतेति तत्पूर्वश्रुतौ च यच्छब्देन प्रसिद्धार्थकेन पूर्वकर्मणां निर्देशेन निर्देशस्त्वत्राख्यातासामानाधिकरण्यान्नाम्नः पूर्वकर्मोपस्थापकत्वमिष्टमेव । यः अनेन कर्मणा इदं ममाङ्गं संस्क्रियते क्षीणपापं क्रियते पुण्येन चोपधीयते उपचीयत इति विदित्वा कर्माचरति स आत्मशुध्यर्थं यजन्नात्मयाजी; सच देवयाजिनः काम्यकर्तुः श्रेयानिति शतपथश्रुतेरर्थः । सिद्धान्तमुपसंहरति—**अत इति अतएवेति** ॥

### ( अनुपादेयगुणविशिष्टानुपस्थितिर्न प्रकरणान्तरं किंतूपादेयगुणसामान्याभावविशिष्टानुपस्थितिः )

यतः पारिशेष्याद्धात्वर्थवृत्त्युपादेयत्वापादनमात्रमनुपादेयगुणस्य व्यापारस्तस्य चानुपादेयगुणसत्त्वे इवोपादेयगुणसामान्याभावेऽपि संभवोऽत एवेत्यर्थः । एवंच दशमे आज्यभागौ यजतीति गृहमेधीयगते वाक्ये कर्मान्तरत्वपूर्वपक्षे प्रकरणान्तरप्रमाणोपन्यासः संगच्छत इत्याशयः ॥

### ( अभ्यासप्रकरणान्तरन्याययोरुपधेयसांकर्येऽपि स्वरूपासांकर्यविवेकः )

**नच**—एवं तनूनपातं यजतीत्यादावपि उपादेयगुणसामान्याभावात् प्रकरणान्तरेणैव भेदापत्तेः कृतमभ्यासेन? इति—**वाच्यम्**; सत्यप्युपधेयसांकर्ये न्यायस्वरूपस्यासांकर्यात् । अभ्यासेहि उपादेयतामतन्त्रीकृत्य पारिशेष्येण धात्वर्थवृत्तिविधेयत्वापादनमेव व्यापारः । अतएव तत्र सन्निधिः प्रतिबध्यो ननु प्रकरणान्तर इव प्रतिबन्धकः । प्रकरणान्तरेतु न पारिशेष्येण विधेयत्वापादनव्यापारः । विशिष्टविधिविधया कालादेरपि विधेयत्वाङ्गीकारेण तदसंभवात्, अपितु सत्यपि विधेयान्तरे स्वापादितोपादेयतासामानाधिकरण्यलाभार्थं धात्वर्थेऽपि विधेयतापादनम् । अतो न्यायशरीरस्यासंकीर्णत्वाद्युक्तः प्रकरणान्तराद्भेद इत्यादिविस्तरः कौस्तुभे द्रष्टव्यः ॥

### ( प्रकरणान्तरन्यायविषयेपि मासं दर्शपूर्णमासाभ्यामित्यत्र यागषट्कविधानम् )

एवं यत्रापि प्रकरणान्तरे आख्यातसामानाधिकरण्यमपि नास्ति, यथा शतपथब्राह्मणे दर्शपूर्णमासप्रकरणे चातुर्मास्येषु च "यवाग्वैनां रात्रिमग्निहोत्रं जुहोती"त्यत्र, तत्रोपादेयगुणसामान्याभावरूपप्रकरणान्तरन्यायासंभवेन भेदाप्रसक्तेरगत्या नाम्न एव विप्रकृष्टोपस्थापकत्वं द्रष्टव्यम् । एवं मासं दर्शपूर्णमासाभ्यामित्यत्र साप्तमिकन्यायेन दर्शपूर्णमासपदयोः प्राकृतयागत्रिकसंबन्धिद्रव्यदेवतादिधर्मातिदेशकत्वात् तेषांचैकपदोपादानेन समुच्चयावगमादेरुत्पत्तिवाक्यावगतसमुच्चितद्रव्यदेवतादेरेकैकस्मिन् कर्मणि निवेशायोगात् सङ्ख्यावदेव कर्मभेदावसायात् प्रकृतिवद्यागषट्कमेव विधेयम् । **यत्तु—बालप्रकाशे**—प्रकरणान्तरसहकृतद्वित्वसङ्ख्यया त्रिकद्वयभेद उपपादितः, तद्द्विवचनस्य समुदायद्वयगतत्वेनानुवादात् समिधो यजतीत्यत्र बहुत्वस्येव द्वित्वस्य भेदकत्वानुपपत्तेरयुक्तमिति कौस्तुभे द्रष्टव्यम् ॥

### ( कालयोग इव देशयोगे निमित्तयोगे च संनिधिंविना पूर्वकर्मोपस्थित्यसंभवात्कर्मभेदः )

कालदेशनिमित्तफलसंस्काररूपाणां पञ्चानां अनुपादेयानां मध्ये कालरूपानुपादेययोगे कर्मान्तरत्वं प्रसाधितम् देशनिमित्तयोगेऽप्यतिदिशति—**एवमिति** ॥ यद्यप्यत्र यजिर्न श्रूयते; तथापि द्रव्यदेवतासंबन्धानुपपत्त्या यजिकल्पनया प्राकृताग्नेययागात् कर्मान्तरमित्यर्थः । अनुपादेयस्येत्यस्याग्रे उदाहरणमिति शेषः । एवं निमित्तस्य त्वित्यत्रापि ज्ञेयम् । नच सर्वेभ्यो दर्शपूर्णमासावित्यत्रेवाख्यातासामानाधिकरण्यादाग्नेयनाम्ना पूर्वकर्मोपस्थितेस्तद्वदेव न भेदः सिध्यतीत्याशङ्कां निरसितुमाह—**आग्नेयपदस्येति** ॥ आग्नेयपदस्य नामधे-

संकल्पः। तदुत्तरं सत्रमकुर्वतोऽयं विश्वजित्, विश्वजिता यजेतेत्यस्मात्कर्मान्तरम्। नचानेन विनियुक्तस्य प्रयुक्तस्य वा तेनोत्पत्तिः; विनियोगादिसामानाधिकरण्येनावगताया उत्पत्तेः सन्निधिं विना बाधे प्रमाणाभावात्॥ ११॥ इत्येकादशं प्रकरणान्तराधिकरणम्।

(१२ अधिकरणम्।)

**फलं च**॥ फलस्याग्नेयमष्टाकपालं निर्वपेद्रुक्काम इति। संस्कारस्य तु औदुम्बरीं प्रोक्षतीति व्रीहिप्रोक्षणात्कर्मान्तरम्; पञ्चैव यथाऽनुपादेयानि, तथा वाजपेयाधिकरणे कौस्तुभे प्रपञ्चितम्॥ १२॥ इति द्वादशं फलसंस्कार्याधिकरणम्॥

(१३ अधिकरणम्।)

**सन्निधौ**॥ पञ्चानामप्यनुपादेयानां सन्निधौ प्रत्युदाहरणानि। दर्शपूर्णमासप्रकरणे "पौर्णमास्यां पौर्णमास्यां यजेत" "समे दर्शपूर्णमासाभ्यां यजेत" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति चतुर्णाम्। स्विष्टकृतं प्रकृत्य "शेषात्स्विष्टकृतं यजती"ति शेषरूपसंस्कार्यस्य।

---

यत्वाभावात् यजिपदवदेव पूर्वविहिताविहितकर्मसाधारण्येनाग्निदेवत्यद्रव्यमात्रवचनस्य नियमेन पूर्वकर्मोपस्थापकत्वाभावादित्यर्थः। **सन्निधिं विनेति**॥ सन्निधिसत्त्वे दर्शपूर्णमासादिषु तत्सामानाधिकरण्यबाधेऽपि तदभावे तद्बाधो न युक्त इत्यर्थः॥

**(फलं चाकर्मसंनिधावितिसूत्रं फलविषयेऽधिकाशङ्कानिवृत्त्यर्थमिति देशनिमित्तयोरुदाहरणम्)**

यद्यपि फलंचाकर्मसन्निधावित्यग्रिमसूत्रे चकारेण संस्कार्योपादानवत् देशनिमित्तयोरप्युपादानसंभवात् तत्रैवैतदुदाहरणप्रदर्शनं युक्तं कर्तुम्; तथापीह तयोः कालवदेव कर्मान्तरसाधकत्वस्य ज्ञातत्वादिह प्रदर्शनम्। अग्रिमसूत्रन्तु फलादिविषयेऽधिकाशङ्कानिवृत्त्यर्थमिति न दोषः॥ प्रयोजनं स्पष्टत्वान्नोक्तम्॥

**॥ इत्येकादशं प्रकरणान्तराधिकरणम्॥**

**(अधिकाशङ्कयोक्ताधिकरणप्रयोजनम्)**

पूर्वाधिकरणेनोक्तस्य पारिशेष्यादुपादेयतासामानाधिकरण्येन विधेयत्वापादनद्वारा सूत्रगतप्रकरणान्तरशब्दोपलक्षितासन्निधेर्भेदकत्वस्यानुपादेयगुणयोग एव संभवे फलसंस्कार्ययोरयोगित्वात् विनियोगविधिविषयत्वापरपर्यायाङ्गत्वस्य धात्वर्थवृत्तितयाऽऽक्षेपात्तत्सामानाधिकरण्येनोत्पत्तिविधिविषयत्वापरपर्यायविधेयत्वाक्षेपकत्वेऽप्युपादेयतानाक्षेपकत्वेनासंभवान्न प्रकरणान्तरविधया भेदकत्वम्, कालदेशनिमित्तादीनां तु अनुष्ठापकत्वेन प्रयोगविशेषणत्वात् धात्वर्थानुष्ठाप्यत्वापरपर्यायोपादेयत्वात् युक्तं तद्विधया भेदकत्वमिति विशेषाशङ्कानिराकरणाय प्रवृत्ते एतत्सूत्रेणाधिकरणान्तरे विषयवाक्यमुदाहरति—**फलस्येति**॥ फलस्येतिसिद्धवन्निर्देशात् सिद्धान्तेऽस्य पूर्वाधिकरणप्रपञ्चपरता सूचिता। अतएव नातीव पूर्वपक्षादरः।

**(रुक्कामादिवाक्ये कर्मान्तरत्वसमर्थनम्)**

**रुक्काम इति**॥ रुक् दीप्तिः। अत्रापि देशवाक्यवत् द्रव्यदेवतासंबन्धानुमितयजिकल्पनया पूर्वयागे फलविध्युनुपपत्तेः कर्मणो विधेयत्वात् प्राकृताग्नेयापेक्षया कर्मान्तरत्वमित्यर्थः॥

**(उदाहरणान्तरनिर्देशः। पूर्वोक्ताधिकाशङ्कानिरासश्च)**

**यत्तु**—प्राचीनैस्त्रैधातव्या दीक्षणीया भवन्तीत्येतदश्वमेधप्रकरणगतं वाक्यमुदाहृत्य त्रैधातव्यादीक्षणीययोर्भेदात् सामानाधिकरण्यानुपपत्तेर्जघन्ये दीक्षणीयापदे यजमानसंस्काररूपदीक्षणीयाकार्यलक्षणामङ्गीकृत्य तेन संस्कार्ययजमानोपस्थितेरनुपादेयगुणयुक्तानुपस्थितिरूपप्रकरणान्तरात् प्रसिद्धस्वतन्त्रफलार्थविहितत्रैधातव्यापेक्षया कर्मान्तरत्वमिति संस्कार्योदाहरणं दर्शितम्, तत्सर्वेभ्यो दर्शपूर्णमासावितिवदाख्यातासमानाधिकरणत्रैधातव्यानाम्नः पूर्वकर्मोपस्थापकत्वोपपत्तेः कर्मान्तरत्वे प्रमाणाभावादयुक्तमिति तुशब्देन सूचयन् तदुपेक्ष्यान्यदुदाहरति—**संस्कार्यस्य त्विति**॥ अत्रोभयत्राप्यङ्गित्वेऽपि अनुष्ठापकत्वस्यापि कामनाविषयत्वादिना सत्त्वादुपादेयत्वाक्षेपकत्वात् तत्समानाधिकरणविधेयत्वलाभाय कर्मान्तरविधिरावश्यक इति विशेषाशङ्कानिरासो द्रष्टव्यः॥

**(एकत्वमनुपादेयमिति बालप्रकाशमतनिरासः)**

**अत्र प्रकाशकारैः**—बालप्रकाशे कृतिविषयत्वमुपादेयत्वमङ्गीकृत्य तदभावमात्रेण कालादिष्विव कर्तृविशेषणैकत्वब्राह्मणत्वादिजातीनामप्यनुपादेयत्वम्। **अतएव** "अनुपादेयमेकत्वं यजमानस्य कालवदि"तिप्रतिपदाधिकरणगतशास्त्रदीपिकाकारिका संगच्छते—**इत्युक्तम्**, तस्य प्रसङ्गतो निरासमाह—**यथेति**॥ तन्निरासश्चात्र कौस्तुभे द्रष्टव्यः। प्रयोजनं पूर्वपक्षे प्रकृतित्वात् प्रतिपदि सिद्धान्तेत्वन्यविकृतिवत् पर्वणीति स्पष्टत्वान्नोक्तम्॥

**॥ इति द्वादशं फलसंस्कार्याधिकरणम्॥**

**(पञ्चानामप्यनुपादेयानां संनिधौ प्रत्युदाहरणानि)**

सूत्रगतफलपदस्यानुपादेयोपलक्षणत्वमभिप्रेत्याह—**पञ्चा-**

अत्र सर्वत्र संनिधिना स्वविषयवृत्तिविधेयत्वप्रतिबन्धात् प्राप्तस्यैव कर्मणः कालदेशविशिष्टप्रयोगविधिमात्रं विधिर्लाघवायानुमन्यते नतु कर्मोत्पत्तिमपि विधत्ते । यत्र तु प्रयोगोऽपि प्राप्तो यथा "य इष्ट्ये"त्यादौ, तत्र प्राप्तप्रयोगानुवादेन कालादिमात्रविधिः । संभवति हि देशकालयोरुपादेयत्वासंभवेऽपि यागाङ्गत्वेन विनियोगविधिः । निमित्तस्थले तु मिथो निमित्तनैमित्तिकयोरङ्गाङ्गित्वासंभवात् प्राप्तस्यापि कर्मणो निमित्तसंबन्धानुमितपापक्षयार्थत्वेन विनियोगविधिरिति वक्ष्यते । फलसंस्कार्ययोस्तु तदुद्देशेन प्राप्तकर्मविनियोगविधिः स्पष्ट एव । अतो न संनिधिसत्त्वेऽनुपादेयगुणयोगेऽपि कर्मान्तरम् ॥ १३ ॥ इति त्रयोदशं प्रकरणान्तरप्रत्युदाहरणाधिकरणम् ।

( १४ अधिकरणम् । )

**आग्नेय** ॥ कालद्वययोगेनाग्नेयं विधाय "यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवती"ति श्रुतम् । तत्र कालद्वययुक्तादाग्नेयात्कर्मान्तरविधानमिदम्; प्रकरणान्तरादभ्यासाद्वा भेदोपपत्तेः । अनेनैव विहितस्येतरेण पौर्णमासीमात्रविधिस्तु उत्पत्तिशिष्टकालावरोधान्निराकर्तव्यः । नच—एकस्यैव कर्मणोऽभ्युदयशिरस्कतया विधिद्वयेन विधानं पिङ्गाक्ष्यैकहायनीशब्दाभ्यामिव द्रव्यविशेषस्येति—वाच्यम्; पिङ्गाक्ष्यैकहायनीशब्दाभ्यामुपस्थितस्याप्येकस्यैकेन विधिना विधाने बाधकाभावात्, प्रकृते तु एकेन विहितस्य नेतरेण विधिसंभव इति कर्मान्तरमेव । अत एवामावास्यायामाग्नेयद्वयकरणं पूर्वपक्षप्रयोजनमिति प्राप्ते—

एकस्यैन्द्राग्नविधिशेषत्वान्न स्वातन्त्र्येण विधायकत्वम् । प्रशस्ताग्नेयसाहित्येन चैन्द्राग्नप्रशंसा, अतो न कर्मान्तरम् ॥ १४ ॥ ४७ ॥ इति चतुर्दशमाग्नेयस्तुत्यर्थताधिकरणम् ।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां द्वितीयाऽध्यायस्य तृतीय पादः ॥

---

**नामपीति । निमित्तसंबन्धानुमितेति** ॥ निमित्तस्यानुष्ठापकत्वेन प्रयोगाक्षेपकत्वात्तस्य च फलापेक्षायां यावज्जीवाधिकरणवक्ष्यमाणरीत्या पापक्षयार्थं विनियोग इत्यर्थः । **स्पष्ट एवेति** ॥ तयोः पुरुषार्थत्वेन स्वार्थमेव विनियोगः कर्मण एवेति स्पष्ट इत्यर्थः ॥ इतरत् स्पष्टार्थम् ॥ एवमधिकाराख्यसन्निधेः कर्मोत्पत्त्यनुवादत्वप्रमापकत्वात् यथा कर्मान्तरत्वप्रतिबन्धकत्वं, तथा तदभावेऽपि यच्छब्दादिना यत्र तदनुवादप्रतीतिस्तत्राप्युपस्थितोत्पत्तिककर्मण्येव कालविनियोगकरणात् तत्प्रतिबन्धकत्वं द्रष्टव्यम् । यथा "य इष्ट्ये"त्यादौ, यथावा "एतया पुनराधेयसम्मितयेष्टिषु अग्निहोत्रं जुहोती"त्यादौ च नेष्ट्यग्निहोत्रभेदः अग्निहोत्रवाक्ये यच्छब्दाभावेऽपि "दीक्षितो न जुहोती"ति निषेधापेक्षितोदवसानीयारूपेष्ववधिमात्रविधौ तात्पर्यग्राहकतयाऽग्निहोत्रविधेरनुवादादिति ध्येयम् । अत्रच भेदप्रमाप्रतिबन्धकस्य सन्निधेर्भेदप्रमाजनकस्यासन्निधेश्च स्वरूपनिरुक्त्यादिकं कौस्तुभे द्रष्टव्यम् । विस्तरभयान्नोच्यते ॥

इति त्रयोदशं प्रकरणान्तरप्रत्युदाहरणाधिकरणम् ॥

---

**कालद्वयेति** ॥ "यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युत" इति वाक्येनेत्यर्थः । पौर्णमास्यधिकरणे प्रकरणान्तराधिकरणगतप्रकाशकारोक्तरीत्या प्रकरणान्तरादाग्नेयभेदं निरस्यैककर्मासंभविपौर्णमास्यमावास्यालक्षणगुणद्वययोगान्न्यायसुधाकृदुपपादितादाग्नेयभेदस्य स्वयं प्रसाधितत्वादाग्नेयं इत्येकवचनमयुक्तमपि जात्यभिप्रायेणैकवचनविवक्षया प्रयुक्तम् । **श्रुतमिति** ॥ प्रदेशान्तर इत्यर्थः । **प्रकरणान्तरादिति** ॥ अनेन आतिदेशिक्यनन्तरसङ्गतिः सूचिता । कथंचित् सन्निधेः प्रतिबन्धकत्वेन प्रकरणान्तरात् भेदासिद्धिरित्यभिप्रेत्य तत्सत्वेऽपि भेदकमुपन्यस्यति—**अभ्यासाद्वेति** ॥ यद्यपि संप्रतिपन्नदेवताकत्वेन द्वयोराग्नेययोः सहानुष्ठानान्नाग्नेयद्वयकरणप्रसक्तिः पूर्वपक्षे; तथापि पुनर्विधिवैयर्थ्यापत्त्यैव सहानुष्ठानबाधात्, **अथवा**—पुरोडाशद्वयकरणाद्वाऽऽग्नेयद्वयकरणमभिप्रेत्याह—**अत एवेति** । यदाग्नेय इति वाक्यान्तरेणाऽऽग्नेयस्य केवलाग्निदेवतात्वावधारणात् कथं तेनैन्द्राग्नप्रशंसेत्यपेक्षायामाह—**प्रशस्तेति** ॥ "अग्निरसो वा इत उत्तमाः स्वर्गं लोकमायन्नि"त्यार्थवादसहिततद्विधिना आग्नेयप्राशस्त्यावगमात् प्रशस्ताग्नेयसाहित्येनैन्द्राग्नप्रशंसेत्यर्थः ॥ पूर्वपक्षे प्रयोजनममावास्यायामाग्नेयद्वयस्य तत्संबन्धित्वेनाष्टाकपालद्वयस्य करणं, सिद्धान्ते नेति स्पष्टत्वान्नोक्तम् ॥

॥ इति चतुर्दशमाग्नेयस्तुत्यर्थताधिकरणम् ॥

इति भाट्टदीपिकाप्रभावल्यां द्वितीयाध्यायस्य तृतीयापादः ॥

---

चतुर्थः पादः ।

(१ अधिकरणम्।)

**यावज्जीविकः** ॥ "यावज्जीवं दर्शपूर्णमासाभ्यां यजेते"-त्यत्र काम्ये एव स्वर्गाद्यर्थे दर्शपूर्णमासकर्मणि जीवनपर्याप्तकालविधिः । नच पौर्णमास्यादिकालविरोधः; व्याप्य-व्यापकभावेन अमावास्यापराह्णादिवदुभयोरप्युपपत्तेः । अत एव विनिगमनाविरहात्कालद्वयविधावपि प्रयोगद्वयविधिः । जीवनपर्याप्तकालविधिसामर्थ्यादेव च प्रतिपौर्णमास्याद्यर्थाद्दर्शपूर्णमासावृत्तिः । अतश्च तावद्व्याप्यप्रयोगव्यासक्तव्यापकैकप्रयोगादेव स्वर्गादिफलमिति प्राप्ते—

**(यावज्जीवगुणसंयुक्ताग्निहोत्रादिप्रयोगभेदाभेदचिन्ता वार्तिककाराणां संमतेति निरूपणम्)**

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति काम्यप्रयोगं विधाय बह्वृचब्राह्मणे आम्नातं वाक्यमुदाहरति—**यावज्जीवमिति** ॥ यावज्जीवमग्निहोत्रं जुहोतीत्येतत्सदृशवाक्यान्तराणामप्युपलक्षणमेतत् । अत्र भाष्यकारेण सूत्रानुगुण्येन कर्मधर्मत्वकर्तृधर्मत्वचिन्तां कृतामपि तृतीयाध्यायसंगतायास्तस्या भेदलक्षणेऽपर्यवसिते सति करणे लक्षणासङ्गत्यापत्तेरयुक्तामपि किं यावज्जीवगुणसंयुक्तानामग्निहोत्रादीनां प्रयोगा भिद्यन्ते; उत एक एवायं प्रयोगः काम्यः स एव यावज्जीव कालपरिमित इत्येवंलक्षणसंगतप्रयोगभेदाभेदफलकत्वेन वार्तिककारः समर्थयामास ॥

**(उक्तवार्तिकसिद्धान्तापरितोषात् विनियोगभेदाभेदावेव पादार्थ इति निरूपणम्)**

**वस्तुतस्तु**—प्रयोगाङ्गस्यापि यावज्जीवकालस्य पूर्वप्रयोगे सायंप्रातःकालावरुद्धेऽवरोधसंभवान्न यथा पूर्वपक्षे प्रयोगभेदकत्वम्, तथा निमित्तस्यापि पूर्वप्रयोगेऽसंभवतोऽपि प्रयोगानङ्गत्वात् तत्तत्पौर्णमास्यादिकालीनसिद्धप्रयोगस्य कर्मणो विनियोगान्तरापादकत्वेऽपि प्रयोगान्तरानापादकत्वान्न कालादिवत् प्रयोगभेदकत्वमिति प्रयोगभेदाभेदचिन्ताया असंभवात् कथंचित्संभवेऽपि वाऽवेष्ट्यधिकरणप्रसङ्गेनैव विचारयितुं युक्तत्वादिह विचारासंगतेर्वार्तिककारोक्तावपरितुष्य निमित्तस्य विनियोगान्वयित्वेन तत्प्रयुक्तविनियोगभेदाभेदस्य क्वापि पूर्वमप्रकृतस्येह पादार्थत्वेन कौस्तुभे उक्तां लक्षणसङ्गतिं तथा निमित्तस्य गुणत्वेन भेदकत्वेप्यनुपादेयप्रसङ्गान्निमित्तस्वरूपानुपादेयस्य विनियोगभेदकत्वविचारेण प्रासङ्गिकीमनन्तरसङ्गतिं च स्पष्टत्वात्, अतएव भाष्यकारोक्तसंशयमनुक्त्वा पूर्वपक्षमेवाह—**काम्य एवेति** ॥

**(काम्ये दर्शपूर्णमासकर्मणि गुणविधानमिति पूर्वपक्षोपपादनम्)**

उत एक एवायं प्रयोगः काम्यः स एव यावज्जीवकालपरिमित इति वार्तिकलेखनात् काम्यप्रयोगेऽयं कालविधिरिति भ्रमं निवर्तयितुं दर्शपूर्णमासकर्मणीत्युक्तम् ॥

**(काम्य एवेत्येवकारेण सिद्धान्ते प्रकरणाननुग्रहस्य पूर्वपक्षे तदनुग्रहस्यच सूचनम्)**

ततश्चैतद्वाक्ये प्रयोगान्वयिगुणाभावेन प्रयोगविधेः। सिद्धान्तेऽप्यनाश्रयणात् पौर्णमास्यादिकालविधौच तदाश्रयणे विनिगमनाविरहात् अत्रापि तदापत्तेरिहैव कर्मोद्देशेन कालविधाने सति वक्ष्यमाणरीत्या प्रयोगविधिः, नतु प्रयोगानुवादेन कालविधिरित्यर्थः । सिद्धान्ते तस्यैव कर्मणो निमित्तसंबन्धेन विनियोगान्तरकरणेऽधिकाराख्यप्रकरणानुग्रहेऽपि कथंभावाकाङ्क्षालक्षणप्रकरणाननुग्रहं पूर्वपक्षे तदनुग्रहंच सूचयितुं काम्य एवेत्येवकारः प्रयुक्तः ॥

**(यावज्जीवपदस्य णमुलन्तत्वं न निमित्तत्वेन किंतु कालविधित्वेनेति निरूपणम्)**

**कालविधिरिति** ॥ यावज्जीवपदस्य णमुलन्तस्यापि यावद्देहं तिष्ठतीतिवत् निरूढलक्षणया कालपरत्वोपपत्तेः अभिक्रामं जुहोतीत्यत्र णमुलन्तस्यापि निमित्तपरत्वादर्शनादिह कालविधिरेव युक्त इत्यर्थः । **अपराह्णादिवदिति** ॥ पिण्डपितृयज्ञवाक्ये द्वयोरमावास्यापराह्णकालयोर्विधानेऽप्येकस्य व्याप्यकालस्यावच्छेदकत्वेनैककाल्येनाविरोधस्येवेहाप्युपपत्तिरित्यर्थः ॥

**(अत्र पूर्वपक्षे प्राचीनापादितयजत्यभ्यासलक्षणानिरासः)**

अत्र प्राचीनैः सिद्धान्ते पौर्णमास्यमावास्ययोर्दर्शपूर्णमासानुष्ठानेन जीवनपर्याप्तकालानुग्रहासंभवात् यागाभ्यासविधानाय यजतावभ्यासलक्षणा पूर्वपक्षे आपादिता, तां परिहर्तुमाह—**जीवनपर्याप्तेति** ॥ एवंच नाभ्यासलक्षणा नतरांच तस्य विधेयत्वमित्येवकारेण सूचितम् । "यावज्जीवकोऽभ्यास" इतिसूत्रमप्यार्थिकाभ्यासपरतया नेयमिति भावः ॥

**(व्याप्यप्रयोगातिरिक्तव्यापकप्रयोगान्तरविधिपक्षेणोपपादनम्)**

एवंच यथैव पौर्णमास्यादिवाक्येषु कालविशिष्टव्याप्यप्रयोगविधिः, तथैव यावज्जीववाक्येऽपि कालविशिष्टप्रयोगस्य विधानं नानुपपन्नम् । **अतएव** विधेयतावच्छेदकतया जीवनपर्याप्तेषु तावत्सु व्याप्यप्रयोगेषु तत्तद्विधेयतावच्छेदकतया विभिन्नधर्मान्तरेष्वपि व्यासक्तैकधर्मस्य स्वीकाराद्व्याप्यप्रयोगव्यासक्तव्यापकप्रयोगादेव फलमित्याह—**स्वर्गादीति** ॥ व्याप्यव्यापकप्रयोगविशिष्टकर्मणः फलापेक्षायां स्वर्गकामादिवाक्येन स्वर्गार्थतयैव विनियोगात् स्वर्गाद्येव फलम्, नतु यावज्जीववाक्येन पापक्षयार्थत्वेन विनियोगात् पापक्षयः पृथक् फलमित्यर्थः । एवंच जीवनपर्याप्तैस्तावद्भिः प्रयोगैः एकमेव

कालक्षणापत्तेर्नायं कालविधिः । अतो धातुसंबन्धाधिकारविहितणमुल्प्रत्ययेन जीवनस्य कर्मसंबन्धावगतेः स्वावच्छिन्नकालकत्वादिरूपसंबन्धाश्रयणे च गुणभूतकालानुरोधेन प्रधानावृत्तेर्न्यायलभ्यत्वाभावेन यावच्छब्दार्थस्यापि विधेयत्वापत्तेर्लाघवान्निमित्तत्वमेव संबन्धः प्रतीयते । तदाहि प्रतिनिमित्तं नैमित्तिकावृत्तेर्न्यायलभ्यत्वाद्यावच्छब्दार्थोऽनुवादः । निमित्तत्वं च स्वान्वयव्यतिरेकानुविधाय्यवश्यानुष्ठानवत्त्वम् । यथा राहूपरागान्वयव्यतिरेकानुविधायि अवश्यानुष्ठानं यस्य स्नानस्य तद्वत्त्वं राहूपरागे ।

अत्रच व्यतिरेकानुविधानस्य सर्वत्र प्रापकप्रमाणाभावादेव सिद्धेरन्वयानुविधान एव विधेस्तात्पर्यम् । अतश्च निमित्तसत्त्वे नैमित्तिकस्यावश्यानुष्ठानबोधनादकरणे प्रत्यवायात्वादिति ॥

---

फलं स्वर्गादि भवति, नान्तरेति भावः । एतच्च व्याप्यप्रयोगापेक्षया व्यापकप्रयोगान्तरविधानं कौस्तुभोक्तरीत्योपपादितम् ॥

## ( अन्ते एव स्वर्गादि नान्तरा, नापि पापक्षय इत्यादिनिरूपणम् )

**वस्तुतस्तु**—व्यापकप्रयोगेणैव निर्वाहे तत्तद्व्याप्यप्रयोगस्वीकारे नैव किंचित् प्रमाणम् । नच विनिगमनाविरहः; पौर्णमास्यादिवाक्येषु व्यापकप्रयोगानुवादेन तत्तत्कालविधानेऽपि जीवनकालावच्छेदकत्वविधया तत्तत्कालनिवेशसंभवस्यैव नियामकत्वात् । नहि पौर्णमास्यादिकालेषु जीवनस्याव्यावर्तकस्यावच्छेदकत्वं संभवति; अतोऽप्राप्तजीवनकालविशिष्टप्रयोगविधिरयमेव । अन्यथा पौर्णमास्यादिकालानां व्याप्यव्यापकभावेन निवेशसंभवादविरोधोक्तेरनुक्तिसहत्वापत्तेः । अतएव प्रयोगभेदाभावेन प्रकृतसङ्गत्यसंभवेन विनियोगभेदमादाय सङ्गत्युपपादनं कौस्तुभोक्तं संगच्छते । तावतापिच पौर्णमास्यादिकालावच्छिन्नजीवनपर्यासकालिकप्रयोगादेव फलं स्वर्गादि नान्तरा नवा पापक्षयः फलमित्यस्य फलभेदस्य न क्षतिरिति ध्येयम् ॥

## ( यावच्छब्दार्थस्य पुरुषधर्मत्वेन कालविधानायोगेन न्यायलब्धावृत्त्यनुवादत्वकथनम् )

यावज्जीवशब्दे हि यावच्छब्दस्य सामस्त्यवचनत्वात् तस्य शक्यार्थस्य पुरुषधर्मत्वेन कर्मधर्मत्वायोगात् अवश्यं जीवपदे जीवनकाललक्षणामेव पूर्वपक्षे लक्षणापत्तिरित्यनेनाभिप्रेत्याभ्यासलक्षणापत्तिं प्राचीनोक्तामपहाय काललक्षणामेव पूर्वपक्षे आपादयन् सिद्धान्तमाह—**काललक्षणापत्तेरिति** ॥"धातुसंबन्धे प्रत्ययाः" इत्यनुशासनात् यस्माद्धातोर्णमुल्प्रत्ययो भवति तद्धात्वर्थस्य धात्वर्थान्तरेण संबन्धस्य णमुलाऽभिधानात् संबन्धविशेषापेक्षायां यावच्छब्दतात्पर्यग्राहकवशात् निमित्तत्वरूपतद्विशेषप्रतीतेर्न तत्प्रतिपादनाय मन्मते लक्षणापत्तिरित्यभिप्रेत्याह—**अत इति** ॥ संबन्धविधयैव कालबोधोपपत्तेर्ममापि न लक्षणापत्तिरिति पूर्वपक्षिणो लक्षणापरिहाराशयः संबन्धाश्रयणे चेत्यनेन सूचितः । यावच्छब्दार्थस्य विधेयत्वे एकपदोपादानात् विशिष्टप्रयोगविधानाद्वा वाक्यभेदानापत्तावपि गौरवापत्तिर्लाघवादित्यनेन सूचिता । संसर्गविधया भाने गौरवम् । पदार्थविधया भाने लक्षणाचेत्युभयं निमित्तत्वमेवेत्येवकारेण व्यावर्त्यं सूचितम् ॥ **न्यायलभ्यत्वादिति** ॥ प्राणक्रियारूपाणां जीवनानां भेदान्निमित्तावृत्त्युपपत्तेः जीवनगतसामस्त्यस्य नैमित्तिकसंबन्धित्वेन प्राप्तत्वादनुवाद इत्यर्थः ॥

## ( जीवने निमित्ते विनियोगान्तरविधानमेवान्नेत्यादिनिरूपणम् )

अतएव—यत्र विधिश्रवणेनानुष्ठानबोधस्तत्र अनुष्ठापकरूपनिमित्तापेक्षया निमित्तत्वरूपसंबन्धाश्रयणम् । यत्रतु वर्तमानापदेशेन तच्छ्रवणम् यथा यावद्दोहमित्यत्र तत्रानुष्ठानस्यैवाबोधनेन नानुष्ठापकत्वरूपतदपेक्षया धात्वर्थान्तरसंबन्धः, किंतु स्वावच्छिन्नकालकत्वमेव स इति वैषम्यम् । **तदुक्तं वार्तिके**—"युक्तमत्र कालग्रहणं वर्तमानापदेशो ह्ययम् । नात्र काचिन्निमित्तापेक्षा । तेन श्रुतिवृत्ते, दोहनमतिक्रम्य कालो गृह्यते । यदित्विहापि यावद्दोहः स्वप्यादासीतवेति विधीयेत, ततः केन वा दोहस्य निमित्तत्वं वार्यते" इति । अतो जीवनस्य निमित्तत्वात् निमित्तस्यानुष्ठापकत्वेऽपि प्रयोगाक्षेपकत्वे प्रमाणाभावात् स्वतःसिद्धप्रयोगानामेवैषां निमित्तसंबन्धेन विविदिषायामिव विनियोगान्तरमेवेदमिति न व्यापकप्रयोगान्त एव स्वर्गादि फलम् । पौर्णमासीपौर्वाह्णादिकालशास्त्रान्तरैकवाक्यतयाच पौर्वाह्णिककालावच्छिन्नपौर्णमास्यवच्छिन्नजीवनस्य निमित्तत्वान्न तिथ्यन्तरस्य जीवने निमित्तत्वस्य न वैकस्यामेव पौर्णमास्यां तदवच्छिन्नजीवनरूपनिमित्तभेदादावृत्त्यापत्तेर्वा प्रसङ्गः । पौर्वाह्णिककालावच्छिन्नपौर्णमास्यामेव प्रतिक्षणं जीवनभेदमादायावृत्त्यापादनं त्वशक्यत्वादेव न संभवतीति भावः ॥

## ( निमित्तत्वनिर्वचनम् )

निमित्तत्वंच नानुष्ठापकत्वमात्ररूपं कामनादिवत्, तथात्वे कामशास्त्रेणैव तादृशानुष्ठानसिद्धौ एतद्वचनवैयर्थ्यापत्तेः, यावच्छब्दानुवादानुपपत्तेश्च, अतो नियतानुष्ठापकत्वस्याक्षेपात्तद्घटितं निमित्तस्वरूपमाह—**निमित्तत्वं चेति** ॥

## ( निमित्तसमभिव्याहृतविधेरकरणे प्रत्यवायबोधकत्वम् )

नियतत्वस्यच बुद्धिपूर्वकारिणा पुरुषेण स्वतोऽसंपाद्यमानत्वात् निमित्तसमभिव्याहृतो विधिः योग्यताबलेन विधेयाकरणस्य प्रत्यवायसाधनतां बोधयतीत्यभिप्रेत्याह—**अतश्चेति**॥ अतश्चेतादृशनिमित्तत्वानुरोधेनावश्यकर्तव्यतारूपनियमस्यार्थसिद्धस्य कर्तृधर्मत्वेन विधानोक्तिः "कर्तुर्वा श्रुतिसंयोगादि"ति सूत्र इति भावः ॥

योऽनुमीयते। करणे च 'धर्मेण पापमपनुदति' इत्यादिवाक्यशेषात् रात्रिसत्रन्यायेन पापक्षय एवानुषङ्गिको नित्यनैमित्तिकस्थले फलम्। यत्र तु रथन्तरसामत्वादिनिमित्तसत्त्वे नैमित्तिकस्य पाठादेव प्राप्तिसंभवेनान्वयानुविधानस्य प्रमाणान्तरेण प्राप्तिस्तत्र व्यतिरेकानुविधान एव विधेस्तात्पर्यम्। अत एव रथन्तराभावे ऐन्द्रवायवाग्रत्वस्याभावः। अतश्च यावज्जीवपदे लाघवाद्यनुरोधेन जीवनस्य निमित्तत्वावगतेस्तदनुरोधेन पापक्षयार्थं विनियोगान्तरमेवेदमिति सिद्धम्॥१॥ **इति प्रथमं यावज्जीवनिमित्तताधिकरणम्॥**

**( विश्वजिन्न्यायाप्रवृत्त्या वाक्यशेषगतपापक्षयार्थत्वोपपादनम् )**

अत्र प्राभाकरैर्विधेयाकरणस्य विधिना प्रत्यवायजनकत्वबोधनेऽपि करणस्य नैव किंचित्फलमित्यङ्गीक्रियते। न्यायसुधाकृता तु प्रत्ययवाच्यभावनाया भाव्यसाकाङ्क्षत्वनियमात् करणात्फलाङ्गीकारेप्यकरणनिमित्तप्रत्यवायप्रागभावपरिपालनस्य फलत्वमित्युक्तम्, तदुभयनिरासायाह—**करणे चेति॥** काम्यमानेन स्वर्गादिफलेनावश्यकत्वानिर्वाहात् विश्वजिन्न्यायेन स्वर्गफलकल्पनायोगात् फलविशेषापेक्षायां "धर्मेण पापमपनुदति," "पूर्वां सन्ध्यां जपन् विप्रो नैशमेनो व्यपोहति," "यद्रात्र्या पापमकार्षं यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां" इत्यादिवाक्यशेषेभ्यो निषिद्धाचरणजन्यप्रत्यवायक्षयस्य फलत्वमवसीयते इत्यर्थः। यद्यपि धर्मेणेत्यस्य न किंचिद्वाक्यशेषत्वम्, अपितु वाक्यत्वमेव; तथापि आदिपदसंगृहीतानां पूर्वोक्तानां संध्यावन्दनविधिवाक्यशेषत्वाद्वाक्यशेषेत्युक्तम्। अकरणे प्रत्यवायभिया प्रवृत्तस्य पापक्षयार्थं प्रवृत्त्यभावमपेक्ष्य पापक्षयस्यानुषङ्गिकत्वोक्तिः। न्यायसुधाकृन्मतनिरासः कौस्तुभे द्रष्टव्यः। निमित्तलक्षणप्रसङ्गात् रथन्तरसामाधिकरणोक्तमेवार्थं पुनर्विशदयति—**यत्र त्विति॥** सिद्धान्तमुपसंहरति—**अतश्चेति॥**

**( पूर्वोत्तरकल्पप्रयोजननिरूपणम् )**

प्रयोजनं पूर्वपक्षे यावज्जीवमभ्यस्तरूपक एकः काम्य एव प्रयोगः जीवनकालस्य विकृतौ सौर्यादावतिदेशाद्यावज्जीविकोऽभ्यासः, सिद्धान्ते त्वफलकामस्यापि सायंप्रातःकालयोरभ्यस्तरूपस्तत्रैवच परिसमाप्त एकः प्रयोगः। सायंप्रातःकालान्तरे तथैवापरः सौर्येच निमित्तस्यानतिदेशान्न यावज्जीवं प्रयोग इति स्पष्टत्वान्नोक्तम्॥

**॥ इति प्रथमं यावज्जीवनिमित्तत्वाधिकरणम्॥**

**( लक्षणानन्तरसंगतिनिरूपणम् )**

पूर्वमुत्पत्तिप्रयोगविनियोगभेदकत्वेनोक्तानां षण्णां प्रमाणानां निरूपणे कृते संप्रत्येकवेदगतनानाशाखागतकर्मविधिषु शब्दान्तरसंज्ञासंख्यानां प्रमाणानां भेदकत्वायोगेऽपि संभवद्भेदकत्वानां गुणाभ्यासप्रकरणान्तराणां भेदकत्वविचारात्लक्षणसङ्गतिं तथाऽनन्तराधिकरणोपन्यस्तविनियोगभेदकत्व-

**( २ अधिकरणम्। )**

**नाम।** अग्निहोत्रादौ सत्स्वपि भेदकप्रमाणेषु न कर्मभेदः। भेदकप्रमाणैर्हि स्ववाक्यस्य कर्मोत्पत्तिपरत्वावगतेरुत्पन्नस्योत्पत्त्ययोगात्कर्मान्तरत्वसिद्धिः। प्रकृते तूक्तप्रमाणैरूपत्तिपरत्वावगमेऽपि पुरुषभेदात्तत्तच्छाखाध्यायिपुरुषान् प्रत्येकस्यैव कर्मणःसर्वत्रोत्पत्तिसंभवान्न कर्मभेदः। नहि सर्वशाखाः सर्वपुरुषैरध्येयाः, स्वाध्यायविधौ 'अध्वर्युं वृणीते' इतिवत्स्वीयत्वैकत्वयोर्विवक्षितत्वेनानेकशाखाध्ययनानुपपत्तेः। नचैवं वेदान्तरस्थशाखाध्ययनस्याप्यनापत्तिः

स्याप्यपवादादापवादिकीं चानन्तरसङ्गतिं स्पष्टत्वात्तथा पूर्वपक्षं चातिफल्गुत्वादनुक्त्वोदाहरणपूर्वकं सिद्धान्तमेवाह—**शाखाभेदेनेति॥** एकवेदगतेति शेषः। अतएव—वेदान्तरगते "भूयस्त्वेनोभयश्रुती"तितार्तीयन्यायेन यत्र वेदे द्रव्यदेवताश्रवणात् रूपलाभस्तत्रैवोत्पत्तिः, नेतरत्र, तत्र गुणार्थं पुनःश्रवणमित्यर्थस्य सिद्धान्तयिष्यमाणत्वात्तत्र भेदशङ्कानुपपत्तेर्नोदाहरणत्वम्। अतो यत्रोभयत्र रूपलाभेनोत्पत्तिविधिभेदसंभवः, तत्रैव भेदशङ्कोत्थानात् तेषामेवोदाहरणत्वमित्यर्थः। **सत्स्वपीति॥**

**( संज्ञाशब्दान्तरसङ्ख्यानामभेदकत्वेपि अभ्यासगुणादेः भेदकत्वसंभवेन पूर्वपक्षः )**

यदपि काठकं कालापकमित्यादिसंज्ञायाः कर्मभेदकत्वं सूत्रकारेणोक्तम्। तत्र तस्या ग्रन्थपरत्वेन कर्मपरत्वाभावात्, वेदेऽनाम्नानेनोत्पत्तिगतत्वाभावाच्च न भेदकत्वसंभवः, सूत्रे तदुपपादनंत्वभ्युच्चयमात्रेण ज्ञेयम्। तथा शब्दान्तरस्यापि समानधात्वर्थकत्वात् इतरधात्वर्थापेक्षया भेदकत्वस्य सिद्धान्तेऽपीष्टत्वान्नभेदकत्वम्। तथा सङ्ख्यायाः स्वसमवायिभेदकत्वाच्चासंभवः, एवं संज्ञाशब्दान्तरसङ्ख्यानामसंभवेऽप्यनन्यपरविधिपुनःश्रवणरूपाभ्यासस्य ऐन्द्राग्नैकादशकपालत्वादिगुणावरोधे वचनान्तराम्नातद्वादशकपालत्वादिगुणान्तरस्य निवेशायोगात् गुणस्य दूरस्थत्वेनासन्निधेरुपादेयगुणसामान्याभावाच्च प्रकरणान्तरस्यच भेदकत्वसंभवाभिप्रायेण भेदकप्रमाणेष्विति बहुवचनोपादानं कृतम्। तदेवोपपादयति—**भेदकप्रमाणैर्हीति॥**

**( स्वाध्यायस्याध्ययनविध्युद्देश्यत्वेपि कल्प्यविधावुपादेयत्वात्स्वीयत्वैकत्वयोर्विवक्षणम् )**

**अध्वर्युं वृणीत इतिवदिति॥ अनेनच**—स्वाध्यायस्याध्ययनं प्रत्युद्देश्यत्वादुद्देश्यस्वाध्यायगतैकत्वाविवक्षाशङ्कायाः यथैवाध्वर्युं वृणीते इत्यत्र सत्यप्यध्वर्योरुद्देश्यत्वे वृतेनाध्वर्युणा स्वकार्यं कुर्यादिति कल्प्यविधावुपादेयतया श्रवणादेकत्वविवक्षा, तथेहाप्यधीतेन स्वाध्यायेनार्थज्ञानं भावयेदिति कल्प्यविनियोगविधौ उपादेयत्वश्रवणात् तद्विवक्षेति निरासःसूचितः। स्वैरधीयतेऽसौ स्वाध्याय इति व्युत्पत्त्याऽध्यायगतस्वपरंपरागतपुरुषपरिग्रहरूपस्वीयत्वोक्तेः **स्वीयत्वेत्युक्तम्॥**

'वेदानधीत्य' इत्यादिवचनान्तरानुरोधेन वेदत्रयगतैकैकशाखाध्ययनस्यैवावश्यकत्वावगतेः । अत एव वेदभेदे पुरुषाभेदादेकत्रैवोत्पत्तिरपरत्र गुणार्थं श्रवणमित्यत्र नियामकं वक्ष्यते । वेदैकत्वे तु प्रतिशाखं पुरुषभेदात् सत्यपि सर्वेषामुत्पत्तिपरत्वे न कर्मभेदः । अत एवैकस्मिन् कर्मणि विरुद्धानां नानाशाखागताङ्गानां विकल्पः । स च न तत्तत्पुरुषभेदेन व्यवस्थितः । तत्तदङ्गानां तत्तदध्येत्रर्थत्वे प्रमाणाभावेन प्रकरणाच्छुद्धक्रत्वर्थत्वावगतेः । अविरुद्धाङ्गेषु तु समुच्चयः । शाखान्तरीयाङ्गज्ञानं च कल्पसूत्रादिभिः सुलभम् । यत्तु 'बह्वल्पं वा स्वगृह्योक्तं' इत्यादिवचनं तत् सर्वाङ्गोपसंहारासंभवेऽनुकल्पविधानार्थमिति कौस्तुभे द्रष्टव्यम् ।

तदेवं शब्दान्तराभ्याससङ्ख्यासंज्ञागुणप्रकरणान्तरैर्निरूपितः कर्मणां भेदः । अतः परं तेषां विनियोगो निरूपयिष्यते ॥ २ ॥ **इति द्वितीयं शाखान्तराधिकरणम् ॥**

**इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां द्वितीयाऽध्यायस्य चतुर्थः पादः ॥**
**अध्यायश्च समाप्तः ।**

---

**( स्वाध्याय इत्यध्यायस्य वेदत्वव्याप्यशाखापरत्वव्यवस्थापनम् ॥**

"अनया त्र्या विद्यया लोकं जयति" "वेदानधीत्य वेदौ वा वेदं वापि यथाक्रम"मित्यादिश्रुतिस्मृतिभिर्वेदान्तरगतशाखाध्ययनस्याभ्यनुज्ञानात् तदनुरोधेनाध्यायपदमपि ऋग्वेदत्वादिव्याप्यशाखापरमेव; तत्रैवच स्वीयत्वैकत्वयोर्विशेषणत्वात् । ऋग्वेदत्वादिव्याप्याया एकैकपित्र्यादिपरम्परागतायाः शाखाया अध्ययननियमकरणेन तद्व्याप्यशाखान्तरस्यैवाध्ययनविधानेऽपि न वेदान्तरगतायास्तन्निवृत्तिरित्यभिप्रेत्य समाधत्ते **—वेदानिति ॥**

**( वेदभेदे कर्मभेदः न शाखाभेद इत्युपपादनम् )**

**पुरुषाभेदादिति ॥** वेदभेदेन तदध्ययनस्य सर्वपुरुषान् प्रत्यविरोधात् तद्गतविधिपुनःश्रवणस्याध्येतृभेदपुरस्कारेण ज्ञानार्थत्वेन परिहारासंभवात् उभयोत्पत्तौ प्राप्तायां भूयोधर्माम्नानं यत्र तत्रोत्पत्तिरितरत्र गुणार्थं श्रवणमित्यर्थभूयस्त्वं नियामकं तृतीये वक्ष्यत इत्यर्थः । एवं यत्र सामवेदे एकस्यामेव शाखायां पञ्चविंशषड्विंशाख्यब्राह्मणभेदस्तत्राप्यध्येतृभेदाभावादेकत्र विधिरपरत्रानुवादो बाधकासत्त्वे, तदभावेतु कर्मान्तरमेवाभ्यासादित्यपि ज्ञेयम् । **उत्पत्तिपरत्वेनेति ॥** तत्तदध्येतॄन् प्रति अज्ञातोत्पत्तिज्ञापकतया विधिपुनःश्रवणोपपत्तेर्न कर्मभेद इत्यर्थः ॥ एवं विधिपुनःश्रवणस्यान्यपरत्वादभ्यासस्य भेदकत्वे निरस्ते तेनैवानुपस्थितिरूपप्रकरणान्तरस्य प्रमातृभेदेनोत्पत्त्याक्षेपकत्वेऽपि भेदाक्षेपकत्वाभावात् भेदकत्वासिद्धिमभिप्रेत्यावशिष्टं गुणकृतभेदं निरसितुमाह**—अत एवेति ॥** यतोऽध्येतृभेदेन द्वयोरप्युत्पत्तिपरत्वात् नैकतरस्योत्पत्तिशिष्टत्वमुत्पन्नशिष्टत्वं वा, अत एव एकतरेणैकतरस्य बाधायोगादेकार्थत्वे सति व्रीहियवयोरिव विकल्प इत्यर्थः । काठकादिसमाख्यानां शाखास्विव कर्मण्यपि प्रयोगात् ताभिराध्वर्यवादिसमाख्यावत् पुरुषविशेषनियमोपपत्त्याशङ्कामभिप्रेत्य परिहरति**—सचेति ॥** कर्मणि प्रयोगस्य कठप्रोक्तग्रन्थविहितसंबन्धनिमित्तकस्य कर्तृतासंबन्धेन कठादिनियामकत्वायोगात् न तेन व्यवस्थासिद्धिरित्यर्थः ॥

**( शाखान्तरीयाङ्गानुष्ठानोपायनिरूपणम् )**

**ननु**—शाखान्तरीयाङ्गानां प्रधानानां वाऽध्ययनविधिसिद्धज्ञानाभावात् कथमनुष्ठानोपपत्तिरित्याशङ्कां क्रतुविधीनां स्वकर्तृशाखार्थविषयेऽध्ययनविधिसिद्धज्ञानलाभेन तदुपायानाक्षेपकत्वेऽपि शाखान्तरवृत्तिस्यानुष्ठेयार्थविषये तद्विधिसिद्धज्ञानाभावे सति तदुपायाक्षेपकत्वोपपत्तेः कल्पसूत्राध्ययनेन तज्ज्ञानसंभवेनानुष्ठानोपपत्त्या निरस्यति**—शाखान्तरीयेति॥**

**( क्रतुविधीनां शूद्राधिकाराक्षेपकत्वनिरासः )**

शूद्रस्य तदाक्षेपसंभवेऽपि तदुपायाध्ययननिषेधान्न तदिति वैषम्यमिति भावः ॥

**( बह्वल्पं वेतिवचनविरोधपरिहारः )**

**ननु**—शाखान्तरीयाङ्गोपसंहारे "बह्वल्पं वा स्वगृह्योक्तं यस्य यावत् प्रकीर्तितं । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवे"दिति वचनेन स्वगृह्यपदस्योपलक्षणतया स्वगृह्योक्तस्य स्वशाखावगतस्य वाऽनुष्ठाननियमविधानात् तेन विरोध इत्याशङ्कानिरासायाह**—यत्त्विति ॥**

**( पूर्वोत्तरपक्षप्रयोजननिरूपणम् )**

प्रयोजनं शाखान्तरगताङ्गानां न विकल्पसमुच्चयौ पूर्वपक्षे । सिद्धान्ते ताविति पूर्वमेवोक्तप्रायत्वान्नोक्तम् ॥

**( अध्यायार्थोपसंहारः । उत्तराध्यायार्थसंग्रहश्च )**

एतेषांच प्रमाणानामेकविषयोपनिपातेऽनधिगतार्थगन्तृत्वतदभावरूपप्रामाण्याऽप्रामाण्यविशेषेऽपि विरोधाभावान्न बलाबलान्वेषणं कार्यमित्यभिप्रेत्य तदवशिष्टस्य विचारणीयस्याभावात् अध्यायार्थमुपसंहरति**—तदेवमिति ॥** श्रोतृणामौदासीन्यवारणेन सुखग्रहणार्थमुत्तराध्यायार्थं संगृह्णाति**—अतःपरमिति ॥** तेषामिति बहुवचनेन अतः परमित्यनेनच सूचितोत्तराध्यायार्थनिरूपणं प्रत्येतदध्यायार्थनिरूपणस्य हेतुहेतुमद्भावरूपा सङ्गतिरुत्तरत्र स्पष्टीभविष्यति ॥

**इति द्वितीयं शाखान्तराधिकरणम् ॥**

**इति कविमण्डन-खण्डदेवशिष्य-शंभुभट्टविरचितायां भाट्टदीपिकाव्याख्यायां प्रभावल्यां द्वितीयाऽध्यायस्य चतुर्थः पादः ॥**
**अत्र द्वितीयाध्यायस्समाप्तः ॥**

| अध्यायः | पादः | अधिकरणसंख्या | आदितोऽधिकरणसंख्या |
|---|---|---|---|
| २ | ४ | ४७ | ७१ |

श्रीः ।

# भाट्टदीपिका ।

## प्रभावलीव्याख्यासंवलिता ।

### तत्र तृतीयाध्यायस्य प्रथमः पादः ।

( १ अधिकरणम् । )

**अथातः** ॥ तदेवं पदप्रमाणके कर्मभेदे निरूपिते संप्रति शेषिनिरूपितं शेषत्वापरपर्यायमङ्गत्वं निरूप्यते । भिन्नानां हि तत् संभवति नाभिन्नानामिति तन्निरूपणस्य तत्र हेतुत्वम् । यद्यपि च द्रव्यकर्मणोर्मिथोऽङ्गाङ्गिभावे न पूर्वोक्तनिरूपणस्य हेतुता; तथापि अङ्गत्वसामानाधिकरण्येन हेतुतामादायैव सङ्गत्युपपत्तावच्छेदकावच्छेदेन तदसत्त्वेऽपि न कश्चिद्विरोधः । अंश एव हेतुत्वं, अंशान्तरे तु तु तत्प्रसङ्गान्निरूपणमित्यपि बोध्यम् । अङ्गत्वमेव वाऽध्यायार्थोऽङ्गित्वं त्वर्थात् । तदपि च श्रुत्यादिपदप्रमाणकं, अतिदेशप्रमाणकस्येहाविचार्यत्वात् । तच्चानेकप्रकारकं विचार्यते ।

---

अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकम् ।
सर्वाभीष्टप्रदं नौमि श्रीरूपं सुन्दरं महः ॥ १ ॥

यो वेदशास्त्रार्णवपारदृश्वा यज्ञादिकर्माचरणेऽतिदक्षः ।
सदाशिवाराधनशुद्धचित्तस्तं बालकृष्णं पितरं नमामि ॥ २ ॥

श्रीखण्डदेवं प्रणिपत्य सद्गुरुं मीमांसकस्वान्तसरोजभास्करम् ।
अत्यन्तसंक्षिप्तपदार्थतत्कृतौ प्रभावलीटिप्पणमातनोम्यहम् ३॥

यद्यप्यत्र गुरोः कृतावपि मयाप्युद्भाव्यते काचना-
संभूतिस्तदपि प्रचारचतुरे नैषा पुरोभागिता ।
किन्तु क्ष्मातिलकाः कुशाग्रधिषणाः सिद्धान्तवद्धादराः
मद्वाक्यं परिहृत्य तत्कृतिमलंकुर्वन्त्विवयं मे मतिः ॥४॥

यद्यप्यथशब्दस्य आनन्तर्यपूर्वप्रकृतापेक्षित्वमधिकारश्चेति त्रयोऽर्थाः; तथापि जिज्ञासासूत्रे शब्देन निर्दिष्टस्यैव पूर्वप्रकृतनियमे सत्यध्ययनस्य पूर्वं शब्देन निर्दिष्टत्वाभावेन पूर्वप्रकृतापेक्षार्थत्वानुपपत्तेः जिज्ञासायाश्च प्रमाणपरतन्त्रत्वेन कृतिसाध्यत्वाभावात् शब्दव्यापारद्वारा अधिकारासंभवात् विचारलक्षणायां प्रमाणाभावाच्च तदुभयार्थत्वमनङ्गीकृत्य आनन्तर्यार्थत्वमेवाथशब्दस्य स्वीकृतम्, प्रकृते तु शेषत्वनिरूपणपरशब्दव्यापारसंभवेनाधिकारार्थत्वोपपत्तेः तस्यच भेदलक्षणानन्तरमेव क्रियमाणत्वेनानन्तर्यस्य तदुपजीव्यत्वेनच पूर्वप्रकृतापेक्षत्वस्यार्थादेव सिद्धेर्न तदर्थकत्वमप्याश्रयणीयम् ॥ **तदुक्तं वार्तिके**—"एवमर्थद्वये तावदथशब्दस्य वर्णिते । संबन्धोऽध्याययोरुक्तो यद्वार्थात् सिद्ध एव सः ॥ ततश्चापुनरुक्तत्वाद्वक्ष्यमाणार्थगोचरा । अधिकारार्थता वक्तुमथशब्दस्य वक्ष्यते" **इति** ॥

एवमथशब्दार्थं सूचयन् सुखग्रहणाय वृत्तवर्तिष्यमाणार्थं प्रतिजानीते—**तदेवमिति** ॥ "शेषस्यैवाधिकारोऽत्र युक्तो नान्यस्य कस्य चित् । शेषधीसिद्ध्यपेक्षत्वादन्यलक्षणवाक्धियामि"ति वार्तिकोक्तावसरं सूचयितुं—**संप्रतीत्युक्तम्** । यद्यप्यन्योन्यसंबन्धात् शेषशेषिणोरुभयोरपि ज्ञानाय निरूपणमावश्यकम्, प्रत्युत प्राधान्यात् शेषिनिरूपणमेव कर्तुं युक्तमितिसूत्रे शेषलक्षणमित्युक्तमयुक्तमित्याशङ्कानिरासाय—**शेषिनिरूपितेत्याद्युक्तम्** । शेषोऽस्यास्तीतिमत्वर्थतया विशिष्टशेषिनिरूपणे कर्तव्ये विशेषणविधया शेषस्य निरूपणावश्यकत्वात् तन्निरूपणे चार्थादेव शेषिनिरूपणसिद्धेः श्रुत्यादिप्रमाणानां च शेषत्व एव व्यापारात् तत्समवाये बलाबलस्य च शेषिण्यविरुद्धत्वेन शेष एव संभवादावश्यकं शेषनिरूपणमेव कर्तव्यमभिप्रेत्य सूत्रे तन्मात्रप्रतिज्ञानम् । तत्रच वक्ष्यमाणलक्षणाङ्गत्वघटकीभूतोद्देश्यताशालित्वरूपशेषित्वस्याऽर्थादेव निरूपणमिति न विरोधः । **एतेन**—शेषित्वज्ञानस्य नान्तरीयसिद्धिकत्वमुपपादितवतोपि सोमनाथस्य तन्निरूपणेऽप्यध्यायार्थत्वोक्तिः वार्तिकविरुद्धत्वात्—**अपास्तेति भावः**॥

सूत्रे शेषपदे भावप्रधानत्वस्य अनन्ताध्याहारायर्थपरत्वाभावस्यच सूचनेन शेषत्वमङ्गत्वं लक्ष्यते येनाध्यायेन तं वक्ष्याम इति सूत्रार्थमभिप्रेत्याह—**शेषत्वेति** ॥

सौत्रातःशब्दसिद्धां पूर्वोत्तराध्यायार्थनिरूपणयोः हेतुहेतुमद्भावसंगतिं दर्शयति—**भिन्नानामिति । द्रव्यकर्मणोरिति** ॥ दध्यादिद्रव्याणां तथा कर्मणां लोकसिद्धभेदवतां द्वितीयेऽनिरूपितभेदानां मिथः अङ्गाङ्गिभाव इत्यर्थः । कर्मणामेव मिथोऽङ्गाङ्गिभावनिरूपणस्य द्वितीयाध्यायसिद्धभेदनिरूपणाधीनत्वात् सामानाधिकरण्येन सङ्गत्युपपत्त्या परिहरति **तथापीति** ॥ द्रव्याद्यङ्गत्वनिरूपणस्य अस्मिन् पक्षे असङ्गत्यापत्तिं परिहर्तुं पक्षान्तरमाह—**अंश एवेति** ॥ शेषत्वमात्रनिरूपणस्य अध्यायार्थत्वेनेत्यादिः ॥

प्रमाणनिरूपणस्य करिष्यमाणस्याध्यायसङ्गतिं परिहरन्नाह—**तच्चानेकेति** ॥ ततश्च शेषत्वलक्षणप्रतिज्ञयैव तत्संबन्धिविचारजातस्य करिष्यमाणस्य सर्वस्य प्रतिज्ञाया अप्यध्यायार्थत्वान्न तस्यासङ्गतिरित्यर्थः ॥

अङ्गत्वलक्षणम्, शेषपदशक्यत्वावच्छेदकम्, अङ्गाङ्गितयोरवच्छेदकम्, श्रुत्यादीनि च षट् अङ्गत्वे प्रमाणानि, तयोर्विरोधे बलाबलम्, विरोधश्च क्वास्ति क्व नास्तीत्यादि ॥३॥१॥

इति प्रथमं प्रतिज्ञाधिकरणम् ॥

( २ अधिकरणम् )

शेषः ॥ इहाद्यं प्रकारद्वयं निरूप्यते । यदेव हि अङ्गत्वलक्षणं तदेव शेषपदशक्यतावच्छेदकं नान्यत् । तत्राङ्गत्वं नाम पारार्थ्यम् । तच्च यदुद्देशप्रवृत्तकृतिकारकत्वेन विहितं यत्तत्त्वं तदङ्गत्वम् । स्वर्गोद्देशप्रवृत्तपुरुषकृतौ यागाद्यनुकूलायां कारकत्वेन विध्यन्वयाच्च यागे लक्षणसमन्वयः । प्रधानोद्देशप्रवृत्तपुरुषकृतौ प्रयाजाद्यनुकूलायां प्रयाजादेः कारकत्वेन विध्यन्वयाच्च प्रयाजादावपि सः । द्रव्यगुणकालकर्तृदेशादौ च यागाद्युद्देश्ययागानुकूलकृतौ करणत्वकर्तृत्वाधिकरणत्वादिकारकत्वेन विधेयत्वाद्यागाङ्गत्वाविघातः । षष्ठीस्थले च संबन्धसामान्याभिधानेऽपि कारकत्व एव पर्यवसानान्नाव्याप्तिः । निमित्तस्य च क्रियान्वयिनोऽपि कारकत्वाभावान्नाङ्गत्वापत्तिः । निमित्तस्यानुष्ठापकत्वाख्योद्देश्यत्वेऽपि ईप्सिततत्त्वाख्योद्देश्यत्वाभावाच्च न यागस्य निमित्ताङ्गत्वम् । लक्षणे तादृश्या एवोद्देश्यताया विवक्षितत्वात् । उद्देश्यतापदेनैव च कर्मकारकलाभात् कारकपदं तदतिरिक्तपरम् । कृष्यादेरपि यागकृतिकारकत्वादङ्गत्वप्रसक्तौ विधेयत्वान्तम् । यथाचास्य न क्वाप्यव्याप्त्यतिव्याप्ती तथा कौस्तुभे विस्तरः ।

---

तत्र भाष्ये कः शेषः केन हेतुना शेषः कथं च विनियुज्यते इत्यादीनि च विनियोगे कारणानीह वक्ष्यन्ते । तेषां च बलवदबलवत्ता । एतत्तात्पर्येणान्यदप्युपोद्घातादिनेत्यनेकप्रकारता दर्शिता । तत्र "शेषः परार्थत्वादि"ति उत्तरसूत्रे पञ्चम्यन्तेन हेतूपादानद्वारा लक्षणस्योक्तस्य शाब्दत्वप्रतीतेस्तेनैव अर्थासिद्धस्य स्वरूपस्यार्थिकत्वमभिप्रेत्य स्वरूपकथनपरस्यापि भाष्यस्यार्थिकाभिप्रायकतां सूचयन् लक्षणपरतया व्याख्यानं दर्शयति—**अङ्गत्वलक्षणमिति** ॥ येन प्रवृत्तिनिमित्तेन हेतुना शेषपदं प्रयाजादिषु प्रयुज्यते, तच्छेषपदशक्यतावच्छेदकमेवेत्यभिप्रेत्य द्वितीयप्रतिज्ञापरभाष्यार्थमाह—**शेषपदेति** ॥ अवघातादिकं श्रुत्यादिभिर्विनियुज्यमानं श्रुतरूपावच्छिन्नोद्देश्यताबाधेन सर्वेषु विनियुज्यते उत तदभावेनेत्यर्थकतृतीयप्रतिज्ञापरभाष्यस्य तात्पर्यार्थं दर्शयति—**अङ्गाङ्गितयोरिति** ॥ एतत्तात्पर्येणान्यदप्युपोद्घातादिनेति भाष्यसूचितं प्रतिज्ञान्तरमाह—**विरोधश्चेति** ॥ आदिपदेन विरोधाविरोधविचारप्रसक्तानुप्रसक्त्या करिष्यमाणविचारस्य संग्रहः ॥

॥ इति प्रथमं प्रतिज्ञाधिकरणम् ॥

---

प्रयाजादौ शेषपदवाच्यतानुमाने परार्थत्वस्य पञ्चम्या हेतुत्वाभिधानात् तस्यैव शेषपदशक्यतावच्छेदकत्वम्, अर्थाच्च स्वरूपपरिचायकत्वात् लक्षणत्वमपीत्यभिप्रेत्याह—**यदेव हीति** ॥

यत्तु उपकारकत्वं शेषत्वं बादरिणोच्यते, यच्च येन विना यन्न भवति स बीजादिरङ्कुरादेः शेष इत्येवमविनाभावहेतुकं शेषत्वं परैरुच्यते, तन्निराकर्तुं "शेषः परार्थत्वादि"तिसूत्रेण पारार्थ्यरूपं शेषत्वमुक्तं जैमिनिना । तद्व्याचष्टे—**तत्रेति** ॥ पश्वङ्गभूतानामपि प्रयाजगोदोहनादीनां पुरोडाशप्रणयनाद्युपकारकत्वेन तदङ्गत्वापत्तेरयुक्तमुपकारकत्वरूपं तल्लक्षणम् तथा आग्नेयादीनां मिथोऽविनाभावेन परस्परमङ्गत्वापत्तेरविनाभावलक्षणमप्ययुक्तम्, किंतु पारार्थ्यमेवेत्यर्थः ॥

**ननु** किमिदं परार्थत्वं नाम? तद्यदि परोद्देशप्रवृत्तकृतिसमवायित्वं तदाऽचेतने यागादावव्याप्तिः, यदितूक्तकृतिसाध्यत्वं तदा देशकालकर्त्रादावव्याप्तिः । **एतेन**—परोद्देशप्रवृत्तकृतिव्याप्यत्वापरपर्यायमङ्गत्वं पारार्थ्यमिति न्यायप्रकाशोक्तं—**अपास्तम्** । यदि तु उक्तकृतिसंबन्धित्वं तदा निमित्तेऽतिव्याप्तिः । अतः पारार्थ्यस्यापि निर्वचनानर्हत्वान्न तल्लक्षणत्वं संभवतीत्यत आह—**तत्रेति** ॥

**तदङ्गत्वमिति** ॥ तदुद्देश्यनिरूपिताङ्गत्वमित्यर्थः । **कारकत्वेन विध्यन्वयादिति** । कृतौ कारकत्वेन हेतुना तद्विशिष्टकृतौ विध्यन्वये सत्यर्थात् विशेषणीभूते यागे विध्यनुप्रवेशेन विध्यन्वयाद्विहितत्वं यागे इति लक्षणसमन्वयं इत्यर्थः ॥

सप्तमाद्ये स्वर्गोद्देशेन प्रयाजादीनां विधानाशङ्कानिराकरणपूर्वकं परिप्लवत्वं निराकरिष्यते, तदनुसंधाय लक्षणान्वयं दर्शयति—**प्रधानोद्देशेति** ॥

द्रव्यस्य क्रियानिवर्तकत्वेन गुणस्य द्रव्यपरिच्छेदकत्वेन कारकतया विधानात् करणत्वेनान्वयात् तत्रापि तदन्वयं दर्शयति—**द्रव्येति** ॥ एतच्च क्रमस्यापि पदार्थपरिच्छेदकत्वेन कारकतया विधानात् तस्याप्युपलक्षणम् ॥

**षष्ठीति** ॥ यथाध्वर्यवमिति समाख्याकल्पितविधौ अध्वर्योः षष्ठ्या संबन्धमात्रावगमेऽपि तस्य कर्तृत्वे पर्यवसानेनं कर्तृतया तत्तत्पदार्थाङ्गत्वमित्यर्थः ॥

निमित्तस्यानुष्ठापकतया उद्देश्यत्वेनान्वयात् निमित्तोद्देशप्रवृत्तकृतिकारकत्वेन विहितत्वस्य यागे सत्त्वान्निमित्ताङ्गत्वं निरसितुमाह—**निमित्तस्येति** ॥

**यथाचास्येति** ॥ अतिदेशेन प्रयाजादीनां पशुयागोद्देशप्रवृत्तकृतिकारकत्वेन विहितत्वेऽपि पशुपुरोडाशे उपकारमात्राक्षेपेण पदार्थांशेऽतिदेशाकल्पनेन तदुद्देशप्रवृत्तकृतिकारकत्वेन विधानाभावान्नातिव्याप्तिः । एवं गोदोहनस्य प्रणयनोपकारकस्यापि तदुद्देश्यकृतिकारकत्वाभावान्नातिव्याप्तिः ॥

एवं च यत्रेदं न लक्षणं, यथा यागादेर्भावनादि प्रति, तत्र भाक्तोऽङ्गत्वव्यवहारः शास्त्रे । यद्यपि च नेदृशमङ्गत्वं श्रुत्यादिप्रमाणकं, कारकत्वमात्राभिधायित्वात् तृतीयादेः । तथापि यत्पदार्थः स्वर्गादिपदात्, तदुद्देश्यकत्वं संसर्गादिना, कृतिराख्यातात्, कारकत्वं तृतीयादेः, विध्यन्वयित्वं विधिपदसमभिव्याहारात् । विधिर्हि विशिष्टभावनां विदधदर्थाद्विशेषणान्यपि विधत्ते इति सर्वेषामुद्देश्यत्वेन विधेयत्वेन वा विध्यन्वयः । अतएवाङ्गत्वघटकीभूतपदार्थान्तराणां प्रमाणान्तरेण प्रसिद्धावपि तद्घटककारकत्वस्य श्रुत्यादिगम्यत्वात्तेषामङ्गत्वप्रामाण्यव्यवहारः ॥ ३ ॥ २ ॥ इति द्वितीयं शेषलक्षणाधिकरणम् ॥

( ३ अधिकरणम् । )

**द्रव्यगुण** ॥ यद्यपि पारार्थ्यमङ्गत्वं तथापि न यागादेर्लक्ष्यता । समानपदश्रुत्या यागादेरेव भावनाभाव्यत्वेन तस्य स्वर्गोद्देशेन विहितत्वाभावात् । विधेः स्वरूपयोग्यत्वेनैव लिङर्थतया इष्टसाधनत्वानाक्षेपकत्वात् । आक्षेपकत्वेऽपि भ्रमप्रमासाधारण्येनेष्टसाधनत्वज्ञानस्यैव कारणतयेष्टसाधनत्वसिद्धौ प्रमाणाभावाच्च । स्वर्गकामपदस्य तु स्त्रीकामः प्रायश्चित्तं कुर्यादितिवत् कर्तृपरत्वादिनाप्युपपत्तेर्न भाव्यपरत्वावश्यकता । अतो न यागादेर्लक्ष्यत्वम् ।

वस्तुतस्तु—उपकारकत्वमेव शेषत्वम्; तदर्थेऽप्यपकारके शेषत्वव्यवहाराभावात् । तच्च श्रुतिलिङ्गवाक्यरूपप्रमाणत्रय-

---

अत्रच कृतिकारकत्वमित्येतावन्मात्रोक्तौ फलस्यापि कर्मतासंबन्धेन कृतिकारकत्वात् फलाङ्गत्वापत्तिः । अतः परोद्देशप्रवृत्तेत्यर्थकं **यदुद्देशप्रवृत्तेति** कृतिविशेषणम् । फलस्यच फलं प्रति परत्वाभावात् फलोद्देशप्रवृत्तपुरुषकृतौ कर्मतया फलस्य विध्यन्वयेन भोक्त्रङ्गत्वेऽपि न फलाङ्गत्वप्रसक्तिः, एतदेवाभिप्रेत्य उद्देश्यतापदेनैवेत्याद्युक्तम् । अपूर्वस्यापि फलोद्देशप्रवृत्तकृतौ करणत्वेनान्वयात् फलाङ्गत्वोपपत्तिरित्यादि कौस्तुभे द्रष्टव्यो विस्तर इत्यर्थः ॥

यद्यप्यवघातादीनामङ्गत्वे व्रीह्यादीनां लोकसिद्धानामेवोपादानान्न तदुद्देशप्रवृत्तकृतिरस्ति; तथापि अपूर्वसाधनत्वाकारेण तदुद्देश्यकृतिसंभवान्न क्षतिः ॥

**भावनादिप्रतीतिः** कृतेः कृत्यन्तराभावात् यागस्य भावनां प्रति तस्याश्च फलं प्रति शब्दभावनायाश्च अर्थभावनां प्रति पश्वादेश्च कारकं प्रति कारकत्वस्यच क्रियां प्रत्यङ्गत्वव्यवहारो भाक्त इत्यर्थः ॥

**यत्तु प्रकाशकारैः**—भावनायाः फलाङ्गत्वादिव्यवहारस्य मुख्यत्वसिद्धौ इष्टोद्देश्यप्रवर्तनाप्रयोज्यत्वं स्वस्वेष्टं प्रत्यङ्गत्वम्, प्रयोज्यत्वंच कार्यतत्कार्यसाधारणम् । प्रवर्तनाकार्यं प्रवृत्तिस्तत्कार्यंच यागफलादि स्वस्वेष्टं प्रत्यङ्गम्—**इत्युक्तम्,** तत् द्रव्यदेशकालकर्त्रादेरपि करणत्वाधिकरणत्वकर्तृत्वादिप्रवृत्तिद्वारा प्रवर्तनाजन्यत्वेन तस्याप्यङ्गत्वापत्तेः शाब्दभावनाया आर्थीभावनाङ्गत्वस्यैवमपि दुरुपपादत्वात् अयुक्तमिति व्यक्तं कौस्तुभे ॥

**यदपि भाट्टालंकारकृता**—विध्यन्वयिन्यां कृतौ यद्विषयत्वानुपपत्तिर्यदुद्देश्यकत्वेन परिह्रियते तत् तस्याङ्गं तदर्थमिति—**उक्तम्, तन्न;** कालसंबन्धबोधकवाक्ये कालादिवृत्तिकृतविषयत्वानुपपत्तिपरिहारस्य कर्मोद्देश्यत्वेनाप्यसंभवादेव कालोद्देशेन कर्मण एव कृतिविषयत्वाङ्गीकारेण कर्मणः कालाङ्गत्वापत्त्या कालस्य कर्माङ्गत्वानापत्तेः । अस्मन्मतेतु कृतिविषयत्वरूपोपादेयत्वसामानाधिकरण्येन विधेयत्वस्यैव औत्सर्गिकस्य सन्निध्यादिप्रत्यभिज्ञापकप्रमाणसत्त्वे बाधेनोपादेयत्वसमानाधिकरणविधेयत्वासंभवेऽपि अज्ञाततदधिकरणत्वज्ञापनेन विधेयत्वं नानुपपन्नम् ॥

अत्रच व्यापारभेदेन कारकाणां भेदात् तद्घटिताङ्गत्वस्यापि प्रतिपदार्थं भेदावगमेन तत्तदङ्गत्वं प्रति प्रयाजत्वादेरेव लक्ष्यतावच्छेदकत्वं सूचयितुं लक्षणे यत्तच्छब्दोपादानम् । कृतिकारकत्वेन विध्यन्वयित्वरूपपारार्थ्यस्य श्रुत्यादिप्रमाणानि विना वक्तुमशक्तेस्तान्यप्यर्थादिह उपक्षिप्तानीति ध्येयम् ॥

॥ इति द्वितीयं शेषलक्षणाधिकरणम् ॥

अत्रोक्तस्य लक्षणस्य लक्ष्यप्रदर्शनद्वारा कः शेष इत्ययमंशो निरूप्यत इत्यभिप्रेत्याह—**यद्यपीति** ॥

**ननु** लिङः फलोपहितप्रवृत्त्यनुकूलव्यापाररूपप्रवर्तनाभिधायित्वात् तया च फलोपहितप्रवृत्तेरिष्टसाधनताज्ञानं विना अजननात् तदाक्षेपावश्यंभावे इष्टोद्देशेन साधनतया विधानसंभवात् कथं न यागादेर्लक्ष्यत्वमित्यत आह—**विधेरिति** ॥ योग्यतया प्रवृत्त्यनुकूलव्यापारत्वमेव लिङर्थः, नतु फलोपहितप्रवृत्त्यनुकूलत्वम्, येन प्रवृत्तिविषयस्य यागादेरिष्टोद्देश्यककृतिकारकत्वमाक्षिपेत्; काम्ये कर्मणि कामनायां सत्यामपि विधिशतश्रवणेऽपि कदाचित्प्रवृत्त्यजननात् । अतश्च प्रवृत्तिजनने योग्यमात्रस्य विधेः स्वविषये इष्टोद्देश्यककृतिकारकत्वानाक्षेपकत्वान्न यागादेः पारार्थ्यसिद्धिरित्यर्थः ॥

**ननु** स्वर्गकामपदेन स्वर्गस्य उद्देश्यत्वावगमे सत्यर्थाद्यागस्य भाव्यांशोपनिपातासंभवात् करणत्वेनैव विधानान्नानुपपत्तिरित्यत आह—**स्वर्गकामेति** ॥ एवंच यागस्यैव भाव्यत्वात् स्वर्गकामस्य कर्तृत्वेनान्वयात् फलाभावान्न यागस्य फलाङ्गत्वम् नवा फलस्य पुरुषाङ्गत्वम्, पुरुषस्य तु कर्तृत्वेनान्वयात् यागाङ्गत्वमित्यभिप्रेत्योपसंहरति—**अत इति** ॥

**तदर्थेऽपीति** ॥ मक्षिकानिवृत्त्यर्थेषु धूमेषु मक्षिकार्थो धूम इति प्रतीतेः परार्थत्वे विद्यमानेऽपि मक्षिकाशेषत्वव्यवहाराभावात् अपकारकव्यावृत्तमुपकारकत्वमेव शेषत्वम् । तच्च यत्र प्रत्यक्षादिनाऽवगम्यते तत्रैव संभवतीति न यागादेर्ल-

मेव । अतएव व्रीह्यादेर्द्रव्यस्यारुण्यादेर्गुणस्यावघातादेः संस्कारस्य चोपकारकत्वदर्शनाच्छेषत्वम् । प्रोक्षणादिसंस्कारस्य तु लिङ्गेनाङ्गत्वासंभवेऽपि श्रुतिवाक्याभ्यामङ्गत्वप्रतीतेरुद्दलेनैव उपकारकल्पनया शेषत्वोपपत्तिरिति तेषामेव लक्ष्यत्वमिति प्राप्ते—

नोपकारकत्वं शेषत्वम्, गोदोहनदध्यानयनादेरपि प्रणयनवाजिनयागाङ्गत्वापत्तेः, अपि तु पारार्थ्यमेव । अपकारकस्थले तु तदपकारस्यैवेष्टत्वेनोद्देश्यता न तु तस्येति न तदर्थेऽप्यपकारके शेषत्वव्यवहारः । तदपि श्रुत्यादिपट्प्रमाणगम्यमिति वक्ष्यते । अतश्च वाक्याद्यागोऽपि फलं प्रत्यङ्गम् ।

**तथाहि**—यद्यपि विधेः स्वरूपयोग्यतयैव प्रवृत्त्यनुकूलत्वं लिङाऽवगम्यते; तथापि कदाचित् प्रवृत्त्यभावे विधिवैयर्थ्यापत्तेरवश्यं कदाचित्तया भवितव्यम् । तदा चेष्टसाधनताज्ञानं विना तदसंभवात्तस्य च बाधकाभावे भ्रमत्वायोगादिष्टसाधनत्वं तावद्यागस्य विधिबलादवगम्यते, इष्टविशेषसाधनत्वं च स्वर्गकामादिपदसमभिव्याहारादिति यागस्य स्वर्गाङ्गत्वसिद्धिः । एवं फलस्यापि भोक्तृपुरुषाङ्गत्वम् । भोक्ता चोत्सर्गतो विधिवशात्कामनावशादात्मनेपदवशाच्च कर्तैव, प्रमाणसत्त्वे त्वन्यः । अत्राङ्गत्वव्यवहारो भाक्त इति तु ध्येयम् । पुरुषः पुनः कर्तृत्वादिना यागाद्युद्देश्यकक्रुतिकारकत्वाद्वाक्यादेव तदङ्गं इत्यविवादमेव ॥ ३ ॥

॥ ३ ॥ **इति तृतीयं यागफलपुरुषाणां स्वर्गपुरुषाद्यङ्गताधिकरणम् ॥**

**( ४ अधिकरणम् । )**

**तेषाम्** ॥ तदेवमङ्गत्वे निरूपितेऽङ्गत्वे श्रुत्यादीनि पट् प्रमाणानीत्युक्तम् । तत्र श्रुतिर्नामाङ्गत्वघटकीभूतोद्देश्यता —कृतिकारकत्वयोरन्यतरस्य प्राधान्येन वाचकः शब्दः । स च द्वितीयातृतीयादिविभक्तिरूपः । कृन्निष्ठातृजादिर्व्यत्स्यर्थं प्राधान्येनेति । तस्य कारकत्वविशिष्टद्रव्यवाचित्वेन प्राधान्येन कारकत्ववाचित्वाभावात् । अतएव प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति, वारणो यज्ञावचर इत्यादौ वाक्यीय एव विनियोगो न तु श्रौतः ।

तत्र द्वितीया उद्देश्यत्वपरा सती प्रोक्षणादेरङ्गत्वे हेतुः । वस्तुतस्तु—ईप्सिततमत्वाख्याया उद्देश्यतायाः साध्यतामात्रवाचिद्वितीयावाच्यत्वाभावात्तत्रापि न मुख्या श्रुतिः, अपि तु भाक्त एव श्रुतिव्यवहारः; ईप्सितत्वांशे लक्षणाङ्गीकारात् । अतश्चोद्देश्यतापदमपि नैव लक्षणे देयम् । एवं

---

क्ष्यत्वमित्यर्थः । **लिङ्गेनेति** ॥ सामर्थ्येनावघातवत् उपकारकत्वासंभवेऽपीत्यर्थः । **श्रुतीति** ॥ व्रीहीनिति द्वितीया **श्रुतिः** तदन्तपदस्य प्रोक्षतीति समभिव्याहारो **वाक्यं** ताभ्यामित्यर्थः । **तेषामेवेति** ॥ एवकारेण यागस्य प्रयाजादेर्वा प्रत्यक्षद्वितीयावाक्येभ्यः उपकारकत्वादर्शनात् अलक्ष्यत्वं सूचितम् ॥

**अतश्च वाक्यादिति** ॥ करणत्वबोधकतृतीयाद्यभावेन वाक्यादित्युक्तम् प्रयाजादेरङ्गत्वसिध्यै प्रकरणस्याप्युपलक्षणम् । **इष्टविशेषेति** ॥ अतश्चापेक्षितेष्टविशेषसमर्पकमेव स्वर्गकामपदं लक्षणया स्वर्गाख्यभाव्यपरम्, न कर्तृपरम्; आपाततः प्रतीयमानकर्तृपरतत्पदेन समर्पणन्तु यजतेरकर्मकत्वानुरोधादित्यर्थः । **प्रमाणसत्त्वे त्विति** ॥ यथा जातेष्टौ पूत एव तेजस्वीत्युपसंहारैकवाक्यतारूपप्रमाणसत्त्वे पुत्र इत्यर्थः । **भाक्त इति** ॥ भोक्तुः प्रवृत्तपुरुषापेक्षया परत्वाभावादुद्देश्यतया विध्यन्वयाश्रवणाच्च तदुद्देशप्रवृत्तकृतिकर्मत्वरूपमुख्याङ्गत्वासंभवात् भाक्त इत्यर्थः ॥

**कर्तृत्वादिनेति** ॥ आदिपदेन औदुम्बरीसम्मानादिषु साधनत्वेन करणतासंग्रहः । पूर्वपक्षेऽपि बादरिणा द्रव्याणां शेषत्वस्याङ्गीकारात् पुरुषस्य द्रव्यत्वेनाङ्गत्वे नोभयोर्विवाद इति पुरुषश्च कर्मार्थत्वादिति पुनः सूत्रप्रणयनवैयर्थ्यमविवादमेवेत्यनेन सूचितम् ॥

प्रयोजनं पूर्वपक्षे प्रयाजादीनामङ्गत्वे प्रकरणादिप्रमाणाभावात् अर्थवादिकस्य स्वर्गस्य वा फलत्वकल्पनया प्राधान्यान्नातिदेशः । सिद्धान्तेतु स इति स्पष्टत्वान्नोक्तम् ॥

॥ **इति तृतीयं यागफलपुरुषाणां स्वर्गपुरुषाद्यङ्गताधिकरणम्** ॥

अत्र प्राथमिकश्रुतिविनियोगोपयोगिनिरूपणस्य प्रथमपादार्थत्वमभिप्रेत्य तृतीयप्रतिज्ञाविषयीभूतार्थनिरूपणात् प्रथमतः श्रुतिलक्षणमाह—**तत्रेति** ॥ **अत एव प्रोक्षिताभ्यामिति** । प्रोक्षितेतिनिष्ठाप्रत्ययेन कर्मत्वविशिष्टोलूखलमुसलरूपद्रव्याभिधानेन साक्षात् प्राधान्येन तद्वृत्त्युद्देश्यताया अबोधनान्न श्रुत्या प्रोक्षणस्य तदङ्गत्वम्, अपितु वाक्यात् । एवं वारणवाक्येऽपि अवचर्यतेऽनुष्ठीयतेऽनेनेति व्युत्पत्त्या यज्ञसाधनत्वबोधनादित्यर्थः । परोद्देशप्रवृत्तकृतिकारकत्वरूपपारार्थ्यबोधने उद्देश्यस्य प्राधान्यात् तत्प्रतिपादकद्वितीयाश्रुतिकृते पारार्थ्यव्यवस्थाव्यवस्थे विचारयितुं प्रथमतस्तस्याः पारार्थ्यप्रमाणत्वमुपपादयति—**तत्रेति** ॥ तृतीयादिविभक्तिर्यत्परा सती तदर्थस्य कारकताप्रतिपादनेनान्याङ्गत्वं बोधयति, द्वितीयातु न स्वप्रकृत्यर्थस्य अन्याङ्गत्वबोधिका किन्तु स्वप्रकृत्यर्थस्य उद्देश्यताबोधनद्वारा अन्यार्थस्य विधेयतापादनेन करणतातात्पर्येणान्यार्थस्य स्वप्रकृत्यर्थाङ्गत्वबोधिकेति वैषम्येण तस्याः प्रमाणत्वमुपपादयति—**उद्देश्यत्वपरा सतीति** ॥ **नैव लक्षणे देयमिति** ॥

**ननु**—कृतिकारकफलस्य प्राधान्येन वाचक इत्येतावल्लक्षणकरणेऽपि कर्मत्ववाचिन्या द्वितीयाया मुख्यश्रुतित्वमुपपद्यत एव, विनियोजकताप्रकारमात्रं पूर्वोक्तवैषम्येणास्तु इति—**चेत्**—**न**; अङ्गत्वलक्षणे उद्देश्यपदोपादानेन तदतिरिक्तत्वेनैव कृतिकारकत्वस्य विवक्षणात् तस्यास्तत्प्रमाणत्वानुपपत्तेः ।

षष्ठ्यादावपि कारकत्वशक्तत्वाभावात् श्रुतित्वव्यवहारो भाक्त एव। एवं यत्रापि विभक्त्या लक्षणयैव कारकान्तरप्रतिपादनं, तत्रापि वाक्यीय एव विनियोगो न श्रौतः। एवं समानपदश्रुत्यादिष्वपि द्रष्टव्यम्।

तदेवं श्रुतेर्विनियोजकत्वे तद्भूताधिकरणेनैव सिद्धेऽधुना गौणमुख्यसाधारणश्रुतिविनियोगोपयोग्यङ्गाङ्गितयोरवच्छेदकविचारः क्रियते।

दर्शपूर्णमासयोर्व्रीहीनवहन्ति, आज्यमुत्पुनाति, गां दोग्धीत्यादय आज्यौषधसान्नाय्यसंबन्धिनः संस्काराः श्रुताः। तेषु किं सर्वसाधारणमवघातविधावुद्देश्यतावच्छेदकं उताज्यादिव्यावृत्तं, एवमन्यत्रापीति विचारः।

तत्र न तावच्छ्रुतं व्रीहित्वादिकमेवोद्देश्यतावच्छेदकम्; आनर्थक्यापत्तेः, अवघातप्रोक्षणादिव्यतिरेकेणापि व्रीहित्वावच्छिन्नादेर्जायमानत्वात्, यवेष्वनापत्तेश्च। अतो नवमाधिकरणन्यायेन व्रीहित्वाविवक्षयाऽपूर्वसाधनत्वलक्षणाया आवश्यकत्वात्तत्र फलप्रत्यासन्नत्वादेकत्वादारादुपकारकेषु क्लृप्तप्रयोजकशक्तिमत्त्वाच्च परमापूर्वस्य तत्साधनत्व-

---

अत एव अङ्गत्वघटकीभूतेऽत्यपि निवेशितम्। **युक्तं चैतत्**—नहि यस्य प्रोक्षणादेः करणत्वेन व्रीह्यङ्गत्वं बोध्यते तत्र प्रमाणं द्वितीया भवति; तस्याः स्वप्रकृत्यर्थवृत्त्युद्देश्यतामात्रबोधकत्वात्। अतस्तदन्तपदसमभिव्याहाररूपवाक्यगम्यमेव तत्राङ्गत्वम्। द्वितीयान्तानां श्रुतित्वेन पूर्वोक्तविनियोजकताप्रामाण्यव्यवहारस्तु सत्यपि श्रुतपदसन्निधिरूपे वाक्यत्वे अङ्गत्वघटकीभूतोद्देश्यताकृतिकारकत्ववाचकपदकल्पनानुकूलत्वाभावसाम्यमात्रेण भाक्तः। तत्प्रयोजनं च लिङ्गश्रुत्याद्यकल्पनेन लिङ्गापेक्षया प्राबल्यसिद्धिः। अतएव अस्मिन्मते "इत्यश्वाभिधानीमादत्ते" इत्यत्र सत्यपि वाक्यीये विनियोगे श्रुतित्वेन लिङ्गबाध उपपद्यत इत्याशयः॥ **एवं यत्रापीति**॥ यथा प्रयाजशेषेणेत्यत्र द्वितीयातृतीयादिविभक्त्योः लक्षणया हविषामधिकरणत्वेनाङ्गत्वम्, तथा प्रयाजशेषाङ्गत्वमभिघारणस्य तत्रेत्यर्थः। **एवमिति**॥

**यत्तु भाट्टालंकारे**—शेषिशेषत्वाभिमतयोस्तत्तद्रूपेणोपस्थितयोः संबन्धज्ञानं व्यवधानमनपेक्ष्य यच्छब्दज्ञानेन जन्यते सा विनियोक्त्री श्रुतिरिति श्रुतिलक्षणं कृत्वा संबन्धश्चाङ्गत्वात्मना साधनत्वात्मना संबन्धात्मना वा प्रतीयतां न तद्विशेषलक्षणाऽपेक्ष्यते, तेन कृत्-तृतीया-षष्ठी-पदश्रुत्यादीनां संग्रह इत्युक्तं, तत्र यदि षष्ठ्यर्थोपस्थितिविलम्बकृतव्यवधानाभावविवक्षणम्, तदा यागस्य स्वर्गसंबन्धे अपूर्वोपस्थितिकृतविलम्बकृतव्यवधानसापेक्षत्वात्तद्विनियोजकपदश्रुतावव्याप्तिः। यदितु शब्दान्तरोपस्थितार्थप्रतीतिविलम्बकृततदभावविवक्षणम्, तदा आरुण्यस्य एकहायनीशब्दान्तरोपस्थितगोरूपार्थपरिच्छेदद्वारव्यवधानापेक्षत्वात् क्रयाङ्गत्वविनियोजकश्रुतावव्याप्तिः इत्ययुक्तम्। **अतएव**—एतादृशव्यवधानसत्त्वेऽपि यत्र शक्त्या कारकत्वम्, तत्र श्रुतित्वम् यत्रतु न, तत्र गौणश्रुतित्वं इत्यङ्गीकारेणैवारुण्यादीनां क्रयाङ्गत्वं मुख्यश्रुत्या, यागस्य स्वर्गार्थत्वं गौणश्रुत्येति पूज्यपादानामभिप्रेतमिति दिक्॥

**तदेवं श्रुतेरिति**॥ एवं लक्षणलक्षिताया मुख्यश्रुतेः गौणश्रुतेश्चेत्यर्थः। **तद्भूतेति**॥ तर्कपादे वाक्यगतकारकवाचिपदार्थानां क्रियान्वयस्य "तद्भूतानां क्रियार्थत्वेन समाम्नाय" इति सूत्रेण प्रतिपादनात् श्रुत्या क्रियानिरूपितकारकत्वस्यार्थादेवोपपत्तेः श्रुतिविनियोजकत्वे सिद्ध इत्यर्थः॥ **अङ्गाङ्गितयोरिति**॥ यद्यप्येतत्प्रभृत्यङ्गितावच्छेदकमेव विचारयिष्यते, नाङ्गतावच्छेदकम्; तथापि अङ्गितावच्छेदके निरूपिते तादृशोद्देश्यतावच्छेदकरूपावच्छिन्नोद्देश्यकप्रवृत्तकृतिकारकत्वमेव तन्निरूपिताङ्गतावच्छेदकमित्यस्यार्थात् सिद्धिमभिप्रेत्योभयोपन्यासः। **इत्यादय इति**॥ आदिपदेन सान्नाय्यधर्माणां दोहनातञ्चनादीनां संग्रहः॥ **एवमन्यत्रापीति**॥ सोमप्रकरणगताभिषवादिधर्मेष्वपीत्यर्थः॥

कथंच विनियुज्यत इति प्रतिज्ञाया आज्यादिव्यावृत्तरूपावच्छिन्नोद्देशेन विनियुज्यते इति सिद्धान्तेन निराकाङ्क्षीकरणात् तद्वैपरीत्येन पूर्वपक्षमाह—**तत्रेति**॥

**ननु** फलजनकतया सिद्धवैजात्यावच्छिन्नयागोद्देशेन द्रव्यादिविधानात् तादृशवैजात्यावच्छिन्नयागस्य तद्द्रव्यगतसंस्कारं विनोत्पत्तौ प्रमाणाभावात् व्रीह्यर्थत्वेऽपि नानर्थक्यापत्तिरित्यत आह—**अतो नवमेति**॥ व्रीह्यादिद्रव्यविधीनां नियमविधित्वोपपादकपाक्षिकप्राप्तिसिध्यै विजातीययागव्यक्तीनामपि व्यापकीभूतयागत्वावच्छिन्नव्यक्त्यन्तर्गतत्वात् तदवच्छिन्नं प्रति च द्रव्यत्वावच्छिन्नस्य लोकत एव कारणत्वावगतेर्व्रीह्यादिद्रव्यं विनापि द्रव्यान्तरेण विजातीययागोत्पत्तेर्बाधकाभावेन अवश्याङ्गीकार्यत्वात् तदुत्पत्तौ सुतरां तत्संस्कारापेक्षायां मानाभावेनानर्थक्यस्य तदवस्थत्वात् अपूर्वसाधनत्वलक्षणा आवश्यकी। तदाच विशेषणीभूतापूर्वं प्रत्यर्थाजनकत्वावगमात् तस्य चादृष्टरूपस्य श्रुतसंस्कारैर्विनोत्पत्तौ मानाभावादानर्थक्यपरिहारासंभवात् तादृशापूर्वसाधनत्वस्य प्रदेयघटकतया लक्षणीयस्य रूपस्य यवेष्विवाज्यादिष्वपि सत्त्वात् सर्वार्थं धर्मा इत्यर्थः॥

**ननु** एवमपूर्वसाधनत्वलक्षणायामपि व्रीहिजन्यत्वेन प्रत्यासत्त्याऽऽग्नेयावान्तरापूर्वसाधनत्वस्यैव लक्षणौचित्यात् तदसाधनाज्यादिषु अप्राप्तिरित्यत आह—**तत्र फलेति**॥ प्रत्यासत्तेराग्नेयवदग्नीषोमीयैन्द्राग्नयोरप्यविशिष्टत्वेन तदपूर्वसाधनत्वस्यापि लक्षणीयत्वात् प्रवृत्त्येकानुगतधर्माभावेनावान्तरापूर्वसाधनत्वविशेषलक्षणानुपपत्तेः फलप्रत्यासन्नत्वात् सर्वानुगतफलापूर्वसाधनत्वेनैव लक्षणया धर्मसांकर्यमनिवार्यमित्यर्थः। दीक्षणीयोद्देशेन विहितस्य वाङ्नियमस्य दीक्षणी-

मेव प्रदेयघटकत्वसंबन्धेन लक्ष्यते । अस्ति चाग्नेयादेस्तत्प्रत्यपि साधनता । अतएव न वाङ्नियमन्यायोऽपि । अतश्चोद्देश्यतावच्छेदकस्य सर्वसाधारणत्वादाज्यादिष्वप्यवघातादेः सङ्करः । नच प्रतिनियतनिर्देशाद्व्यवस्था; तथात्वे व्रीहित्वादिविवक्षाया आवश्यकत्वे नीवारादिष्वनापत्तेरिति प्राप्ते—

यद्यपि विधिरविशेषप्रवृत्तः स्यात्; तथापि दृष्टार्थत्वनियमविधिलाघवानुरोधेन विशेषे व्यवस्थाप्येत, किमुत यदा सोऽपि विशेषप्रवृत्त एव । व्रीह्यादिपदे प्रत्यासत्त्या आग्नेयाद्युत्पत्त्यपूर्वसाधनत्वस्यैव लक्ष्यत्वात् । तस्याप्यनिर्ज्ञातप्रकारत्वेन धर्मप्रयोजकत्वोपपत्तेरानर्थक्याभावेन तदतिक्रमकारणाभावात्, परंपरया फलवत्त्वाच्च । अतो व्रीहिपदेन व्रीहिसाध्यानि यानि आग्नेयाग्नीषोमीयैन्द्राग्न्युत्पत्त्यपूर्वाणि तन्निष्ठकार्यतानिरूपितयागादिनिष्ठकारणतासमानाधिकरणकार्यतानिरूपितप्रदेयप्रकृतिभूततण्डुलरूपव्यापारकसाधनतासामान्याश्रयत्वस्यैव चोद्देश्यतावच्छेदकत्वेन विवक्षितत्वान्नाज्यादिषु प्रसङ्गः । अत्र चापूर्वत्रयस्यैकानुगमकाभावेऽपि एकपदोपादानादवाक्यभेदः । तत्तद्व्यापारकसाधनता

---

यायाः ज्योतिष्टोमापूर्वसाधनत्वाभावेन दीक्षणीयापदेन तस्य लक्षयितुमशक्यत्वात् दीक्षणीयापदेन स्वसाध्यापूर्वसाधनत्वलक्षणया तत्साध्यज्योतिष्टोमापूर्वसाधनत्वलक्षणायां लक्षितलक्षणापत्तेस्तदर्थत्वं नाङ्गीकृतम्, अपितु दीक्षणीयावान्तरापूर्वार्थत्वमेव, प्रकृतेतु व्रीहिजन्ययागजन्यत्वस्य परमापूर्वेऽपि सत्त्वेन व्रीहिपदेन तल्लक्षणामात्रोपपत्तेः नावान्तरापूर्वार्थत्वमित्यभिप्रेत्य वैषम्यमाह—**अत एवेति** ॥

**दृष्टार्थत्वेति** ॥ अवघातस्यापूर्वार्थत्वेऽपि तत्साधनव्रीहिगतदृष्टप्रयोजनद्वारैव तदर्थत्वमिति व्रीह्यर्थत्वे वैतुष्यरूपदृष्टार्थत्वमाज्यांशेऽदृष्टार्थत्वमिति वैरूप्यस्य तथा वैतुष्यार्थत्वे अवघातविधेर्नियमविधित्वम् अदृष्टार्थत्वेतु अपूर्वविधित्वमिति वैरूप्यस्य चापत्तेस्तत्परिहारायैकरूप्याश्रयणे लाघवात् नियमविधित्वदृष्टार्थत्वानुरोधेन औषधद्रव्यवृत्त्यपूर्वसाधनत्वमेव लक्षयित्वा तद्धर्मत्वमेव युक्तमित्यर्थः ॥

**ननु** अविशेषप्रवृत्तविध्यनुरोधेन वैरूप्याङ्गीकरणं सर्वत्रैव वाऽदृष्टार्थत्वाङ्गीकरणं न दोष इत्यत आह—**किमुतेति**—**प्रत्यासत्त्येति** ॥ व्रीहिपदाभिधेयार्थस्य व्रीह्यादेस्तण्डुलनिष्पत्तिद्वारा प्रथमतः पुरोडाशसंपादनेन उत्पत्त्यपूर्वसाधनत्वात् तदतिक्रमे कारणाभावात् यदेव व्रीह्यादिभिः साध्यमपूर्वं तत्साधनत्वस्यैव प्रत्यासत्त्या लक्ष्यत्वादित्यर्थः । यदि कथमपि तत्साधनत्वलक्षणायामानर्थक्यपरिहारो न भवेत्, तदा अगत्या तद्विहाय परमापूर्वसाधनत्वं विप्रकृष्टमपि लक्ष्येत, नत्वेतदस्ति; तस्याप्यनिर्ज्ञातप्रकारत्वेन तदर्थत्वेऽप्यानर्थक्यपरिहारोपपत्तेरित्याह—**तस्यापीति** ॥ अत एव यत्र सप्तदशारत्नित्वादिव्यतिरेकेण प्रकृतौ अपूर्वसिद्धिः पश्वपूर्वसिद्धिर्वावधारिता तत्र तदतिक्रमेणापि परंपरया वाजपेयापूर्वप्रयोजकत्वमिष्यत एव, प्रकृतेतु तदभावात् प्रत्यासत्त्या शक्यसंबन्धानुरोधेन व्रीहित्वसमानाधिकरणाग्नेयोत्पत्त्यपूर्वसाधनसंबन्धिप्रदेयघटकतण्डुलनिष्पत्तिरूपव्यापारकसाधनताश्रयत्वस्यैव लाघवाल्लक्षणेति भावः । आन्तरालिकतत्तद्व्यापारकसाधनतानिवेशेन लक्षणाप्रकारं दर्शयति—**अत इति** ॥

पिष्टरूपव्यापारव्यावृत्तये **प्रदेयप्रकृतिभूतेत्युक्तम्** । तस्य प्रदेयत्वेन तत्प्रकृतित्वाभावात् । यथैव ह्यामिक्षा पयसो न द्रव्यान्तरम्, किंतु घनीभावापन्नं पय एव, यथावा सक्तव एव सक्तुपिण्डः, नत्वर्थान्तरम्, जलसंयोगादिकंच पिण्डभावे निमित्तकारणमात्रम्, तथैव जलाभ्यादिसंयोगस्य पिण्डं प्रति निमित्तकारणत्वेऽपि न पिष्टादर्थान्तरं पुरोडाशः, किंतु पिण्डावस्थामात्रम् । अतः स तण्डुलप्रकृतिक एवेति न पिष्टस्य व्यापारमध्ये प्रवेशः । अतएव चरौ पुरोडाशस्थानापन्ने पिष्टप्रकृतित्वाभावेऽपि तण्डुलप्रकृतिकत्वादेव धर्मप्राप्त्यविघातः । यद्यपि यत्र पिष्टस्यैव प्रदेयता तत्र तण्डुलप्रकृतिकत्वेन धर्मप्राप्तिर्दुर्निवारा; तथापि सर्वत्राऽनोवासोधिकरणन्यायेन सिद्धस्यैव पुरोडाशादेः ग्रहणप्रसक्तौ प्रयोगान्तःश्रपणविध्यन्यथानुपपत्त्या प्रयोगमध्ये संपादनावश्यकतया तत्रैव प्रकृतिद्रव्योपादाने तन्नियमविधानात् तादृशनियम्यमानद्रव्येष्वेव धर्माणां विधानम् । यत्रतु पिण्डतण्डुलादौ प्रदेये न श्रपणप्राप्तिस्तत्र पुरोडाशादिपदवाच्यपक्वपिण्डादिघटकपाकप्रयोजकस्य तस्याभावे पेषणवत् लोपौचित्येन अनोवासोवल्लौकिकस्यैव पिष्टतण्डुलादेः उपादानात्तण्डुलेष्विव न पिष्टेऽपि प्रयोगमध्ये तण्डुलोपादानम् न वा व्रीहिप्रकृतित्वनियम इति न तद्धर्मप्राप्तिः । अतएव "व्रीहिभिर्यजेते"ति वाक्ये स्वप्रदेयप्रकृतिभूततण्डुलव्यापारद्वारैव अपूर्वसाधनीभूतयागोद्देशेन व्रीहीणां करणत्वेन विधानात्तादृशसाधनताश्रयोद्देशेनैव संस्कारविधय इत्यर्थः । इतोप्यधिकं कौस्तुभे द्रष्टव्यम् ॥

**ननु** तत्तद्व्यापारकसाधनतानां आग्नेयत्वव्रीहित्वावच्छिन्नानां निवेशे सौर्यादौ तत्तद्धर्मावच्छिन्नसाधनतानामभावे कथं तद्भिन्नधर्मावच्छिन्नसाधनताश्रयेषु धर्मप्राप्तिरित्यत आह—**तद्व्यापारकेति** ॥ यावता विना नानर्थक्यपरिहारस्तावन्मात्रस्यागत्या प्रवेशेऽपीह साधनतामात्रप्रवेशेन तत्परिहारोपपत्तौ न तदवच्छेदकानां व्रीहित्वादीनां प्रवेशः; गौरवात् । नचातिप्रसङ्गः; वारणस्यापि तावतैव संभवात् । एवंच नैवारे चरौ यवेषुच धर्मप्राप्तिरविकलेत्यर्थः ॥

**ननु** व्रीहियवयोः शब्दान्तरात् गुणाद्वा कारणताभेदात् व्रीहिगततण्डुलनिष्पत्तिव्यापारकसाधनताश्रयत्वाभावे कथं यवेषु धर्मप्राप्तिः? अतएव एतादृशसाधनताश्रयत्वाभावेऽपि विकृतौ नीवारकरणतायाः प्राकृतकार्यापत्त्या तदवच्छिन्नेषु नीवारेषु

एव च विवक्ष्यन्ते न तु साधनतावच्छेदकादीन्यपि । तेन यागत्वपुरोडाशत्वव्रीहित्वाद्यभावेऽपि न क्षतिः । यथा च व्रीहियवयोः कारणताभेदेऽपि यवसाधारण्यं, तथा कौस्तुभे विस्तरः। तत्र तत्र नवमादौ चोपपादयिष्यते ॥ ३ ॥ ४ ॥

**इति चतुर्थं निर्वापादीनां व्यवस्थितविषयताधिकरणम् ॥**

( ५ अधिकरणम् । )

**द्रव्यम् ॥** दर्शपूर्णमासयोः, स्फ्यश्च कपालानि चेति दश द्रव्याण्यनुक्रम्यैतानि वै दश यज्ञायुधानीति श्रुतेन वाक्येन दशानापि द्रव्याणां यज्ञसाधनत्वेन विधानादुत्पत्तिशिष्ट पुरोडाशाद्यवरोधेन च साक्षाद्यागसाधनत्वायोगादङ्गेष्ववतारात् प्रकृतापूर्वसाधनीभूतद्रव्यसाकाङ्क्षशक्यक्रियात्वावच्छिन्नोद्देशेन द्रव्याणि विधीयन्ते । स्फ्येनोद्धन्तीत्यादिविशेषविनियोगास्त्ववयुत्यानुवादा इति प्राप्ते—

तेन तेन प्रत्यक्षविधिना तृतीयाश्रुतिसहकृतेन स्फ्यादीनां विशिष्य विनियोगाद् यज्ञायुधवाक्यमेवैकमश्रुतविधिकं वै—शब्दोपबद्धमनुवादकम्। बहूनामनुवादानां वैयर्थ्यात्। अस्य च यज्ञायुधानि संभवन्तीत्येतद्विध्यर्थवादत्वेन सार्थकत्वात् । तस्मादुद्धननमात्रजन्यव्यापारकप्रकृतापूर्वसाधनत्वमेवोद्धननपदेन लक्षयित्वा तदुद्देशेनैव स्फ्यादिविधिः ३।५।

**इति पञ्चमं श्रौतविनियोगधिकरणम् ॥**

( ६ अधिकरणम् । )

**अर्थैकत्वे ॥** ज्योतिष्टोमे अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीति श्रुतम् । तत्रारुणशब्दोऽरुणगुणवचनोऽरुणत्वजातिवचनो वा न तु विशिष्टव्यक्तिवचनः।

---

अतिदेशेन धर्मलाभेऽपि प्रकृतौ तदभावे न कथमपि तत्प्राप्तिरित्यत आह—**यथाचेति ॥** यथैव साधनतामात्रविवक्षयाऽऽनर्थक्यपरिहारे सति न साधनतावच्छेदके विवक्षा; गौरवात्, एवं साधनतासामान्यविवक्षयापि तत्परिहारोपपत्तेस्तुल्यत्वेन शक्यसंबन्धविधया प्रविष्टस्यापि न साधनताविशेषस्य विवक्षया लक्ष्यतावच्छेदके उद्देश्यतावच्छेदके वा प्रवेशो गौरवादिति साधनतासामान्याश्रयत्वविवक्षया युक्ता यवेषु धर्मप्राप्तिर्नाज्यादिष्विति कौस्तुभे विस्तर इत्यर्थः ॥

**॥ इति चतुर्थं निर्वापादीनां व्यवस्थितविषयताधिकरणम् ॥**

पूर्वाधिकरणमारभ्य त्रिष्वधिकरणेषु संस्कारद्रव्यगुणानामुद्देश्यतावच्छेदकनिरूपणेन विनियोगप्रकारे निरूपितव्ये पारार्थ्यघटकोद्देश्यतावोधकत्वेन प्राधान्यात् द्वितीयाश्रुतिकृतविनियोगप्रकारं पूर्वाधिकरणे निरूप्य अधुना तृतीयाश्रुतिविकृतविनियोगप्रकारं द्रव्यविषये निरूपयितुमुदाहरति—**दर्शपूर्णमासयोरिति ॥** प्राकरणिकसर्वयोग्यद्रव्यमात्रे निवेशायापूर्वसाधनतालक्षणायै दर्शपूर्णमासयोरित्युक्तम्। इतिकरणेन प्रभृत्यर्थकेन च "अग्निहोत्रहवणीच शूर्पंच कृष्णाजिनंच शम्या चोलूखलंच मुसलं च दृषच्चोपला चे"त्यन्तस्य संग्रहः। स्फ्येनोद्धन्तीत्यादीनां विधित्वेन स्फ्यादीनामुद्धननादिषु विनियोगेऽपि पूर्वत्रातिप्रसक्तलक्षणायां प्रमाणाभावाद्व्रीहिमात्रजन्यव्यापारकसाधनतालक्षणायामपीह यज्ञायुधवाक्यस्य तात्पर्यग्राहकस्य सत्त्वात् अतिप्रसक्तलक्षणायां न वाधकमिति विशेषाशङ्कानिरासाय पुनरारम्भमभिप्रेत्य पूर्वपक्षमाह—**दशानामपीति ॥**

वैशब्दोपबद्धस्याप्यस्याप्राप्तार्थकत्वात् कर्तव्यतावाचिपदाध्याहारेण विधायकत्वमभिप्रेत्य विधानादित्युक्तम् । आयुधशब्दस्य युद्धसाधनवाचिनोऽपि यज्ञपदानुरोधात् साधनमात्रपरत्वलक्षणया साधनत्वेनेत्युक्तम् । स्फ्येनोद्धन्तीत्यादीति आदिपदेन "कपालेषु श्रपयति अग्निहोत्रहवण्या हवींषि निर्वपति शूर्पेण विविनक्ति कृष्णाजिनमधस्तादुलूखलमवस्तृणाति शम्यां दृषद्युपदधाति उलूखलमुसलाभ्यामवहन्ति दृषदुपलाभ्यां पिनष्टी"त्यन्तानां संग्रहः। इतरत् स्पष्टार्थम् । इह स्फ्यादीनां सर्वार्थत्वे निराकृते चतुर्थे पुनस्तेषां प्रदेयत्वमाशङ्क्य निराक्रियत इति न विरोधः । उभयत्रापीत्यौदुम्बराधिकरणसिद्धार्थवादत्वं यज्ञायुधवाक्यस्याभिप्रेत्य अनुवादोक्तिरिति ध्येयम्। प्रयोजनं स्पष्टत्वान्नोक्तम् ॥

**॥ इति पञ्चमं श्रौतविनियोगाधिकरणम् ॥**

पूर्वं द्रव्यविषये विनियोगप्रकारं निरूप्याधुना गुणविषये तन्निरूपयितुमुदाहरति—**ज्योतिष्टोम इति ॥** पूर्ववत् पूर्वपक्षसिद्ध्यौपयिकतया ज्योतिष्टोम इत्युक्तम् । अरुणाशब्दस्य द्रव्यपरत्वे द्रव्यस्य क्रीणात्यन्वयोपपत्तेः पूर्वपक्षासंभवं निरसितुं गुणवचनत्वं साधयति—**तत्रेति ॥** तत्रारुणव्यक्तिनानात्वपक्षे आकृत्यधिकरणन्यायेन अरुणत्वजातिवचनस्तदैक्यपक्षे अरुणगुणवचन इत्यर्थः । **नतु विशिष्टव्यक्तिवचन** इत्याकृत्यधिकरणन्यायप्रवृत्तिप्रदर्शनार्थम् ॥

अत्र प्राचीनैररुणादिशब्दानां केवलं गुणवाचित्वे शुक्लो देवदत्त इतिवत् अरुणो घट इति सामानाधिकरण्यानुपपत्तेः रूपवान् घट इत्यत्रेव मत्वर्थीयेनैव सामानाधिकरण्यापत्तेराकृत्यधिकरणन्यायेन गुणवाचकानामप्यरुणादिशब्दानां निरूढलक्षणया द्रव्यपरत्वमपि। अत एव "गुणवचनेभ्यो मतुपो लुगिष्ट" इति न तत्प्रयोगापत्तिः इत्युक्तम् ,तन्न;प्रयोगाभावेन सांप्रतिकलक्षणाया अनुपपत्तौ निरूढलक्षणायाः सुतरामनुपपत्तेः। **तदुक्तं वार्तिके**—निरूढलक्षणाः काश्चित्सामर्थ्यादभिधानवत्। क्रियन्ते सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तितः।" इति ॥

तृतीयया च शक्यस्यैव करणत्वमुच्यते, न तु तदर्थं द्रव्यलक्षणा । टावाद्यर्थोऽपि तत्रैव सामानाधिकरण्येनान्वीयते, न तु तदर्थमपि व्यक्तिलक्षणा; अव्युत्पत्त्यापत्तेः । यथाचैवं सति गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्तीत्याद्यनुशासनोपपत्तिस्तथा कौस्तुभे द्रष्टव्यम् ।

---

अतश्च विशिष्टद्रव्यवाचित्वे यथैव शुक्लादिपदानामेव तद्वाचित्वं, न रूपादिशब्दानां अप्रयोगात्, एवं गुणमात्रवाचित्वेऽपि तेष्वेव द्रव्यलक्षणा नान्यत्रेति नियमोपपत्तेर्द्रव्ये लक्षणया सामानाधिकरण्योपपत्तिर्नवाऽतिप्रसङ्गः । अत एव गुणवचनत्वे पुंल्लिङ्गता। द्रव्यवचनत्वे आश्रयलिङ्गवचनतेत्यर्थकं "गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ती"त्यनुशासनान्तरमुपपद्यते । गुणवचनत्वमपि विशेषणत्वेन गुणशक्यत्वपरं द्रष्टव्यम् । इत्थमरुणापदस्य द्रव्यपरत्वमुक्तमयुक्तमिति सूचयन् तस्याङ्गीकारे निष्प्रयोजनतां दर्शयति—**तृतीययेति** ॥

**अयमर्थः**—किं द्रव्यलक्षणा करणत्वान्वयानुपपत्त्या, उत लिङ्गसङ्ख्यान्वयानुपपत्त्या वा । **नाद्यः**; जातेरिव गुणस्यापि द्रव्यपरिच्छेदद्वारा तदुपपत्तेरनुपपत्त्यभावात् । अतएव यत्र क्रियाजन्यफलशालित्वरूपकर्मत्वस्य तदुद्देश्यत्वरूपसंप्रदानत्वस्य च ओदनविप्रवृत्तित्वासंभवः; तत्रैव तल्लक्षणा, नतु तृतीयान्तादिस्थल इत्युक्तमाकृत्यधिकरणे । **नान्त्यः**; तस्य पाशाधिकरणन्यायेन साधुत्वमात्रेणाश्रयनिष्ठतया वोपपत्तौ प्रातिपदिके लक्षणायां प्रमाणाभावात् । अत एव सामानाधिकरण्यसंबन्धेन तयोः करणत्वे प्रातिपदिकार्थेवाऽन्वये संसर्गविधया पार्ष्ठिकभावेन वा द्रव्यबोधोपपत्तेर्नैव लक्षणायास्तत्र प्रयोजनम्; द्वितीयादिस्थले तदावश्यकत्वेऽपीह तृतीयान्ते तत्प्रयोजनाभावात् । यद्येतादृशस्थलेऽपि तल्लक्षणाऽङ्गीक्रियते, तदा विशेष्ये द्रव्ये गुणस्यान्वयापत्त्या तद्विशिष्टद्रव्यस्य मूर्तत्यैकहायन्यादिवत् पार्ष्ठिकान्वयलभ्याभेदसंबन्धेन क्रय एव निवेशोपपत्तेः प्रत्युत समस्यमानानेकपदतत्सामानाधिकरण्यालोचनापेक्षाधिक्येन विलम्बितत्वात् तेन द्रव्यविध्यनापत्तेर्गुणशब्देनैव द्रव्यविध्यापत्तेः क्रयसाधनद्रव्यनिवेशस्यैवोपपत्तावमूर्ततया क्रये तन्निवेशासंभवेन प्राकरणिकयोग्यकारकमात्रनिवेशपूर्वपक्षासंभवे तत्समाधानार्थाधिकरणारम्भस्य सिद्धान्ते गुणस्यैव द्रव्यपरिच्छेदद्वारा करणत्वप्रतिपादनस्य च वैयर्थ्यापत्तिः, तथा चतुरादिशब्दानामपि सङ्ख्याविशिष्टमुष्टिपरत्वापत्तौ जघन्याया अपि मुष्टेः प्रधानत्वेन तदनुरोधस्यैवापत्तौ मुख्यत्वेन सप्तदशशरावे चरौ सङ्ख्यानुग्रहस्य वक्ष्यमाणस्यानापत्तिश्चेत्यतो गुणमात्रपरत्वमेवेति ॥

**अव्युत्पत्त्यापत्तेरिति** ॥ लिङ्गसङ्ख्यादीनां विशेष्ये कारके सामानाधिकरण्यसंबन्धेन करणत्वेवाऽन्वयस्य व्युत्पन्नस्य त्यागेन द्रव्येऽन्वयाङ्गीकारेण द्रव्यलक्षणायां व्युत्पत्त्यन्तरकल्पनापत्तेरित्यर्थः ॥

**ननु** केवलगुणवाचित्वे कथं गुणवचनेभ्यो मतुपो लुगिष्टो गुणवचनानामाश्रयत इत्यनुशासनद्वयस्योपपत्तिः? तत्र गुणिनमुक्त्वा गुणवाचका ये तेषामेव शुक्लादिशब्दानां गुणवचनपदेन ग्रहणेन गुणिपरत्वावश्यकत्वादित्यत आह—**यथाचैवमिति** ॥ आद्यानुशासनस्य यत्र लक्षणाप्रसक्तिः तत्परत्वम्, द्वितीये स्वशक्यार्थविशिष्टव्यक्तिविषयकलक्षणावृत्तियोग्ये यत्प्रकारतया व्यक्तेरन्वयस्तदर्थकं गुणपदमिति तस्यैव गुणवचनशब्देनोपादानमिति द्वयोरनुशासनयोरुपपत्तिः । अत्र योग्यान्तमात्रविवक्षायां अजायाः शुक्ल इत्यादावपि टाबाद्यापत्तिः; तस्य तदा लक्षकत्वाभावेऽपि अरण्यस्थदण्डवद्योग्यत्वस्य सत्त्वात्, अतस्तल्लक्षावृत्त्यर्थमन्वय इति । अतएव तत्राश्रयगतलिङ्गाभावे 'गुणे शुक्लादयः पुंसी'त्यनेन साधुत्वार्थं पुंल्लिङ्गमेव नियम्यते । रूपमस्तीत्यादौ प्रकारतया द्रव्यानन्वयादाद्यम् । तत्र तादृशयोग्यताया अभावात् । अतश्च व्यक्तिलक्षणाभावेपि यल्लिङ्गद्रव्यपरिच्छेदद्वारा गुणस्य करणत्वं, तद्गतस्त्रीत्वेनैव टाबाद्युत्पत्तेः अरुणाशब्दस्यात्र गुणपरत्वमेवेति कौस्तुभे द्रष्टव्यमित्यर्थः ॥ एतच्च अरुणैकहायनीशब्दयोः प्राचीनोक्तवैलक्षण्यनिरासतात्पर्यमात्रेण द्रष्टव्यम् ॥

**वस्तुतस्तु**—पचतीत्यत्र एकत्वस्य सामानाधिकरण्यसंबन्धेन भावनान्वये संसर्गविधया भातस्य कर्तुः पचतीत्यस्मात् एको नवेति संशयव्युदाससिद्धधर्मितावच्छेदकविशिष्टधर्मिज्ञानावश्यकत्वाय लक्षणा तत्र पूज्यपादैरुक्ता, तथेहाप्यरुणापदात् जायमानसंशयव्युदासाय द्रव्यलक्षणावश्यक्येव; तावतापि द्रव्यस्य करणतया प्राप्तेर्विशेषणांशस्य गुणस्यैव करणत्वावश्यकत्वे तत्रामूर्तत्वादिना क्रियानन्वयमापाद्य पूर्वपक्षः तथा एकहायन्यादिपदयोरप्यविशिष्ट एव स इति ध्येयम् ॥

**यत्तु**—अरुणत्वजातिपरत्वे तया सह गुणे समवायसंवन्धसंभवेन लक्षणया गुणपरत्वसंभवेऽपि द्रव्ये तदभावे व्यक्तिलक्षणानुपपत्त्या द्रव्यपरसामानाधिकरण्यानुपपत्तिरिति सोमनाथीये उक्तम्, **तत् न मनोहरम्**; नीलो घट इत्यादिसामानाधिकरण्यप्रतीतौ नीलपदस्य नीलरूपाश्रयद्रव्यसंयुक्तत्वसंबन्धेन नीलपदव्यक्तिलक्षणावत् इहापि स्वाश्रयसमवायसंबन्धेन जातिपरस्यापि लक्षणया तदुपपत्तेः समानत्वात् । अत एव नीलं रूपमिति प्रतीतेर्नीलरूपत्वजातेः समवायेन विद्यमानायाः प्रवृत्तिनिमित्तत्वाश्रयणं तथैव तस्या एव जातेः परंपरासंबन्धेन घटादावप्यङ्गीकारे बाधकाभावेन मुख्ययैव वृत्त्या प्रयोग उपपादितो नक्षत्रवादावल्यां मीमांसकमूर्धन्येन । तदा को दोषः परंपरासंबन्धेन लक्षणाश्रयण इति दिक् ॥

अत्र सूत्रे द्रव्यगुणयोरैककर्म्यादित्युपादानादावश्यकं पिङ्गा-

एकहायन्यादिपदानां तु बहुव्रीहित्वादवयवार्थविशिष्टा-न्यपदार्थरूपे द्रव्य एव शक्तिरिति प्राञ्चः । अन्यपदार्थे प-दद्वयस्य लक्षणेति तु बहवः । नच—द्रव्यस्यैकेनैव पदेन विधिसंभवे इतरेण विध्यनुपपत्तिर्वैयर्थ्यं चेति—वाच्यम्; उभयोर्युगपत्प्रवृत्तेर्विहितविधानाभावात्, गुणान्तरपरत्वेन सार्थक्याच्च । शक्यते त्वत्रापि आरुण्यन्यायेन लक्षणापि नेति वक्तुम्; समासानुशासनस्य मतुबाद्यनुशासनवदुप-पत्तेः । द्रव्ये पार्ष्ठिकगुणसंबन्धोपपादनंच प्रमाणान्तरप्र-

---

क्ष्यादिशब्दानां द्रव्यपरत्वमुपपादयितुं मत्वर्थेनैव बहुव्रीहेः द्र-व्याभिधानेनैव आन्तरालिकसंबन्धभानसिद्धेरन्यलभ्यत्वेन तत्र शक्तिं कल्पयित्वा द्रव्यपरत्वमेव मतुप इव बहुव्रीहेरप्याश्री-यते । तदुक्तं वार्तिके—"सर्वत्र यौगिकैः शब्दैर्द्रव्यमे-वाभिधीयते । नहि संबन्धवाच्यत्वं संभवत्यतिगौरवात्" इति ।

तत्रापि चित्रगुरित्येवमादिषु चित्रगोशब्दयोरत्यन्तव्यति-रिक्तार्थाभिधायित्वात् देवदत्तादिपदैः सामानाधिकरण्यायो-गात् प्रागपि देवदत्तादिपदादन्यपदार्थप्रतीतेर्वाक्यार्थत्वासं-भवेनान्यपदार्थे शक्तिरेव । लक्षणापक्षे बहुव्रीहेररुणशब्दस्य चैकान्तरितद्रव्यलक्षकत्वांशाविशेषे हि किं विनिगमकम् यद्ब-हुव्रीहेरेव द्रव्याभिधायिता नारुणपदस्येति, अतोऽन्यपदार्थे शक्तिः ।

**नच**—इन्द्रपीतशब्दे पूर्वपक्षे बहुव्रीहावन्यपदार्थलक्ष-णापत्तिदूषणाप्रसक्तेः षष्ठीतत्पुरुषापेक्षया दौर्बल्यासंभवेन कथं पूर्वपक्षोत्थानं? इति—**वाच्यम्**; षष्ठीतत्पुरुषे बहुव्री-हौच एकस्यैवोत्तरपदार्थे अन्यवाक्यार्थे चान्वयसाम्येऽपि षष्ठीतत्पुरुषे एकस्यैव त्यागः, बहुव्रीहौ तु उभयोरिति वैषम्येण तदपेक्षया तस्य दौर्बल्यसिद्धेः ॥

**एतेन**—बहुव्रीदावन्यपदार्थस्य शक्यत्वे विग्रहप्रयुक्त्य-भावकृतलाघवात् निषादस्थपतिशब्दे कर्मधारयत्यागेन बहु-व्रीह्याश्रयणापत्तिरित्यपि—**अपास्तम्**; कर्मधारये श्रुतपदा-र्थानां सर्वेषामेव वाक्यार्थान्वयः, बहुव्रीहावेकैकस्य अन्वय इति वैषम्यमात्रेण दौर्बल्योपपत्तेः । अतो यद्यपि चित्राः गावो यस्येति विग्रहो लोके प्रसिद्धः; तथापि राजपुरुष इति षष्ठीतत्पुरुषे षष्ठ्यन्तप्रतिपाद्ये उपसर्जनत्वस्य प्रथमान्तप्रति-पाद्यार्थे प्रधानत्वस्येव प्रथमान्तनिर्दिष्टानां चित्रगवीनामेव प्राधान्यापत्त्याऽन्यपदार्थद्रव्यप्राधान्यप्रतीतिभङ्गापत्तेः चि-त्राणां गवामयमित्येवं विग्रहेण अन्यपदार्थशक्तेरेकहायन्यादि-शब्दानां बहुव्रीहित्वात् द्रव्यपरत्वमिति प्राचां मतमाह— **एकहायन्यादीति** ॥

कृत्तद्धितादिस्थले एकेनैव इतरस्याक्षेपसिद्धेरनेकशक्तिक-ल्पनापरिहाराय प्रधानेनैव गुणभूतस्य लोके आक्षेपदर्शनात् लिङ्गसङ्ख्यान्वययोग्यद्रव्यस्यैव सत्त्वपदवाच्यत्वेन प्राधान्येन तत्रैव शक्तिर्न विशेषणीभूतसंबन्धे तस्याक्षेपादेव भानसिद्धेः ॥ अतएव तृतीयान्ते जातेर्द्वितीयान्तादिस्थलेच व्यक्तेश्च प्राधा-न्यदर्शनात् नियामकाभावे आकृत्यधिकरणन्यायप्रवृत्त्या जा-तेरेव वाच्यत्वं व्यक्तेराक्षेपलभ्यत्वमेव । एवंच कृदन्तादेस्तु न विशेषणे शक्तिः, अपितु द्रव्य एव ॥

अतएव सर्वत्रेति वार्तिकमप्येतादृशविषय एव विशेषणी-भूतसंबन्धादिशक्तिनिराकरणपरं सत् यत्र यौगिकस्थले कृ-दादिवाचकान्तरसत्त्वं तद्विषयमेव ॥

यत्रतु बहुव्रीह्यादौ नवाचकान्तरसत्त्वं तत्र यष्टीः प्रवेशये-त्यादाविव पदद्वयस्यैव स्वार्थविशिष्टान्यपदार्थे अन्यपदार्थमा-त्रे वा निरूढलक्षणोपपत्तौ अतिरिक्तशक्तिकल्पने मानाभावः; अनन्यलभ्यस्य शब्दार्थत्वात् ॥ अतएव यत्र कृदादावपि प्र-कृतिप्रत्ययार्थे लोपो यथोद्भिदधुनेत्यादौ तत्रावशिष्टभागस्य तल्लक्षकत्वमिष्टमेव, न त्वतिरिक्ता शक्तिः ॥

नच बहुव्रीहेरन्यपदार्थशक्तत्वाभावे अरुणापदादविशेषा-पत्त्या सूत्रे द्रव्यगुणयोरिति निर्देशानुपपत्तिः; अस्मन्मते नि-रूढलक्षणातदभावाभ्यामेव विशेषसिद्धेः । एवंच पदद्वये ल-क्षणाङ्गीकारादेव तत्पुरुषापेक्षया सुतरां कर्मधारयापेक्षया दौ-र्बल्यं सिद्धं भवति । अतएव इन्द्रपीताधिकरणे पूर्वपक्षप्रसा-धनाय बहुव्रीहावन्यपदार्थलक्षणापत्तिः सिद्धान्ते दर्शिता, सि-द्धान्तेपिच शक्त्या परिहारमनभिधाय हुताहुतसमुदायवा-चिनः इन्द्रपीतशब्दस्य तदवयवे लक्षणापत्तिमात्रमेव पूर्व-पक्षदूषणत्वेन दर्शितमिति ॥

नैयायिकादिबहुसंमतं पक्षान्तरमाह—**अन्यपदार्थ इति** ॥

**यत्तु प्रकाशकारैः**—बहुव्रीहावन्यपदार्थलक्षणायां पङ्क-जादिपदेष्वपि तदापत्तौ योगरूढ्युच्छेदप्रसङ्गात् तद्वदिहापि शक्तिरेवेत्युक्तं तद्दूषणं कौस्तुभे द्रष्टव्यम् ॥

**वस्तुतस्तु**—अरुणापदवदेव एकहायन्यादिपदानामपि आकृत्यधिकरणन्यायेन एकहायनादिरूपविशेषणवाचित्वमेव; तस्याप्यारुण्यवत् द्रव्यपरिच्छेदद्वारा करणत्वोपपत्तेः । अतएव यत्र द्वितीयान्तादिस्थले तदसंभवस्तत्परमेव मतुप्प्रत्ययानुशा-सनवत् बहुव्रीह्यनुशासनमिति न द्रव्ये शक्तिर्लक्षणा वा स्वी-कार्या । सौत्रं द्रव्यपदंच प्रमाणान्तरप्रमितद्रव्यपार्ष्ठिकसंबन्ध-प्रतिपादनतयाप्युपपत्तिमदित्यभिप्रेत्य स्वसंमतं पक्षान्तरमाह —**शक्यतेत्विति** ।

**प्रमाणान्तरप्रमितेति** ॥ गवा ते क्रीणातीतिमन्त्रलि-ङ्गावगतगोरूपद्रव्यमादायेत्यर्थः ॥ अस्मिंश्च पक्षे अमूर्तत्वावि-शेषात् सर्वेषामेव विचारविषयितेति भावः ॥

एवं प्रकृतविचारोपयुक्तं प्रसाध्य शाब्दबोधत्वावच्छिन्नं प्रति योग्यताज्ञानस्य हेतुत्वात् अमूर्तस्यारुण्यस्य क्रयभावना-न्वययायोग्यत्वात् तत्रानिवेशेन वाक्यीयान्वयं बाधित्वा "विहि-तस्तु सर्वधर्मःस्यात् संयोगतो विशेषात् प्रकरणाविशेषा"दिति

मितद्रव्यमादायोपपादनीयमिति न कश्चित् विरोधः । तदिहारुण्यस्य योग्यत्वेऽपि कारकत्वेनाव्युत्पन्नस्य वाक्यीयद्रव्याद्यन्वयस्यायोगाद्युत्पन्नत्वेऽपि चामूर्तत्वेनायोग्यस्य वाक्यीयक्रियान्वयायोगात्ततोविच्छिन्नस्य प्रकरणकल्पितश्रुतानुमितैकदेशनिष्पन्नेन वाक्येनारुणया प्रकृतापूर्वसाधनीभूतद्रव्यपरिच्छेदं भावयेदित्याकारेण प्राकरणिकसर्वद्रव्याङ्गत्वमिति प्राप्ते—

न योग्यताज्ञानं शाब्दबोधहेतुरपि तु अयोग्यतानिश्चयस्य प्रतिबन्धकतामात्रम् । अतश्च प्रतिबन्धकताभावसत्त्वे आरुण्यस्यापि क्रियान्वयबोधोपपत्तेः । पश्चाच्च योग्यतागवेषणायामारुण्यस्य पार्ष्टिकद्रव्यसंबन्धोपपत्तेर्न ततो विच्छेदाशङ्का । अतएव प्रथमतः सोमक्रयारुण्यादिसकलकारकविशिष्टभावनाविधानोत्तरं क्रयस्य सोमसंबन्धवेलायामारुण्यादित्रिकस्य मत्वर्थलक्षणया क्रयसंबन्धावगतौ पश्चाद्विशेषणविधित्रयकल्पनया तेषां क्रयाङ्गत्वावगमे जाते पश्चात्परिच्छेदकीभूतद्रव्याद्यपेक्षायां पार्ष्टिकोऽरुणैकहायन्योः परस्परं विशेषणविशेष्यभावमात्रेण संबन्धो द्रव्यविशेषसंबन्धश्चेति द्रष्टव्यम् । ततश्च युक्तं क्रयसाधनीभूतैकहायन्यामेव निवेश आरुण्यस्य, न तु वासःप्रभृतिषु क्रयद्रव्यान्तरेषु ।

न च यवेष्विव सोमप्राप्तिसाधनक्रयद्रव्यत्वाविशेषात्

---

तेषामर्थाधिकरणपूर्वपक्षसूत्रत्वेन आश्रित्य प्राकरणिकसर्वद्रव्यार्थत्वपूर्वपक्षं साधयितुं योग्यतया वाक्यीयद्रव्यान्वयसंभवं निरस्यति—**तदिहेति** ॥ यत्र अग्निहोत्रहवण्येति वाक्ये ल्युडुक्तकरणीभूतस्य द्रव्यस्य स्ववाक्योपात्तनिर्वापं प्रति योग्यता तत्र तस्या निर्वापाङ्गत्वसंभवेऽपि इह कारकत्वेन द्रव्ये अमूर्तत्वेन क्रयभावनायां वा अन्वयासंभवात् न तदङ्गत्वम्, अपितु श्रुतिवाक्ययोरौदासीन्ये सत्यधिकाराख्यप्रकरणेन ज्योतिष्टोमोपस्थितौ योग्यतया तदीयद्रव्यपरिच्छेदकत्वेन विधिवाक्यं द्रव्यवाचकपदंच प्रकल्प्य तद्विधानात् सर्वयोग्यकारकत्वमिति न केवलं प्राकरणिककरणकारकाङ्गत्वमात्रम्, किंतु तत्साधारण्येन कर्त्रादिकारकाङ्गत्वमित्यर्थः ॥

**यत्तु वार्तिके**—सिद्धस्यारुण्यस्य प्रकरणाग्रहणमाशङ्क्य अरुणयेति तृतीयया प्राकरणिकानि ज्योतिष्टोमापूर्वसाधनानि सोमप्रभृतीन्यनूद्य अरुणप्रातिपदिकार्थो विधीयते । "अतश्च पदमेवैतद्वाक्येनैवं विभज्यते । या व्यक्तिः करणत्वेन चोदिताऽपूर्वसाधनम् । तया तत्साधयेन्नित्यमरुणत्वविशिष्टया । एवंचेदरुणं कार्यकरणं यद्गृहाद्यपि । यत्पुनर्यजमानादिविहितं कारकान्तरम् । न तस्यायं गुणः शेषः सर्वार्थोप्यवधारितः" । **इत्युक्तम्**; तत् तृतीयया लक्षणया द्रव्योपादाने एकहायन्या एव लक्षणापत्तेः परंपरासंबन्धेन स्ववाक्योपात्तक्रयान्वयसंभवादेकप्रसरताभङ्गापत्तेश्चायुक्तमिति व्यक्तं कौस्तुभे ॥

**एतेन**—एकहायन्यादिपदानां द्रव्यपरत्वात् श्रौततदवरुद्धे क्रये अरुणापदलक्ष्यद्रव्यविध्यसंभव इति शास्त्रदीपिकोक्तं—**अपास्तम्**; बलाबले सत्यपि वस्तुत एकत्वेन विरोधाभावात् । अतः पूर्वोक्तरीत्या योग्यसर्वकारकाङ्गत्वमित्यर्थः ॥

न शाब्दबोधत्वावच्छिन्नं प्रति योग्यताज्ञानस्य कारणत्वम्; तदभावेऽप्ययोग्यतानिश्चयाभावदशायां गृहीतपदपदार्थसंकेतस्य शाब्दबोधोदयात् । अन्यथा यागस्यापि स्वर्गान्वयशाब्दबोधानुदयेन अपूर्वकल्पनानापत्तेः, किंत्वयोग्यतानिश्चयः प्रतिबन्धकः इति तदभावस्य कारणत्वेन प्रकृतेऽपि तावन्मात्रेण क्रयभावनायामपूर्वस्याप्यन्वयोपपत्तेः तदीयद्रव्याङ्गत्वमेवेत्यभिप्रेत्य सिद्धान्तमाह—**न योग्यतेति । पश्चाच्चेति** ॥

आरुण्यस्य क्रियान्वयात् पूर्वं द्रव्यान्वये कारकत्वव्याघातापत्तेः प्रथमतो द्रव्यपरिच्छेदरूपव्यापारानवगमेऽपि उक्तसामग्रीवशादेकहायनीक्रयसोमादिकारकान्तरवदेव भावनया संबन्धे सति विशिष्टविधानेन विधेयानेकत्वकृतवाक्यभेदपरिहारेण पश्चात् क्रयस्य सोमनिरूपितकरणत्वबोधदशायां भावनाप्रत्यासन्नत्वादेकहायनीवन्मत्वर्थलक्षणया क्रयसंबन्धेन द्रव्यसंबन्धाभावेऽपि गुणस्य द्रव्यपरिच्छेदकत्वरूपव्यापारमन्तरेण करणत्वानिर्वाहात् योग्यतया तस्मिन्नवगते द्रव्यविशेषापेक्षायां सामानाधिकरण्यात् एकहायनीयद्रव्यविशेषप्रतीतिसिद्धिः । अस्तिच द्वयोरपि द्रव्यगुणयोः परस्पराकाङ्क्षेति परस्परसाहित्यात्तयोर्नियमः ।

यद्यपि केवलगुणवाचित्वपक्षे भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे प्रवृत्त्यसंभवात् नैकहायनीपदसामानाधिकरण्यं संभवति; तथापि मुख्यस्यासंभवेऽपि द्रव्यपरिच्छेदद्वारा गुणस्य करणत्वेनान्वये तस्य गुणिनिष्ठत्वावगमात् गुणगुणिनोरभेदोपचारेण तत्संभवादुभयोरेकक्रियान्वये परस्पराकाङ्क्षया तत्क्रयसाधनैकहायनीरूपद्रव्यपरिच्छेदकत्वं नानुपपन्नम् । अतएव पार्ष्ठिकान्वयसमर्थनानन्तरम् "एवंच वाक्यगतमपि सामानाधिकरण्यं समर्थितं भवती"त्युक्तं वार्तिके । अतएव टावन्ततया द्रव्यपदसामानाधिकरण्यमपि विशेषणतया, नत्वङ्गतया । तत्तु विशेषणविधिकल्पनया क्रयं प्रत्येवेत्येवमेकवाक्यत्वसंभवे न वाक्यभेदमङ्गीकृत्य अध्याहारादिना प्राकरणिकसर्वद्रव्याङ्गत्वकल्पनं युक्तम् । नचैतावता द्रव्योपकारितया द्रव्याङ्गत्वम्; द्रव्यस्यापि परिच्छेद्यतया गुणोपकारकत्वेन वैपरीत्यस्याप्यापत्तेः । अतः श्रुत्यात्र वाक्यबाधेनं क्रयाङ्गत्वमेवेति भावः । एवंच एकहायनीपदसामानाधिकरण्यादेकहायनीद्रव्यपरिच्छेदद्वारनियमे सति न क्रयद्रव्यान्तरेषु तस्य निवेश इत्याह—**अतश्चेति** ॥

**ननु** यन्मते क्रयैकत्वं तन्मते अपूर्वसाधनीभूतद्रव्यप्राप्त्यनुकूलव्यापारसाधनत्वाविशेषात् वासःप्रभृतिष्वपि आरुण्य-

प्राप्त्याशङ्का। तेषां क्रयान्तरद्रव्यत्वात्। भिन्नाहि गुणादत्र क्रयाः। न च विक्रेत्रानतिवशादुत्पत्तिशिष्टद्रव्यावरोधेऽपि द्रव्यान्तरनिवेशसंभवः; एकद्रव्यानतस्यैव विक्रेतुः संपादनीयत्वात्। अन्यथा दक्षिणानामपि प्रसङ्गबाधानापत्तेः। न च दशभिः क्रीणातीति वचनमेव निवेशतात्पर्यग्राहकम्। तस्य क्रयसमुच्चयपरत्वेनाप्युपपत्तौ गुणन्यायसिद्धभेदापवादकत्वायोगात्। न च क्रयभेदेऽपि एकसोमप्राप्त्यर्थत्वाविशेषात् क्रयान्तरद्रव्येऽपि आरुण्यस्य निवेशाशङ्का। आरुण्यविशिष्टविजातीयक्रयविध्यन्यथानुपपत्तिकल्पितस्य विशेषणविधेः पार्ष्ठिकान्वयस्य वाऽनतिप्रसक्तस्यैव कल्पनीयतया विजातीयक्रयजन्यानतिविशेषस्य विजातीयक्रयत्वस्यैव वा विवक्षितत्वेनातिप्रसङ्गशङ्कानुपपत्तेः। यथा चैवं सति त्रिवत्से सर्वक्रयद्रव्यस्थानापन्ने निवेशस्तथा कौस्तुभे द्रष्टव्यम् ॥ ३ ॥ ६ ॥ इति षष्ठमरुणाधिकरणम् ॥

प्राप्त्यापत्तिरित्याशङ्कां निरस्यति—**नचेति** ॥ **भिन्ना हीति** ॥ "अजया क्रीणाती"ति वाक्यविहितक्रयोद्देशेनारुणावाक्ये अनेकगुणविधाने वाक्यभेदापत्तेस्तत्र विशिष्टविध्यङ्गीकारेण क्रयोत्पत्तावावश्यिकायां तत्रैकहायन्यवरुद्धे क्रये अजादिनिवेशायोगात् गुणात् यावद्द्रव्यं भिन्नक्रयः, ननु भट्टसोमेश्वरोक्तरीत्या एकः क्रय इति तत्तद्व्यापारकसाधनतानां नैकहायनीधर्मत्वप्राप्तिरित्यर्थः ॥

उत्पत्तिशिष्टानामपि गुणानामेकविक्रेतानतिवशात्समुच्चयोपपत्तौ विरोधाभावान्न भेदकतेति तदुक्तोपपत्तिमाशङ्क्य निराकरोति—**नचेति। अन्यथेति** ॥ वैकृतदक्षिणाभिः प्राकृतदक्षिणानां प्रसङ्गबाधौ वक्ष्येते। तत्रापि ऋत्विगानतिवशात् समुच्चयोपपत्तौ तदनुपपत्त्यापत्तिरित्यर्थः ॥

नच गुणात्क्रयभेदेऽपि द्रव्याणां धर्मिग्राहकप्रमाणेन स्वस्वभेदकक्रयव्यवस्थया निवेशेऽपि आरुण्यस्याविरुद्धधर्मान्तरबहुप्रयोजकसत्त्वात् द्रव्यान्तरे निवेशोऽनिर्वार्य इत्याशङ्क्य परिहरति—**नच क्रयभेदेऽपीति** ॥ अविरुद्धधर्मान्तराणां तु वाक्यान्तरीयत्वात् अवान्तरप्रकरणेन सर्वक्रयाङ्गत्वमिति शेष इत्यर्थः ॥

**ननु** सर्वक्रयद्रव्यस्थानापन्ने त्रिवत्से एकहायनीरूपद्वाराभावादारुण्यप्राप्त्यनापत्तिः; प्रकृतावेकहायनीद्वारकत्वस्य विवक्षितत्वात्। नहि तत्रैकहायन्युद्देश्या येन तत्स्वरूपमानर्थक्यभिया न विवक्ष्यते। तृतीयया क्रयं प्रति अङ्गत्वेन तस्याः द्वारमात्रत्वात्। नहि द्वारस्वरूपे आनर्थक्यम्; द्वाराभावे उद्देश्यसद्भावमात्रेण धर्मप्राप्तौ कृष्णलेष्ववघातापत्तिरित्यत आह—**यथाचैवमिति** ॥

**अयमर्थः**—द्वारभूताया अप्येकहायन्या नैकहायनीत्वेन द्वारता, अदृष्टार्थतापत्तेः। किन्तु क्रियासाधनद्रव्यत्वेनैव। अतएव पुरोडाशाभावेऽपि यागाङ्गभूतव्रीहीणां चरुप्रकृतित्वसिद्धिः। **किंच** द्वारस्याप्यारुण्यस्य न तत्त्वेनावच्छेदकता, अपितु प्रकृतक्रयसाधनगुणत्वेन। अतएव श्वेतादिगुणान्तरसाध्यक्रयस्थलेप्येकहायनीपरिच्छेदकत्वाविरोधस्तत्र किमु वक्तव्यम् द्वारस्य तत्त्वेन द्वारतेति युक्ता तत्र धर्मप्राप्तिरिति कौस्तुभे द्रष्टव्यमिति। प्रयोजनं स्पष्टत्वान्नोक्तम् ॥

॥ इति षष्ठमरुणाधिकरणम् ॥

( ७ अधिकरणम्। )

**एकत्वयुक्तम्** ॥ ज्योतिष्टोमादिषु ग्रहं संमार्ष्टीत्यादि श्रुतम्। तत्र संमार्गादि प्रति ग्रहत्ववदेकत्वस्यापि उद्देश्यता-

( **एकत्वयुक्तम्** )

एवं तावत् त्रिभिरधिकरणैः क्रमेण क्रियाद्रव्यगुणानां श्रुत्या विनियोगप्रकारे निरूपिते श्रुतिहेतुकसंस्कारचिन्तात्वसाम्यात्तेषामर्थाधिकरणानन्तरं कर्तुं युक्तामप्यग्रिमचिन्ताया विशेषचिन्तात्वेन सामान्यापेक्षत्वात् सामान्यचिन्तानन्तरमेव विशेषचिन्ता युक्तेत्यभिप्रायेणोपेक्ष्य अवसरसत्त्वादधुना करणौचित्यमभिसंधाय अग्रिमचिन्ताविषयवाक्यमुदाहरति—**ज्योतिष्टोमेति** ॥ उभयत्रादिपदाभ्यामग्निहोत्रप्रकरणगतस्याग्रे तृणान्यपचिनोतीत्यस्य तथा दर्शपूर्णमासप्रकरणगतानां "पुरोडाशं पर्यग्निकरोती"त्येवमादीनां यथा संग्रहस्तथा सूत्रे एकत्वग्रहणस्योपलक्षणत्वमङ्गीकृत्य "यस्य पुरोडाशौ क्षयतो यस्य सर्वाणि हवींषि नश्येयुरि"त्यादिद्विवचनबहुवचनान्तपदसमर्पितोद्देश्यघटितवाक्यानामपि संग्रहः सूचितः ॥

**यत्तु वार्तिके**—"प्रयाजशेषेण हवींष्यभिघारयती"त्येतदुदाहृतम्, तच्चतुर्थेऽभिघारणस्य प्रयाजशेषप्रतिपत्त्यर्थताया वक्ष्यमाणत्वात् प्रयाजशेषस्योद्देश्यत्वेन हविषामनुद्देश्यत्वादयुक्तमिव, तथापि मतभेदेन तदुपपादनप्रकारस्तत्रैवोपपादयिष्यते। "ग्रहं संमार्ष्टी"त्यस्मात्पूर्वं दशापवित्रेणेति भाष्ये धृतस्यापि दशापवित्रशब्दस्य वासः कम्बलो वार्थस्तत्र ज्ञेयः ॥

अत्र ग्रहशब्देन कर्मव्युत्पत्त्या सोमरसाभिधानात् ग्रहणकाले बहिर्लग्नविप्रुषां प्रच्छन्नरूपस्तत्संस्कार इति न्यायसुधाकारः। उत्तराधिकरणभाष्यस्वरसादधिकरणव्युत्पत्त्या तदाधारपात्रपरत्वेन तत्संस्कार इति पार्थसारथ्यनुसारिणः प्रकाशकाराः ॥

**उद्देश्यतावच्छेदकत्वेति** ॥ संमार्गविनियोगः सिद्धोऽपि किमेकत्वादिविशिष्टे उत ग्रहमात्रे वेति विशेषतो विनियोगप्रकारो वक्तव्यः। तत्र यद्यपि अपूर्वसाधनत्वेनैव रूपेण विनियोगस्तथापि तल्लक्षणोपयोगिशक्यसंबन्धघटकतामात्रमेवोद्देश्यतावच्छेदकतदनवच्छेदकताद्वारेण चिन्त्यत इत्यर्थः ॥

वेदे वक्त्रभावात् वचनेच्छानिच्छारूपतया प्रमाणीभूतवेदप्रमितस्य त्यागायोगात् चिकीर्षाचिकीर्षारूपतया वा विवक्षाविवक्षयोरसंभवात् प्रतीत्यप्रतीतिरूपतया तदभ्युपगमे श्रुतस्यैकत्वादेः प्रतीतत्वेन त्यागायोगादसंभवं निरसितुं विव-

वच्छेदकता, उत तस्यैव सा, एकत्वं तु कथमपि विध्यन्वयासंभवादविवक्षितमिति चिन्तायाम् । पश्वेकत्ववद् ग्रहैकत्वस्यापि अविवक्षाकरणाभावादुद्देश्यतावच्छेदकता । अतश्चैकस्यैव ग्रहस्य संमार्ग इति प्राप्ते—

यत्र हि समासादौ परस्परान्वयो व्युत्पन्नो यथाऽश्वाभिधानीं यत्किंचिल्लोमलिप्तमित्यादौ, तत्र भवत्येव विशिष्टोद्देशः । यत्र तु स न व्युत्पन्नस्तत्र परस्परान्वयेन विशिष्टोद्देशे अव्युत्पन्नान्वयनिबन्धनवाक्यभेदापत्तेर्न विशिष्टोद्देशः । यथा यस्योभयं हविरार्तिमार्छेद् ग्रहमिति च । द्वयोः सुबन्तयोर्भावनान्वयस्यैव व्युत्पन्नत्वेन परस्परान्वयस्याव्युत्पन्नत्वात् । अन्यथा पञ्चदशान्याज्यानीत्यत्रापि विशिष्टविधानापत्तिः । एकवचनाद्युपात्तसङ्ख्यादेस्तु समानाभिधानश्रुत्या करणत्वकर्मत्वादिरूपे प्रत्ययार्थ एवान्वितस्य पदश्रुत्या प्रातिपदिकार्थान्वयो नैव व्युत्पन्नः । एवं सर्वेभ्यो दर्शपूर्णमासावित्यादौ एकपदाद्यत्रानेकार्थप्रतीत्युत्तरं लक्षणया प्रातिपदिकादेव साहित्यप्रतीतिस्तत्रापि साहित्यस्य प्रत्ययार्थ एवान्वयो न प्रातिपदिकार्थ इति कौस्तुभे स्पष्टम् । अतश्च नैतादृशस्थले विशिष्टोद्देशसंभवः ॥

अथ—विशिष्टोद्देशासंभवेऽपि उभयोरपि प्रातिपदिकवचनार्थयोः प्रत्ययार्थे कर्मत्वादावन्वयेन तद्द्वारा भावनान्वयोपपत्तेः संमार्गस्य पार्ष्ठिकोद्देश्यद्वयसंबन्धे बाधकाभावः । नचोद्देश्यानेकत्वे वाक्यभेदः; भावनायामनेककारकसंबन्धवदनेकोद्देश्यसंबन्धे बाधकाभावात् । नच तस्यामेकोद्देश्यताच्छेदकनियमः; सर्वेभ्यो दर्शपूर्णमासावित्यादौ पुंस्त्वपशुत्वादेरनेकस्यापि तस्य दर्शनात् । विधेस्त्वनेकोद्देश्यकत्वे नैव काचित् क्षतिः । नचैकत्वावच्छिन्नस्य विनियोगाभावादसंस्कार्यता; पशुत्वेन विनियुक्तस्यापि लोहितादेः संस्कार्यत्ववद् बहुत्वावच्छेदेन विनियुक्तस्यापि ग्रहस्यैकत्वावच्छेदेन संस्कार्यत्वोपपत्तेः । नच—एवमपि द्वयोरुद्देश्ययोरेकप्रधानक्रियावशीकाराभावात्कथं परस्परान्वयनियम इति

---

क्षाविवक्षासंभवहेतुमन्वयव्यतिरेकाभ्यां सूचयितुं च **विध्यन्वयासंभवादि**त्युक्तम् । ततश्चानुष्ठानानुष्ठानरूपफलहेतुकविधित्सिताविधित्सितापरपर्यायौ विधिसंस्पर्शासंस्पर्शाविवेह विवक्षिताविवक्षितपदाभ्यां विवक्षितौ कृत्वा विचार इत्यर्थः ॥

तत्र ग्रहप्रातिपदिकस्य ग्रहत्वमर्थो वचनस्य एकत्वं द्वितीयायाः कर्मत्वं च । तत्र कर्मत्वे जातेः साक्षादन्वयायोगात् पूर्वोक्तरीत्या व्यक्तिलक्षणाया आवश्यकत्वेन तस्याः कर्मत्वेनोद्देश्यत्वेऽपि स्वत्वसमाख्यासहकृतपदश्रुत्यैकत्वस्य ग्रहव्यक्त्यावन्वयादेकत्वविशिष्टस्यैव ग्रहादेः कर्मत्वे अन्वयाद्यथा ग्रहत्वानवच्छिन्ने न संमार्गस्तथैकत्वानवच्छिन्नेऽपि न सः । यद्यपि समानाभिधानश्रुत्या एकत्वस्य कर्मत्वान्वयसंभवः; तथापि तत्रायोग्यत्वादनन्वये प्रातिपदिकार्थ एव युक्तोऽन्वयः ॥ नच कारकविशेषणस्य विध्यन्वयासंभवः । एवं यत्रापि यस्योभयमित्यादौ सङ्ख्यावाचकपदान्तरश्रवणम्, तत्रापि क्रियान्वयात्पूर्वं सामानाधिकरण्यादुपपदार्थ एवान्वयात् विशिष्टस्योद्देश्यत्वोपपत्तिरित्यभिप्रेत्य पूर्वपक्षमाह—**पश्वैकत्ववदिति** ॥

विध्यन्वयाभावात् नैकत्वं विवक्षितं विध्यन्वयो हि किमुद्देश्यत्वेन **अथवा** गुणत्वेन । तत्राद्ये विशिष्टोद्देशेनोत स्वतन्त्रोद्देशेन वा । **नतावदाद्यः**; क्रियान्वयात् पूर्वं वैशिष्ट्यस्याव्युत्पन्नत्वादित्यभिप्रेत्य सिद्धान्तमाह—**यत्र हीति । नैव व्युत्पन्न इति** ॥

**ननु** एकवचनाद्युपात्तसङ्ख्यादेः प्रकृत्यर्थान्वयाभावेन विशिष्टत्वाभावात् विशिष्टोद्देशासंभवे यत्र सर्वस्यैवेत्यत्र प्रातिपदिकादेव साहित्यप्रतीतिस्तत्र साहित्यावच्छिन्नस्य एकपदोपादानावगतपरस्परवैशिष्ट्यसंभवादविवक्षानापत्तिः । अतएव द्विवचनादिप्रतीतसाहित्यस्य प्रत्ययार्थेऽन्वयाविवक्षायामपि न दोष इत्यत आह—**एवमिति** ॥ प्रातिपदिकेन स्ववाच्यबोधजननोत्तरं लक्षणया साहित्यप्रतीतेर्युगपत् बोधानुपपत्तेः पश्चात्प्रतीयमानस्य समस्तप्रातिपदिकार्थत्वात् प्रधानान्वयस्याभ्यर्हितत्वाच्च शक्यार्थवत्कारक एव अन्वयव्युत्पत्तेः प्रातिपदिकार्थे वैशिष्ट्यायोगेन विशिष्टोद्देशासंभव इति कौस्तुभे स्पष्टमित्यर्थः ॥

द्वितीयमाशङ्कते—**अथेति । संमार्गस्येति** ॥ ग्रहत्वलक्षितव्यक्तेरिवैकत्वलक्षितव्यक्तेरपि कर्मत्वेन भावनान्वये संमार्गस्यापि पार्ष्ठिकविनियोगविधिद्वयकल्पनेनोद्देश्यद्वयसंबन्धो नानुपपन्न इत्यर्थः । **न काचित्क्षतिरिति** ॥ विधेयानेकत्वेऽपि विधिफलस्याज्ञातज्ञापनस्यैकविषयत्वस्वभावभङ्गापत्तेर्युक्तो विधिवाक्यभेदः, उद्देश्यानेकत्वेतु श्रुतभावनायां तेषामन्वयात् विधेश्चैकविशिष्टभावनाविधायित्वेनानेकविधायित्वाभावात् आर्थिकैश्च विधिभिरेकक्रियोद्देशेन अनेकविशेषणविधिवत् अनेकोद्देशेनैकसंमार्गविषयानेकविधिकल्पनसंभवात् वाक्यभेदाप्रसक्तेः न काचित्क्षतिरित्यर्थः ॥

**संस्कार्यत्वोपपत्तेरिति** ॥ ततश्च नोद्देश्यतावच्छेदकावच्छिन्नत्वरूपेण विनियोगस्य संस्कार्यताप्रयोजकत्वं अपितु तत्समानाधिकरणधर्मावच्छेदादिनापीत्यर्थः ॥

**वशीकाराभावादिति** ॥ क्रियायां हि गुणत्वेनान्वये तदीयाकाङ्क्षया संबन्धाद्यथापेक्षमन्योन्यनियमः सिध्यति । प्रकृतेतु क्रियाया एवोद्देश्यं प्रति गुणत्वादुद्देश्ययोश्च स्वतः प्रधानत्वेन परस्पराकाङ्क्षाभावात् क्रियायाश्च तदनुरोधवृत्तित्वात् कथं परस्परं यो ग्रहत्वावच्छिन्नः स एकत्वावच्छिन्नः पशुत्वावच्छिन्नः एकत्वावच्छिन्नः इत्येवं नियमः सिध्यतीत्यर्थः ।

—वाच्यम्; वैकृताङ्गवद्गुणानुरोधेनापि पदश्रुत्यैव वा प्रधानयोरप्याकाङ्क्षां प्रकल्प्य तदुपपत्तेः। इष्यते च यत्र भिन्नवाक्यस्थले आग्नेयं चतुर्धा करोति, पुरोडाशं चतुर्धा करोतीत्यादौ गुणानुरोधेन प्रधानयोरभेदान्वयस्तत्रैकवाक्यस्थले सुतरां शाब्दबोधे मुख्यविशेष्यभूतक्रियया वशीकारः। एकत्वाविवक्षापेक्षया च वशीकारकल्पनायां न कोऽपि दोषः। अत एकत्वादेरपि स्वातन्त्र्येणोद्देश्यतावच्छेदकत्वोपपत्तिरिति चेत्,

न; भावनायाः करोतिपर्यायत्वेनैककर्मत्वावसायादुद्देश्यानेकत्वे तन्नङ्गनिबन्धनवाक्यभेदापत्तेः। एककर्मकत्वञ्चैकबोधविषयकर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्मवत्त्वम्। अत्र सर्वेभ्यो दर्शपूर्णमासावित्यादौ सत्यपि पुत्रत्वपशुत्वादीनां कर्मत्वपर्याप्त्यधिकरणतावच्छेदकानां धर्माणां भेदे एकेनैव सर्वपदेन युगपद् बोधान्नैककर्मकत्वहानिरित्याद्यं विपर्येत्यन्तम्। पर्याप्तिपदकृत्यं तु कौस्तुभे द्रष्टव्यम्। अतश्च फलद्वये संस्कार्यद्वये फलसंस्कार्यद्वये वा तावद्वाक्यभेदापत्तिः स्पष्टा। निमित्तद्वयस्थलेऽपि यावज्जीवाधिकरणन्यायेन निमित्तद्वयस्य फलद्वयाक्षेपकत्वाद्वाक्यभेदापत्तिर्द्रष्टव्या। यथा च न निमित्तद्वयेनैकस्यैव फलस्य आक्षेपस्तथा कौस्तुभे स्पष्टम्। अत एव निमित्तफलस्थले निमित्तसंस्कार्यस्थले वा एककर्मकत्वभङ्गाभावान्न वाक्यभेदः। न वा कालदेशाद्युद्देश्यानेकत्वे सः। यथा च फलादिसाहित्यस्य नैकबोधविषयता तथा कौस्तुभे स्पष्टम्। अतश्च तत्साहित्यविवक्षायां वाक्यभेदो दुष्परिहर एवेत्याद्यन्यत्र विस्तरः॥

ननु—तथापि नैकत्वादीनामविवक्षा; संमार्गभावनायां गुणत्वेन विवक्षोपपत्तेः। न च—एवमेकत्वांशे द्वितीयया करणत्वलक्षणाद् ग्रहांशे च प्राधान्याभिधानाद्वैरूप्यापत्तिः युगपद्वृत्तिद्वयविरोधापत्तिश्चेति—वाच्यम्; ईप्सितानीप्सितसाधारणकर्मत्वमात्रे द्वितीयायाः शक्तत्वेन प्रमाणान्तराद्विशेषावगमेऽपि ऐकरूप्येणोभयोरप्यन्वयोपपत्तेः। न चैवमपि संमार्गाङ्गभूतस्यैकत्वस्य तदनङ्गभूतग्रहद्वारकत्वासंभवः; अङ्गत्वाद्यभावेऽपि संबन्धितामात्रेणागन्मेति मन्त्रे स्वर्गस्येव ग्रहस्यापि द्वारत्वोपपत्तेः। अतश्च विवक्षितमेकत्वमिति—चेत्,

गुणभूतैकवचनाद्यनुरोधेन प्रत्यये करणत्वलक्षणाङ्गीकारस्य युगपद् वृत्तिद्वयविरोधवैरूप्यादेश्चान्याय्यत्वात्। तद्वरमनुवादके तस्मिन्नेव पाशाधिकरणन्यायेन लक्षणामात्रम्।

---

**गुणानुरोधेनेति** ॥ गुणस्यावृत्त्यापत्त्यनुरोधेनेत्यर्थः। **गुणानुरोधेनेति** ॥ भिन्नविधिविधेयचतुर्धाकरणरूपगुणावृत्त्यनुरोधेनेत्यर्थः॥

**समाधत्ते—भावनाया इति** ॥ 'घटं पटं च करोती'त्यादौ चकारं विना घटपटयोरुभयोः कर्मत्वेन करोत्यर्थेऽन्वयादर्शनात् करोतेरेककर्मत्वनियमेन तत्पर्यायभावनाया अपि तन्नियमात् कर्मद्वये सति भावनाप्रतिपादकप्रत्ययावृत्तेर्वाक्यभेद इत्यर्थः॥

**ननु** किमिदमेककर्मत्वम्? न तावदेककर्मकत्वमेककर्मत्वाश्रयत्वं वा; "सर्वेभ्यो दर्शपूर्णमासौ" "घटानानये"त्यादौ तदनापत्तेः; तत्र पुत्रादिवृत्तिकर्मत्वानां कर्मत्वाश्रयपुत्रादीनां च भेदात्, नाप्येककर्मतावच्छेदकत्वम्; "सर्वेभ्य" इत्यत्रैव पशुत्वपुत्रत्वादीनां भेदेनैककर्मत्वानापत्तेरित्यत आह—**एककर्मत्वं चेति** ॥ **एकबोधविषयेति** धर्मविशेषणम्। **एकेनैवेति** ॥ एकेनैव सर्वपदेन तेन तेन रूपेण तत्तच्छक्तिभिः सर्वेषां फलानां युगपद्बोधादित्यर्थः॥

**पर्याप्तपदकृत्यं त्विति** ॥ "अध्वर्युयजमानौ वाचं यच्छत" इत्यत्र अध्वर्युयजमानत्वयोः कर्मत्वाधिकरणतावच्छेदकयोरेकबोधविषयत्वाभावात् द्विकर्मत्वप्राप्तावपि द्वंद्वोत्तरविभक्त्या देवतात्वादेरिव कर्मत्वादेरपि व्यासज्यवृत्तित्वावसायात् तत्पर्याप्त्यधिकरणतावच्छेदकस्याध्वर्युयजमानोभयत्वस्य द्वन्द्वजन्यैकबोधविषयत्वात् एककर्मत्वोपपत्त्यर्थं पर्याप्तिपदम्॥ नचैवं समासोपात्तसाहित्यविवक्षापत्तेः दैवादन्यतरपदार्थबाधे अन्यतरस्य वा नियमानापत्तिः; साहित्यविशिष्टयोरुद्देश्यत्वेऽप्यपूर्वसाधनत्वलक्षणायां प्रत्येकवृत्त्यपूर्वसाधनत्वस्यैव लक्षणीयत्वेन तदनापत्तेः। नहि तयोः सहितयोरेककार्यजनकत्वमस्ति। अतः प्रत्येकवृत्तितया अवगतेनैव रूपेण लक्षणान्न दोष इति कौस्तुभे द्रष्टव्यमित्यर्थः॥

**यावज्जीवाधिकरणेति** ॥ निमित्तयोर्भेदेनानुष्ठापकतया भेदेन भाव्याक्षेपकत्वात् तदाक्षिप्तभाव्यारूपानेककर्मत्वप्रसङ्गस्य तुल्यत्वमित्यर्थः॥ **ननु** निमित्तद्वयस्थले सहितयोरेव निमित्तत्वाङ्गीकारेण न फलद्वयाक्षेपकत्वमित्यत आह—**यथाचेति** ॥ साहित्यस्यापि पक्षकोटिप्रविष्टत्वेन पूर्ववदेव निमित्तविशेषणत्वानुपपत्तावर्थात् स्वातन्त्र्येण निमित्तत्वापत्तौ भेदेनानेककर्माक्षेपकत्वात् तत्प्रसक्तेर्यस्योभयमित्यादौ उभयार्त्तेर्हैविरार्तेश्च पृथक्निमित्तत्वाश्रयणे स्यादेव वाक्यभेद इति कौस्तुभे स्पष्टमित्यर्थः। अतएव न यत्र फलद्वयाक्षेपकत्वप्रसङ्गस्तत्र भाव्यस्यैकत्वान्निमित्तस्य च निमित्तत्वेनैवान्वयान्न वाक्यभेदः। यत्राप्य"मावास्यायामपराह्ण" इत्यादौ कालद्वयस्योद्देश्यत्वेऽपि कर्मनानात्वानाक्षेपकत्वम् तत्रापि न वाक्यभेद इत्याह—**अतएवेति** ॥ यथाच फलादीत्ययं ग्रन्थो व्याख्यातचरः॥

तृतीयं पक्षमाशङ्कते—**नन्विति। स्वर्गस्येवेति** ॥ मन्त्रेणहि प्रकरणे पाठाद्दर्शपूर्णमासापूर्वे प्रत्युपकर्तव्यम् केनचिद्द्वारेणेति निश्चिते यदेव दर्शपूर्णमासापूर्वे उपयुज्यते तदेव द्वारं भवति। नह्नि फलं तदपूर्वे तज्जनककर्मणि वोपयुक्तम्।

न चेप्सितानीप्सितसाधारणकर्मत्वमात्राभिधानान्नोक्तदोषप्रसङ्गः । तथात्वे निरुक्तैककर्मकत्वभङ्गप्रसङ्गेन वाक्यभेदापत्तेः । अतश्च गुणत्वसिद्ध्यर्थं लक्षणाश्रयणे पूर्वोक्तदोषापत्तेरेकवचनं बहुत्वलक्षणार्थं सत्साधुत्वार्थमनुवादोऽविवक्षितम् । यथाचैवं सत्य"ष्टवर्षं ब्राह्मणमुपनयीते"त्यादौ अष्टवर्षत्वादेर्विवक्षा, तथा कौस्तुभ एवोपपादितम् ॥ ३ ॥ ७ ॥

इति सप्तमं ग्रहैकत्वाधिकरणम् ॥

( ८ अधिकरणम् । )

**संस्काराद्वा** ॥ एकत्ववद् ग्रहत्वस्यापि अविवक्षा; लिङ्गादेव संमार्गस्य सोमावसेकनिर्हरणप्रयोजनत्वावगमेन सोमपात्रमात्रस्य संस्कार्यत्वावगतेः । उभयोरपि ग्रहचमसयोरेकज्योतिष्टोमापूर्वसाधनत्वेन यवेष्विव चमसेष्वपि संमार्गापत्तेश्चेति प्राप्ते—

ग्रहत्वविवक्षायां वाक्यभेदाद्यभावात्सत्यपि ज्योतिष्टोमैक्ये तत्तदभ्यासापूर्वाणां भेदात् पयसा मैत्रावरुणं श्रीणातीतिवद् ग्रहजन्यापूर्वसाधनत्वस्यैव लक्षणोपपत्तेर्न चमसेषु संमार्गः ॥ ३ ॥ ८ ॥ इत्यष्टमं ग्रहत्वविवक्षाधिकरणम् ॥

---

अतस्तदभावेऽपि यथा दर्शपूर्णमाससंबन्धस्तद्वदेकत्वस्य संमार्गभावनायां करणत्वेनान्वयेनाङ्गभूतस्यापि ग्रहस्य संमार्गसंबन्धितामात्रेण द्वारत्वोपपत्तेः तत्संबन्धिग्रहपरिच्छेदकत्वेन तत्स्वीकारादेकत्वेन ग्रहं संमृज्यादित्यन्वयोपपत्तिरित्यर्थः ॥

**तथात्व इति** ॥ द्वितीयया तन्त्रेणाभिधानेऽपि कर्मत्वपर्याप्त्यधिकरणतावच्छेदकस्य धर्मस्यैकत्वग्रहत्वादेरेकबोधविषयत्वाभावेनैककर्मत्वभङ्गापत्त्या वाक्यभेदापत्तेरित्यर्थः । **अनुवाद इति** ॥ जात्यभिप्रायेण प्रत्येकैकत्वमादाय वा प्राप्तत्वेन शक्यार्थोऽनुवादः । पश्वैकत्वादेस्तु करणत्वेऽन्वितस्य तद्द्वारा क्रियासंबन्धेन विध्यन्वये वाक्यभेदादिदोषानापत्तेः युक्ता विवक्षेति वैषम्यमित्यर्थः ॥

**ननु** "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यत्र संस्कार्यविशेषणस्य अष्टवर्षत्वादेरविवक्षापत्तौ अनियतवर्षस्याप्युपनयनापत्तिरिति शङ्कानिरासायाह—**यथाचैवमिति** ॥ यद्यप्यष्टवर्षत्वमुद्देश्यविशेषणम्; तथापि तस्योपयोगापेक्षायां सोऽधीयीतेत्येवं विपरिणतेन "तमध्यापयीते"तिविधिना विनियोगकल्पने तच्छब्देन परामृष्टस्योपादेयत्वेन तद्विवक्षोपपत्तिः । यद्यपि प्रथमतः संस्कारान्वये तदविवक्षायां पश्चात्तनविनियोगविधावपि तच्छब्देनाविवक्षितविशेषणस्यैव परामर्शापत्तिः; तथापि प्राथमिकसंस्कारान्वयेऽप्यष्टवर्षत्वस्य ग्रहैकत्ववत् कथमपि प्राप्त्यभावेनानुवादायोगादर्धमन्तर्वेदीतिवत् लक्षणया विशिष्टोद्देशसंभवेन विवक्षोपपत्तिः । यत्रहि ग्रहमित्यादौ द्वयोरपि प्राप्तिसंभवः । एकवचनस्यैव बहुत्वादिलक्षणायां पाशन्यायादिरूपं नियामकमस्ति, तत्र नोभयत्र लक्षणया विशिष्टोद्देशः, प्रकृतेतु द्वयोरप्यप्राप्तत्वात्तदङ्गीकारे न काचित्क्षतिरिति कौस्तुभे उपपादितमित्यर्थः । एव"मग्नेः तृणान्यपचिनोती"त्यत्र यद्यप्यग्नेः षष्ठ्या तृणद्वाराऽपचये गुणभावः प्रतीयते; तथापि संबन्धसामान्यस्य विशेषतो जिज्ञासायां विशेषणान्तरायोगेनाङ्गाङ्गित्वलक्षणान्वयविशेषनिष्ठत्वावसायात् कोऽत्राङ्गीत्यपेक्षायां चाग्नेः प्रयोजनवत्त्वेनाङ्गित्वावसायात् उपयोक्ष्यमाणसंस्कारस्य गरीयस्त्वात्तस्यापि तृणसंस्पर्शनिमित्तोत्पत्स्यमानोल्मुकवहिःपातपरिहारार्थतया दृष्टार्थतालाभात् स्वस्वामिभावविषयायाश्च षष्ठ्याः स्वामिनि प्रयोगदर्शनेन प्राधान्यार्थत्वावसायात् अग्नेः प्राधान्यावगतेरुद्देश्यत्वात् तद्विशेषणैकत्वाविवक्षोपपत्तिः ततश्चाग्निसंस्कारत्वात् यस्याग्नेरग्रे मे उपयोगः तस्यैवायं तृणविभागरूपापचयः संस्कारविधिरिति न सभ्यावसथ्ययोः तृणापचयः, परिस्तरणं तु "अग्नीन्परिस्तृणाती"त्यविशेषश्रवणात्तयोर्भवत्येव । अस्तुवा तयोरपि सः । यद्यपीयं पञ्चमी भवेत्; तथापि "मध्यात् पूर्वार्धाच्चावद्यती"तिवदग्नेः प्रयोजनवत्त्वाल्लक्षणया प्राधान्यपरेति न दोष इति वार्तिककारः । अस्मिंश्च पक्षेऽपचयस्य दृष्टार्थतालाभाय चितैस्तृणैरेव पुनः पुनः परिस्तरणमुक्तमापस्तम्बसूत्रे ॥

पूज्यपादैस्तु द्वितीयया तृणानां प्राधान्यावगतौ विनियोगभङ्गे प्रमाणाभावात् तृणप्रतिपत्तित्वमेव । अन्यथा तृणगतबहुत्वविवक्षापत्तेः कपिञ्जलाधिकरणन्यायेन त्रयाणामेव तृणानामपचयापत्तेरवशिष्टतृणसंसर्गनिमित्तोत्पत्स्यमानोल्मुकवहिःपातस्यापरिहार्यतयाऽग्नेस्तृणापचयसंस्कार्यत्वानुपपत्तेः । अतो बहुत्वाविवक्षायास्तृणसंस्कार्यत्वं विना दुरुपपादत्वात्परिस्तरणोपयुक्ततृणप्रतिपत्तिकर्मत्वमेवापचयस्य युक्तम् । नच तवाप्येकस्यैवाग्नेस्तृणापचयापत्तिः । पञ्चम्यापादनत्वेन गुणत्वेऽपि प्रतिपाद्यतृणानुरोधेन प्रत्येकैकत्वानुवादावगतेर्विवक्षाऽप्रसङ्गात् । अतस्तृणप्रतिपत्तित्वमेवेत्युक्तं कौस्तुभे ॥

**यत्तु**—अस्मिन्पक्षे पूर्वप्रयोगार्थाग्निपरिस्तरणोपयुक्तानामपि तृणानां प्रयोगान्तरकालीनापचयेन प्रतिपादनात् प्रतिपत्तित्वायोग इति—न्यायसुधाकृतोक्तम्, तद्"पस्थाय तृणान्यपचिनोती"ति आपस्तम्बसूत्रे अभ्युपस्थापनसमापनकर्तृत्वानुरोधेन यजमानकर्तृकोपस्थापनोत्तरकालीनापचयस्य तत्तत्प्रयोगान्त एव प्राप्तेस्तस्य प्रयोगान्तरकालीनत्वोक्तेरयुक्तत्वादयुक्तमित्युपेक्षितं पूज्यपादैः । अतएव प्रतिपत्त्या तृणानामग्रेऽनुपयुक्तत्वादुत्तरप्रयोगेषु अन्यैरन्यैरेव तृणैः परिस्तरणमुक्तं धूर्तस्वाम्यादिभिरित्यलं विस्तरेण । यथाचाधानवाक्येऽग्निसाहित्यविवक्षा तथा कौस्तुभे द्रष्टव्यम् । प्रयोजनं स्पष्टत्वान्नोक्तम् ॥

॥ इति सप्तमं ग्रहैकत्वाधिकरणम् ॥

स्पष्टार्थमेतत् ॥

॥ इत्यष्टमं ग्रहत्वविवक्षाधिकरणम् ॥

(९ अधिकरणम्।)

**आनर्थक्यात्** ॥ "सप्तदशारत्निर्वाजपेयस्य यूप" इत्यत्राव्यवहितत्वात् प्रधानत्वात् प्रकरणानुग्रहाच्च सप्तदशारत्नित्वं वाजपेयोद्देशेन षष्ठीश्रुत्या विधीयते। न यूपोद्देशेन; अतिप्रसङ्गापत्तेः, वाजपेयेन विशेषणे विशिष्टोद्देशाच्च। अतः सप्तदशारत्नित्वं वाजपेयोद्देशेन विधीयमानं तदीयोर्ध्वपात्रद्वारेण निविशते। यूपपदं सादृश्याद्गौणं इति प्राप्ते— यूपपदस्य गौणत्वे प्रमाणाभावाद्यूपपदेन स्वकार्यं लक्षयित्वा तदुद्देशेन सप्तदशारत्निद्रव्यं विधीयते। यद्यपि च द्रव्यं अरत्निपरिमाणं चातिदेशतः संभवत्प्रासिकं, तथापि तदनुवादेन सङ्ख्याविधाने एकप्रसरताभङ्गापत्तेस्ततः पूर्वप्रवृत्त्यङ्गीकारेण विशिष्टं द्रव्यमेव सङ्ख्याविधिफलकं लोहितोष्णीषा इत्यादिवद्विधीयते। यूपकार्यस्वरूपे चानर्थक्यात् प्रकरणात् वाजपेयापूर्वसाधनत्वलक्षणया वाजपेयापूर्वसंब-

अत्र पष्ठ्याः प्राचीनमते मुख्यश्रुतित्वात् स्वमते गौणत्वात् गौणमुख्यसाधारणश्रुतिविनियोगोपयोगिचिन्तनात् पादाध्यायसंगती स्पष्टत्वादप्रदर्श्य वाजपेयप्रकरणगतविषयप्रदर्शनपूर्वकं पूर्वपक्षमेवाह—**सप्तदशेति** ॥ अनन्तरसङ्गतिस्तु पूर्वत्र प्रातिपदिकार्थविवक्षा वचनार्थस्याविवक्षेति चिन्तिते यत्र तर्हि प्रातिपदिकार्थद्वयं तत्र कस्याविवक्षेति जिज्ञासोदये अवसरसत्त्वादन्यतरविवक्षाविवक्षे विचार्येते इत्येवमवसररूपा ॥

**यत्तु अत्र प्रकाशकारैः**—पूर्वत्र ग्रहेषु संमार्गः न चमसेष्वित्युक्ते सप्तदशारत्नित्वं षोडशिपात्रे निविशते यूपे वेति चिन्तायाः प्रासङ्गिकत्वं न्यायसुधाकारोक्तं मुख्यसाक्षात्संगतिसंभवे प्रसङ्गसङ्गत्यभिधानस्यायुक्तत्वात् प्रदूष्य साक्षात्सङ्गत्युपपादनं कृतम्—संस्कारद्रव्यगुणेषु विधिं प्रत्यन्तरङ्गबहिरङ्गभावक्रमेण यथासंयोगं व्यवस्थोक्तौ एकत्वादेररुणाधिकरणोक्तक्रियान्वयतदीयद्रव्यनिवेशापवादद्वारा संस्कारे यथासंयोगं व्यवस्थाव्यवस्थाविशेषचिन्तामधिकरणद्वयेन कृत्वा द्रव्ये विशेषचिन्ताऽसंभवात् गुणे सप्तदशारत्नित्वे आरुण्याधिकरणन्यायेन सामान्यतः सिद्धयोः क्रियाङ्गत्वतदीयद्रव्यनिवेशयोस्तद्विशेषचिन्ता—किं वाजपेयाङ्गं सत् तदङ्गे षोडशिपात्रे निविशते, उत पश्वयागाङ्गं सत् तदङ्गयूप इवेति—**इति**। तदेकहायन्यादिपदवत् बहुव्रीहित्वेन सप्तदशारत्निपदस्य द्रव्यपरत्वादारुण्यवत्क्रियाङ्गत्वायोगेन तत्सामान्यचिन्ताविषयत्वासंभवात् इह विशेषचिन्तात्वासंभवेन साक्षात्सङ्गत्यसंभवादयुक्तमित्युपेक्षितं पूज्यपादैः। यथाचास्य द्रव्यपरत्वं तथा निरूपयिष्यते। अतएव प्रसङ्गसङ्गतिमिव साक्षात्संगतिमपि विहाय कौस्तुभेऽवसरसङ्गतिरेव दर्शिता ॥

तत्र यूपोद्देशेन सप्तदशारत्निविधाने न तावद्बहुव्रीह्युपात्तान्यपदार्थत्वेन यूपस्योद्देश्यत्वसंभवः; एकप्रसरताभङ्गापत्तेः। नापि यूपपदार्थत्वेन; तथात्वेऽन्यपदार्थानन्वयेन समासानुपपत्तेः, अरत्नीनां प्राप्तत्वेन विध्यनुपपत्तेश्च। अरत्न्यनुवादेन सङ्ख्याविधानेऽतिप्रसङ्गनिराकरणाय यूपीयत्वविशेषणे वाक्यभेद एकप्रसरताभङ्गापत्तिश्च। अतः सप्तदशारत्निद्रव्यं स्वामित्वार्थकपष्ठ्या प्रतिपादितप्राधान्यवाजपेयोद्देशेन विधीयते। एवंचाव्यवहितप्रधानान्वयात् षष्ठीश्रुतिः कथंभावानुग्रहादिकं लभते। अन्यथा दीक्षणीयवाङ्नियमन्यायेन पश्वपूर्वार्थत्वस्य यूपमात्रार्थत्वस्य वाऽऽपत्त्या वाजपेयानङ्गत्वात् तद्बाधापत्तिः॥

**किंच** विशिष्टोद्देशे वाक्यभेदापत्तेरेकतराविवक्षायां मुख्यत्वात् वाजपेयपदार्थविवक्षामङ्गीकृत्य यूपाविवक्षैव युक्ता; अन्यथा प्रकरणादेव वाजपेयसंबन्धित्वप्राप्तेः वाजपेयपदानर्थक्यापत्तेः। अतएव सप्तदशारत्नित्वविशिष्टयूपस्यैव विधानं परास्तमित्यभिप्रेत्य पूर्वपक्षमुपपादयति—**अव्यवहितत्वादिति** ॥ द्रव्यविधानेऽपि लोहितोष्णीषादिवद्विधिशक्तेर्विशेषणे संक्रान्त्यभिप्रायेण सप्तदशारत्नित्वमित्युक्तम्। वाजपेये बाधात् कथं तस्याङ्गत्वमित्याशङ्कां निरस्यति—**तदीयेति** ॥ रसाधारभूतस्यापि षोडशिपात्रस्य ग्रहैर्जुहोतीत्यनेन यागान्तर्गतप्रक्षेपाङ्गत्वेन वाजपेयं प्रति साक्षादङ्गत्वात् तद्द्वारा निवेशस्तत्रेत्यर्थः। अन्यग्रहपात्राणां साधारणत्वादसाधारण्येन वाजपेयसंबन्धित्वेन तत्रैव निवेशं सूचयितुं तदीयेत्युक्तम्। **ऊर्ध्वपात्रं** षोडशिग्रह इत्यर्थः। **सादृश्यादिति** ॥ तस्यच पात्रस्य खादिरत्वादूर्ध्वत्वाच्च यूपसादृश्यमादाय यूपपदं गौणम्। **अतएव**—ऊर्ध्वपात्रवाचकपदसामानाधिकरण्याभावेऽपि सप्तदशारत्नियूपसदृशमित्येवं गौणसामानाधिकरण्यमादायोर्ध्वपात्रविषयत्वसिद्धिरित्यर्थः ॥

**यत्तु सोमनाथेन**—यूपे खादिरत्वस्य वैकल्पिकत्वात्तस्य नियतोपस्थित्यभावात् यूपपदेन नियतोपस्थितोर्ध्वत्वसादृश्यमात्रस्यैव ग्रहणेन सर्वोर्ध्वपात्रमात्रे निवेश इत्युक्तम्, तत् पक्षे उपस्थितस्यापि तस्येतरनियमनार्थत्वोपपत्तेरयुक्तम्। अतएव ऐन्द्राग्ने एकादशद्वादशकपालत्वयोर्विकल्पेऽपि द्वादशकपालानां विकृतौ विकल्पितद्वादशकपालैन्द्राग्नविकारत्वमिष्यत एवेत्युपेक्षितं पूज्यपादैः ॥

यद्यपि द्वयोर्मध्ये जघन्यस्याविवक्षा युक्ता; तथापि जघन्यस्यापि यूपपदस्य स्वार्थत्यागापेक्षया मुख्यस्यानुवादत्वमेव युक्तमिति तदनुरोधेनाव्यवहितप्रधानान्वयषष्ठीश्रुतिविनियोगपरित्यागमप्यङ्गीकृत्य यूपोद्देशेनैव तद्विधानम्। तत्र समासार्थान्यपदार्थद्रव्यस्य यूपे विधानासंभवात् यूपपदे यूपकार्यलक्षणया यूपकार्ये सप्तदशारत्निद्रव्यविधाने यद्यपि तत्कार्ये अन्यदेव द्रव्यमापतेत्, तथापि प्रकृतिप्राप्तयूपत्वाविरोधेनापि सप्तदशारत्निद्रव्यनिवेशोपपत्तेः यूपाख्यद्रव्यविधानसिद्धिरित्यभिप्रेत्य सिद्धान्तमाह—**यूपपदस्येति** ॥ परपदसामानाधिकरण्यं विना गौणत्वायोगाद्यूपपदस्य गौणताश्रयणेनोर्ध्वपात्रविषयत्वेऽन्योन्याश्रयापत्तेर्नोर्ध्वपात्रविषयतासिद्धिरित्यर्थः। यस्तु प्रकरणानुग्रहः स ममाप्यविशिष्ट इत्याह—**यूपकार्येति** ॥

न्धियूपलाभात् वाजपेयस्येत्यनुवादः । षष्ठी च परंपरासंबन्धेऽप्युपपन्ना नप्तरि देवदत्तस्यायमितिवत् । व्यवहितत्वादि च गौणत्वापेक्षया न दोषः ॥ ३ ॥ ९ ॥ इति **नवममानर्थक्यतदङ्गाधिकरणम्** ॥

( १० अधिकरणम् । )

**कर्तृगुणे** ॥ दर्शपूर्णमासयोः प्रयाजसमीपे श्रुतम "भिक्रामं जुहोती"ति । तत्राभिक्रमणस्यामूर्तत्वाज्जुहोत्युपात्ते प्रयाजहोमेऽन्वयानुपपत्तेरारुण्यवच्चेह कर्तृरूपस्य द्रव्यस्यानुपात्तत्वात्तद्द्वाराऽप्यन्वयानुपपत्तेस्ततो विच्छिन्नस्य प्राकरणिकसर्वहोमाङ्गत्वं तदीयकर्तुराहवनीयप्रत्यासत्तिरूपदृष्टकार्यद्वारेति प्राप्ते—

अनुपात्तस्यापि आख्यातगम्यस्य सद्भावात्तद्द्वारैव जुहोत्यन्वयोपपत्तेः प्रयाजहोमाङ्गत्वमेवेति भाष्यकारेण सिद्धान्तितम् ॥

तत् णमुलन्तस्य पूर्वकालतादिसंबन्धेन जुहोत्यन्वये नैवाकाङ्क्षाभावात् जुहोतेश्च प्रयाजहोममात्रवाचित्वे प्रमाणाभावादरुणाधिकरणेन गतप्रायत्वाच्च वार्तिककारेणान्यथा व्याख्यातम् ।

सत्यपि वाक्यीयहोमसंबन्धे सङ्कोचे प्रमाणाभावाद्वैद्यां

---

यूपस्य तत्साध्यनियोजनस्य तत्साध्यपश्वपूर्वस्यवा सप्तदशारत्नित्वं विनापि प्रकृतौ सिद्धिदर्शनात् तत्स्वरूपेऽप्यानर्थक्यापत्तेर्दीक्षणीयावाङ्नियमन्यायवाधेन लक्षितलक्षणया अधिकाराख्यप्रकरणसहकृतेन यूपपदेन वाजपेयापूर्वसंवन्धित्वस्यैव लक्षणाद्वाजपेयापूर्वप्रयुक्तत्वसिद्धौ वाजपेयस्येत्यनुवाद इत्यर्थः । **एतेन**—वाजपेयसंवन्धित्वलाभाय वाजपेयपदस्य यूपविशेषणत्वाङ्गीकरणं भवदेवादीनां यच्च विशिष्टोद्देशवाक्यभेदापादनेन तद्दूषणं प्रकाशकाराणां तदुभयमपि—**अपास्तम्**; तद्विशेषणवैयर्थ्यात्, षष्ठीस्थले परस्परान्वयस्य प्राचां मते व्युत्पन्नत्वेन वाक्यभेदानापत्तेश्च । **एतेन**—यूपाङ्गसप्तदशारत्निताया वाजपेये कथंभावाकाङ्क्षालक्षणप्रकरणेनाग्रहणान्न वाजपेयापूर्वप्रयुक्तत्वं, अपितु वाङ्नियमन्यायेन पश्वपूर्वप्रयुक्तत्वमेवेति सोमनाथोक्तं—**अपास्तम्**; कथंभावाकाङ्क्षालक्षणप्रकरणाग्राह्यत्वेऽप्यानर्थक्यापत्तिसहकृतयूपपदश्रुत्यैव तदङ्गत्ववोधनेन वाजपेयापूर्वप्रयुक्तत्वस्यैवापत्तेः ॥ **ननु** वाजपेयाङ्गत्वेन यूपाप्रसिद्धेः कथं वाजपेयसंवन्धित्वप्राप्त्यानुवाद इत्यत आह—**षष्ठी चेति** ॥

अत्रच प्राचां रीत्या यूपमात्रस्योद्देश्यत्वे समासार्थविधानस्य तस्मिन्नसंभवात् कार्यलक्षणायांच लक्षणापत्तेर्नियमेन यूपत्वाविरोधेनैव द्रव्यविधानस्यापि क्लिष्टत्वापत्तेः द्रव्यविशेषानुपादानापत्तेश्च न तदुद्देशेन द्रव्यविधिः, अपितु यूपपदस्य तात्पर्यग्राहकत्वमङ्गीकृत्य सप्तदशारत्निपदेन विशिष्टयूपविधिः वाजपेयोद्देशेन, तस्यचाप्राकृतकार्यकरत्वापत्तेः वाजपेये साधनत्वादिना निवेशायोगात् षष्ठ्याः परंपरासंवन्धेऽप्युपपत्तेः तदीयपश्वङ्गनियोजनद्वारेण निवेशान्न कश्चन दोष इति मम प्रतिभाति । प्रयोजनं स्पष्टत्वान्नोक्तम् ॥

॥ इति नवममानर्थक्यतदङ्गाधिकरणम् ॥

---

आनर्थक्यापत्त्या श्रुतक्रियान्वयायोगेन तदङ्गावतारे स्थिते तद्विशेषचिन्तात्वेनोत्तराधिकरणद्वयस्यानन्तरसङ्गतौ स्पष्टायां यद्यप्यभिक्रमणोपव्यानयोस्तदङ्गावतारे सति संस्कारत्वापत्तेः संमार्गाख्यसंस्कारचिन्तानन्तरमेवेयं चिन्ता कर्तुं युक्ता; तथापि क्रियायाः साक्षात् क्रियान्वयायोगात् गुणवत्क्रियासाधनद्रव्यद्वारा क्रियान्वयेनार्थात् द्रव्यसंस्कारत्वावगमे गुणचिन्तानन्तरमप्यसौ युक्तेति सङ्गतिमभिप्रेत्य विषयप्रदर्शनपूर्वकं पूर्वपक्षमाह—**दर्शेति** ॥

**अन्वयानुपपत्तेरिति** ॥ कारकत्वाभावेनान्वयानुपपत्तेरित्यर्थः । द्रव्यपरिच्छेदद्वारा क्रियाया अपि कारकत्वेनान्वयोपपत्तिं निरस्यति—**आरुण्यवच्चेति** ॥ "अव्ययकृतो भावे भवन्ती"त्यनुशासनेन अव्ययत्वाण्णमुलो भावमात्रवाचित्वावगमेन समानाधिकरणकर्तृरूपद्रव्यानुपादानात् द्रव्यविषयनियमेचोपपत्तिभूतस्य साध्यक्रियासंवन्धस्य णमुलुक्तसमानकर्तृत्वपूर्वकालत्वान्यथानुपपत्तिसाध्यत्वेन कर्तृभूतद्रव्यान्वयात् प्रागनवसतेर्द्रव्यनियमोपपत्तित्वायोगादपरिच्छेदकत्वेनच क्रियाया गुणवत् क्रियासाधनद्रव्योपादानानौपयिकत्वात् अध्वर्य्याख्यस्य च द्रव्यस्य द्वारत्वेनाभिमतस्यानेकक्रियासाधारण्येनैकहायनीवत् व्यवस्थितक्रियाद्वारकत्वायोगाच्च न वाक्यीयक्रियान्वय आरुण्यवदित्यर्थः । **एतेन**—अरुणाधिकरणेन गतार्थत्वमपि—**निरस्तम्** । **ननु** प्राकरणिकसर्वहोमाङ्गत्वेऽपि आरादुपकारकतयैवाङ्गत्वापत्तिरित्यत आह—**तदीयेति** ॥ "आभीक्ष्ण्ये णमुल्चे"ति स्मृतेर्वीप्सार्थस्यावृत्तिरूपस्याभीक्ष्ण्यस्य णमुलोपादानादारादुपकारकत्वेच तन्त्रत्वादावृत्त्यनुपपत्तेः संस्कारस्यतु कार्ययोग्यताधानार्थत्वात् प्रतिकार्यमावृत्त्यनुपपत्तेः कर्तृसंस्कारत्वमेव; सोऽपि च दृष्टरूप एवेत्यर्थः ॥

**अनुपात्तस्यापीति** ॥ णमुलो भावार्थकत्वात् समानकर्तृकयोरित्यनुशासनस्य संमार्गानुशासनमात्रपरत्वेन णमुलस्तदप्रतीतिमभिप्रेत्याख्यातगम्यस्येत्युक्तम् । **अतएव**—पूर्वकालतादिसंवन्धेनेत्यत्रादिपदेन समानकर्तृत्वसंवन्धसंग्रहः ॥

वाक्यीयजुहोत्यन्वयविच्छेदेन भाष्ये कृतस्य पूर्वपक्षस्यातितुच्छत्वेनायुक्ततां दर्शयित्वा वार्तिककारोक्तरीत्या विचारं दर्शयति—**तदिति** ॥ पूर्वपक्षमाह—**सत्यपीति** ॥ यद्यपि णमुलः कारकत्वानभिधायकत्वेन मुख्यश्रुतित्वासंभवात् धातुसंवन्धस्याप्यङ्गत्वरूपस्य संसर्गविधया भानेन षष्ठीवत् गौणश्रुतित्वस्याप्यनुपपत्तेर्द्वारीभूतकर्त्रङ्गत्वस्य लिङ्ग-

हवींपीतिवत्प्राकरणिकसर्वहोमाङ्गत्वम्; वाचनिकाङ्गसन्दंशरूपावान्तराधिकारस्य वाक्यसङ्कोचकत्वानुपपत्तेः। यदि हि तादृशसन्दंशमध्ये अभिक्रामतीत्येव श्रूयेत, ततोऽवान्तरप्रकरणेन स्यादपि प्रयाजाङ्गत्वम्। वस्तुतस्तु नाङ्गेष्वितिकर्तव्यताऽऽकाङ्क्षालक्षणं प्रकरणं, फलाभावात्, अन्यथा प्रयाजाभिक्रमणादीनामप्यनुयाजाद्यङ्गत्वापत्तेः। वाचनिकाङ्गसंबन्धसिद्ध्यर्थञ्च कल्पितायाः आकाङ्क्षायास्तन्मात्रग्राहकत्वेनाभिक्रमणग्राहकत्वानुपपत्तेरिति प्राप्ते—

भावनास्वाभाव्येनाङ्गभवनास्वपि क्रतूपकारभाव्यकास्वितिकर्तव्यताकाङ्क्षोपपत्तेरङ्गानामप्यस्त्येव सा। सा परं प्रधानगतफलवत्त्वेन प्रतिबध्यते सन्निध्याम्नातविषये। अतो न परस्पराङ्गत्वप्रसङ्गः। तदा तन्निवृत्तिरतिदेशेनाक्षेपलभ्यस्वसंपादनेन साधारणैर्वा आचमनादिभिः॥

यत्र तु वाचनिकाङ्गसन्दंशस्तत्राऽऽद्येनाङ्गाकाङ्क्षोज्जीवनं अन्तिमेन च तन्नाशः, न तु मण्यादाविव वाचनिकाङ्गानां प्रत्येकमुत्तेजकता; तावदभावकूटप्रवेशे गौरवात्, तद्वदिह व्यभिचाराभावाच्च। अतो वाचनिकसन्दंशे श्रुतानामवान्तरप्रकरणेन बलवताऽङ्गाङ्गत्वमेव। प्रकृते तु होमानुवादेन विहितेऽभिक्रमणे होमस्वरूपे आनर्थक्यप्रसक्तौ अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकतया वाचनिकाङ्गसन्दंशरूपावान्तराधिकार एव तत्त्वेनाश्रीयते, न तु प्रधानाधिकारोऽङ्गप्रधानाधिकारो वा वेद्यामिव। अस्ति चात्र "समानयते जुह्वामौपभृतमि"त्याद्युपक्रम्य मध्येऽभिक्रमणं विधाय "प्रयाजशेषेण हवींष्यभिघारयति" इति श्रवणात् सः। अतोऽभिक्रमणं प्रयाजहोमाङ्गमेव। न च प्रयाजेषु होमाभावः; प्रक्षेपाङ्गकस्यैव त्यागस्य वृद्धव्यवहारेण यजिपदार्थत्वावसायादाक्षेपेण श्रूय-

---

म्यत्वान्न श्रुतिविनियोगोपयोगिविचारत्वेन पादार्थतयाऽयं विचारः सङ्गतस्तथापि णमुलभावे वाक्येनाङ्गत्वायोगात् णमुल्श्रुत्युन्नेयत्वेन श्रौतत्वोपचारात्सङ्गतिः सत्यपीत्यपिशब्देन सूचिता। अनन्तरा तु साक्षात्प्रधानाङ्गे होमाङ्गत्वश्रवणेन बाधिते तद्विशेषचिन्तात्वादवसररूपा स्पष्टैव। तत्र होमाङ्गत्वे प्रमितेऽपि तत्स्वरूपे आनर्थक्यप्रसक्तौ प्रधानाधिकाराख्यप्रकरणेन कर्तृसंस्कारद्वारा प्रधानापूर्वसंबन्धिहोमत्वस्योद्देश्यतावच्छेदकत्वावगतेः कर्तुश्चाङ्गप्रधानसाधारणस्य द्वारत्वेन प्रधानसंबन्धित्वस्यापि साक्षात्परम्परासाधारण्येनैव विवक्षितत्वात्प्रकृतसर्वहोमाङ्गत्वम्, **अथवा**—वाक्यसंकोचे प्रमाणाभावात् अङ्गाधिकारस्यापि प्रधानाधिकारवत् अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वात् प्रकृतसर्वहोमार्थत्वमित्यभिप्रेत्य पूर्वपक्षमाह—**संकोच इति। यदि हीति॥** यद्यभिक्रामतीत्येव श्रूयते, तदा वाक्यव्यापाराभावात् तेन प्रयाजमात्राङ्गमेव स्यादित्यर्थः। यदि प्रधानेतिकर्तव्यताकाङ्क्षया प्रयाजानामङ्गत्वेन ग्रहणे तेन क्रतूपकारभाव्यकत्वावगतेस्तेषामितिकर्तव्यताकाङ्क्षा कल्प्येत, तदा प्रथमप्रवृत्तया प्रधानाकाङ्क्षया प्रयाजानामिवाभिक्रमणस्यापि प्रधानमात्राङ्गत्वापत्तिः। एवं सत्यपि तदाकाङ्क्षया गृह्येत, तदा बाधकमाह—**अन्यथेति॥ ननु** भावनास्वाभाव्येन उत्पद्यमानप्रयाजादीनामङ्गाकाङ्क्षा उपजीव्येन प्रथमप्रवृत्तेन प्रधानकथंभावेन प्रतिबद्धेति न तया परस्पराङ्गत्वम्। आवश्यकश्रुत्यादित्रयविनियुक्तेनाङ्गेनच प्रतिबन्धकनिरोधे सत्युज्जीवितया तयाऽभिक्रमणस्यापि तत्संदंशपतितस्य ग्रहणोपपत्तिरित्यत आह—**वाचनिकेति॥** वाचनिकाङ्गसंबन्धसिध्यर्थं कल्प्यस्य प्रतिबन्धकनिरोधस्य धर्मिग्राहकप्रमाणेन प्रत्येकमेव कल्पयितुमुचितत्वात् अभिक्रमणस्य तन्निरोधकल्पने प्रमाणाभावेनानुज्जीवितया प्रयाजाकाङ्क्षया ग्रहणानुपपत्तिरित्यर्थः॥

**अतिदेशेनेति॥** दीक्षणीयावैमृधादिष्वित्यर्थः॥ **स्वसंपादनेनेति॥** यागस्वरूपसंपादकद्रव्यदेवतादिनेत्यर्थः॥ **तद्वदिहेति॥** लोके उत्तेजकेन उत्तेजनाकरणेऽपि वह्निमात्रेण दाहदर्शनात् प्रथमतृतीयक्षणयोः उत्तेजकसत्त्वे द्वितीयक्षणे मणिमात्रेण प्रतिबन्धदर्शनाच्च व्यभिचारेणोत्तेजकस्य न उत्तेजनं कार्यम्, अपितु उत्तेजकविरहविशिष्टमणेः प्रतिबन्धकत्वम्। तदभावश्चाग्नेः सहकारीति कल्प्यते, प्रकृते त्वाद्याकाङ्क्षाया अभावे प्रधानगतफलवत्त्वप्रतिबद्धप्रयाजाकाङ्क्षया वाचनिकाद्याङ्गग्रहणदर्शनात् व्यभिचाराभावात् प्रतिबद्धाकाङ्क्षोत्तेजनमेवोज्जीवनापरपर्यायं कार्यं कल्प्यते, नतु तस्य तस्य उत्तेजकता प्रकल्प्यते। तत्तदुत्तेजककूटाभावकूटस्य प्रतिबन्धकतावच्छेदके प्रवेशे गौरवापत्तेः, अपितु आद्योत्तेजकस्य उत्तेजनजनकत्वमन्तिमेन च तदुत्तेजननाशस्तद्विरहविशिष्टस्यैव महाप्रकरणस्य प्रतिबन्धकत्वम्। तदभावस्य सहकारिकारणत्वमिति कल्पनान्मध्यतनाङ्गाकाङ्क्षाणां प्रत्येकमुत्तेजकत्वकल्पने प्रमाणाभावात् उत्तेजिताकाङ्क्षालक्षणावान्तरप्रकरणपतितस्याभिक्रमणस्यापि तदङ्गत्वम्। **अतएव**—उत्तेजिताङ्गाधिकारस्यैवापूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वादप्रतिबद्धपरोत्पत्त्या पूर्वप्रवृत्तप्रधानाधिकारबाधेन तस्य तल्लक्षणातात्पर्यग्राहकत्वासंभवात् दीक्षणीयावाङ्नियमन्यायेन प्रयाजार्थत्वसिद्धिरित्यर्थः। **अस्तिचात्रेति॥** इडाख्यतृतीयप्रयाजानन्तरं बर्हिराख्यचतुर्थप्रयाजं प्रति उपभृतः सकाशात् जुह्वामौपभृदाज्यस्य प्रयाजानूयाजार्थत्वात् तत्रच प्रयाजार्थस्यैव समानेयत्वात् प्रयाजाङ्गकीर्तनसिद्धिरित्यविरोधः॥ **ननु** प्रयाजेषु प्रत्यक्षतो जुहोतेरश्रवणात् "चतुर्गृहीतं जुहोती"त्यनारभ्यवाक्येन होमे चतुर्गृहीतस्य साधनत्वेन विधानाद्धोमत्वाभावात् कथं तदनुवादेन विधीयमानाभिक्रमणस्य तदङ्गत्वम्? अतएव "चतुरवत्तं जुहोती"त्यनेन प्रधानेषु चतुरवत्तसंस्कारकतया होमविधानात्तदङ्गत्वमेव युक्तमित्याशङ्क्य परिहरति—**नचेति। प्रक्षेपाङ्गकेति॥** विस्तरेण चैतदग्रे तृतीये प्रतिपादयिष्यते॥

माणयजिमात्रे होमप्राप्त्युपपत्तेः ॥ ३ ॥ १० ॥ इति दशमं संदंशाधिकरणम् ॥

( ११ अधिकरणम् । )

**सन्दिग्धे तु** ॥ दर्शपूर्णमासयोः "पञ्चदश सामिधेनीरनुब्रूया" दित्यनेन सामिधेनीर्विधाय तासां वाचनिका गुणा विहिताः। ततो निविदो नाम मन्त्रा "देवइद्ध" इत्यादयः। तत "एकविंशतिरनुब्रूयात् प्रतिष्ठाकामस्ये"त्यादयः काम्याः सामिधेनीकल्पाः। ततः "उपवीतं उपव्ययते देवलक्ष्ममेव तत्कुरुत" इति। ततः पुनः सामिधेनीगुणा "अन्तरानूच्यं सदेवत्वाये"त्यादयः।

तत्रोपवीतं सामिधेन्यङ्गम्; तदवान्तरप्रकरणात्। न च तदवान्तरप्रकरणस्य काम्यकल्पैर्निविन्मन्त्रैर्वा विच्छेदः, गोदोहनादीनां दर्शपूर्णमासप्रकरणाविच्छेदकत्ववत् काम्यानामपि तद्विच्छेदकत्वानुपपत्तेः, पूषानुमन्त्रणमन्त्रवन्निविन्मन्त्रस्यापि तदनुपपत्तेश्च। **वस्तुतस्तु**—लिङ्गादग्निसमिद्धत्वरूपसामिधेनीफलप्रकाशकानामपि अवान्तरप्रकरणात् सामिधेन्यङ्गत्वोपपत्तेर्न विच्छेदशङ्का। इष्यत एव अगन्मेति मन्त्रस्य यागजन्यफलप्रकाशकत्वेन यागाङ्गत्वमिति प्राप्ते—

निविद्भिर्व्यवधानान्नोपवीतस्य सामिधेन्यङ्गता। नच पूषानुमन्त्रणमन्त्रन्यायः; यत्र ह्युत्तरकालं बहूनि वाचनिकान्यङ्गानि तत्रैवैकस्य पूषानुमन्त्रणमन्त्रादेः परप्रकरणस्थत्वकल्पना। यत्र तु विच्छेदकानि बहूनि उत्तरकलञ्च वाचनि-

---

प्रयोजनं प्रतिहोमं कर्तृसंस्कारकत्वादभिक्रमणानुष्ठानमप्रयाजविकृतिष्वपि अतिदेशश्च पूर्वपक्षे। सिद्धान्तेतु प्रयाजार्थमेव तदनतिदेशश्चेति स्पष्टत्वान्नोक्तम् ॥

**॥ इति दशमं अभिक्रमणप्रयाजाङ्गताधिकरणम् ॥**

---

**( सन्दशन्यायः )**

अत्र सामिधेन्यङ्गत्वपूर्वपक्षदर्शपूर्णमासाङ्गत्वसिद्धान्तोपपत्तिमूलावान्तरप्रकरणसद्भावतद्विच्छेदोपपादकतया विचारानुपयुक्तमपि विषयवाक्येन सहोदाहरति—**दर्शपूर्णमासयोरिति** ॥ सिद्धान्तकोटिहेतुतया दर्शपूर्णमासयोरित्युक्तम्। **वाचनिका गुणा इति** ॥ त्रिः प्रथमामन्वाह त्रिरुत्तमामित्यादय इत्यर्थः ॥ **अन्तराऽनूच्यमिति** ॥ "यत् क्रौञ्चमन्वाहासुरं तद्यन्मन्द्रं मानुषं तद्यदन्तरा तत्सदेवमि"ति पूर्वं निन्दितक्रौञ्चमन्द्रयोः य अन्तरा मध्यवर्ती मध्यमः स्वरस्तेनानूच्यमित्यर्थः। ततश्च "विश्वरूपो वै त्वाष्ट्र इति प्रपाठके सप्तमाष्टमानुवाकयोः सामिधेनीब्राह्मणमाम्नातम्, नवमे देव इद्धो मन्विद्ध ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्मसंशितः" इत्यादिनिविन्मन्त्राणाम्, दशमे काम्यानां सामिधेनीकल्पानाम्, एकादशे उपवीततदन्तरालगुणविधीनां च ब्राह्मणमाम्नातमित्यवान्तरप्रकरणतद्विच्छेदसंशयाद्विचार इत्यर्थः। सौत्रसंदिग्धपदव्याख्यार्थमवश्यमुपन्यसनीयमप्यवान्तरप्रकरणसद्भावविच्छेदसंशयं तथा कर्तृसंस्कारसामान्याद्बुद्धिस्थस्योपवीतस्य भाष्यकारमते सन्निहितान्वयापवादाय वार्तिकमते अवान्तरप्रकरणापवादादापवादिकीमनन्तरसङ्गतिं च स्पष्टत्वादनुल्लिख्य अतएव श्रौतविनियोगोपयोगिविचाराभावेन पादसंगत्यभावेऽप्याक्षतिं चाभिसंधाय पूर्वपक्षमाह—**तत्रोपवीतमिति** ॥

अत्रोपवीतं नाम ब्रह्मसूत्रं नवतन्तुकं यज्ञोपवीतापरपर्यायं प्राह्यम्, अथवा वासोविन्यासो वेति संदेहे निर्णयस्तृतीये करिष्यते। **तदवान्तरप्रकरणादिति** ॥

**नच**—अदृष्टार्थस्य प्रोक्षणादिसंस्कारस्य अवान्तरप्रकरणसद्भावेऽपि सामिधेनीनामग्निसमिन्धनरूपदृष्टकार्यार्थत्वात् दृष्टरूपेतिकर्तव्यतयैव तदाकाङ्क्षानिवृत्त्युपपत्तेरितिकर्तव्यताया अनपेक्षणात् सत्यपि वाचनिकानां वचनादेवाङ्गत्वे अवान्तरप्रकरणस्यैवाभावे कथं तेन तदङ्गत्वं—**इति—वाच्यम्**; अग्निसमिन्धनस्यापि अपूर्वसाधनत्वोपहितत्वेन भाव्यत्वात् सामिधेनीनां नियमादृष्टजनकत्वाच्च वैधेतिकर्तव्यताकाङ्क्षोपपत्तेरवान्तरप्रकरणोपपत्तिरित्यर्थः ॥

**निविन्मन्त्रैर्वेति** ॥ निविन्मन्त्राणां महाप्रकरणसहकृतलिङ्गेन सामिधेनीवदेवाग्निसमिन्धनप्रकाशकत्वेनाग्निसमिन्धनार्थसामिधेन्यङ्गत्वायोगात् अनुपजीव्यन्यायेन व्यवधानात्सामिधेनीप्रकरणविच्छेदोपपत्तिरित्यर्थः । **गोदोहनादीनामिति** ॥ दर्शपूर्णमासाङ्गप्रणयनाश्रयत्वेन प्रकरणानुवृत्तेः सत्त्वेन प्रकरणाविच्छेदकत्ववत् इहापि अविच्छेदकत्वोपपत्तिरित्यर्थः ॥ निविन्मन्त्रैः विच्छेदं प्रकारान्तरेणापि परिहरति—**वस्तुतस्त्विति** ॥

सामिधेनीवन्निविदामप्यग्निसंमिन्धनप्रकाशनार्थत्वेऽपि सामिधेनीनामग्निसमिन्धनार्थे काष्ठप्रक्षेपप्रकाशनार्थत्वात् निविदामिद्ध इति भूतानिष्ठयेध्मप्रक्षेपफलाग्निसमिन्धननिष्पत्तिप्रकाशनार्थत्वादगन्म इति मन्त्रस्य दर्शपूर्णमासफलनिष्पत्तिप्रकाशनार्थस्य दर्शपूर्णमासाङ्गत्ववत् सामिधेनीप्रकाश्येध्मप्रक्षेपफलनिष्पत्तिप्रकाशनादनुपजीव्याङ्गत्वाभावेन विच्छेदकत्वानुपपत्तिरित्यर्थः ॥

दर्शपूर्णमासादिफलस्य अदृष्टद्वारसाध्यत्वेन श्रद्धापेक्षत्वात् श्रद्धाजननात् फलनिष्पत्तिप्रकाशनस्याङ्गत्वसंभवेऽपीह इध्मप्रक्षेपफलस्याग्नेः समिद्धत्वस्य दृष्टद्वारा साध्यत्वेन श्रद्धानपेक्षत्वात् फलनिष्पत्तिप्रकाशनस्य अङ्गत्वायोगेन निवित्प्रकाश्यफलसाधनेध्मप्रक्षेपप्रकाशनार्थत्वेन सामिधेनीनामेव तदङ्गत्वस्य निवारयितुमशक्यत्वात् विनिगमनाविरहेण च तैर्विच्छेद इति **वस्तुतस्तु** इत्याद्युक्तप्रकारान्तरदूषणं स्पष्टत्वादु-

काङ्गं स्वल्पं, तत्र वाचनिकाङ्गस्यैवानारभ्याधीतन्यायेनाङ्गत्वोपपत्तेर्न प्रकरणानुवृत्तिकल्पना; अन्यथा विश्वजिदादेरपि दर्शाङ्गत्वापत्तेः। प्रकृते च निविन्मन्त्राणां बहुत्वाद्वाचनिकोत्तराङ्गानां स्वल्पत्वेन न प्रकरणानुवृत्तिकल्पना।

**वस्तुतस्तु**—नान्तरानूच्यमित्यादीनां सामिधेनीमात्रोद्देशेन विधानं प्रमाणाभावादपि त्वनुवचनसामान्योद्देशेन। अतश्च सामिधेनीनां विशिष्योपस्थित्यभावान्न प्रकरणानुवृत्तिः। यत्त्वन्ते "देवा वै सामिधेनीरनूच्ये"त्यादिसंकीर्तनम्, तदाधारार्थवादत्वादसाधकम्। अत एवान्ते वाचनिकाङ्गाभावादेव न निविदां सामिधेन्यङ्गत्वशङ्का। संनिधिमात्रेण तदङ्गत्वशङ्का तु परस्पराङ्गत्वानुपपत्तेः प्रकरणेन बाधाच्चायुक्ता। नचैवं आश्रयाभावात्काम्येषु गुणफलसंबन्धानुपपत्तिः; तत्रानुवचनान्तरस्यैव फलोद्देशेन विहितत्वात्, तस्य च सङ्ख्यायुक्तानुवचनसामान्यात्पञ्चदशसङ्ख्याकनित्यानुवचनप्रकृतिकत्वावगतेस्तदीयधर्माणां त्रिरभ्यासादीनां तदीयर्चां च प्राप्तेर्नाधर्मकत्वम्। नचर्चामनुवचनं प्रति प्राधान्यात्कथमतिदेशः; प्रकृतौ त्रिरभ्यासयुक्तपाठादेव तावत्सङ्ख्याकर्चामर्थाच्चानुवचनस्य च प्राप्त्युपपत्तेः "पञ्चदश सामिधेनीरनुब्रूयादि"ति वचनवैयर्थ्यापत्तेरगत्या सक्तुन्यायेन विनियोगभङ्गं प्रकल्प्य मन्त्रविशिष्टानुवचनस्यैव विधेयत्वेन तदङ्गभूतानामृचां प्राप्त्युपपत्तेः। गुणत्वमपि चर्चां नानुवचनफलप्रकाशकतयैव, अपित्वनुवचनजनकतया; लाघवात्। अतश्च न द्वारलोपाद्बाध ऊहो वा। अनुशब्देन दर्शपूर्णमासाङ्गभूतपदार्थानन्तर्यस्योक्तत्वात्तस्य च परप्रयुक्त-

---

पेक्ष्य पूषानुमन्त्रणमन्त्रवदविच्छेदकत्वमुक्तं परिहरन् सिद्धान्तमाह—**निविद्भिरिति। अन्यथेति॥**

विश्वजिदादिविध्युत्तरं वाचनिकदर्शाङ्गसत्त्वेन दर्शपूर्णमासप्रकरणानुवृत्तिकल्पनया दर्शाङ्गत्वापत्तेरित्यर्थः। **प्रकरणानुवृत्तिकल्पनेति॥** अतश्चोत्तराङ्गाणां प्रकरणेन तदङ्गत्वायोगेन अनारभ्याधीतानां प्रकृतौ निवेश इति न्यायेन प्रकृतसामिधेन्यङ्गत्वोपपत्तिरित्यर्थः। अतश्चोपवीतस्य सन्दंशपतितत्वमभ्युपेत्योक्तम्॥

**वस्तुतस्तु**—सन्दंश एव नास्तीत्याह—**वस्तुतस्त्विति॥ विशिष्योपस्थित्यभावादिति॥** ततश्चाविच्छेदे सति प्रकरणानुवृत्तेरनूच्यमिति सामान्यशब्दो विशेषपरः स्यात् विशेषपरत्वेच संदंशात्प्रकरणानुवृत्तिरित्यन्योन्याश्रयापत्तेर्न विशेषपरत्वेन सामिधेन्युपस्थितिरित्यर्थः। **आधारार्थवादत्वादिति॥** सामिधेन्यनुवादस्य तद्गुणविध्यर्थत्वाभावात्स्तुत्यर्थमुपादानान्न तदाकाङ्क्षानुवृत्तिकल्पनासंभव इत्यर्थः॥

**ननु**—इन्द्रियकामाधिकरणन्यायेन एकविंशत्यादिगुणानां फलान्वयावश्यंभावेन तत्रच वाक्येन आश्रयसमर्पणे वाक्यभेदापत्तेः प्रकरणेनैवाश्रयसमर्पणं कर्तव्यमिति काम्यकल्पैः प्रकरणस्योज्जीवनात् सामिधेन्यङ्गत्वं दुर्वारम्, प्रकरणोज्जीवनाभावेच कथं गुणफलसंबन्धसिद्धिरित्यभिप्रेत्याशङ्कते—**नचैवमिति॥** अतएव आश्रयालाभान्न गुणफलसंबन्धः, किंतु अनिविशमानैकविंशत्यादिगुणात् भिन्नस्यानुवचनस्यैव विधिरिति न तदनुरोधेन प्रकरणोज्जीवनमिति परिहरति—**तत्रेति। सङ्ख्यायुक्तेति॥** अनुवाक्यासाधारणसादृश्यव्यावृत्तये सङ्ख्यायुक्तेत्युक्तम्॥ **ननु** "पञ्चदश सामिधेनी"रिति प्रकृतिवाक्ये प्रकरणावगताङ्गभावनां सामिधेनीनामृचां द्वितीयया संस्कार्यत्वात् फलस्य चाष्टमे अतिदेशनिराकरणात् कथमतिदेशः? नच सामिधेनीनामुद्देश्यत्वे तद्विशेषणपञ्चदशत्वाविवक्षाप्रसङ्गः; तस्य त्रिरभ्यासविधानसहितपाठादेव प्राप्तत्वेनेष्टापत्तेः इत्याशयेनाशङ्कते—**नचर्चामिति। त्रिरभ्यासयुक्तेति॥** त्रिः प्रथमामन्वाहेति त्रिरभ्यासविधानसहितैकादशर्चां पाठादेवेत्यर्थः। **अर्थाच्चेति॥** अनुवचनं ह्युच्चारणरूपम्। तच्चार्थप्रकाशनस्य उच्चारणक्रियावच्छेदेनैव संभवादर्थतः प्राप्तमित्यर्थः। **विधेयत्वेनेति॥** सामर्थ्यपरिकल्पिताग्निसमिन्धनार्थतया विधेयत्वेनेत्यर्थः॥

**यत्तु अत्र प्रकाशकारैः**—सामिधेनीगतलिङ्गाविरोधायानुवचनफलीभूताग्निसमिन्धनप्रकाशकतया सामिधेनीनामनुवचनं प्रति गुणत्वं प्रतिपादितम्, तत्प्रतिष्ठादिफलार्थानुवचने द्वारलोपात्सामिधेनीनां प्राप्त्यभावापत्तेः कथंचिद्वा प्राप्तौ प्रतिष्ठादिपदोहापत्तेः काम्येन नित्यस्य प्रसङ्गसिध्यनापत्तेश्चायुक्तमिति सूचयितुमन्यथा गुणत्वमुपपादयति—**गुणत्वमपिचेति॥**

**ननु**—अनुवचनान्तराणां दर्शपूर्णमासागृहीतानां बहिःक्रतु प्रयोगापत्तिः इत्यत आह—**अनुशब्देन चेति॥** अत्र चाग्नये समिध्यमानायानुब्रूहीति प्रैषानन्तर्यमेव अनुब्रूयादित्युपसर्गस्यानोरर्थमङ्गीकृत्य प्रैषस्यच क्रत्वर्थाग्निसमिन्धनार्थत्वेन बहिःक्रतु प्रयोगप्राप्तेः अनुवचनत्वव्याघातापत्तेर्न बहिः क्रत्वनुष्ठानमिति न्यायसुधाकारः। प्रैषानन्तरं नमः प्रवक्त्र इति निगदपाठात्तदनन्तरं सामिधेनीनां पाठान्निगदानन्तर्यमनोरर्थमङ्गीकृत्य तस्यापि परप्रयुक्ताग्निसमिन्धनार्थस्य बहिः क्रत्वप्राप्तेरनुवचनत्वबाधापत्त्या न बहिः प्रयोग इति पार्थसारथिः। एवंचान्यतरनिष्कर्षं विनापि सर्वथा बहिःक्रत्वनुष्ठानफलसिद्धेस्तमकृत्वैव मतभेदं सूचयितुं सामान्यतः पूर्वपदार्थानन्तर्यस्योक्तत्वादित्युक्तम्॥

**वस्तुतस्तु**—प्रैषानन्तर्यस्य प्रैषार्थे सामर्थ्यादेव प्राप्तेरनुवचनविधिवैयर्थ्यापत्तेः भिन्नकर्तृकयोः क्रिययोः क्रमानपेक्षणेनानपेक्षितविधित्वापत्तेश्चापेक्षितविधित्वलाभाय प्रैषानन्त-

त्वेन बहिःक्रतु प्रयोगेऽनुष्ठातुमशक्तेः क्रतुमध्यप्रयोगसिद्धिः । वैकृतानुवचनेनैव च प्रसङ्गात्प्राकृतानुवचनकार्यसिद्धेर्न तस्य पृथगनुष्ठानम् । अतस्तेष्वपि न सामिधेनीप्रकरणानुवृत्तिः । नच तर्हि तदङ्गत्वमेवोपवीतस्य किं न स्यात्? तेषां विकृतित्वेन प्राकृताङ्गैर्निराकाङ्क्षाणां प्रकरणाभावात्, वाचनिकाङ्गसन्दंशाभावाच्च । अतो महाप्रकरणाद्दर्शपूर्णमासाङ्गमुपवीतं तत्कर्तृसंस्कारकतया तत्कर्तृभिः सर्वप्रयोगारम्भे कार्यमिति सिद्धम् ॥ ११ ॥ **इत्येकादशं उपवीतसामिधेन्यनङ्गताधिकरणम् ॥**

( १२ अधिकरणम् । )

**गुणानाम् ॥** आधाने पवमानेष्टितः प्रदेशान्तरे "वारणो यज्ञावचरो वैकङ्कतो यज्ञावचर" इति श्रुतम् । तत्र

र्येण बाधितं हौत्रनिगदानन्तर्यमेव प्रतिप्रसवविधया विधातुं युक्तम् । निगदानां च सामिधेनीवत् स्वातन्त्र्येणाग्निसमिन्धनार्थत्वेन सामिधेन्यङ्गत्वेन प्राप्तेरभावात्तदनुरोधेनान्तः प्रयोग इति ज्ञेयम् ॥

**ननु**—यद्यपि नमः प्रवक्त्र इत्यादिनिगदानन्तर्यमनुवचनस्य; तथापि तस्य "पञ्चजना मम हौत्रं जुषध्वं तदद्य वाचः प्रथमं मशीये"त्यादिवाक्यपर्यालोचनया करिष्यमाणसर्वकर्मार्थत्वेन सामिधेनीमात्रार्थत्वेनवा प्रवक्त्रादिप्रार्थनापरत्वावसायात् सामिधेन्यङ्गत्वस्यापि सत्त्वेन बहिःक्रतु प्रयोज्यत्वोपपत्तेः तदानन्तर्यं संभवत्येव । यदापि प्रैषार्थानन्तर्यं तदापि स्वफलार्थमनुज्ञाज्ञापनरूपस्याङ्गस्य विकृतावूहेन प्रयोगोपपत्तेः बहिःप्रयोगेप्याक्षेपेण तदानन्तर्यसंभवात् बहिःक्रतु प्रयोगो दुर्निवार इति—**चेत्, न;** अनुशब्देनोत्तरकालवाचिना साङ्गसामिधेनीभावनायां तदनङ्गभूतपूर्वपदार्थान्तरकालत्वस्य विहितत्वात्पूर्वपदार्थस्यच परप्रयुक्तस्याक्षेप्तुं अशक्यत्वेन तदुत्तरकालत्वासंभवात्, अतो न बहिःक्रतु प्रयोगापत्तिरिति कौस्तुभे द्रष्टव्यम् ॥

**यत्तु वार्तिके**—पृथक्प्रयोगे सत्येकविंशतिसङ्ख्यापरिच्छेद्यत्वेन अतिदेशप्राप्तानामपि "प्रवो वाजे"त्याद्यृचामग्निसमिन्धनाप्रकाशकत्वेन सामिधेनीत्वाभावापत्तेः अप्रयोगमध्यस्थस्य चाग्नेर्निष्फलत्वेनासमिन्धनीयत्वेन ऋचामग्निसमिन्धनप्रकाशकत्वानुपपत्तेः सामिधेनीनामेकविंशत्यादिसङ्ख्यापरिच्छेद्यता अतिदेशप्राप्ता विहन्येतेत्युक्तम्, तत्सामिधेनीनामनुवचनान्तरे जनकत्वमात्रार्थत्वेनानुषङ्गिकाग्निसमिन्धनस्य प्रयोजनकल्पनात् परप्रयुक्ताग्निसमिन्धनाभावेऽपि प्रतिष्ठाफलकानुवचनस्य प्रयोजकस्य सत्त्वेन तत्प्राप्त्युपपत्तेः कादाचित्काग्निसमिन्धनार्थत्वेनापि सामिधेनीत्वाविघातान्न बहिःक्रतु प्रयोगबाधकमित्युपेक्षितं पूज्यपादैः । एवमन्तःक्रत्वनुष्ठानस्य साधितस्य फलमाह—**वैकृतेति** ॥ अतः काम्यफलेष्वावश्याकाश्रयलाभाय न सामिधेनीप्रकरणोज्जीवनापेक्षेत्युपसंहरति **—अतस्तेष्वपीति । तत्कर्तृसंस्कारकतयेति** ॥ अनेन च सामिधेन्यङ्गत्वपक्षे तदारंभ एव कर्त्रा अवैयर्थ्यापादकतया उपवीतं पूर्वपक्षे कार्यम् । सिद्धान्तेतु दर्शपूर्णमासप्रयोगारंभ इति प्रयोजनं दर्शितम् ॥

**॥ इत्येकादशं उपवीतस्य सामिधेन्यनङ्गताधिकरणम् ॥**

विषयवाक्यमुदाहरति—**आधान इति** ॥ यज्ञे अवचर्यते अनुष्ठीयतेऽनेनेतिव्युत्पत्त्या यज्ञानुष्ठानसाधनं यज्ञावचरशब्दस्यार्थः । अत्रच येन यज्ञे अनुष्ठीयते स वारण इत्यभेदप्रतीतेर्यज्ञोद्देशेन तत्साधनपात्रपरिच्छेदद्वारा वारणत्ववैकङ्कतत्वजात्योर्विधानेन यत्र जुह्वादौ जात्यन्तरविधानं तत्रानिवेशेऽपि उलूखलमुसलादिषु तद्विध्यविरोधः, तत्रापि नत्वेतेन जुहुयादिति वाक्यशेषभूतपर्युदासवशाद्यज्ञाङ्गप्रक्षेपाख्यहोमव्यतिरिक्तसाधनपात्रद्वारा वारणस्य तथा जुहुयादेवैतेनेत्यधिकरणमालालिखितवाक्यशेषबलात् यज्ञाङ्गप्रक्षेपहोमसाधनपात्रद्वारा वैकङ्कतस्य निवेश इति कौस्तुभे पूज्यपादाः । न्यायसुधायां तु वैकङ्कतस्य सर्वपात्रकार्यार्थत्वमुक्तमिति विशेषः प्रदेशान्तर इत्यस्य कृत्यं स्वयमेव व्यक्तीकरिष्यति । तत्र वाजपेयाङ्गत्वेनावगतस्य सप्तदशारत्नित्वस्य तत्रासंभवात् तदङ्गपशुयागावतारे अभिहिते तेनैव न्यायेन अभिक्रमणोपव्यानयोः कर्माङ्गभूतकर्त्रवतारे सिद्धे तत्रैव कर्मविशेषाङ्गकर्तृसंस्कारद्वारविशेषविचारात् पूर्वपर्यवसितस्य आनर्थक्यतदङ्गन्यायस्य पवमानेष्टीनां वार्तिककारमते आधानाङ्गत्वेऽपि यज्ञत्वाभावान्नाधानप्रकरणपठितानां पात्राणां तास्ववतार इत्यापवादिकीं भाष्यकारमतेतु प्रासङ्गिकीमनन्तरसङ्गतिं च तथा गौणश्रुतिविनियोगोपयोगिविचारेण पादसङ्गतिं तथा संशयंच स्पष्टत्वादप्रदर्श्य पूर्वपक्षमेवाह—**तत्रेति** ॥

यज्ञस्वरूपे आनर्थक्यप्रसक्तावपूर्वसाधनत्वलक्षणार्थं प्रकरणानुप्रवेशे प्रसक्ते प्रकृतापूर्वसाधनस्याधानस्य यज्ञत्वाभावादाधाने निवेशासंभवात्तस्मिन्नप्यानर्थक्यप्रसक्तौ तदङ्गभूतानां पवमानेष्टीनामङ्गत्वात् ता एव प्रकृतापूर्वोपकारकत्वसंबन्धेन यज्ञपदेन उद्दिश्य वारणादिविधानम् । यद्यपि पवमानेष्टीनां प्रदेशान्तरे पठितत्वान्न विशिष्याधिकारोऽस्त्युपस्थापकस्तथापि प्रधानाधिकारेणैव प्रधानांशे बाधितेन तत्संबन्धिपवमानेष्ट्युपस्थापनान्नानर्थक्यतदङ्गन्यायेन तदर्थतायां विरोध इत्यर्थः ॥

यदाहवनीये जुहोतीति अनारभ्याधीतवाक्येन आहवनीयस्याधिकरणत्वेन विधानात्सप्तम्या द्वितीयार्थलक्षणायां प्रमाणाभावात् कथंचित्प्राधान्यकल्पनया पवमानहविषां तदङ्गत्वकल्पने विश्वजिदादिक्रत्वन्तराणामपि तदङ्गत्वापत्तौ निष्फलत्वापत्तेर्यद्यपि न तेन अग्न्यङ्गत्वं तासां सिध्यति; तथापि आधानप्रकरणे भाष्यकारलेखनाद्वाक्यान्तरसत्तामनुमाय तदी-

यज्ञसाधनत्वेन श्रुतानां वारणादीनां साक्षादयज्ञरूपाधाने निवेशासंभवादानर्थक्यतदङ्गन्यायेन पवमानेष्टिरूपे यज्ञ एव निवेश इति प्राप्ते—

भाष्यकारेण तावदेवं सिद्धान्तितम्—आधानप्रकरणे पठितेन "यदाहवनीये जुहोती"तिवाक्येन पवमानहविषामग्न्यङ्गत्वावगतेराधानाङ्गत्वाभावेनानर्थक्यतदङ्गन्यायासंभवात्स्वरूपेण च पवमानेष्टीनामसन्निहितत्वाद्वारणवैकङ्कतादीनां सर्वप्रकृतियज्ञाङ्गत्वं सर्वयज्ञाङ्गत्वं वेति ॥

**वार्तिककारस्तु** न तावदनारभ्यवाक्येन पवमानहविषामग्न्यङ्गत्वम्; तेन सर्वहोमानुवादेनाहवनीयविधानात्, पवमानेष्टीनामेव विशिष्योपस्थित्यभावे सप्तम्या प्राधान्यलक्षणायां प्रमाणाभावात्। नापि पवमानेष्टिप्रकरणे वाक्यान्तरकल्पना; तदभावेऽपि वारणादीनां सर्वयज्ञार्थत्वोपपत्तेः।

अस्तु वा आधानप्रकरणे तत्तथापि तेनाधानाङ्गभूतहोमानामाहवनीयाधिकरणत्वसिद्धिरेव नत्वग्न्यङ्गत्वसिद्धिः; सप्तम्या लाक्षणिकत्वापत्तेः। अत एव तत्रत्यमाहवनीयपदं आधानजन्योत्पत्त्यपूर्वविशिष्टाग्निलक्षकमेव; परमापूर्वविशिष्टाग्निरूपमुख्याहवनीयस्य तदानीमसत्त्वात्। नचैवं पवमानेष्टिहविःश्रपणादौ गार्हपत्यादिप्रापकाभावः; तत्र मुख्यगार्हपत्याद्यधिकरणत्वबाधेऽपि सति संभवे प्रकृतिदृष्टगौणगार्हपत्यादिबाधे प्रमाणाभावात्। अतश्च सत्यपि वचनान्तरे पवमानेष्टीनामग्न्यङ्गत्वे प्रमाणाभावादाधानाङ्गत्वेऽपि वारणादीनां सर्वयज्ञार्थतैवमुपपादनीया ॥

सर्वत्र स्वोद्देश्यस्यापूर्वव्यभिचारेऽपूर्वसाधनत्वलक्षणार्थं प्रकरणानुप्रवेशो यथा व्रीहीनित्यादौ। अतएव तादृशस्थले आनर्थक्यतदङ्गन्यायः, प्रकृते तु यज्ञपदेनैवाव्यभिचारितापूर्वसाधनत्वोपस्थितौ तदर्थं प्रकरणानुप्रवेशाभावात्प्रधानसंबन्धस्यैवाप्रसक्तौ क्व तदङ्गावतारः। एवं सत्यपि यदि पवमानेष्टिसंनिधौ पात्राणि श्रूयेरन्, तदानुवादस्य सति संभवे संनिहितगामित्वाद्व्रीहिभिर्यजेतेत्यादिवद्धवेत्प्रकृतमात्रविषयत्वम्। नत्वेतदपि; पवमानेष्टीनां प्रदेशान्तरस्थत्वात्। अतो वारणादीनां सर्वयज्ञार्थत्वमेव ॥

प्रयोजनं पवमानेष्ट्यनन्तरं पात्राणां नाशे दर्शा-

---

यसिद्धान्तमुपपादयति—**आधानप्रकरण इति** ॥ तेनच कल्पितवाक्येन नाधिकरणतया होमाङ्गत्वेनाहवनीयविधिः; आहवनीयस्याद्याप्यसिद्धत्वात्, अतस्तत्रागारे गावोऽपास्यन्तामित्यत्रेव सप्तम्या प्राधान्यपरत्वमङ्गीकृत्य पूर्णाहुत्यादिहोमसाधारण्येनाग्न्यङ्गत्वप्रतीतेर्वाक्येन प्रकरणबाधादत्र आधानाङ्गत्वमित्याधानसमप्रधानतया नानर्थक्यतदङ्गन्यायप्रवृत्तिरित्यर्थः। **एतेन**—श्रौताधानावरुद्धे अग्नौ अङ्गत्वेन पवमानहविषां कथं तदङ्गतया निवेश इति—**अपास्तम्**; आनर्थक्यप्रतिहतन्यायेन अस्यापि तत्प्रापकत्वोपपत्तेः। **सर्वप्रकृतीति** ॥ एकादशे "पञ्चभिः युनक्ति पाङ्क्तो यज्ञ" इति यज्ञपदश्रवणाद"ग्निं युनज्मि शवसा घृतेने"ति युनक्तीत्येतद्वाक्यविहितस्याग्नियोगस्य प्रधानपात्रार्थत्वं भाष्यकारेण सिद्धान्तयिष्यते, तदनुरुध्य न्यायसुधाकृतेहापि यज्ञपदस्य प्रधानयागमात्रवाचित्वस्य प्रसाधनात्तदभिप्रायेण प्रधानभूतसर्वप्रकृतियज्ञाङ्गत्वमुक्त्वा यज्ञपदस्य यजतिपर्यायस्यातिरिक्तशक्तिकल्पने प्रमाणाभावात् सर्वस्यैवेति वाक्ये "एष वै सप्तदशप्रजापतिर्यज्ञेऽन्वायत्ते"तिवाक्ये च यज्ञपदस्येव यज्ञपदसंकोचस्यायुक्तत्वादङ्गप्रधानसाधारणयज्ञमात्रार्थत्वमेव युक्तमिति कौस्तुभोक्तरीत्या सर्वयज्ञाङ्गत्वं वेति पक्षान्तरमुक्तं द्रष्टव्यम् ॥

**तदभावेऽपीति** ॥ वारणादीनां पवमानहविरङ्गत्वनिवारणमात्रार्थत्वेन तत्कल्पनमयुक्तम्; तत्कल्पनामन्तरेणापि तन्निवारणेन वक्ष्यमाणविधया अन्ययज्ञार्थत्वापत्तेः इत्यर्थः। **सिद्धिरेवेति** ॥ नह्यन्यथा आहवनीयसिद्धावनारभ्याधीतवाक्येनाहवनीयाधिकरणत्वं प्राप्यत इति सूचनायैवकारः। यद्यपि पवमानेष्ट्यङ्गभूतानां प्राकृतानां होमानामतिदेशप्राप्तमुख्याहवनीयाधिकरणत्वबाधेऽपि सति संभवे प्रकृतिदृष्टस्याधानविशेषप्रयोज्यत्वविशिष्टाग्न्यधिकरणकत्वस्य बाधे प्रमाणाभावादुक्तविधाहवनीयाधिकरणकत्वप्राप्तिः संभवति। एवमेव पवमानेष्ट्यङ्गभूतानां हविःश्रपणपिष्टलेपफलीकरणहोमादीनामुक्तविधगार्हपत्यान्वाहार्यपचनाधिकरणत्वप्राप्तिरुपपादनीयेति तदनुरोधेनाहवनीयाधिकरणत्वविधानावश्यकत्वाभावसूचनार्थमाधानाङ्गभूतानामेवेत्युक्तम्। एतेषां चाप्राकृतत्वादुक्तविधया तदधिकरणत्वाप्राप्तेस्तत्प्राप्त्यर्थमिदमेव शरणीकरणीयमिति भावः ॥

**एवंच**—प्रकरणात्पवमानेष्टीनामाधानाङ्गत्वे सिद्धे कथं नानर्थक्यतदङ्गन्यायावतार इत्याशङ्कायाः प्रधानयज्ञेष्वेव यज्ञपदप्रवृत्तेरङ्गभूतपवमानेष्टिषु यज्ञत्वाभावान्न तदुद्देशेन विहितवारणादेस्तत्र निवेश इति न्यायसुधोपपादिताशयवार्तिकोक्तरीत्या संभवन्तमपि परिहारं पूर्वोपपादितकौस्तुभोक्तरीत्या अयुक्तं मत्वोपेक्ष्य परिहारान्तरं प्रतिजानीते—**आधानाङ्गत्वेऽपि वारणादीनामिति** ॥

**सर्वयज्ञार्थत्वमेवेति** ॥ "एष वै सप्तदशप्रजापतिर्यज्ञेऽन्वायत्त"इति विहितप्रजापतिसंज्ञकसप्तदशाक्षराणां यज्ञमात्रोद्देशेन विधानात् सर्वयज्ञार्थत्ववत् अस्यापि तेन रूपेण विधानात् सर्वयज्ञार्थत्वम्, नतु प्रकृतिमात्रार्थत्वमित्यर्थः ॥ एवंच आनर्थक्यतदङ्गन्यायप्रवृत्त्या पूर्वपक्षस्यासंभवेन तत्परिहारार्थं अधिकरणभेदेन सिद्धान्तकथनस्यायुक्तत्वात् प्रकरणेऽसन्निवेशे उत्कर्षस्य पूषानुमन्त्रणमन्त्रवदन्यतः सिद्धत्वेनेह तत्प्रसाधने वैयर्थ्याच्च पुनः सूत्रारम्भवैयर्थ्याशङ्कायाः निविदां सामिधेन्यङ्गत्वान्न तैः सामिधेनीप्रकरणविच्छेद इत्याशङ्कोत्तरत्वेन पूर्वाधिकरणशेषतया योजनात्सार्थक्येन परिहारमभिप्रेत्य अवशिष्टं प्रयोजनमाह—**प्रयोजनमिति** ॥

र्थं अनियतानामुत्पत्तिः । सिद्धान्ते वारणादीनामेवेति ॥ ३ ॥ १२ ॥ इति द्वादशं वारणसर्वयज्ञार्थत्वाधिकरणम् ॥

( १३ अधिकरणम् । )

**मिथश्च** ॥ आज्यभागक्रमे श्रुतानां वार्त्रघ्नीवृधन्वतीमन्त्राणां लिङ्गक्रमौ बाधित्वा "वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्याया"मि"ति वाक्याभ्यां प्रधानाङ्गत्वम् । इष्यते च लिङ्गस्यापि मन्त्रगतस्य वाक्येनापि ब्राह्मणगतेन बाधो "यद्यप्यन्यदेवत्य" इत्यादिनेति प्राप्ते—

अबाधेनोपपत्तौ बाधायोगान्न प्रधानाङ्गत्वम् । नहि सोमदेवत्यस्य मन्त्रस्य लिङ्गाविरोधः संभवति; सोमस्य देवतात्वाभावात्, अमावास्यायामधिष्ठानत्वस्याप्यसंभवाच्च । **वस्तुतस्तु**—वाक्यस्यास्य व्यवस्थामात्रकरणे लाघवान्न प्रधानाङ्गताबोधकत्वम् । व्यवस्था च पौर्णमास्यां यौ आ-

---

पवमानहविरर्थानामपि पात्राणां दाहप्रतिपत्त्यर्थमान्तं धारणात् तैरेवोपादानलाघवात् अन्तरा दर्शपूर्णमासाद्यनुष्ठानसंभवेऽपि तेषां दैवान्नाशे दर्शाद्यर्थमनियतवृक्षप्रकृतिकानामुपादानं पूर्वपक्षे । सिद्धान्ते तु वारणादिप्रकृतीनामेवेति प्रयोजनमित्यर्थः ॥

**॥ इति द्वादशं वारणादिसर्वयज्ञार्थत्वाधिकरणम् ॥**

पूर्वं वाक्यात् प्रकरणबाधे उक्ते तत्प्रसङ्गादापतितस्य क्रमबाधस्येह अपवादादनन्तरसङ्गतिं पूर्वपक्षे सप्तम्या द्वितीयार्थलक्षणाद्गौणश्रुतिविनियोगोपयोगिचिन्तनेन पादसङ्गतिं संशयंच स्पष्टत्वादनुक्त्वा विषयप्रदर्शनपूर्वकं पूर्वपक्षमाह—**आज्यभागक्रम इति** ॥

"अग्निर्वृत्राणि जङ्घन"दिति प्रथमा वार्त्रघ्नी । "त्वꣳ सोमासि सत्पतिरि"ति सौम्या द्वितीया वार्त्रघ्नी । "अग्निः प्रत्नेन मन्मना" इत्याग्नेयी प्रथमा वृधन्वती । "सोम गीर्भिष्ट्वा वयमि"ति सौम्या द्वितीया वृधन्वतीत्येवं आग्नेयसौम्याज्यभागयोः हौत्रकाण्डे प्रयाजमन्त्रानन्तरक्रमेण मन्त्रचतुष्टयमनुवाक्यात्वेन श्रुतमित्यर्थः । तत्र पूर्वयोर्वृत्रहन्पदयुक्तत्वाद्वार्त्रघ्नीत्वमुत्तरयोर्वृधिधातुयुक्तत्वाद्वृधन्वतीत्वमिति विवेकः ॥

विद्वद्वाक्ये कर्मान्तरत्वावेदकप्रमाणाभावात् तत्रैव एतद्वाक्ययोर्मन्त्रविनियोजकत्वासंभवेऽप्याग्नेयादिप्रधानेषु तदुपपत्तेर्नानयोर्व्यवस्थार्थत्वमित्यधिकाशङ्कोत्थानात्पौर्णमास्यधिकरणेनापौनरुक्त्यमभिप्रेत्य पूर्वपक्षमुपपादयति—**लिङ्गक्रमाविति** ॥

तत्राज्यभागयोः प्रतिपद्यनुष्ठानेन कालकृतव्यवस्थया क्रमबाधायोगात् पौर्णमास्यमावास्याकालीनप्रधानाङ्गभूताज्यभागलक्षणया व्यवस्था वाच्या । साच लक्षणापत्तेरेवाऽयुक्ता । अतः पौर्णमास्यमावास्यापदयोः शक्त्या निरूढलक्षणया वा आग्नेयादिपरत्वस्यान्यत्रापि दर्शनादिहापि सप्तम्याः प्राधान्यपरत्वं कथंचिदाश्रित्य तदङ्गत्वमेव युक्तमित्यर्थः ॥

**ननु** वाक्येन दुर्बलक्रमबाधौचित्येऽपि न प्रबललिङ्गबाधो युक्त इत्यतआह—**इष्यते चेति** ॥ बलाबलाधिकरणवक्ष्यमाणरीत्या मनोतामन्त्रस्याग्निदेवत्यत्वलिङ्गेन सवनीयाङ्गत्वप्राप्तावपि "यद्यप्यन्यदेवत्यः पशुरि"त्यग्नीषोमीयाङ्गताबोधकवाक्येन ब्राह्मणगतेन वक्ष्यमाणबाधवदिहाप्युपपद्यते बाध इत्यर्थः ॥

**देवतात्वाभावादिति** ॥ पौर्णमास्यामग्नीषोमयोर्देवतात्वेऽप्येकस्य सोमस्य देवतात्वाभावादित्यर्थः । नह्यत्र पौर्णमास्यां सोमस्य देवतात्वाभावेऽप्यग्निप्रकाशकसोमप्रकाशकमन्त्रयोः समुच्चयमङ्गीकृत्याग्नीषोमदेवताप्रकाशकत्वोपपत्तेः लिङ्गाविरोधः संभवति; "पुरोनुवाक्यामन्वाहे"त्यत्र द्वितीयायास्तृतीयार्थलक्षणया उपादेयानुवाक्यागतैकत्वस्य विवक्षितत्वात् पित्र्येष्टिवत् "द्वे द्वे अनुवाक्ये भवत" इति विध्यभावादेकस्मिन्कर्मण्यनुवाक्याद्वयानुपपत्तिरिति भावः ॥

अत्रच प्रकाशकारैः न्यायसुधाकृदुपपादितां कालकृतव्यवस्थाखण्डनपूर्विकां कर्मकृतव्यवस्थां प्रदूष्य कालकृतव्यवस्थैव शास्त्रदीपिकोक्तद्वितीयपक्षावलम्बनेन समर्थिता,तस्या अयुक्ततां सूचयितुं व्यवस्थाद्वयेऽप्यनास्थां दर्शयति—**व्यवस्था चेति॥** अनेकोद्देशेन विध्यभावे अनेकस्य विधेयस्यानियमेनोद्देशे प्रसंजितेऽन्यतरस्यान्यतरत्र विधिर्व्यवस्थापदस्यार्थः । कर्मकृतव्यवस्थापक्षस्यानास्थायामप्यन्तेलेखनात्तस्या एव युक्तत्वं सूचितम् । पौर्णमास्यधिकरणे कौस्तुभे द्रष्टव्यमुपपादितं च मया तत्रैवेति विस्तरभयान्नेह प्रपञ्च्यते ॥

**यत्तु अत्र प्रकाशकाराणां**—आज्यभागयोः साक्षात्कालान्वयाभावात् पौर्णमास्यां काले यावाज्यभागौ तयोर्वार्त्रघ्न्यावमावास्याकाले यावाज्यभागौ तयोर्वृधन्वत्याविति व्यवस्थानुपपत्तेः कालद्वाराच व्यवस्थायां य इष्येति वाक्यात् पौर्णमास्यां दर्शविकृत्यनुष्ठाने वार्त्रघ्नीप्रसक्तेरमावास्यायांच पूर्णमासविकृत्यनुष्ठाने वृधन्वतीप्रसक्तेः प्रकृतिवद्भावे वैरूप्यप्रसङ्गात् वार्तिके सिद्धान्तकोटौ कालोक्तिः प्रधाने लक्षितकालगततदन्वयितारूपपरा न पौर्णमास्यमावास्यात्वरूपपरेति न्यायसुधाकृदापादितकालकृतव्यवस्थादूषणे वैकृतकालस्य प्राकृतकालकार्ये विधानाद्यथैवाग्नीषोमीये तदङ्गेषुच पौर्णमासीत्वेन कालविधानेन तद्विकृतौ च विहिते अमावास्याकाले पौर्णमासीस्थानापन्ने प्राकृतानां पौर्णमासीकालीनाङ्गानां भवति प्राप्तिः, तथैव वार्त्रघ्न्या अपि संभवत्येव प्राप्तिः । वृधन्वत्यास्तु न तत्रोपदेशतस्तस्य प्रकृतौ कृतार्थत्वान्नाप्यतिदेशतः तस्याग्नीषोमीयविध्यतत्वाभावात् ॥

ज्यभागौ तत्र वार्त्रघ्नीत्यादिरूपेण कालकृता पौर्णमासीसंज्ञकप्रधानाङ्गभूताज्यभागयोर्वार्त्रघ्नीत्येवं कर्मकृता वेत्यादि विशेषः कौस्तुभे द्रष्टव्यः ॥ ३ ॥ १३ ॥ इति त्रयोदशं वार्त्रघ्नीपौर्णमास्यङ्गताधिकरणम् ॥

( १४ अधिकरणम्। )

**आनन्तर्यम्** ॥ दर्शपूर्णमासयोः "हस्तावववनेनिक्ते उलपराजीᳪ स्तृणाती"ति, तथा ज्योतिष्टोमे "मुष्टीकरोति वाचं यच्छति दीक्षितमावेदयती"ति श्रुतम्। तत्र हस्तावनेजनं हस्तसंस्कारार्थं, मुष्टीकरणवाग्यमौ च मनःप्रणिधानार्थौं। अतस्तत्त्रयमपि तावत्करिष्यमाणकर्मार्थमित्यसंदिग्धम्। तत्र करिष्यमाणं कर्मानन्तर्यादेकवाक्यत्वाद्वा उलपराजिस्तरणदीक्षितावेदनरूपमेवेति प्राप्ते—

आनन्तर्यस्यावर्जनीयत्वादङ्गताग्राहकत्वानुपपत्तेर्ग्राहकत्वेऽपि वा प्रकरणेन बाधात् 'पश्य मृगो धावती'तिवदाकाङ्क्षाविरहेण चाख्यातद्वयस्य यच्छब्दाद्युपबन्धाभावे एकवाक्यत्वानुपपत्तेः कर्तृसंस्कारस्यास्य प्रकरणादङ्गप्रधानसाधा-

---

**किंच**—आज्यभागयोः साक्षात्कालान्वयात् श्रुतावप्यार्थिकाधाराधेयभावरूपसाक्षात्संबन्धसत्त्वात्कालान्वयोपपत्तिरिति परिहारकरणम्, तदयुक्तम्; कालकृतव्यवस्थापक्षे पौर्णमास्यमावास्याकालयोर्निमित्तत्वेन अथवा तत्तत्कालीनाज्यभागलक्षणयोद्देश्यत्वेनान्वयस्यावश्याङ्गीकारात्तादृशविकृतौचोभयविधस्यापि प्रयोजकस्याभावेन वार्त्रघ्न्यादिप्राप्तेर्दुरुपपादत्वात्। अतएव येष्वङ्गेषु पौर्णमास्यादिकालस्याङ्गत्वेन प्राप्तिस्तत्र तदनुष्ठापकताया वैकृतकालविध्यन्तरेण बाधात्तदभावेऽप्यङ्गभूतकालानुरोधेन प्रधानलोपस्यान्याय्यत्वात् तत्स्थानापन्नकालान्तरेष्वनुष्ठानं तेषां नासुलभम्। नहि भेदनवद्दर्शपूर्णमासाभावे भेदनहोमस्य प्राप्तिः संभवति। यदपि किंचेत्याद्युक्तं तदपि प्रतिपदि क्रियमाणाज्यभागयोरार्थिकस्यापि तदाधाराधेयभावस्यासंभवादयुक्तम्। अतएव प्रधानानां प्रतिपद्यनुष्ठानेऽपि तदीयप्रयोगारम्भद्वारापि तत् कथंचिदुपपाद्य तदाधारत्वं संभवेदपि। नत्विहाज्यभागयोस्तदपि संभाव्यते। अतएव अङ्गेषु पौर्णमासीकालत्वं साक्षादनुपपन्नम् स्वप्रधानप्रयोगारम्भद्वारकमेव ज्ञेयम् ॥

नच तादृशपौर्णमासीकालकत्वेनैव कालकृतव्यवस्था युक्ता; तथात्वे पौर्णमासीकालीनप्रधानाङ्गभूताज्यभागयोरेवोद्देश्यत्वापत्तौ कालकृतव्यवस्थाया अनुक्तिसहत्वादित्ययुक्तमेतत्परिहारकरणम्। यदपि सोमनाथेन अनयोर्व्यवस्थाविधित्वात् तस्यचाव्यवस्थाप्राप्तिमूलकत्वेन तदालोचने आज्यभागद्वारकत्वसिद्धेः कालोद्देशेन मन्त्रविधाने लक्षणा विशिष्टोद्देशयोरप्रसक्त्या कालकृतव्यवस्था युक्तैवेत्युक्तम्; तदप्युद्देश्यतावच्छेदकावच्छिन्ने अव्यवस्थाप्राप्त्यभावे व्यवस्थाविधित्वनिर्णयस्यैव प्रथमतोऽसंभवेनाज्यभागद्वारकत्वालाभात् लक्षणाया आवश्यकत्वात् पूर्वोक्तदूषणापरिहाराचायुक्ततरमित्युपेक्षितं पूज्यपादैरित्यलम् ॥

॥ इति त्रयोदशं वार्त्रघ्न्यादिदर्शपूर्णमासाङ्गत्वाधिकरणम् ॥

---

प्रधानान्वये अनुवाक्यानामानर्थक्यापत्तेस्तदङ्गभूतयोराज्यभागयोः क्रमानुसारेण व्यवस्थोक्त्या वारणाधिकरणापोदितानर्थक्यतदङ्गन्यायोज्जीवने कृते इहापि क्रमानुसारात् प्राप्ताया व्यवस्थाया अपवादकरणादापवादिकीमनन्तरसंङ्गतिं तथा द्वितीयया हस्तमुष्टिवाक्संस्कारार्थत्वेनावगतानां सन्निधानात् उलपराज्यादिद्वारकत्वेनापूर्वसाधनत्वलक्षणात् **अथवा**—सर्वपदार्थद्वारावा तल्लक्षणात् तत्तदङ्गत्वमिति विचारेण श्रुतिविनियोगोपयोगिचिन्तनेन पादसङ्गतिंच स्पष्टत्वादनभिधाय विषयवाक्यमुदाहरति—**दर्शपूर्णमासयोरिति** ॥

हस्तप्रक्षालनरूपं हस्तावनेजनं द्वितीयया मलापकर्षणरूपदृष्टद्वारा हस्तसंस्कारार्थं सत् कर्तृत्वांशेन कर्तृसंस्कारकम्। यद्यपि पूर्वमेव शुध्यन्तरमस्ति; तथापि मन्त्रानेकत्वे स्मृतिदार्ढ्यवच्छुध्यन्तरस्याप्यवकाशे न कश्चन विरोधः। अतएव उपयोक्ष्यमाणसंस्कारस्य गरीयस्त्वान्नार्थक्रमेण पाठक्रमं बाधित्वा पूर्वपदार्थाङ्गतयाप्यपेक्षितत्वेन सर्वादावनुष्ठानमित्यपि ज्ञेयम् ॥ **एतेन**—हस्तावनेजनस्यादृष्टविधयोपकारकत्वमुक्तं प्रकाशकाराणां—**अपास्तम्**; दृष्टसंभवे तत्कल्पनस्यान्याय्यत्वात् ॥

**उलपेति** ॥ ऊर्ध्वलवनार्हं सुगन्धादिकठिनतृणमुशीरमुलपशब्दार्थ इति धूर्तस्वाम्यनुसारी न्यायसुधाकारः। "उलपा बल्वजाः प्रोक्ता" इति हलायुधात् उलपा बल्वजा इति तु प्रकाशकाराः। उभयथापि तेषां रेखापरपर्यायराज्याकारतया बर्हिरास्तरणात्पूर्वं वेदेः क्रियमाणमास्तरणमुलपराजिस्तरणम्। **मुष्टीति** ॥ यजमानकर्तृके मुष्टीकरणवाग्यमे "अदीक्षिष्टायं यजमान" इति त्रिरुपांशुकथनमध्वर्युकर्तृकं दीक्षितावेदनम्। ततश्चावनेजनादिसंस्कृतानामेषामुत्तरकालभाविपदार्थसाधनत्वे निर्विवादेऽपि किमुत्तरपदार्था अनन्तरपठिता एव सन्निधानात् उत सर्वे इति विचार इत्यर्थः ॥

**आवेदनरूपमेवेति** ॥ यद्यपि भिन्नकर्तृकत्वान्नाङ्गाङ्गिभावसंभवस्तथापि आध्वर्यवेऽपि यजमानस्य प्रयोजकत्वेन कर्तृत्वात् **अथवा** तत्फले दीक्षितत्वज्ञाने यजमाननिष्ठे तदुपयोगकल्पनात्तत्संभव इत्यर्थः ॥

रणस्वोत्तरपदार्थाङ्गत्वं हस्तावनेजने । मुष्टीकरणवाग्यमयोस्तु अङ्गुलिवाग्विसर्गप्राक्कालीनपदार्थमात्राङ्गत्वम् ॥१४॥

**इति चतुर्दशं हस्तावनेजनादीनां प्राकरणिकसर्वाङ्गत्वाधिकरणम् ॥**

**( १५ अधिकरणम् ॥ )**

**शेषस्तु** ॥ दर्शपूर्णमासयो"राग्नेयं चतुर्धा करोती"त्यत्र नाग्निदेवताकहविष्ट्वमुद्देश्यतावच्छेदकं; विशिष्टोद्देशे वाक्यभेदापत्तेः, अपितु तद्धितोपात्तहविष्ट्वमेव । कथंचिद्वाग्निसंबन्धिहविष्ट्वं तथा । अस्ति चाग्निसंबन्धोऽग्नीषोमीयादावपि । अपिवा "पुरोडाशं चतुर्धाकरोती"त्यनेनोपसंहारादग्निसंबन्धिपुरोडाशस्यैव तत्, नत्वाज्यस्यापीति । अस्तु वा देवतात्वस्यापि कथंचिद्विवक्षा, तथापि द्विदेवत्येऽप्यग्नेरस्त्येव देवतात्वम्; द्वन्द्वान्ते श्रूयमाणस्य तद्धितस्य प्रत्येकमभिसंबन्धात् । अतः सर्वेषां चतुर्धाकरणमिति प्राप्ते—

प्रचुरप्रयोगात्तद्धितस्य देवतात्व एव शक्तस्य संबन्धमात्रलक्षकत्वाद्युपपत्तेर्न तावदग्निसंबन्धित्वस्य विवक्षा । नच देवतात्वं द्विदेवत्ये प्रत्येकवृत्ति । इतरेतरयोगरूप—चार्थविहितद्वन्द्वेन साहित्यस्य विवक्षितत्वात् सहितयोरेव व्यासज्यवृत्त्यखण्डोपाधिरूपदेवतात्वस्वीकारात् । अतएव द्वन्द्वान्त इत्यादिप्रवादस्तु यत्रोद्देश्यत्वेन साहित्याविवक्षा त-

---

**स्वोत्तरपदार्थाङ्गत्वमिति** ॥ **एतेन**—हस्तावनेजनस्य मलापकर्षणार्थत्वलिङ्गाद्धस्तलेपापादकपिण्डकरणोत्तरपदार्थेष्वयोग्यत्वेन तत्पूर्वभाविपदार्थमात्राङ्गत्वं न्यायसुधाकृदुक्तं—**अपास्तम्**; हस्तावनेजनप्राग्भाविमलापकर्षणार्थस्यास्य पिष्टलेपसंबन्धिमलनिवर्तकत्वाभावेऽपि सर्वदा पदार्थभूतैतन्मलाभावसंपादकतया सर्वार्थत्वोपपत्तेः । सर्वार्थत्वोपपत्त्यै कर्तृसंस्कारस्येत्युपादानम् । ततश्च कर्तृसंस्कारकत्वात् कर्तुश्च साङ्गप्रधानार्थत्वात् उपव्यानवत्सर्वार्थमित्यर्थः ॥

**यत्तु अत्र प्रकाशकारैः**—हस्तावनेजनवन्मुष्टीकरणवाग्यमयोरपि मनःप्रणिसमाधानार्थत्वेन कर्तृसंस्कारकत्वात् यथा पूर्वावगततत्कालीनपदार्थप्रत्याकलनेन तेषूपयोगस्तथैव पूर्वावगतकरिष्यमाणसकलाङ्गप्रधानप्रत्याकलनेन तद्द्वारा उपयोग इति वाग्विसर्गाङ्गुलिविसर्गोत्तरकालकरिष्यमाणाङ्गोपेतप्रधानेऽप्युपयोगः, नतु तत्पूर्वभावित्वेन; अन्यथा प्रधानाङ्गत्वाभावेन प्रकरणेन विनियोगानापत्तेरित्युक्तम्, तदयुक्तमिति सूचयितुमाह—**मुष्टीकरणेति** ॥ विसर्गप्राग्भाविमुष्टीकरणवाग्यमयोर्हस्तजिह्वाचापलनिवृत्तिद्वारा मनःप्रणिधानार्थयोर्योग्यतावशेन तावदधिकपदार्थाकलनार्थत्वप्रतीत्या तदुत्तरभाविपदार्थाकलनस्य प्रयत्नान्तरजन्यमनःप्रणिधानजन्यत्वप्रतीतेः सत्यपि कर्तृसंस्कारकत्वे योग्यतारूपलिङ्गात् विसर्गपूर्वभाविपदार्थमात्राङ्गत्वं न्यायसुधोक्तमेव युक्तम् । सत्यपिच तदुत्तरभाविप्रधानार्थत्वाभावे आनर्थक्यतदङ्गन्यायेनाङ्गेष्ववतारसिद्धेरङ्गार्थत्वे प्रकरणव्यापाराभावेऽपि न क्षतिरित्यर्थः । **एतेन**—वार्तिके मुष्टीकरणादीनां साङ्गप्रधानार्थत्वस्य प्रकरणाच्च विनियोगस्याभिधानं प्रौढवादमात्रमिति भावः ॥

प्रयोजनं स्वकाले विस्मृतं हस्तावनेजनमुलपराजिस्तरणानन्तरं पूर्वपक्षे न कार्यम् । तथा गृहमेधीये उलपराजिस्तरणस्याराद्दुपकारकस्य लोपे हस्तावनेजनस्य लोपश्च, सिद्धान्तेतु उत्तरेष्वङ्गत्वात् गृहमेधीये चाज्यभागाङ्गत्वात् कार्यमेवेति स्पष्टत्वान्नोक्तम् ॥

**॥ इति चतुर्दशं हस्तावनेजनादीनां प्राकरणिकसर्वाङ्गत्वाधिकरणम् ॥**

---

पूर्वाधिकरणोक्तसर्वार्थत्वापवादादापवादिकीमनन्तरसङ्गतिं संशयं च स्पष्टत्वादनुल्लिख्य विषयप्रदर्शनपूर्वकं पूर्वपक्षमाह **—दर्शेति । वाक्यभेदापत्तेरिति ॥**

पौर्णमास्यधिकरणोक्तरीत्या अग्निदेवतात्वस्य कारकतासंबन्धेन भावनायामन्वयस्य व्युत्पन्नत्वात् द्रव्येऽन्वयेऽव्युत्पन्नान्वयनिबन्धनवाक्यभेदापत्तिरित्यर्थः । अतोऽत्र द्वितीयया तद्धितार्थस्योद्देश्यताप्रतीतेस्त्यस्य च सर्वनामार्थकत्वात् स्ववाक्योपात्ताभावे प्राकरणिकपरामर्शित्वात् प्रकृतहविर्मात्रोद्देशावगतेरग्निसंबन्धित्वरूपविशेषणस्याविवक्षितत्वात् हविष्ट्वमुद्देश्यतावच्छेदकम्, **अथवा**—द्रव्यसंकोचपरिहाराय तद्धितस्य संबन्धसामान्यार्थत्वाङ्गीकारेणाग्नः कारकत्वाभावेन द्रव्येऽप्यन्वयव्युत्पत्तेः विशेषणस्यापि विवक्षोपपत्त्या अग्निसंबन्धिहविष्ट्वं वोद्देश्यतावच्छेदकं वक्तव्यम् । तादृशोद्देश्यतावच्छेदकरूपाक्रान्तत्वस्य सर्वत्राविशेषात् प्रथमे पक्षे अङ्गप्रधानसाधारणहविर्मात्रे द्वितीये अग्निसंबन्धिमात्राज्यसाधारण्येन चतुर्धाकरणसिद्धिरित्यभिप्रेत्य पूर्वपक्षमुपपादयति—**अपिर्विति । अस्तिचेति** ॥ अग्निसंबन्धस्य हविर्निरूपितदेवतात्वाधिष्ठानकत्वरूपस्यैवाश्रयणात् तस्य चाग्नीषोमीयैन्द्राग्नादिष्वपि सत्त्वमित्यर्थः ॥

द्रव्यपरत्वविवक्षायां प्रचुरप्रयोगादनुशासनाच्च देवतात्वविशिष्टद्रव्य एव शक्तिकल्पनात् संबन्धसामान्यार्थकत्वे लक्षणापत्तेस्तत्परिहारायाग्निदेवताकहविष्ट्वस्योद्देश्यतावच्छेदकत्वाङ्गीकारेऽपि प्रकारान्तरेण पूर्वपक्षसिद्धिमाह—**अस्तुवेति । प्रत्येकमभिसंबन्धादिति** ॥ यथैव 'घटपटावानये'त्यत्र कर्मत्वं द्वन्द्वान्ते विभक्तेः श्रूयमाणत्वात् प्रत्येकं भवति । एवं तद्धितस्याप्यन्ते श्रवणात् तदर्थदेयतात्वस्यापि त्यज्यमानदेवतोद्देशकर्मत्वरूपस्य व्यासक्तत्वासंभवाच्च प्रत्येकमेव देवतात्वाङ्गीकारात् द्विदेवत्येऽपि तत्सद्भावात् चतुर्धाकरणं प्राप्येतैवेत्यर्थः ॥

**अखण्डोपाधीति** ॥ तेन दम्पत्योः कर्तृत्वस्येव देवतात्वस्याप्यखण्डोपाधिरूपस्य व्यासक्तत्वाविरोध इत्यर्थः । घटपटावित्यत्र तु तयोरुद्देश्यत्वेन तत्साहित्यस्याविवक्षितत्वात् तत्र प्रत्येकमेव कर्मत्वं युक्तमिति वैषम्योपपादनायाह—**अत**

त्रेति ध्येयम्। अतः केवलाग्निपदादुत्पन्नस्तद्धितो नान्यसापेक्षस्य देवतात्वमभिवदितुं क्षमः; सामर्थ्यविघातापत्तेः।

यत्तु अग्निदेवताकत्वमविवक्षितमिति, तन्न; तथात्वे न तावत्प्रकृतद्रव्यत्वमात्रं अपूर्वसाधनलक्षकम्; तस्य देवतातद्धितेनानुक्तेः। नापि हविष्ट्वम्; तत्परत्वस्य देवतावाचित्वप्रतीतिं विनानुपपत्तेः। नहि हविषि वाच्ये देवतातद्धित एवेति स्मृत्या नियम्यते; तद्वाचित्वेऽपि संबन्धसामान्यतद्धितस्य सत्त्वात्। अतः प्रथमावगतस्य देवतात्वस्यैवोद्देश्यतावच्छेदकत्वम्। तस्य चानुयोगिप्रतियोगिसापेक्षत्वात् हविरार्तिन्यायेना "धेमन्तर्वेदी" तिवदग्निदेवताकहविष्ट्वस्यैव लक्षणयोद्देश्यतावच्छेदकत्वसिद्धिः। तेन च पुरोडाशं चतुर्धा करोती"ति सामान्यवचनस्योपसंहारः। तस्मादाग्नेयस्यैव पुरोडाशस्य चतुर्धाकरणम्॥ १५॥ **इति पञ्चदशमुपसंहाराधिकरणम्॥**

**॥ इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां तृतीयाध्यायस्य प्रथमः पादः॥ १॥**

---

**एवेति। तस्येति॥** "सूक्तहविषोरिष्टि"रिति स्मरणेन द्रव्यमात्रस्य तद्धितेनानुक्तेरित्यर्थः॥

**नियम्यत इति॥** येन हविःपरत्वं प्रथमत एवावबुध्येतेत्यर्थः। अतो देवतातद्धितस्य सूक्तहविर्वाच्यत्वनियमकरणादुपजीव्यस्य प्रथमावगतस्य देवतात्वस्यैवापूर्वसाधनत्वलक्षकत्वोपपत्त्या प्रातीतिकोद्देश्यतावच्छेदकत्वमित्याह—**अत इति॥**

**ननु** एवमपि वक्ष्यमाणशातपथश्रुतिमूलेन "उभौ वा अविशेषादि"ति कात्यायनवचनेन अग्नीषोमीयेऽपि तत्प्राप्तेः कथं तस्य आग्नेयमात्रविषयतासिद्धिरित्यतो नियामकमाह—**तेनचेति॥** "तं चतुर्धाकृत्वा पुरोडाशं बर्हिषदं करोती"ति शतपथगतं वाक्यं तच्छब्देन पुरोडाशपरामर्शेन पुरोडाशमात्रस्य चतुर्धाकरणविधायकमेवार्थतो धृतम्। एतादृशोपसंहारानङ्गीकारे शाखान्तरीयत्वेऽपि प्रत्यक्षवाक्यविहितस्य पुरोडाशमात्रचतुर्धाकरणस्य सर्वथा बाधायोगात् विकल्पापत्तिः, आग्नेयपदस्यैव पुरोडाशसामान्यलक्षणया तेन सहोपसंहारकल्पने शक्यतावच्छेदकानवच्छिन्नपदार्थलक्षणापत्तिश्च, अतः पुरोडाशपदस्यैव शक्यतावच्छेदकावच्छिन्नाग्नेयमात्रपरत्वलक्षणया उपसंहारः॥ **अतएवोक्तम्**—"सामान्यविधिरस्पष्टः संह्रियेत विशेषतः॥" **इति॥**

अतश्च सामान्यशास्त्रस्य प्रथमप्रवृत्तिकत्वाभावात् फलतः परिसङ्ख्यावान्तरभेदस्तन्मात्रे संकोचरूपोपसंहारः सामान्यवाक्यस्येति श्रुतेरप्याग्नेयमात्रविषयत्वात् कात्यायनवचनं हेतूपन्यासादप्रमाणमित्यर्थः॥

**नच**—शातपथवाक्ये चतुर्धाकरणोत्तरकालत्वविशिष्टबर्हिषत्करणभावनाया भक्षाङ्गत्वेन विधानात् क्रमविशेषणतयाऽनूद्यमानस्य चतुर्धाकरणस्य विध्यभावे कथं तस्य तद्विषये सामान्यविधित्वं इति—**वाच्यम्**; शाखान्तरीयत्वेन तच्छाखीयान्प्रतीत्यभ्युदयशिरस्कत्वफलकल्पनया विशिष्टविध्यङ्गीकारेण तस्यापि विधानोपपत्तेः। **एतेन**—परस्परोपसंहारे सामान्यविधिसार्थक्यसंभवेऽपि अन्यतरोपसंहारे सामान्यविधिवैयर्थ्यमपि—**परिहृतम्**; अभ्युदयशिरस्कत्वफलकतया सार्थक्यात्। एवमेवैकशाखीयवाक्यद्वयोपसंहारेऽपि द्रष्टव्यम्। **एतेन**—अनुष्ठानविशेषापेक्षितत्वरूपास्पष्टत्वस्य पुरोडाशवाक्येऽसंभवेऽपि इह बर्हिषत्करणस्य विधानेन चतुर्धाकरणांशेऽनुवादत्वप्रतीतेस्तस्यच यथाप्राप्त्यपेक्षत्वात् तस्याश्च आग्नेयवाक्येन विशेषविषयत्वात् सामान्यवाक्यस्य विशेषपर्यवसायित्वेनोपसंहारत्वोपपादनं सोमनाथकृतं—**अपास्तम्**;॥

विशेषतः प्राप्तत्वेऽपि सर्वपुरोडाशप्रतिपत्तित्वेन विधित्वसंभवे अनुवादत्वायोगात् तेन विशेषपर्यवसायित्वानुपपत्तेः। अतो यदैवानेन विधानमारभ्यते, तदैव सर्वसाधारणप्रतिबन्धफलमुपसंहारत्वं वक्तव्यम्। तत्रचानिर्धारितविशेषतया विशेषान्वययोग्यत्वरूपास्पष्टत्वस्य सामान्यवाक्ये तदभावरूपस्पष्टत्वस्यच विशेषवाक्ये संभवोऽस्त्येवेत्यभिप्रेत्यैवोद्देश्यतावच्छेदकानवच्छिन्ने लक्षणापत्त्या सामान्यवाक्यस्य न विशेषोपसंहारकत्वमित्युक्तं पूज्यपादैरिति भावः॥ सिद्धान्तमुपसंहरति—**तस्मादिति॥** प्रयोजनं स्पष्टत्वात् नोक्तम्॥

**॥ इति पञ्चदशमुपसंहाराधिकरणम्॥**

---

**॥ इति श्रीखण्डदेवान्तेवासिकविमण्डनशंभुभट्टकृतायां भाट्टदीपिकाप्रभावल्यां तृतीयाऽध्यायस्य प्रथमः पादः॥**

द्वितीयः पादः ।

( १ अधिकरणम् । )

**अर्थाभिधान** ॥ एवं श्रुत्युपयोगिविचारे वृत्तेऽधुना लिङ्गोपयोगिविचारः प्रस्तूयते । तत्र लिङ्गं नामाङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकत्ववाचकपदकल्पनानुकूला क्लृप्तपदपदार्थनिष्ठा योग्यता । यथा स्रुवेणावद्यतीत्यत्र स्रुवनिष्ठा द्रवपदकल्पनाऽनुकूला । एवं मन्त्रेषु स्वार्थवृत्त्युद्देश्यतावाचिपदकल्पनानुकूला स्ववृत्तिकारकत्ववाचिपदकल्पनानुकूला च योग्यतालिङ्गम् । सा च पदरूपश्रुतिकल्पकत्वात्तद्द्वारा तदर्थविनियोगे प्रमाणम् ।

तत्र वस्तुसामर्थ्यरूपस्य लिङ्गस्य विशेषविचारासंभवान्मन्त्रसामर्थ्यस्य किं शक्य एवार्थे विनियोजकत्वमुत जघन्यवृत्तिप्रतिपाद्येऽपीति संदेहे—

क्रतुप्रकरणाम्नातमन्त्रस्य "बर्हिर्देवसदनं दामी"त्यादेर्मुख्ये इव जघन्येऽप्युलपराज्यादौ स्मारकाकाङ्क्षादिरूपसामग्र्यविशेषात् तत्साधारण्येनैव विनियोगः । यष्टीः प्रवेशयेत्यादिवदाकाङ्क्षादिरूपतात्पर्यग्राहकसत्त्वे मुख्यार्थबाधस्याकिंचित्करत्वादिति प्राप्ते—

शक्यसंबन्धग्रहसापेक्षत्वेन जघन्यार्थप्रतीतेर्विलम्बितत्वात्प्रथमप्रतीतमुख्यविनियोगेन चरितार्थस्य मन्त्रादेर्जघ-

---

यद्यपि शब्दत्वसामान्याच्छ्रुतिविनियोगनिरूपणानन्तरं वाक्यादिविनियोगनिरूपणं कर्तुं युक्तम्; तथापि पूर्वपूर्वप्रमाणकल्पनेन विनियोजकतया तत्सापेक्षत्वेन लिङ्गविनियोगोपयोगिनिरूपणं पूर्वमावश्यकम् । अतएव श्रुतिसापेक्षत्वात्तन्निरूपणोत्तरमवसरः क्रमप्राप्तत्वादित्यवसरसङ्गतिं पादान्तरत्वादनन्तरसङ्गत्यभावेऽप्यक्षतिं चाभिसंधाय निरूपणीयत्वेन पादार्थं प्रतिजानीते—**एवमिति** ॥ यद्यपि श्रुतेरप्यसमर्थविनियोजकत्वासंभवात्सामर्थ्यकल्पकत्वमावश्यकम्; तथापि "लिङ्गज्ञानं पुरोधाय न श्रुतेर्विनियोक्तृता । श्रुतिज्ञानं पुरोधाय लिङ्गं तु विनियोजकम् ॥" इति न्यायेन श्रुत्या कल्पितयाऽसमर्थस्यापि विनियोगान्न सामर्थ्यापेक्षा अतस्तदुत्तरमेवास्यावसरो न पूर्वमित्यधुनापदेन सूचितम् । **लिङ्गोपयोगीति** ॥ लिङ्गविनियोगोपयोगीत्यर्थः । तेन वक्ष्यमाणस्वरूपलिङ्गस्य वस्तुसामर्थ्यमन्त्रसामर्थ्योभयविधस्य मध्ये प्रथमान्त्ये वस्तुसामर्थ्यस्य प्रमाणत्वेन निरूपितस्यैव प्रकारविशेषचिन्ताया असंभवेऽपि मन्त्राधिकरणे मन्त्रसामर्थ्यस्यार्थप्रकाशनार्थत्वेन विनियोजकतया निरूपितस्य प्रकारविशेषचिन्तासंभवात् मन्त्रसामर्थ्यकृतविनियोगोपयोगिनिरूपणस्य पदार्थत्वम् । प्रसङ्गात्तु वस्तुसामर्थ्यस्य निरूपणम् । अतएव ऐन्द्र्यधिकरणे श्रुतिविनियोगविचारेऽपि पूर्वाधिकरणव्युत्पादितमुख्यार्थविनियोगापवादकरणात्तस्यापवादिकसङ्गत्या सङ्गतत्वान्न क्षतिरिति भावः ॥

यल्लिङ्गविनियोगोपयोगिविचारः प्रस्तूयते, तस्य लक्षणमाह—**तत्र लिङ्गमिति** ॥ अत्रच क्वचिदुद्देश्यताकृतिकारकतावाचिपदयोरन्यतरवाचिपदकल्पनं क्वचिच्चोभयवाचिपदकल्पनेति द्रष्टव्यम् । तत्राद्यस्थलमुदाहरति—**यथेति** ॥ अतएव संस्कारविध्यन्यथानुपपत्तिकल्पितविनियोगस्थले संस्कारनिष्ठोभयवाचिपदकल्पनानुकूला योग्यता ज्ञेयेति भावः ॥ एवं मन्त्रगतलिङ्गस्थलेऽप्युभयवाचिपदकल्पनानुकूलत्वं दर्शयति—**एवमिति** ॥ अत्रच विश्वजिद्विधेः स्वर्गभाव्यत्ववाचिपदकल्पनानुकूलयोग्यतावत्त्वेऽपि विनियोजकत्वाभावप्रदर्शनायाङ्गत्वप्रमाणत्वसूचनाय चाङ्गत्वघटकीभूतेत्युक्तम् । **साचे-**

**ति** ॥ तस्याश्चान्यथानुपपत्तिरूपत्वाद्व्यतिरेकव्याप्तिविधया द्वितीयान्तादिपदरूपश्रुतिकल्पनद्वारा तदर्थविनियोगे प्रमाणत्वमित्यर्थः । तत्र दर्शपूर्णमासादिप्रकरणे समाम्नातानां श्रुत्यविनियुक्तानां मन्त्राणामधिकाराख्यप्रकरणात्क्रतुसंबन्धेऽवगते द्वारमात्रविशेषे लिङ्गेन विनियोगः क्रियते । तत्रापि योग्यतारूपस्य लिङ्गस्य सत्यपि देवदत्तस्य पाकयोग्यत्वे आकाङ्क्षाभावे पाके विनियोगादर्शनादाकाङ्क्षापि सहकारिणी । साच यथैव मन्त्रप्रकरणिनोस्तथा द्वारस्यापि; तदभावेऽपि संबन्धानुपपत्तेः । एवंच यथैव मुख्यस्य कुशच्छेदनस्य स्मारकाकाङ्क्षया तदङ्गत्वेन "बर्हिर्देवसदनमि"ति मन्त्रो विनियुज्यते, तथा गौणोलपाख्यतृणच्छेदनस्यापि तदपेक्षायां विनियुज्यत एवेत्यभिप्रेत्य पूर्वपक्षमाह—**क्रतुप्रकरणेति** ॥ **ननु** मुख्यार्थानुपपत्त्यभावात्कथं गौणार्थाभिधानेन तत्र विनियोग इत्यत आह—**यष्टीरिति** ॥ 'यष्टीः प्रवेशये'त्यत्र मुख्यार्थाबाधेऽपि तात्पर्यमात्रेण लक्षणादर्शनादिहाप्याकाङ्क्षादिरूपतात्पर्यग्राहकसत्त्वे तदुपपत्तिरित्यर्थः । मुख्य एवार्थे मन्त्रप्रकरणद्वारा आकाङ्क्षामात्रसहकृतेन लिङ्गेन शीघ्रं श्रुतिकल्पनात् गौणार्थविषयेच तात्पर्यग्राहकारणापेक्षित्वेन श्रुतिकल्पने विलम्बितत्वात् गौणार्थनिष्ठाकाङ्क्षायाश्च मन्त्रवत्स्मृतिकारणतया क्लृप्तत्वेन विशिष्टैर्ध्यानाद्युपायान्तरैरपि निवृत्तिसिद्धेर्विनियोगो न गौणे ॥

**नच** गौणमुख्यार्थनिष्ठाकाङ्क्षयोर्मन्त्रनियामकत्वे विनिगमनाविरहः; गौणार्थशाब्दबोधं इति शक्यसंबन्धग्रहस्य हेतुत्वेन शक्योपस्थित्यां प्राथमिकत्वात्तन्निष्ठाकाङ्क्षया विनियुक्तस्य मन्त्रस्य नैराकाङ्क्ष्ये सति अन्यतराकाङ्क्षया पश्चात्प्रतीयमानगौणार्थसंबन्धानुपपत्तेरित्यभिप्रेत्य सिद्धान्तमाह—**शक्यसंबन्धेति** ॥ **एतेन**—मुख्यार्थप्रत्यायनद्वारा गौणेऽपि शक्त्युपपत्तेर्गौणसाधारणैकविनियोजकश्रुतिकल्पनेनाविशेषादुभयत्र विनियोग इत्यपि—**अपास्तम्**; अनुष्ठेयत्वेनावगते पदार्थे स्मारकापेक्षिणि लिङ्गेन मन्त्रविनियोगादन्योन्यानपेक्षाणामेव चानुष्ठेयत्वावगतेस्तथाविधानामेव स्मारकापेक्षत्वात्प्रत्येकमेव मन्त्रविनियोजकश्रुतिकल्पनाया आवश्यकत्वे मुख्येऽर्थे पुनः श्रुतिकल्पनायाः प्राथमिकत्वात् तयैव नैराकाङ्क्ष्यात्पुनः श्रुतिकल्पनाया अस-

न्यार्थविनियोजकत्वानुपपत्तिः । अतएव तत्स्मारकाकाङ्क्षाया ध्यानाद्युपायान्तरेणैव निवृत्तिः । अतएव यत्र प्रकरणे मुख्यार्थोपयोगो न क्लृप्तस्तत्र मन्त्राम्नानबलादेव तत्कल्पना ॥

यत्र तु विरोधिगुणान्तरावरोधः प्रकरणे, तत्र सामान्यसंबन्धबोधकप्रमाणासत्त्वे उत्कर्षः। यथा दर्शपूर्णमासप्रकरणाम्नातपूषानुमन्त्रणमन्त्रादेः यागानुमन्त्रणसमाख्यायामेव सामान्यसंबन्धबोधकत्वात्, उत्कर्षस्याप्यसंभवे प्रकरण एव जघन्यार्थे विनियोगः यथा मनोतादौ । अप्रयुक्तलक्षणादिना तस्याप्यसंभवे तदर्थाभिधानस्यैवादृष्टार्थत्वम् । यथा जपादौ ॥ १ ॥ १६ ॥ **इति प्रथमं मुख्यार्थे एव मन्त्रविनियोगाधिकरणम् ॥**

**( २ अधिकरणम् । )**

**वचनात्** ॥ यत्र तु गौणार्थे तात्पर्यग्राहकं वचनं विद्यते

---

भवात् । यतो मुख्यार्थस्य प्राथमिकत्वेन तत्रैव श्रुतिकल्पनया नैराकाङ्क्ष्यम्, अतएव तदनुरोधेनार्थिकविधिं प्रकल्प्यापि तत्रैव विनियोगकल्पना, नतु गौणे । यथा—"अश्विनोस्त्वा बाहुभ्याꣳ राध्यासं" इत्यत्र प्रत्यक्षग्रहणविध्यभावेऽपि तद्विधिकल्पनया तत्रैव मुख्येऽर्थे विनियोगो वक्ष्यत इत्याह—**अत एवेति ॥**

**ननु**—कथं प्रकरणे पूषदेवताया अभावे मुख्यार्थबाधे सति पूषानुमन्त्रणमन्त्रादीनां गौण्या वृत्त्याऽग्निरूपार्थपरतया गौणेऽर्थे न विनियोग इत्याशङ्कां तत्राविनियोगप्रतिपादनेन निरस्यति—**यत्र त्विति ॥** प्रकरणेन दुर्बलेन लिङ्गबाधायोगान्न तत्र प्रकरण एव गौणार्थे विनियोगः; अपितु यत्र पूषा देवता चातुर्मास्ये तत्रैवोत्कर्षः; उपांशुयाजीययाज्यानां विष्ण्वादिदेवतायाः प्रकरणे अभावे उत्कर्षापत्तिं वारयितुं—**विरोधीत्युक्तम्** । तत्राग्नेयादियागे निवेशासंभवेऽप्यश्रुतदेवतोपांशुयाजे देवताविधिकल्पनेन निवेशोपपत्तेः । अतएव वसन्तायनुमन्त्रणमन्त्रवदुपांशुयाजे पूषदेवताविधिकल्पनानुपपत्तेराग्नेयादिषु गुणान्तरसत्त्वादुत्कर्ष एवेत्यर्थः । अत्रच वस्तुसामर्थ्यरूपस्य लिङ्गस्य सामान्यसंबन्धबोधकप्रमाणनिरपेक्षस्यैव विनियोजकत्वम् । यथाऽर्थज्ञानस्य क्रत्वङ्गत्वे, मन्त्रगतलिङ्गस्य तु तत्सापेक्षतया तत् । अन्यथा क्रत्वङ्गभूतेऽर्थे मन्त्रविनियोगाभावे कर्मापूर्वसाधनत्वानपेक्षायां देवताया विनियोगापत्तेर्नैष्फल्यप्रसङ्गेण लिङ्गमात्रादङ्गत्वानुपपत्तेरिति सूचयितुं **लिङ्गक्रमसमाख्यानादि**त्यधिकरणवक्ष्यमाणमुपजीव्यसामान्यसंबन्धबोधकप्रमाणसत्त्वे इत्युक्तम् । **अत एवोक्तं सांप्रदायिकैः**—यदन्तरेण यन्न संभवत्येव तस्य तदङ्गत्वं तदनपेक्षम् । यदन्तरेण यत्संभवति तस्य तदर्थत्वं सामान्यसंबन्धबोधकप्रमाणसापेक्षत्वमिति ॥ ततश्चास्य यद्यपि न प्रकरणं सामान्यसंबन्धबोधकं प्रमाणम्; तथापि यागानुमन्त्रणमिति समाख्यायास्तद्बोधकप्रमाणस्य सत्त्वात्तया क्रतुसंबन्धे सामान्यतोऽवगते लिङ्गेन द्वारविशेषविनियोगः क्रियत इति नात्रापि श्रुतिमन्तरेण गौणार्थविनियोगप्रसक्तिः । यद्यपि प्रकरणाद्दुर्बलेयं समाख्या; तथापि प्रबलेन लिङ्गेन तस्य बाधितत्वाल्लिङ्गेन पूषदेवताप्रकाशनार्थत्वेऽवगते तत्रानर्थक्यप्रसक्तौ अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकतया उपयुज्यत इति प्रबललिङ्गोपष्टब्धत्वात्प्रबलेति भावः । **तदुक्तम्**—"यागानुमन्त्रणानीति समाख्या क्रतुयायिनी । तस्माच्छक्त्यनुसारेण प्राप्तिस्तद्देवते क्रतौ ॥" इति ॥

**उत्कर्षस्यापीति ॥** केवलाग्निप्रकाशकस्य मनोतामन्त्रस्य केवलाग्निदेवत्ययागसंबन्धबोधकप्रमाणान्तरस्याभावाल्लिङ्गमात्रेण तत्रोत्कर्षस्यासंभवे प्रकरणावगतक्रतुसंबन्धनिर्वाहाय तत्रैवाग्निपदेनाग्नीषोमलक्षणया जघन्यार्थे विनियोग इत्यर्थः । यदात्वानर्थक्यतदङ्गन्यायसहकृतज्योतिष्टोमप्रकरणमेव ज्योतिष्टोमीयपश्वङ्गमेष इति सामान्यसंबन्धबोधकमिति लिङ्गादाग्नेयसवनीयपशावुत्कर्षः प्राप्नोतीत्यालोच्येत, तदातु "यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्ये"ति वाक्ये तृतीयाद्यश्रवणेन श्रुतित्वासंभवाद्वाक्यस्यच लिङ्गबाध्यत्वेनोत्कर्षनिषेधप्राप्तावपि एवकारस्य कार्यैवेत्येवं व्यवहितान्वयेनैवकारश्रुत्या, **अथवा** वक्ष्यमाणरीत्या ब्राह्मणवाक्यत्वेन प्राबल्याल्लिङ्गबाधोपपत्त्या उत्कर्षनिषेधादुत्कर्षस्याप्यसंभव इति व्याख्येयम् । यद्यप्यस्य वाक्यस्य आग्नेयीपदसमभिव्याहृतैवकारेण वायव्ये पशौ चोदकप्राप्ताग्नेयमन्त्रस्य स्थाने आग्नेयमन्त्रप्रसक्तिरूपोहनिषेधकत्वोपपत्त्या नोत्कर्षनिषेधकत्वमित्यभिप्रेत्यैव "मनोतायां तु वचनादविकार" इति दाशमिकाधिकरणप्रवृत्तिः; तथाप्यस्य वाक्यस्योत्कर्षनिषेधकत्वेन प्राकरणिकफलार्थत्वसंभवेऽप्राकरणिकफलार्थत्वकल्पनायोगादुत्कर्षनिषेधकत्वमेव युक्तम् । दाशमिकाधिकरणं ज्योतिष्टोमे आग्नेयः पशुर्नेति क्रत्वाचिन्तया द्रष्टव्यम् । अतएवोक्तं तन्त्ररत्ने—"तथासत्यप्रसक्तोत्कर्षनिषेधायोगादुक्तवचनस्यानूहपरत्वमिति । अतो युक्तमुक्तं—**यथा मनोतादाविति** ॥ प्रयोजनमुलपतृणच्छेदनेऽपि बर्हिर्देवसदनमिति मन्त्रः पूर्वपक्षे, सिद्धान्ते नेति स्पष्टत्वान्नोक्तम् ॥

**॥ इति प्रथमं मुख्यार्थ एव लिङ्गविनियोगाधिकरणम् ॥**

पूर्वत्र गौणसामर्थ्यस्य विनियोजकश्रुतिकल्पनया विनियोजकत्वनिराकरणेन लिङ्गस्य मुख्यार्थ एव विनियोजकत्वे उक्ते ऐन्द्र्यां लिङ्गस्य गौणेऽर्थे विनियोजकश्रुतिसहायतयापि प्रसक्तस्य विनियोजकत्वाभावस्येहापवादकरणादापवादिकीमनन्तरसङ्गतिं तथा संशयं पूर्वाधिकरणसिद्धान्तेनैव पूर्वपक्षोत्थानात्पार्थक्येन पूर्वपक्षंच स्पष्टत्वादनुक्त्वा "वचनात्त्वि"ति यथासूत्रं सिद्धान्तमेव प्रतिजानीते—**यत्रत्विति ॥**

—यथा अग्नौ, "कदाचनस्तरीरसीत्यैन्द्र्या गार्हपत्यमुपतिष्ठत" इत्यादौ, तत्र गौण एव गार्हपत्ये विनियोगः ॥

अथैन्द्र्येत्युपक्रमस्य तद्धितश्रुत्या मुख्यसामर्थ्योज्जीवनाज्जघन्यद्वितीयाया एव तदनुरोधेन प्रतियोगित्वे लक्षणा गार्हपत्यसमीपे स्थित्वेति, गुणभूतप्रातिपदिक एव वा यज्ञसाधनत्वसादृश्याद्गौण्या गृहपतिमत्त्वयोगेन वेन्द्रप्रकाशकत्वम् । अस्तु वा रूढत्वादग्नेरेव धातुवाच्यसमीपस्थितिं प्रति कर्मत्वम्, नतु मन्त्रसाध्याभिधानं प्रति; तस्याशाब्दत्वात् । नच "उपान्मंत्रकरण" इति स्मृत्या आत्मनेपदविधानेन धातोर्मंत्रकरणार्थकत्वावगतेस्तस्याभिधानलक्षकत्वावगतिः; आत्मनेपदबलेन समीपस्थितेरभिधानप्रयोजनकत्वावगतेर्मंत्रस्य स्वसाध्याभिधानाङ्गत्वसंबन्धेन समीपस्थितिविशेषणत्वोपपत्तेरभिधानलक्षणायां प्रमाणाभावात् । अतश्च शक्यार्थ एव समीपस्थितौ गार्हपत्यस्य कर्मत्वम्, इन्द्रस्य त्वार्थिकेऽभिधाने इति न विरोधः । यथा चास्य धातोः सकर्मकत्वं तथा कौस्तुभ एव प्रपञ्चितम् । अतः कथं मन्त्रस्य गौणेऽर्थे विनियोग इति चेन्न;

ऐन्द्र्येति तद्धितेनैकपदे विशेष्यतया प्रतिपाद्यमानस्य मन्त्रस्य चयनानुपयोगीन्द्राङ्गत्वबोधकत्वानुपपत्तेः । अतस्तस्य शक्यबोधकालीनेन्द्रप्रकाशकत्वानुवादत्वेनाप्युपपत्तेर्न द्वितीयादौ तद्बलेन लक्षणाश्रयणं रूढित्यागो वा । नच समीपस्थितिं प्रति अग्नेः कर्मत्वम्; तथात्वे तस्याभिधानं

---

अत्र भाष्यकारेण "निवेशनः सङ्गमनो वसूनां विश्वारूपाऽभिचष्टे शचीभिः । देव इव सविता सत्यधर्मेन्द्रस्य समरे वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते"इत्युदाहृतम् । तदुपमानार्थीयेन नकारेणैन्द्रस्योपमानतया निर्देशादिन्द्रस्याप्राधान्यावगतेः "ध्रुवोध्वरस्तथा सोम आपश्चैवानिलो नलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ।" इत्यनलशब्दवाच्यस्याग्नेः वसुत्वस्मरणादुक्तानां मध्येऽग्निर्नाम वसुरिन्द्र इव संग्रामे स्थितवानित्यग्निस्तुतिप्रतीतेः "वसूनां पावकश्चास्मी"ति चाग्नेरेव वसुश्रेष्ठत्वस्मरणात् तत्समीपेऽन्येषां वसूनां सङ्गमनाद्वसुसंगमनत्वेनाप्यग्नेरेव स्तुतिप्रतीतेरैन्द्रीत्वेनोदाहार्यत्वानुपपत्तेरयुक्तमित्युपेक्ष्य बलाबलाधिकरणभाष्यलिखितशाखान्तरपतितमैन्द्रमन्त्रमुदाहरति—**यथाग्नौ कदाचनेति** ॥ ततश्च तस्य मन्त्रलिङ्गस्य स्वरसतो गार्हपत्यमिति द्वितीयाश्रुत्युपष्टम्भकतया सिद्धान्तविपरीतत्वान्नोदाहरणत्वम् ॥

**यत्तु**—न्यायसुधाकृता बलाबलाधिकरणे श्रुत्या लिङ्गबाधस्य वक्ष्यमाणत्वान्मन्त्रस्य स्वरससामर्थ्यानालोचनेनैव देवतार्थतद्धितश्रुत्या प्राधान्यावगमात् "रामरावणयोर्युद्धमि"तिवच्चानन्यचरितत्वेनेन्द्रस्यापि इन्द्रोपमानरूपस्तुतिसंभवात्तदुदाहरणोपपत्तिः—**इत्युक्तम्** । तन्मन्त्रस्य स्वरससामर्थ्यत्यागेन स्वस्यैव स्वोपमानकत्वकल्पनया गौणसामर्थ्यमादाय ऐन्द्रीत्वोपपादने तस्य तद्धितश्रुत्युपष्टम्भकत्वेन तद्धितश्रुत्युपष्टब्धलिङ्गेन कारकश्रुतिसंकोचानुपपत्तेः पूर्वपक्षायोगान्मन्त्रस्वरससामर्थ्यालोचनेनाग्निप्रकाशकत्वस्यैवापत्त्या गौणार्थविनियोगरूपसिद्धान्तविपरीतत्वादयुक्तम् ॥ नच कदाचनेति पृथगुदाहरणे बलाबलाधिकरणेन पौनरुक्त्यम्; इह श्रुतिसहायेन गौणार्थे विनियोगे उपपादिते तत्र केवललिङ्गमात्रेण ऐन्द्र्यङ्गत्वमप्यस्तु इति शङ्काया निरसनीयत्वेन तत्परिहारोपपत्तेः, अत इदमेवोदाहृतं युक्तमिति भावः ॥

**गार्हपत्य इति** ॥ अग्नाविति शेषः । गार्हपत्यमिति द्वितीयाश्रुत्या विरोधं दर्शयितुं पूर्वपक्षी प्रत्यवतिष्ठते—**अथेति** ॥ **स्थित्वेतीति** ॥ इतिशब्देन ऐन्द्रं प्रकाशयेदिति शेषपूरणं सूचितम् । गृहपतेरयमिति व्युत्पत्त्या गार्हपत्यशब्द इन्द्रमप्यभिवदितुं समर्थ इत्याह—**गृहपतिमत्त्वयोगेनेति** ॥ गृहपतिसंबन्धित्वयोगेनेत्यर्थः ॥

**ननु**—वाच्यस्य तिष्ठतिधात्वर्थस्याऽकर्मकत्वात्कथं तत्र कर्मत्वेनाग्नेरन्वय इत्यत आह—**यथाचास्येति** ॥ "अकर्मकाच्चे"त्येतदुत्तरसूत्रेणाकर्मकात्तिष्ठतेरात्मनेपदविधानेनास्मिन्सूत्रे तिष्ठतिवाच्यस्याप्यर्थस्य सामीप्यरूपफलावच्छिन्नत्वेन सकर्मकत्वविवक्षणेन सामीप्यस्य प्रतियोगितासंबन्धेनाग्न्याश्रयत्वेनाग्नेः कर्मत्वेनान्वयोपपत्तिरिति कौस्तुभे प्रपञ्चितमित्यर्थः ॥

द्वितीयाश्रुत्या गार्हपत्यार्थत्वावगमेन न मुख्यार्थविनियोगसंभवः; योग्यताज्ञानाभावेऽपि प्रतिबन्धकीभूतायोग्यतानिश्चयाभावमात्रेण शाब्दबोधस्य संभवेन श्रौतविनियोगोपपत्तेस्तस्यैव बलवतस्तात्पर्यग्राहकस्य सत्त्वेन मन्त्रगतैन्द्रशब्दे यज्ञसाधनत्वसादृश्यादिधात्वर्थायोगाद्वा जघन्यवृत्त्याश्रयणे बाधकाभावात् । नहि द्वितीयाश्रुत्या गार्हपत्याङ्गत्वबोधस्येव तद्धितश्रुत्या मन्त्रस्येन्द्राङ्गत्वबोधः संभवति । तद्धितोक्तस्य प्राधान्येन प्रतिपाद्यत्वरूपदेवतात्वस्य विशेष्यतया प्रतिपाद्यमन्त्रं प्रति विशेषणतया प्रतीयमानत्वेन विपरीतविशेषणविशेष्यभावकल्पनां विना इन्द्राङ्गत्वस्य शीघ्रमप्रतीतेरिन्द्रोद्देशेन मन्त्रविधावेकप्रसरताभङ्गापत्तेश्च, इन्द्रस्य चयनेऽनुपयोगेनोद्देश्यत्वानुपपत्तेश्च । अतस्तद्धितश्रुत्या द्वितीयाश्रुतिबाधायोगाद्गार्हपत्याभिधानार्थत्वमेव युक्तमित्यभिप्रेत्य दूषयति—**नेति** ॥ **अतस्तस्येति** ॥ तद्धितस्येत्यर्थः । **रूढित्याग इति** ॥ गार्हपत्यशब्दस्य "संज्ञायां धेनुष्या"इत्यतः संज्ञायामित्यनुवृत्तौ "गृहपतिना संयुक्तेञ्यः"इत्यनुशासनेन ञ्यप्रत्ययान्तत्वेनाग्नौ रूढत्वप्रतीतेर्न त्याग इत्यर्थः ॥

यत्तु समीपस्थितिं प्रति गार्हपत्यस्य कर्मत्वमभिधानं प्रति इन्द्रस्येत्युक्तं तदनूद्य दूषयति—**नचेति** ॥ **तथात्व इति** ॥ अस्मिंश्च पक्षे मन्त्रस्यौपचारिककरणत्वापत्तेः समीपस्थितेश्च गार्हपत्यसंस्कारार्थत्वे इन्द्राभिधानार्थत्वायोगान्मन्त्रस्य तद्द्वारा

प्रत्यप्यङ्गत्वे उद्देश्यानेकत्वकृतवाक्यभेदापत्तेरात्मनेपदवि-रोधेन च धातुनैव स्वशक्यार्थविशिष्टाभिधानलक्षणाऽव-श्यम्भावाद्विशेष्यभूतेऽभिधान एव मन्त्रस्य करणत्वप्रतीते-र्गार्हपत्यस्य च चयनसंस्कार्यस्य कर्मत्वप्रतीतेरर्थाच्च सा-मीप्यप्रतियोगित्वेन तस्यैव ग्रहणोपपत्तेस्तात्पर्यग्राहकब्रा-ह्मणानुरोधेन मन्त्रस्यैव गौण्या वृत्त्या गार्हपत्ये विनियोग इति सिद्धम् ॥ २ ॥ १७ ॥ इति द्वितीयं श्रुतिवशात् गौणेऽप्यर्थे मन्त्रविनियोगाधिकरणम् ॥

(३ अधिकरणम्।)

**तथा** ॥ दर्शपूर्णमासयोः हविष्कृदेहीतित्रिरवघ्नन्नाह्वयति इति श्रुतम्। तत्र नायं मन्त्र आह्वानाङ्गम्; तस्य "पत्न्येव हविष्कृदुपोत्तिष्ठति सा देवानभिद्रुत्यावहन्ती"ति वचनानु-सारेणाभावप्रतीतेः। अत इति करणेनावघाताङ्गमेव। अतश्चास्मिन्वाक्ये त्रिरभ्यासपुंस्त्वमन्त्रविशिष्टावघातविधि-रेव। पत्नीवाक्ये च गुणादेव कर्मान्तरविधिः। तयोश्चाव-घातयोर्व्रीहीनवहन्तीत्यनेन संस्कार्यसंबन्धेऽपि दृष्टार्थत्वाद्वि-कल्पः। पत्नीकर्तृकेऽवघाते चावरक्षोदिव इति मन्त्रः। अ-तश्चानेन वाक्येनावघाते गौण एवायं मन्त्रो विनियुज्यते। गौणत्वोपपादनं कौस्तुभे द्रष्टव्यम्। आह्वयतिश्च तदाचष्टे इ-त्येवं शक्यार्थबोधकालीनाह्वानप्रकाशनानुवाद इति प्राप्ते—

---

औपचारिककरणत्वस्याप्यनुपपत्तेरात्मनेपदानुरोधेन वा इन्द्रा-भिधानार्थत्वाङ्गीकारे गार्हपत्यस्याग्रे उपयोगेनेप्सितत्वात् स-कृदनीप्सितकर्मत्वाङ्गीकारे च उद्देश्यानेकत्वनिमित्तवाक्यभे-दापत्तेस्तृतीयान्तं द्वितीयान्तंच पदं यथाश्रुतमङ्गीकृत्य आत्म-नेपदतात्पर्यग्राहकानुरोधेन धातुनैव स्वशक्यार्थविशिष्टाभिधा-नलक्षणया तत्रैव गार्हपत्यस्य कर्मत्वेन मन्त्रस्यच करणत्वेना-न्वयाङ्गीकारो युक्तः। गार्हपत्यस्यच साधनत्वेनोपयोगाभावे-ऽपि संस्कार्यत्वेन तत्सत्त्वादभिधानकर्मत्वोपपत्त्या तदनुरो-धेन मन्त्रगतेन्द्रपदस्य गार्हपत्यपरत्वं कथंचिदाश्रित्य सिद्धः श्रुतिबलाद्गौणार्थविनियोग इत्यर्थः। प्रयोजनं स्पष्टत्वान्नोक्तम् ॥

॥ इति द्वितीयं लिङ्गस्य श्रुतिबलाद्गौणार्थेऽपि वि-नियोजकत्वाधिकरणम् ॥ (ऐन्द्र्यधिकरणम्)

---

**दर्शपूर्णमासयोरिति** ॥ सिद्धान्ते मन्त्रस्य लिङ्गादाह्वा-नाङ्गत्वे सामान्यसंबन्धबोधकप्रमाणप्रदर्शनाय दर्शपूर्णमासयो-रित्युक्तम्। **हविष्कृदेहीति** ॥ देवानामर्थे या हविः संपा-दयति सा पत्नी हविष्कृत्तामेनां संबोध्य अध्वर्युरेहीति ब्रूते। तमिमं मन्त्रमध्वर्युस्त्रिरुच्चार्यावघातं कुर्वन्नाह्वयतीत्यर्थः। अ-त्रच यथा श्रुत्या पूर्वाधिकरणे गौणार्थविनियोगो मन्त्रस्योक्तः, तद्वदेव वाक्येनापि तत्र प्रसक्तस्य विनियोगस्योहापवादकर-णादापवादकीमनन्तरसङ्गतिंच स्पष्टत्वादनुक्त्वा पूर्वसिद्धान्त-हेतुपरसूत्रगतं तथाशब्दं व्याख्यास्यन् पूर्वपक्षमाह—**तत्रेति**॥ "पत्न्येव हविष्कृदुपोत्तिष्ठति देवान् ऋषीन् पितॄन् साभिद्रु-त्याऽवहन्ती"ति वाक्यान्तरे पत्नी स्वयमेवोत्तिष्ठति नाहूतेत्य-र्थकैवकारेण पक्षप्राप्ताह्वाननियमाभावप्रतीतेराह्वानविध्यन्तर-स्यान्यथासिद्धस्यादर्शनादविहिताह्वानस्मारकतया मन्त्रस्याङ्ग-त्वेन विधानानुपपत्तिं तावद्दर्शयति—**तस्य पत्न्येवेति** ॥

**एतेन**—मन्त्रे त्रिरभ्यासविधेः सहायार्थत्वात् तस्य प्रा-प्तावघातकालानुवाद इत्यपि—**अपास्तम्**; आह्वानाङ्गतया मन्त्रस्याप्राप्तेस्तत्र त्रिरभ्यासवृत्त्यनुपपत्तेः काललक्षणापत्तेश्च। अतः परिशेषात् "लक्षणहेत्वोः क्रियायाः" इति सूत्रेण प्रयो-जकत्वापरपर्यायहेतावपि शतृप्रत्ययस्मृतेरभिचरन्यजतीतिव-न्मन्त्रस्यावघातभावनाङ्गत्वमेव; कृदुपात्तभावनायामपि कार-कान्वयस्य व्युत्पन्नत्वे सुतरामितिकरणपरामृष्टमन्त्रस्य करण-तयान्वयोपपत्तेरित्यभिप्रेत्याह—**अत इति** ॥ प्राप्तावघातो-द्देशेन त्रिरभ्यासमन्त्रयोर्विधाने वाक्यभेदापत्तिं परिहरति—**अतश्चेति** ॥ अवघातस्य वितुषीभावपर्यन्तमनुष्ठानावश्यक-त्वेन तत्र त्रिरभ्यासविध्यनुपपत्तावपि तत्र मन्त्रद्वारा पुंस्त्व-स्यैव क्रियान्वयोपपत्तेः शाखाभेदेन क्वचित्त्रिरभ्यासयुक्तमन्त्र-पाठेन त्रिरभ्यासप्राप्तावपि शाखान्तरे सकृत्पाठेनाप्याम्नाना-न्नियमविधया त्रिरभ्यासादिविशिष्टावघातविधिरेव। नह्यत्र प-त्नीवाक्येनावघातः प्राप्यते; तत्र समाख्याप्राप्ताध्वर्युकर्तृक-त्वस्य पत्नीकर्तृकत्वेन बाधेनावघ्नन्निति पुंस्त्वानुवादानुपपत्तेः। अतो विशिष्टविधानान्न वाक्यभेद इत्यर्थः। अतएव गुणात् पत्नीवाक्येऽवघातान्तरविधिरित्याह—**पत्नीवाक्ये चेति** ॥ अत्रच "विधिकोपश्चोपदेशे स्या"दिति सिद्धान्तगुणसूत्रेण म-न्त्रस्यावघाताङ्गत्वे "अव रक्षो दिवः सपत्न"मिति मन्त्रान्तर-स्यापि विधानाद्धविष्कृन्मन्त्रस्य पक्षे बाधः पूर्वपक्षे आपादि-तस्तं परिहरति—**पत्नीकर्तृकेति** ॥ एवंच आह्वयतिपरलि-ङ्गविशिष्टावघातविधिः, धातुराख्यातांशश्चानुवाद इत्यभिप्रे-त्योपसंहरति—**अतश्चेति** ॥

**ननु** अवघातस्याचेतनस्य हविष्कृत्त्वानुपपत्तेः सुतरांचेति शब्दार्थान्वयानुपपत्तेरवघाते मन्त्रस्यासामर्थ्यात्कथं विनियोग इत्यत आह—**गौण एवायमिति** ॥ **गौणत्वोपपादन-मिति** ॥ अचेतने स्वातन्त्र्यलक्षणकर्तृत्वासंभवेऽपि स्थाली पचतीतिवद्वैवक्षिकेण स्वातन्त्र्येण कर्तृत्वोपपत्त्या हविष्कृत्त्वसं-भवात्तत्रैव चेतनत्वमारोप्य अवघात त्वमेहि संपन्नो भवेत्य-र्थेन हविष्कृत्स्थालीसंबन्धिहविःसंपत्तिहेतुलक्षणयोगेन हविष्कृ-देहीत्यनेनावघातप्रकाशनोपपत्तिरिति कौस्तुभे द्रष्टव्यमित्यर्थः। मन्त्रस्याह्वानानङ्गत्वे आह्वयत्यन्वयायोगशङ्कापरिहारायाह—**आह्वयतिश्चेति** ॥ हविष्कृदेहीति मन्त्रेणैहीतिशब्दोच्चारणा-दध्वर्युराह्वानमाचष्ट इत्यर्थे "तत्करोति तदाचष्टे" इति स्मृत्या णिचं व्युत्पाद्याह्वयतिप्रयोगोपपत्तेः शक्यार्थबोधकालीनाह्वान-प्रकाशनानुवादादाह्वयत्यन्वयोपपत्तिरित्यर्थः ॥

मुख्य एवाह्वाने विनियोगसंभवे मन्त्रस्याह्वयतिपदस्य च गौणत्वकल्पनायां प्रमाणाभावात् । मान्त्रवर्णिकविनियोगविधिकल्पनया सध्यासमित्यादिना ग्रहणादेरिवाह्वानस्यापि नियमेन प्राप्तत्वात् । पत्न्यैवेत्यस्य तु नायमर्थो यत्स्वयमेवोत्तिष्ठति न त्वाहूतेति, अपितु पत्न्येव नान्येति । अतो नेदमपि तदभावबोधकम् । अतश्चाह्वाने मन्त्रस्य लिङ्गादेव प्राप्तत्वादाह्वानस्य च सहायार्थत्वेनावघातकाल एव प्राप्तेरवघ्नन्नित्यस्याप्यनुवादकत्वात् केवलं त्रिरभ्यासमात्रं विधी-

---

वचनस्य मुख्याह्वानसंबन्धेनाप्युपपत्तेः मुख्यविशेष्यभूताह्वानभावनासंबन्धस्याभ्यर्हितत्वात् त्रिरित्यस्यावघातेऽन्वयानुपपत्त्या अश्रुतमन्त्रपाठक्रियाविषयत्वापत्तेः धातोः साधुत्वपारार्थ्यविशिष्टविधिगौरवाद्यापत्तेः विना कारणमाख्यातस्याचष्ट इत्यर्थलक्षणापत्तेर्नावघाते गौणे विनियोग; किंतु आह्वान एवेत्यभिप्रेत्य सिद्धान्तमाह—**मुख्य एवेति** ॥ आह्वानस्याविहितत्वान्न तदङ्गत्वेन मन्त्रविधिः संभवतीत्याशङ्कामपाकरोति—**मान्त्रवर्णिकेति** ॥ यथा सोमपात्रमगृहीत्वापि सोमभक्षणप्राप्ते"रश्विनोस्त्वा बाहुभ्यां सध्यास"मिति मन्त्रवर्णप्रकाश्यत्वानुपपत्त्या ग्रहणनियमविधिं प्रकल्प्य तत्र मन्त्रविनियोगः कल्प्यते, एवमिहापि तत्प्रकाश्यत्वानुपपत्त्या आह्वाननियमविधिकल्पनया आह्वानस्य विधेयत्वावगमात्तदङ्गत्वेन मन्त्रविधानोपपत्तिरित्यर्थः । **एतेन**—नित्यप्राप्तत्वेऽपि प्रथनादिवदध्वर्युकर्तृकत्वसिद्ध्यर्थमाह्वानस्याप्यत्र विधिरिति न्यायसुधाकारोक्तं—**अपास्तम्**; विधेयान्तरसत्त्वे संभवत्प्राप्तिकायाः क्रियाया विधौ गौरवात्, मन्त्रपाठस्याध्वर्युकर्तृकत्वे पृथक्प्रयत्नानापाये आह्वानेऽध्वर्युकर्तृकत्वस्याप्यर्थतः प्राप्तेश्च । प्रथनस्यतु प्रकाशरूपमन्त्रव्यापारतोऽत्यन्तभिन्नत्वात्क्रियान्तररूपत्वेन मन्त्रस्याध्वर्यवसमाख्ययाऽध्वर्युकर्तृत्वनियमेऽपि न तत्करणत्वेनाध्वर्यवनियमः सिध्यति । आह्वानस्यतु परागमनानुकूलस्वाभिप्रायप्रकाशनरूपत्वात् तस्य चेह मन्त्रव्यापाररूपत्वेन मन्त्रोच्चारयितृव्यतिरिक्तेनानुष्ठातुमेवाशक्यत्वान्मन्त्रस्याध्वर्युकर्तृकत्वेनैव आह्वानस्य तत्कर्तृकत्वसिद्धिरिति वैषम्यान्न तत्सिद्ध्यर्थमपि विधिरावश्यक इत्यर्थः ॥

पत्न्यैवेत्येवकारेणाह्वाननियमनिवृत्तिप्रतीत्याशङ्कां निरस्यति—**पत्न्येवेति** ॥ **नान्येति** ॥ **एतेन**—पत्न्या वाक्यान्तरेण कर्तृत्वेन विधानात्समाख्याप्राप्ताध्वर्युकर्तृकत्वस्य बाधावगतेरध्वर्योरुलूखलकृष्णाजिनानुत्सर्गविधानात्तद्वारान्वारम्भकर्तृत्वेऽपि कर्तृत्वोपचारेण तत्कर्तृकत्वं—**सूचितम्** । **सहायार्थत्वेनेति** ॥ पत्न्या बहुपदार्थानुष्ठानेन श्रान्तस्याध्वर्योरवसरदानेन सहायत्वादन्यपदार्थकालेऽपि तत्प्राप्नोति, तथापि हविष्कृत्त्वेन तदाह्वानस्य हविष्करणार्थत्वप्रतीतेस्तस्य चावघातमारभ्य प्रवृत्तेरवघातकाल एव प्राप्तत्वादनुवाद इत्यर्थः । यद्यप्यवघ्नन्नित्यत्र काललक्षणाऽऽपतति, तथापि "लक्षणहेत्वोः क्रियायाः" इति सूत्रेण शतुः 'शयाना भुञ्जते यवनाः' इत्यत्रेव लक्षणार्थत्वप्रतीतेः अवघातकर्तृत्वावस्थापन्नस्याह्वानकर्तृत्वावगतेरन्वारम्भद्वारा अध्वर्युकर्तृकवर्तमानावघातस्य कालिकसंबन्धेनाह्वानचिह्नत्वप्रतीतेरवघातकाले आह्वयतीत्यर्थात्काललक्षणा शतृप्रत्ययोपात्तलक्षणत्वघटकतयाऽनुशासनशिष्टत्वान्न दोषावहा ॥

**वस्तुतस्तु**—अनुत्सर्गमात्रेणावघातकर्तृत्वासंभवादन्वारम्भद्वारा तदाश्रयणेऽवहन्तौ लक्षणापत्तेर्नायं लक्षणे शतृप्रत्ययः, किंतु हेतावेव । ततश्चावघातार्थमाह्वयतीत्यर्थादाह्वानकर्तृत्वसमानाधिकरणावघातकर्तृत्वं प्रयोजकत्वरूपमेवाश्रयितुं युक्तमित्यवघातफलाह्वानस्यावघातकाल एव प्राप्तेर्विनैव लक्षणामवघातं कारयन्नाह्वयतीत्यर्थे न कश्चिद्दोष इति भावः ॥

**यत्तु**—प्रकाशकाराणामन्वारम्भविधानेनावघातेऽध्वर्युकर्तृत्वोपपादनं—तत्, कस्मिंश्चिदपि सूत्रे पत्न्याऽन्वारम्भविध्यदर्शनादयुक्तमित्युपेक्षितं पूज्यपादैः ॥

**मम तु प्रतिभाति**—त्रिरवघ्नन्निति सिद्धानुवादेनावघाते अध्वर्योः कर्तृत्वाभ्यनुज्ञानादवघातं कुर्वतैवाहूतया पत्न्या द्वितीयावघातानुष्ठानोपपत्तेरेवकारस्य सहायमात्रनिषेधकत्वेनोभयकर्तृत्वाविरोध एव कात्यायनसूत्रसंवादी युक्तः । तावतापि गौणेऽवघाते न मन्त्रविनियोग इति मीमांसकसिद्धान्तस्याक्षतिः । अतएव कातीयानां पूर्वमध्वर्युकर्तृकमवहननमपरं चाह्वानोत्तरं पत्नीकर्तृकं चेत्यनुष्ठानं दृश्यते । एवंच शतृप्रत्ययस्य लक्षणत्वार्थादिकल्पनमपि नाश्रितं भवतीति । आवितुषीभावमवघातानुष्ठाने मध्ये सहायार्थमाह्वानं दृष्टार्थमपि भवतीति ॥

**त्रिरभ्यासमात्रमिति** ॥ सोऽपिच क्रियाभ्यावृत्तिगणनार्थकृत्वसुच्प्रत्ययान्तत्रिशब्दबलादाह्वानक्रियायामेव विधीयते । तत्रच मन्त्रस्य वेदिप्रोक्षणमन्त्रन्यायेन सहकृत्पाठे प्राप्तेऽपि प्रोक्षणवदाह्वानस्य मन्त्रपाठातिरिक्तप्रयत्नानापाद्यत्वेनार्थान्मन्त्रस्यैव त्रिरावृत्तिः फलति । **एतेन**—यत् न्यायसुधाकृता व्यवहितसंबन्धमादाय मन्त्रस्यैव त्रिरावृत्तिविधानमुक्तं तत्—**अपास्तम्**; त्रिरभ्यासस्य शब्दतो व्यवहितस्यापि सुच्प्रत्ययश्रुत्यैव कारकविभक्तिश्रुत्येवाह्वानक्रियासंबन्धलाभादव्यवहितेनापि मन्त्रेण संबन्धानुपपत्तेः । अत आह्वानस्य दृष्टार्थत्वाल्लोकवदेव द्विः त्रिश्चतुर्वापि प्राप्तौ त्रिरभ्यासांशेऽपि नियमविधित्वलाभात्त्रिरभ्यास आह्वाने विधीयत इत्यर्थः ॥

सिद्धान्तमुपसंहरति—**इतीति** ॥ एवंच गौणार्थविनियोगस्य वाक्यकृतस्य लिङ्गेन बाधान्मुख्य एवार्थे विनियोगः । ऐन्द्र्यां तु श्रुत्या लिङ्गबाधाद्गौणार्थे विनियोग इति सिद्धमित्यर्थः ।

प्रयोजनं पूर्वपक्षे पत्नीकर्तृकस्याध्वर्युकर्तृकावघातस्यच विकल्पे सति हविष्कृन्मन्त्रोऽध्वर्युकर्तृकावघाते "अव रक्षो दिव"

यते, त्रिरभ्यासपुंस्त्वविशिष्टावघातसमानकालतैव वाह्वानोद्देशेन विधीयत इति न गौणेऽवघाते विनियोगः ॥३।१८॥

इति तृतीयं हविष्कृदधिकरणम् ॥

( ४ अधिकरणम् । )

**तथोत्थान** ॥ सोमे, "उत्तिष्ठन्नन्वाहाग्नीदग्नीन्विहरे"ति। तथा "व्रतं कृणुतेति वाचं विसृजति।" दर्शपूर्णमासयोः, "प्रणीताः प्रणेष्यन्वाचं यच्छति तां स—हविष्कृता विसृजती"ति श्रुतम्। तत्रापि पूर्ववदेव मन्त्राणां मुख्येऽर्थे विनियोगो नतु गौणयोरुत्थानवाग्विसर्गयोः। प्रबलस्यापि ब्राह्मणवाक्यस्य कालविधायित्वेनाप्युपपत्तौ गौणत्वतात्पर्यग्राहकत्वाभावात्। नच लक्षणा; शतृप्रत्ययस्य कालिकसंबन्धेन लक्षणार्थत्वमङ्गीकृत्य श्रुत्यैवान्वयोपपत्तेः। अतश्चोत्थानकाले विहरणमन्त्रः पठनीय इति कालविधिरेवायम्। व्रतं वृणुतेत्यत्रेतिकरणस्यापि मन्त्रस्वरूपमात्रपरत्वात्कालिकसंबन्धस्यैव संसर्गविधया भानोपपत्तेर्न लक्षणा। हविष्कृद्वाक्ये तृतीयायास्तु वाग्यमापेक्षितावधिसमर्पकत्वेन तदेकवा-

---

इति पत्नीकर्तृक इति व्यवस्था, सिद्धान्ते त्वेकस्मिन्नेव पत्नीकर्तृकावघाते "अव रक्षो दिव" इति मन्त्रः, हविष्कृन्मन्त्रस्त्वाह्वाने इति स्पष्टत्वान्नोक्तम् ॥

॥ इति तृतीयं हविष्कृदधिकरणम् ॥

---

**उत्तिष्ठन्निति** ॥ बहिष्पवमानदेशादुत्तिष्ठन्नित्यर्थः। सामान्यसंबन्धकारिप्रमाणसत्त्वसूचनाय सोम इत्युक्तम्। **विहरेति** ॥ इतिकरणेन प्रभृत्यर्थकेन "बर्हिः स्तृणाहि, पुरोडाशानलंकुरु, पशुं नो देही"त्यन्तस्य संग्रहः। "व्रतं कृणुतेती"तिशब्दो मन्त्रस्वरूपपरः। सौत्रविसर्गशब्देन "वाचं विसृजती"तिवदन्यस्यापि विसर्गस्योपादानसंभवादेकादशे भाष्ये "वाग्विसर्गो हविष्कृता बीजभेदे तथा स्या"दित्यधिकरणे हविष्कृद्ग्रहणं च काललक्षणार्थमित्युक्तम्। तथा "आह्वानमपीति चेत् न कालविधिश्चोदितत्वादि"त्युक्त्वा सूचितत्वाचात्र भाष्येऽनुदाहृतमप्यन्यदुदाहरति—**दर्शपूर्णमासयोरिति** ॥ तां नियमितां वाचं हविष्कृदेहीति मन्त्रपाठकाले विसृजतीत्यर्थः।

तत्र किमनयोर्वचनयोरुत्तिष्ठन्निति वाचं विसृजतीति चोद्दिश्यानयोर्मन्त्रयोर्विधानादनयोर्मन्त्रयोर्गौणोत्थानवाग्विसर्गयोर्विनियोगः, उत मन्त्रयोर्लिङ्गादग्निविहरणव्रतकरणरूपमुख्यार्थे विनियोगः उत्थानव्रतमन्त्रयोः कालार्थत्वेनोपादानमिति संशयं वक्ष्यमाणत्वेनातिदेशिकीं सङ्गतिं पूर्वाधिकरणपूर्वपक्षत्वात्पूर्वपक्षंच स्पष्टत्वादनुल्लिख्याऽऽतिदेशिकसूत्रानुरोधात्सिद्धान्तमेवाह—**तत्रापीति** ॥

पूर्ववदेवेत्यनेन सौत्रतथाशब्दसूचिता आतिदेशिकी सङ्गतिर्दर्शिता। तत्र पूर्वत्र मुख्यक्रियान्तरसत्त्वात्तस्याश्च साधुत्वमात्रार्थत्वे प्रमाणाभावादवघ्नन्नित्यस्य लक्षणां विनापि हेतुत्वाद्यर्थतयोपपत्तेस्त्रिरभ्यासस्यच विधेयान्तरसत्त्वेन प्रबलस्यापि ब्राह्मणवाक्यस्यान्यथोपपत्तिसंभवाद्युक्तो लैङ्गिको विनियोगः, प्रकृतेतु विधेयान्तराभावे उत्तिष्ठन्नितिशतृप्रत्ययस्य लक्षणार्थत्वमङ्गीकृत्य कालस्यैव तव मते विधेयत्वाद्विधौ लक्षणापत्तेरुत्थानस्यच सामर्थ्यात्करिष्यमाणदेशान्तरविहितकार्यार्थत्वेन कृतार्थस्य मन्त्रपाठार्थत्वायोगेन शतृप्रत्ययस्य कारणत्वरूप-

हेतुत्वार्थकत्वासंभवादगत्या फलत्वरूपहेतुत्वार्थकत्वमङ्गीकृत्य मन्त्रपाठस्यैव गौणसामर्थ्येनोत्थानाङ्गत्वं युक्तम्। संभवतिचानुत्थितेनाग्नीनामेधितुं विहर्तुं वा शक्यत्वादुत्थानस्याग्नीन्धनविहरणादिहेतोः स्वातन्त्र्यविवक्षया मुख्यतत्कर्तृत्वोपपत्तेरग्नीच्छब्देनाभिधानम् ॥ नचाध्वर्यूत्थानस्याग्नीध्रकर्तृकाग्नीन्धनादिसाधनत्वायोगात्तन्निमित्तकर्तृत्वविवक्षानुपपत्तिः; विहरेत्यस्य प्रैषत्वे सति "प्रैषेषु पराधिकारा"दिति न्यायेनाध्वर्युकर्तृकताया बाधेऽपीह पूर्वपक्ष इतिकरणरूपवाक्यावगतोत्थानाङ्गत्वेन प्रैषत्वाभावेन आग्नीध्रकर्तृत्वाप्राप्त्या समाख्याप्राप्ताध्वर्युकर्तृकत्वस्यैव प्राप्तेर्बाधकाभावात्। **अतएव**—अग्निविहरणादिसाध्याभावाल्लोटः प्राप्तकालतार्थतामङ्गीकृत्याग्निविहरणस्य प्राप्तः काल इत्यर्थकतया "अग्नीन्विहरे"त्यस्याप्युपपत्तिः ॥ व्रतवाक्येतु शतृप्रत्ययस्याप्यभावादितिकरणस्य वाक्यत्वेन लिङ्गापेक्षया दुर्बलस्यापि ब्राह्मणवाक्यत्वेन प्राबल्याद्युक्तमेव वाग्विसर्गाङ्गत्वम्। तत्रापि यथा भक्षानुवाके "वाग्जुषाणा सोमस्य तृप्यत्वि"ति भक्षयितृगतं तृप्तिकर्तृत्वं तृप्तिहेत्वास्यगतायां वाच्युपचरितं तथा "कृवि हिंसायां" इति कृविधातोर्वाच्यहिंसागतनाशकत्वसाम्याद्गौण्या भक्षणावगतेः यजमानपुरुषगतं व्रतशब्दवाच्यकष्टवृत्त्यर्थपयोयवाग्वादिभक्षणकर्तृत्वं भक्षणहेत्वास्यगतायां वाचि शक्यमुपचरितुम्। बहुवचनंच वाचः शब्दात्मकत्वाच्छब्दस्यच ताल्वादिपृष्ठस्थानेष्वभिव्यक्तेस्ताल्वाद्यधिष्ठानभेदाभिप्रायेणापि शक्यं योजयितुम्। लोटश्च वाचोऽप्रैष्यत्वेन प्रैषार्थत्वासंभवेऽपि पूर्ववदेव प्राप्तकालतार्थताङ्गीकारात् हे वाक् व्रतं भक्षयितुं तव प्राप्तः काल इत्यर्थेन संभवत्येव गौणार्थे वाग्विसर्गे विनियोग इति विशेषाशङ्कया संभाव्यमानं पूर्वपक्षं निराकर्तुमाह—**नतु गौणयोरिति** ॥

**इतिकरणस्येति** ॥ तस्याव्ययत्वेन लुप्तविभक्तिकत्वाच्छक्त्या करणत्वानुक्तेः लक्षणायांच कालिकसंबन्धावच्छिन्नसप्तम्यर्थलक्षणाया एव युक्तत्वात्ताननपेक्षिताङ्गाङ्गिभावपरत्वाश्रयणं युक्तमित्येतन्मन्त्रपाठकाले वाचं विसृजतीत्यर्थ एवेत्यर्थः। **एतेन**—इतिकरणस्य श्रुतित्वमङ्गीकृत्य पूर्वपक्षे श्रुत्या गौणे मन्त्रविनियोग इति न्यायसुधोक्तं—**अपास्तम्**।

क्यतोपपत्तौ वाक्यभेदे प्रमाणाभावादित्थंभूतलक्षणार्थता-वाङ्गीकृत्य कालविधिपरत्वम् । अतश्च तद्वाक्ययोः पाठक्रमावगततत्तन्मन्त्रपाठकाले वाग्विसर्गः कर्तव्य इति सोऽपि तत्र कालविधिरेव ॥ ४ ॥ १९ ॥ इति **चतुर्थमुत्थानाधिकरणम्** ॥

**( ५ अधिकरणम् । )**

**सूक्तवाके** ॥ दर्शपूर्णमासयोः "सूक्तवाकेन प्रस्तरं प्रहरती"ति श्रुतम् । तत्र सूक्तवाकपदवाच्यस्य मन्त्रस्य इष्टदेवताप्रकाशनेन कृतार्थत्वात् प्रस्तरप्रहरणस्य चोपयुक्तप्रस्तरप्रतिपत्तित्वेन कृतार्थत्वात् "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते"तिवत्कालार्थः संबन्धः । तृतीया चेत्थंभूतलक्षणपरा सती सूक्तवाकस्य कालिकसंबन्धेन प्रहरणोपलक्षणत्वेनान्वयं बोधयन्ती नानुपपन्ना । न चैवं लक्षणा; तस्या अपि

---

**इत्थंभूतलक्षणेति** ॥ हविष्कृन्मन्त्रपाठज्ञाप्यत्वस्यैव विसर्गे उपपत्तेर्न स्वातन्त्र्येण तत्र करणतया मन्त्रविधानं युक्तमित्यर्थः । एतच्च इत्थंभूतलक्षणार्थत्वाङ्गीकरणं सहशब्दाभावेऽपि सिद्धान्तोपपत्तिप्रदर्शनमात्रार्थम्, **वस्तुतस्तु**—सहशब्दश्रवणेन तद्योग एव तृतीयोपपत्तेर्मन्त्रपाठसमकालीनत्वरूपसाहित्यस्यैव प्रतीतेः न मन्त्रकरणत्वाशङ्कापीति ध्येयम् । अतश्चोत्तरपदार्थविधिपाठक्रमेण यथोत्थानस्य कालो निर्ज्ञातस्तथैव मन्त्रपाठक्रमेण व्रतहविष्कृन्मन्त्रयोरपि निर्ज्ञात इति तत्र तत्राप्राप्तकालविधानमेवेत्युपसंहरति—**अतश्चेति** ॥ यद्यपि चाह्वानस्य मन्त्रपाठातिरिक्तपृथक्प्रयत्नानापाद्यत्वेनान्यथानुपपत्त्या तत्त्यागार्थं वाग्विसर्गः प्राप्नोत्येवेत्यनुवादत्वमेव युक्तम्, नतु कालविधित्वम्; तथापि तन्मात्रांशे वाग्यमवाधेऽपि तदुत्तरमपि प्रसक्तस्य निवृत्त्यर्थमवधिरूपकालविधित्वमावश्यकम् । यद्यपिच पूर्वत्र कालानुवादादिहच विधेयत्वात्तत्र पूर्वाधिकरणतातिदेशार्थता तथाशब्दोक्ता युज्यते; तथापि गौणे न विनियोगः किंतु मुख्ये इत्येतावता साम्येन तदुपपत्तिरिति ज्ञेयम् ॥ प्रयोजनं पूर्वपक्षे अग्नीन्मन्त्र उत्थानात्पूर्वं प्रयोज्यः । एवं व्रतहविष्कृन्मन्त्रावपि वाग्विसर्गात्पूर्वं प्रयोज्यौ; करणत्वात्, सिद्धान्ते तु उत्थानकाले अग्नीन्मन्त्रः, व्रतहविष्कृन्मन्त्रपाठसमकालं वाग्विसर्ग इत्यादि स्पष्टत्वान्नोक्तम् ॥

**॥ इति चतुर्थमुत्थानाधिकरणम् ॥**

---

**दर्शपूर्णमासयोरिति** ॥ मन्त्रस्य सामान्यसंवन्धबोधकप्रमाणप्रदर्शनार्थमेतदुक्तम् । "इदं द्यावापृथिवी भद्रमभू"दित्यादि "नमो देवेभ्य"इत्यन्तो निगदरूपो मन्त्रः सूक्तवाकस्तस्यच सूक्तवाकत्वमग्रे व्यक्तीकरिष्यते । तेन मन्त्रेण प्रस्तरं दर्भमुष्टिमग्नौ प्रक्षिपतीति वाक्यस्यार्थः ॥ तत्र गौणसामर्थ्यस्य श्रुतिसहायतया विनियोजकत्वेऽभिहिते मुख्यसामर्थ्यस्यापि तत्सहायतानिरूपणेन पूर्वोक्तस्य कालार्थसंयोगस्येहापवादकरणेनच पादाध्यायासङ्गती तथा सूक्तवाकस्य कालोपलक्षणतयाऽन्वयेन कालार्थः संबन्धः होत्राऽस्मिन्मन्त्रे पठ्यमाने तत्पाठकाले प्रस्तरं प्रहरेदिति, अथवा सूक्तवाकस्य करणतयाऽन्वयेन प्रहरणाङ्गमिति संशयं च स्पष्टत्वादनुक्त्वा पूर्वपक्षमेवाह—**तत्रेति** ॥ **इष्टदेवतेति** ॥ आज्यभागानूयाजान्तेषु कर्मसूद्दिष्टा अग्न्यादयो देवता इत्यर्थः । **उपयुक्तेति** ॥ "प्रस्तरे जुहूमासादयति सर्वा वा स्रुच" इति वाक्येन स्रुग्धारणे उपयुक्तप्रस्तरप्रतिपत्तित्वेनेत्यर्थः । कृतार्थत्वमेव ह्याकाङ्क्षाविरहसंपादनेनाङ्गाङ्गिसंवन्धविघटकमित्यतस्तमेव सूत्रोपात्ततया हेतुमाह—**कृतार्थत्वादिति** ॥ एवंच चातुर्थिकन्यायेन कालार्थसंवन्धं दृष्टान्तव्याजेन साधयति—**दर्शपूर्णमासाभ्यामिति** ॥

यद्यप्यत्र दृष्टान्त इव कालार्थसंवन्धबोधकः क्त्वाप्रत्ययो नास्ति; तथापि कृतार्थतैव पूर्वोक्तरीत्या कालार्थतापादने हेतुः, क्त्वाप्रत्ययस्तु कालविशेषे पौर्वापर्यरूपे नियामकमात्रमिति न दोषः । कथं तर्हि करणत्वपरतृतीयोपपत्तिरित्यत आह—**तृतीया चेति** । "इत्थंभूतलक्षणे तृतीये"त्यनुशासनेन गमकत्वरूपलक्षणार्थत्वेन सूक्तवाकवृत्तिगमकत्वाभिधानात्तस्यच तत्कालीनत्वसंपादनेन संभवात्तृतीयोपपत्तिरित्यर्थः ॥

लक्षणत्वार्थत्वे लक्षणापत्तिं निरस्यति—**नचैवमिति** ॥ **एतेन**—यत् ज्ञानजनकत्वरूपलक्षणत्वाभिधानेनैव ज्ञानक्रियाया उपात्तत्वादनुपात्तज्ञानरूपक्रियाद्वारा क्रियासंवन्धस्योपात्तभावनानिरूपितकरणत्वापेक्षया विलम्बितत्वेन कारकविभक्त्यपेक्षया इत्थंभूततृतीयाया दौर्वल्यं पार्थसारथ्यादिभिरुक्तं तत्—**अपास्तम्**; नापि गमकत्वस्याऽकारकत्वात् धात्वर्थान्वयप्रतीतेः प्रधानभूतभावनानिरूपितकारकत्वापेक्षया दौर्वल्यम्; अकारकस्यापि निमित्तादेरनुष्ठाप्यत्वसंवन्धेन भावनान्वयवद्गमकत्वस्याप्येककार्यकारणभावकल्पनालाघवानुरोधेन स्वजन्यभावनाज्ञानविषयतासंवन्धेन भावनान्वयोपपत्तेस्तत्कल्प्यत्वादिति भावः ॥ एवंच पूर्वोक्तप्रैषमन्त्रवदिह प्रकरणे मन्त्रस्यान्वयानुपपत्तेर्न तदङ्गत्वं मन्त्रस्य; नहि "इदं हविरजुषतावीवृधत महो ज्यायोऽकृते"ति मन्त्रभागस्य पुरोडाशसेवया वृद्धोऽग्निः स्वस्मिन्यजमाने तेजोबाहुल्यं कृतवानित्यर्थः प्रहरणे संभवति; भूतनिर्देशानुपपत्तेः, प्रतिपत्तेः देवतानपेक्षणाच्च,

भानुशासनिकत्वेन शक्यत्वात् । अतश्चानुयाजोत्तरं सूक्तवाकपाठात्तत्कालविशिष्टं प्रस्तरोद्देशेन प्रहरणमेव विधीयते, न तु सूक्तवाकस्य प्रहरणाङ्गत्वमिति प्राप्ते—

प्रचुरप्रयोगाल्लाघवाच्च करणत्व एव तृतीयायाः शक्तिर्नतु इत्थंभूतलक्षणे; तस्यानुशासनिकत्वेऽपि लाक्षणिकत्वेनाप्युपपत्तेः । अतश्च श्रुत्या प्रहरणाङ्गत्वस्याप्यवगतेः प्रहरतिर्मान्त्रवर्णिकदेवताकल्पनया आश्रयिकर्मरूपहोमलक्षको न विरुध्यते । अत एव सूक्तवाक् एव याज्येति यागलिङ्गमपि सङ्गच्छते । यद्यपि च नास्य मन्त्रत्वादिवदभियुक्तप्रसिद्धिविषयत्वाख्यं मुख्यं याज्यात्वं संभवति, एवकारोपबद्ध-

---

अतः कालार्थः संबन्ध इत्यभिप्रेत्य पूर्वपक्षमुपसंहरति—**अतश्चेति** ॥ प्रस्तरप्रहरणस्य बर्हिषि प्रस्तरसादनानन्तरं स्रुग्धारणकार्यार्थतया विनियुक्तप्रस्तरप्रतिपत्तिरूपतया विहितस्य स्रुग्धारणकार्यानिष्पत्तेरनिर्ज्ञातकालत्वं व्यतिरेकेण सूचयितुमस्य निर्ज्ञातकालत्वोपपत्त्यर्थमनूयाजोत्तरमित्युक्तम् । अत एवाह—**तत्कालविशिष्टमिति** ॥

यद्यपि गमकत्वेऽपि तृतीयायाः शक्तिः, तथापि प्रहरति भावनाया यथा कारकाकाङ्क्षा न तथा गमकापेक्षया, अत आकाङ्क्षितान्वयसिद्ध्यर्थं करणत्वेनैव कृतार्थस्यापि **नास्ति वचनस्यातिभार इति** न्यायेनान्वयाश्रवणं युक्तम् । किमुत तत्रापि शक्तिकल्पने प्रमाणाभावाल्लक्षणैवेति विना करणं तदाश्रयणं न युक्तमिति चाभिप्रेत्य सिद्धान्तमाह—**प्रचुरेति** ॥ **यत्तु**—प्रहरणभावनायामन्वयायोग्यत्वमुक्तम्, तत् अजुषतेत्यस्य पुरोडाशादिविषयत्वेऽप्यग्न्यादिः पुरोडाशादि सेवितवान् तेन वृद्धोऽग्निस्तेजोबाहुल्यंन कृतवान् ॥ यत्तु यजमान आयुराद्याशास्ते तदनेन प्रत्यक्षनिर्दिष्टेन प्रस्तराख्येन हविषेत्येवमग्रिमेणैकवाक्यतया, अथवा इदंशब्देन पुरोडाशादेर्हुतस्य व्यपदेशानुपपत्त्या प्रत्यक्षनिर्दिष्टप्रस्तरस्यैव परामर्शोपपत्तेरजुषतेति भूतनिर्देशस्य "आशंसायां भूतवच्चे"त्यनुशासनात्सेवनं कुर्वित्यर्थतयोपपादनसंभवादकिंचित्करमित्यभिप्रेत्याह—**अतश्चेति** ॥ एवमुभयविधलिङ्गसंभवे श्रुतिसहायस्य प्राबल्यं सूचयितुं श्रुत्येत्युक्तम् । **ननु** प्रहरणस्य प्रतिपत्तिरूपतया देवतानपेक्षणान्मान्त्रवर्णिकदेवताकल्पनयापि तत्प्रकाशनासंभवात्कथं मन्त्रस्याङ्गत्वसंभव इत्यत आह—**प्रहरतिरिति** ॥ मन्त्रस्य क्रियाप्रकाशनेन तत्संबन्धिप्रकाशनेन वा करणत्वात्तदभावे मन्त्रगतकरणत्वान्यथानुपपत्त्या तदर्थस्याङ्गत्वकल्पनस्यावश्यकत्वेन प्रकृतेऽपि श्रुत्यवगताङ्गतानिर्वाहाय मान्त्रवर्णिकदेवताकल्पनया द्रव्यदेवतासंबन्धाप्रहरतौ देवतोद्देशपूर्वकद्रव्यत्यागांशस्याप्यजहत्स्वार्थलक्षणा फलमुखत्वान्न विरुध्यत इत्यर्थः । त्यागांशं प्रति द्रव्यस्य करणत्वात् प्रस्तरमिति द्वितीयानुपपत्तिं परिहर्तुं आश्रयिकर्मरूपेत्युक्तम् । यथैव स्विष्टकृद्यागस्य प्रक्षेपांशेनोपयुक्तद्रव्यसंस्कारकत्वं त्यागांशेनादृष्टार्थत्वमेवमिहापि त्यागांशेनादृष्टार्थत्वेऽपि प्रक्षेपांशेन तत्प्रतिपत्तित्वात्तदुपपत्तिरित्यर्थः ॥

**अयंचात्र विशेषः**—स्विष्टकृति यजिपदार्थान्तर्गतोद्देशांशस्यानुपयुक्ताग्निस्विष्टकृद्देवताविषयत्वात् तदंशेप्यारादुपकारकत्वमेव, तदीयमन्त्रान्तर्गतोद्देशांशेन त्विष्टदेवतास्मारकत्वेन संस्कारकत्वम्, प्रकृतेतु मन्त्रांशेनेव त्यागांशान्तर्गतोद्देशेनापीष्टानामेव देवतात्वात्संस्कारकत्वमेवेति ॥ यथाच यजमानकर्तृकत्यागविशिष्टोद्देशस्य न यजिवाच्यत्वम्, अपितु मन्त्रेण क्रियमाणस्यैवेति न्यायसुधाकारादीनां लेखनम्; तथा तद्दूषणपुरःसरं यजमानकर्तृकस्यैव तस्य तद्वाच्यत्वं चतुर्थे व्यक्तीकरिष्यते ॥

अत्रच सूक्तवाकस्य करणमन्त्रत्वान्मन्त्रान्तेन कर्मादिः सन्निपात्य इति वचनात् सूक्तवाकपाठानन्तरमेकप्रस्तरद्रव्यकहोमानुष्ठाने अर्थात्तदानन्तर्यरूपकाललाभात्कालार्थतापिच प्रसङ्गाद्भविष्यतीत्यत्र भट्टपादानां सिद्धान्ते उक्तिरिति स्थिते यन्न्यायसुधाकृतो याज्यावत्सूक्तवाकस्यापि होमकालप्रयोज्यत्वेन आहुत्याख्यहूयमानावस्थद्रव्यसंबन्धलक्षणगुणयोगाद्याज्यात्वेन स्तुतिर्युक्तेति ग्रन्थेन प्रस्तरप्रहरणस्य सूक्तवाकपाठयौगपद्याभिधानं, तदयुक्तमेव; आग्नेयादियागेषु प्रत्येकं देवतात्वेनान्वितानामिहापि तथैव देवतात्वाङ्गीकारेण समुच्चयेन ज्योतिष्टोमवदावृत्त्यापत्तावपि "अग्निरिदꣳहविरजुषते"त्यादि तत्तद्देवतावाचिपदोच्चारणे सत्येव तत्तद्देवतोद्देशेन द्रव्यत्यागानुष्ठानासंभवेन यौगपद्यासंभवात् । नहि तदाऽवयवमात्रपाठेनान्त्यावयवपदपाठाभावे समस्तसूक्तवाकजन्यप्रकाशनं सिद्ध्यति॥ **वस्तुतस्तु**—अग्न्यादिदेवताविधिकल्पनायां प्रत्येकमाग्नेयादिषु देवतात्वेनान्वितानामप्यग्न्यादीनां समुच्चितानामेव लाघवाद्देवतात्वकल्पनस्य युक्तत्वात् तावताप्यनन्तरिततत्तद्देवताप्रकाशनरूपप्रयोजनसिद्धेर्न युक्तं प्रत्येकं तत्कल्पनमिति परप्रयुक्तप्रस्तराख्यद्रव्यान्तरानाक्षेपेणैकस्यैव प्रस्तरस्य तावदुद्देशेन मन्त्रपाठानन्तरं सकृत्त्यागानुष्ठानपूर्वकं पूर्वपक्षोपपत्तेरावृत्तौ प्रमाणाभावाद्यौगपद्यमसंभव्यन्न्यायं च । अतएव सूक्तवाकपाठसमसमयमेव "अग्नये इद"मिति त्यागेनांशतः प्रस्तरस्याहुतस्य दाहानुष्ठानं याज्ञिकानामप्यपास्तमिति प्रकाशकारैरेव पराक्रान्तत्वात् नेह विस्तरभयात् प्रपञ्च्यते ॥

प्रकृतमनुसरामः—**मन्त्रत्ववदिति** ॥ एतेन—याज्ञिकप्रसिद्धेरवयवयोगाच्च होतृप्रवचनविहितत्यज्यमानद्रव्यसंबन्धोद्देशाङ्गभूतदेवताप्रकाशकत्वरूपमन्त्रत्वस्याखण्डस्य याज्यात्वस्य क्वाचित्काध्वर्यवविहितमृगारेष्टिदर्शपूर्णमासीययाज्याख्याव्यापकत्वात् तत्रच याज्यापदप्रयोगस्य गौणत्वकल्पने प्रमाणाभावान्निरासः सूचितः ॥ ननु अत्रैव याज्यापदप्रयोगात्प्रसिद्धिविषयत्वसंभव इत्यत आह—**एवकारोपबद्धत्वेनेति** ॥

त्वेनैव लिङ्गस्य याज्यात्वासाधकत्वात्; तथापि यागसाधनत्वमात्रेण याज्यात्वव्यपदेशाद्यागलिङ्गत्वम् । अतश्च श्रुत्या मन्त्रस्य प्रहरणाङ्गत्वेऽपि मुख्यसामर्थ्यस्य नात्र बाधः; प्रहरणेऽपि तदुपपत्तेः ॥ ५ ॥ २० ॥ इति पञ्चमं सूक्तवाकाङ्गताधिकरणम् ॥

( ६ अधिकरणम् । )

**कृत्स्नोपदेशात्** ॥ श्रुत्या लिङ्गोपष्टब्धया प्रहरणाङ्गत्वावगमान्न लिङ्गमात्रेण सूक्तवाकस्येष्टदेवतास्मरणार्थत्वम् । न चात्राविरोधोऽपि; अध्येतृप्रसिद्ध्या समस्तानुवाके सूक्तवाकशब्दस्य रूढत्वेनावयवशो विभज्य विनियोगेऽवयवलक्षणापत्त्या श्रुतिविरोधापत्तेः । नचासौ सुष्टूक्तं वक्तीति व्युत्पत्त्येष्टदेवतावाचिपदसमुदाये यौगिकः; पारायणाध्ययनादौ कतिपयपदप्रयोगेणापि सूक्तवाकपदार्थसम्पत्तिप्रसङ्गेन समस्तानुवाके रूढेरवश्यंभावात् । अस्तुवेष्टदेवताप्रकाशनमानुषङ्गिकं फलम्, प्रहरणमेव तु श्रुतिविनियोगात् सर्वानुवाकप्रयोजकं इति दर्शे पौर्णमासे च सर्वः प्रयोक्तव्य इति प्राप्ते—

प्रबलयापि श्रुत्या लिङ्गस्य बाधे प्रहरतिलक्ष्यहोमान्तर्गतदेवतोद्देशस्यारादुपकारकत्वापत्तेः दृष्टविधया सन्निपत्योपकारकत्वलाभार्थं श्रुतिरेव लैङ्गिकेष्टदेवताप्रकाशनार्थत्वं मन्त्रस्यानुमन्यते । अतएव श्रुतिबलीयस्त्वात्प्रहरणप्रयुक्तः सूक्तवाकः प्रहरणाभावे अननुष्ठीयमानोऽपि विभज्य विनि-

---

एवकारस्याप्रसक्तयाज्यान्तरनिषेधकत्वायोगात्सूक्तवाक एव याज्यावत्प्रशस्त इत्यर्थप्रतीतेरौपचारिकयाज्यात्वकथनादस्य निगदरूपत्वेन याज्या वै निगदा इत्यन्यत्र तेषां याज्यत्वनिषेधाच्च विहितयाज्यात्वानुपपत्तिः । अतएव "अनवानं यजती"त्यादिमुख्ययाज्याधर्माणामिहाप्राप्तिरित्यर्थः । एवंच यदि लैङ्गिकं देवताप्रकाशनार्थत्वमनपेक्ष्य श्रुत्या सूक्तवाकस्य प्रहरणाङ्गता, श्रौतंच प्रहरणाङ्गत्वमनपेक्ष्य लिङ्गेन देवताप्रकाशनाङ्गता बोध्येत ततो विरोधाच्छ्रुत्या लिङ्गबाधे श्रुतिविनियोज्यस्य कथमपि प्रहरणशक्त्यभावाच्छ्रुतेरेव विनियोजकत्वायोगादुभयानुग्रहायेष्टदेवताकीर्तनमात्रेण कृतार्थत्वं सूक्तवाकस्याङ्गीकृत्य कालार्थप्रहरणान्वयोऽभ्युपगम्येत, नत्वेदस्ति; किंतु श्रुत्यनुग्रहार्थे लिङ्गेन प्रहरणाङ्गभूतदेवताकीर्तनद्वारा श्रुत्यवगतप्रहरणाङ्गत्वापेक्षणात्सूक्तवाकस्य च प्रहरणशक्तिसिद्ध्यै श्रुत्या लिङ्गावगतदेवताङ्गत्वापेक्षणाच्छ्रुतिलिङ्गयोस्तुल्यार्थत्वेन विरोधपरिहारोपपत्तेर्न विरोधपरिहारायेष्टदेवताकीर्तनमात्रेण कृतार्थत्वमङ्गीकृत्यान्यत्र विनियोगानर्हत्वात्कालार्थताऽभ्युपगन्तव्येत्यभिप्रेत्य सिद्धान्तमुपसंहरति—**अतश्चेति** ॥ प्रयोजनं पूर्वपक्षे प्रहरणमात्रानुष्ठानम् । सिद्धान्ते त्विष्टदेवतोद्देशेन त्यागस्यापीत्यादि स्पष्टत्वान्नोक्तम् ॥

॥ इति पञ्चमं सूक्तवाकाङ्गताधिकरणम् ॥

---

पूर्वाधिकरणे श्रुतिलिङ्गाविरोधेनैन्द्रीवच्छ्रुतिविनियोज्यत्वेऽपि मुख्यार्थे विनियोगस्य साधितस्येह केषांचित्पदानामसमवेतार्थत्वादसंभवेनाक्षिप्य समाधानादाक्षेपिकीमनन्तरसङ्गतिमुत्सर्गाधिकरणप्रसक्तमुख्यार्थविनियोगस्य स्थापनात्पादसङ्गतिं, तथा पौर्णमास्याममावास्यायां च प्रहरणानुष्ठाने सति पौर्णमास्यामप्यमावास्यादेवतावाचिपदयुक्तस्य सर्वस्य सूक्तवाकस्य पाठ उत तत्तत्कालीनप्रयोगे तत्तद्देवतावाचिपदानामप्रयोगेण पाठ इति संशयं, अतएव पूर्वोदाहृता एव विचाराद्विषयवाक्यं च स्पष्टत्वादनुक्त्वा पूर्वपक्षमेवाह—**श्रुत्येति** ॥ प्रबलप्रमाणेन प्रहरणाङ्गत्वेनैव निराकाङ्क्षस्य सूक्तवाकस्येष्टदेवताप्रकाशनविषये लिङ्गेन श्रुतिकल्पनानुपपत्तेर्नाविरोधेन देवताप्रकाशकत्वेऽपीष्टदेवताप्रकाशनाङ्गत्वम्, येन तत्तद्देवताप्रकाशनरूपप्रयोजकाभावात्तत्तद्देवतावाचिपदलोपेन कालव्यवस्थया मन्त्रपाठः प्राप्नुयादित्यर्थः । अतएव उत्तमप्रयाजस्विष्टकृन्मन्त्रयोर्निष्कृष्य यथालिङ्गं प्रयोगसिद्धेरिहत्य सिद्धान्तन्यायेनैव प्रसाधनीयत्वेऽपि श्रुतिविरोधहेतुकपूर्वपक्षस्य तत्रासंभवादनुदाहरणत्वमिति ध्येयम् ॥ **वस्तुतस्तु**—विरोध एवास्तीत्याह—**नचेति** ॥

**प्रहरणमेव त्विति** ॥ विनियोजकप्रमाणद्वयसत्त्वे प्रबलप्रमाणप्रमितस्यैव शेषिणः प्रयोजनकल्पनौचित्यं तुशब्देन सूचितम् । ततश्चायुरादिवदिष्टदेवताप्रकाशनस्यानुषङ्गिकत्वेऽपि प्रहरणस्येष्टदेवतापदसामानाधिकरण्येन सूक्तवाकं प्रति प्रयोजकत्वात्तत्सत्त्वे संपूर्णसूक्तवाकपाठोऽविकल इत्यर्थः ॥

यदनेन हविषेति मन्त्रे प्रत्यक्षनिर्दिष्टस्य प्रस्तरहविष आयुरादिफलस्य च निर्देशेनैकदेशपाठस्य साकाङ्क्षत्वेनायुक्तत्वाच्च तदंशे होमस्य प्रयोजकत्वेऽपीष्टदेवताप्रकाशनस्यापि मन्त्रलिङ्गाधीनत्वात्सन्निपत्त्योपकारकत्वकल्पनाभूलत्वात् विभज्य विनियोगांशमात्रे प्रयोजकत्वमात्रं कल्प्यते, नतु होमाभावेऽपि सूक्तवाकपाठविषये इत्यभिप्रेत्याह—**अत एवेति** । अतएव अपूर्वे अवभृथे प्रहरणाभावे आज्यभागाद्यङ्गेष्टदेवताप्रकाशनार्थतया न सूक्तवाकपाठ इति भावः । **एतेन**—"परमार्थतस्तु प्रहरणाङ्गत्वोपदेशात्प्रक्रियमाणप्रस्तरप्रकाशनप्राधान्यावगतेर्नार्थतोऽपि वाक्यभेद" इति न्यायसुधोक्तौ "तथा सति प्रस्तरप्रकाशनतात्पर्यकत्वेन प्रहरणप्रयुक्ततापत्तेस्तस्य च सूक्तवाकशब्देन पुरोडाशकपालवद्देवताप्रकाशनतात्पर्यकत्वेन तत्प्रयुक्तस्यैव सतो विनियोगेन सिद्धान्तेऽनिष्टत्वादि"ति प्रकाशकारैर्दूषणमापाद्य इदमायुक्तप्रस्तरजोषणकर्तृतया प्राधान्येन सकलप्रयोगसमवेतेष्टदेवताप्रकाशन एव तात्पर्यं तदविघातेनैव प्रहरणेऽपि विनियोगात् देवताकल्पकत्वमित्युक्तं—**परा-**

योगांशे इष्टदेवताप्रकाशनरूपलैङ्गिककार्यस्यैव प्रयोजकत्वमनुमन्यते।

नचैवं सूक्तवाकशब्दस्यावयवलक्षणार्थत्वापत्तिः; सूक्तवाकपदस्य सुष्ठु उक्तं वक्तीति व्युत्पत्त्या इष्टदेवताप्रकाशकमन्त्रविशेषे योगरूढत्वात्। तेन यत्र यावत्यो देवता इष्टाः प्राकृत्यो वैकृत्यो वा तत्र तावानेव सूक्तवाकः। अतश्च सू-

**स्तम्;** तुषोपवापानुष्ठानात् कालान्तरीणकपालोपादानप्रयोजकत्वस्य पुरोडाश इवेहापि तदापत्तिवारणाय इष्टदेवताप्रकाशनप्रयुक्तस्य सूक्तवाकस्य प्रहरणप्रयोज्यत्वावश्यकतया प्रहरणसंबन्धिद्रव्यप्रकाशकत्वेन प्रहरणप्रयोजकत्वस्याकामेनापत्तेः। अन्यथा यथाशक्ति प्रयोगे प्रस्तरहोमाभावेऽपि अनूयाजोत्तरमिष्टदेवताप्रकाशनानुरोधेन सूक्तवाकपाठापत्तेः। अतो यथैव दर्शपूर्णमासाप्रयुक्तस्यापि भेदनहोमस्य भेदनप्रयोज्यत्वान्नैकतरेण विना तदनुष्ठानमेवं प्रहरणप्रयुक्तसूक्तवाकान्तर्गतकतिपयपदजन्येष्टदेवताप्रकाशनस्यैव प्रयोजकत्वमादाय सूक्तवाकशब्दनिर्देश्यत्वोपपत्तेः प्रहरणस्यापि चेष्टदेवताप्रकाशनप्रयुक्तेरेव प्रयोजनत्वमित्यङ्गीकारात् अन्योन्यनियमसिद्धिः। पुरोडाशकपालेतु तुषोपवापकालीनपुरोडाशोपादानप्रयुक्तत्वासंभवात् पुरोडाशकपालपदे सिद्धवन्निर्देशप्रतीतेः तुषोपवापं विनाऽपि प्रयुक्तत्वसिद्धिरिति वैषम्यम्। अतएव यदंशे प्रयोजकत्वं अन्यतः सिध्यति न तदंशे अन्यतरस्यापि प्रयोजकत्वं कल्प्यते, गौरवादतो विभज्यविनियोगांशे इष्टदेवताप्रकाशनस्य प्रयोजकत्वम् अनुष्ठानांशे प्रहरणस्येति न कोऽपि विरोधः। एवंस्थिते "अतश्चेष्टदेवताप्रकाशनोपजीवित्वादप्रयोजकं प्रहरणमि"ति वार्तिकमपि इष्टदेवताप्रकाशनोपजीवित्वादिति हेतूपादानाद्विभज्यविनियोगांश एव प्रयोजकत्वाभावाभिप्रायेण व्याख्येयम्। नहि सूक्तवाकशब्दात् प्रतीयमानमिष्टदेवताप्रकाशनप्रयुक्तत्वमपह्नोतुं शक्यम्; श्रुत्यैव पूर्वोक्तरीत्या अनुमतत्वादित्याशयः॥

अत्रच "प्रकरणाविभागादुभे प्रति कृत्स्नशब्द" इति सूत्रस्वारस्येन सूक्तवाकपदस्य रूढ्यभ्युपगमेन प्रयोगद्वयवर्तिप्रहरणद्वयोद्देशेन कृत्स्नसूक्तवाकविधानेऽपि 'एकैकप्रहरणे अवयवशः प्रयोगसिद्धिरि'ति श्रुतिविरोधपरिहारमाशङ्क्य 'याज्यादिपदे लक्षणापत्तेः समुदायस्य फलसाधनत्वायोगात् समुदायिनामेव फलं प्रत्युपादेयतया विवक्षितसाहित्यानां साधनत्वेऽपीतिकर्तव्यतांशे उद्देश्यत्वेनाविवक्षितसाहित्यानामन्वयात् प्रत्येकमेवेतिकर्तव्यतया प्रयाजादीनामिव प्रहरणस्यान्वये सूक्तवाकस्यापि तदङ्गस्य प्रत्येकमेव अन्वयप्राप्तौ कालैक्यात् त्रयाणामर्थे प्रहरणतन्त्रतया तन्त्रेणैवानुष्ठानप्राप्तेरवयवशः प्रयोगासिद्धे'रिति भाष्यकारेण प्रदूष्य, देवतापदानां परस्परान्वयाभावेनैकार्थप्रतिपादकत्वासंभवात् नैकः सूक्तवाकोऽपि त्वदभितस्तन्त्रपदापेता एकैकदेवतापदभिन्नाः बहवः सूक्तवाकाः, अतश्च विभक्तस्यैव सूक्तवाकस्य तृतीयया प्रहरणाङ्गत्वात् प्रातिपदिकतृतीयाश्रुत्योरविरोधे सति एकवचनस्य सूक्तवाकसामान्याभिप्रायेणोपपत्तिरिति तस्मिन् काले यावदपेक्षा तस्मिन्काले तावद्देवतावाचिपदयुक्तस्यैव सूक्तवाकत्वात् तावन्मात्रेण प्रहरणानुष्ठाने वैगुण्याप्रसक्तेरिष्टदेवताप्रकाशनरूपलैङ्गिककार्यानुरोधेनैकप्रहरणप्रयोगतन्त्रपदानां सकृत्पाठेऽपि सूक्तवाकत्रयपाठोपपत्तिरिति कृतं विरोधपरिहारं वार्तिककारो अदूषयत्। यद्यपि प्रत्येकपदानां नैकार्थ्याभिधायकत्वम्; तथापि "यदनेन हविषाशास्ते" इत्येकवाक्यतयैकप्रयोजनकत्वेनैकार्थत्वम्। तत्र चेष्टदेवताप्रकाशनस्यैव प्रयोजकत्वादर्थतः प्राधान्यम्। तथापि पूर्वोक्तरीत्या प्रहरणस्यापि अङ्गित्वेन शब्दतोऽर्थतश्च प्राधान्यसत्त्वादेकप्रयोजनत्वोपपत्तिः। यदिच तत्तद्देवताप्रकाशनानामेव शब्दतः प्राधान्यमङ्गीकृत्य नानावाक्यत्वमिष्येत, ततो "या ते अग्न" इत्यादिवदभितः तन्त्रपदानामप्यनुषङ्गेण पृथक्पाठापत्तिः। सूक्तवाकेनेत्येकवचनबलात् अनियमेनैकस्यैव सूक्तवाकस्य श्रुत्या विनियोगापत्तेः तदंश एव सन्निपत्योपकारकत्वलाभार्थमिष्टदेवताप्रकाशनार्थत्वोपपत्तेः; सूक्तवाकत्रयपाठे प्रमाणाभावात् यावत् प्रधानत्रयदेवताकत्वानुपपत्तिश्च। अतो वैश्वानरवाक्यवत् उपक्रमोपसंहारैक्येनैकवाक्यत्वान्नानावाक्यत्वेन सूक्तवाकबहुत्वासिद्धेः समुदाय एव सूक्तवाकत्वात् प्रातिपदिकश्रुतिविरोधे अवयवशः प्रयोगो दुर्निवार इति। एवंच—"विधौच समुदाये च तोयशब्दो यथेष्यते। संसर्गिद्रव्यरूपत्वात् सूक्तवाकपदे तथा"॥ इति वार्तिकतात्पर्यमनुसंधाय श्रुतिविरोधं परिहरति—**सूक्तवाकपदस्येति**॥ **उक्तमिति**॥ आज्यभागादीष्टदेवतामित्यर्थः। **एतेन**—अर्धेन्द्राणि जुहोतीतिवत् अग्निसंबोध्यत्वं सूक्तवागसीत्यभिधानात् सूक्तवाकपदघटितत्वेन सूक्तवाकत्वस्य मन्त्रे संभवेऽपीह मन्त्रान्तर्गतपदप्रकाश्यार्थमादाय योगस्यान्तरङ्गतया संभवतस्त्यागेन पदघटितयोगस्यावहिरङ्गस्याश्रयणं न युक्तमिति—**सूचितम्;** अतश्चेष्टदेवताप्रकाशनरूपकार्यानुरोधेन इष्टदेवताप्रकाशकपदमात्रोच्चारणेनानिष्टदेवतावाचिपदानुच्चारणे सूक्तवाकत्वानुपपत्त्या सिद्धे सूक्तवाकत्वानपायान्न सूक्तवाकपदश्रुतिविरोधः, प्रत्युतानपेक्षितानिष्टदेवतापदोच्चारणे अनुपतेत्युद्दिष्टरूपोक्तवचनस्यानृततया दुरुक्तवाक्यत्वापत्तिरित्यर्थः। **तेनेति**॥ यथा "आशास्तेऽयं यजमानोऽसा"वित्यादेः सर्वनामातिदेशद्वारा आम्नातदेवदत्तादिनामपूरितस्य मन्त्रस्य यथायुक्तिसहितपाठेन कार्त्स्न्यावधारणा, तथेहापि युक्तिसहितपाठेन कृत्स्नसूक्तवाकावधारणया तावानेव सूक्तवाकः पठनीय इत्यर्थः। **तदुक्तं वार्तिके**—"तेन त्रिधैव मन्तव्यः सूक्तवाकः प्रतिष्ठितः। स्वाध्याये कर्मकालेच प्रकृतौ विकृतावपि। सर्वप्राकृतदैवत्यः स्वाध्याये तावदिष्यते। निष्कृष्टदेव-

क्तवाकप्रातिपदिकश्रुत्यनुरोधेनापि लिङ्गाबाधः । नचाध्ययनादौ योगबाधात् रूढिमात्रकल्पना; तत्र तदानीन्तनवैदिकप्रसिद्ध्यनुरोधेन दार्शपूर्णमासिकदेवतापदसमुदाययुक्त एव मन्त्रे निरूढलक्षणाङ्गीकारात्, अश्वकर्णादौ तु शक्यसंबन्धप्रतीत्यभावात् क्लृप्तावयवशक्तिबाधेनातिरिक्तशक्तिकल्पनमिति विशेषः । प्रयोजनं विभज्य विनियोगः ॥ ६ ॥ ॥ २१ ॥ इति षष्ठं सूक्तवाकविभज्यविनियोगाधिकरणम् ॥

( ७ अधिकरणम् । )

लिङ्ग ॥ काम्येष्टिकाण्डे इन्द्राग्न्यादिदेवत्याः काम्येष्टयः समाम्नाताः, तेनैव क्रमेण मन्त्रकाण्डे तत्तल्लिङ्गा एव काम्ययाज्यानुवाक्याकाण्डमित्येवं समाख्याता याज्यानुवाक्यामन्त्राः समाम्नाताः । ते लिङ्गादिन्द्राग्न्यादिदेवत्यकर्ममात्राङ्गं, नतु दुर्बलक्रमसमाख्यानुरोधेन काम्येष्टिमात्राङ्गम् । नच सामान्यसंबन्धबोधकप्रमाणाभावे लिङ्गमात्रेण विनियोगायोगः; मन्त्रगतप्रयोजनाकाङ्क्षासहकृतलिङ्गेन सामान्यसंबन्धबोधकप्रमाणाभावेऽपि इन्द्राग्न्यादिदेवताप्रकाशने मन्त्रविनियोगोपपत्तेः । नच—इन्द्राग्निस्वरूपे आनर्थक्यादपूर्वसाधनत्वलक्षणार्थं क्रमाद्यपेक्षेति—वाच्यम्; इन्द्राग्न्यादिदेवतानां जुहूवत्क्रत्वव्यभिचरितत्वेन लक्षणोपपत्तेः, व्यभिचारित्वेऽपि वा लौकिकस्याग्न्यादेर्वैयर्थ्यादेव वारणोपपत्तौ परिशेषादेवापूर्वीयत्वोपस्थितेः । अतो लिङ्गमात्रेण क्रमसमाख्ययोर्बाधात्सर्वार्थत्वमिति प्राप्ते—

तामध्यः प्रकृतौ समुदाययोः । सूर्यादिपदमध्यस्थ विकृताववधार्यते” इति ॥ योगबाधादिति ॥ अध्ययनादिकाले इष्टत्वाभावेन फलोपहितेष्टदेवताप्रकाशकमन्त्रत्वाभावेन योगबाधात्तदर्थं स्वरूपयोग्यतामात्रेण शक्त्यङ्गीकारे चानिष्टदेवताप्रकाशकपदानामपि योग्यतामात्रेण प्रयोगोपपत्तेरध्ययनादिकाले सर्वसूक्तवाक एव तत्प्रसिद्धेः रूढिकल्पनमावश्यकमित्याशङ्कार्थः । अश्वकर्णादाविति ॥ अश्वकर्णादिशब्द इत्यर्थः ॥

तस्मात् श्रुतिविरोधाभावात् उपजीव्यत्वेन मुख्यसामर्थ्यस्यापि युक्तं विनियोजकत्वमभिप्रेत्य प्रयोजनमाह—प्रयोजनमिति ॥ तत्तत्कालीनप्रधानाङ्गतया प्रहरणानुष्ठाने तत्कालीनप्रधानसंबन्धिदेवतावाचकपदयुक्तः सूक्तवाकः तद्भिन्नकालीनप्रधानसंबन्धिदेवतावाचिपदोद्धारेण पठनीय इत्यर्थः । सिद्धान्तप्रयोजनोक्त्या पूर्वपक्षे व्यतिरेकेण पौर्णमास्याममावास्यायां वा कृत्स्नस्य प्रयोजनमिति प्रयोजनमर्थात् सूचितम् ॥

यत्तु—प्रकाशकारैः पूर्वपक्षे सूक्तवाकस्य प्रहरणप्रयुक्तत्वात् प्रस्तरस्य नाशदोषापहारेष्वप्रयोगः, सिद्धान्तेतु इष्टदेवताप्रकाशनप्रयुक्तत्वात् प्रयोग इति प्रयोजनान्तरमुक्तम् । तत्प्रस्तरनाशादिषु आज्येन होमानुष्ठानस्य सिद्धान्त इव पूर्वपक्षेऽपि तुल्यत्वेन प्रयोजकहोमसत्त्वात् प्रयोगोपपत्तेः प्रस्तरहोमाभावे अवभृथे इष्टदेवताप्रकाशनमात्रानुरोधेन तदनुष्ठानस्य सिद्धान्तेऽप्यदर्शनात् अयुक्तमिति कौस्तुभे, अत्रापिच होमाभावेऽपि इष्टदेवताप्रकाशनस्य सूक्तवाकपाठविषये प्रयोजकत्वनिरासोपपादनव्याजेनैव सूचितम् ॥

॥ इति षष्ठं सूक्तवाकविभज्यविनियोगाधिकरणम् ॥

---

काम्येष्टय इति ॥ “ऐन्द्राग्नमेकादशकपालं निर्वपेत् यस्य सजाता वीयुः” । “अग्नये वैश्वानराय द्वादशकपालं निर्वपेत् रुक्काम” इत्यादिवाक्यविहिता इत्यर्थः ॥ सजाता ज्ञातयो विप्रतिपन्ना भवेयुरितिवीयुरित्यस्यार्थः । तत्तल्लिङ्गा एवेति ॥ यद्देवेष्टिषु चिह्नमिन्द्राग्न्यादिदेवताशब्दस्तदेव चिह्नं येषु तादृश इत्यर्थः । याज्यानुवाक्यामन्त्रा इति ॥ इन्द्राग्नी रोचनादिव इत्यादय इत्यर्थः ॥ वक्ष्यमाणनियतव्यवस्थोपपादकतया क्रमसमाख्याशब्दयोरुपादानम् । तत्र लिङ्गविनियोगविचारात् पादाध्यायसङ्गती पूर्वत्र श्रुतेः लिङ्गसापेक्षत्वे उक्ते प्रसङ्गादिह लिङ्गस्याप्यन्यप्रमाणसापेक्षत्वप्रतिपादनात् प्रासङ्गिकीमनन्तरसङ्गतिंच तथा किमेता लिङ्गादिन्द्राग्निदेवत्यनित्यकाम्यकर्ममात्राङ्गमुत पूर्वोक्तकाम्येष्टिमात्राङ्गम् क्रमसमाख्याभ्यामिति संशयं च स्पष्टत्वादनुक्त्वा पूर्वपक्षमाह—तथेति ॥

स्वाध्यायविध्यध्यापितस्य मन्त्रजातस्य प्रयोजनाकाङ्क्षत्वात् आकाङ्क्षासहकृतेन योग्यतारूपेण लिङ्गेन मन्त्रस्येन्द्राग्निप्रकाशनार्थत्वोपपत्तेः लिङ्गस्य सामान्यसंबन्धबोधकप्रमाणापेक्षाभावेन क्रमसमाख्याभ्यां नियतव्यवस्था सिध्येत् । नहि लिङ्गं सामान्यतः क्रतुसंबन्धेऽवगत एव द्वारविशेषे विनियोजकमित्यत्र किंचिन्नियामकमस्ति । श्रुतिवदेव पूर्वं क्रतुसंबन्धानवगमेऽपि आकाङ्क्षासहकृतलिङ्गमात्रेण विनियोगोपपत्तेरित्यर्थः । देवतात्वस्य यागैकनिरूपितत्वात् विहितत्वघटितत्वेन अलौकिकत्वादव्यभिचरितक्रतुसंबन्धमुपपादयति—इन्द्राग्न्यादीति ॥ देवतात्वस्य अलौकिकत्वेऽपि तेन रूपेण मन्त्रेऽप्रकाशनादधिष्ठानमात्रस्य चेन्द्राग्न्यादेः मन्त्रार्थवादादौ यागं विना स्वर्गलोकादिस्थत्वेन प्रतिपादनाल्लौकिकत्वावगतेः नाव्यभिचरितत्वमित्यभिप्रेत्याह—व्यभिचारित्वेऽपि वेति ॥ मन्त्रार्थवादानामन्यपरत्वेनेन्द्रादीनां स्वर्गादिस्थत्वे प्रमाणाभावोऽपिवेत्यनेन सूचितः । परिशेषादेवेति ॥ इन्द्रादिपदात्तद्धितेन क्रतव्यभिचारित्वेनैव देवतात्वप्रतीतेः स्मारकविधया क्रतूपस्थित्याऽपूर्वसाधनत्वोपस्थितिरित्यर्थः ॥

एवमपूर्वसाधनत्वोपस्थित्यर्थं सामान्यसंबन्धबोधकप्रमाण-

आकाङ्क्षाभावे योग्यतारूपस्य लिङ्गस्य विनियोजकत्वानुपपत्तेर्मन्त्रगतप्रयोजनाकाङ्क्षायाश्च सर्वमन्त्राणां वाचस्तोमे विनियोगेन निराकाङ्क्षतया अभावान्न लिङ्गमात्रात् सर्वार्थत्वोपपत्तिः। अतश्च वाक्यप्रकरणादिना सामान्यसंबन्धबोधकप्रमाणेन तत्तदाकाङ्क्षोत्थापनात्तत्तत्क्रतुसंबन्धेऽवगते द्वारविशेष एव लिङ्गादवगम्यते। नच वाचस्तोमीयवाक्येन प्रकरणादिबाधः; मन्त्रविशेषविषयाणां तेषां मन्त्रपाठकालोत्पन्नमन्त्रप्रयोजनाकाङ्क्षावेलायामनुपस्थितेन तेन वाक्येन बाधायोगात्। नचैवं प्रबलेन विनियुक्तस्यापि दुर्बलेन विनियोगे उत्कृष्टस्यापि पूषानुमन्त्रणमन्त्रस्य प्रकरणेन गौणेऽर्थे विनियोगापत्तिः; प्रमाणद्वयस्याप्येकविषयत्वान्मन्त्रप्रयोजनाकाङ्क्षावेलायां प्रबलप्रमाणस्योपस्थितत्वाच्च बाधकत्वोपपत्तेः। अतश्च प्रकृते बाधायोगात्क्रमसमाख्यानुरोधात् काम्येष्टिविषयत्वमेव मन्त्राणाम्। नचान्यत्राकाङ्क्षोत्थापकं किंचिदस्ति; अव्यभिचरितक्रतुसंबन्धादेराकाङ्क्षोत्थापकत्वे प्रमाणाभावात्।

वस्तुतस्तु नात्राव्यभिचारोऽपि; जुह्वादीनां हि न तत्त्वेनान्यत्र कारणतेति तस्या युक्तः क्रतुनाऽव्यभिचारितः संबन्धः, देवतारूपस्याग्न्यादिशब्दस्य तु आनुपूर्वीविशिष्टवर्णत्वेन क्रतुं प्रतीव स्वार्थप्रतिपादनं प्रत्यपि कारणत्वान्नाव्यभिचरितक्रतुसंबन्ध इति वैषम्यम्। अतश्च व्यभिचारात् अव्यभिचारेऽपि वाऽऽकाङ्क्षोत्थापकत्वानुपपत्तेर्नाऽन्यत्र विनियोगः। अतएव स्वारसिकी आकाङ्क्षा यत्र न निवर्तते यथाऽर्थज्ञाने उपनिषज्जन्यात्मज्ञाने वा, तत्र आकाङ्क्षोत्थापनप्रयोजनाभावात् सामान्यसंबन्धबोधकप्रमाणं विनापि भ-

---

सापेक्षत्वं लिङ्गे प्राचीनोपपादितं व्यर्थं सूचयित्वा मन्त्राणामाकाङ्क्षोत्थापकत्वेन तदपेक्षत्वं स्वयं दर्शयन् सिद्धान्तमाह— **आकाङ्क्षाभाव इति** ॥ वहनयोग्यस्यापि पुंसो नैराकाङ्क्ष्ये सति वहने विनियोगादर्शनाद्योग्यतामात्रस्य आकाङ्क्षाभावे विनियोजकत्वानुपपत्तेरित्यर्थः। वाचस्तोमपदं ब्रह्मयज्ञादेरप्युपलक्षणम्। **वाक्यप्रकरणादिनेति** ॥ तत्र वषट्कारादिमन्त्राणाम् "एष वै सप्तदश" इति वाक्यम् लवनमन्त्राणां प्रकरणं प्रकृते क्रमसमाख्योभयं पूषानुमन्त्रणादौ समाख्यामात्रमिति विवेकः। इदमेव सामान्यसंबन्धबोधकप्रमाणसापेक्षत्वं लिङ्गस्य, श्रुतेस्तु स्वत एव तदुत्थापकत्वात् तदनपेक्षेत्यर्थः। **मन्त्रविशेषेति** ॥ सामान्यविशेषभावन्यायेनापि विपरीतबाधकतासूचनाय विशेषपदोपादानम्। **दुर्बलेनेति** ॥ आकाङ्क्षोत्थापनेनेति शेषः ॥ **उत्कृष्टस्यापीति** ॥ समाख्यासहकृतमुख्यलिङ्गेनेति पूर्वं शेषः। **प्रमाणद्वयेति** ॥ वाचस्तोमविनियोजकवाक्यस्य मन्त्रप्रयोजनाकाङ्क्षावेलायामनुपस्थितत्वेन बाध एव, नतु तेन दुर्बलयोरपि बाधः, इह तदानीमेव उपस्थितप्रमाणद्वयसमावेशे प्रबलेन दुर्बलस्य बाध एवेति न तदाकाङ्क्षोत्थापकत्वसंभव इति विशेष इति भावः। **नचान्यत्रेति** ॥ क्रमप्राप्तकाम्येष्टिव्यतिरिक्तकर्मणीत्यर्थः ॥ **प्रमाणाभावादिति** ॥ प्रकरणपाठादौ प्रकरणपठितेन मया कथमस्योपकर्तव्यमित्यपेक्षोत्पत्त्यापि अव्यभिचरितक्रतुसंबन्धस्य व्याप्तिरूपतया तस्यानैयत्यबाधकत्वेऽपि आकाङ्क्षोत्थापकत्वे प्रमाणाभावः। नहि वह्निविषये निराकाङ्क्षस्य वह्न्यनुमितौ जातायां तद्विषये व्याप्तिमात्रेणाकाङ्क्षा उपजायते। अतो न तस्याकाङ्क्षोत्पादकत्वसंभव इत्यर्थः। अव्यभिचरितक्रतुसंबन्धस्वरूपस्यान्यथा दुरुपपादत्वात् अपूर्वमात्रनिरूपितसाधनतावच्छेदकीभूतधर्मावच्छिन्नस्यापूर्वाव्यभिचरितत्वरूपतयैवावश्यनिर्वचनीयस्यापि इहासंभव इत्याह—**वस्तुतस्त्विति** ॥ **स्वार्थप्रतिपादनं प्रत्यपीति** ॥ तस्य तं प्रत्यकारणत्वेऽर्थप्रतिपादकत्वाभावेन प्रातिपदिकसंज्ञानुपपत्तिः। जुहूशब्दस्य तत्र कारणत्वेऽपि क्रतुं प्रत्याकारविशेषविशिष्टार्थस्यैव नियमेन कारणत्वमिति वैषम्यम्। अतएवात्रार्थस्य अपूर्वसाधनत्वकल्पने प्रमाणाभावान्न तद्द्वारापि पदस्य अपूर्वाव्यभिचार इत्यर्थः। **स्वारसिकीति** ॥ स्वत एव साकाङ्क्षस्य नाकाङ्क्षोत्थापकप्रमाणापेक्षेत्यर्थः ॥

**उपनिषदिति** ॥ अत्रच—"अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवती"त्युपनिषज्जन्यं मात्राशब्दवाच्यधर्माधर्मविकारशरीरसंबन्धरहितसांसारिककर्तृभोक्तृनित्यात्मज्ञानमेकम्। तथा "अपहतपाप्मा विजरो विमृत्युः विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प" इत्याद्युपनिषत्क्तपापादिदोषराहित्यकाम्यमानफलप्राप्तिप्रयत्नानपेक्षसंकल्पमात्राधीनसिद्धिरूपगुणविशिष्टात्मप्रतिपादनपूर्विकया "सोऽन्वेष्टव्यः स विजिज्ञासितव्य" इति श्रुत्या विहितं वेदान्तवाक्यावधारणात्मकजिज्ञासोपेतं तदवधारितात्मस्वरूपानुचिन्तनाख्यान्वेषणात्मकमपहतपाप्मत्वादिगुणविशिष्टात्मज्ञानं द्वितीयम्। तथा आत्मानमुपासीतेत्यादिविधिविहितं निर्गुणात्मविषयमपरोक्षसाक्षात्कारपर्यन्तमात्मज्ञानं तृतीयमिति यद्यप्यात्मज्ञानं त्रिविधम्; तथापि द्वितीयतृतीययोरुपासनारूपात्मज्ञानयोः कर्मणि पुरुषे वा दृष्टप्रयोजनाभावाददृष्टापेक्षायां श्रुत्याद्यभावेन क्रत्वङ्गत्वानुपपत्तेः "स सर्वांश्च लोकानाप्नोति सर्वांश्च कामानवाप्नोति तरति शोकमात्मविदि"त्यादिवाक्यशेषसमर्पितं द्वितीयात्मज्ञानस्य फलम्, तथा "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते नच पुनरावर्तते" इति वाक्यशेषसमर्पितं फलं तृतीयात्मज्ञानस्येति व्याकरणाधिकरणे आचार्यैः पुरुषार्थत्वस्य प्रतिपादनादिह प्रथममेवात्मज्ञानं ग्राह्यम्। तस्य क्रत्वङ्गत्वं केवललिङ्गादेव। यद्यप्यत्रापि वाक्यशेषसमर्पितं फलं संभाव्यते, तथापि तस्य पर्णमयीन्यायेनार्थवादत्वात्

वत्येव लिङ्गमात्राद्विनियोगः, प्रकृते तु स्वारसिकाकाङ्क्षानिवृत्तेराकाङ्क्षोत्थापकसामान्यसंबन्धबोधकप्रमाणापेक्षेति वैषम्यम् ।

नचैवं प्रबलक्रममात्रेणैव तदुपपत्तेः समाख्यावैयर्थ्यम्; यत्र साप्तदश्यवदग्निदेवत्यकर्मक्रमे आग्नेयमन्त्रद्वयाम्नानं तत्र प्रथमातिक्रमे कारणाभावात्क्रमाविरोधाच्च सामिधेनीषु निवेशे प्राप्ते समाख्यया याज्यानुवाक्याकार्ये निवेशः, सामिधेनीषु त्वन्यासामागमः । नचैवं क्रमोपन्यासवैयर्थ्यम्; यत्रान्यदेवत्यपूर्वेष्टियाज्याम्नानानन्तरमुत्तरेष्टियाज्यातः पूर्वमाग्नेय्य ऋचः पठितास्तत्र तल्लिङ्गकमन्त्रेण याज्याकार्ये निवेशासंभवात् समाख्याबाधेऽपि क्रममात्रेणोत्तरेष्टिसामिधेनीकार्ये विनिवेशः, तत्सामिधेनीस्थानपठितत्वात् । अतः सिद्धं काम्येष्टिष्वेव विनियोग इति ॥ ७ ॥ २२ ॥ इति सप्तमं लिङ्गक्रमसमाख्यानाधिकरणम् ॥

---

अङ्गत्वमेवेत्यर्थः । **विनियोग इति** ॥ **नच**—अर्थज्ञानस्य साक्षात्कर्मसु सामर्थ्यादव्यभिचारिद्वारानपेक्षणात् लिङ्गमात्रेण कर्मणि विनियोगसंभवेऽपि आत्मज्ञानस्य साक्षात् कर्मविषयत्वाभावेन तत्रासामर्थ्यात् ज्ञेयात्मरूपस्य द्वारस्य लोकवेदसाधारण्येन क्रत्वव्यभिचाराभावात् कथं तन्मात्रेण क्रत्वङ्गत्वम् इति—**वाच्यम्**; लौकिककर्मप्रवृत्तेः देहादिव्यतिरिक्तात्मज्ञानं विनापि सिद्धेः तद्व्यावृत्तये अव्यभिचरितद्वारानपेक्षणात् पारलौकिकफलसाधनकर्मणामेवाकाङ्क्षितत्वेन सामर्थ्यमात्रेण तदुपपत्तेरित्यर्थः । विस्तरेण चैतद्विश्वजिदधिकरणे चतुर्थे उपपादयिष्यते । अत्रच यथानुष्ठेयकर्मानुष्ठानौपयिकत्वेन आत्मज्ञानस्य कर्माङ्गता तथा न निषिद्धकर्माङ्गत्वम्; तथात्वे अनात्मज्ञानवता कृतब्रह्महननप्रत्यवायजनकत्वानापत्तेः, किंतु तत्फलीभूतनिवृत्त्यङ्गत्वमेव । **तदुक्तं वार्तिके**—"आत्मज्ञानं हि संयोगपृथक्त्वात् क्रत्वर्थपुरुषार्थत्वेन ज्ञायते । तेन विना परलोकफलेषु कर्मसु प्रवृत्तिनिवृत्त्यसंभवात् ।" इति ॥ **एतावांस्तु विशेषः**—निषेधपरिपालनरूपनिवृत्तेरपूर्वजनकत्वाभावेन तत्रोपनिषन्नियमजन्यापूर्वानुपयोगान्नित्यत्वादिप्रकारकात्मज्ञानस्य निवृत्तौ स्वरूपोपयोगितयैवोपयोगः, उपनिषन्नियमस्तु नापेक्ष्यते, विहितकर्मसु तु सोऽपीति ज्ञेयम् । **अथवा**—यथा निषेधाध्ययननियमो निषेधेष्वनुपयुज्यमानोऽपि निमित्तनिश्चयद्वारा प्रायश्चित्तेषु उपयुज्यते, तथोक्तात्मज्ञाननियमो निषेधे अनुपयुक्तोऽपि प्रायश्चित्ताधिकारहेतुभूतामनुतापहेतुकां निवृत्तिं संपादयन् प्रायश्चित्तेषु उपयुज्यत इति द्रष्टव्यम् ॥

एतच्च सामान्यसंबन्धबोधकप्रमाणं विना क्वापि लिङ्गमात्रस्य विनियोजकत्वायोगात् "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती"ति "ओमित्युद्गीथमुपासीते"ति उद्गीथोपासनाप्रकरणे छान्दोग्ये पठिताभ्यामपि वाक्याभ्यामेव प्रकरणबाधेन तयोः क्रत्वङ्गत्वं न लिङ्गमात्रेणेति न्यायसुधाकृतोऽभिमतमपि प्रकरणबाधेनैतद्वाक्याभ्यां सर्वक्रत्वङ्गत्वायोगादयुक्तमिति पार्थसारथ्यभिसंहितदूषणमभिप्रेत्योक्तम् । न्यायसुधाकृन्मतोपन्यासपूर्वकं तद्दूषणोपन्यासेच प्रकाशकारैरेव पराक्रान्तमिति नेह तत् प्रपञ्च्यते ॥ **परमार्थतस्तु**—यदि कृष्यादिवन्नित्यप्राप्तस्य विधिकल्पने प्रमाणाभावेन विधेयत्वानुपपत्तेः जन्यतामात्रबोधेऽपि अङ्गत्वासंभवात् अङ्गतावोधकत्वेन "यदेवे"त्येतद्वाक्यद्वयमेव स्वीकर्तव्यमिति कौस्तुभे पूज्यपादोक्तमनुसन्धीयते, तदा करोतीत्यस्य लेट्त्वं प्रकल्प्य कथंचित् न्यायसुधोक्तमेव साध्विति ज्ञेयम् ॥

**समाख्यावैयर्थ्यमिति** ॥ याज्यानुवाक्याकाण्डमिति समाख्यावैयर्थ्यं सूत्रे च तदुपादानं व्यर्थमित्यर्थः । **साप्तदश्यवदिति** ॥ सामिधेन्यङ्गभूतसाप्तदश्यं यस्मिन् कर्मणि अग्निदेवत्ये पाथिकृतीयेष्टिरूपे आतिदेशिकमन्त्रप्राप्त्या न प्रधाने याज्यापेक्षा; वाचनिकसाप्तदश्याम्नानात्, सामिधेनीष्वाग्नेयऋग्द्वयापेक्षा, तत्र तत्तदिष्टिक्रमाम्नाताग्नेयमन्त्रद्वयस्य प्रथमातिक्रमे कारणाभावेन सामिधेनीषु क्रमाविरोधेन च निवेशप्रसक्तौ याज्याकार्ये तन्निवेशस्य समाख्ययैव वक्तव्यत्वात् तदावश्यकत्वमित्यर्थः । अतएव एतादृशस्थले अपेक्षितविधानरूपन्यायस्यैव समाख्यया बाधः, नतु क्रमस्य कश्चन विसंकोच इति ॥ सामिधेनीष्वन्ययोरागममाह—**सामिधेनीष्विति** ॥ एवं तर्हि काम्ययाज्यानुवाक्याकाण्डमिति समाख्ययैवेष्टसिद्धेः क्रमोपन्यासवैयर्थ्यमाशङ्क्य परिहरति—**नचैवमिति** ॥ **यत्रेति** ॥ अग्निवारुणेष्टिक्रमे तद्देवत्ययाज्यानुवाक्ये पठित्वा सोमारौद्रेष्टिक्रमान्नाततत्तद्देवत्ययाज्यानुवाक्यापाठात् आग्नेय्य ऋचः पृथुपाजवत्यश्च समाम्नाताः, तत्र तासां लिङ्गविनियुक्तमन्त्रान्तरेण बाधादुत्तरेष्टियाज्याकार्ये समाख्यामात्रेण विनियोगानुपपत्तेः लिङ्गसहकृतसमाख्ययान्यत्र विनियोगप्रसक्तौ क्रमेण तां बाधित्वा उत्तरेष्टिसामिधेनीनिवेशलाभाय क्रमोपादानमित्यर्थः ॥

ननु क्रमः पूर्वस्यामपीष्टौ साधारण इत्यत आह—**तत्सामिधेनीति** ॥ पूर्वेष्टिसामिधेनीस्थानस्य तदीययाज्यादिपाठेन व्यवधानादुत्तरेष्टिसामिधेनीस्थान एव पठितत्वमित्यर्थः । सिद्धान्तमुपसंहरति—**अत इति** ॥

प्रयोजनं पूर्वोत्तरपक्षप्रतिपादनेन तथा "मनोतायांतु वचनादविकार" इति दाशमिकाधिकरणपूर्वोत्तरपक्षप्रयोजनेन च स्पष्टत्वान्नोक्तम् ॥

**॥ इति सप्तमं लिङ्गसामान्यसंबन्धबोधकप्रमाणापेक्षत्वाधिकरणम् ( लिङ्गक्रमसमाख्यानाधिकरणम् ॥)**

---

(८ अधिकरणम्।)

**अधिकारे** ॥ ज्योतिष्टोमे "आग्नेय्याऽऽग्नीध्रमुपतिष्ठत" इत्यत्र किं अप्रकृतसाधारण्येन ऋङ्मात्रमाग्नीध्रोपस्थानाङ्गम्, उत प्रकृता एव याः स्तोत्रादावपि विनियुक्तास्ता एवेति चिन्तायाम्—

आग्नेयीपदस्याविशेषेण सर्वपरत्वात्प्रकरणस्य तत्संकोचकत्वानुपपत्तेरग्निदेवत्यऋङ्मात्रस्यैव विशिष्टविध्युत्तरकालीनविशेषणविधिना आग्नीध्रोपस्थानाङ्गत्वेन विधानम्, नत्वत्राग्नेयी उद्देश्या, येनानर्थक्यभिया व्रीहिवत्प्रकरणेन संकोच्येत; तृतीययोपादेयत्वावगमात्। यत्र चोपस्थानस्वरूपे आनर्थक्याशङ्का, तत्र प्रकरणानुप्रवेशेऽपि नाग्नेयीपदस्य प्रकृतपरत्वापत्तिः। नचाग्नेयीपदस्य यौगिकत्वात्तद्धितान्तत्वाद्वा संनिहितपरत्वम्; यौगिकानामवयवार्थविशिष्टव्यक्तिमात्रवाचित्वेन संनिहितवाचित्वे प्रमाणाभावात्, तद्धितस्य तद्वाचित्वेऽपि प्रकृतानामृचामेकप्रकरणस्थत्वेऽपि प्रदेशान्तरस्थत्वेन संनिहितत्वाभावात्।

अस्तु वा प्रकरणसंनिहितस्यैव तद्धितेन ग्रहणम्, तथापि यत्र न तद्धितश्रवणं यथा ब्राह्मौदनप्राशनादौ चतुरो ब्राह्मणान् भोजयेदित्यादौ, तत्र प्रकृतर्त्विग्ग्रहणे प्रमाणाभावः। नच—प्रकृतानामपूर्वार्थत्वस्य क्लृप्तत्वात्केवलं द्वाररूपाग्नीध्रोपस्थापनसंबन्धकरणे लाघवादप्रकृतानाञ्चोभयकरणे गौरवापत्तेः प्रकृतनियम इति—वाच्यम्; प्रकृतग्रहणेऽप्युपस्थानस्वरूपस्य द्वारत्वे तत्कार्यापन्ने ऊहाद्यनापत्तेरपूर्वसाधनत्वलक्षणाया आवश्यकत्वात्। नहि प्रकृतविषयेऽपि प्रकरणेन वाक्यान्तरकल्पनया अपूर्वार्थत्वबोधः; तथात्वे व्रीहीणां स्वरूपेण द्वारत्वापत्तौ यवानां तदनापत्तेः। अतो लाघवादपूर्वत्वात् तस्यच सर्वनामार्थवृत्तित्वेन सन्निहितव्यक्तिवाचित्वात् नाप्रकृतग्रहणमित्यर्थः। अत्र न्यायसुधाकारादिभिः अग्निदेवत्यत्वऋक्त्वसन्निहितत्वादीनां मन्त्रविशेषोपलक्षणत्वादेकेन चोपलक्षणेन प्राकृतकार्यसिद्धावुपलक्षणान्तरानपेक्षणादग्निदेवत्यऋक्त्वयोः श्रुतत्वाविशेषेण उभयोरप्युपलक्षणत्वेपि विग्रहवाक्यस्थसर्वनामगम्यत्वेन विलम्बितप्रतीतिकत्वादविवक्षावगतेः सर्वग्रहणमिति समाहितम्, तत्सन्निहितत्वोपलक्षितव्यक्तिविशेषस्यापि गुणाधिकरणे तद्धितवाच्यत्वप्रसाधनादृक्त्वेऽपि स्त्रीत्वानुमेयतया विलम्बितप्रतीतिकत्वस्य तुल्यतया सन्निहितत्वस्योपलक्षणत्वोपपत्तेरिति कौस्तुभदर्शितरीत्या अयुक्तं मत्वा तदङ्गीकृत्यापि परिहरति—**तद्धितस्येति** ॥ पूर्वोक्तन्यायसुधाकृदभिहितसमाधिदूषणं तद्वाचित्वेऽपीत्यपिना सूचितम् ॥

**ज्योतिष्टोम इति** ॥ सामान्यसंबन्धबोधकप्रमाणसूचनाय ज्योतिष्टोम इत्युक्तम्। **आग्नेय्येति** ॥ आग्नेय्या ऋचा आग्नीध्रमण्डपमुपतिष्ठते इति वचनस्यार्थः। एतच्च ऐन्द्र्या सदो वैष्णव्या हविर्धानमिति वाक्यद्वयस्याप्युपलक्षणम्। अत्र यद्यपि श्रुतेर्विनियोजकत्वम्; तथापि लिङ्गेन सामान्यसंबन्धकारिप्रमाणसापेक्षत्वेन विनियोगे पूर्वाधिकरणे चिन्तिते तत्प्रसङ्गादुपस्थितायाः श्रुतेरपि तदपेक्षत्वेन विनियोजकत्वस्याभिधानात् प्रासङ्गिकीं पादसङ्गतिमतएव तथैवानन्तरसङ्गतिंच स्पष्टत्वादनुल्लिख्याप्रकृतमात्रग्रहणकोटिं कैश्चित् भ्रमेणोक्तां निरसितुमवश्यवक्तव्यं संशयं दर्शयति—**किमिति** ॥

अप्रकृतमात्रग्रहणपक्षो हि प्रकृतानां यातयामत्वात् विनियुक्तविनियोगात् वा ग्रहणासंभवे संभवेत्, नच तदुभयमत्रास्ति; कुशा दर्व्यादय इति वचनेनादोषत्वस्मरणात्, पुरोडाशकपालवत् विनियुक्तविनियोगस्यापि संभवाच्च। अतोऽप्रकृतमात्रग्रहणपक्षस्यायुक्तत्वं प्रकृताप्रकृतसाधारण्योक्त्या सूचितम् ॥ **ता एवेति** ॥ यद्यप्याग्नेय्या उपादेयत्वात् तद्गतैकत्वविवक्षया न बह्वीनां करणत्वप्रसक्तिः; तथापि प्रकृताग्नेयीबहुत्वमादाय **अथवा** ऐन्द्री वैष्णवीति ऋगन्तराभिप्रायेण वा ता इति बहुवचनं नेयम्। तथाच याः प्रकरणे पठिताः विशिष्य स्तोत्रान्तरे विनियुक्ता "अग्न आयाहि वीतय" इत्यादयः ता एवेत्यर्थः ॥

पूर्वपक्षोपपत्तिमाह—**आग्नेयीपदस्येति** ॥ तृतीयायाः प्रकृतग्रहणेऽविरोधेऽपि प्रातिपदिकश्रुतेरविशेषप्रवृत्तायाः संकोचरूपबाधापत्तिसूचनाय आग्नेयीपदस्येत्युक्तम्। आग्नेय्या करिष्यमाणोद्देश्यत्वाशङ्कानिरासोपोद्बलनाय प्राप्तोपस्थानविधिसूचनायच विशिष्टविध्यन्यथानुपपत्तिप्रसूतविशेषणविधिविधेयतोक्त्या उपादेयत्वं सूचितम् ॥

**तद्धितान्तत्वाद्वेति** ॥ आग्नेयीशब्दस्य तद्धितान्त-

**यथेति** ॥ अत्रच सर्वनामश्रवणाभावात् ब्राह्मौदनिकाग्निसंस्कारकहोमशेषौदनप्रतिपत्त्यर्थतया ऋत्विक्संस्कारार्थत्वाभावेन तन्नाशे पुनर्भोजनानुष्ठानादर्शनेनच तेषामुद्देश्यत्वानुपपत्त्या प्रकृतग्रहणे प्रमाणाभाव इत्यर्थः ॥

ननु एवं प्रकृतग्रहणे नियामकान्तराभावेऽपि अप्रकृतग्रहणे तस्या आग्नीध्रोपस्थानस्वरूपार्थत्वेनाऽऽनर्थक्यापत्तेरपूर्वार्थत्वकल्पनस्याप्यावश्यकत्वात् क्लृप्तापूर्वार्थतायाः प्रकृताया एवाग्नीध्रोपस्थापनरूपद्वारान्तरसंबन्धमात्रकरणेन लाघवात् तदुपजीविविधिश्रुत्याच प्रातिपदिकश्रुतेरपि संकोचोपपत्तेः प्रकृतग्रहणोपपत्तिरित्यभिप्रेत्य शङ्कते—**नचेति** ॥ प्रकरणेन स्वतन्त्रवाक्यान्तरकल्पनया प्रकृताया अपूर्वार्थत्वबोधासंभवे केन तर्हि तस्यास्तद्बोध इत्यपेक्षायां यत्र यदुद्देशेन विनियोगः तत्र अपूर्वसाधनत्वलक्षणाया उद्देश्यवाचकपदाङ्गीकारेण इत्युत्तरमप्रकृतायामपि समानमित्याशयेनाह—**अतो लाघवादिति** ॥

साधनीभूतस्तोत्रत्वेनैवोद्देश्यता। तावता चापूर्वसाधनीभूतोपस्थानार्थत्वस्यालाभात्। अस्त्येव प्रकृतग्रहणेऽपि तद्विधावपूर्वसाधनत्वलक्षणा। अपिच स्तोत्रापूर्वसाधनत्वक्लृप्तावपि नोपस्थानजन्यज्योतिष्टोमापूर्वसाधनत्वलाभः प्रकृतानाम्, अतः सर्वासामेव ग्रहणम्। अप्रकृतानामेव वा, कार्यसाकाङ्क्षत्वादिति प्राप्ते—

अप्रकृतग्रहणे तासामपूर्वसाधनीभूतोपस्थानार्थत्वान्यथानुपपत्त्या अपूर्वार्थत्वस्यापि व्रीह्यादिवत्कल्पनीयत्वापत्तेः प्रकृतानां च कार्यान्तरसंबन्धबोधकविधावेवापूर्वार्थत्वस्य क्लृप्तत्वाल्लाघवोपजीविना प्रकृतनियमः। संभवतिच प्रकृतानामप्याग्नेयीनां वाङ्नियमन्यायेन स्तोत्रद्वारा ज्योतिष्टोमापूर्वसंबन्धासंभवेऽपि कार्यान्तरद्वारा सः। आग्नेयीनां स्तोत्रादौ विनियोगेऽपि पार्थक्येन ज्योतिष्टमप्रकरणे पाठादेव वा तदपूर्वसंबन्धावगमः।

अयमेव च ब्रह्मौदनप्राशने ऋत्विक्त्वनियामकन्यायः। नचैवं "आत्रेयाय हिरण्यं ददाति" इत्यत्रापि तन्नियमापत्तिः; ऋत्विक्षु आत्रेयत्वस्य नियमेनाप्राप्तेः। अतएव चाग्निमुपनिधाय स्तुवीतेत्यादावाक्षेपणीयस्तोत्रापूर्वसंबन्धस्याहवनीयादावप्राप्तत्वान्न तन्नियमोऽपितु विना वचनं आयतनबहिर्भावायोगाल्लौकिकस्यैवेति वक्ष्यते। अतः सिद्धं लाघवानुरोधेन प्रकृतस्यैव ग्रहणम् ॥ ८ ॥ २३ ॥ इत्यष्टममाग्नेयीप्रकृतनियमाधिकरणम् ॥

---

एवं तावत् प्रकृताप्रकृतानां ग्रहणं प्रसाध्याधुना कैश्चिदुक्तमप्रकृतमात्रग्रहणमपि युक्त्या पूर्वपक्षे साधयति—**अप्रकृतानामेव वेति** ॥ पुरोडाशकपालस्य अनन्यथासिद्धवाचनिकविनियोगबलात् निराकाङ्क्षस्य विनियुक्तस्यापि विनियोगोऽगत्या आश्रितः, प्रकृतेतु तेन रूपेण विनियोगाभावादन्यथानुपपत्तेश्च क्षीणत्वान्न युक्तं विनियुक्तनिराकाङ्क्षविनियोगाश्रयणमिति उभयाकाङ्क्षया दाशतयीतोऽप्रकृतग्रहणमेव न्याय्यम् ॥

**वस्तुतस्तु**—तस्या अपि वाचस्तोमादौ विनियोगेन कार्यसाकाङ्क्षत्वाभावात् आकाङ्क्षोत्थापकक्रमसमाख्यादिरूपसामान्यसंबन्धबोधकप्रमाणेन यस्याः सामान्यतः क्रतुसंबन्धोऽवगतः तस्या यावल्लिङ्गेन विनियोगकल्पनम् ततः पूर्वमेवानया श्रुत्या विनियोगेनाप्रकृतमात्रग्रहणमुपपादनीयम्। यद्यपि तथाभूतास्तोत्राङ्गभूतापि आग्नेयी भवति; तथापि तस्यां स्तोत्र एव निराकाङ्क्षत्वान्न ग्रहणमित्याशयः ॥

सिद्धान्तमाह—**अप्रकृतेति** ॥ यद्यपि उपस्थानाङ्गत्वेन मन्त्रस्य विधानात् तत्स्वरूपेचानर्थक्यप्रसक्तावपूर्वसाधनत्वलक्षणा; तथापि सर्वत्रापूर्वसाधनीभूताङ्गोद्देशेनाङ्गविधावर्थादपूर्वार्थत्वेनापि तद्विधानमन्यथानुपपत्त्या विधिकल्पनया आवश्यकम्, तदेतदवघातविधावगत्या अङ्गीकृतम्, प्रकृतेतु अप्रकृतग्रहणे चापूर्वसंबन्धस्य तत्साधनसंबन्धस्यच उभयस्यापि श्रूयमाणेन विधिना श्रुत्यर्थाभ्यां करणे गौरवापत्तेः प्रकृतग्रहणेचापूर्वसंबन्धस्य क्लृप्तत्वात् केवलमपूर्वसाधनीभूतसंबन्धमात्रकरणेन लाघवोपपत्तेः तद्ग्रहणस्यैव लाघवोपजीविना विधिनाऽनुमतत्वात् प्रधानभूतविधिश्रुत्यनुरोधेन प्रातिपदिकश्रुतेः संकोचेऽपि बाधकाभावेन प्रकृतमात्रग्रहणसिद्धिरित्यर्थः ॥

ननु उपस्थानाङ्गभूतायाः प्रकृतायाः कथं ज्योतिष्टोमापूर्वसंबन्धसंभवः? तस्याः स्तोत्रद्वारा तत्संबन्धादतोऽस्यास्तदपूर्वसंबन्धविधिकल्पनमावश्यकमित्यत आह—**संभवति चेति** ॥ स्तोत्रद्वारेह तदसंभवेऽपि उपस्थानरूपकार्यान्तरद्वारा ज्योतिष्टोमापूर्वसंबन्धसंभवान्न तदपूर्वसंबन्धायोग्यत्वम्। **अतएव**—यद्यप्यपूर्वसंबन्धः स्वकल्पकेन विशिष्योपस्थितेन च कार्यान्तरसंबन्धेन निराकाङ्क्षः; तथापि तदाऽऽकाङ्क्षयैव तदुपजीवनं नानुपपन्नं इति भावः ॥

**ननु** प्रकृताग्नेयीमन्त्रस्य स्तोत्रापूर्वसंबन्धक्लृप्तावपि उपस्थानजन्यापूर्वसंबन्धस्य द्वारतया कल्पनावश्यकत्वेन गौरवं सिद्धान्तेऽप्यविशिष्टमेवेत्याक्षेपणीयापूर्वसंबन्धस्य कार्यान्तरार्थमप्यन्यत्र नियमेन क्लृप्तौ तन्मात्रोपजीवनेनान्यत्र कार्यान्तरसंबन्धमात्रकरणमित्येतदधिकरणन्यायस्य कथमाग्नेयीवाक्ये प्रवृत्त्या प्रकृतनियमसिद्धिरित्यत आह—**आग्नेयीनामिति** ॥ उपस्थानजन्यापूर्वसंबन्धकल्पनावश्यकत्वेऽपि न तद्द्वारा ज्योतिष्टोमसंबन्धोऽपि कल्प्यः प्रकृतग्रहणे आपतति; स्तोत्रं विनापि तत्संबन्धस्य पाठादेव सिद्धेः; अतः स्तोत्रापूर्वद्वारकत्वमात्रकल्पनवदिहापि उपस्थानजन्यापूर्वद्वारकत्वमात्रस्यैव कल्पनादप्रकृतग्रहणेतु तस्यापि कल्पनापत्तेः गौरवमित्येवमाक्षेपणीयापूर्वसंबन्धस्य क्लृप्तत्वमुपपादनीयमित्यर्थः ॥

ब्रह्मौदनप्राशनवाक्येऽपि ब्रह्मौदनप्राशनाङ्गभूतब्राह्मणविधौ प्राशनस्य प्रतिपत्तित्वेन दृष्टार्थत्वादाधानाद्यपूर्वसाधनलक्षणया तत्र तदपूर्वसंबन्धस्य ऋत्विजां प्रयोगाङ्गत्वेन नित्यप्राप्तत्वात् प्रकृतग्रहणोपपत्तिरित्यभिप्रेत्याह—**अयमेव चेति** ॥ **नियमेनाप्राप्तेरिति** ॥ तत्र नियमतः प्राप्त्यभावेन विधिश्रुतेरपूर्वसंबन्धाक्षेपकत्वस्यावश्यकत्वान्न कदाचित् प्रकृतसत्त्वेऽपि तन्नियम इत्यर्थः ॥

**आयतनेति** ॥ "विना एष इन्द्रियेण वीर्येण व्यृध्यते यस्याहिताग्नेरग्निरपक्षायति तं संभरेदिदन्त एकमि"ति वचनेन यजमानीयेन्द्रियवीर्यनाशरूपदोषापादकायतनबहिर्भावरूपापक्षये प्रायश्चित्तविधानात् बहिर्भावस्यायोग इत्यर्थः। सिद्धान्तमुपसंहरति—**अत इति** ॥ प्रयोजनं स्पष्टत्वान्नोक्तम् ॥

**याज्ञिकास्तु**—आग्नेयकृष्णग्रीवपशुक्रमाम्नातेन अग्ने यन्सुपथेत्याग्नेयीमन्त्रेणाभिमर्शनमाचरन्ति नोपस्थानम्, तत्राग्नेय्यर्चाग्नीध्रमभिमृशेदिति तैत्तिरीयश्रुतिरेव प्रमाणं द्रष्टव्यम् ॥

**॥ इत्यष्टममग्नेयीप्रकृतनियमाधिकरणम् ॥**

**( अधिकाराधिकरणम् )**

(१) सप्तम्यन्तादतिः।

( ९ अधिकरणम्। )

**लिङ्गसमाख्यानाभ्याम्** ॥ सोमे—"भक्षे हि माविशेथा"दिर्भक्षानुवाक इत्येवं समाख्यातो मन्त्रः श्रुतः। तत्र यस्तावदस्यांशो भक्षणमेव प्रतिपादयति स तत्रैव विनियुज्यते, ग्रहणावेक्षणसम्यग्जरणप्रतिपादकानां त्वंशानां किं ग्रहणादावेव विनियोगोऽथवा भक्षणमन्त्रैकवाक्यतया भक्षण एवेति चिन्तायाम्—

ग्रहणादेरविहितत्वेनापूर्वं प्रत्यङ्गत्ववज्जनकत्वस्याप्यभावाद्ग्रहणस्यार्थाद्भक्षणजनकत्वेन पक्षप्राप्तावपि बाहुभ्यां सध्यासमित्यनेनोक्तस्य बाहुद्वयकरणकस्य ग्रहणस्य कथमप्यप्राप्तेरवेक्षणस्य च भक्षाजनकत्वेनैवाप्राप्तेः सम्यग्जरणस्य तदनुकूलव्यापारस्य वा भक्षोत्तरभावितया भक्षाजनकत्वेन तेषामपूर्वप्रयोजकत्वस्याप्यभावाद्ग्रहणाद्यर्थत्वे आनर्थक्यापत्तेः भक्षणमन्त्रैकवाक्यतया भक्षणार्थत्वमेवैषाम्। अतएव समाख्याप्युपपन्ना भवतीति प्राप्ते—

**इत्यादिरिति** ॥ आदिशब्देन विचारविषयतया आवश्यकस्य "दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरोवसो प्रियो मे हृदोस्याश्विनोस्त्वा बाहुभ्याꣳसध्यासं नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषम्। हिन्व मे गात्रा हरिवो गणान्मे मा वितीतृषः। शिवो मे सप्तर्षीनुपतिष्ठस्व मा मे वाङ्नाभिमतिगाः। मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु—वसुमद्गणस्य रुद्रवद्गणस्यादित्यवद्गणस्य सोमदेवते मतिविदः प्रातःसवनस्य माध्यन्दिनस्य सवनस्य गायत्रछन्दसः त्रिष्टुप् छन्दसो जगच्छन्दसोऽग्निहुत इन्द्रपीतस्य नराशꣳसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि" इत्यन्तस्य भागस्योपादानम्। एतच्च भाष्यलिखितक्रमेण लिखितम्। तैत्तिरीयशाखायांतु अवख्येषमित्यस्याऽग्रे मन्द्राभिभूतिरित्यादि भक्षयामीत्यन्तं पठित्वा हिन्व मे इति पठितम्। पूर्वपक्षोपयोगितया इत्येवं समाख्यात इत्युक्तम्। तत्र सर्वस्याप्युदाहरणताशङ्कानिरासाय विषयं विविनक्ति—**तत्रेति** ॥ मन्द्राभिभूतिरित्यादि जुषाणेत्यन्तस्य तृप्त्या अस्य फलप्रकाशनपूर्वकं भक्षणप्रकाशनार्थत्वस्य स्पष्टत्वात् तृप्यत्वित्यन्तस्य भक्षणप्रकाशकत्वस्य उत्तराधिकरणे साधयिष्यमाणत्वाच्च वसुमदादेश्च लिङ्गसमाख्याभ्यां निर्विवादमेव "अभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ती"ति विहितभक्षणाङ्गत्वम्। तद्गतानांच प्रातःसवनादिशब्दानां तथा इन्द्रपीतादिशब्दानां च सूक्तवाकविभागाधिकरणन्यायेन तद्वदेव यथासवनं विनियोगस्य स्पष्टत्वमिति नोदाहरणत्वमित्यर्थः। **अंशानामिति** ॥

"भक्षेहिमे"त्यादेः "सध्यासमि"त्यन्तस्य ग्रहणे "नृचक्षसमि"त्यादेर "वख्येषमि"त्यन्तस्य अवेक्षणे "हिन्व मे"त्यादेः "अतिगा" इत्यन्तस्य सम्यग्जरणे इत्येवमंशानां विनियोग इत्यर्थः। तत्र सिद्धान्ते यथालिङ्गं विनियोगात् तदुपयोग्युद्देश्यतावच्छेदकनिरूपणात् पादाध्यायसङ्गती तथा पूर्वाधिकरणे क्रतुसंबन्धरहितद्वारसंबन्धानुपपत्तेः प्रकृतग्रहणे उक्ते प्रकृते सर्वथाऽविहितग्रहणादेरपूर्वसंबन्धाभावे द्वारत्वाभाव इत्येवं पूर्वपक्षोत्थानात् प्रत्युदाहरणरूपां अनन्तरसङ्गतिंच स्पष्टत्वादनुक्त्वा पादाध्यायसङ्गत्योरतिस्पष्टत्वं प्रथमतः सिद्धान्तकोट्युपन्यासेन सूचयन् सन्देहं दर्शयति—**किमिति** ॥

ग्रहणाद्यर्थत्वे लिङ्गमात्रसत्त्वेऽपि ग्रहणादिस्वरूपार्थत्वे मन्त्रनियमस्यानर्थक्यापत्तेः तेषामविहितत्वेनापूर्वं प्रत्यङ्गत्वस्य जनकस्य वाऽभावे तदपूर्वसाधनत्वलक्षणया आनर्थक्यपरिहारानुपपत्तेर्न तदङ्गत्वेन मन्त्रविनियोगो युक्तः, अपितु विहितभक्षणाङ्गतयैवेत्यभिप्रेत्य पूर्वपक्षमाह—**ग्रहणादेरिति** ॥ **भक्षाजनकत्वेनैवेति** ॥ ग्रहणं विना भक्षणासंभवेन तस्य पक्षप्राप्तसंभावनायामपि अवेक्षणस्य लोके नियमतस्तज्जनकत्वाविक्लृप्तेः सर्वथैवाप्राप्तिरित्यर्थः ॥ **भक्षोत्तरभावितयेति** ॥ **नच**—भक्षोत्तरभाविभक्षणजन्यफलप्रकाशनद्वारा अगन्मेत्यादिमन्त्रस्य दर्शपूर्णमासाङ्गत्वमिव भक्षणाङ्गत्वमिति—**वाच्यम्**; कवलसंयोगरूपभक्षणस्य भक्ष्यमाणप्रतिपत्तिरूपतया सम्यग्जरणफलकत्वाभावादिति भावः॥ **भक्षमन्त्रैकवाक्यतयेति** ॥ सत्यप्याख्यातभेदे उपक्रमोपसंहारैक्ये सत्येकवाक्यताप्रयोजकीभूताकाङ्क्षासत्त्वस्य वैश्वानरवाक्ये दर्शनादत्रापि भक्षेहीत्यादिना भक्षणस्यैवोपक्रमात् भक्षयामीत्यन्तेन तस्यैवोपसंहारादुपक्रमोपसंहारैक्यप्रतीतेरेकवाक्यताप्रयोजकीभूताकाङ्क्षारूपलिङ्गात् ग्रहणावेक्षणसम्यग्जरणविशिष्टत्वेन अथवा भक्षणलक्षणयावा भक्षार्थत्वमित्यर्थः। एवं लौकिकविनियोगासंभवे पूर्वोक्तैकवाक्यतारूपलिङ्गोपष्टब्धया दुर्बलयापि समाख्यया विनियोगे विरोधाभाव इत्याह—**अतएवेति** ॥ यद्यपीयं लौकिकी; तथापि अनादित्वात् भक्षसंबन्धबोधे नियामकतया योग्यत्वादङ्गत्वं गमयन्त्युपपन्ना भवति। इतरथा भक्षाभक्षसमुदायाश्रयेषु लिङ्गसमवायेन गौणीवृत्तिराश्रयणीया भवेदित्यर्थः। अतो यद्यपि "भक्षेहीत्याद्रियमाणं प्रतीक्ष्य" "अश्विनोस्त्वा बाहुभ्याꣳसध्यासमिति" प्रतिगृह्येत्यापस्तम्बसूत्रे प्रतीक्षणे भक्षेहीत्ययमंशो विनियुक्तः; तथापि प्रतीक्षणलिङ्गकत्वाप्रतीतेरयुक्तं तदिति मत्वा सर्वस्याप्यनुवाकस्य भक्षाङ्गत्वमभिप्रेत्य पूर्वपक्षमुपसंहरति—**इति प्राप्त इति** ॥

यद्यपि चात्र उपक्रमोपसंहारैक्यादेकवाक्यतोपगमनरूपं क्लृप्तं भवेत्; तथापि ग्रहणादिप्रकाशकमन्त्रभागस्य भक्षणाङ्गत्वं वाक्येनैवेति तस्य प्रबलेन लिङ्गेन बाधोपपत्तिः ॥ **वस्तुतस्तु**—उपक्रमस्य साधारणत्वात् प्रत्युत मुख्यसामर्थ्यानुरोधेन ग्रहणादिविषय एवोपपत्तेर्नात्राख्यातभेदे सत्येक-

ग्रहणादिप्रत्यक्षविध्यभावेऽपि समाख्यासहकृतावान्तरप्रकरणेन भक्षसंबन्धे तत्तन्मन्त्राणामवगते लिङ्गबलेन मान्त्रवर्णिकग्रहणादिविधिकल्पनया तत्प्राप्त्युपपत्तेस्तदर्थत्वेनैव मन्त्रविनियोगोपपत्तौ न स्वतो निराकाङ्क्षयोर्द्वयोराख्यातपदयोः कथंचिदेकवाक्यतां परिकल्प्य गौण्या भक्षार्थत्वकल्पनम् शक्त्यैव वा भक्षविशेषणत्वेन ग्रहणादिप्रकाशकत्वकल्पनमुपपत्तिमत् ।

नचैवमपि सम्यग्जरणस्य कृत्यसाध्यत्वान्न विधिसंभवः; सम्यग्जरणानुकूलव्यापारस्यासनविशेषस्यैवानुष्ठेयस्य विधेयत्वात् । वमनविरेकनिमित्तप्रायश्चित्ताम्नानाच्च सम्यग्जरणपर्यन्तमेव भक्षणं प्रतिपत्तिरिति तस्य भक्षोपयोगिता ॥ २४ ॥

॥ ९ ॥ इति नवमं लिङ्गसमाख्यानाधिकरणम् ॥

( १० अधिकरणम् । )

गुणाभिधानात् ॥ तस्मिन्नेवानुवाके मन्द्राभिभूतिरित्यादिस्तृप्यत्वित्यन्तस्तृप्सौ विनियोक्तव्यो ग्रहणादाविवेति प्राप्ते—

ग्रहणादिवदनुष्ठेयत्वाभावात्तृप्तेरप्रकाश्यत्वम् । नच सम्यग्जरणवत्तृप्त्यनुकूलव्यापाररूपभक्षणबाहुल्याक्षेपकत्वम्; अल्पं भक्षयतीति वचनविरोधेन तत्कल्पनानुपपत्तेः । अतएव तृप्तेर्भक्षणेनाजननान्न तस्याः स्वर्गावजन्यत्वमात्रेण प्रकाश्यत्वोपपत्तिः । अतश्च लिङ्गविनियोगासंभवात्सत्यपि आख्यातद्वयस्य स्वतो निराकाङ्क्षत्वे इतिकरणाध्याहारेण तृप्यत्वित्येतदर्थं भक्षयामीत्येवं भक्षमन्त्रैकवाक्यतां प्रकल्प्य स्वार्थविशिष्टभक्षणप्रकाशकत्वमेवाङ्गीकर्तव्यम् । स्वार्थश्च श्रुत्या तृप्तिरेव । तत्प्रकाशनांशे चादृष्टार्थत्वम् । अथवा लक्षणया भक्षणस्तुतिः । सर्वथा न लिङ्गाद्विनियोगः ॥ १० ॥ २५ ॥

इति दशमं गुणाभिधानाधिकरणम् ॥

---

वाक्यत्वमपि ॥ नच दीर्घायुत्वायेत्यस्य भक्षणफलप्रतिपादकस्य ग्रहणेऽनन्वय एव भक्षणार्थत्वतात्पर्यग्राहकः; तस्य ग्रहणफलीभूतभक्षणफलप्रतिपादनेन स्तावकतयाऽन्वयोपपत्तेः, अतो लिङ्गेनैकवाक्यताभङ्गात् ग्रहणाद्यङ्गत्वमेवेत्यभिप्रेत्य सिद्धान्तं प्रतिपादयन् आनर्थक्यपरिहाराय प्रथमतो ग्रहणादिविधिं साधयति—ग्रहणादीति ॥ कल्पकमन्त्रस्य भक्षाङ्गत्वात् तत्कल्प्यविधिविहितग्रहणादीनामपि भक्षाङ्गत्वसिद्धिरित्यर्थः । तदर्थत्वेनैवेति ॥ यद्यपि सधेर्हिंसार्थत्वाच्चक्षिङो भाषणार्थत्वाद्धिनोतेर्गत्यर्थत्वान्न ग्रहणावेक्षणसम्यग्जरणप्रकाशनलिङ्गं तेषां संभवति; तथापि बीजतन्तुसन्तानार्थनिर्वपतिनेव बाहुद्वयकरणकहिंसाऽविनाभावात् बाहुकरणत्वार्हतया च लक्षणया ग्रहणप्रतिपादकत्वम् । चक्षिङः ख्याञित्यनेन विहितस्य ख्याञादेशस्यानिट्त्वेन ख्येषमिति रूपासिद्धावपि छन्दसि दृष्टानुविधित्वेन ख्येञित्युपसङ्ख्यानकरणात् सिच् बहुलं लेटीति सिच्करणाश्रयणात् वाग्विषयव्यक्तताख्यप्रकाशनवाचिनाप्यवख्येषमित्यनेन लोके ख्यात इत्यादौ वेदे च नृचक्षुख्यायत इति नृचक्षा इत्येवमिहैव सर्वज्ञातत्वरूपप्रसिद्ध्याख्यप्रकाशनमात्रे प्रयोगात्तत्परेण सता सुचक्षुष्ट्ववाचिसुचक्षुःपदैकवाक्यतावशात् चाक्षुषज्ञानाख्यावेक्षणरूपप्रकाशनप्रतिपादनमविरुद्धम् । हिनोतेश्च प्रीणनेऽपि प्रयोगाद्धिन्वेत्यनेन हे हरितवर्ण सोम मे गात्राणि प्रीणय गणानिन्द्रियगणान् वेदभाष्यकारलेखनात् पुत्रादीन् वा सोमपानविषयतृष्णारहितान् मा कुरु शिवः सन् मे सप्तर्षीन् आस्यसप्तमचक्षुर्नासाश्रोत्राख्यद्वंद्वद्वयरूपशीर्षण्यच्छिद्रसञ्चारिसप्तप्राणाख्यानुपतिष्ठस्व वाङ्नाभिमतिक्रम्य मुखवायुमार्गेण मा गा इत्यर्थावगमात् सम्यग्जरणं विना तदनुपपत्तेः गात्रप्रीणनफलीभूतसम्यग्जरणप्रतिपादकत्वंच संभवतीति तदर्थत्वेनैव विनियोग इत्यर्थः । यद्यप्यग्नये जुष्टमिति मन्त्रस्य देवतानिर्वापप्रकाशकत्ववदस्यापि ग्रहणादिविशिष्टभक्षणप्रकाशकत्वाङ्गीकारेण मन्त्रैकत्वमभ्युपगम्यापि ग्रहणानङ्गत्वं शक्यते वक्तुम्; तथापि उपक्रमोपसंहारैक्यादिरूपैकवाक्यतोपगमनसामर्थ्याभावे स्वरसतः प्रतीयमानतत्तदाख्यातगतमुख्यविशेष्यार्थकत्वबाध एव प्रमाणाभावो मन्त्रभेदाङ्गीकारे कथं चिच्छब्देन सूचितः । वमनविरेकेति ॥ "सोमैन्द्रं चरुं निर्वपेत् श्यामाकं सोमवामिन" इति सम्यग्जरणाभावनिमित्तव्यङ्गतासमाधित्सया वमने प्रायश्चित्तस्य विरेकेऽपि क्वचित् प्रायश्चित्तस्य चाम्नानात् भक्षणस्य उदरस्थापनरूपप्रतिपत्त्यर्थत्वावगमेन तस्य सम्यग्जरणं विनाऽनुपपत्तेः तदनुकूलासनविशेषस्य विधेयस्य भक्षोपयोगितेत्यर्थः । एतेन—तृप्तिवदानुषङ्गिकतया अननुष्ठेयत्वान्न मन्त्रापेक्षा इति—अपास्तम्; ग्रहणादिवत् पृथक्प्रयत्नानुष्ठेयत्वेन तदपेक्षोपपत्तेः । एवंच भक्षानुवाकसमाख्या साक्षात् परंपरया च नेयेति भावः ॥

प्रयोजनं पूर्वपक्षे ग्रहणादेः न नियमः । मन्त्रपाठक्रमेण पाठान्ते भक्षणं सिद्धम् । सिद्धान्ते ग्रहणादेः नैयत्येन पूर्वोक्ततत्तन्मन्त्रान्ते अनुष्ठानम् । भाष्यलिखितमन्त्रपाठक्रमस्य अर्थक्रमेण बाधात् मन्द्राभिभूतिरित्यस्यानन्तरं हिन्व म इति मन्त्रपाठश्चेति स्पष्टत्वान्नोक्तम् ॥

॥ इति नवमं भक्षमन्त्रस्य ग्रहणाद्यङ्गताधिकरणम् ( लिङ्गसमाख्यानाधिकरणम् ) ॥

पूर्ववत् पादाध्यायसङ्गती आपवादकीमनन्तरसङ्गतिंच स्पष्टत्वादनुक्त्वा पूर्वोक्तानुवाकगतैकदेशविषयत्वं दर्शयन् पूर्वपक्षमाह—तस्मिन्नेवेति ॥ प्रायः स्पष्टार्थमधिकरणान्तम् ॥

प्रयोजनं तु पूर्वपक्षे वसुमद्गणस्येत्यादि भक्षयामीत्यन्तेन भक्षणं कृत्वा पाठक्रमबाधेनोपरिष्टात् मन्द्राभिभूतिरित्यादि तृप्यत्वित्यन्तमन्त्रस्य पाठः । सिद्धान्तेतु यथाऽऽम्नानमिति स्पष्टम् ॥

॥ इति दशमं मन्द्राभिभूतेर्ग्रहणानङ्गताधिकरणम् गुणाभिधानाधिकरणम् ॥

(११ अधिकरणम् ॥)

**लिङ्गविशेषनिर्देशात्** ॥ भक्षमन्त्रः किं इन्द्रदेवत्याभ्यास एवाङ्गं तद्भिन्नाभ्यासेष्वमन्त्रकं भक्षणं उत तेपूहेनोतानूहेन वेति चिन्तायाम्

प्रकरणाद्भक्षमन्त्रस्य सर्वप्रदानार्थत्वावगमेऽपि इन्द्रपीतस्येति लिङ्गेनेन्द्रदेवत्यप्रदानमात्राङ्गत्वम्। **नच**—इन्द्रेण यस्मिन्सवने पीत इति बहुव्रीहिस्वीकारेण सोमसम्बन्धिसवनविशेषणत्वाङ्गीकाराल्लिङ्गाविरोध इति—**वाच्यम्**; पदद्वयलक्षणापादक—लक्षणाननुगत—व्यधिकरणबहुव्रीह्यपेक्षया पूर्वपद एव संबन्धिलक्षणापादकस्य लक्षणानुगतस्येन्द्रेण पीतः स्वीकृत इत्येवं तत्पुरुषस्यैव लघुभूतत्वात्। विद्यते च देवतायाः प्रतिग्रहाभावेऽपि देवस्वं न गृह्णीयादित्यादिवचनबलेन संबन्धविशेषरूपः स्वीकारः। नच स्थूलपृषतीपदवत्स्वरादेव बहुव्रीहित्वनिर्णयः; तद्वदिह समासस्य लक्षणानुगतत्वाभावेन स्वरस्यैव बाध्यमानत्वात्। यथाच तत्पुरुषपक्षेऽपि स्वराविरोधस्तथा कौस्तुभ एवोपपादितम्। अतश्च लिङ्गादिन्द्रदेवत्यप्रदान एव मन्त्रस्याङ्गत्वावगमादनैन्द्राणां च कर्मण एकत्वेन प्रकृतिविकारभावाभावादूहानुपपत्तेर्व्रीहीणां मेधइति वदनैन्द्राणाममन्त्रकं भक्षणमित्याद्यः पक्षः।

द्वितीयस्तु सत्यपि कर्मैकत्वे प्रदानानां भिन्नत्वादविरुद्धः प्रकृतिविकारभावः। इन्द्राय त्वा वसुमत इत्यादिमानग्रहणमन्त्राणां च लिङ्गादिन्द्रमात्रविषयत्वात्तदनुरोधेन च तत्प्रकाश्ययोर्मानग्रहणयोस्तत्संस्कार्यस्य सोमस्य तत्संस्काराणां

---

अत्रचानैन्द्रप्रदानेषु लिङ्गप्रमाणकमन्त्रविनियोगस्य सिद्धान्ते प्रतिपाद्यस्य पूर्वपक्षद्वयेऽप्यनङ्गीकारात् पादाध्यायसङ्गती प्रासङ्गिकीं चाऽनन्तरसङ्गतिं स्पष्टत्वादनुक्त्वा तन्मन्त्रमेव विषयत्वेन दर्शयन् संशयमाह—**भक्षमन्त्र इति** ॥ **तेषूहेनेति** ॥ **एतेन**—ऊहपक्षस्य पादलक्षणाऽसङ्गतत्वान्न स्वतन्त्रकोटित्वम्, अपित्वाद्यकोटिफलीभूतस्यानैन्द्राणां अमन्त्रकत्वस्याऽऽक्षेपमात्रमिति न्यायसुधोक्तं—**अपास्तम्**; पूर्वोक्तरीत्या सिद्धान्त्यभिप्रेतस्य पक्षस्य प्रतिपक्षतयोहोपन्यासेन सङ्गत्युपपत्तेरस्थायिपूर्वपक्षफलाक्षेपस्य निष्प्रयोजनत्वाच। अतः तस्यापि स्वतन्त्रकोटित्वमित्यर्थः ॥

**लिङ्गाविरोध इति** ॥ अन्यदेवत्यस्यापि सोमस्योक्तविधसवनसंबन्धित्वेन प्रकाशनोपपत्तेस्तदविरोध इत्यर्थः। **पदद्वयेति** ॥ तत्पुरुषे पूर्वपद एव संबन्धिनि लक्षणा। बहुव्रीहौ तु पदद्वयेऽप्यन्यपदार्थलक्षणेतिपदद्वयलक्षणापादकत्वम्। बहुव्रीहावेकस्मिन्नेव पदे विशिष्टार्थलक्षणेतरत्तात्पर्यग्राहकमित्यङ्गीकारेऽपि लक्ष्यतावच्छेदकगौरवम्; इतरस्य तात्पर्यग्राहकस्य वाक्यार्थान्वयेऽपि अर्थात् प्रतिपदिकत्वमिति दोषः। यद्यपि बहुव्रीहावन्यपदार्थे शक्तिः; तथाप्यवयवार्थोपस्थितिसापेक्षत्वादन्यपदार्थोपस्थितेस्तत्र गौरवम्। सर्वथा तत्पुरुषो लघुभूत एवेत्यर्थः ॥

लक्षणाननुगतत्वमपि दोषमाह—**अननुगतेति** ॥ समानाधिकरणानां बहुव्रीहिरिष्यत इति कात्यायनस्मरणात् व्यधिकरणपदानां तदनुपपत्तेः "सप्तमीविशेषणे बहुव्रीहा"विति ज्ञापकबलात् कण्ठेकाल इत्यादौ सप्तम्यन्तबहुव्रीह्याश्रयणेऽपीह तथाऽऽश्रयणे प्रमाणाभावात् लक्षणाननुगतत्वम्, तत्पुरुषेतु "कर्तृकरणे कृता बहुलमि"ति अनुशासनशिष्टत्वम् ॥

**किंच** मन्त्रस्य भक्षणाङ्गतानिर्वाहाय अवश्यापेक्षिते भक्षणस्य तत्संबन्धिनः कर्मकारकस्य सोमस्य वा प्रकाशने प्रयोजने तत्पुरुषपक्षे संभवति न बहुव्रीह्याश्रयणेनाप्रधानानाकाङ्क्षितसवनप्रकाशनपरत्वं युक्तमित्यर्थः ॥

ननु शब्दस्य देवतात्वात् कथं स्वीकृत इत्यर्थोपपत्तिरित्याशङ्कां बहुव्रीहावप्यवश्यापेक्षितप्रकारेण परिहरति—**विद्यते चेति** ॥

**ननु** नायं तत्पुरुषः; तथात्वे समासस्येति सूत्रेणान्तोदात्तत्वापत्तेः, आद्युदात्तं चैतत्पीतपदम्, इन्द्रप्रतिपादकंतु स्वत एव आद्युदात्तम्, तथा सति बहुव्रीहौ प्रकृत्या पूर्वपदमिति सूत्रेण पूर्वपदप्रकृतिस्वरविधानात् समस्तमेव पदमाद्युदात्तं संपद्यते। अतः स्थूलपृषतीत्यत्रेव स्वरात् बहुव्रीहिनिर्णये सति सवनपरत्वोपपत्तिरित्यभिप्रेत्याशङ्कते—**नचेति** ॥ बहुव्रीहेरपि सामानाधिकरण्यसंभवेन लक्षणानुगतत्वाभावात् समासस्वरयोरन्यतरस्यागतिकत्वे कल्पनीये अङ्गधर्मत्वात् स्वरस्यैव बाध्यत्वेन तस्यैव छान्दसत्वकल्पनया निर्वाहो युक्तः, नतु प्रधानभूतस्वार्थत्याग इत्यर्थः। **यथाचेति** ॥ "तृतीया कर्मणी"ति सूत्रेण कर्मणि क्तान्ते उपपदे परे तृतीयान्तं पूर्वपदं प्रकृतिस्वरं भवतीति विधानात् तथा "क्तेचे"ति सूत्रेणापि तत्स्वरविधानात् तत्पुरुषपक्षेऽपि स्वराविरोधः कौस्तुभे उपपादित इत्यर्थः। आद्यं पूर्वपक्षमुपसंहरति—**अतश्चेति** ॥ **व्रीहीणां मेध इतिवदिति** ॥ व्रीहीणां मेध इत्यस्य यवप्रयोग इवेहानुपपत्तेरित्यर्थः। **अनैन्द्राणामिति** ॥

सामान्योक्त्या चमसप्रधानशेषाणामिव ग्रहप्रदानशेषाणामप्यमन्त्रकत्वोक्तिसूचनेन मित्रावरुणादिदेवत्यहुतशेषाणाममन्त्रकम्, तत्रापि पितृपीतस्येत्यादिपदानां तद्देवत्यप्रदानेषु प्राप्तावपि तदितरपदानां विभज्य विनियोगेऽपि सवनत्रयेप्यैन्द्रप्रदानानामिन्द्रपीतपदप्रयोगेण समन्त्रकं भक्षणं नत्वन्येषां प्रदानानामित्यर्थः ॥

तत्रैन्द्रप्रदानानां प्रकृतित्वं साधयितुमाह—**इन्द्राय त्वेति** ॥ "इन्द्राय त्वा वसुमते मिनोमी"ति मानमन्त्रस्यादिपदोपात्तस्य "इन्द्राय त्वा वसुमते गृह्णामी"ति ग्रहणमन्त्रस्य च इन्द्रप्रदानाङ्गत्वं लिङ्गात् प्रतीयते इत्यविशेषप्रवृत्तसोमवाक्यमपि

चाभिषवादीनां तन्मिश्राणां चाङ्गान्तराणामैन्द्रमात्रविषयत्वप्रतीतेरितरेषामधर्मकाणां युक्तोऽतिदेशः । भवति चाङ्गवशेनापि प्रधानसंकोचः; अग्न्याद्यनुरोधेन क्रतूनामाहिताग्निविषयत्वात् । अतश्च प्रकृतापूर्वीयदेवताप्रकाशकस्य भक्षमन्त्रस्य कार्यमुखेन विकृतावागतस्य भवत्येव यथादेवतमूह इति । एवं स्थितेऽन्तरा चिन्ता ॥ ११ ॥ २६ ॥ इत्येकादशं लिङ्गविशेषनिर्देशाधिकरणम् । ( इन्द्रपीताधिकरणम् )

( १२ अधिकरणम् । )

**पुनरभ्युन्नीतेषु ॥ सवनमुखीयेषु चमसेष्वैन्द्रेषु सर्वेषु** हुतेषु ये होतृकाणां मैत्रावरुणादीनां चमसास्तेष्वभक्षितेष्वेव पुनः सोमोऽभ्युन्नीय देवतान्तरेभ्यो मित्रावरुणादिभ्यो हुत्वा भक्ष्यते । तत्र पूर्वप्रदानदेवताभूत इन्द्रोऽप्युपलक्षणीयो न वेति चिन्तायाम्—

उन्नयनकाले न देवतान्तरोद्देशः, येनोन्नीतस्यैव तत्संबन्धात् पूर्वशेषस्य पूर्वदेवतासंबन्धो नापेयात्, प्रदानकाले तु संसृष्टस्यैव देवतान्तरसंबन्धात्पूर्वदेवतासंबन्धापनयप्रतीतेर्नोपलक्षणमिति प्राप्ते—

---

तन्मात्रविषयमेवेत्यर्थः । **अङ्गवशेनापीति** ॥ मन्त्ररूपाङ्गवशेन मानग्रहणादेः प्रधानस्य संकोच इत्यर्थः । **यथादेवतमिति** ॥ मित्रावरुणपीतस्येत्याद्यूहितमन्त्रपाठेन समन्त्रकं तेषामपि भक्षणमित्यर्थः । ऊहपूर्वपक्षनिरासे सति तद्विषयोत्तरविचारासंभवादनिरस्त एव ऊहपक्षे अवसरलाभात् पञ्चभिरधिकरणैस्तद्विषयं विशेषविचारैः कर्तुमन्तरागर्भिणीं कृत्वा चिन्तामारभते—**एवमिति** ॥

**॥ इति एकादशं लिङ्गविशेषनिर्देशाधिकरणम् )**

---

अत्र भक्षमन्त्रस्य लिङ्गादैन्द्रप्रदानाङ्गत्वस्य पूर्वाधिकरणपूर्वपक्षोक्तस्याक्षिप्य समाधानात् पादाध्यायानन्तरसङ्गतीः स्पष्टत्वादनुक्त्वा विषयमाह—**सवनमुखीयेष्विति** ॥ त्रयाणां प्रातस्सवनादिसवनानां मुखे चमसप्रदानान्तरापेक्षया आदौ भवाः सवनमुखीयसंज्ञकाश्चमसपात्रस्थितसोमरसविशेषाः तेषां प्रातस्सवने माध्यन्दिनसवनेच शुक्रामन्थिग्रहोत्तरं प्रचारः तृतीयसवनेत्वादित्यग्रहोत्तरं प्रचारस्तेचानुष्ठीयमाना होतृब्रह्मोद्गातृयजमानमैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्ट्राग्नीध्राच्छावाकचमसा इत्याख्यायन्ते ॥ तत्र होत्रादीनां चतुर्णामृत्विजां मध्यतःकारिण इत्याख्या । अवशिष्टानां षण्णां मैत्रावरुणप्रभृतीनां होतृका इत्याख्या । तत्राऽच्छावाकचमसेन न नवभिः चमसैः सह प्रातस्सवने होमः, किंतु कालान्तर इति तं विहाय नवचमसान् प्रथममिन्द्राय सकृद्धुत्वा तदनन्तरं ये होतृकाणां चमसास्तेषु पूर्ववषट्कारे हुताभक्षितशेषसहितेष्वेव द्रोणकलशात् सोमान्तरमभ्युन्नीय मित्रावरुणादिदेवतान्तरेभ्यो हुत्वा भक्ष्यत इत्यनुष्ठानक्रमे सति ये मध्यतःकारिणां चमसाः तेषामैन्द्रत्वेनोहस्यैवाभावाद्विशेषतश्च पुनरभ्युन्नयनाभावात् । अतएव अच्छावाकचमसस्यानैन्द्रत्वेनोहविषयत्वे सत्यपि पुनरभ्युन्नयनाभावान्न विचारविषयत्वं प्रातस्सवने । उत्तरयोस्तु सवनयोरभ्युन्नयनसत्त्वेऽपि माध्यन्दिनसवने सर्वेषां प्रदानानामिन्द्रदेवताकत्वात् वक्ष्यमाणरीत्या ऊहाविषयत्वान्न तद्विषयत्वम् ॥ तृतीयसवनेत्विन्द्राविष्णुदेवतार्थमभ्युन्नयनेन देवताभेदेनच तत्संभवात् विचारविषयत्वमस्त्येव । अतएव प्रातःसवनेऽपि ब्राह्मणाच्छंसिचमसे पुनरभ्युन्नयनेऽपि ऐन्द्रत्वेन प्रदानद्वयस्यापि सान्नाय्यवत्संप्रतिपन्नदेवताकत्वात् तन्त्रोच्चारितेन्द्रपीतपदेन देवताद्वयोपलक्षितसोमप्रकाशनसिद्धेरूहस्यैवासंभवान्न चिन्ताविषयत्वम् । मैत्रावरुणपोतृनेष्ट्राग्नीध्राणामेव चतुर्णां ये चमसाः येषु क्रमेण मित्रावरुणौ मरुतस्त्वष्टृपत्न्यौ अग्निरिति देवताः तेषु संसृष्टशेषवत्सु उन्नयनस्योहस्यच संभवाद्विचार इत्यर्थः ॥

विचारस्वरूपं दर्शयति—**तत्रेति ॥ इन्द्रोऽपीति ॥** पूर्वोक्तचतसृणां देवतानां वाचकपदोहेन उपलक्षणसत्त्वेऽपि इन्द्रमित्रावरुणादिपीतस्येत्येवं प्राकृतेन्द्रपदसहितपदोहेन उपलक्षणीयो नवेत्यर्थः ॥

संसर्गेपि वायव्यैन्द्रवायवसोमे ग्रहणकालीनविवेकमात्रेणैव बुद्ध्या निष्कर्षोपपत्तिं पूर्वपक्षप्रतिकूलां निरस्यति—**उन्नयनकाल इति** ॥ ग्रहणकाले देवतासंयोगसत्त्वेन निष्कर्षसंभवेप्युन्नयने तत्संबन्धविधानादर्शनात् अभ्युन्नीतमात्रस्य देवतान्तरसंबन्धे प्रमाणाभावेन पूर्वदेवतापनयोपपत्तेः उन्नयनकाले न देवतान्तरसंबन्ध इति पूर्वपक्षिणः प्रतिज्ञा । **येन** देवतान्तरसंबन्धेनेतिमूलार्थः । तदेवोपपादयति—**प्रदानकाले त्विति** ॥ त्यागकालीनस्य याज्यामन्त्रवर्णककल्प्यदेवतासंबन्धस्य संसृष्टविषयत्वेन निष्कर्षायोगात् देवतान्तरसंबन्धेन पूर्वदेवतासंबन्धापनयान्नोपलक्षणीयः ॥ **नच**—उन्नयनकाले देवताविध्यभावे याज्यामन्त्रवर्णैः यागशेषतयैव देवताप्राप्तेरव्यक्तत्वभङ्ग इति—**वाच्यम्**; उक्तविधाव्यक्तत्वासंभवेऽपि उत्पत्तिवाक्ये अविहितदेवताकेष्टिभिन्नयागरूपस्यैव तस्याङ्गीकारेण बाधकाभावात् ॥ नच शेषस्योत्तरदेवतोद्देशेन त्यागेऽपि पूर्वदेवतासंबन्धस्यापि सत्त्वात्तदुपलक्षणस्योपपत्तिः; अकृतेऽपि यागे याज्ञिकानां निर्वापप्रभृति प्रतिपत्तिपर्यन्तं देवतान्तरसंबन्धि हविरिति व्यवहारात् द्रव्ये देवतासंबन्धस्य प्रतिपत्तिनाश्यस्यावश्यकल्पनीयस्य धर्मिग्राहकप्रमाणेन देवतान्तरसंबन्धविरोधित्वावगमात् तदत्यन्ताभावसमानाधिकरणस्य

उन्नयनकाले देवतासंकल्पाभावेऽपि सामर्थ्यादेवोन्नयनस्य करिष्यमाणकर्मार्थत्वप्रतीतेः पूर्वशेषस्य संसृष्टत्वेऽप्येतदर्थत्वे प्रमाणाभावादनपनीतसंबन्धा पूर्वदेवताप्युपलक्षणीया ॥ १२ ॥ २७ ॥ **इति द्वादशमभ्युन्नीताधिकरणम् ॥**

(१३ अधिकरणम्।)

**पात्नीवते तु ॥** द्विदेवत्यानामैन्द्रवायवादीनां शेषा आदित्यस्थाल्यामागत्य ततोऽप्याग्रयणस्थालीमागच्छन्ति। पात्नीवतश्चाग्रयणात् गृह्यते, तस्मिन्भक्ष्यमाणे द्विदेवत्या अपि उपलक्षणीयाः। पूर्ववदाग्रयणस्यैव पत्नीवद्देवतासंबन्धादिति प्राप्ते—

---

तत्सामानाधिकरण्यानुपपत्तेरवश्यं शेषस्योत्तरदेवतासंबन्धे पूर्वदेवतासंबन्धापनयप्रतीतेर्नोपलक्षणीय इत्यर्थः ॥

त्यागवेलायां संसृष्टत्वेन विवेकाप्रतीतावपि सत्यपिचाभ्युन्नयनकाले प्रकृतौ विकृतौवा देवतासंबन्धाभावे प्रकृतावुन्नयनस्य दृष्टार्थत्वात् यागीयद्रव्यसंस्कारकत्वावगतेर्विकृतावपि प्राकृतोन्नयनानुवादेन द्रोणकलशापादकत्वमात्रविधानेन प्राकृतकार्यवन्नयनान्तरविधानेन वा पुनरभ्युन्नीतस्यैव फलचमसहृदयादिवत् यागीयत्वप्रतीतेः पूर्वशेषस्यच यागीयद्रव्याधारपात्रोपलक्षणतया 'पयसा मैत्रावरुणं श्रीणाती''ति विहितपयस इव अभ्युन्नीतसंस्कारमात्रत्वावगतेरुत्तरयागार्थत्वे प्रमाणाभावात् पूर्वयागीयहविःशेषभक्षणस्य तन्त्रेणानुष्ठानानुरोधादनपनीतदेवतासंबन्धादुपलक्षणीयैव पूर्वदेवतेत्यभिप्रेत्य सिद्धान्तमाह—**उन्नयनकाल इति ॥**

अत्रच रिक्तेषु पात्रेषु येन सोमपूरणं क्रियते स उन्नयनपदस्यार्थः। सोमशेषसहितेष्वेव तेषु सोमान्तरपूरणं येन क्रियते स अभ्युन्नयनपदस्यार्थः। यद्यपि ऊहस्यैन्द्रप्रदानमात्रसंबन्धित्वस्य वा स्थायित्वाभावादेतद्विचारस्यास्थायिनः स्थायिना प्रयोजनेन न प्रयोजनम्। अतएव **उक्तमभियुक्तैः**—'आक्षेपे चापवादेच प्राप्त्यां लक्षणकर्मणि। प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्तते।' इति; तथापि एतद्विचारहेतुभूतस्य पूर्वशेषवृत्त्युत्तरयागाङ्गत्वसदसद्भावरूपविचारस्य स्थायिन उदाहरणान्तरे फलीभूतत्वेन उत्तरयागकाले अभ्युन्नीतमात्रस्यैव देवतासंबन्धानुसन्धानाननुसन्धानरूपमवश्यवक्तव्यं प्रयोजनं स्पष्टत्वात् नोक्तम् ॥

**॥ इति द्वादशं अभ्युन्नीताधिकरणम् ॥ (अभ्युन्नीतपूर्वदेवतोपलक्षणाधिकरणम्)**

---

**अत्रायमनुष्ठानक्रमः**—प्रथमं प्रातःसवने ऐन्द्रवायवमैत्रावरुणशुक्रामन्थिग्रहपात्रेषु धारातः सोमग्रहणं कृत्वा महत्या धारायास्तथान्तर्यामपात्रगतशेषधारायाश्चेत्येवं धाराद्वयेनाग्रयणस्थाल्या ग्रहणं कृत्वा खरे (?) सर्वे ते ग्रहाः स्थालीच आसाद्यते। ततः कियता कालेन बहिष्पवमानस्तोत्रोत्तरमाश्विनग्रहणं ततः प्रातःसवने प्रवृत्ते प्रदानकाले ऐन्द्रवायवमैत्रावरुणाश्विनप्रदानशेषसंपातमादित्यस्थाल्यां "रिक्तायामेव आदित्यस्थाल्यां संपातमपनयती''ति वचनात् सवनीयादित्यसंज्ञकदारुपात्रेण पिधाय स्थाप्यते। ततः तृतीयसवने ग्रहणकाले आदित्यस्थालीस्थस्य आग्रयणस्थाल्यां धारया ग्रहणम्। तत आदित्यदारुपात्रेण आदित्यस्थाल्या द्विदेवत्यशेषसंपातं गृहीत्वा आदित्येभ्यः स शेषो हूयते। तदीयशेषस्याग्रयणस्थाल्यामपनयस्य "आदित्यग्रहसंपाताच्चतुर्थी''मितिवचनात् चतुर्थ्या धाराया विधानेन शेषाभावान्न भक्षणम्। तत "उपांशुपात्रेण पात्नीवतमाग्रयणात् गृह्णाती''ति वचनात् आग्रयणस्थाल्यां शेषं संस्थाप्य अवशिष्टं गृहीत्वा स शेषः पत्नीवते अग्नये प्रदीयते। तदाच एतच्छेषस्यान्यत्र विनियोगाभावात् भक्षणं समन्त्रकम्। तमिममनुष्ठानक्रममभिसंधाय विषयं दर्शयति—**द्विदेवत्यानामिति ॥** ऐन्द्रवायवादीनामित्यादिपदेन मैत्रावरुणाश्विनदेवतानां ग्रहणवदिन्द्रवायुपूर्वतनवायुदेवताया अपि ग्रहणम्; तथैवोद्देशेन यागानुष्ठानात्। तत्र पूर्वाधिकरणे सवनमुखीयेषु चमसेषु ऐन्द्रप्रदानानां प्रकृतित्वेनेतरेषां अनैन्द्राणां विकृतित्वं कृत्वोहचिन्तायां प्राकृतदेवतावाचकपदप्रयोगस्यापि कर्तव्यतया साधितस्य इदानीं समानन्यायात् ग्रहेष्वप्यैन्द्रानैन्द्रप्रदानानां प्रकृतिविकृतिभावात् पत्नीवदग्निपीतस्येत्यूहे देवतान्तरपदप्रयोगस्यापि प्राप्तस्येहापवादकरणादापवादिकीमनन्तरसङ्गतिमपादानभूताग्रयणपेतत्वरूपाद्वस्तुसामर्थ्यादनाग्रयणरूपस्यापि पूर्वशेषस्य प्रसङ्गतः पात्नीवतयागाङ्गत्वविचारात् पादाध्यायसङ्गतीच स्पष्टत्वादनुक्त्वा पूर्वपक्षमाह—**तस्मिन्निति ॥**

द्विदेवत्यपदं वायोरप्युपलक्षणम्। अपिना पत्नीवदग्निपीतस्येत्यूहविद्यमानता सूचिता। **उपलक्षणीया इति ॥** वाय्विन्द्रवायुमित्रावरुणाश्विनपत्नीवदग्निपीतस्येत्येव इन्द्रमित्रावरुणपीतस्येतिवदूहेनोपलक्षणीया इत्यर्थः। अत्र चादित्यपात्रगतशेषस्यापि पूर्वोक्तरीत्याऽऽग्रयणस्थाल्यां सत्त्वादादित्योऽप्युपलक्षणीय इति विशेषः प्राचीनैर्नवीनैश्चानुक्तोऽपि सोमनाथेनोक्तः ॥

अत्रचाग्रयणस्थाल्यां प्रातःसवने धाराद्वयेन गृहीत्वा सादितायां यः सोमः स "ये देवासो दिव्येकादशस्थे''ति मन्त्रेण गृहीतत्वात् "ते देवा यज्ञमिमं जुषध्वमि''ति मन्त्रलिङ्गाद्यज्ञसंबन्धित्वेनावगतत्वाच्च समस्तदेवरूपदेवतासंबन्धेन तादृग्देवत्यवैश्वदेवग्रहे शेषतया अन्वित इति तत्र होमशेषस्याग्रे विनियोगाभावेन भक्षणस्यैव प्राप्तेस्तद्देवतासंबन्धापनयस्य स्पष्टत्वान्न पात्नीवतभक्षणे उपलक्षणतया प्रसक्तिः। यथाच वैश्वदेवग्रहे अङ्गप्रधानदेवतानां सर्वासामेव देवतात्वं तथा सूत्रभाष्यका-

पात्नीवतमाग्रयणाद्गृह्णातीत्यपादानत्वश्रवणात् तस्मादपेतस्य पात्नीवतत्वं न त्वाग्रयणस्यैव; आग्रयणवचनाग्रयणमपि संसृष्टत्वात् तस्मादपेतमिति द्विदेवत्यस्यापि देवतान्तरसंबन्धेन पूर्वदेवतासंबन्धापायात् । भूतपूर्वगत्या च प्रकृतावनुपलक्षणान्नोपलक्षणीयाः ॥ १३ ॥ २८ ॥ इति त्रयोदशं पात्नीवते दैवत्यानुपलक्षणाधिकरणम् ॥

रादिभिः द्वादशे प्रपञ्चितम् । संभवति वा क्षीरनीरविवेकवतीभिः विश्वदेवदेवताभिः सर्वदेवतालिङ्गकमन्त्रगृहीतमेव सर्वसंबन्धिनं सोमं शेषान्तरे सत्यपि स्वभागत्वेन स्वीकर्तुम् । अतएव सादने "एष ते योनिः विश्वेभ्यस्त्वा देवेभ्य" इति मन्त्रगतं विश्वदेवार्थसादनलिङ्गम्; तथापि "विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उपद्यविष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वं" इति याज्यामन्त्रेच ग्रहणसमानदेवताकमन्त्रलिङ्गं चोपपद्यते । नितरां च "अविज्ञातो वा एष यदाग्रयण"इत्यर्थवादे विशेषतो देवतया अविज्ञातत्वकल्पनंच । यद्यप्याग्रयणस्थाल्या न विश्वेभ्यो देवेभ्यः प्रदीयते; तथापि पात्नीवतगृहीतावशिष्टदेवत्यशेषस्थापनार्थं व्यापृतत्वात् तस्याश्चाग्रे द्रोणकलशेन गृहीत्वा हारियोजनग्रहप्रचारानुष्ठानात् तत्पात्रप्रदानेऽपि वचनात् पात्रान्तरेण प्रदाने न कोऽपि दोषः । अतो वैश्वदेवहुतशेषभक्षणे सवित्रादेरुपलक्षणत्वप्रसक्तावपि पात्नीवते तदीयशेषाभावात् तद्देवतासंबन्धापनयात् नोपलक्षणीया विश्वदेवदेवता इति न्यायसुधाकारः । एतदेव सर्वमभिसंधाय आग्रयणदेवताभूतानां विश्वेषां देवानामुपलक्षणं कस्मान्न चिन्त्यत इत्याशङ्क्य तदपनयस्य निस्सन्दिग्धत्वादित्येव परिहारसूचनार्थं तत इति भाष्यं व्याचष्ट इत्युक्तं न्यायसुधायाम् ॥

एवं स्थिते यत् प्रकाशकारैः एतदनूद्य आग्रयणस्थाल्या न क्वापि शाखायां विश्वदेवेभ्यो हूयते यतस्तस्य विश्वदेवपीतत्वात् ततः पात्नीवतेऽप्यानीतस्य विश्वदेवपीतस्येत्यूहेनोपलक्षणाशङ्कोदियात् "अतोऽनुष्ठानमनालोच्य बहुभाषी यदूचिवान् । आशङ्का च समाधानमुभयं तदसङ्गतमि"ति दूषितम्, तदाग्रयणस्य सर्वदेवरूपदेवतासंबन्धाभावे "ते देवा यज्ञमिमं जुषध्वमि"ति मन्त्रलिङ्गविरोधस्य प्रचारान्तरे सर्वदेवतासंबन्धाभावेन दुष्परिहरत्वात् तन्मतेऽपि अनुष्ठानविरोधप्रसक्तेश्च अनवरतानुचिन्त्यमानद्वेष्यारोपितबहुभाषित्वगुणावेशादेवेति विश्वदेवदेवतासंबन्धापनयनस्पष्टत्वहेतुकोपेक्षाव्याजेन पूज्यपादैः सूचितम् । पात्नीवतस्य पूर्वमसिद्धेः कर्मत्वेनाऽन्वयायोगात् गृह्णातेः कर्माकाङ्क्षायां प्रसिद्धाग्रयणस्यैव पञ्चम्या कर्मत्वलक्षणया कर्मत्वेनाऽन्वये सति आग्रयणकर्मकग्रहणेन पात्नीवन्तं कुर्यादित्यर्थेन आग्रयणस्थितमात्रस्यैव अभ्युन्नीतमात्रे उत्तरदेवतासंबन्धस्यैव पात्नीवद्देवतासंबन्धप्रतीतेः अनाग्रयणस्थरूपद्विदेवत्यशेषस्य संसृष्टस्यापि पत्नीवद्देवतासंबन्धाभावेन

( १४ अधिकरणम् । )

**त्वष्टारम्** ॥ पात्नीवत एव "अग्ना३इ पत्नीवाः सजूर्देवेन त्वष्ट्रा सोमं पिबे"ति मन्त्रात् त्वष्टुरपि देवतात्वम् । अतः सोऽप्यग्निवदुपलक्षणीय इति प्राप्ते—

पूर्वदेवतासंबन्धापनयाभाव इत्युपपत्तिमभिप्रेत्याह—**पूर्ववदिति** ॥

यद्यपि कर्म न श्रूयते; तथापि अपादानत्वेन श्रुतस्य तत्त्वेनान्वयासंभवात् लक्षणायांच प्रमाणाभावात् आग्रयणादपेतस्यैव उपस्थितत्वात् पात्नीवतमिति तद्धितेन परामृष्टस्य कर्मत्वेनान्वयादपेतत्वस्यच संसृष्टमात्रे संभवात् सर्वस्यैवोत्तरदेवतासंबन्धप्रतीतेस्तस्य चोपपादितरीत्या पूर्वदेवतासंबन्धापनयं विनाऽनुपपत्तेः तदावश्यकत्वात् नोपलक्षणमित्यभिप्रेत्य सिद्धान्तमाह—**पात्नीवतमिति** ॥

ननु संबन्धापनयनेऽपि भूतपूर्वगत्योपलक्षणं भवत्वित्याशङ्कां परिहर्तुमाह—**भूतपूर्वगत्या चेति** ॥ इन्द्रपीत इति भूतार्थक्तप्रत्ययेन विद्यमानसंबन्धरूपफलसमानकालीनव्यापारातीतत्वस्याभिधानात् तस्यच संबन्धविद्यमानतयैव प्रकृतावुपलक्षणादिह विद्यमानसंबन्धदेवतयोपलक्षणे अप्राकृतकार्यकारित्वापत्तेर्न तादृशस्योपलक्षणत्वसंभव इत्यर्थः ॥

॥ इति त्रयोदशं पात्नीवते द्विदैवत्यानुपलक्षणाधिकरणम् ॥

---

विषयं प्रदर्शयति—**पात्नीवत एवेति** ॥ अनेनच पात्नीवतयागे त्वष्टुर्देवतात्वेनाङ्गत्वविचारात् पादाध्यायसङ्गती तथा तस्मिन् पूर्वं द्रव्ये विचारिते तत्प्रसङ्गात् देवता विचार्यत इति प्रासङ्गिक्यनन्तरसङ्गतिस्त्वष्टुरुपलक्षणत्वविचारात् ऊहप्रकरणसङ्गतिश्च सूचिता । प्रकृतपूर्वपक्षहेतुत्वेन अनुदाहरणस्यापि मन्त्रवर्णस्योक्तिः । **अग्ना इति** ॥ अग्ने इति संबुद्ध्येकारस्य 'एचोप्रगृह्यः स्यात् दूराद्धूते पूर्वस्यार्धः स्यात् उत्तरस्येदुता'विति सूत्रेण पूर्वार्धस्य प्लुत आकारे उत्तरार्धस्यच ईकारे अर्धमात्रिके सति निर्देशः । **अतएव**—आग्ना इत्युत्तरं त्रिमात्रप्लुतत्वाभिव्यञ्जकस्तृतीयाङ्कोऽपि क्वचित् लिख्यते । एवंचाग्न आई इति क्वचित् पुस्तके पाठोऽपपाठः । यद्यपि आपस्तम्बानां पात्नीवाः सजूर्देवेति पाठमनुसृत्य कौस्तुभे मन्त्रो लिखितः; तथापीह वाजसनेयिनां पाठानुरोधेन पात्नीवत्सजूरिति लेखनेऽपि अर्थैक्यान्न कश्चन दोषः ॥

**मन्त्रादिति** ॥ यद्यपि पत्नीवन्मात्रस्य देवतात्वं तद्धितेनोक्तम्; तथापि पत्नीवच्छब्दस्य यौगिकस्य नित्यं विशेष्यसाकाङ्क्षत्वादवश्यं विशेष्यसमर्पकमन्त्रवर्णे अग्नेरिव त्वष्टुरपि

युक्तमग्नौ पत्नीवच्छब्दस्य यौगिकत्वेन विशेष्यसाकाङ्क्षस्य सामानाधिकरण्येन विशेष्यग्राहकत्वम्, त्वष्टुस्तु तृतीयया सहभावमात्रं प्रतीयते। नचासौ पानक्रियाऽन्वयाव्यभिचारी; 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'त्यादौ व्यभिचारात्, सत्यपि पाने देवतात्वस्याप्रामाणिकत्वाच्च। अतः पात्नीवतमिति निरपेक्षतद्धितेन पत्नीवतोऽग्नेरेव देवतात्वमिति स एवोपलक्षणीयो न त्वष्टा ॥ १४ ॥ २८ ॥ इति **चतुर्दशं पात्नीवते त्वष्टुरदेवतात्वाधिकरणम् ॥**

सजूश्शब्देन साहित्यप्रतीतेः पानस्यच देवतात्वं विनाऽनुपपत्तेः देवतात्वेनावगतस्य विशेष्यत्वेनान्वयात् सोपि उपलक्षणीयः। तत्रच द्वयी गतिः। भिन्नपदोपादानात् अग्नित्वष्ट्रोः व्यासज्यविशेष्यताया असंभवात् प्रत्येकमेव समुच्चयेन विशेष्यत्वात् यथा पत्नीवते अग्नये त्वष्ट्र इदं न ममेति त्यागः तथैव भक्षमन्त्रेऽप्यूहेन पत्नीवदग्नित्वष्टृपीतस्येत्येवं **अथवा**—मन्त्रे त्वष्टृसाहित्यविशिष्टस्य अग्नेरुपादानाद्विधावपि तादृशस्यैव विशेष्यताकल्पनात् तथैव त्यागात् पत्नीवत्त्वष्टृसहिताग्निपीतस्येत्येवमुपलक्षणीय इत्यर्थः ॥

संबुध्यन्तपत्नीवच्छब्दसामानाधिकरण्येन अग्निपदस्यैव विशेष्यसमर्पकत्वप्रतीतेः तस्यैव देवतात्वमित्यभिप्रेत्य सिद्धान्तमाह—**युक्तमिति** ॥ अग्नाविति पदोत्तरं देवतात्वमित्यनुषङ्गः ॥ **नच**—त्यागकालीनोच्चारणविषयत्वरूपदेवतात्वस्य तद्धितार्थत्वात् तदनुरोधेनार्थपरस्यापि प्रातिपदिकस्य लक्षणया शब्दपरत्वमङ्गीकृत्य शब्दस्य देवतात्वात् त्यागकाले अर्थानुसन्धानं विनापि पत्नीवच्छब्दमात्रप्रयोगेण शास्त्रार्थोपपत्तेश्चतुर्थीप्रयोगे प्रमाणाभावे विशेष्यवाचकपदप्रयोगस्य क्वोपयोग इति—**वाच्यम्**; अर्थप्रत्ययानुकूलचतुर्थ्यन्तपदोच्चारणस्यैव उद्देशस्य वृद्धव्यवहारेण यागघटकत्वावगमेन चतुर्थ्यन्तपदोच्चारणवत् शब्दस्यार्थप्रत्ययस्यापि आवश्यकत्वेन तत्र विशेष्यापेक्षायां तद्वाचकचतुर्थ्यन्तशब्दोच्चारणस्यापि आवश्यकत्वात् ॥ अतएव त्यागस्य मानसत्वेऽपि उक्तविधोद्देशस्य निराकाङ्क्षत्वसिध्यर्थं तद्वाचकपदप्रयोगोऽपि संगच्छत इति ॥ **व्यभिचारादिति** ॥ पुत्राणां वोढृत्वाभावेऽपि साहित्यदर्शनात् क्रियान्वयित्वव्यभिचारित्वमित्यर्थः। पात्नीवतमित्युत्पत्तिवाक्ये तद्धितेन प्रबलेन पत्नीवन्मात्रस्य देवतात्वप्रतीतेस्तस्य विशेष्यापेक्षायां समानाधिकरणपदश्रुत्या अग्नेः विशेष्यत्वेनान्वये सति सहभावश्रुत्यन्यथानुपपत्तिकल्प्यस्य देवतात्वस्य दौर्बल्येन कल्पनानुपपत्तेः त्वष्टुर्देवतात्वमप्रामाणिकमित्याह—**सत्यपीति** ॥ सिद्धान्तमुपसंहरति—**अत इति** ॥ अग्निरूपविशेष्यसापेक्षत्वेऽपि नित्यसापेक्षत्वात् तद्धितोत्पत्तावपि त्वष्टृसापेक्षत्वे पात्नीवतमिति तद्धितोत्पत्त्यसंभवात् निरपेक्षस्य पत्नीवत एव देवतात्वम्। त्वष्टृसाहित्यस्याग्निस्तुत्यर्थमुपादानान्न त्वष्टोपलक्षणीय इत्यर्थः। स्थायिविचारप्रयोजनं स्पष्टत्वान्नोक्तम् ॥

## ॥ इति चतुर्दशं पात्नीवते त्वष्टुरदेवतात्वाधिकरणम् ॥ (त्वष्ट्रधिकरणम्)

## (१५ अधिकरणम्)

**त्रिंशच्च** ॥ तस्मिन्नेव याज्यामन्त्रे, "ऐभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः। पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्वे"त्यत्र त्रयस्त्रिंशतां देवतानां पत्नीवच्छब्दसामानाधिकरण्यादग्निवद्विशेष्यत्वोपपत्तेर्मदश्रवणाच्च पानोपपत्तेर्देवतात्वावगमात्तेषामप्युपलक्षणं मन्यते।

पूर्ववदेव पादाध्यायप्रकरणसङ्गती तथातिदेशिकीमनन्तरसङ्गतिंच स्पष्टत्वादनुक्त्वा पात्नीवतयाग एव अधिकाशङ्कया विचारं दर्शयति—**तस्मिन्नेवेति** ॥ तामेवाधिकाशङ्कामाह—**याज्यामन्त्र इति** ॥ **हे अग्ने** त्वं समानवर्णं रथमारुह्य **एभिः** वक्ष्यमाणैः देवैः सह **अथवा**—नानारथं वाऽऽरुह्य **याहि** ॥ विभवो बहवोऽश्वास्तव सन्ति। ततश्चार्वाङ् आगत्यच पत्नीवतः त्रींश्च देवताननुष्वधं सोमरूपान्नप्रदानमनु आवह तेनान्नेन मादयस्वेत्यग्नीत्प्रयोज्ययाज्यामन्त्रस्यार्थः। ऐभिरित्यत्र आ एभिरिति पदच्छेदेन आ इत्युपसर्गस्य याहीत्यनेन व्यवहितेन अन्वयः। ततश्च यथैवाध्वर्यवमन्त्रैः विशेष्यतया उपादानात्तस्यैव देवतात्वम्, न त्वष्टुः, तथैवेह अग्निवत्त्रयस्त्रिंशद्देवतानां सामानाधिकरण्याद्विशेष्यत्वप्रतीतेस्त्वष्टृवैलक्षण्यात् देवतात्वसंभवेन पूर्वपक्षः। तत्र यद्यपि तत्तन्मन्त्रे उभयोरपि नैरपेक्ष्येण पत्नीवच्छब्दसामानाधिकरण्यावगमान्नैरपेक्ष्येणैव विशेष्यत्वावगमस्तथापि विधावुभयोस्तात्पर्यग्राहकसहकृतपत्नीवच्छब्देन युगपदभिधानादुपादेयसाहित्यस्य विवक्षितत्वादुभयोः समुच्चयोपपत्तिः। **अथवा**—याज्यामन्त्रे अग्नेः पत्नीवत्पदसामानाधिकरण्याभावे विशेष्यमात्रस्याग्नेः श्रवणादेकवाक्योपादानेन त्रयस्त्रिंशद्देवैः सह समुच्चयोपपत्तिः। यद्यपि याज्यामन्त्रोत्तरार्धे त्रयस्त्रिंशद्देवतानामेव आवाहनपूर्वसोमद्रव्यसंबन्धोऽवगम्यते, अग्नेस्तु पूर्वार्धे आवाहनमादनकर्तृत्वेन परिवेष्टृत्वमात्रावगतेर्न हविःसंबन्धः; तथापि आध्वर्यवमन्त्रे तस्यापि तत्संबन्धावगमात् पाक्षिकमग्नेरपि विशेष्यत्वमस्तु नत्वेतावता त्रयस्त्रिंशद्देवानां विशेष्यत्वे विवादः, तेषां याज्यामन्त्रे नित्यमेव हविःसंबन्धावगमादित्यर्थः। **त्रयस्त्रिंशतां देवतानामिति** ॥ ते चाष्टौ वसवः एकादश रुद्राः द्वादशादित्याः इन्द्रः प्रजापतिश्चेति हविर्भुजो देवा ज्ञेयाः ॥

अग्नेः मादयितृत्वश्रवणादेव मन्त्रवर्णे अग्नेः देवतात्वम्,

अग्नेर्मादयितृत्वश्रवणात्तेऽग्निदत्तेन कामं माद्यन्तु यजमानस्त्वग्नय एव ददातीत्यवगमात्तस्यैव देवतात्वं न त्रयस्त्रिंशताम् । एवं च पत्नीवतमिति तद्धितोऽप्यसति बहुवचनग्राहकप्रमाणे एकवचनेनैव विगृहीतो भवतीत्यपि लाघवम् । अतो नोपलक्षणीयास्ते ॥ १५ ॥ २९ ॥ इति पञ्चदशं त्रयस्त्रिंशद्देवापत्नीवत्त्वाधिकरणम् ॥

अन्यथा यजमानद्रव्यस्यानीशेनाग्निनान्येषामादानासंभवात् । अतो यजमानोऽग्नये दद्यात् स चान्यान् मादयतीत्यर्थेनाग्निस्तुत्यर्थत्वेन मादयितृत्वकथनोपपत्तेर्न तेषां देवतात्वमित्यभिप्रेत्य सिद्धान्तमाह—अग्नेरिति ॥ सिद्धान्तमुपसंहरति—अत इति ॥

अत्रच पूर्वपक्षे ऊहसत्त्वेऽपि पत्नीवदग्निपत्नीवन्त्रिंशद्देवपीतस्येत्येवंप्रयोगो नतु न्यायसुधोक्तरीत्याऽग्नित्रयस्त्रिंशद्देवपत्नीवत्पीतस्येति; पत्नीवच्छब्दगतविशेष्याकाङ्क्षया पश्चात् कल्प्यमानदेवतात्वादग्न्याद्यर्थानां विशेष्यभूतत्वेन पश्चादेव पदप्रयोजनस्य युक्तत्वात् । यद्यपि चाग्ना इति मन्त्रे विशेष्यस्याग्नेः पूर्वं प्रयोगात् तदनुरोधेनेहापि तस्य पूर्वं स आपाद्येत; तथापि त्रयस्त्रिंशद्देवानां तदभावादयुक्तं तेषां पूर्वमभिधानम् ॥ वस्तुतस्तु—उत्पत्तिगतदेवतासमर्पकपत्नीवत्पदाकाङ्क्षयाऽग्नेः पश्चादेव तत्कल्पनात् अवगतदेवतात्वानुरोधेनैव युक्तः प्रयोगः । अतएव—अग्नये पत्नीवत इदमिति याज्ञिकानां त्यागानुष्ठानमपि—निरस्तम् । एवंच—पत्नीवत्पीतस्येत्येवं सिद्धान्ताविशेषेणैव पूर्वपक्षे प्रयोगोऽपादनं सोमनाथेनोक्तं—अपास्तम्; सत्यप्युत्पत्तिवाक्ये पत्नीवत्त्वेन देवतात्वे पूर्वोक्तरीत्या उद्देशांशस्य विशेष्यवाचकपदप्रयोगं विना निराकाङ्क्षत्वाभावात् यागकाले अवश्योच्चारणीयस्य पत्नीवदग्नय इति प्रयोगस्येहापि पत्नीवदग्निपीतस्येत्येवंविधप्रयोगस्यैवापत्तेः । अतएव पत्नीवच्छ्य इदं न ममेति प्रयोगविशेषस्य पूर्वपक्षे सिद्धान्ते च पत्नीवत इदं न ममेति प्रयोगविशेषस्यच प्रयोजनत्वोक्तिरपि तदीया परास्तेति निराससूचनपूर्वकं कृत्वाचिन्तास्थायिविचारयोः स्वाभिमतं प्रयोजनं ते इति बहुवचनप्रयोगेण तन्निषेधेन च सूचितम् ॥

॥ इति पञ्चदशं त्रयस्त्रिंशद्देवापत्नीवत्त्वाधिकरणम् ॥ ( त्रिंशदधिकरणम् )

---

अनुवषट्कारयागो हि "अग्नये अनुयजती"ति वचनेन तन्त्रसारधृतेन ज्योतिष्टोमयागाभ्यासरूपवषट्कारयागे अग्निदेवताया अनुशब्दोक्ततदुत्तरत्वस्यच विधाने वाक्यभेदापत्तेः गुणात् कर्मान्तररूपो विहितः । तत्र "सोमस्याग्ने वीहीत्यनुयजती"ति वचनान्तरेण मन्त्रविधिना मान्त्रवर्णिकसोमद्रव्ये समर्पिते धर्मान्तराकाङ्क्षायां प्रकरणात् ज्योतिष्टोमाङ्गभूतेऽपि अस्मिन् वैमृधवत् सोमद्रव्यकत्वसादृश्यात् तदीयविध्यन्तप्राप्तेर-

( १६ अधिकरणम् । )

वषट्कारश्च ॥ अनुवषट्कारयागदेवताया अग्नेर्देवतात्वस्य निःसन्दिग्धत्वादुपलक्षणम् । प्रकृतौ त्वसौ विद्यमानापि नोपलक्षिता; अनुवषट्कारयागस्य सोमयागात्कर्मान्तररूपस्य पूर्वयागीयसोमप्रतिपत्तिभूतस्य कृत्स्नविधानत्वेना-

तिदेशेन सोमभक्षणे तन्मन्त्रेच प्राप्ते विचार इत्यभिप्रेत्याह—अनुवषट्कारयागेति ॥

अत्रच भक्षणमन्त्रस्य अङ्गत्वानङ्गत्वविचारात् ऊहविचाराच्च पादाध्यायप्रकरणसङ्गतयः स्पष्टाः । अनन्तरातु मान्त्रवर्णिकदेवताया निस्सन्दिग्धत्वात् पूर्वाधिकरणव्युत्पादितादेवतात्वरूपानुपलक्षणन्यायप्रत्युदाहरणरूपेणात्र पूर्वपक्षोत्थानात् प्रत्युदाहरणसङ्गतिरिति न्यायसुधाकारः ॥

यत्तु—पूर्वन्यायात्ययेन यत्र पूर्वसाध्याभावः सिद्धान्ततयोच्यते तत्रैव प्रत्युदाहरणसङ्गतिः, यत्रतु पूर्वन्यायात्ययेन पूर्वपक्षमात्रं पूर्वसाध्यमेव च सिद्धान्तः तत्रातिदेशिकीति व्यवस्थां तन्मतदूषणपूर्वकं महता प्रयत्नेन प्रसाध्य पूर्वसाध्यस्यैव सिद्धान्तितत्वात् आतिदेशिकीं सङ्गतिं प्रकाशकारा आहुः, तत् स्वयमेव तत्प्रख्यतद्व्यपदेशाधिकरणादिषु पूर्वपक्षोत्थानमात्रेण साध्यैक्येऽपि प्रत्युदाहरणसङ्गतेरभिधानेन पूर्वोक्तव्यवस्थायाः पूर्वापरविरुद्धत्वादेतादृशे विषये सङ्गतिद्वयसाङ्कर्येऽपि बाधकाभावात् वेदान्ताधिकरणेष्वप्येतादृशविधया प्रत्युदाहरणसङ्गतेर्बहुशो दृष्टत्वाच्चायुक्तम् । पूज्यपादानांतु अत्रातिदेशिकसङ्गत्यभिधानमेव यत् कौस्तुभे, तत्सिद्धान्तमादायापि सङ्गतिसंभवाभिप्रायेण ज्ञेयम् ॥

निस्सन्दिग्धत्वादित्यनेन त्रयस्त्रिंशद्देवानां देवतात्वस्यास्पष्टत्वान्नोपलक्षणत्वमिति पूर्वन्यायवैलक्षण्यं सूचितम् । उपलक्षणमित्यस्यानन्तरं मन्यत इत्यध्याहारः । एवंच सति यद्यप्येतस्यानुवषट्कारयागस्य कर्मान्तरत्वेऽपि पृथक्सोमग्रहणविध्यभावात् कथंचिदतिदेशेन तत्प्राप्तिसंभवेऽपि वा "यद्धविर्वहति तेन शेषेण संयोजयति देवता"मित्यर्थवादेन वषट्कारदेवतायै यद्धविः वहति तच्छेषेणानुवषट्कारे देवतां संयोजयतीत्यर्थकेण वषट्कारयागीयसोमशेषद्रव्यत्वप्रतीतेः तया चोत्तमादिवत् प्रतिपत्तिलक्षणसत्त्वेनानुवषट्कारयागस्य प्रतिपत्तित्वावसायात् "यद्वावसोमस्याग्नेवीहीत्यनुवषट्करोति तेनैष संस्थितान् सोमान् भक्षयन्ति स एव सोमस्य स्विष्टकृदि"ति द्रव्यप्रतिपत्त्यर्थस्विष्टकृद्यागरूपत्वसंस्तवादपि च तन्निश्चयाच्च प्रतिपत्तिकर्मत्वं निर्विवादम् । अतएव संकर्षे अनुवषट्कारयागस्य स्विष्टकृद्वत्तन्त्रेणानुष्ठानं पूर्वपक्षयित्वा वषट्कारयागानन्तर्यरूपक्रमपृथक्त्वात् द्विदेवत्येष्वनुवषट्कारनिषेधरूपलिङ्गाच्च सिद्धान्तत्वेन साधिताया आवृत्तेः प्रतिपत्तिकर्मत्व एवोपपत्तिः, अन्यथा अर्थकर्मत्वे तन्त्रानुष्ठानापत्तेस्तदसंभवात् । अतश्च प्रतिपत्ति-

तिदेशाकल्पनात्, उपदेशेन कथञ्चिद्भक्षणप्राप्तावपि व्रीहीणां मेध इति वदैन्द्रमन्त्रस्य प्राप्त्यनुपपत्तेश्च। अतश्च विकृतावपि प्रधानदेवतैव तत्कार्यापन्नोपलक्षणीया नानुवषट्कारदेवता ॥ १६ ॥ ३० ॥ इति षोडशमनुवषट्कारदेवतानुपलक्षणाधिकरणम् ॥

( १७ अधिकरणम्। )

छन्दः ॥ एवमूहं विचार्याधुनाऽऽद्यपूर्वपक्षवादी पुनस्तं दूषयति। नोहः; कर्मण एकत्वात्, अभ्यासानामपि फलचमसवदसमानविधानत्वे प्रमाणाभावाच्च। नहि मानग्रहणमन्त्रानुरोधेन तदुद्देश्यानां सङ्कोचो युक्तः, अग्निविद्योस्तु स्वस्वविधिप्रयुक्तत्वेन क्रतुविधिप्रयुक्तत्वाभावाद्युक्तः परप्रयुक्ताग्निविद्योपजीवकतया क्रत्वधिकारसङ्कोचः। अतो मानग्रहणमन्त्रावेव कामं ऐन्द्रमात्रप्रदानविषयौ भवेतां न

---

कर्मभूतेऽस्मिन् यागे नार्थकर्मभूतसोमयागातिदेशः संभवति; तथापि निष्कासावभृथवाजिनयागन्यायेनेतिकर्तव्यताकाङ्क्षायां सोमजन्ययागत्वसामान्यात् अतिदेशोपपत्त्या वषट्कारानुवषट्कारयागाङ्गभूतयोः सोमभक्षणयोः तन्त्रेणानुष्ठानेऽपि तत्रैव देवताद्वयोपलक्षणं कर्तव्यमित्यर्थः ॥

ऐन्द्रप्रदानानां प्रकृतित्वमनैन्द्रप्रदानानां विकृतित्वमिति पक्षे अनैन्द्रप्रदानेष्वतिदेशेन प्राप्तस्याप्यनुवषट्कारयागस्य तावद्योग्निर्देवता सा न प्रकृतिभूतैन्द्रप्रदानसंबन्धीन्द्रस्थानापन्ना, येन तत्स्थानापन्नत्वेन मन्त्रप्राप्त्या तस्याप्युपलक्षणं स्यात्। प्रकृतौ ऐन्द्रप्रदाने होतृकचमसेषु "मध्यतःकारिणां चमसाध्वर्यवो वषट्कृते अनुवषट्कृते जुहुत होतृकाणां चमसाध्वर्यवः सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्तध्वमि"त्यध्वर्युकर्तृकप्रैषसकृद्धोमाम्नानेन अनुवषट्कारस्यैवाभावात् मध्यतःकारिचमसेषु तत्सत्त्वेऽपि तदङ्गभूतानुवषट्कारयागस्य प्रयाजादिवत् कृत्स्नविधानत्वेनेतिकर्तव्यतानपेक्षणादतिदेशानुपपत्तेर्भक्षणस्य तन्मन्त्रस्य चाप्राप्तौ नोपलक्षणसंभावनापीत्यभिप्रेत्य सिद्धान्तमाह —**प्रकृतौ त्विति** ॥

**ननु**—प्रकृतौ सोमं भक्षयतीति भक्षणस्य वेदिवर्हिन्यायेनाङ्गप्रधानसाधारणसोमोद्देशेन विधानादुपदेशेनैव भक्षणप्राप्तेस्तन्मन्त्रप्राप्तिरित्यत आह—**उपदेशेनेति** ॥ यवप्रयोगे "व्रीहीणां मेध" इति मन्त्रस्यासामर्थ्येन प्रकृतावूहाभावेन च लोपवदिहापि तस्य लोपस्यैव प्राप्तेरित्यर्थः। अतएव उपदेशेन भक्षप्राप्ताविन्द्रपीताधिकरणसिद्धान्ते सवनसंबन्धित्वाविशेषात् मन्त्रविनियोगेऽपि न तदीयदेवतोपलक्षणप्रसक्तिः। सिद्धान्तमुपसंहरति—**अतश्चेति** ॥ स्वयागाङ्गभूतद्रव्यपातृत्वसत्त्वेऽपि तत्रातिदेशाभावेन प्राकृतदेवताकार्यापत्त्यभावात् यथा अध्वर्युणा पाने क्रियमाणे ततः पूर्वं होत्रा पीतोपि न होतृपीतस्येत्येवमुपलक्षयेत्, तथैवानुवषट्कारदेवता नोपलक्षणीयेत्यर्थः। सूत्रे वषट्कारशब्देन वषट्कारसंबद्धानुवषट्कारसंबन्धात् लक्षितलक्षणयाऽनुवषट्कारयागीयदेवतोच्यते इति ज्ञेयम्। अत्र न्यायसुधाकृता अनुवषट्कारयागस्य प्रतिपत्तिकर्मत्वं साधितम्, तद्दूषणेन अर्थकर्मत्वं प्रकाशकारैरुक्तमपि कौस्तुभे निरस्य प्रतिपत्तिकर्मत्वमेव अङ्गीकृतमितीहापि तदेव प्रतिपत्तिभूतस्येत्यनेन दर्शितमिति ॥

**॥ इति षोडशमनुवषट्काराधिकरणम् ॥ ( अनुवषट्कारदेवतानुपलक्षणाधिकरणम् )**

एवमिन्द्रपीताधिकरणद्वितीयोहपूर्वपक्षमुपजीव्य पञ्च कृत्वाचिन्ताः प्रदर्श्याधुना वर्तिष्यमाणक्त्वाचिन्ताद्वयार्थं द्वितीयपूर्वपक्षोपपादितोहनिषेधमुखेनेन्द्रपीताधिकरणप्रथमपूर्वपक्षवादी स्वप्रयोजनसाधनाय प्रत्यवतिष्ठत इत्याह—**एवमिति** ॥

दूषणप्रकारमेवाह—**नोह इति** ॥ यागाख्यकर्मणः फलवत्त्वात् प्राधान्याच्च सोमाद्यङ्गग्राहित्वसंभवेऽपि प्रदानानामभ्यासरूपत्वेनाफलवत्त्वात् गुणत्वाच्च "**गुणानां च परार्थत्वादि**"ति न्यायेनाङ्गग्राहित्वानुपपत्तेर्विकृतित्वासंभवात् यागस्यच प्रत्यभ्यासमप्येकत्वात् स्वस्मिन् स्वतोऽभ्यासानुपपत्तेः नोहेन समन्त्रकं भक्षणमनैन्द्राणाम्। नहि प्रदानान्तराण्यन्ययागसंबन्धीनि, येन तेषां कर्मान्तरत्वात् भेदापेक्षः प्रकृतिविकृतिभावः संभवेत्। एकस्यैव सोमेन यजेतेति प्रत्यक्षश्रुत्या विहितस्य यागस्य उपपादकत्वसंभवे यागान्तराणां तत्कल्पने प्रामाणाभावात् एकज्योतिष्टोमयागाङ्गत्वे धर्माणां सत्यपि लिङ्गात् मन्त्रव्यवस्थोपपत्तेः ऐन्द्रप्रदानसोमशेषभक्षणमेव समन्त्रकमित्यर्थः। अस्तुवा अभ्यासानां गुणत्वेऽपि परंपरया फलवत्त्वम्, तावतापि न सोमफलचमसाभ्यासानामिव व्यवस्थयाधर्मग्राहित्वमित्याह—**अभ्यासानामपीति** ॥ फलचमसे नित्यानित्यसंयोगविरोधरूपहेतोरसामानविध्येपीह तदभावे तत्कल्पने नैव किंचित् प्रमाणम्। नापि पयसा मैत्रावरुणं श्रीणातीतिवदैन्द्रप्रदानाभ्यासार्थत्वेन विधिश्रवणमतो नासामानविध्यमित्यर्थः ॥

**ननु**—इहापि मानग्रहणमन्त्रयोरैन्द्रप्रदानमात्रविषयत्वात् तदनुरोधेन मानग्रहणयोः तत्संस्कार्यस्य सोमस्य तत्संस्काराणां चाभिषवादीनां तत्संवलितानां दीक्षणीयादीनामपि ऐन्द्रप्रदानमात्रविषयत्वावगतेः सामानविध्यभावसंभव इत्यत आह —**नहीति** ॥ **युक्त इति** ॥ प्रकृते तु मानग्रहणमन्त्रयोः तदुद्देश्यानांच परप्रयुक्तत्वाभावेन क्रतुविधिप्रयुक्तत्वकल्पनावश्यंभावात् सर्वाभ्यासानांच प्रकरणाविशेषेण विनियोगप्रयोगविधिकल्पकत्वोपपत्तेर्न युक्तः संकोच इत्यर्थः। **अतएव** —मानग्रहणमन्त्रयोः व्रीहिमन्त्रस्य व्रीहिविषयत्ववत् लिङ्गादैन्द्रप्रदानमात्रविषयत्वेपि मानादीनां पुरोडाशप्रतिष्ठापनस्येव सर्वविषयत्वात् तदीयमानग्रहणयोरमन्त्रकत्वेऽप्यक्षतिरित्याह —**अत इति** ॥ यद्यपिच लतावस्थायामेव अनुष्ठीयमानयोः मन्त्रग्रहणयोः तन्त्रेणैवानुष्ठानात् **अथवा**—ऐन्द्रप्रदानार्थमे-

तु मानाद्यपि । वस्तुतस्तु वसुमत इत्यनेन देवतान्तरस्याप्यभिधानात्तयोरपि सर्वार्थत्वमेव । अतो भक्षमन्त्रस्यैवैन्द्रप्रदानविषयत्वादनैन्द्राणाममन्त्रकं भक्षणम् ॥ १७ ॥ ३१ ॥

**॥ इति सप्तदशं अनैन्द्राणाममन्त्रकभक्षणाधिकरणम् ॥**

( १८ अधिकरणम् । )

**ऐन्द्राग्ने** ॥ एवं स्थिते पुनश्चिन्ता । ऐन्द्राग्नेऽप्यभ्यासे इन्द्रपीतस्येत्येव समन्त्रकं भक्षणम्; त्यागस्य व्यासज्यवृत्तित्वेऽपि पानस्य पीतपदलक्षितस्वीकारस्य वा प्रत्येकवृत्तित्वेन डित्थमातृवदेकेन व्यपदेष्टुं शक्यत्वात् त्यागस्य च हुताहुतसमुदायविषयत्वेन भक्ष्यमाणहुतावयवमात्रविषयत्वाभावान्न पीतपदेन त्यक्तत्वलक्षणा । अतश्चतुर्धाकरणाधिकरणविषयत्वाभावात्तस्यापि समन्त्रकं भक्षणमिति प्राप्ते—

---

वानुष्ठानेन प्रसङ्गतोऽन्येषामप्युपकारकत्वात् पृथगनुष्ठानाभावेन समन्त्रकत्वामन्त्रकत्वकृतो नानुष्ठाने कश्चन विशेषः; तथापि ऐन्द्रप्रदानोत्तरं सर्वसोमनाशे प्रदानान्तराणामर्थे सोमे मीयमाने गृह्यमाणे चामन्त्रकत्वसिद्धिरित्यर्थः । **अतएव**—इन्द्रपीताधिकरणसिद्धान्तस्य अनैन्द्रेषु मन्त्रप्राप्तिरूपस्य बहुव्रीहित एव संभवात् सिद्धान्तेऽप्यस्य सामानविध्यस्यानिराकरणेनाभ्युपगतत्वावगमेऽपि सिद्धान्ते अनुपयुक्तस्य तस्य कृत्वाचिन्तामिषेणात्राभिधाने किं प्रयोजनमित्याशङ्कोत्तरं भक्षमन्त्रे विशेषाभावेऽपि "इन्द्राय त्वा वसुमते" इत्यनयोः मानग्रहणमन्त्रयोः अनैन्द्रेपूहेन प्रयोगः प्रकृतिविकृतिभावे स्यात्, सामानविध्येतु तदसंभवात् यथावस्थितयोश्च तत्रासामर्थ्यादप्रयोग एवेति भट्टसोमेश्वरेण क्वचित् लिखितमपि सर्वसोमनाशापादितपुनःप्रदानान्तरार्थसोमग्रहणमानानुष्ठाने मन्त्रस्यातिदेशतः प्राप्तस्योहप्रयोगपरमेव ज्ञेयम् । एवं स्थिते एतदुत्तरं न्यायसुधायामलिखितमपि तल्लिखितभ्रमेणानूद्य अनैन्द्रप्रदानेषु पृथङ्मानग्रहणयोरेवानुष्ठानात् कुतः तत्राऽनयोर्मन्त्रयोः प्रकृतिविकृतिभावेऽप्यूहप्रसङ्गः कुतस्तरां सामानविध्यादप्रयोग इति प्रकाशकारैः दूषितम्, तत् कौस्तुभे पूर्वोक्तानुष्ठानविशेषोपपादनव्याजेन पूज्यपादैरेव अयुक्तमिति सूचितम् । **वस्तुतस्त्विति** ॥ विधिवाक्ये वसुमत्त्वगुणस्याश्रवणादिन्द्रगतवसुमत्त्वप्रकाशनस्य व्यर्थत्वापत्तेः वार्तिकोक्तरीत्या देवतावाचिवसुमच्छब्देनैन्द्रातिरिक्तानैन्द्रप्रदानसंबन्धिदेवताभिधानोपपत्तेरितरदेवतायुक्तायेन्द्रायेत्यर्थेन समन्त्रकमन्यत्रापि मानग्रहणादित्यर्थः । भक्षमन्त्रे त्वनैन्द्रप्रदानसंबन्धिदेवताभिधानाभावात् प्रदानानां भेदेन तत्तच्छेषस्येव भक्षणानामपि पृथक्पृथगनुष्ठानात् ऐन्द्रशेषभक्षणे प्रयुज्यमानस्य करणत्वेनापि प्राकरणिकविनियोगोपपत्तेरैन्द्रशेषभक्षण एव लिङ्गात् प्रयोगः, अनैन्द्रशेषभक्षणेतु सर्वथा प्राप्त्यभाव इति वैषम्यमभिप्रेत्योपसंहरति—**अत इति** ॥

**यत्तु**—अत्र प्रकाशकारैः "यं कामयेत पापीयान् स्यादिति नीचैस्तरां तस्य याज्यया वषट्कुर्यादि"त्यादियाज्याश्रितगुणकामप्राप्तिरनैन्द्रेष्वपि सामानविध्ये, विकृतित्वे तु नेति प्रयोजनं सामानविध्यस्योक्तम्; तन्न; अभ्यासानां विकृतित्वेऽपि कर्मण एकत्वेन विकृतिभूताभ्याससाध्यस्यापि तस्यैव ज्योतिष्टोमत्वेन फलसंबन्धात् ज्योतिष्टोमापूर्वसाधनीभूतयाज्यारूपाश्रयस्य तेष्वप्यवशिष्टत्वेन गुणकामप्राप्त्युपपत्तेः । नहि ऐन्द्रप्रदानसंबन्धियाज्यात्वेन तत्राश्रयता; प्रमाणाभावात्, नाप्यनैन्द्रप्रदानानामैन्द्रप्रदानाङ्गत्वं फलान्तरं वा, येन तत्साध्ययागस्य ज्योतिष्टोमात् कर्मान्तरतया ज्योतिष्टोमत्वं न संभवेत्, अतोऽयुक्तमेतत् प्रयोजनमिति पूज्यपादैरुपेक्षितम् ॥

**॥ इति सप्तदशं अनैन्द्राणाममन्त्रकभक्षणाधिकरणम् ॥**

---

भक्षमन्त्रस्यैन्द्राग्नदेवत्यहुतशेषभक्षणाङ्गत्वानङ्गत्वविचारात् पादाध्यायसङ्गती तथा पूर्वाधिकरणे ऐन्द्रप्रदानव्यतिरिक्तप्रदानहुतशेषभक्षणे अमन्त्रकत्वस्याद्यपूर्वपक्षवादिना साधितस्येहाक्षिप्य समाधानादाक्षेपिकीमनन्तरसङ्गतिं च स्पष्टत्वादनुक्त्वा स्थित एवाद्यपूर्वपक्षे कृत्वाचिन्तात्वेन विचारं दर्शयति—**एवमिति** ॥

पूर्वपक्षमाह—**ऐन्द्राग्नेपीति** ॥ **त्यागस्येति** ॥ यद्यपि चतुर्धाकरणाधिकरणन्यायेनेन्द्राग्न्योः व्यासज्यवृत्तित्वात् नेन्द्रपीतपदेन इन्द्राय त्यक्त इति व्युत्पत्त्या इन्द्राग्न्यन्तर्गतेन्द्रो देवता शक्या व्यपदेष्टुम्; तथापि पीतपदस्य त्यक्तत्वलक्षणायां प्रमाणाभावाच्चतुर्थीसमासस्यानुशिष्टत्वेनान्याय्यत्वात् कथंचिदनुशासनेऽपि वा हुताहुतसमुदायस्यैव पूर्वं त्यक्तस्य होमेन नाशादहुतस्य भक्षणयोग्यस्यात्यक्तत्वेन इन्द्रपीतपदव्यपदेश्यत्वासंभवात् पानमेव रसास्वादनरूपदेवतानिष्ठं अथवा तस्य नवमे निषेत्स्यमानत्वात् आहवनीयमुखप्रक्षेपरूपं वा अथवा हुतस्यैव तत्पदव्यपदेश्यत्वापत्त्याऽहुतभक्ष्यमाणे तत्पदव्यपदेशासंभवादपीतावयवसंग्रहाय समुदाये लक्षणापत्तेः देवस्वादिपदालम्बनतयाऽवश्यकः स्वीकारो वा संबन्धरूपः पीतशब्दार्थो लक्षणया वक्तव्यः । तथाच तृतीयासमासोप्यनुशासनशिष्टो लभ्यते । एवंच स्वीकारस्यावयवावयविसाधारण्येन कल्पितस्य प्रतिदेवताधिष्ठानं भेदेन कल्पनोपपत्तेर्व्यासज्यत्यागेऽपि अर्धस्येन्द्रेण स्वीकृतत्वात् तत्पदव्यपदेश्यत्वोपपत्तिरित्यर्थः । **डित्थमातृवदिति** ॥ डित्थडवित्थयोर्मातरि मातृपदार्थान्तर्नीतजन्यजनकभावरूपसंबन्धस्य प्रत्येकं विद्यमानतया एकेनापि संभवति डित्थमातेति व्यपदेशः, तद्वदिहापि उपपद्यत इत्यर्थः ॥

चतुर्धाकरणेतु तद्धितेन देवतात्वस्यैव उक्तत्वान्न व्यासज्य-

सत्यं पीतपदेन स्वीकारलक्षणा; पानस्य नवमे निषेध्यमानत्वात्, त्यागस्य त्वदुक्तरीत्या लक्षयितुमशक्यत्वाच्च। स्वीकारस्य तु देवत्वादिपदालम्बनतया कल्प्यमानस्य हुतावशिष्ट एव कल्पनीयत्वाद्युक्ता लक्षणा; तथापि तस्य लाघवेन व्यासज्यवृत्तेरेव कल्पने प्रत्येकवृत्तित्वे प्रमाणाभावाच्चतुर्थाकरणाधिकरणविषयत्वोपपत्तेर्न तस्य समन्त्रकभक्षणम् ॥ १८ ॥ ३३ ॥ इत्यष्टादशं ऐन्द्राग्नभक्षस्यामन्त्रकताधिकरणम् ॥

( १९ अधिकरणम्। )

छन्दसश्च ॥ तत्रैव मन्त्रे गायत्रछन्दस इत्यादि श्रुतम्। तच्चेदं सोमविशेषणमेवास्मिन्पूर्वपक्षे । अतश्च केवलमेव यत्रैन्द्रप्रदाने गायत्रं छन्दो यथा बृहस्पतिसवादौ 'गायत्रमेतदहर्भवती'ति श्रुतेः, तत्रैवास्योत्कर्षो, नतु ज्योतिष्टोमे निवेशः; केवलगायत्रच्छन्दस्कप्रदानाभावात् । नच सामान्यसंबन्धबोधकप्रमाणाभावः; इन्द्रदेवत्यत्वप्रातःसवनादीनामन्यत्र लोकादावभावेन पारिशेष्यादेव बृहस्पतिसवोपस्थितिसंभवादिति प्राप्ते—

बृहस्पतिसवेऽपि सवनमुखीये ऋगन्तरस्य पठितत्वाद्गायत्रमेतदित्यादेश्च भूम्नापि व्याख्यानोपपत्तेः प्रकृतौ विलेन्द्र एव प्रकाश्यते, नत्वन्यसहितः; समासविघातापत्तेरत ऐन्द्राग्नादौ मन्त्राप्रयोगः पूर्वत्र साधितः, तथेहापि गायत्रच्छन्दआदिपदैः केवलमेव गायत्र्याद्यन्ययोगव्यावृत्त्या विशेषणत्वेन छन्दः प्रकाश्यते नतु छन्दोन्तरसापेक्षम्; समासविघातापत्तेः, अतोऽत्रापि छन्दोन्तरसापेक्षगायत्रछन्दस्कत्वस्य ज्यौतिष्टोमिकैन्द्रप्रदाने सत्त्वेन मन्त्रलिङ्गविरोधाद्यत्र तन्निरपेक्षगायत्रछन्दस्कता तत्र उत्कर्ष इत्यभिप्रेत्याह—अतश्चेति ॥

---

वृत्तिदेवताकस्य ग्रहणम् । अतएव अपौनरुक्त्यं चेत्यभिप्रेत्य वैषम्यमाह—अतश्चतुर्थेति ॥

लाघवेनेति ॥ व्यासज्यवृत्तिदेवतास्थले व्यासज्यवर्तिन एकस्यैव स्वीकारस्य कल्पने संभवति न तत्र नानात्वकल्पना; गौरवादित्यर्थः ॥ यत्तु वार्तिकादौ त्यक्तत्वलक्षणया सिद्धान्तोपपादनं, तत्प्रौढिप्रदर्शनार्थमित्युक्तं कौस्तुभे तत्रैव द्रष्टव्यम् ॥

अमन्त्रकत्वपूर्वपक्षस्य स्थायित्वेऽपि स्थायिविचारप्रयोजनं ऐन्द्राग्नभक्षणेऽपि सवनविशेषणतया प्रयोज्ये मन्त्रे तदर्थानुसन्धानवेलायां पूर्वपक्षे भिन्नस्वीकारत्वात् ऐन्द्राग्नान्तर्गतेन्द्रपीतत्वेनापि इन्द्रपीतपदार्थानुसन्धानम् । सिद्धान्तेतु तस्यैकत्वादिन्द्रपीतपदार्थत्वाभावान्नानुसन्धानमिति स्पष्टत्वान्नोक्तम् ॥

॥ इत्यष्टादशं ऐन्द्राग्नभक्षस्यामन्त्रकताधिकरणम् ॥

---

ऐन्द्रप्रदानशेषभक्षणे एवाऽयं मन्त्र इति पूर्वपक्षमुपजीव्य कृताचिन्तात्वेन करिष्यमाणस्य सदोन्तरसहितगायत्रछन्दस्कैन्द्रप्रदानेप्ययं मन्त्रोऽङ्गमुत तन्निरपेक्षगायत्रछन्दस्कैन्द्रप्रदान एवेति विचारस्य मन्त्रगताङ्गत्वविचाररूपतया पादाध्यायसङ्गती तथाऽपवादिकीमनन्तरसङ्गतिं च स्पष्टत्वादनुक्त्वा तस्मिन्नेव मन्त्रे एकदेशविषयताप्रदर्शनपूर्वकं पूर्वपक्षमाह—तत्रैवेति ॥ यदि गायत्रछन्दस इतिपदं सिद्धान्त इव सवनविशेषणं भवेत्, तदा केवलगायत्रछन्दस्कैन्द्रप्रदानमात्रार्थतापूर्वपक्षो न सिध्येदित्यतो यद्यपीन्द्रपीतपद इव तत्पुरुषकृतं सोमपरत्वं न संभवति; पक्षद्वयेपि बहुव्रीहेरावश्यकत्वात्; तथाप्यनन्तरोपन्यस्तेन्द्रपीतपदस्य तत्पुरुषेण सोमपरत्वे साधिते सति तत्समभिव्याहारात् गायत्रछन्दस इत्यादिपदानामपि तत्परत्वमेव युक्तम्, नतु पूर्वपदोपस्थापितप्रातस्सवनादिपरत्वम्; तथात्वे विशेष्यपरप्रातस्सवनादिपदानामेतदुत्तरं प्रयोगापत्तेरतोऽस्मिन् महाधिकरणपूर्वपक्षे सोमविशेषणमेवेत्यभिप्रेत्याह—तच्चेदमिति ॥ यथा इन्द्रपीतपदेन केव-

गायत्रमेतदिति ॥ अनेनातिदेशप्राप्तनानाछन्दस्कताबाधेन दाशतयीगतौत्पत्तिगायत्रीछन्दस्कर्चां विधानमष्टमचतुर्थपादे वक्ष्यते । अतएव—त्रिवृद्बहिष्पवमानादौ क्वचित् प्राप्तगायत्रछन्दस्कानुवादत्वं पक्षान्तरेण प्रकाशकारोक्तं—अपास्तम् । यद्यपि अन्यछन्दस्कर्ग्बाधेनोत्पत्तिगायत्रीविधानाभिधानेन केवलगायत्रछन्दस्कत्वमादायात्र पूर्वपक्ष उपतिष्ठति; तथाप्युत्पत्तिगायत्रीविधानेनैव विशेषरूपेणान्यछन्दस्कर्चां बाधमभिप्रेत्य केवलगायत्रछन्दस्कत्वसंभव इत्यर्थः ॥

ननु—मनोतामन्त्रस्य सामान्यसंबन्धबोधकप्रमाणाभावेन विकृतावनुत्कर्षवदिहापि तदभावात् कथं बृहस्पतिसवोपस्थितिरित्याशङ्कते—नचेति ॥ अत्र प्रकाशकारैः भक्षानुवाक इति समाख्ययैव सामान्यसंबन्धबोधकप्रमाणमित्युक्तम्, तल्लोकेऽपि रागतः प्राप्तसोमभक्षसत्त्वेन समाख्यायास्तत्साधारणतया नियमतः सामान्ययागोपस्थापकत्वाभावे विशेषतो बृहस्पतिसवयागोपस्थापकत्वे प्रमाणाभावादयुक्तमित्युपेक्ष्य स्वयमन्यथा परिहरति—इन्द्रदेवत्यत्वेति ॥ लौकिकसोमभक्षे केवलगायत्रछन्दस्कत्वप्रातस्सवनसंबन्धित्वेन्द्रपीतत्वादीनामसंभवेन तद्व्यावृत्त्या परिशेषादेव विशेषेण सामर्थ्यात् बृहस्पतिसवीयसोमप्रतीत्युपपत्तेः सामान्यसंबन्धबोधकप्रमाणाभावेऽपि क्षतिविरह इत्यर्थः ॥

ऋगन्तरस्य पठितत्वादिति ॥ यथापाठमन्यछन्दस्कर्चामतिदेशतः प्राप्तत्वादित्यर्थः । एतच्चोपलक्षणं ऋगन्तराम्नानान्तरस्यापि । यथा माध्यन्दिनसवने मरुत्वतीये तथा निष्कैवल्येच शस्त्रे क्रमेण प्रकृतौ जनिष्ठा उग्र इत्यस्य सूक्तस्य मुखे यस्तस्तंभेत्यृचस्तथा इन्द्रस्य नु वीर्याणीति सूक्तमुखे ध्रुवेन यः

कृतौ वा केवलगायत्रछन्दस्कत्वाभावान्नित्यसापेक्षत्वेन समासोपपत्तेः प्रकृतावेव निवेशः । वस्तुतस्तु गायत्र्याः प्रत्येकमेव साधनत्वात् सत्यपि ऋगन्तरे न समासभङ्गाशङ्काऽपि ॥ १९ ॥ ३३ ॥ **इत्येकोनविंशं मन्त्रविशेषणामनेकछन्दस्के विनियोगाधिकरणम् ॥**

---

सुप्रकेतं मदन्त इत्यृचश्च त्रिष्टुप् छन्दस्काया आम्नानस्य यस्तस्तंभ धुनेत यः इतिसूक्तमुखीये इत्याश्वलायनसूत्रगतवचनेन कृतत्वात् । **गायत्रमेतदित्यादेश्चेति** ॥ यतो बृहस्पतिसवे ऋगन्तराणामन्यछन्दस्कानां विधानात् गायत्रत्वं विधीयमानं न्यायसुधादर्शितरीत्या अतिदेशप्राप्तप्रातरनुवाकादिगतसप्तछन्दस्कत्वाबाधेनाविहितछन्दोविशेषयाज्यादिविषयं, अथवा प्रकाशकारोक्तरीत्या विशेषविहितत्रिवृत्स्तोमकेष्वाज्यादिस्तोत्रेषु वा, अथवा सोमनाथेनोक्तरीत्या प्रधानमात्रे वा निविशते । अतो ज्योतिष्टोम इव बृहस्पतिसवेऽपि न केवलगायत्रछन्दस्कत्वम् । गायत्रमेतदहरिति सामानाधिकरण्यंच भूमगुणयोगात् गौणमित्यर्थः । अतएव यथा गुरुत्वस्य शिष्यत्वानपेक्षस्य कदाचिदप्यभावात् नित्यसापेक्षतया अस्माकं गुरुकुलमित्यत्रास्मदर्थशिष्यसापेक्षेणापि गुरुपदेन कुलपदस्य समासः, एवमिहापि नित्यछन्दोन्तरसापेक्षस्य गायत्रपदस्यान्ययोगव्यावृत्त्या विशेषणतया अन्वयायोगेऽप्ययोगव्यावृत्त्या विशेषणत्वोपपत्तेः नित्यसापेक्षतया छन्दःपदेन समासोपपत्तिरित्याह —**प्रकृताविति** ॥ यद्यपि तत्र गुर्वादिशब्दः संबन्धिशब्दो नैवं गायत्रछन्दः; तथापि शिष्यादिनिरपेक्षगुर्वाद्यर्थासंभवोपपत्त्या यथा नित्यसापेक्षत्वं तथा इहापि गायत्रछन्दस्कस्यासंबन्धिशब्दत्वेपि तदर्थस्य छन्दोन्तरनिरपेक्षस्याभावान्नित्यसापेक्षत्वमित्यभावादिति हेतूक्त्या सूचितम् । एवमयोगव्यावृत्त्या विशेषणताङ्गीकारेण नित्यत्वेन च समासोपपत्तिं प्रदर्श्य अधुना अन्ययोगव्यावृत्त्यापि संभवतिविशेषणत्वमित्याह—**वस्तुतस्त्विति** ॥ गायत्रं छन्दोऽस्येति समासार्थान्तर्नीतसंबन्धसामान्यस्य विशेषं विना अपर्यवसानाद्दृगवान्तरकार्यद्वारैव तद्विशेषावगतेः सत्यपि स्तोत्रादौ छन्दोऽन्तरे सर्वछन्दसां व्यासज्य साधनत्वाभावात् तस्मिंश्च स्वावान्तरकार्ये इतरनिरपेक्षतयैव तत्तच्छन्दस्कर्चां साधनत्वादन्ययोगव्यावृत्त्यापि विशेषणत्वं समासश्चोपपद्यत इत्यर्थः । एवं स्थिते एतादृशनिरपेक्षसाधनत्वमादाय केवलं गायत्रछन्दस्कत्वस्य ज्योतिष्टोमेऽपि "इदं सौम्यं मध्वधुक्षन्नद्रिभिः नरो जुषाणं इन्द्रतत्पिबे"त्यैन्द्रप्रदानयाज्याया गायत्रीछन्दस्काया निरपेक्षसाधनत्वेन केवलगायत्रछन्दस्कत्वोपपत्तेः तच्छेषभक्षण एव मन्त्रो नत्वन्यछन्दस्कयाज्यैन्द्रप्रदानशेषभक्षण इत्यापादनस्य पूर्वपक्षेऽपि संभवाद्विकृतावुत्कर्षपर्यन्तापादनम् तादृशयाज्याभावे कृत्वाचिन्तयैव ज्ञेयमिति वस्तुतस्त्वित्यनेन सूचि-



**( २० अधिकरणम् । )**

**सर्वेषां** ॥ **स्थितादुत्तरम्** । नेन्द्रपीतपदे तत्पुरुषोऽपि तु बहुव्रीहिरेव । तत्पुरुषेऽपि पूर्वपदे तावदेका संबन्धिलक्षणा पीतपदे च स्वीकृतावयवलक्षणा । यद्यपि चेयं सि-

---

तम् । प्रयोजनं स्पष्टत्वान्नोक्तम् ॥ **इत्येकोनविंशं मन्त्रविशेषणामनेकछन्दस्के विनियोगाधिकरणम् ॥**

---

इदानीमिन्द्रपीताधिकरणकृतद्वितीयोहपूर्वपक्षस्याद्यपूर्वपक्षवादिनैव निरस्तत्वादवशिष्टाद्यपूर्वपक्षनिरासेन सिद्धान्तमुपपादयितुमनेकचिन्ताव्यवहितत्वादाद्यं पूर्वपक्षं स्मारयति—**स्थितादिति** ॥ स्थितादितिल्यब्लोपे पञ्चमी । अनिरासात् स्थितं पूर्वपक्षगपेक्ष्यावशिष्टमुत्तरमुच्यत इत्यर्थः ॥

बहुव्रीहावुभयपदार्थत्यागापेक्षया एकपदार्थत्यागेन लाघवात् तत्पक्षमङ्गीकृत्य इन्द्रपीतपदस्य सोमपरत्वं यद्वदेत्, तत्त्रापि लक्षणाद्वयापत्त्या उभयपदार्थत्यागस्य समत्वादयुक्तम्, अतो बहुव्रीहिमेव गायत्रं प्रातःसवनमित्यादितात्पर्यानुगृहीतसवनैकविशेषणतयाऽर्थप्रतिपादकगायत्रछन्दःपदप्रायपाठात् प्रातःसवनादिपदसामानाधिकरण्याच्च इन्द्रपीतपदे अङ्गीकृत्य सवनपरत्वमेव युक्तमित्यभिप्रेत्याह—**नेन्द्रपीतपद इति** ॥ तामेव लक्षणापत्तिं दर्शयति—**पीतपदे चेति** ॥ पीतपदे स्वीकारलक्षणायामपि हुताहुतसमुदायस्यैव त्यागेन स्वीकारात् इन्द्रपीतपदेन विवक्षितस्येन्द्रकर्तृकस्वीकारस्य समुदाय एव सत्त्वात् तदेकदेशस्य होमेन नष्टस्य सोमेति संबोधनार्थत्वात् प्रत्यक्षवचनेन ते इति शब्देन व्यपदेष्टुमशक्यत्वात् पीतपदेन पात्रस्थहुतशेषरूपस्वीकृतावयवस्य पीतपदे लक्षणान्तरस्य तत्पुरुषे आपत्तिः, बहुव्रीहौतु हुताहुतसमुदायस्य पीतपदेनोक्तावपि यस्मिन् सवने इन्द्रेण समुदायरूपतया सोमः स्वीकृतः तत्सवनसंबन्धित्वस्य हुतशेषावयवेऽपि सत्त्वात् तत्संबन्धिपात्रस्थशेषस्य संबोधनोपपत्तेः तं यत्किंचिद्देवत्यं भक्षयामीत्यर्थोपपत्तेर्न दोषः । यद्यपि प्रातस्सवनमभिषवो यस्येति बहुव्रीहिणा प्रातःसवनपदस्य सोमपरत्वमपि, न सवनपरत्वनिश्चयः; तथापि रूढ्या क्रतुभागवाचित्वेनावगतत्वादवयवव्युत्पत्त्यसंभवात् सवनपरत्वोपपत्तिः । यद्यपि वाग्जुषाणा सोमस्य तृप्यत्विति षष्ठ्यन्तसोमशब्दसामानाधिकरण्यसिध्यै प्रातःसवनशब्दस्यावयवव्युत्पत्त्या सोमवाचित्वं भवेत्; तथापि आद्यक्रतुभागगतस्य कृत्स्नस्य सोमस्य प्रातरभिषवात् प्रातःसवनशब्दस्य क्रतुभागगतकृत्स्नसोमवाचित्वापत्तेः सोमशब्दस्य हुतशेषमात्रवाचित्वात् प्रातःसवनसंबन्धित्ववाचिनं शब्दं विना सामानाधिकरण्यानुपपत्तेः प्रातःसवनशब्दस्य छप्रत्ययान्तत्वापत्तेर्न सोमपरत्वम् । अतो देव सोमयस्त्वमिन्द्रपीतस्य प्रातःसवनस्य संबन्धी तस्य तेऽवयवं भक्ष-

द्धान्तिनोऽपि तुल्या; तथापि अवयवस्वीकारस्यावयविस्वीकारसापेक्षत्वेन विलम्बोपस्थितिकत्वान्न तुल्यत्वम्। ततश्च पीतपदे अर्शआद्यच्प्रत्ययं मत्वर्थीयं पाधातुना चावयविगतमेव तत्संबन्धिस्वीकारं लक्षयित्वा इन्द्रः पीतः स्वीकारकर्त्ता यस्मिन्सवन इति व्युत्पत्त्या समानाधिकरणबहुव्रीहिरङ्गीक्रियते। प्रकरणविशेषाच्च निर्णयः। अतः सर्वस्यैव सोमस्योक्तविधप्रातःसवनादिसंबन्धित्वादैन्द्राणामपि समन्त्रकमेवाविकारेण भक्षणम्।

यदि तु पीतपदस्य पूर्वनिपातापत्तिराशङ्क्यते, तदास्तु इन्द्रे पीतं पानमस्मिन्निति सप्तमीबहुव्रीहिः। यदि त्वत्रापि निष्ठान्तत्वेन पूर्वनिपातापत्तिरविशिष्टेति विभाव्यते, तदा पीतपदस्याकृतिगणत्वेनाहिताग्न्यादिगणान्तःपातमङ्गीकृत्य "वाहिताग्न्यादिषु" इति सूत्रेणेन्द्रपदस्य पूर्वनिपातः। अथ वाऽस्त्वयं तत्पुरुष एव। तदापि तु लक्षणया सोमसंबन्धिसवनपरत्वम्। नच तस्यां प्रमाणाभावः; तैत्तिरीयशाखायां प्रातःसवनादिभेदेन इन्द्रपीत-नराशंसपीत-पितृपीतानां त्रिवारं पाठस्यैव प्रमाणत्वात्। सोममात्रपरत्वे हि तत्तत्प्रदानेषु लिङ्गादेवेन्द्रपीतादिपदानां सकृत्पठितानामेव पाठो-

---

यामीत्येवं षष्ठी योज्या। ननु यस्य प्रातःसवनस्य सोमस्य संबन्धी इन्द्रपीतस्तस्येत्येवं सा योज्येति उभयपदार्थत्यागापत्तिसाम्ये प्रातःसवनपदप्रायपाठात् बहुव्रीहिरेव युक्त इत्याशयः। ननु देवतायाः पातृत्वनिषेधात् पीतपदे स्वीकारलक्षणा बहुव्रीहिपक्षे उभयपदार्थत्यागापत्तिदोषापेक्षया अधिका समस्त्येव, प्रत्युत ऐन्द्राग्नाधिकरणोपपादितप्रकारेण पाधातुनैव लक्ष्यस्य स्वीकारस्यावयवावयविसाधारणत्वात् भक्ष्यमाणावयवनिष्ठस्यैव स्वीकारस्य पाधातुना लक्षणान्न तत्पुरुषे स्वीकृतावयवलक्षणान्तरापत्तिदोष इत्याशङ्क्य परिहरति —**यद्यपि चेति**॥ यद्यपि पाधातुना स्वीकारलक्षणा तुल्या; तथापि अत्रावयवगतस्वीकारबोधनमवयविगतस्वीकारोपस्थितिसापेक्षमिति विलम्बोपस्थितिसापेक्षम्, नैवं बहुव्रीहौ सर्वस्यावयविन एव स्वीकारादतोऽतुल्यत्वमित्यर्थः। व्यधिकरणबहुव्रीहेरननुशिष्टत्वाशङ्कां कण्ठेकाल इत्यादिवत् "सप्तमीविशेषणे बहुव्रीहावि" त्यनेन व्यधिकरणबहुव्रीहिसंभवात् प्राचीनैः परिहृतामपि सप्तमीबहुव्रीहिविषय एव तस्य ज्ञापकताङ्गीकारादन्यत्राप्रवृत्तेः तत्रापरितुष्य प्रकारान्तरेण समानाधिकरणबहुव्रीह्याश्रयणेन परिहरति—**अतश्चेति**॥ प्रथमतः पीतप्रतिबद्धवत्सामित्यत्रेव पीतपदं भावे निष्ठान्तं पानवाचकमङ्गीकृत्य पीतमस्याऽस्तीत्यर्थे अर्शआद्यचं कृत्वा इन्द्रः पानवान् यस्मिन् सवने इत्येवं समानाधिकरणबहुव्रीहिरेवेत्यर्थः। एवंचापूर्वसंयोगादभ्यासानां प्रकरणाविशेषात् सर्वत्र प्रधानभूतभक्षयामिपदसामर्थ्याच्च सर्वप्रदानाङ्गत्वेन प्राप्तस्य मन्त्रस्य गुणभूतेन्द्रपीतपदाशक्त्या संकोचो न युक्तस्तस्यापि सवनविषयत्वेन शक्त्युपपादनान्न संकोचकता युक्तेति सर्वप्रदानाङ्गत्वनिर्णय इत्याह—**प्रकरणाविशेषादिति**॥ स्वरविशेषेण बहुव्रीहित्वनिर्णयः प्राचीनैरुक्तोऽपि स्वरस्य तत्पुरुषेऽपि पूर्वपक्षे उपपादितत्वात् उपेक्षितः। अतश्च "वसुमद्गणस्य गायत्रच्छन्दस इन्द्रपीतस्ये" त्यादित्रिकत्रयं प्रातःसवनादिविशेषणम्, तच्च सोमस्य सच अवयवद्वारा भक्षणस्येत्येवं विशेषणयुक्तस्य सवनस्य संबन्धी यः सोमः तस्यावयवं भक्षयामीत्यर्थात् मन्त्रलिङ्गस्य सर्वप्रदानशेषभक्षणप्रकाशनेऽप्यविरुद्धत्वात् सर्वभक्षाङ्गत्वमित्यभिप्रेत्य ऊहपक्षनिरासेन सह सिद्धान्तमुपसंहरति—**अत इति**॥ येषांतु तत्तत्सवनविशेषणतयोपात्तानां पदानां लिङ्गं तत्तत्सवने विरुध्यते, तेषांतु सामर्थ्यादेव सूक्तवाकमन्त्रगतपदानामिव विभज्य विनियोगेऽप्यवशिष्टाविरुद्धमन्त्रगतपदानामविरोधे सति तत्तत्सवनसंबन्धिसर्वभक्षाङ्गत्वमेवेत्यर्थः॥ एवं समानाधिकरणबहुव्रीहिणोपपादितसिद्धान्तोपसंहारे कृते पुनः सिंहावलोकनन्यायेन तत्र दूषणमुपन्यस्य तत्परिहारेण सिद्धान्तमुपपादयति—**यदि त्विति**। पीतप्रतिबद्धवत्सामितिवदुपसर्जनं पूर्वमित्यनुशिष्टस्य पूर्वनिपातस्यापत्तौ पीतेन्द्रेतिप्रयोगापत्तिरित्यर्थः। ज्ञापकस्य सप्तमीबहुव्रीहिविषयत्वमभिप्रेत्य प्राचीनोक्ततृतीयाव्यधिकरणबहुव्रीह्यनङ्गीकारेणापि व्यधिकरणसप्तमीबहुव्रीह्यङ्गीकारेण परिहरति—**तदास्त्विति**॥ **निष्ठान्तत्वेनेति**॥ निष्ठेति सूत्रेण कृतकृत्यः पीतोदकः इत्यादिष्विव निष्ठान्तस्य पूर्वनिपातापत्तिरस्त्येवेत्यर्थः। अगतिकगत्या समाधत्ते—**तदेति**॥ अगतिकत्वेनैवात्रापरितुष्य निष्कृष्टसमाधानेन सिद्धान्तयति—**अथवेति**॥

**तैत्तिरीयशाखायामिति**॥ तस्यां हि मन्द्राभिभूतिरित्यारभ्य वर्चस इत्यन्तं पठित्वा "वसुमद्गणस्य सोमदेवते मतिविदः प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि रुद्रवद्गणस्य सोमदेवते मतिविदो माध्यन्दिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयाम्यादित्यवद्गणस्य सोमदेवते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दस इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि" इतिमीमांसाभाष्यकारलिखितशाखान्तरीयमन्त्रपाठवैलक्षण्येन पाठः। तत्रेन्द्रपीतादिपदानां त्रयाणां सोममात्रपरत्वे तत्तद्देवत्यप्रदानशेषभक्षणे लिङ्गादेव तन्त्रपदतया तत्तत्पदानां प्राप्तेस्त्रिवारं पाठोऽनर्थकः प्राप्नोति, सवनपरत्वेतु सवनानां भेदेन तत्तद्रूपेण तत्तद्देवतापीतसोमसंबन्धिसवनसंबन्ध्यवयवप्रकाशनाय स पाठः सार्थक इति पीतपदे लक्षणायाः सोमसवनसंबन्धिपरत्वेऽस्यां शाखायां निर्णीते उपसंहारन्यायेन भाष्योदाहृत-

पपत्तौ तत्र योग्यतयैव प्रातःसवनादिपदानां विभागेन वि-
शेषणत्वोपपत्तिः । अतस्तेषां प्रातःसवनादिभेदेन त्रिवारं पाठ एव वैयर्थ्यमिया सवनपरत्वलक्षणातात्पर्यग्राहकः । अतश्चेन्द्रपीतादिविशेषणत्रययुक्तस्य तत्तत्सवनस्य संबन्धिनं सोमं अन्यदेवत्यमपि भक्षयामीति मन्त्रार्थावगतेः सर्वत्रैक-

मन्त्र्यम् । विभागोऽपि तैत्तिरीयशाखाम्नातक्रमेणैव बोध्यः । कल्पसूत्रकारास्तूहमेवामनन्ति ॥ २० ॥ ३४ ॥ इति विंशं एकादशाधिकरणोपसंहाराधिकरणम् ॥

॥ इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां तृतीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

मन्त्रेऽपि तथैव निर्णयो युक्तः । **एतावांस्तु विशेषः**—वसुमद्गणादिपदानां असिद्धविभागकरणपूर्वको व्यवस्थया तत्तत्सवने विनियोगो भाष्योदाहृतः । तैत्तिरीयेतु यथासवनं विभागस्य स्वत एव सिद्धत्वाद्यथालिङ्गं व्यवस्थामात्रमिति तत्पुरुषेणैवाऽत्र सिद्धान्त इति भावः ॥

अत्रच "सर्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो ही"ति सिद्धान्तसूत्रे ऐतिशायनग्रहणादन्यैरैकमन्त्र्यमिति मतं न जैमिनेः, तस्यतु यथादेवतं वा तत्प्रकृतित्वं हि दर्शयतीत्याद्यपूर्वपक्षनिराकरणायोत्तरसूत्रप्रतिपादितोहपक्ष एवेति भ्रमं निराकर्तुमाह—**कल्पसूत्रेति** ॥ योह्युत्तरसूत्रेण जैमिनिना ऊहपक्ष उक्तः, स कल्पसूत्रकारमतत्वेनोक्तः, परमतत्वेनोक्तोऽप्यैकमन्त्र्यपक्षः स्वसिद्धान्त एव युक्तिसिद्धत्वा-

दतो मीमांसान्यायविरोधे पूर्वपक्षमूलत्वात् कल्पसूत्रकारवचनस्यानुष्ठानलक्षणमप्रामाण्यमित्यर्थः । **अतएव**—अत्रान्ते उक्तं भाष्यकारेण एवमैतिशायन आचार्यो मन्यते स्म । अस्माकमप्येतदेव मतम् । आचार्यग्रहणं तस्मादागतमिति संकीर्त्यर्थमिति । प्रयोजनं स्पष्टत्वात् नोक्तम् ॥

॥ इति विंशं एकादशाधिकरणोपसंहाराधिकरणम् ॥

---

॥ इति श्रीखण्डदेवान्तेवासिकविमण्डनशंभुभट्टकृतायां भाट्टदीपिकाप्रभावल्यां तृतीयाध्यायस्य द्वितीयः पादः ॥



अथ तृतीयः पादः।

(१ अधिकरणम्।)

**श्रुतेः** ॥ एवं लिङ्गविनियोगे निरूपिते इदानीं वाक्यादिविनियोगो निरूप्यते। तत्र वाक्यं नाम अङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकत्वान्यतरपदार्थकल्पनाऽनुकूलश्रुतपदसन्निधिः। अस्ति चेदं धेनुर्दक्षिणा, उच्चैर्ऋचा क्रियते, प्रयाजशेषेणेत्यादौ। अत्र कल्पनाशब्देन कर्मत्वकरणत्वादिविषयकं संसर्गविधा लक्षणादिसाधारण्येन शक्तिजन्यपदार्थोपस्थितिभिन्नबोधमात्रं विवक्षितं। तेन धेनुर्दक्षिणेत्यादौ संसर्गविधया भासमानकरणताके नाव्याप्तिः।

वस्तुतस्तु सुबन्तपदयोः परस्परान्वयस्याव्युत्पन्नत्वादवश्यकल्प्यभावनान्वयानुरोधेन धेनुरिति प्रथमया करणत्वलक्षणाद्दक्षिणापदेन च तत्कार्यवृत्तिकर्मत्वलक्षणात्कल्पनापदेन लक्षणाजन्योपस्थितिरेवाभिप्रेता। उच्चैरित्यादौ लुप्तविभक्त्यर्थस्य करणत्वस्य प्रातिपदिकेनैव लक्षणान्नाऽऽव्याप्तिः। अथचोच्चैरित्यादौ करणत्वस्य संसर्गविधयैव भानोपपत्तेः कल्पनापदेनोभयं विवक्षितम्। प्रयाजशेषेणेत्यादौ तृतीयया कर्मत्वस्य धातुना करणत्वस्य लक्षणात्कल्पना स्फुटैव।

श्रुतपदसन्निधेश्च योग्यताज्ञानं विना कर्मत्वादिकल्पकत्वानुपपत्तेर्योग्यतारूपलिङ्गानुमापकत्वम्। श्रुतस्यैव पदस्य कर्मत्वादिलक्षकत्वाङ्गीकारेण तद्वाचकपदरूपश्रुतिकल्पकत्वाभावेऽपि च श्रुतपदस्य तत्तात्पर्यकत्वरूपधर्मवैशिष्ट्यरूपेण कल्पनात् श्रुतिकल्पकत्वोपपत्तिः। अतश्च वाक्यं लिङ्गं श्रुतिं च कल्पयित्वाऽङ्गत्वे प्रमाणम्। तदिह ज्योतिष्टोमे श्रुतेनोच्चैर्ऋचा क्रियत इत्यादिना वाक्येन विधीयमा-

---

**ओं**—लिङ्गस्य श्रुतिकल्पनया विनियोजकत्वात् श्रुतिपादानन्तरनिरूपणीयत्वस्येव वाक्यादीनां चतुर्णां लिङ्गश्रुतिकल्पनया विनियोजकत्वेन लिङ्गपादानन्तरमेवावसरलाभात् निरूपणीयत्वमित्येवमवसररूपामनन्तरसङ्गतिं दर्शयन् लिङ्गकल्पकप्रमाणगम्यविनियोगोपयोगिचिन्तनस्य पादार्थत्वं प्रतिजानीते—**एवमिति** ॥ वाक्यादीत्यादिपदेन वाक्यप्रकरणस्थानसमाख्यानां चतुर्णामिहैव पादे विनियोजकत्वनिरूपणात् पादप्रयोजकत्वसूचनेन यत् प्रकाशकारैः वाक्यस्य विचार्यबाहुल्येन पादप्रयोजकत्वं प्रकरणादीनां तदभावान्न पादप्रयोजकत्वम्; तेषामेकैकाधिकरणमात्रविचार्थतया विचार्यबाहुल्याभावात्, बलाबलाधिकरणचिन्तायास्तु सर्वसाधारण्यादित्युक्तं **तत्—परास्तम्**; चतुर्णां प्रमाणानामिह निरूपणे उपजीव्यतया प्राथम्याच्चावश्यकप्रथमवाक्यविचारानुनिष्पादिते विचार्यबाहुल्यस्य तत्प्रयोजकत्वे प्रमाणाभावेन सर्वेषामेव पादप्रयोजकत्वस्य निवारयितुमशक्यत्वादित्यर्थः। तत्रोद्दिष्टप्रमाणचतुष्टयमध्ये उपजीव्यत्वेन प्रथमं वाक्यकृतविनियोगस्य निरूपणात् ॥

भाट्टभास्करे पदैकवाक्यतावाक्यैकवाक्यतान्यतरस्वरूपं वाक्यलक्षणं कृतमपि 'उच्चैः ऋचे'त्यादौ ऋगादिमन्त्रधर्मत्वपूर्वपक्षेऽप्येतद्वाक्यप्रमाणविनियोजकत्वस्यैवाङ्गीकारेण तत्राव्याप्तेः सिद्धान्तेऽपिच पदैकवाक्यताया उद्देश्यविशेषसमर्पकत्वेऽपि विनियोगस्योच्चैरादिवाक्यप्रमाणकत्वेनैवाङ्गीकाराद्व्याप्तेरयुक्तमित्यभिप्रेत्य स्वयं वाक्यलक्षणमाह—**तत्र वाक्यं नामेति** ॥ **श्रुतपदसन्निधिरिति** ॥ श्रुतयोः पदयोरेकान्वयबोधोपयोगिसन्निधिविशिष्टेणोच्चारणमित्यर्थः। श्रुतावतिव्याप्तिवारणाय—**कल्पनानुकूलेति** ॥ लिङ्गेऽतिव्याप्तिवारणाय—**श्रुतपदसन्निधिरिति पदद्वयोपादानम्** ॥

**अस्तिचेदमिति** ॥ उच्चैस्त्वधेन्वभिधारणवृत्तिकरणत्वस्य दक्षिणाप्रयाजशेषऋग्वृत्तिकर्मत्वस्य च कल्पना तदनुकूलत्वं तादृशपदसन्निधेरित्यस्ति लक्षणमित्यर्थः। **संसर्गविधयेति** ॥ दक्षिणाशब्देनानतिसाधनद्रव्यवाचिना समभिव्याहृतस्य धेनुशब्दार्थस्य नीलो घट इत्यत्रेवाभेदेनान्वये धेनोरानतिसाधनद्रव्याभेदसंसर्गविधया आनतिसाधनताप्रतीतिः, एवमुच्चैरित्यत्रापि ऋचः करणत्वे तत्समभिव्याहृतोच्चैःपदार्थस्याभेदेनान्वये अभेदरूपसंसर्गबलात् करणत्वमुच्चैस्त्वस्य प्रतीयत इति संसर्गविधया भासमानकरणताके नाव्याप्तिरित्यर्थः। वक्ष्यमाणश्रुतिकल्पनस्य संसर्गविधया भासमानकरणतास्थले वक्तुमशक्यत्वात् श्रुतितो दौर्बल्यानापत्तेः पक्षान्तरमाह—**वस्तुतस्त्विति** ॥

**लक्षणाजन्योपस्थितिरेवेति** ॥ यद्यपि "त्रिवत्सः साण्डः सोमक्रयणः" इत्यादौ वाक्यीयविनियोगे सोमक्रयसाधनत्वं ल्युटैवाऽवगम्यत इति न तत्र लक्षणाजन्योपस्थितिरेवेति नियन्तुं शक्यते; तथापि ल्युटः साधनताश्रयद्रव्यवाचित्वेनाङ्गत्वघटकीभूतनिष्कृष्टशक्तिरूपकारकानभिधानात् साण्डेन सोमक्रयं भावयेदित्येवंविधविभक्त्यर्थलक्षणावश्यकत्वान्न दोष इति भावः ॥

प्रकरणादीनां त्रयाणामग्रे स्वरूपलक्षणयोरभिधास्यमानत्वेन तान्युपेक्ष्य वाक्यस्यैव लिङ्गश्रुतिकल्पकत्वं दर्शयति—**श्रुतपदेति** ॥ पदार्थानामन्वययोग्यताऽस्तीत्येवं योग्यताज्ञानं विनेत्यर्थः। **तत्तात्पर्यकत्वेति** ॥ धेनुरित्यादिपदानि धेन्वा दक्षिणाकार्यं साधयेदिति पदरूपतया पठितानीत्येवं श्रुतिकल्पकत्वमित्यर्थः। एवं लिङ्गश्रुती कल्पयित्वा वाक्यं पूर्वपक्षे सिद्धान्तेच विनियोजकतयाऽविशिष्टमिति तस्य विनियोजकत्वं वाक्यान्तराधिकरणेनैव सिद्धमित्यतश्चेत्यनेन सूचयित्वा तद्गम्यविनियोगोपयोग्युद्देश्यतावच्छेदकनिरूपणार्थमेतत्पादाधिकरणनिरूपणमिति सूचयितुमुदाहरति—**तदिहेति** ॥ इत्या-

नस्योचैष्ट्वादेरुद्देश्यसमर्पकेन ऋगादिपदेन किं ऋगादीनां मन्त्राणामेवोद्देश्यत्वं प्रतिपाद्यते उत त्रयो वेदा अजायन्तेत्याद्युपक्रमस्थार्थवादवशेन लक्षणया ऋग्वेदादिविहितकर्माङ्गभूतमन्त्रमात्रस्येति चिन्तायाम् ।

उपक्रमस्थस्यापि वेदपदस्य गुणभूतान्यपरार्थवादस्थत्वेन प्रधानभूतविध्युद्देशस्थऋगादिपदे निःसन्दिग्धेऽङ्गगुणविरोधन्यायेन लक्षणातात्पर्यग्राहकत्वायोगाद्वेदपद एव तदेकदेशऋगादिलक्षणा । **वस्तुतस्तु**—वेदशब्दस्यावयवेऽपि न लक्षणा; वेदत्वस्य प्रत्येकवृत्तित्वात् । इतरथा शूद्रस्यैकवाक्यश्रवणे दोपानापत्तेरिति प्राप्ते—

**दिनेति** ॥ आदिपदेन 'उपांशु यजुषा, उच्चैः साम्ना' इत्यनयोः संग्रहः । तथा "प्रजापतिर्वा इमांस्त्रीन्वेदानसृजत त एनं सृष्टानाधिन्वंस्तानभ्यपीडयत्तेभ्यो भूर्भुवः स्वरित्यक्षरद्भूरित्यृग्भ्योऽक्षरत्सोऽयं लोकोऽभवत् भुवरिति यजुर्भ्योऽक्षरत्सोऽन्तरिक्षलोकोऽभवत्स्वरिति सामभ्योऽक्षरत्स्वर्गो लोकोऽभवत्तद्यदृक् उल्वणं क्रियेत गार्हपत्यं परेत्य भूः स्वाहेति जुहुयादयं वै लोको गार्हपत्योयं लोक ऋग्वेदस्तद्वाव इमं च लोकमृग्वेदं स्वेन रसेन समर्धयति । अथ यदि यजुष्ट उल्वणं क्रियेतान्वाहार्यपचनं परेत्य भुवः स्वाहेति जुहुयादन्तरिक्षलोकोऽन्वाहार्यपचनोऽन्तरिक्षलोको यजुर्वेदः तद्वा वान्तरिक्षलोकं च यजुर्वेदं च स्वेन रसेन समर्धयति अथ यदि सामत उल्वणं क्रियेताहवनीयं परेत्य स्वःस्वाहेति जुहुयात् स्वर्गो वै लोक आहवनीयः स्वर्गो लोकः सामवेदस्तस्माद्वै स्वर्गं लोकं सामवेदं च स्वेन रसेन समर्धयती"ति ताण्डिब्राह्मणप्रथमाध्यायपञ्चमखण्डगतप्रायश्चित्तभागानामपि ज्ञेयम् । उद्देश्यसमर्पकेत्यनेन पूर्वपक्षे सिद्धान्ते चोद्देश्यसमर्पकमृगादिपदमेव नतु सिद्धान्ते वेदशब्द इत्युक्ते तदर्थविशेषमात्रस्य विचार इत्यर्थः ॥

**प्रतिपाद्यत इति** ॥ ततश्च ऋङ्मन्त्रेण यत्क्रियते तदुच्चैरित्यर्थेन यजुर्वेदोत्पन्नानामप्यृचामुच्चैष्ट्वमेव न तूपांशुत्वमित्यर्थपर्यवसानमित्यर्थः । **उपक्रमस्थार्थवादेति** ॥ "प्रजापतिर्वा इदमेक आसीत् स तपोऽतप्यत तस्मात्तपस्तेपानात्त्रयो देवा असृज्यन्ताग्निर्वायुरादित्यस्ते तपोऽतप्यन्त तेभ्यः तपस्तेपानेभ्यो हि त्रयो वेदाः असृज्यन्त अग्नेः ऋग्वेदो वायोः यजुर्वेद आदित्यात् सामवेदः" इति भाष्यलिखित उपक्रमस्थार्थवादः । तत्र द्वितीयाष्टकतृतीयप्रश्नवमानुवाके "इदं वाग्रे नैव किंचनासी"दिति तैत्तिरीयब्राह्मणगततेपानशब्दार्थो वेदभाष्ये तपः कृतवानिति तेपानः तस्मादिति दर्शितः । तद्वदिहापि तपस्तापेत्यर्थे लिटः शानचि एत्वेच कृते तेपानशब्दं प्रसाध्य तदर्थो द्रष्टव्यः । **मन्त्रमात्रस्येति** ॥ ततश्च ऋक्शब्दस्य वेदपरत्वात् ऋग्वेदेन यत्कर्म क्रियते तदुच्चैरिति विहिते उच्चैस्त्वस्य साक्षात्कर्मणि निवेशासंभवेन तद्वेदविहितकर्माङ्गभूतमन्त्रद्वारा निवेशात् तद्वेदविहितकर्माङ्गमन्त्रमात्रस्य उच्चैष्ट्वमित्यर्थात् याजुर्वैदिककर्माङ्गभूताध्वर्युपठ्यमानर्क्षु नोच्चैष्ट्वम्, अपितु उपांशुत्वमेवेत्यर्थपर्यवसानमित्यर्थः । मात्रशब्दोऽवधारणार्थे । तत्र विधेयाया उच्चैष्ट्वभावनायाः सन्निहितानन्यपरे उद्देश्यप्रतिपादके संभवति न तावदर्थवादगतं वेदपदमुद्देश्यपरं वक्तुं शक्यम् । अथ तत्प्रतिपादकत्वासंभवेऽपि तस्य तात्पर्यग्राहकत्वाङ्गीकारादृगादिपदमेव लक्षणया तत्परमित्युच्येत, तथापि श्रौतार्थस्यैव ऋगाद्येकत्वोद्देश्यघटकत्वोपपत्तेर्नान्वयानुपपत्तेस्तद्बीजत्वम् । यद्यपिवा ऋगादिपदवेदपदयोः परस्परविरुद्धार्थकत्वात् अर्थवादगतवेदपदसमभिव्याहारानुपपत्तिर्बीजत्वेन संभवति तथापि वेदपद एव सा युक्तेत्यभिप्रेत्य पूर्वपक्षमाह—**उपक्रमस्थेति** ॥

**निःसंदिग्ध इति** ॥ "ऋचः सामानि यजूंष्यी"ति वेदे मन्त्र एव प्रयोगात् द्वितीये प्रसाधितत्वाच्च निःसंदिग्धत्वे उक्ते अत्राधिकरणाविषयता सूचिता । **एतेन**—ऋग्वेदः ऋक्शाखेत्यादावृगादिपदानां वेदेऽपि प्रयोगात् सामान्यविशेषभावेनान्वयोपपत्तेः पूर्वपक्षानुदयः—**परास्तः**; मन्त्रमात्रपरत्वे निश्चिते एतादृशप्रयोगाणां भूम्नोपपत्तेरित्यर्थः ॥

**ननु**—"मुख्यं वा पूर्वचोदनाल्लोकव"दिति द्वादशाध्यायाधिकरणे मुख्यजघन्ययोर्धर्मविप्रतिषेधे सति मुख्यधर्मानुग्रहस्य वक्ष्यमाणत्वात् तन्न्यायेन प्रकृतेऽप्यर्थवादस्य मुख्यत्वात्स एवानुरोद्धव्य इति कथं पूर्वपक्ष इत्यत आह—**अङ्गगुणेति** ॥ यथा "य इष्ट्वे"ति वाक्येन दीक्षणीयादीष्टिसोमप्रधानयागयोर्विहितस्य पर्वकालस्य एकादिदीक्षापक्षे विरोधे सति दीक्षणीयादेरङ्गभूतत्वेन तदीयकालं बाधित्वा मुख्यसोमयागकालानुग्रह एवा"ङ्गगुणविरोधे च तादर्थ्या"दिति पूर्वाधिकरणन्यायापवादतया वक्ष्यते, तद्वदिहापि मुख्यत्वेऽपि प्रधानभूतविधिगतपदानुग्रह एव युक्त इत्यर्थः ॥

**वस्तुतस्तु**—वेदत्वस्य पर्याप्तत्वेन व्याप्यधर्मावच्छिन्नसंबन्धिनोऽपि विधेयस्य व्यापकधर्मवत् संबन्धित्वेन स्तुत्युपपत्तेर्न लक्षणा । नहि वेदत्वं मन्त्रब्राह्मणात्मके ग्रन्थे पर्याप्तम्; तथात्वे द्वित्रिवाक्याध्येतरि शूद्रे वेदाध्ययननिषेधप्रयुक्तदोषानापत्तेः । अस्तु वा तत् । तथाप्यवयवसंबन्धिनोऽपि विधेयस्य परंपरया अवयविसंबन्धस्यापि सत्त्वादपां स्तुत्या वेतसावकास्तुतेरिवेहापि वेदपदेन स्तुत्युपपत्तेर्नैव विरोधः । येन तदनुपपत्त्या ऋगादिपदे लक्षणावश्यिकेत्यभिप्रेत्याह—**वस्तुतस्त्विति** ॥ ततश्च ऋङ्मन्त्रसाध्यकार्योद्देशेनोच्चैष्ट्वादिविधानम्; लक्षणायां प्रमाणाभावादित्यर्थः । वेदशब्दस्तावदर्थवादस्थितोऽपि प्रथमोपस्थितत्वात् स्वार्थस्य स्तुतिविषयत्वं बोधयन्नविधेयस्य स्तुत्ययोगात् विधेयत्वेन प्रतिभासमानोऽपि उच्चैष्ट्वादिविधेयान्तरसत्त्वेन तदनाक्षिपन् परिशेषादुद्देश्यताघटकतां बोधयति । अतश्च वेदपदार्थस्योद्देश्यघटकत्वेऽसंजातवि-

उपक्रमे वेदपदश्रवणेनैतावदवगम्यते नूनमत्र वेदस्य स्तूयमानत्वादुद्देश्यत्वं विधेयत्वं वा तस्यावश्यं वाक्ये विवक्षितमिति । तत्र च विधेयस्य उच्चैष्ट्वादेर्लाभात्परिशेषादेव तस्योद्देश्यत्वावगतेर्वेस्तुतो ऋगादिपदमनुवाद एव सदुद्देश्यपरम् । अतश्चासञ्जातविरोधिन उपक्रमस्थस्य वेदपदस्यैव तात्पर्यग्राहकस्य सत्त्वात् ऋगादिपदे तत्प्रचुरत्वेन ऋग्वेदादिविहितकर्माङ्गभूतमन्त्रलक्षणा ।

न चोपक्रमावगतस्यापि अपच्छेदाधिकरणन्यायेन परेण बाधः; तस्येह विधेः स्तुतिसापेक्षत्वेनार्थवादैकवाक्यताया आवश्यकत्वात् पूर्वविरोधेन परस्यानुत्पन्नत्वादेवाप्रवृत्तेः। न च वेदत्वस्य ऋगादिष्वपि पर्याप्तत्वादुपक्रमाविरोधः; वेदत्वस्य मन्त्रब्राह्मणसमुदायात्मके ग्रन्थविशेषे एव पर्याप्तत्वेनावयवपर्याप्तत्वाभावात्, इतरथा एकवाक्याध्ययने-

रोधित्वेन निश्चिते तदुद्देशेनैवाग्रे विधेयनिश्चयात् पश्चादुपनिपतदृगादिपदं न स्वार्थस्योद्देश्यताघटकत्वबोधनायालमिति जघन्यत्वात् सञ्जातविरोधित्वादनुवादरूपत्वाच्चो होता सोऽध्वर्युरित्यत्राध्वर्युपदमिव लक्षणां भजते । **अतएव**—विधेरुद्देश्यापेक्षायां प्रथमोपस्थितार्थवादोन्नीतवेदरूपोद्देश्यलाभेऽपि तस्य स्तुतिविषयत्वेनान्वितस्योद्देश्यघटकत्वेनान्वयायोगादुपस्थापकपदान्तरापेक्षायां समभिव्याहारादुपस्थितऋगादिपदानामेव लक्षणया तदुपस्थापकत्वे न कोऽपि विरोधः । अतश्चापेक्षाक्रमेणर्गादिपदानां प्रमाणान्तरोपस्थितोद्देश्यताघटकशाब्दजनकत्वस्यैवावधारणापत्तेः स्ववाक्यार्थस्योद्देश्यताघटकत्वस्याप्रमापणात्तद्विषयेऽनुत्पत्तिलक्षणो बाध एवोपक्रमगतवेदपदानुरोधेनावगम्यते। अतएव अयमप्राप्तबाधत्वेन व्यवहृतः। अतएव विधेः प्रधानभूतस्य वेदपदार्थोद्देश्यताघटकत्वेऽपि अविरोधात् विरुद्धर्गादिपदानां विध्यन्तर्भावान्नाङ्गगुणन्यायावतारः । अतएव यत्र सोमे प्राधान्यस्य दीक्षणीयादिष्वङ्गत्वस्य च मानान्तरसिद्धत्वात् पूर्वोत्तरपदगतबलाबलानपेक्षा तत्रैव सः ॥

**यत्तु**—य इष्ट्येतिवाक्ये इष्टिपदस्योपक्रमगतत्वं सोमपदस्योपसंहारगतत्वं च तत्रोत्तरस्यापि पूर्वाविरोधेन कार्यान्तरपरत्वासंभवात् परस्यापि शक्यार्थपरत्वात् तस्य च प्राधान्यात् भवत्येवोपक्रमन्यायबाधकोऽङ्गगुणविरोधन्याय इति प्रकृते तन्न्यायाप्रवृत्तेः ऋगादिपदं तत्प्रायवेदे लाक्षणिकमित्यभिप्रेत्य सिद्धान्तमाह—**उपक्रम इति** ॥ **वाक्य इति** ॥ अग्निमेतिशेषः । **मन्त्रलक्षणेति** ॥ यद्यपि वेदमात्रलक्षणयाऽप्यानर्थक्यतदङ्गन्यायेन मन्त्रोपस्थितिसंभवे न तदन्तलक्षणायां प्रयोजनम्; तथापि लक्षणावश्यकत्वे किमिति न्यायकृता विलम्बोपस्थितिः सोढव्येत्यभिप्रायेण तदन्तलक्षणोक्तिः। अत्र चैकवाक्यत्वे उपक्रमन्यायस्य प्राबल्यम् । यत्र तु य इष्ट्येत्यादौ यजेत सोऽमावास्यायामित्यादितन्त्रपदानां प्रत्येकमनुषङ्गेण वाक्यत्रयाभ्युपगमात् भिन्नवाक्यत्वं तत्र परस्परनैरपेक्ष्येणावगतित्रयस्यात्मलाभाद्युक्तमिष्टिकालबाधकत्वमिति यत् भिन्नवाक्यत्वाभ्युपगमेनाङ्गगुणविरोधन्यायविषयोपपादनं प्रकाशकाराणां, तद्दूषणं कौस्तुभे द्रष्टव्यम् ॥ **ननु**—यथा"पौर्वापर्ये पूर्वदौर्बल्य"मिति षष्ठाधिकरणे "यद्युद्गाताऽपच्छिन्द्यात् अदक्षिणेन यजेत यदि प्रतिहर्ता सर्वस्वदक्षिणेनेति" विहित-

प्रयोगयोः पौर्वापर्यनिमित्तज्ञानेन प्राप्तयोः पूर्वाबाधेनोत्तरस्यानुत्पत्तेस्तदुपमर्देनैवात्मलाभात्पूर्वाद्दुर्लीयस्त्वं वक्ष्यते, तथेह किं न स्यादित्याशङ्कते—**नचेति** ॥ परिहरति—**तस्येति** ॥ तस्येत्यस्य न्यायस्येत्यनेनान्वयः। यत्र हि परस्य सामग्रीसत्त्वेन स्वविषयप्रमाजनकत्वमप्रतिबद्धम्, तत्र तस्यार्थान्तरे पूर्वसापेक्षत्वेऽपि स्वविषयप्रमोत्पत्तेः प्रतिबन्धादुत्पन्नेन परेण स्वाविरोधिविषयपरत्वमुपकल्प्य स्वविरोधिविषये मिथ्यात्वबोधनाद्युक्तस्तत्र पूर्वबाधः। प्रकृते त्वेकवाक्यतया ऐकार्थ्यालोचनवेलायां तदनुरोधेन तदविरोधिविषयतयैव उत्तरस्योत्पत्स्यमानत्वेनोत्पन्नत्वाभावान्न बाधसंभव इति न तन्न्यायप्रवृत्तिरित्यर्थः ॥

**इतरथेति** ॥ नहि द्वित्रिवाक्याध्ययनेन पारायणादिविध्यर्थमनुष्ठितं मन्यन्ते, अतो मन्त्रब्राह्मणयोः वेदनामधेयमितिवचनाच्च तावत्समुदायात्मकग्रन्थवृत्ति वेदत्वमित्यर्थः ॥ **ननु**—कूष्माण्डं दद्यादिति विधौ नावयवदानमात्रेण शास्त्रार्थसिद्धिः निषेधेत्ववयवभक्षणमात्रेणापि तत्सिद्धिरिति वैषम्ये किं बीजमित्यत आह—**यथाचेति** ॥ विधिवाक्ये जातेस्तदवच्छिन्नावयविव्यक्तेश्च साधनत्वं श्रौतं तदाक्षिप्तंच जात्यनवच्छिन्नानामप्यवयवानां । अवयवावयविसाधनत्वयोश्चैकपदोपादानादुपादेयगतत्वेन च साहित्यस्य विवक्षितत्वान्नावयवोपादानमात्रेण शास्त्रार्थसिद्धिः । अतएव साहित्यरूपाङ्गासंभवे विध्यादौ तन्मात्रोपादानमिष्टमेव । निषेधेत्वनुवाद्यगतत्वेन साहित्यस्याविवक्षितत्वादवयवभक्षणमात्रेणापि प्रत्यवाय इति शूद्रस्य द्वित्रिवाक्याध्ययनेऽपि दोषः । पारायणादौ समस्तग्रहणमिति सिद्धं यत्र ब्रह्मयज्ञादौ प्रत्यहं समस्तवेदपाठासंभवस्तत्रैकदेशग्रहणेऽपि न क्षतिरिति कौस्तुभे द्रष्टव्यमित्यर्थः। एवंच वेदैकदेशत्वादृगादीनामुपक्रम एव "अग्नेः ऋग्वेद" इत्यादिना वेदानामृगादिसंबन्धस्य कीर्तितया नात्यन्तपरित्यक्तोपक्रमार्थत्वाच्च "ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते । वेदैरशून्यः त्रिभिरेति सूर्यः ।" इत्यादौ वेदशब्दात् वेदैरितिबहुवचनाच्च ऋगादिशब्दानां वेदे लक्षणाया दृष्टत्वाच्च "ऋचः सामानि यजूंषि" इति प्रकृत्य "सैषा त्रय्येव विद्ये"ति निर्दिष्टस्य शब्दस्य त्रैविद्योऽयं ब्राह्मण इति वेदत्रयाभिन्ननिर्देशे वेदपरतया लोकानां प्रयोगेण ऋगादिशब्दानां वेदे लक्षणाया लोक-

नापि अध्ययनविध्यर्थसंपत्त्यापत्तेः । शूद्रस्यैकपदश्रवणनिषेधस्तु वृन्ताकावयवादिनिषेधवन्नानुपपन्नः । तथाचैतादृशविषये निषेधस्य विध्यपेक्षया वैलक्षण्यं, तथा कौस्तुभे द्रष्टव्यम् । तस्मादुपक्रमानुसारेण ऋग्वेदविहितकर्माङ्गभूतमत्राङ्गत्वमेवोच्चैष्ट्वादीनाम् । एवं च वेदत्वस्य प्रकरणस्थवाक्यमात्रेषु अपर्याप्तत्वात्प्रकरणेन वाक्यस्य स्वविषये उपसंहारानुपपत्तेर्वेदत्वावच्छिन्नविहितकर्ममात्रोद्देशेन वाक्येन स्वरविधानावगतेः प्रकरणबाधेऽपि न क्षतिः ॥ १ ॥ ३५ ॥

**इति प्रथममुच्चैस्त्वादीनां वेदधर्मताधिकरणम् ॥**

संमतत्वाच्च उपक्रमगता वेदा उपसंहारगतैः प्रायश्चित्तवाक्ये मध्यगतैर्वा ऋगादिशब्दैः शक्यन्तेऽनुवदितुम् । ततश्चर्चा यत्क्रियते विधीयते तदुच्चैः कर्तव्यमिति कर्तव्यपदाध्याहारेण तत्तद्वेदविहितकर्ममात्राङ्गत्वमिति सिद्धान्तमुपसंहरति—**तस्मादिति** ॥ प्रयोजनं मया सूचितमपि प्रकरणस्य वाक्यसंकोचकत्वानुपपत्तिप्रदर्शनव्याजेन प्रयोजनान्तरमपि स्वयं सूचयति—**एवं चेति** ॥ **स्पष्टोऽर्थः** ॥ ततश्च पूर्वपक्षे ऋङ्मन्त्रसाध्ये ज्योतिष्टोमिककार्यमात्रे उच्चैष्ट्वादि, सिद्धान्ते तु तत्तद्वेदविहितकर्ममात्र इति प्रयोजनं सूचितम् ॥

येतु—अस्मिन्नधिकरणे उपसंहारप्राबल्यमिच्छन्तः उपक्रमप्राबल्यानङ्गीकारेणात्रत्येन "धर्मोपदेशाच्च नहि द्रव्येण संबन्ध" इति गुणसूत्रेण दर्शितामुच्चैः साम्नेति वाक्यवैयर्थ्यानुपपत्तिमेव मुख्यहेतुत्वेनाङ्गीकृत्य सिद्धान्तमुपपादयन्ति, ते मीमांसकमूर्धन्यैरेवोपक्रमपराक्रमवादे शिक्षिताः तत्रैव द्रष्टव्याः ॥

**॥ इति प्रथममुच्चैस्त्वादीनां वेदधर्मताधिकरणम् ॥**

---

पूर्वाधिकरणे उच्चैष्ट्वादिविधौ ऋगादिपदार्थे निर्णीते तत्प्रसङ्गात्तदनन्तरश्रुतकरोतेः ऋचेति तृतीयान्तपदसमभिव्याहाराद्ग्वेदादिकरणकव्यापाराभिधायित्वेऽपि स किं पाठरूपोत्पत्तिरुत विनियोगो वा ततश्च ऋग्वेदेन यदुत्पाद्यते विनियुज्यते वेत्यर्थादुत्पत्तिविनियोगनिबन्धनोऽङ्गेषु स्वरः **अथवा**—प्रयोगविधानरूपो वा । ततश्च यत्तेन प्रयुज्यते. अनुष्ठाप्यते इत्यर्थात् प्रयोगविधिनिबन्धनो वा स्वर इत्येवं करोत्यर्थविशेषविचारात्प्रासङ्गिकीं, **अथवा**—उत्पत्तिविधिवेदनिबन्धनस्वरज्ञानस्य प्राथमिकस्य बलवत्त्वापवादादापवादकीमनन्तरसङ्गतिं वाक्यविनियोगोपयोग्युद्देश्यतावच्छेदकत्वघटकविशेषचिन्तनात्पादसङ्गतिं च स्पष्टत्वादनुक्त्वा विषयं दर्शयति—**याजुर्वैदिक इति** ॥

---

(१) तत्र हि ऋच्यध्यूढं साम गायंतीति ऋगारूढानामेव साम्नां गानात् उच्चैर्ऋचा क्रियते इति विधिनैव गतार्थत्वात् अयं विधिर्व्यर्थ इत्याशङ्क्य ऋगनारूढानामपि स्तोभादिसाम्नां वर्तमानत्वात्र तद्वैयर्थ्यमिति समाहितम् ॥

( २ अधिकरणम् । )

**गुणमुख्य** ॥ याजुर्वैदिके आधाने सामवेदपठितानि वारवन्तीयादीनि सामान्यङ्गत्वेन श्रुतानि । तेषु सामवैदिकः स्वरः स्ववेदनिबन्धनत्वाच्छीघ्रमुपस्थितो न तु प्रधानविधिनिबन्धनो याजुर्वैदिकः, प्रधानैकवाक्यतापेक्षत्वेन विलम्बोपस्थितत्वादिति प्राप्ते—

साङ्गस्यैवाधानस्य यजुर्वेदेन विधानादङ्गेषु विलम्बोपस्थितिरप्ययं प्रधानाश्रितत्वाद्बलीयान् । अतस्तेषु याजुर्वैदिक एव स्वर उपांशुत्वमिति भाष्यकारः ।

---

वसन्तादिवाक्येन आधानस्य द्वितीये प्रसाधितत्वात् तस्य च यजुर्वेदे पाठाद्याजुर्वैदिकमाधानमित्यर्थः । **वारवन्तीयादीति** ॥ "य एवं विद्वानग्निमाधत्ते" इत्यनुवादसरूपवाक्येनाधानमनूद्य "य एवं विद्वान्वारवन्तीयं गायति" "य एवं विद्वान्यज्ञायज्ञीयं गायति" "य एवं विद्वान्वामदेव्यं गायति" इत्यादिसामवेदपठितवाक्यैर्विनियोगविधिरूपैर्विनियुक्तानीत्यर्थः । एवं स्थिते भाष्यकारेण लिखिते "य एवं विद्वा"नित्याधानवाक्ये उत्पत्तिविधित्वालेखनभ्रमेणोत्पत्तिविधित्वाभावपर्यनुयोगकरणं प्रकाशकाराणां अपास्तम्; भाष्यकृता वारवन्तीयादिविधौ शेषितयोपस्थापनार्थमनुवादरूपस्यैव तस्य वाक्यस्य लेखनादिति कौस्तुभे पूज्यपादैः सूचितं द्रष्टव्यम् । प्रयोगविधेर्विनियोगोत्पत्तिसापेक्षत्वात्तयोः पूर्वभावित्वात् पूर्वाधिकरणन्यायेनासंजातविरोधित्वात् शीघ्रोपस्थितिकत्वाच्च तद्वेदनिबन्धन एव स्वरः, नतु प्रधानस्वर उपांशुत्वम् । अत एव प्रयोगविधेस्तत्सापेक्षत्वात् न तत्रापच्छेदन्यायः, त्रयाणां मध्ये तेषां सामरूपाङ्गविषयत्वात् अङ्गगुणविरोधन्यायोऽपि न । नहि प्रधानभूते आधाने उपांशुत्वस्य बाधः पूर्वपक्षे ॥ **किंच** उत्पत्तिविनियोगयोः प्रतिपदार्थं भिन्नत्वात्तन्निबन्धनस्वरस्य विशेषविहितत्वेनच अनेकाङ्गप्रधानसाधारणप्रयोगविधिस्वरात् सामान्यविहितादन्यत्र सावकाशात् बलीयस्त्वान्न प्रधानस्वर इत्यभिप्रेत्य पूर्वपक्षमाह—**तेष्विति** ॥

यद्युत्पत्तिविनियोगकाले स्वरापेक्षा भवेत्, तदा उपक्रमप्राबल्यन्यायात्तत्स्वरनियमो भवेत्, न तदस्ति; स्वरस्य प्रयोगविशेषणतया कालादिवत्प्रयोग एवापेक्षितत्वात् । यद्यपि वा न तद्विशेषणत्वम्; अपितु प्रयोगविध्यनन्तरमनुष्ठानाय तस्यापेक्षेत्युच्येत; तथापि तदपेक्षादशायां प्रयोगस्यैवाव्यवधानेन पूर्वमुपस्थितत्वात्प्रमेयबलाबलस्यैव तस्यैव प्राबल्यम् । अतश्च अङ्गधर्मस्याप्युपांशुत्वस्य याजुर्वैदिकप्रधानप्रयोगविधिरूपसमानप्रमाणकप्रधानवृत्तिताकत्वात्प्रधानप्रत्यासन्नत्वेन तस्यैव प्राबल्यमिति प्रयोज्यतया अवगतानां मन्त्राणां स्वरापेक्षानुरोधेन प्रयोगविधिनिबन्धन एव स्वर उपांशुत्वमित्यभिप्रेत्य भाष्यकारः सिद्धान्तमाह—**साङ्गस्यैवेति** ॥

वार्तिककारस्तु—प्रयोगविध्याश्रितस्वरस्य प्रधाने श्रुतस्याप्यङ्गे कल्प्यत्वेन दौर्बल्यमेव; इतरथा ज्योतिष्टोमाङ्गभूतहौत्रादेरप्यध्वर्युकर्तृकत्वापत्तेः। वारवन्तीयस्यापि यजुर्वेदे वारवन्तीयं गायतीति विनियोगविधेराम्नानाच्चैवञ्चिन्तनीयम्। यत्र वेदान्तरे उत्पत्तिर्वेदान्तरे च विनियोगस्तत्र वारवन्तीयादौ कः स्वर इति चिन्तायाम्। उत्पत्तेः पूर्वभावित्वादसञ्जातविरोधित्वेन तन्निबन्धन एव स्वरो बलीयान्। अतश्च

ऋचा ऋग्वेदेन क्रियते उत्पाद्यत इति श्रुत्यर्थ इति प्राप्ते—आम्नानमात्रेण मन्त्रस्य प्रयोजनानवगमेन प्रयोज्यत्वानवगतेः स्वरानपेक्षत्वाद्विनियोगोत्तरकालमेव स्वरसंबन्धाक्रियत इत्यस्य प्रयुज्यत इत्यर्थावगतेः प्रयोगस्य च विनियोगाधीनत्वेन विनियोगस्यैवाव्यवहितपूर्वं पुरःस्फूर्तिकत्वात्तद्विधिनिबन्धन एव स्वरोऽसति बाधकेऽनुष्ठेयः—इत्याह ॥३॥३६॥

इति तद्वितीयं आधानगानस्योपांशुताधिकरणम् ॥

---

**वार्तिककारस्त्विति** ॥ अस्येत्यस्याहेत्यनेनान्वयः। न प्रयोगविधिर्नाम वेदे पार्थक्येन क्वचिच्छ्रुतः, अङ्गवाक्यानामेव प्रधानवाक्यैकवाक्यतापन्नानां प्रयोगविधिशब्देन व्यवहारात्। अतश्च तत्तद्वाक्यानां स्ववेदेनैव वेदविशेषावधारणा। यत्राङ्गप्रधानानामेकवेदस्थत्वं तत्र प्रयोगविधिनिबन्धनस्वराङ्गीकारेऽविरोधान्नैव कश्चन विचारः। यत्रापि नानावेदस्थत्वं तत्रापि प्रयोगविधेः प्रधानांशे अन्यवेदीयत्वेनाऽन्यस्वरापादकत्वादङ्गांशे च वेदान्तरीयत्वेनोत्पत्तिविनियोगविध्यनुकूलस्वरस्यैवापादानान्न विचारः॥

**नच**—अङ्गस्य प्रयोगविधिवेदनिबन्धनस्वरान्तराविषयत्वेऽपि स्वरस्य कालादिवत्प्रयोगान्वयित्वात् तस्य चाङ्गप्रधानसाधारणत्वात् प्रधानान्वयिस्वरस्यैव वेदान्तरीयाङ्गेषु निवेशोपपत्तेर्वेदान्तरीयविनियोगविधिनिबन्धनस्वरस्य बाधोपपत्तिः **—इति—वाच्यम्;** प्रधानविधिनिबन्धनस्वरस्य प्रधानोद्देशेनैव विहितस्याङ्गेषु कल्प्यत्वेन तेन क्लृप्तोत्पत्तिविनियोगविधिनिबन्धनस्वरस्य बाधानुपपत्तेः। अन्यथा ज्योतिष्टोमे समाख्याप्राप्ताध्वर्युरूपकर्तुः प्रयोगान्वयित्वेनाङ्गप्रधानसाधारण्यात् हौत्रस्तोत्रादावपि तदङ्गे अध्वर्युकर्तृत्वापत्त्या होत्रादिकर्तृकत्वबाधापत्तिः। अतो यथाऽत्राऽध्वर्युकर्तृत्वस्य कल्प्यत्वात्तद्धौत्रादिसमाख्याप्रापितक्लृप्तहोत्रादिकर्तृत्वेन बाधः तद्वदिहापि कल्प्यत्वात्प्रधानस्वरस्य बाध एव। अतएव क्लृप्तकल्प्यत्वाभ्यामेव श्येने उद्गातृमात्रकर्तृकत्वबाधेन नानाकर्तृत्वसिद्धिर्वक्ष्यते॥

**वस्तुतस्तु**—आधानसाम्नां पाठापरपर्यायोत्पत्तिरेव सामवेदे, वारवन्तीयं गायतीत्यादिविनियोगविधिस्तु यजुर्वेद एवेति नात्र विरोधोऽपि। अत उपांशुत्वस्य प्रधानमात्रोद्देशेन विहितस्याङ्गेषु कल्पनीयत्वात्प्रधानप्रयोगविधेश्च वेदान्तरीयाङ्गांशे याजुर्वैदिकत्वाभावेन स्वत उपांशुत्वाप्रापकत्वात्राधानसामसूपांशुत्वसिद्धिः। अत एवं चिन्तनीयमित्याह वार्तिककार इत्यर्थः। अतः प्रयोगविधिवेदनिबन्धनस्वरोपपादनं भाष्यकारकृतमयुक्तमित्युपेक्ष्य यच्चिन्तनीयं तत् दर्शयति—**यत्र वेदान्तरेति** ॥

**उत्पाद्यते इति** ॥ अज्ञातं प्रज्ञाप्यत इत्यर्थः। **विनियोगोत्तरकालमेवेति** ॥ प्रयोज्यत्वेऽवगते सत्यपेक्ष्येति शेषः। **अव्यवहितपूर्वमिति** ॥ प्रयोगकाले उत्पत्तेः व्यवहितत्वेन विनियोगस्याव्यवहितपूर्वमित्यर्थः॥ **ननु** तर्हि तुल्यन्यायत्वाद्दर्शपूर्णमासाङ्गेषु ज्योतिष्टोमाङ्गस्तोत्रशस्त्रादावपि विनियोगविधिनिबन्धनस्वरस्योपांशुत्वस्यैवापत्तिः प्रसज्येतेत्यत आह—**असति बाधक इति** ॥ **अयमर्थः**—दर्शपूर्णमासयोः तावत् तत्तद्विनियोगविध्यनुसारेण प्रयोगविधित उपांशुत्वे प्राप्ते मन्द्रयाज्यभागा त्परं मध्यमोत्तमयानुयाजादीति वचनेन प्राप्तबाधविधया भागधर्मस्य स्वरस्य विधानात् मन्द्रादिस्वरः तत्रापि क्वचित् विशेषवचनात् **उच्चैष्ट्वादीति** ॥ एवं तद्विकृतीनामपि अकाम्यानां प्रधानांशे प्राकृताङ्गांशे तत्कार्यापन्नाङ्गांशे च क्लृप्तोपकारत्वात् श्येने कर्त्रन्तरवत् प्राकृतस्वर एव। अप्राकृताङ्गांशेऽपि प्राकृत एव। प्रकृतौ स्वरस्य भागधर्मत्वेन तद्द्वारारम्भकाप्राकृतवृत्तित्वेऽप्यप्राकृतकार्यकारितानापत्तेः। काम्यविकृतीनां तु 'यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशुकर्तव्या' इतिवचनेन विहितोपांशुत्वस्याप्यवभृथेनेतिवत् तृतीयाद्यभावेन साङ्गविध्यभावात् प्रधानमात्रे उपांशुत्वमङ्गेषु प्राकृत एव। अस्यापि विशेषवचनैः क्वचित् क्वचित् बाधो द्रष्टव्यः। एवं ज्योतिष्टोमेऽपि तत्तद्विनियोगविध्यनुसारेण नानावेदस्वरे प्राप्ते दर्शपूर्णमासप्रकृतिकाङ्गविषये श्येनन्यायेन प्राकृतेन स्वरेण बाधः। तत्रापि "यत्किंचित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ती"त्यनेनाऽऽग्नीषोमीयप्राग्भाविपदार्थाङ्गत्वेन विहितमुपांशुत्वं नानावेदस्वरमिव प्राकृतमपि स्वरं बाधते। तमपि "यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात् मन्द्रं प्रायणीयायां मन्द्रतरमातिथ्यायामि"त्यादिविशेषवचनविहिता निरवकाशाः स्वराः तत्तद्दीक्षणीयादिप्रधानमात्रांशे बाधन्ते। **अतएव**—अग्नीषोमीयप्राग्भावित्वेनैव उपसत्सूपांशुत्वप्राप्तेः "उपांशूपसत्स्वि"ति पृथग्विधिवैयर्थ्यमपि न शङ्क्यम्; उपसत्पदस्य निरवकाशविषयातिरिक्तपदार्थमात्रोपलक्षणत्वमङ्गीकृत्यैवौचित्येन दीक्षणीयादिस्वरस्तुत्यर्थमनुवादमात्रत्वात्। अतएव—अग्नीषोमीयवाक्यस्य नानेनोपसंहारः। अग्नीषोमीयादौ दर्शपूर्णमासप्रकृतिके प्राकृतत्रैस्वर्यमेव। अतत्प्रकृतिकेतु तत्तद्विनियोगविध्यनुसारान्नानावेदस्वर एव। सुत्यायां तु अङ्गप्रधानसाधारण्येन मन्द्रं प्रातस्सवने चरन्तीत्यादिवचनविहितैः सवनक्रमेण मन्द्रमध्यमोत्तमस्वरैः सवनीयादौ प्राकृतस्वरःस्तोत्रादौ नानावेदस्वरस्य च बाधः॥ **नच**—प्रातस्सवनादिशब्दानां इह त-

( ३ अधिकरणम्। )

**भूयस्त्वेन** ॥ यत्रैकमेव कर्मानेकेषु श्रुतं, तत्र क्वोत्पत्तिः क्व च तदनुवादेन गुणार्थं श्रवणमिति जिज्ञासायां, यत्राङ्गबाहुल्यं तत्रोत्पत्तिः; सेवकबाहुल्येन राजावस्थाननिर्णयवत्। वस्तुतस्तु कर्मस्वरूपपरिचायकद्रव्यदेवतादिसाकल्यस्यैव निर्णायकत्वम्। तत्रापि द्वैविध्ये, वहिरङ्गत्वेऽप्यव्यभिचाराद्देवताया एव, न तु द्रव्यस्येत्याद्यूह्यम्। अतश्चैवंविधनिश्चायकसत्त्वे तत्रैवोत्पत्तिः। अन्यत्र तदनुवादेनाविरोधिगुणान्तरविधानम्। विरोधिनि तु गुणाद्भेद एव। एवं यत्र कस्यचिदपि नियामकस्याभावस्तत्राप्यभ्यासाद्भेदः। न ह्यत्र शाखान्तरन्यायेन सत्यपि सर्वेषामुत्पत्तिपरत्वे कर्मैकत्वम्, तद्वदिहाध्येतृभेदाभावात्। अतो नियामकबलेन यत्रैवोत्पत्तिस्तद्भेदनिबन्धन एव स्वर इति सिद्धम्॥३।३७॥

इति तृतीयं ज्योतिष्टोमयाजुर्वेदिकताधिकरणम्॥

( ४ अधिकरणम्। )

**असंयुक्तम्** ॥ एवं वाक्ये निरूपिते प्रकरणमिदानीं निरूप्यते। ननु किमिदं प्रकरणं नाम? न तावत्सन्निधि-

---

तत्सोमयागाभ्यासमात्रवाचित्वात् तदङ्गेषु प्राप्तस्वरबाधकत्वमिति—**शङ्क्यम्**; चरन्तीति प्रयोगवाचिधातुसमभिव्याहारेण प्रातःसवनादिशब्दस्यापि स्वशक्यघटितप्रयोगैकदेशलक्षकत्वावगतेः प्रायणीयादिपदवैलक्षण्यात् सुत्योत्तरकालीनेषु दर्शपूर्णमासप्रकृतिकेषु प्राकृतः; अपूर्वेषु तु नानावेदस्वरः। एवं ज्योतिष्टोमविकारेष्वपि द्रष्टव्यम्। एवंच यत्रैतादृशं विशेषतो विहितस्वरादिकं बाधकमस्ति, तत्र तत्तद्विनियोगविध्यनुसारिस्वरबाधेऽपि यत्रैतादृशं बाधकं न तत्र विनियोगविधिप्रयुक्तो नानावेदस्वर एव। यथा दर्वीहोमेषु याजुर्वैदिकमुपांशुत्वम्; बाधकान्तराभावात्। तथा "मन्द्रं प्रातःसवने" इत्यादीनां नित्यत्वादनित्यैः काम्यनैमित्तिकैरसंबन्धान्नित्यविषयत्वेनानित्येष्वप्रवृत्तेर्बाधकाभावात् ऋग्वेदसामवेदाभ्यां यत्किंचित् काम्यं नैमित्तिकं वा अनुष्ठाप्यते तत्र तत्तद्वैदिकमुच्चैष्ट्वमेव। प्रकृते त्वाधानसाम्नां विनियोगविधिनिबन्धनप्रयुक्तमुपांशुत्वमेवेति दिक्॥

अत्रच दूरस्थस्य श्रवणकरप्रयोग उच्चैष्ट्वम्। प्रयत्नवदशब्दमनःप्रयोग उपांशुत्वं यत्रोरसि स्थाने शब्दस्य प्रयोग उपलभ्यते स मन्द्रः स्वरः। यत्र कण्ठस्थाने शब्दप्रयोग उपलभ्यते स क्रौञ्चक्रुष्टस्वरयोः मध्यतनत्वात् मध्यमः स्वरः। दूरस्थस्य श्रवणयोग्यः क्रौञ्चः। सन्निकृष्टश्रवणयोग्यः क्रुष्टो ज्ञेयः। यत्र शिरःस्थाने शब्दप्रयोग उपलभ्यते, स तारक्रुष्टापरपर्याय उत्तमः स्वर इत्यादिस्वरलक्षणानि तैत्तिरीयप्रातिशाख्यायाज्ञिकग्रन्थेभ्यश्चावधेयानि॥

॥इति द्वितीयं आधाने गानस्योपांशुताधिकरणम्॥

---

उच्चैः ऋचेत्यादिवाक्यविहितस्वरद्वयमेकस्मिन् कर्मणि विकल्पेन विनियुज्यते, उत एक एव स्वरो नियमेनेतिविचारणादध्यायपादप्रकरणसङ्गतीस्तथा प्रासङ्गिकीमनन्तरसङ्गतिं च स्पष्टत्वादनुक्त्वा ज्योतिष्टोमस्य तत्तत्सवनपुरस्कारेण विहितस्वरावरुद्धत्वात् विकल्पपूर्वपक्षस्य उत्पत्तिविधिनिबन्धनस्वरसिद्धान्तस्य चानवकाशात् भाष्याद्युदाहृतमपि ज्योतिष्टोमोदाहरणमुपेक्ष्य अग्निहोत्रादिकर्मविषयत्वेनाभिप्रेत्य विषयाप्रदर्शनेन सामान्यतो न्यायस्वरूपं व्युत्पादयति—**यत्रैकमे**-**वेति** ॥ यद्यपि ऋक्सामयोरुच्चैष्ट्वस्यैव विधानान्न तयोरन्यतरत्र कर्मणो विधेयत्वनिर्णयः स्वरविशेषोपयोगीत्यभिप्रेत्य सूत्रे उभयश्रुतीत्युक्तत्वादनेकेष्विति न युक्तम्; तथापि तत्संग्रहमात्रबुद्ध्योपात्तं ज्ञेयम्। अनियमनियमयोः क्वचित् विचारविषयत्वेन दर्शितयोरपि तयोः विचारप्रयोजनत्वात् तद्विषयत्वाभावसूचनाय तद्धेतुभूतस्यैव तद्विषयत्वं दर्शयति—**तत्रेति** ॥ पूर्वपक्षस्य फल्गुतां मत्वा भाष्यकाररीत्या प्रथमतः सिद्धान्तमेवाह—**यत्राङ्गेति** ॥

अनुमापकेन धूमादिना बहुनेवाऽल्पेनापि वह्न्यनुमितिदर्शनात् अनुमापकगताल्पत्वबहुत्वे न तन्त्रमिति भाष्यकारोक्तं नियामकमयुक्तमभिप्रेत्य वार्तिकोक्तं नियामकमाह—**वस्तुतस्त्विति** ॥ द्रव्यदेवतादेरेव अव्यभिचारान्निर्णायकत्वमित्यर्थः। **द्वैविध्य इति** ॥ एकत्र वेदे द्रव्यमितरत्र देवताम्नानमित्येवं द्वैविध्यमित्यर्थः। आष्टमिकन्यायेन द्रव्यस्यान्तरङ्गत्वमभिप्रेत्य देवतायाः वहिरङ्गत्वेऽपीत्युक्तम्। देवताया एवेत्यस्याग्रे निर्णायकत्वमित्यनुषङ्गः॥ **नियामकस्याभाव इति** ॥ अनन्यपरविधिपुनःश्रवणस्य सत्त्वादित्यर्थः। एवं यत्रापि स्ववाक्ये कर्ममात्रश्रवणम्, वाक्यान्तरे चैकत्र देवताविधिः, अपरत्र तदविधायैव विरोधिगुणान्तरश्रवणं तत्र सत्युभयत्रापि लिङादिश्रवणात् विधित्वे एकत्रैव देवतादिविधिसमभिव्याहारवति उत्पत्तिविधित्वमन्यत्र तूत्पत्तितात्पर्यकत्वाभावे वाक्यान्तरोपात्तगुणविनियोगोपयोगिप्रकरणोज्जीवनार्थत्वमित्यादिविस्तरः कौस्तुभे द्रष्टव्यः। **तद्भेदनिबन्धन एवेति** ॥ यत्र द्रव्यदेवतादिश्रवणं तत्रैव तत् कर्तव्यत्वेन चोद्यते। अतः तद्भेदनिबन्धन एव स्वर इत्यर्थः। प्रयोजनं स्पष्टत्वात् नोक्तम्॥

॥इति तृतीयं ज्योतिष्टोमयाजुर्वेदिकताधिकरणम्॥

---

कर्तव्यस्य प्रकरणविनियोगविचारस्य सङ्गतिं दर्शयति—**एवमिति** ॥ शेषः परार्थत्वादित्यत्र प्रमाणं विना पारार्थ्यस्य निर्वक्तुमशक्यत्वात् श्रुत्यादिषट्प्रमाणान्युपक्षिप्तानि। तत्र श्रुतिवाक्ययोः विनियोजकत्वस्य तद्भूताधिकरणे लिङ्गस्य च सामर्थ्याधिकरणे विनियोजकत्वस्योक्तत्वात् अङ्गाङ्गितयोरव-

मात्रम्; गोदोहनादेरपि दर्शाङ्गत्वापत्तेः। अथ साकाङ्क्षत्वमात्रम्; विकृतेरपि प्राकृताङ्गविषये तदापत्तेः। नापि साकाङ्क्षत्वे सति सन्निधिपठितत्वम्; उपहोमादावपि तदापत्तेः। अथोभयाकाङ्क्षत्वविशिष्टं तत्; सिद्धरूपाणां मन्त्रादीनामपि तदापत्तेः। प्रयाजादीनामनाकाङ्क्षितत्वेन तदनापत्तेश्च। अथ दर्शपूर्णमासयोः प्रकारान्तरेण प्रयोजनाकाङ्क्षत्वेऽपि इतिकर्तव्यतात्वेन तदाकाङ्क्षोपपत्तेर्युक्तं प्रकरणमिति चेत्, किमिदमितिकर्तव्यतात्वं नाम? न तावत्फले अपूर्वे वा सहकारित्वम्। प्राधान्यापत्तेः, प्रयाजादिवदाग्नेयस्यापि विकृतावतिदेशापत्तेश्च। नापि करणजनकत्वम्; प्रयाजादिषु बाधादिति चेत्,

न; सन्निहितस्य फलवतोऽनवगताङ्गताकपदार्थविषये इतिकर्तव्यतात्वेनापेक्षणस्यैव प्रकरणपदार्थत्वात्। अत्रासन्निहितज्योतिष्टोमाद्यङ्गत्वस्य प्रयाजादौ वारणायाद्यं विशेषणम्। अनूयाजाद्यङ्गत्ववारणाय फलवत इति द्वितीयम्। प्रोक्षणादेः श्रुत्यादित्रयविनियुक्तस्य प्रकरणविषयत्ववारणाय तृतीयम्। सिद्धरूपस्य लिङ्गाविनियुक्तमन्त्रादेः प्रकरणाविषयत्वसिद्ध्यर्थमितिकर्तव्यतात्वेनेति चतुर्थम्।

इतिकर्तव्यतात्वं च करणानुग्राहकत्वम्। सर्वत्र हि अशक्तस्य कारणत्वायोगाच्छक्तिः कारणनिष्ठा समस्तीति निर्विवादम्। सा च कारणतावच्छेदिका कारणरूपा वेत्यन्यदेतत्। तस्याश्च जन्यवृत्तित्वे जन्यतैवेत्युत्सर्गः। सामग्र्यलाभे परमनादितेत्यपवादः। तत्र तत्सामग्र्यपेक्षैवेतिकर्त-

---

च्छेदकमात्रमाद्यपादद्वये निरूपितम्। अस्मिंस्तु पादे वाक्यीयविनियोगे तन्निरूपणे कृते अधुना अवसरलाभात् प्रकरणस्य स्वरूपलक्षणविनियोजकत्वप्रकारैरज्ञातस्य निरूपणं क्रियत इत्यर्थः। प्रकरणान्तरत्वादनन्तरसङ्गत्यभावेऽपि न क्षतिः॥

**ननु**—प्रकरणस्वरूपस्यैवासिद्धेः कुतः तस्याङ्गत्वप्रमाणत्वेनोपक्षेपो येन तन्निरूपणं प्रतिज्ञातविषयं भवेदित्यभिप्रेत्याशङ्कते—**नन्विति** ॥ **अनाकाङ्क्षितत्वेनेति** ॥ दर्शपूर्णमासयोरिति शेषः। **आग्नेयस्यापीति** ॥ अग्नीषोमीयादाग्नेयानपेक्षात् परमापूर्वानुत्पत्तेस्तस्यापि तत्राग्नीषोमीयसहकारित्वादितिकर्तव्यतात्वापत्तौ प्रयाजादिवदतिदेशापत्तिरित्यर्थः। **बाधादिति** ॥ द्रव्यदेवतयोः तज्जनकत्वेन प्रयाजादिषु तस्य बाधादित्यर्थः॥

**प्रकरणविषयत्ववारणायेति** ॥ अवघातादीनां व्रीह्याद्यङ्गत्वस्य श्रुत्यादिभिरेव बोधनात् सन्निधिरूपाधिकाराख्यप्रकरणस्य **अथवा**—भाट्टालंकारोक्तरीत्या सन्निधेः स्थानत्वेन प्रकरणत्वानुपपत्तेरनेकार्थेष्ववान्तरतात्पर्यवतामनेकवाक्यानामेकत्र क्वचिन्महातात्पर्यरूपाधिकाराख्यप्रकरणस्य व्रीह्यादिपदेऽङ्गितावच्छेदकलक्षणातात्पर्यग्राहकत्वेऽपीतिकर्तव्यतापेक्षणरूपप्रकरणविषयत्वाभावात्तद्वारणायेत्यर्थः॥

**नच**—अपूर्वसाधनीभूताङ्गत्वस्य श्रुत्यादिगम्यत्वेऽपि यागाङ्गत्वस्यापूर्वाङ्गत्वस्य वा कथंभावात्मकप्रकरणगम्यत्वं **इति—वाच्यम्**; अपूर्वसाधनीभूताङ्गत्वस्यापूर्वाङ्गत्वं विनाऽनुपपत्तेस्तस्यार्थसिद्धत्वेन प्रकरणव्यापारानपेक्षणात् ॥ **अतएव**—प्रोक्षणादिलोपे प्रकरणगम्याङ्गत्वपक्षे इव क्रत्वङ्गभ्रेषप्रायश्चित्तमपि नासुलभमिति भावः॥

अत्रच प्रकरणादीनां वक्ष्यमाणरीत्या पूर्वपूर्वप्रमाणकल्पनेनैवाङ्गताबोधकत्वेन मन्थरप्रवृत्तित्वात् श्रुत्यादिविषये अङ्गत्वबोधकत्वानुपपत्तेः स्वत एव प्रकरणाविषयत्वसिद्धेः अनवगताङ्गविषये इति स्पष्टार्थमुपात्तमिति ध्येयम्॥

**लिङ्गाविनियुक्तेति** ॥ मन्त्राधिकरणे अर्थप्रकाशनार्थानां मन्त्राणां नावान्तरक्रियायोगादित्याचार्योक्तन्यायेन अर्थप्रकाशनक्रियाद्वारा प्रकरणग्राह्यत्वस्याभिहितत्वात् तद्व्यतिरेकं दर्शयितुं लिङ्गाविनियुक्तेत्युक्तम्। अतएव लिङ्गस्य सामान्यसंबन्धबोधकप्रमाणसापेक्षत्वे क्रमसमाख्यावत् प्रकरणमपि सामान्यसंबन्धबोधकत्वेन लिङ्गपादे उपन्यस्तम्॥

एतच्च श्रुत्यादित्रयविनियुक्तानामवघातादीनां सन्निपातिनां प्रकरणाविषयत्वं सौत्रमसंयुक्तपदमालम्ब्य न्यायसुधोक्तमनुरुध्योक्तम्। **प्रकाशकारास्तु**—सन्निपात्यवघातादीनां प्रकरणग्राह्यत्वप्रदर्शनपरशास्त्रदीपिकास्वारस्येन श्रुत्यादीनां द्वारेदमर्थ्यसमर्पणमात्रपरत्वमङ्गीकृत्य कथंभावाकाङ्क्षयैवावघातादीनामङ्गत्वमाहुः। तत्रैतदधिकरणान्ते असंयुक्तग्रहणं किमर्थम्? श्रुतिलिङ्गवाक्यैः संयुक्तानां द्विबहुत्वयुक्तप्रतिपद्विधीनां पूषादिशब्दतच्छेषाणां च प्रकरणविनियोगनिवृत्त्यर्थम्, प्रकरणविरोधिनावा असंयुक्तमविरोधिसंयुक्तानां व्रीहीन् प्रोक्षति बर्हिर्देवसदनं दामि अरुणया क्रीणातीत्यादीनां प्रकरणस्थव्रीहिबर्हिःक्रयैः संबध्यमानानां प्रकरणसमावेशोपपत्तेः, तत्तु तत्सामर्थ्यसिद्धत्वात् न सूत्रकारेणोक्तमिति वार्तिकमेव मतद्वये मूलमिति नेहान्यतरमतनिष्कर्षे यत्नेन प्रयोजनमिति दिक्॥

इतिकर्तव्यतात्वं दुर्निरूपमिति यदुक्तं तत् परिहरति—**इतिकर्तव्यतात्वं चेति** ॥ स्वमते भावनाया यत्नरूपत्वात् तत्रानुग्राहकापेक्षाभावेपि फलद्वारा तत्करणीभूतस्य धात्वर्थस्यापूर्वजनने अस्त्येव तदपेक्षेतीतिकर्तव्यतात्वम्। करणानुग्राहकत्वं नाम स्वकरणनिष्ठशक्तिजनकाकाङ्क्षत्वं यत् भावनायाः तदेव प्रकरणमित्यर्थः। **सामग्र्यलाभ इति** ॥ यथा दण्डादिवृत्तिशक्तावनवस्थादोषभिया सामग्र्यलाभेऽनादित्वम्। दण्डवृत्तिशक्तेः जन्यत्वे तस्यां दण्डस्य शक्तिमत्त्वेन कारणत्वे वक्तव्ये तस्यां पुनः तादृशस्य तेन रूपेण कारणत्वेऽनवस्थापत्तिः। प्रकृतेतु अपूर्वजननानुकूलायाः यागनिष्ठशक्तेः कार-

व्यतापेक्षा । तया च सन्निहितप्रयाजादेरङ्गत्वबोधः, प्रयाजादेस्तत्सामग्रीत्वात् । सिद्धरूपस्य च द्रव्यादेर्व्यापारावेशं विना तत्सामग्रीत्वासंभवात्तया अग्रहणम् ।

अत्र च प्रधानगतेतिकर्तव्यताऽऽकाङ्क्षायाः प्रयाजादिगतप्रयोजनाकाङ्क्षासहकृतायास्तत्तद्वाक्यस्य स्वस्वावान्तरवाक्यार्थे समाप्तस्यापि महावाक्यैकदेशरूपपारिभाषिकपदसन्निध्याख्यवाक्यकल्पनया, निरुक्तपदानां च स्वार्थोपस्थितिद्वारा तन्निष्ठाश्रुतपदान्तरकल्पनाऽनुकूलयोग्यतारूपलिङ्गकल्पनया च, समिधो यजति इत्थं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यश्रुतेतिकर्तव्यतात्ववाचिपदरूपश्रुतिकल्पनया चेतिकर्तव्यतात्वरूपकृतिकारकत्वे प्रामाण्यम् । संभवति हि प्रयाजादीनामपि उक्तशक्तिजनकत्वेन भावनायामन्वयः । तस्मात्सिद्धं प्रकरणं नाम चतुर्थप्रमाणम् ।

यत्त्वत्र पार्थसारथिना अननुगृहीतस्यापि कर्मादेः संयोगविभागारम्भकत्वदर्शनान्नेदं प्रकरणम् । अपि तु व्यापारसामान्यस्याख्यातार्थतामङ्गीकृत्य तद्विशेषापेक्षैवेतिकर्तव्यताऽपेक्षा । तयैव च प्रयाजादीनां तत्त्वेनान्वय इति तदेव च प्रकरणमित्युक्तम् । तन्न; तथात्वे निरुक्तप्रकरणस्य तदघटिताङ्गत्वबोधकत्वानुपपत्तेः, प्रयाजादेर्भावनात्वे तस्यैव फलसंबन्धापत्तेश्च । अस्मन्मते तु यत्नस्यैव भावनात्वात्तस्य च यागजनकत्वेनैव कृतार्थत्वान्न तदापत्तिरिति वैषम्यम् । किंचैवं प्रधानस्य स्वतो निराकाङ्क्षस्यान्यतराकाङ्क्षयैव प्रकृतौ प्रयाजाद्यङ्गकत्वापत्तिः, विकृतौ च भावनाया विशेषापेक्षायां अक्लृप्तोपकारैरपि सन्निहितैरुपहोमैरेव निराकाङ्क्षत्वोपपत्तेर्नातिदेशकल्पनापत्तिरित्यादि कौस्तुभे विस्तरः ॥ ३ ॥ २८ ॥ इति चतुर्थं प्रकरणविनियोजकताधिकरणम् ॥

( ५ अधिकरणम् । )

**क्रमश्च** ॥ स्थानं चाङ्गत्वे पञ्चमं प्रमाणम् । तच्चेतिकर्तव्यतात्वेनायोग्यसंबन्धयोर्वाक्यार्थयोः सन्निधिः । इतिकर्तव्यतात्वेनायोग्यत्वं द्वेधा—क्वचिदाकाङ्क्षाविरहात्, यथा विकृतेरुपहोमादिविषये, क्लृप्तोपकारप्राकृताङ्गैरेव निराकाङ्क्ष-

---

णापेक्षायां यागस्यैव कारणत्वेऽनवस्थापत्तेः सन्निहितं प्रयोजनापेक्षप्रयाजादि कारकत्वरूपाङ्गताबोधकत्वस्य प्रकरणनिष्ठत्वात्करणनिष्ठशक्तिजनकत्वरूपकारकत्वेन भावना गृह्णातीत्येवंरूपेतिकर्तव्यताकाङ्क्षा प्रकरणमित्यर्थः । **तयाऽग्रहणमिति** ॥ द्रव्यदेवतावामदेव्यादिसिद्धपदार्थानां दृष्टविधया एककरणजनकत्वात् प्रयोजनानाकाङ्क्षत्वेन करणवृत्तिशक्तिजनकत्वेनाग्रहणम् ॥ यत्तु तन्नियमजन्यमदृष्टं तस्य यागनिष्पत्त्यनन्तरमुत्पत्तेः यागं प्रत्यकारणत्वात् तद्वृत्तिशक्तिजनकत्वेनानपेक्षणात्तन्नियमादृष्टोपहिततत्वेन रूपेणेष्टमेवेतिकर्तव्यतात्वम्, परंतु तन्नोदासीनस्य संभवतीत्यवान्तरक्रियायुक्तस्य द्रव्यादेरितिकर्तव्यतात्वव्यवहारः शास्त्र एतन्मूलक एवेत्यर्थः ॥

एवं प्रमाणभूतप्रकरणस्वरूपेऽभिहितेऽधुना तस्य पूर्वपूर्वप्रमाणकल्पनतद्विनियोजकताप्रकारं दर्शयति—**अत्रचेति** ॥ **निरुक्तपदानामिति** ॥ उक्तविधपारिभाषिकपदस्थानापन्नानामवान्तरवाक्यानामित्यर्थः । **तन्निष्ठेति** ॥ अवान्तरवाक्यार्थनिष्ठेत्यर्थः । अङ्गत्वबोधकतामभिनीय दर्शयति—**संभवति हीति** ॥ महावाक्ये इत्थमिति पदोपात्तानां प्रयाजादीनां स्वर्गकामो यजेतेत्येतत्पदोपात्तभावनायां परंपरया जनकत्वेनान्वयादङ्गत्वघटकीभूतकृतिकारकताबोधकत्वात् उभयाकाङ्क्षालक्षणप्रकरणस्य प्रामाण्यमित्यर्थः । सिद्धान्तमुपसंहरति—**तस्मादिति** ॥

एवमनुग्राहकाकाङ्क्षारूपस्य प्रकरणत्वं प्रतिपादितम् स्थिरीकर्तुं यदेतादृशप्रकरणदूषणेन पार्थसारथिना अन्यदेव प्रकरणस्वरूपमुपपादितं तदनूद्य दूषयति—**यत्त्वत्रेति** ॥ प्रकरणस्य प्रयाजादिविशेषसंबन्धबोधकत्वेऽप्यङ्गत्वस्य तदघटितत्वात् तद्बोधकत्वानुपपत्तिरित्यर्थः । **प्रयाजादेरिति** ॥ तव मतेऽन्योत्पादानुकूलव्यापारविशेषत्वं प्रयाजादीनां यदि, तदा अपूर्वकल्पना अतः पूर्वमाख्यातार्थोपस्थितिदशायां न तावदपूर्वस्यान्वयित्वं संभवति; तस्य असत्त्वात् । नापि यागस्य; तस्य प्रयाजाद्यजन्यत्वेन बाधात् । अवशिष्यते परं फलम् । तत्र यथा यागभावनायाः फलभाव्यकत्वाद्यागस्य फलसंबन्धः तथा प्रयाजादिभावनानामपि भावनात्वात् तद्विषयप्रयाजादीनामपि फलसंबन्धापत्तिर्दुर्निवारा ॥ नच समानपदश्रुत्या फलं प्रति यागस्यैव करणत्वं इति नियन्तुं शक्यम्; प्रयाजादीनामपि स्वस्वादृष्टरूपव्यापारसत्त्वेन करणत्वस्य दुर्निवारत्वात् । यागस्य साक्षात् फले समानपदोपात्तत्वाभावेन भावनाद्वारैव तस्य वाच्यत्वात् तदपेक्षया साक्षात् भावनारूपाणां प्रयाजादीनामेव करणत्वौचित्याच्च । अतः फलसंबन्धापत्तिरनिवार्येत्यर्थः । **किंचेति** ॥ यागस्यान्योत्पादने स्वानुष्ठानमात्रसापेक्षस्याऽप्यन्याकाङ्क्षाभावेन स्वतो निराकाङ्क्षत्वादन्यतराकाङ्क्षयैव प्रयाजाद्यङ्गकत्वापत्तिरित्यर्थः । अतो यागस्य अनुग्रहाकाङ्क्षैव प्रकरणं युक्तमिति ॥

प्रयोजनं प्रयाजादीनां विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा फलार्थत्वात् विकृतावनतिदेशः पूर्वपक्षे, सिद्धान्ते तु स इति स्पष्टत्वान्नोक्तम् ॥

॥ इति चतुर्थं प्रकरणविनियोजकताधिकरणम् ॥

---

पूर्ववदेवोपक्षिप्तस्य क्रमप्रमाणस्य विनियोजकत्वनिरूपणे अवसरसङ्गतिं सूचयन् सौत्रक्रमशब्दस्य पर्यायकथनव्याजेन क्रमनिरूपणं प्रतिजानीते—**स्थानंचेति** ॥ प्रमाणशब्दोत्तरं निरूप्यत इत्यध्याहारः । तस्यच स्वरूपेणाज्ञातस्य लक्षणव्या-

मात्रम्; गोदोहनादेरपि दर्शाङ्गत्वापत्तेः। अथ साकाङ्क्षत्वमात्रम्; विकृतेरपि प्राकृताङ्गविषये तदापत्तेः। नापि साकाङ्क्षत्वे सति सन्निधिपठितत्वम्; उपहोमादावपि तदापत्तेः। अथोभयाकाङ्क्षत्वविशिष्टं तत्; सिद्धरूपाणां मन्त्रादीनामपि तदापत्तेः। प्रयाजादीनामनाकाङ्क्षितत्वेन तदनापत्तेश्च। अथ दर्शपूर्णमासयोः प्रकारान्तरेण प्रयोजनाकाङ्क्षत्वेऽपि इतिकर्तव्यतात्वेन तदाकाङ्क्षोपपत्तेर्युक्तं प्रकरणमिति चेत्, किमिदमितिकर्तव्यतात्वं नाम? न तावत्फले अपूर्वे वा सहकारित्वम्। प्राधान्यापत्तेः, प्रयाजादिवदाग्नेयस्यापि विकृतावतिदेशापत्तेश्च। नापि करणजनकत्वम्; प्रयाजादिषु बाधादिति चेत्,

न; सन्निहितस्य फलवतोऽनवगताङ्गताकपदार्थविषये

---

च्छेदकमात्रमाद्यपादद्वये निरूपितम्। अस्मिंस्तु पादे वाक्यीयविनियोगे तन्निरूपणे कृते अधुना अवसरलाभात् प्रकरणस्य स्वरूपलक्षणविनियोजकत्वप्रकारैरज्ञातस्य निरूपणं क्रियत इत्यर्थः। प्रकरणान्तरत्वादनन्तरसङ्गत्यभावेऽपि न क्षतिः॥

**ननु**—प्रकरणस्वरूपस्यैवासिद्धेः कुतः तस्याङ्गत्वप्रमाणत्वेनोपक्षेपो येन तन्निरूपणं प्रतिज्ञातविषयं भवेदित्यभिप्रेत्याशङ्कते—**नन्विति** ॥ **अनाकाङ्क्षितत्वेनेति** ॥ दर्शपूर्णमासयोरिति शेषः। **आग्नेयस्यापीति** ॥ अग्नीषोमीयादाग्नेयानपेक्षात् परमापूर्वानुत्पत्तेस्तस्यापि तत्राग्नीषोमीयसहकारित्वादितिकर्तव्यतात्वापत्तौ प्रयाजादिवदतिदेशापत्तिरित्यर्थः। **बाधादिति** ॥ द्रव्यदेवतयोः तज्जनकत्वेन प्रयाजादिषु तस्य बाधादित्यर्थः॥

**प्रकरणविषयत्ववारणायेति** ॥ अवघातादीनां व्रीह्याद्यङ्गत्वस्य श्रुत्यादिभिरेव बोधनात् सन्निधिरूपाधिकाराख्यप्रकरणस्य **अथवा**—भाट्टालंकारोक्तरीत्या सन्निधेः स्थानत्वेन प्रकरणत्वानुपपत्तेरनेकार्थेष्ववान्तरतात्पर्यवतामनेकवाक्यानामेकत्र क्वचिन्महातात्पर्यरूपाधिकाराख्यप्रकरणस्य व्रीह्यादिपदेऽङ्गितावच्छेदकलक्षणातात्पर्यग्राहकत्वेऽपीतिकर्तव्यतापेक्षणरूपप्रकरणविषयत्वाभावात्तद्वारणायेत्यर्थः॥

**नच**—अपूर्वसाधनीभूताङ्गत्वस्य श्रुत्यादिगम्यत्वेऽपि यागाङ्गत्वस्यापूर्वाङ्गत्वस्य वा कथंभावात्मकप्रकरणगम्यत्वं **इति—वाच्यम्**; अपूर्वसाधनीभूताङ्गत्वस्यापूर्वाङ्गत्वं विनाऽनुपपत्तेस्तस्यार्थसिद्धत्वेन प्रकरणव्यापारानपेक्षणात्॥ **अतएव**—प्रोक्षणादिलोपे प्रकरणगम्याङ्गत्वपक्षे इव क्रत्वङ्गभ्रेषप्रायश्चित्तमपि नासुलभमिति भावः॥

अत्रच प्रकरणादीनां वक्ष्यमाणरीत्या पूर्वपूर्वप्रमाणकल्पनेनैवाङ्गताबोधकत्वेन मन्थरप्रवृत्तित्वात् श्रुत्यादिविषये अङ्गत्वबोधकत्वानुपपत्तेः स्वत एव प्रकरणाविषयत्वसिद्धेः अनवगताङ्गविषये इति स्पष्टार्थमुपात्तमिति ध्येयम्॥

इतिकर्तव्यतात्वेनापेक्षणस्यैव प्रकरणपदार्थत्वात्। अत्रासन्निहितज्योतिष्टोमाद्यङ्गत्वस्य प्रयाजादौ वारणायाद्यं विशेषणम्। अनूयाजाद्यङ्गत्ववारणाय फलवत इति द्वितीयम्। प्रोक्षणादेः श्रुत्यादित्रयविनियुक्तस्य प्रकरणविषयत्ववारणाय तृतीयम्। सिद्धरूपस्य लिङ्गाविनियुक्तमन्त्रादेः प्रकरणाविषयत्वसिद्ध्यर्थमितिकर्तव्यतात्वेनेति चतुर्थम्।

इतिकर्तव्यतात्वं च करणानुग्राहकत्वम्। सर्वत्र हि अशक्तस्य कारणत्वायोगाच्छक्तिः कारणनिष्ठा समस्तीति निर्विवादम्। सा च कारणतावच्छेदिका कारणरूपा वेत्यन्यदेतत्। तस्याश्च जन्यवृत्तित्वे जन्यतैवेत्युत्सर्गः। सामग्र्यलाभे परमनादितेत्यपवादः। तत्र तत्सामग्र्यपेक्षैवेतिकर्त-

---

**लिङ्गाविनियुक्तेति** ॥ मन्त्राधिकरणे अर्थप्रकाशनार्थानां मन्त्राणां नावान्तरक्रियायोगादित्याचार्योक्तन्यायेन अर्थप्रकाशनक्रियाद्वारा प्रकरणग्राह्यत्वस्याभिहितत्वात् तद्व्यतिरेकं दर्शयितुं लिङ्गाविनियुक्तेत्युक्तम्। अतएव लिङ्गस्य सामान्यसंबन्धबोधकप्रमाणसापेक्षत्वे क्रमसमाख्यावत् प्रकरणमपि सामान्यसंबन्धबोधकत्वेन लिङ्गपादे उपन्यस्तम्॥

एतच्च श्रुत्यादित्रयविनियुक्तानामवघातादीनां सन्निपातिनां प्रकरणाविषयत्वं सौत्रमसंयुक्तपदमालम्ब्य न्यायसुधोक्तमनुरुध्योक्तम्। **प्रकाशकारास्तु**—सन्निपात्यवघातादीनां प्रकरणग्राह्यत्वप्रदर्शनपरशास्त्रदीपिकास्वारस्येन श्रुत्यादीनां द्वारैदमर्थ्यसमर्पणमात्रपरत्वमङ्गीकृत्य कथंभावाकाङ्क्षयैवावघातादीनामङ्गत्वमाहुः। तत्रैतदधिकरणान्ते असंयुक्तग्रहणं किमर्थम्? श्रुतिलिङ्गवाक्यैः संयुक्तानां द्विवहुत्वयुक्तप्रतिपद्विधीनां पूपादिशब्दतच्छेषाणां च प्रकरणविनियोगनिवृत्त्यर्थम्, प्रकरणविरोधिनावा असंयुक्तमविरोधिसंयुक्तानां व्रीहीन् प्रोक्षति वर्हिर्देवसदनं दामि अरुणया क्रीणातीत्यादीनां प्रकरणस्थव्रीहिवर्हिःक्रयैः संवध्यमानानां प्रकरणसमावेशोपपत्तेः, तत्तु तत्सामर्थ्यसिद्धत्वात् न सूत्रकारेणोक्तमिति वार्तिकमेव मतद्वये मूलमिति नेहान्यतरमतनिष्कर्षे यत्नेन प्रयोजनमिति दिक्॥

इतिकर्तव्यतात्वं दुर्निरूपमिति यदुक्तं तत् परिहरति—**इतिकर्तव्यतात्वं चेति** ॥ स्वमते भावनाया यत्नरूपत्वात् तत्रानुग्राहकापेक्षाभावेपि फलद्वारा तत्करणीभूतस्य धात्वर्थस्यापूर्वजनने अस्त्येव तदपेक्षेतीतिकर्तव्यतात्वम्। करणानुग्राहकत्वं नाम स्वकरणनिष्ठशक्तिजनकाकाङ्क्षत्वं यत् भावनायाः तदेव प्रकरणमित्यर्थः। **सामग्र्यलाभ इति** ॥ यथा दण्डादिवृत्तिशक्तावनवस्थादोषभिया सामग्र्यलाभेऽनादित्वम्। दण्डवृत्तिशक्तेः जन्यत्वे तस्यां दण्डस्य शक्तिमत्त्वेन कारणत्वे वक्तव्ये तस्यां पुनः तादृशस्य तेन रूपेण कारणत्वेऽनवस्थापत्तिः। प्रकृतेतु अपूर्वजननानुकूलायाः यागनिष्ठशक्तेः कार-

व्यतापेक्षा । तया च सन्निहितप्रयाजादेरङ्गत्वबोधः, प्रयाजादेस्तत्सामग्रीत्वात् । सिद्धरूपस्य च द्रव्यादेर्व्यापारावेशं विना तत्सामग्रीत्वासंभवात्तया अग्रहणम् ।

अत्र च प्रधानगतेतिकर्तव्यताऽऽकाङ्क्षायाः प्रयाजादिगतप्रयोजनाकाङ्क्षासहकृतायासत्तद्वाक्यस्य स्वस्वावान्तरवाक्यार्थे समाप्तस्यापि महावाक्यैकदेशरूपपारिभाषिकपदसन्निध्याख्यवाक्यकल्पनया, निरुक्तपदानां च स्वार्थोपस्थितिद्वारा तन्निष्ठाश्रुतपदान्तरकल्पनाऽनुकूलयोग्यतारूपलिङ्गकल्पनया च, समिधो यजति इत्थं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यश्रुतेतिकर्तव्यतात्ववाचिपदरूपश्रुतिकल्पनया चेतिकर्तव्यतात्वरूपकृतिकारकत्वे प्रामाण्यम् । संभवति हि प्रयाजादीनामपि उक्तशक्तिजनकत्वेन भावनायामन्वयः । तस्मात्सिद्धं प्रकरणं नाम चतुर्थप्रमाणम् ।

यत्त्वत्र पार्थसारथिना अननुगृहीतस्यापि कर्मादेः संयोगविभागारम्भकत्वदर्शनान्नेदं प्रकरणम् । अपि तु व्यापारसामान्यस्याख्यातार्थतामङ्गीकृत्य तद्विशेषापेक्षैवेतिकर्तव्यताऽपेक्षा । तयैव च प्रयाजादीनां तत्त्वेनान्वय इति तदेव च प्रकरणमित्युक्तम् । तन्न; तथात्वे निरुक्तप्रकरणस्य तदघटिताङ्गत्वबोधकत्वानुपपत्तेः, प्रयाजादेर्भावनात्वे तस्यैव फलसंबन्धापत्तेश्च । अस्मन्मते तु यत्नस्यैव भावनात्वात्तस्य च यागजनकत्वेनैव कृतार्थत्वान्न तदापत्तिरिति वैषम्यम् । किंचैवं प्रधानस्य स्वतो निराकाङ्क्षत्वान्यतराकाङ्क्षयैव प्रकृतौ प्रयाजाद्यङ्गकत्वापत्तिः, विकृतौ च भावनाया विशेषापेक्षायां अक्लृप्तोपकारैरपि सन्निहितैरुपहोमैरेव निराकाङ्क्षत्वोपपत्तेर्नातिदेशकल्पनापत्तिरित्यादि कौस्तुभे विस्तरः ॥ ३ ॥ २८ ॥ इति चतुर्थं प्रकरणविनियोजकताधिकरणम् ॥

( ५ अधिकरणम् । )

**क्रमश्च** ॥ स्थानं चाङ्गत्वे पञ्चमं प्रमाणम् । तच्चेतिकर्तव्यतात्वेनायोग्यसंबन्धयोर्वाक्यार्थयोः सन्निधिः । इतिकर्तव्यतात्वेनायोग्यत्वं द्वेधा—क्वचिदाकाङ्क्षाविरहात्, यथा विकृतेरुपहोमादिविषये, क्लृप्तोपकारप्राकृताङ्गैरेव निराकाङ्क्ष-

---

णापेक्षायां यागस्यैव कारणत्वेऽनवस्थापत्तेः सन्निहितं प्रयोजनापेक्षप्रयाजादि कारकत्वरूपाङ्गताबोधकत्वस्य प्रकरणनिष्ठत्वात्करणनिष्ठशक्तिजनकत्वरूपकारकत्वेन भावना गृह्णातीत्येवंरूपेतिकर्तव्यताकाङ्क्षा प्रकरणमित्यर्थः । **तयाऽग्रहणमिति** ॥ द्रव्यदेवतावामदेव्यादिसिद्धपदार्थानां दृष्टविधया एककरणजनकत्वात् प्रयोजनानाकाङ्क्षत्वेन करणवृत्तिशक्तिजनकत्वेनाग्रहणम् ॥ यत्तु तन्नियमजन्यमदृष्टं तस्य यागनिष्पत्त्यनन्तरमुत्पत्तेः यागं प्रत्यकारणत्वात् तद्वृत्तिशक्तिजनकत्वेनानपेक्षणात्तन्नियमादृष्टोपहितत्वेन रूपेणेष्टमेवेतिकर्तव्यतात्वम्, परंतु तन्नोदासीनस्य संभवतीत्यवान्तरक्रियायुक्तस्य द्रव्यादेरितिकर्तव्यतात्वव्यवहारः शास्त्र एतन्मूलक एवेत्यर्थः ॥

एवं प्रमाणभूतप्रकरणस्वरूपेऽभिहितेऽधुना तस्य पूर्वपूर्वप्रमाणकल्पनतद्विनियोजकताप्रकारं दर्शयति—**अत्रचेति** ॥ **निरुक्तपदानामिति** ॥ उक्तविधपारिभाषिकपदस्थानापन्नानामवान्तरवाक्यानामित्यर्थः । **तन्निष्ठेति** ॥ अवान्तरवाक्यार्थनिष्ठेत्यर्थः । अङ्गत्वबोधकतामभिनीय दर्शयति—**संभवति हीति** ॥ महावाक्ये इत्थमिति पदोपात्तानां प्रयाजादीनां स्वर्गकामो यजेतेत्येतत्पदोपात्तभावनायां परंपरया जनकत्वेनान्वयादङ्गत्वघटकीभूतकृतिकारकताबोधकत्वात् उभयाकाङ्क्षालक्षणप्रकरणस्य प्रामाण्यमित्यर्थः । सिद्धान्तमुपसंहरति—**तस्मादिति** ॥

एवमनुग्राहकाकाङ्क्षारूपस्य प्रकरणत्वं प्रतिपादितम् स्थिरीकर्तुं यदेतादृशप्रकरणदूषणेन पार्थसारथिना अन्यदेव प्रकरणस्वरूपमुपपादितं तदनूद्य दूषयति—**यत्त्वत्रेति** ॥ प्रकरणस्य प्रयाजादिविशेषसंबन्धबोधकत्वेऽप्यङ्गत्वस्य तदघटितत्वात् तद्बोधकत्वानुपपत्तिरित्यर्थः । **प्रयाजादेरिति** ॥ तव मतेऽन्योत्पादानुकूलव्यापारविशेषत्वं प्रयाजादीनां यदि, तदा अपूर्वकल्पना अतः पूर्वमाख्यातार्थोपस्थितिदशायां न तावदपूर्वस्यान्वयित्वं संभवति; तस्य असत्त्वात् । नापि यागस्य; तस्य प्रयाजाद्यजन्यत्वेन बाधात् । अवशिष्यते परं फलम् । तत्र यथा यागभावनायाः फलभाव्यकत्वाद्यागस्य फलसंबन्धः तथा प्रयाजादिभावनानामपि भावनात्वात् तद्विषयप्रयाजादीनामपि फलसंबन्धापत्तिर्दुर्निवारा ॥ नच समानपदश्रुत्या फलं प्रति यागस्यैव करणत्वं इति नियन्तुं शक्यम्; प्रयाजादीनामपि स्वस्वादृष्टरूपव्यापारसत्त्वेन करणत्वस्य दुर्निवारत्वात् । यागस्य साक्षात् फले समानपदोपात्तत्वाभावेन भावनाद्वारैव तस्य वाच्यत्वात् तदपेक्षया साक्षात् भावनारूपाणां प्रयाजादीनामेव करणत्वौचित्याच्च । अतः फलसंबन्धापत्तिरनिवार्येत्यर्थः । **किंचेति** ॥ यागस्यान्योत्पादने स्वानुष्ठानमात्रसापेक्षस्याऽप्यन्याकाङ्क्षाभावेन स्वतो निराकाङ्क्षत्वादन्यतराकाङ्क्षयैव प्रयाजाद्यङ्गकत्वापत्तिरित्यर्थः । अतो यागस्य अनुग्राहकाकाङ्क्षैव प्रकरणं युक्तमिति ॥

प्रयोजनं प्रयाजादीनां विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा फलार्थत्वात् विकृतावनतिदेशः पूर्वपक्षे, सिद्धान्ते तु स इति स्पष्टत्वान्नोक्तम् ॥

॥ इति चतुर्थं प्रकरणविनियोजकताधिकरणम् ॥

---

पूर्ववदेवोपक्षिप्तस्य क्रमप्रमाणस्य विनियोजकत्वनिरूपणे अवसरसङ्गतिं सूचयन् सौत्रक्रमशब्दस्य पर्यायकथनव्याजेन क्रमनिरूपणं प्रतिजानीते—**स्थानंचेति** ॥ प्रमाणशब्दोत्तरं निरूप्यत इत्यध्याहारः । तस्यच स्वरूपेणाज्ञातस्य लक्षणव्या-

त्वात्। क्वचिद्व्यापारात्मकत्वात्। यथा जपादिमन्त्रादौ। अत्र चैकवाक्योपात्तव्रीहियागादिसन्निधेरपि तथात्वापत्तेर्वाक्यार्थेत्युक्तम्। प्रयाजादीनां स्थानविषयत्वापत्तिनिरासार्थमाद्यं विशेषणम्।

तत्सादेश्यापरपर्यायं द्विविधं, पाठसादेश्यमनुष्ठानसादेश्यं च। आद्यं च द्विविधम्। यथाक्रमं पाठः सन्निधौ पाठश्च। त्रयमपीदमुभयाकाङ्क्षयाऽन्यतराकाङ्क्षया चेति द्विविधम्। अत्रोभयाकाङ्क्षाघटकप्रधानाकाङ्क्षा चेतिकर्तव्यताऽऽकाङ्क्षाभिन्ना द्रष्टव्या। तत्र पाठक्रमात्काम्ययाज्यानुवाक्यामन्त्राणां काम्येष्ट्यङ्गत्वम्। सन्निधेस्तु सान्नाय्यपात्रशुन्धनविधिसन्निधौ समाम्नातस्य शुन्धध्वमिति मन्त्रस्य तदङ्गत्वम्। अनुष्ठानसादेश्यात्तु पशुधर्माणां दैक्षपश्वङ्गत्वम्।

यद्यपि चैषां लिङ्गादिप्रमाणान्तरेणैव विनियोगात्क्रमादीनां च क्वचिदपूर्वसाधनत्वलक्षणतात्पर्यग्राहकत्वमात्रत्वान्ना-

---

जेन स्वरूपमाह—**तच्चेति** ॥ **जपादिमन्त्रादाविति** ॥ आदिपदेनानुमन्त्रणयाज्यादिमन्त्रसंग्रहः। वाक्यार्थेत्यत्रार्थपदेनानुष्ठानसादेश्यसंग्रहः। **अन्यतराकाङ्क्षयेति** ॥ इति प्रकारेण षड्विधमित्यर्थः। **इतिकर्तव्यताकाङ्क्षाभिन्नेति**॥ या भावनायाः सामान्यतः कथंभावाकाङ्क्षा तद्भिन्ना केवलद्रव्यदेवताविषयस्यारकाकाङ्क्षा सेत्यर्थः ॥

**काम्येष्ट्यङ्गत्वमिति** ॥ प्रागुपपादितमिति शेषः। लिङ्गक्रमसमाख्यानादित्यत्र लिङ्गस्य क्रमादिसापेक्षत्वमुक्तम्, इहतु क्रमस्यैव क्वचित् लिङ्गापेक्षणीयस्य कथं विनियोजकत्वमित्याक्षेपसमाधानादपौनरुक्त्यं ज्ञेयम् ॥

इदंचोपलक्षणमनुमन्त्रणमन्त्राणामपि। यथाध्वर्यवे काण्डे आग्नेयोपांशुयाजाग्नीषोमीयकर्माणि क्रमेणाम्नातानि। याजमानेच काण्डे तद्विषया मन्त्राः क्रमेणाम्नाताः। "अग्नेरहं देवयज्ययान्नादो भूयासं" "दब्धिरस्यदब्धो भूयासममुं दभेयम्"। "अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासं," इति तत्र विनाप्यनुष्ठानसादेश्येन यावति प्रदेशे ब्राह्मणे प्रधानं पठ्यते तावत्येव मन्त्रेषु मन्त्रः। तयोश्चाङ्गाङ्ग्यपेक्षायां यथासंख्यन्यायेन समानदेशत्वात् द्वयोः विध्योः सन्निधानं भवति। प्रथमस्य प्रधानस्य मन्त्रमन्विच्छन् मन्त्रस्य समाम्नानमादित आरभ्यालोचयति, ततश्च प्रथममन्त्रो हृदयमागच्छति।

नच तस्यातिक्रमे हेतुरस्तीति स एव गृह्यते। तथा मन्त्रस्य शेषिणमपेक्षमाणस्यानयैव प्रक्रियया आद्येन शेषिणा सह संबन्धो भवति। ततश्च द्वितीयस्याप्यनेनैव न्यायेन द्वितीयेन सह संबन्धः ॥

यद्यपि धातुकायुधवाग्विदब्धिपदोपेतमन्त्रसामर्थ्यं प्रकरणं चाऽऽग्नेयादिष्वप्यविशिष्टम्; तथापि तेषां विस्पष्टलिङ्गकाम्यादिमन्त्रैरवरोधे अविस्पष्टलिङ्गस्यास्य विषमशिष्टत्वेन विकल्पायोगादनुमन्त्रणमन्त्राणां कृताकृतयागप्रत्यवेक्षणार्थत्वेन दृष्टार्थत्वात् समुच्चयानुपपत्तेः पाठक्रमेण मध्यतनवर्त्युपांशुयाजार्थत्वमिति ॥

नच बलीयसः प्रकरणात् सर्वार्थत्वम्; मन्त्राणामक्रियारूपत्वेन प्रकरणाग्राह्यत्वादस्पष्टलिङ्गत्वेन आग्नेयादिविषयाया अभिधानक्रियाया अनिश्चये तद्द्वारापि प्रकरणग्रहणायोगात्। अतः प्रकरणरूपसामान्यसंबन्धबोधकप्रमाणाभावान्नाग्नेयाद्यर्थत्वम्। यातु यागानुमन्त्रणसमाख्या साऽपि नाऽऽग्नेयाद्यसाधारिणी। एवंच युष्मदर्थविषयमध्यमपुरुषान्तत्वेनासिशब्दस्य प्रकृतसर्वाग्नेयादिविषयसाधारणप्रकाशनसामर्थ्यसंभवेऽपि सादेश्येनोपांशुयाजस्यात्यन्तसान्निध्यादामन्त्रणविभक्तेश्चाभिमुखविषयत्वादुपांशुयाजस्य मन्त्राकाङ्क्षित्वेन मन्त्राभिमुख्यावगतेरुपांशुयाजमात्रविषयस्याभिधानसामर्थ्यात्मकस्य लिङ्गस्य कल्पनादभिधेयत्वेन उपांशुयाज एवात्यन्तसान्निध्यादुपतिष्ठत इति तदङ्गमेव मन्त्र इति ॥

**सन्निधेस्त्विति** ॥ पात्राणामासादनोत्तरकालं प्रोक्षणं शुन्धनं तद्विधिसन्निधौ "शुन्धध्वं दैव्याय कर्मणे देवयज्यायै" इति पठितस्य शुन्धनप्रकाशनसामर्थ्यात् लिङ्गेन साक्षात् प्रकरणप्राप्तसान्नाय्ययागार्थतावाधात् पात्रविशेषविषये चास्पष्टलिङ्गत्वात् सान्नाय्यपात्रप्रोक्षणविधिसन्निधिक्रमेण सान्नाय्यपात्रप्रोक्षणाङ्गत्वमित्यर्थः। यद्यपि अधिकरणमालायामस्य मन्त्रस्य सान्नाय्यपात्रशुन्धनविधिसन्निध्याम्नानाभावात् "मातरिश्वनो घर्मोसी"त्याद्युत्तरमन्त्राणां कुम्भीपात्रादिसान्नाय्यपात्रप्रकाशकत्वात् तत्सन्निधावाम्नानेन शुन्धनीयमात्रप्रकाशकस्यापि सान्नाय्यपात्रशुन्धनाङ्गत्वमुक्तम्, ननु तद्विधिसन्निध्याम्नानादिति पात्रशुन्धनविधिसन्निधावित्ययुक्तम्; तथापि शाखान्तराभिप्रायेण नेयमिति न दोषः ॥

**पशुधर्माणामिति** ॥ क्रयसन्निधावुत्पन्नस्यापि दैक्षस्य वाक्यान्तरेण औपवसथ्येऽहनि अनुष्ठेयत्वावगमेन बुद्धौ विपरिवृत्तेः पशुधर्माकाङ्क्षित्वाच्च योग्यत्वाच्च स्वसमानदेशे विधिपाठत्वेन कर्तव्यत्वावगमात् प्रयोजनाकाङ्क्षायोग्यांश्चोपाकरणादीन् पशुधर्मान् प्रत्यङ्गत्वेन ग्राहकत्वमनुष्ठानसादेश्यादित्यर्थः। पशुसामान्विध्याधिकरणे त्वेतदेव प्रकरणात् सर्वार्थत्वमवान्तरप्रकरणाद्वा सवनीयमात्रार्थत्वमित्याशङ्क्याऽऽक्षिप्य समाधीयते इत्यपौनरुक्त्यं वेदितव्यम् ॥

एवं प्राचां रीत्या क्रमोदाहरणानि उक्तानि, तान्याक्षिपन्निव विशेषमाह—**यद्यपि चैषामिति** ॥ काम्ययाज्यानुवाक्यामन्त्राणां पूर्वोक्तरीत्याऽनुमन्त्रणमन्त्राणां च लिङ्गाद्विनियोगः स्पष्ट एव। लिङ्गादीत्यादिपदेन पशुधर्माणां द्वितीयादिश्रुत्यैव पश्वर्थत्वसंग्रहः। क्रमादीनामित्यत्र यथाक्रमपाठस्यैव क्रमशब्देन विवक्षितत्वात् सन्निध्यनुष्ठानसादेश्ययोरादिपदेन संग्रहः। **क्वचिदिति** ॥ शुन्धनमन्त्रस्य तैत्तिरीय-

ङ्गत्वे प्रामाण्यम्; तथापि षड्विधस्यापि क्रमस्यासङ्कीर्णोदाहरणानि कौस्तुभोक्तरीत्योहनीयानि।

अत्र षड्विधेऽपि क्रमे आरादुपकारकस्थले तावदितिकर्तव्यताऽऽकाङ्क्षायाः कल्पनीयत्वात्प्रकरणकल्पकत्वम्। मन्त्रादिरूपसन्निपत्योपकारकस्थलेऽपि मन्त्रादेः स्वरूपेण यागाजनकत्वेऽपि तत्तन्नियमादृष्टोपहितस्य तज्जनकत्वात्करणनिष्ठयोग्यताजनकत्वरूपेतिकर्तव्यतात्वात्मकप्रकरणकल्पनावश्यिकैव। अतएव तदपेक्षया तस्य दौर्बल्यम्। षड्विधे तु क्रमे उभयाकाङ्क्षालक्षणादन्यतराकाङ्क्षालक्षणस्य। तत्रापि पाठक्रमादनुष्ठानसादेश्यस्य। विधिसन्निधानस्य पुरःस्फूर्तिकत्वात्। तयोस्तु मध्ये सन्निधानस्य प्राबल्यम्। एकग्रन्थस्थत्वादित्यादि कौस्तुभे द्रष्टव्यम् ॥ ३ ॥ २९ ॥

इति पञ्चमं स्थानविनियोजकताधिकरणम् ॥

(६ अधिकरणम्।)

**आख्या चैवम्** ॥ ऋग्वेदादिविहितपदार्थेषु हौत्राध्व-

---

ब्राह्मणे "प्रजापतिः यज्ञं समसृजत्तस्योखे अस्रंसेतामि"ति पठित्वा "शुन्धध्वं दैव्याय कर्मणे देवयज्यायै"इति मन्त्रविनियोगमभिधाय "मातरिश्वनो घर्मोऽसी"त्याम्नातेन वाचनिकसान्नाय्याङ्गसन्दंशस्यैवापूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वोपपत्तेः सन्निधेः तत्तात्पर्यग्राहकत्वमपि नास्तीत्यभिप्रायेण क्वचिदित्युक्तम् ॥

किंच तैत्तिरीयब्राह्मण एवास्य मन्त्रस्य पौरोडाशिकपात्रप्रोक्षणे विनियोगविधानात् सन्निधिमात्रेण सान्नाय्यपात्रमात्रप्रोक्षणाङ्गत्वसिद्धान्तकरणमप्ययुक्तमित्यर्थः। विस्तरस्तु कौस्तुभे द्रष्टव्यः ॥

**कौस्तुभोक्तरीत्येति** ॥ सा चैवम्—यत्र फलवदेकं कर्म समाम्नातम्, स्थलान्तरे चानारभ्यविधयाऽफलमारादुपकारकम्, तयोश्चोभयोरपि वचनद्वयात् स्वतन्त्रैककालकर्तव्यता, तत्र तस्याफलस्य फलवदङ्गत्वमनुष्ठानसादेश्यमात्रादेव। तत्र फलवतो दर्वीहोमत्वेनापूर्वत्वे उभयाकाङ्क्षया विकृतित्वेऽन्यतराकाङ्क्षयेति विवेकः ॥ एवंच यत्र विभिन्नफलकानेकप्रधानाम्नानं ब्राह्मणे मन्त्रकाण्डे अन्वितेनैव क्रमेण लिङ्गाविषयतया जपादिमन्त्रोच्चारणविधानं तत्र तत्तद्विधीनां पाठक्रमेणैव तत्तत्प्रधानविध्युपस्थापकत्वात् तत्तत्प्रधानाङ्गतत्तन्मन्त्रोच्चारणस्य यथासंख्यपाठात्। तत्रापि विभिन्नफलकप्रमाणानां दर्विहोमत्वेनापूर्वत्वे उभयाकाङ्क्षया विकृतित्वेत्वन्यतराकाङ्क्षयेति विवेकः। एवमुपहोमानां विकृत्यङ्गत्वं सन्निधिपाठादित्यनया रीत्या असंकीर्णोदाहरणानि ऊहनीयानीत्यर्थः॥

एवं क्रमस्य विनियोजकत्वमुक्त्वा तस्य प्रकरणकल्पकताकथनव्याजेन प्रसङ्गादिह प्राबल्यदौर्बल्ये विचारयति—**अत्रेति** ॥ **प्रकरणकल्पकत्वमिति** ॥ एवंच निराकाङ्क्षानुष्ठानसादेश्यस्थले प्रधानाकाङ्क्षाया एव कल्पनीयत्वात् प्रकरणात् दौर्बल्यम्। साकाङ्क्षानुष्ठानसादेश्यस्थले तु आरादुपकारकविषये न किंचित् कल्पनीयम्; तथापि अनुष्ठानसादेश्यस्यारादुपकारकाङ्गविधिपठितत्वाभावात् विधिपाठसन्निधिमात्रघटितात् प्रकरणात् दौर्बल्यम्, विधिसन्निधानस्य पुरःस्फूर्तिकत्वादित्यर्थः। एवमन्यक्रमविनियोज्यारादुपकारकस्थलेऽपि द्रष्टव्यम्। **मन्त्रादिरूपेति** ॥ तत्रच प्रधानतत्संस्कारकाकाङ्क्षाकल्पनं नियमादृष्टद्वारा च स्वाकाङ्क्षाकल्पनेनेतिकर्तव्यतात्वकल्पनमित्युभयाकाङ्क्षारूपप्रकरणकल्पकत्वात् ततो दौर्बल्यमित्यर्थः। **तदपेक्षयेति** ॥ तच्छब्देन प्रकरणस्य तस्येति द्वितीयतच्छब्देन क्रमस्य ग्रहणम् ॥

**तत्रापीति** ॥ अन्यतराकाङ्क्षालक्षणक्रमस्य दौर्बल्ये यत्र द्विविधपाठसादेश्यस्यानुष्ठानसादेश्येन विरोधः तत्रेत्यर्थः। **पुरःस्फूर्तिकत्वादिति** ॥ अनुष्ठानसादेश्ये अनुष्ठानमेव प्रधानस्य पुरःस्फूर्तिकं न विधिः, पाठक्रमेतु विधिपाठस्यैव सन्निहितत्वात् तस्यानुष्ठानापेक्षया पुरःस्फूर्तिकत्वमित्यनुष्ठानसादेश्यस्य दौर्बल्यमित्यर्थः ॥

**तयोस्त्विति** ॥ पाठसादेश्ययोः परस्परविरोध इत्यर्थः। यथाक्रमपाठस्यैकग्रन्थस्थत्वाभावेन सन्निधिपाठस्यैकग्रन्थस्थतया पुरःस्फूर्तिकत्वात् सन्निधिपाठापेक्षया यथाक्रमपाठस्य दौर्बल्यमिति भावः। प्रयोजनं स्पष्टत्वान्नोक्तम् ॥

**॥ इति पञ्चमं स्थानविनियोजकताधिकरणम् ॥**

---

पूर्ववदेवोपक्षिप्तस्य समाख्याप्रमाणस्य पञ्चान्तरितप्रामाण्यनिरूपणेऽवसरलाभात् प्रमाणनिरूपणेन सहावसरसङ्गतिं च स्पष्टत्वादनुक्त्वा प्रमाणभूतसमाख्यास्वरूपं दर्शयति—**ऋग्वेदादीति** ॥ दर्शपूर्णमासज्योतिष्टोमादिषु ऋग्वेदविहिते कर्मणि हौत्रं, यजुर्वेदविहितेचाऽऽध्वर्यवं, सामवेदविहितेचौद्गात्रं इत्येवं समाख्याः तथा होतृचमसः पौरोडाशिकमित्यपि पात्रविशेषे दार्शपौर्णमासिकपदार्थेषु च वेदे प्रयुक्तास्तथा सोमचमस इत्यादि लौकिकैः याज्ञिकैश्च प्रयुक्ता इत्यर्थः। तत्र समाख्याया यौगिकत्वेन विनियोजकत्वं स्यात्, नच यौगिकत्वं संभवति; पाठकादिशब्दानां प्रत्यक्षादिना पाठक्रियाकर्त्रोः संबन्धावगमेन युक्तायौगिकत्वेन प्रवृत्तिः, इहतु समाख्यातः पूर्वं संबन्धानवगमात् तन्निमित्तं यौगिकत्वमिति रूढमेव आध्वर्यवादिपदम्। अध्वर्युकर्तृकेषु लौकिकपदार्थेष्वाध्वर्यवसमाख्याया अदर्शनेन अवयवयोगस्य व्यभिचारित्वाच्च। अतो न यौगिकशब्दरूपसमाख्यास्वरूपसंभवः। कथंचित् तत्संभवेऽपि वा तया संबन्धसामान्यप्रतीतेर्न तादर्थ्याख्यशेषत्वप्रतीतिसंभवः। वरणभरणोपात्तस्याध्वर्य्वादेः सत्यामपि कैमर्थ्याकाङ्क्षायामन्वाधानादेश्च सत्यामपि कर्त्रपेक्षायां समाख्यायाः पदरूपतया विधित्वाभावात् न विधिरू-

र्थवादिसमाख्या वेदे याज्ञिकैश्च प्रयुज्यते । साऽप्यङ्गत्वे प्रमाणम् । तथाहि । सर्वत्र क्लृप्तावयवशक्तिकं द्विविधं पदं प्रकृतविधौ वाक्यार्थान्वय्यर्थकं तद्भिन्नं चेति । तत्राद्यं "निर्मन्थ्येनेष्टकाः पचति" "प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ती"त्यादौ निर्मन्थ्यादिपदम् । तत्र वाक्येनैव मन्थनादीनां पाकाद्यङ्गत्वान्न सामाख्यानिको विनियोगः । द्वितीयन्तु आध्वर्यवमधीते प्रैतु होतुश्चमस इत्यादौ । तत्र विशेष्यस्य काण्डस्यैव प्रकृतविधावन्वये जाते विशेषणस्याध्वर्युकर्तृकत्वादेः सिद्धवन्निर्देशान्यथाऽनुपपत्त्या विनियोगः कल्प्यत इति तत्र समाख्यया विनियोगः ।

अत्र समाख्ययाऽवयवार्थयोः संबन्धे संसर्गमर्यादया बुद्धे न तन्निर्देशान्यथाऽनुपपत्त्या स्वतन्त्रविधिकल्पना; गौरवापत्तेः, किन्त्वन्वाधानादिवाक्यस्याध्वर्युं वृणीत इति वाक्यस्य चैकवाक्यतासंपादकपदमात्रं, यमध्वर्युं वृणीते सोऽग्नीनन्वादधातीति । तच्च द्वयोर्विध्योः कथंचिदस्त्येकबुद्धि-

पचोदनागम्यतादर्थ्यबोधकत्वसंभवः । पाचकादिवत् कथंचित् प्रमाणान्तरेण संबन्धाभ्युपगमे न समाख्यायाः संबन्धे प्रामाण्यम् । समाख्याबलादेव संबन्धकल्पने समाख्याया अपि संबन्धसिद्ध्यधीनत्वादितरेतराश्रयापत्तिरित्यप्रामाण्यपूर्वपक्षनिरासायाह—**सापीति** ॥

क्लृप्तावयवशक्तिकमित्यनेन यौगिकतासंभवे रूढिकल्पनमन्याय्यम् । अतिप्रसङ्गपरिहारस्तु उद्भिदधिकरणोक्तन्यायेनावगन्तव्य इति यौगिकत्वस्वरूपं समाख्यायाः सूचितम् ॥

नचेहाश्वकर्णादिशब्दवत् प्रतीयमानयोगपरित्यागकारणं बाधोऽसंभवो वास्ति; तादर्थ्यस्य योग्यत्वेन बाधायोगात् । वक्ष्यमाणविधया तादर्थ्यप्रतिपादनस्यापि संभवाच्चेत्यर्थः । यदिहीयं सादिः समाख्या भवेत्, तदा प्रथमतः संबन्धं ज्ञात्वा सा प्रवर्तयितव्या, तत्प्रवर्तकस्यच पुरुषस्य संबन्धबोधने प्रमाणान्तराभावात् समाख्यैव तत्र प्रमाणमित्यन्योन्याश्रयः स्यात्, इयंच सङ्केतयितुरस्मरणात् वेदे प्रयुज्यमानत्वाच्चानादिभूतेति भ्रमविप्रलिप्सादिनिमित्तत्वानुपपत्तेः पूर्वपूर्वप्रयोगदर्शनादेवोत्तरोत्तरप्रयोगोपपत्तेः संबन्धावाच्यत्वेन समभिव्याहारमात्रगम्यत्वात् प्रागप्रतीतस्यापि प्रवृत्तिनिमित्तत्वोपपत्तेः पूर्वप्रतीतत्वाग्रहेऽपि अनुष्ठानस्याऽपि प्रवाहानादित्वात् प्रत्यक्षेणैव क्रियाकारकभावसंबन्धमवगत्य प्रयोगोपपत्तौ पश्चान्न्यायविदां अन्यमूलासंभवे समाख्यात एव तत्प्रतिपत्तिकल्पनसंभवात् गवादिशब्दानां संकेतग्रह इव नात्रेतरेतराश्रयप्रसक्तिरित्यभिप्रेत्य समाख्यया विनियोगं साधयति—**प्रकृतेति** ॥ **वाक्येनैवेति** ॥ एतच्च श्रुत्यादीनामप्युपलक्षणम् । अतएव आग्नेय इत्यादियौगिकेष्वप्यग्न्यादीनां देवतात्वस्य तद्धितश्रुत्यैव प्रतिपादनान्न समाख्याकृतो विनियोगोऽग्न्यादीनाम् । अतएव यत्र यौगिकपदे तदवयवाभ्यां शेषशेषिभावान्वययोग्यपदार्थयोरेवोपस्थितिः, नतु व्रीहीन् प्रोक्षतीत्यादाविव शेषशेषित्वन्यतरस्य तादृक्होतृचमसादिपदरूपसमाख्या षष्ठं प्रमाणमिति सांप्रदायिकाः ॥

यत्तु शिवतत्त्वविवेके समा चासावाख्याचेति व्युत्पत्त्या अन्यत्र प्रतिपन्नस्य अन्यत्र प्रतिपन्नेन संबन्धनिमित्तं संज्ञासाम्यं समाख्या । यथा अग्निर्यज्ञं तपतु प्रजानन् इत्यादिमन्त्राणामतिमुक्तिहोमानां च परस्परसंबन्धनिमित्तमाध्वर्यवसंज्ञासाम्यमिति समाख्यास्वरूपान्तरं स्वमतत्वेनोक्तम्, तदध्वर्यवादीनां कर्तृत्वेन विनियोगेऽव्यापकत्वादुपेक्ष्यम् । पशुबन्धप्रकरणे चतस्रोऽतिमुक्तीर्जुहोति इत्याम्नातानां चतुर्णामतिमुक्तिहोमानां पूर्वोक्तमन्त्रैः सह संबन्धो न समाख्यातः, किंतु आपस्तम्बसूत्रोपात्त एवेति न तदर्थमीदृशं मीमांसकविरुद्धं तत्स्वरूपं प्रमाणवदिति ध्येयम् । **पाकाद्यङ्गत्वादिति** ॥ तत्र विशेष्यांशस्य सामर्थ्यात् पदान्तरोपादानतश्च प्राप्तेः विशेषणाङ्गत्वे तात्पर्यात् वाक्येन विनियोग इत्यर्थः ॥

**विशेषणस्येति** ॥ अध्वर्य्वादेः कर्तुः चम्यर्थभक्षणस्यच विशेषणीभूतस्याध्ययनाद्यनन्वयात् तत्क्रियावाचकपदेन विनियोगासंभवात् विनियोगवाक्यमाकाङ्क्षायोग्यतादिवशेन वक्ष्यमाणविधया कल्पयित्वा कर्तृतादिरूपसंबन्धप्रतीतिरित्यर्थः । **स्वतन्त्रविधिकल्पनेति** ॥ अध्वर्युः काण्डपठितानन्वाधानादिपदार्थान् कुर्यादित्येवंविधविधिकल्पनेत्यर्थः । **सोऽग्नीनिति** ॥ **एतेन**—अध्वर्युकर्तृत्वविधानाभावस्य प्रयोगविधिविधेयत्वक्लेशस्य च परिहारः—**सूचितः** ॥ **वस्तुतस्तु**—अङ्गवाक्यानां बहुत्वात् तत्तद्वाक्यैकवाक्यतासंपादकतत्तच्छब्दानां बहूनां कल्पनापत्तेर्गौरवाविशेषात् धर्मिग्राहकप्रमाणेन काण्ड एव स्वतन्त्राध्वर्युकर्तृकत्वविनियोगविध्येककल्पना युक्ता । तत्र यद्यपि अधीते इत्यादिविधौ मन्त्रार्थवादादौच तत्तत्सिद्धवन्निर्देशदर्शनेन तदन्यथानुपपत्त्यैव एतादृशविधिकल्पनान्न समाख्ययैव तद्विधिकल्पनमुपपद्यत इति न समाख्यानिको विनियोग इति शक्यते वक्तुम्; तथापि तत्र विशिष्य यौगिकपदान्यथानुपपत्तेरेव कारणत्वात्तयैव व्यवहारः । यत्रतु याज्ञिकप्रसिद्धमात्रं तत्र विधेरपि तदन्यथानुपपत्तिमात्रकल्प्यत्वाद्युक्त एव तया व्यवहार इति द्रष्टव्यमिति ॥

अत्र प्राचीनैः क्रमे देशसामान्यलक्षणसंबन्धः प्रत्यक्ष इति प्रधानाकाङ्क्षामात्रोत्थापनात् प्रकरणादिकल्पनेन प्रामाण्यम्, समाख्यायां तु विशिष्टपदार्थमात्रवाचिसमाख्याबलात् नूनमनयोः कश्चिदस्ति संबन्ध इति संबन्धकल्पना ततः फलवद्भावनाकथंभावतिरोहिताप्यन्वाधानादेराकाङ्क्षा कल्प्येत्येवं क्रमप्रकरणकल्पनेन प्रामाण्यमुक्तम्, तदयुक्तम्; आध्वर्यवमित्यत्र प्रकृतिप्रत्ययाभ्यां स्वशक्यार्थस्य संबन्धसामान्यस्य चोपस्थितावाकाङ्क्षावशेन कर्तृतादिरूपसंबन्धविशेषपरत्वोपपत्तेः सं-

स्थतेत्येवंविधस्थानकल्पनापूर्वकमध्वर्योरितिकर्तव्यतात्वबोधकाकाङ्क्षारूपप्रकरणकल्पनया तद्विध्योर्महावाक्यैकदेशत्वाख्यपदसन्निधिरूपं वाक्यं कल्प्यते । तेन चाध्वर्युमात्रनिष्ठयोग्यतारूपलिङ्गकल्पनया एकवाक्यतासंपादकपदरूपश्रुतिकल्पनाद्युक्तमस्याः षष्ठप्रमाणत्वम् ॥ ३ ॥ ४० ॥ इति षष्ठं समाख्याविनियोजकताधिकरणम् ॥

( ७ अधिकरणम् । )

**श्रुतिलिङ्ग** ॥ तदेवं षट्सु प्रमाणेषु निरूपितेषु अधुना विरोधे बलाबलं निरूप्यते । विरोधश्चैकस्य शेषस्य शेषिद्वये प्रमाणद्वयसत्त्वे यथैन्द्रीमन्त्रस्य श्रुत्या गार्हपत्याङ्गत्वे लिङ्गाच्चेन्द्राङ्गत्वे । अथवा एकस्मिन् शेषिणि शेषद्वयविनियोजकप्रमाणद्वये । यथा गार्हपत्ये श्रुत्यैन्द्रीमन्त्रो लिङ्गादाग्नेयः । अयंच शेषद्वयविनियोगो द्वारैक्ये सत्येव बलाबलप्रयोजको न तु तद्भेदेऽपि; वाक्यप्रकरणाभ्यां वैमृधप्रयाजादीनामेकशेष्यर्थत्वेऽपि तदभावात् ।

यत्र तु एकस्य शेषस्य एकस्मिन्नेव शेषिणि प्रमाणद्वयं, तत्र वैषम्ये प्रबलस्यैव प्रयोजनार्थं विनियोजकत्वं, साम्ये त्वेकस्य विनियोजकत्वं इतरस्य पुनःश्रुतित्वेन प्रयोजनान्तरकल्पनम् । नियामकाभावे द्वयोरभ्युदयशिरस्कत्वकल्पनं कर्मान्तरबोधकत्वं वा ।

एवं यत्रारुणया क्रीणातीत्यादौ आरुण्यस्यापूर्वसाधनीभूतक्रयार्थत्वे प्रमाणत्रयं, तत्रापि श्रुतेरेव विनियोजकत्वं न

---

बन्धकल्पनाप्रसङ्गात्स्थानकल्पकत्वायोगात् । अतः संबन्धस्य क्लृप्तामेवोपस्थितिमङ्गीकृत्य यत्पदमात्रकल्पनमेकवाक्यतापादकमुक्तं तदनुकूलां स्थानकल्पनां दर्शयति—**तच्चेति** ॥ **इतिकर्तव्यतात्वेति** ॥ अध्वर्योः पूर्ववदेव तन्नियमादृष्टद्वारा इतिकर्तव्यतात्वं प्रकल्प्यान्वाधानस्यैतादृशेतिकर्तव्यताकाङ्क्षारूपप्रकरणकल्पनेत्यर्थः ॥ स्पष्टार्थमन्यत् ॥

प्रयोजनं पूर्वपक्षे तत्तद्वेदविहितकर्मसु ज्योतिष्टोमाद्यङ्गभूतेषु ऋत्विजामनियमः, सिद्धान्तेतु नियम इति स्पष्टत्वात् नोक्तम् ॥

॥ इति षष्ठं समाख्याविनियोजकताधिकरणम् ॥

---

अध्यायादावथातः शेषलक्षणमित्यादिसूत्रे पिण्डीकृत्य कः शेषः केन हेतुना शेषः कथं विनियुज्यते? श्रुत्यादीनिच विनियोगे कारणानि, तेषां च विरोधे बलाबलमिति पञ्चानां प्रतिज्ञाया भाष्यकारेण दर्शितत्वात् तत्र विनियोगकारणश्रुत्यादिनिरूपणप्रतिज्ञान्तं विचार्य अधुनाऽवसरलाभात् तदनन्तरप्रतिज्ञातं बलाबलं दुर्बलप्रमाणकृतविनियोगापवादोपयोगितया चिन्त्यते इत्यवसरसङ्गत्या साक्षादध्यायसङ्गतिमिह वाक्यपादे उक्तानां वाक्यादिसमाख्यान्तप्रमाणानामेव बलाबलविचारस्य कर्तुमुचितत्वेऽपीहैव श्रुतिलिङ्गप्रमाणयोरपि तद्विचारस्य बुद्धिस्थत्वेन बुद्धिस्थानात्मिकां पादसङ्गतिं तथा सर्वप्रमाणनिरूपणोज्जीव्यत्वात् बलाबलविचारं प्रति समाख्यान्तप्रमाणनिरूपणस्य हेतुत्वात् हेतुहेतुमद्भावरूपामनन्तरसङ्गतिं च सूचयन्नधिकरणविचारणीयं प्रतिजानीते—**तदेवमिति** ॥

**विरोध इति** ॥ सत्यपि विरोधे अश्वमहिष्यादिवदेकविषयत्वाभावे बलाबलस्याभावात् सत्यप्यरुणावाक्ये आरुण्यस्यापूर्वसाधनीभूतक्रयार्थत्वरूपैकार्थविषयत्वे श्रुतिवाक्यप्रकरणानां विरोधाभावे तस्याभावाद्विरोधे सत्येकविषयत्वे बलाबलं निरूप्यते इत्यर्थेन सूत्रगतं समवायपदं व्याख्यातम् । एतदेव विरोधस्यैकविषयत्वप्रदर्शनव्याजेन कथयति—**विरोधश्चेति** ॥ **तदभावादिति** ॥ येन प्रयोजनेन दर्शपूर्णमासाङ्गत्वं प्रयाजादीनां न तेनैव वैमृधस्य, तत्तज्जन्योपकारभेदे सति द्वारैक्याभावादिति न तत्र समवाय इत्यर्थः । एवं चोदाहृतसमवायद्वयस्थले प्रमाणयोः प्रबलदुर्बलभावे एकस्य बाध एव, साम्येतु आद्यस्थले प्रमाणद्वयेनोभयाङ्गत्वोपपत्तेः समुच्चये नोभयाङ्गत्वम् । द्वितीयेतु विकल्पो यथा व्रीहियवेष्वितिभावः ।

**यत्रत्विति** ॥ यथा एकस्वर्गरूपं फलं प्रति दर्शपूर्णमासादेः शेषताबोधकं "सर्वेभ्यो दर्शपूर्णमासौ" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति प्रमाणद्वयं, तत्रैकस्य सामान्यवाक्यत्वादपरस्य विशेषवाक्यत्वात् वैषम्ये सति विशेषवाक्यस्यैव स्वर्गं प्रति विनियोजकत्वकल्पनात् सामान्यस्यैव तदितरविषयत्वकल्पनम् । तत्प्रयोजनंच भिन्नकार्यतावच्छेदकावच्छिन्नत्वबोधनेनैकस्मात् प्रयोगादेककार्यतावच्छेदकावच्छिन्नस्यैकस्य उत्पत्तिनियमेनावच्छिन्नपुत्रपश्वाद्यन्यतरफलोत्पत्तिनियमसिद्धावपि पुत्रस्वर्गरूपफलोत्पत्त्यविघातः; स्वर्गस्य भिन्नकार्यतावच्छेदकावच्छिन्नत्वेनोत्पत्तौ बाधकाभावात् । अतस्तादृशप्रयोजनान्तरसिध्यर्थं प्रबलस्यैव विनियोजकत्वमित्यर्थः । **प्रयोजनान्तरकल्पनमिति** ॥ यथा शाखाभेदेनाम्नातयोः स्वर्गवाक्ययोः तत्तदध्येतृभेदेन ज्ञापनरूपप्रयोजनान्तरकल्पनम् । अतश्चैतादृशस्थले समवायाभावान्न विचारविषयत्वमित्यर्थः ॥

अन्यत्रापि समवायाभावान्न विचारविषयत्वमित्यतिदिशति—**एवमिति** ॥ अत्रहि तृतीयाश्रुत्या क्रियासामान्यं प्रत्यङ्गत्वमारुण्यस्य क्रीणातिसमभिव्याहारलक्षणवाक्येन क्रयरूपक्रियाविशेषं प्रति प्रकरणेनापूर्वसाधनविशेषं प्रतीति त्रयाणां समवायेऽप्यङ्गताबोधकत्वं तृतीयाश्रुतेरेव अन्यत्तु विशेषणविधिकल्पनायां उद्देश्यसमर्पणार्थमित्येकविषयत्वाभावान्न समवाय इत्यर्थः ॥

यद्यपि सर्वेषां प्रमाणानां समवाये पारदौर्बल्यमुक्तम्, न द्वयोः; तथापि श्रुत्यादिसमुदायस्यैकत्र विनियोजकत्वाभावात् तद्गतबलाबलस्य प्रतिप्रधानावृत्तिन्यायेन प्रत्येकमेव विनियोजकत्वपर्यवसानात् सूत्रस्वारस्यात् एकैकस्य दौर्बल्ये वक्तव्ये अपरत्र प्राबल्योपन्यासः प्रतियोगिविधया कथ्यत इति द्वयोः द्वयोः बलाबलविचारो नायुक्तः । तत्र यथा प्रसङ्गादिह पादे

त्वन्यस्य; वाक्यस्योद्देश्यसमर्पकमात्रत्वात्। अतएव नैन्द्र्येत्यत्र लिङ्गवाक्यविरोधः, वाक्यस्योद्देश्यमात्रसमर्पकत्वेन श्रुतिसहकारित्वेऽपि कृतिकारकत्वबोधरूपविनियोजकत्वाभावात्। प्रकरणं त्वपूर्वसाधनत्वलक्षणातात्पर्यग्राहकमात्रं न तु तदपि विनियोजकम् गौरवात्। अत एव विनियोजकप्रमाणबलाबलवत्तात्पर्यग्राहकप्रमाणबलाबलमपि निरूप्यमेव।

तदिह श्रुत्योर्विरोधे ऐन्द्रीमन्त्रस्य तृतीयया गार्हपत्याङ्गत्वमेव नतु तद्धितश्रुत्या इन्द्राद्यङ्गत्वम्; तस्य सूक्ततद्धितत्वेन प्राधान्येन कृतिकारकत्ववाचित्वाभावात्। अतश्च तस्य मुख्यश्रुतित्वाभावाद् दुर्बलत्वम्। एवं चैतस्य मन्त्रस्य लिङ्गादिन्द्राङ्गत्वमिति श्रुतिलिङ्गविरोधेऽप्येतदेवोदाहरणम्।

अत्र हि सर्वत्रोत्तरोत्तरस्य पूर्वपूर्वकल्पकत्वेन प्रामाण्यस्य तत्तन्निरूपणावसरे स्थापितत्वादुत्तरोत्तरस्य श्रुतिकल्पनं यावदवगतस्यैव पूर्वपूर्वेण शेषशेषिणोर्निराकाङ्क्षत्वापादनेन बाधः। नचाङ्गानां प्रकृत्यर्थत्वेन निराकाङ्क्षाणामपि विकृत्याकाङ्क्षयैवातिदेशकल्पनवदिन्द्राद्याकाङ्क्षयैव लिङ्गस्य श्रुतिकल्पकत्वोपपत्तिः; तस्य ध्यानाद्युपायान्तरेणापि स्मृतिसि-

---

श्रुतिलिङ्गयोः बलाबलविचारः तथैव तुल्यन्यायत्वात् श्रुत्योः लिङ्गयोश्चापि तद्विचारः प्रासङ्गिकः करिष्यते। तत्र श्रुतिलिङ्गविरोधोदाहरणे "ऐन्द्या गार्हपत्यमुपतिष्ठत" इत्यस्मिन् न स्वरूपेण तृतीयादिश्रुतेः मन्त्रलिङ्गस्य च विरोधः; इन्द्रं प्रत्यङ्गत्वस्य तृतीयया वारयितुमशक्यत्वात्। गार्हपत्यमिति नियमे सति तयोः विरोधप्रसक्तिः। तस्य चारुण्यैकहायन्योरिव गार्हपत्यपदसमभिव्याहाररूपवाक्यकृतत्वात् वाक्यलिङ्गयोरिह विरोधो न श्रुतिलिङ्गविरोधप्रसक्तिरित्याशङ्कां वक्ष्यमाणश्रुतिलिङ्गविरोधोदाहरणतादर्थ्यादिहैव प्रसङ्गान्निराकरोति—**अत एवेति**॥

ऐन्द्रीनिरूपितोद्देश्यता या गार्हपत्यस्य सा परं वाक्यगम्या स्यात्; अङ्गत्वस्य तदुद्देशप्रवृत्तकृतिकारकत्वात् भावनान्वयितया प्राधान्येन तद्वाचकतृतीयायाः प्राधान्यात् "प्रधानेन व्यपदेशाः" इति न्यायात् लिङ्गे बलीयसि गार्हपत्यैन्द्रीपदयोः पृथक् तृतीयाकृताङ्गत्वस्यावश्यकतया मन्त्रलिङ्गकृताङ्गत्वबोधेन सह विरोधात् श्रुतिलिङ्गविरोधोदाहरणव्यपदेश इत्यर्थः॥

**वस्तुतस्तु**—आग्नेयीं प्रति गार्हपत्यशेषिताया इवेन्द्रं प्रत्येव लिङ्गादेव प्राप्तेर्वाक्यानर्थक्यापत्तेः गार्हपत्यमिति श्रुत्युक्तं शेषित्वमाग्नेयीव्यतिरिक्तविषयम्, ऐन्द्रीति श्रुत्युक्तंच करणत्वमिन्द्रव्यतिरिक्तविषयमित्यवश्यवक्तव्यत्वात् श्रुत्युक्तसामान्यरूपस्यापि अस्त्येव लिङ्गेन विरोधः, नतु वाक्यकृत एवेति न दोषः। विशिष्य चेमामाशङ्कां स्वयमेव प्रकारान्तरेण निराकरिष्यते॥

**अत एवेति**॥ अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वं प्रकरणादीनाम्। अतएव तेषामप्यन्त्येन विनियोगे बलाबलं प्राप्नोति तदपीह निरूप्यमेव। यथा लिङ्गेन पूषानुमन्त्रणमन्त्रस्य विनियोगे दर्शपूर्णमासप्रकरणपठितत्वेन तल्लक्षणातात्पर्यग्राहकत्वे प्रकरणस्य प्राप्तेः लिङ्गविरोधात् समाख्याया एव तत्तात्पर्यग्राहकत्वं वक्ष्यते इत्यर्थः॥

**नतु तद्धितश्रुत्येति**॥ इन्द्रो देवता यस्याः सैन्द्रीत्यर्थे ऐन्द्रीति तद्धितानुशासनात् तद्धितेनेन्द्रस्य प्रकाश्यस्वरूपदेवतात्वावगमेन प्रकाश्यतया इन्द्रस्य प्राधान्यप्रतीतेरङ्गत्वघटकीभूतोद्देश्यताऽवाचित्वात् मन्त्रस्य इन्द्रं प्रत्यङ्गताबोधकत्वं नेत्यर्थः॥

**नच**—निवेशनः सङ्गमनो वसूनामित्यैन्द्या गार्हपत्योपस्थानं चयने श्रुतम्, कदाचन स्तरीरित्यैन्द्या गार्हपत्योपस्थानं चाग्निहोत्रे श्रुतम्, तत्रोभयत्रापीन्द्रस्यानुद्देश्यतया ऐन्द्रोपस्थानस्यानुष्ठेयतया कथं तद्धितश्रुत्या इन्द्राङ्गत्वप्रसक्तिः? अतएव श्रुत्योः विरोध इव श्रुतिलिङ्गविरोधेऽपि नेदमुदाहरणम्, अपितु अश्वाभिधानीमादत्ते इत्येव युक्तमिति—**वाच्यम्;** सध्यासमिति लिङ्गात् भक्षमन्त्रे ग्रहणविधिकल्पनया तदङ्गत्वस्येवेहापि इन्द्रश्रुत्या लिङ्गेनच इन्द्रोपस्थानविधिकल्पनया तदङ्गत्वोपपत्तेः। तथाच गार्हपत्यसमीपे स्थित्वा ऐन्द्योपस्थानं कर्तव्यमित्येवं प्रसक्तेर्न दोष इति भावः। प्राधान्येन प्रकाश्यत्वस्य तद्धितार्थत्वेऽपि प्राधान्यस्य विशेष्यतया तद्धितादनुपस्थितेर्न तस्य मुख्यश्रौतत्वलक्षणाक्रान्तत्वम्। प्राधान्यमपिच नाङ्गत्वघटकीभूतेप्सितत्वाख्यं तदर्थोऽपितु विशेषणान्तरापेक्षया शाब्दबोधे विशेष्यत्वमात्रम्। अतश्चोक्तप्राधान्येन ईप्सितत्वाख्यं तल्लक्षयित्वा तद्धितश्रुत्या विनियोगो न बोध्येतेति कारकश्रुत्यपेक्षया दौर्बल्यमित्याह—**तस्येति**॥ एवं कारकश्रुत्योः विजातीयश्रुत्योः समानजातीयश्रुत्योश्च विरोधे बलाबलोदाहरणानि कौस्तुभे द्रष्टव्यानि। **एवमिति**॥

नच ऐन्द्र्यधिकरणेन पौनरुक्त्यम्; तत्र गौणसामर्थ्यश्रुतिसहायत्वमात्रनिरूपणेनेह लिङ्गादिन्द्राङ्गत्वशङ्कानिरासेन चापौनरुक्त्यात्॥

न तावत् लिङ्गं स्वत एव प्रमाणम्; वेदोऽखिलो धर्ममूलमिति स्मृत्या वेदस्यैव कृत्स्नस्यानुमानिकस्य वा धर्मप्रमाणत्वनियमात्, अर्थाध्याहारनिराकरणाच्च॥ किंच विहितत्वघटितमङ्गत्वं न विधिकल्पनं विना संभवति। सच लिङादिशब्दैकगम्य इत्यवश्यं लिङादिशब्दकल्पने आवश्यके तत्र शब्दोपस्थितस्यैव कृतिकारकत्वादेरन्वयार्थं तद्वाचकपदरूपश्रुतिकल्पनेनैव लिङ्गस्य विनियोजकत्वमित्यभिप्रेत्य दौर्बल्यमुपपादयति—**अत्रहीति**॥

ङ्गैर्नियमेन विकृतिवदनाकाङ्क्षत्वात्। अतः श्रुत्या गार्हपत्याङ्गत्वमेव। नच—श्रुतेः करणत्वमात्राभिधायित्वेन गार्हपत्यनिरूपितत्वस्य वाक्याधीनत्वान्नायं श्रुतिलिङ्गविरोध इति—वाच्यम्; तथात्वेऽपि ब्राह्मणवाक्यत्वेन मन्त्रलिङ्गापेक्षया "यद्यप्यन्यदेवत्यः पशुरि"तिवत्प्रबलत्वोपपत्तेः। वस्तुतस्तु यथा न केवलया श्रुत्या विरोधो नैवं वाक्येनापि; गार्हपत्यसमीपे इत्येवमुपपत्तेः। अतश्चोभयविरोधत्वेऽपि 'प्रधानेन व्यपदेशा भवन्ती'ति न्यायेन श्रुतिलिङ्गविरोधोदाहरणत्वम्।

लिङ्गयोर्विरोधे मुख्यसामर्थ्येन गौणस्य बाधः। लिङ्गवाक्ययोस्तु 'स्योनं ते' इति सदनकरणप्रकाशकस्य पूर्वार्धस्य 'तस्मिन्सीदे'त्युत्तरार्धेन सादनप्रकाशकेन तस्मिन्कस्मिन्निति विभागे साकाङ्क्षेणैकवाक्यत्वात्सकलस्य मन्त्रस्य सदनसादनयोरन्यतरत्रोभयत्र वा प्रतिष्ठापन एव वाऽस्य तस्मिन्निति पदसन्निधिरूपेण वाक्येन विनियोगे प्रारीप्सिते ततः पूर्वप्रवृत्तेन लिङ्गेन तत्तदाख्यातस्य मुख्यविशेष्यत्वेन स्वार्थबोधकस्य परोपसर्जनकत्वकल्पने प्रमाणाभावात्तच्छब्दस्य च सा वैश्वदेवीतिवद्वाक्यान्तरोपस्थितार्थपरामर्शकत्वेनापि चरितार्थत्वात्प्रत्येकमेव विनियोग इति।

---

**विकृतिवदिति** ॥ विकृतिस्थले देवतादिरूपाङ्गापेक्षाया आक्षेपेणानिवृत्तेः सादृश्यविशेषोपस्थापितप्राकृताङ्गनियमो नायुक्त इति वैषम्यमित्यर्थः। अत्रच बाध्यलिङ्गविषय इन्द्रपदमेव, अवशिष्टपदानां तदेकवाक्यतयेन्द्राङ्गत्वान्न तद्विषयत्वम्, किंतु इन्द्रपदैकवाक्यतापन्नरूपवाक्येन श्रुत्या विरोधः। अथवा—श्रुत्या इन्द्रपदस्य गार्हपत्याङ्गत्वे प्रमापिते अवशिष्टपदानां तदेकवाक्यतया गार्हपत्याङ्गत्वस्यैवापत्तेर्न तदंशेऽपि श्रुतेर्व्यापार इति सा वस्तुतस्तात्पर्यगत्या इन्द्रपदमात्रविषयिण्येवेति न तदंशे श्रुतिवाक्यविरोध इति ध्येयम्॥

वाक्यलिङ्गविरोधमङ्गीकृत्यापि लिङ्गबाधं समर्थयति—**तथात्वेऽपीति** ॥ **यद्यप्यन्यदेवत्य इति** ॥ नहि मन्त्रलिङ्गं ब्राह्मणवाक्यापेक्षया प्रबलम्। मन्त्रस्य ब्राह्मणविहितार्थप्रकाशकत्वेन तत्परतन्त्रत्वात्। अतो यथैव मनोतामन्त्रस्य द्विदेवताप्रकाशनासमर्थस्यापि "यद्यप्यन्यदेवत्य" इति वाक्यीयविनियोगबलात् लक्षणादिना सामर्थ्यमुपकल्प्य अग्नीषोमीयाङ्गत्वमेवमिहापि गार्हपत्याङ्गत्वं वाक्येनोपपद्यते॥

नच "यद्यप्यन्यदेवत्य" इत्यस्य प्रकृतावबवायव्यनिगदत्वेनाप्रसक्तवायव्यादिपशुग्रहनिवर्तकत्वं संभवति। अत उत्कर्षनिवर्तकतया प्रकृतावङ्गत्वबोधकत्वमेवेत्यर्थः। अनयैव रीत्या "इत्यश्वाभिधानीमादत्त" इत्यत्र वाक्यीयविनियोगं ये इच्छन्ति तेषां मतेऽपि लिङ्गबाध उपपादनीयः॥

**लिङ्गयोरिति** ॥ बर्हिर्देवसदनमित्यादिमन्त्राणां गौणसामर्थ्येन गौणार्थाङ्गत्वे प्रसक्तेऽमुख्यसामर्थ्येन मुख्यार्थाङ्गत्वात् तद्बाध इत्यर्थः। **स्योनं त इति** ॥ "स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेधः सुमनस्यमान" इति मन्त्रः पात्र्यामाज्याभिघारितायां पुरोडाशस्य स्थापने प्रयुज्यते। **अस्यार्थः—हे व्रीहीणां मेधः!** व्रीहिविकारभूतयागार्हद्रव्य पुरोडाश **ते सदनं** स्थानं **स्योनं** श्लक्ष्णं **घृतस्य धारया करोमि** यतः **सुशेवं** सुखशयनयोग्यं **कल्पयामि तस्मिन्** तस्मिन् सदने **अमृतं** नास्ति मृतं दाहादिकृतमरणं यस्मिन् तथाभूते **सुमनस्यमानः** प्रीयमाणः सन् त्वं **प्रतितिष्ठ** स्थिरो भवेति। अत्र पूर्वार्धोत्तरार्धयोरेकत्र सन्निधानात्मकवाक्येन सदनकरणे सादनेवाऽङ्गत्वेन प्रसक्तयोः लिङ्गेन बाधे वक्तव्ये कथमत्र भिन्नप्रतीतिविषयानेकमुख्यविशेष्याराहित्यरूपैकार्थ्यस्याऽऽख्यातभेदेनाऽभावात् एकवाक्यत्वस्याप्रसक्तेः कथमन्यतरमात्रे द्वयोरप्रसक्तिः? येन विरोधो निरूप्येतेत्यत ऐकवाक्यतां साधयति—**तस्मिन्कस्मिन्निति** ॥ प्रतीतित एकार्थ्याभावेऽपि तच्छब्दस्य पूर्वसापेक्षत्वेन "ये यज्ञपतिं वर्धानी"त्यादौ यच्छब्दस्येव विभज्यमानसाकाङ्क्षत्वात् तन्मात्रेण तद्वदेवार्थैकत्वमपि प्रकल्प्यैकवाक्यत्वोपपत्तिः। संभवति ह्याख्यातोपात्तभावनाया अपि साकाङ्क्षत्वे पश्य मृगो धावतीत्यत्रेव भावनान्तरे प्रकारतयाऽन्वयेन सा। अतएव आकाङ्क्षावशेनाऽऽख्यातार्थस्य मुख्यविशेष्यत्वबाधेऽपि न क्षतिरित्यर्थः। यद्यपि असञ्जातविरोधित्वात् आकाङ्क्षोत्थापकतच्छब्दश्रवणाभावाच्च न पूर्वाख्यातस्य प्रकारतया स्वार्थबोधकत्वकल्पना, अपितु ईदृशं सदनकरणं यस्य त्वत्प्रतिष्ठापनं साध्यमित्येवमुत्तराख्यात एव प्रकारत्वकल्पनादुत्तराख्यातस्यैवेति पूर्वार्धस्य सदनकरणे लिङ्गेन विनियोगेऽप्युत्तरार्धस्य देवस्त्वेति पदानां निर्वापादिपदैकवाक्यतया निर्वाप इव पूर्वार्धैकवाक्यतया सदनकरण एव प्राप्तिरतः सदनसादनयोरन्यतरत्र उभयत्र प्रतिष्ठापन एवेत्युक्तिः संभवमात्रेण कथंचिन्नेयेति भावः॥

तच्छब्दबलादर्थैकत्वं प्रकल्प्य एकवाक्यत्वमित्युक्तं दूषयति—**तच्छब्दस्येति** ॥ यच्छब्दस्यैव स्ववाक्योपस्थिततच्छब्दोपक्षिप्तनियमस्य "येन कर्मणेर्त्सेत्तज्जया"नित्यादौ व्युत्पत्तिसिद्धत्वदर्शनेऽपि तच्छब्दस्य वाक्यान्तरोपस्थितपूर्वप्रसिद्धिमात्रेण वैश्वदेवीवाक्ये दर्शनादिहापि स्ववाक्योपस्थितमात्रपरामर्शित्वनियमाभावे सति विभज्यमानसाकाङ्क्षत्वानुपपत्तेः अर्थैकत्वकल्पनायोगात् विभज्यैव लिङ्गेन विनियोगः पूर्वार्धे सदनकरणे उत्तरार्धे सादन इति॥ एवं सति "यदि देवस्त्वा"-दिपदवदस्य पृथक् प्रयोगे आनर्थक्यं भवेत्, तदा नैवं विनियोगः स्यात्, अस्तितु लिङ्गादपूर्वसाधनीभूतसादनार्थत्वेन सामर्थ्यम्। अतो युक्तो लिङ्गेन वाक्यभेद इत्यर्थः। लिङ्गस्य प्रकरणक्रमसञ्ज्ञाभिर्विरोधे बलाबलोदाहरणं कौस्तुभे द्रष्टव्यम्॥

वाक्ययोर्विरोधे उपांशुत्वस्य "त्सरा वा एषा यज्ञस्ये"ति व्यवेतयज्ञपदैकवाक्यत्वाद्यज्ञभागधर्मत्वं, तस्माद्यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीत्यनेन सन्निहितयत्किंचित्पदैकवाक्यतयाऽवगतपदार्थधर्मत्वेन बाध्यते।

वाक्यप्रकरणयोर्विरोधे च वैमृधस्य वाक्यावगतेन पौर्णमास्यङ्गत्वेन प्रकरणावगतदर्शाङ्गत्वबाधः।

यत्तु अग्नीषोमादिपदैकवाक्यतापन्नानां इदं हविरित्यादिपदानाममावास्याङ्गदेवताप्रकाशनार्थत्वं प्राकरणिकं वाक्येन बाध्यत इत्युदाहरणमुक्तं मूले, तच्छ्रुतिलिङ्गविनियुक्तस्य सिद्धरूपत्वेन प्रकरणाविषयस्य च सूक्तवाकस्य मुख्यप्रकरणविनियोज्यत्वप्रसक्त्यभावेऽपि अधिकाराख्यगौणप्रकरणस्यापूर्वसाधनत्वलक्षणातात्पर्यग्राहकस्य प्रसक्तत्वात्तद्बाधाभिप्रायेण द्रष्टव्यम्। प्रकरणयोर्विरोधे महाप्रकरणमवान्तरप्रकरणेन।

प्रकरणक्रमयोर्विरोधे अक्षैर्दीव्यतीत्यादिविहितविदेवनादीनां सन्निधानादभिषेचनीयाख्यसोमयागाङ्गत्वप्रसक्तौ प्रकरणाद्राजसूयाङ्गत्वम्। न चाभिषेचनीयस्यापि फलवत्त्वेन प्रकरणाशङ्का, तस्य विकृतित्वेन क्लृप्तोपकारप्राकृताङ्गनिराकाङ्क्षस्य तदभावात्।

नच—विकृतावपि यत्प्राकृताङ्गानुवादेन वैकृतमङ्गं वाच-

---

**वाक्ययोर्विरोध इति** ॥ **व्यवेतेति** ॥ "त्सरा वा एषा यज्ञस्य तस्मात् यत्किंचित्प्राचीनमि"ति वाक्ये यज्ञशब्दस्य प्राचीनपदेनान्वये तच्छब्दयत्किंचित्पदाभ्यां व्यवधानाद्यज्ञपदस्य व्यवेतत्वमित्यर्थः ॥

**वाक्यप्रकरणयोर्विरोध इति** ॥ यद्यपि पौर्णमासीपदं संस्थायां प्रतियोगित्वेनान्वितत्वात् न उद्देश्यसमर्पकम्; तथाप्युपस्थितत्वात् तद्वाचकपदान्तरकल्पनया तदुपपत्तेर्वाक्यावगतेनेत्युक्तम्। एवंच सदपि पौर्णमास्यंशे प्रकरणं प्राप्तानुवाद एवेत्यर्थः। **यत्त्विति** ॥ "सूक्तवाकेन प्रस्तरं प्रहरती"त्यत्र श्रुत्या विनियुक्तस्य सूक्तवाकनिगदस्य पर्वद्वये यथादेवतं विभज्य विनियोगः पूर्वपादे निर्णीतः। तत्र "अग्नीषोमाविद९ हविरजुषेतां अवीवृधेतां महो ज्यायोऽक्रातां इन्द्राग्नी इद९ हविरजुषेतां" इत्यादि पठ्यते। तत्राग्नीषोमेन्द्राग्नीपदयोः विभज्य विनियोगेऽप्यवशिष्टानामिदं हविरित्यादीनामुभयत्र पठितानां पदानां प्रकरणादुभयार्थत्वे सति "अग्नीषोमाविद९ हविरजुषेतां अवीवृधेतां महो ज्यायोऽक्रातां इन्द्राग्नी इद९ हविरजुषेतां अवीवृधेतां महो ज्यायोऽक्रातां"इत्येवं केवलेन्द्राग्निपदसमभिव्याहाररूपवाक्येन तत्तद्देवताप्रकाशकपदैकवाक्यतया बाध्यते। अतः तद्वदेव विभज्य विनियोग इत्यर्थः। सन्निपातिनां नैव प्रकरणं विनियोजकमिति प्रकरणाधिकरणे स्वोपपादितरीत्या अयुक्तं मत्वाऽन्यथा समर्थयति—**तच्छ्रुतीति** ॥ तत्तद्देवतावाचिपदसमभिव्याहाररूपवाक्यस्यैव तत्तदपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वं नत्वधिकारस्यैवेत्येवं तद्बाधाभिप्रायेणेत्यर्थः ॥

यत्तु अत्र प्रकाशकारैः श्रौतव्रीह्यर्थत्वे आनर्थक्यात् किमाकाङ्क्षाया अनिवृत्तेरवघातादेः सन्निपातिनोऽपि प्रकरणविनियोज्यतेत्युक्तम्, **तत्—न**; अधिकाराख्यप्रकरणेनापूर्वसाधनत्वलक्षणया आनर्थक्यपरिहारेण ताद्रूप्येण व्रीह्यर्थत्वे सति किमाकाङ्क्षानिवृत्तेः श्रुतेः प्रकरणात् बलीयस्त्वेनच प्रकरणविनियोज्यत्वानुपपत्तेः। **एतेन—**प्रथमत इतिकर्तव्यतात्वेनाऽन्वयाभावे प्रकृतकर्मानन्वयिनोऽवघातस्यानर्थक्यपरिजिहीर्षया एवाप्रवृत्तेः प्रकरणग्राह्यत्वं सोमनाथोक्तं—**अपास्तम्**; प्रकरणेनावघातादीनामितिकर्तव्यतात्वेनान्वये प्रयाजादीनामिव तेन तेषामप्यपूर्वसंबन्धावगतावपूर्वार्थानां सतां व्रीह्यर्थत्वबोधने आनर्थक्याप्रसक्तेः व्रीह्यादिपदेषु तत्परिहारायापूर्वसाधनत्वं तत्तद्विधिभिरेव सिध्यतीति व्यर्थं प्रकरणविनियोज्यताकल्पनं इति प्रकरणाधिकरण एव वक्तव्यमिह प्रसङ्गादाविष्कृतमिति ॥

**प्रकरणयोर्विरोध इति** ॥ यथाऽभिक्रमणस्य महाप्रकरणात् दर्शपूर्णमासाङ्गत्वप्रसक्तावबान्तरप्रकरणेन तत् बाधित्वा प्रयाजाङ्गत्वमित्यर्थः ॥

**प्रकरणक्रमयोरिति** ॥ **अक्षैर्दीव्यतीत्यादीति** ॥ अनेकेष्टिपशुसोमयागात्मकराजसूयप्रकरणे अभिषेचनीयाख्यसोमयागसन्निधौ "अक्षैर्दीव्यति राजन्यं जिनाति शौनःशपमाख्यापयती"त्यादिभिः विदेवनादयो धर्मा आख्याताः। **जितानि** जनयतीत्यर्थः। बह्वृचब्राह्मणे समाम्नातं शुनःशेपविषयमुपाख्यानं शौनःशेपोपाख्यानमित्यर्थः। तेषां चायागत्वात् राजसूयपदवाच्यत्वाभावात् फलवद्राजसूयसन्निधानात् चातुर्थिकन्यायेनाङ्गत्वे निर्विवादे सति सन्निधानादभिषेचनीयाङ्गत्वं प्राप्तं राजसूयमहाप्रकरणेन बाधित्वा राजसूयाङ्गत्वमित्यर्थः ॥

**क्लृप्तोपकारेति** ॥ यद्यपि प्राकृतानामङ्गानां प्रकृत्युपकारकतया आकाङ्क्षाभावे विकृतिसंबन्धो विकृत्यन्यतराकाङ्क्षारूपस्थानात्, वैकृतानां तूभयाकाङ्क्षया संबन्धे सति प्रकरणेन प्रबलेन विकृत्या अपूर्वाङ्गग्रहणमेव प्राप्नोति; तथापि प्रमाणबलाबलापेक्षया प्रमेयपदार्थगतबलाबलस्य ज्यायस्त्वात् तदालोचने क्लृप्तोपकारकत्वेन प्राकृताङ्गग्रहणमेव प्रथमतो युक्तम्। नहि विकृतिः पदार्थान् आकाङ्क्षति, किंतु तज्जन्यानुपकारान् तत्पृष्ठभावेन च पदार्थान्। अतएव यावत्पदार्थान्वयं कथंभावाकाङ्क्षानुवृत्तेः तयैव पदार्थानां प्रथमं ग्रहणात् वैकृतोपकाराणामुत्थाप्याकाङ्क्षयैव ग्रहणमिति नोभयाकाङ्क्षालक्षणप्रकरणं

निकं विधीयते यथा पृषदाज्यादि, तस्यापि विकृतिगताङ्गाकाङ्क्षायामनिवृत्तायामेव विधेयत्वात्तत्सन्दष्टस्य तत्पूर्वभावित्वे सति प्रधानोत्तरभाविनोऽपूर्वाङ्गस्य वा प्रकरणेनैव ग्रहणोपपत्तेः विदेवनादीनां चाभिषेचनीयोत्तरमुक्तविधाभिषेकपूर्वभावित्वेन पाठात्प्रकरणग्रहणोपपत्तिरिति—वाच्यम्; प्राकृताङ्गानुवादेन विहितस्याप्यपूर्वाङ्गस्योपहोमवद्विकृत्याकाङ्क्षायां निवृत्तायामेव विधानात् । यस्य हि प्राकृतकार्यापन्नतया वैकृताङ्गस्य विधानं यथौदुम्बरत्वशरादेस्तस्यैवानिवृत्ताकाङ्क्षायां विधानम्, तत्सन्दष्टस्यैव च तत्पूर्वभाविनो वा प्रधानोत्तराङ्गस्य विकृतिप्रकरणेन ग्रहणम् । अभिषेकस्य तु प्राकृतकार्यापन्नत्वाभावान्न तत्पूर्वपठितानां विदेवनादीनामभिषेचनीयप्रकरणग्राह्यत्वोपपत्तिः ।

वस्तुतस्तु अभिषेकस्यापि स्वतन्त्रोत्पन्नस्य प्रकरणाद्राजसूयाङ्गत्वावगते"र्माहेन्द्रस्तोत्रं प्रत्यभिषिच्यते" इत्यत्र प्रतिशब्दयोगेन कालार्थः संयोग इति वक्ष्यते । अतो विदेवनाद्यभिषेकान्तानां सर्वेषामेव सन्निधानादिनाऽभिषेचनीयाङ्ग-

---

विकृताविति क्लृप्तोपकारेत्यनेन सूचितम् । **यथा पृषदाज्यादीति** ॥ "पृषदाज्येनानूयाजान् यजती"ति चातुर्मास्यगतविधिना अनूयाजोद्देशेन पृषदाज्यगुणो विधीयते । तत्र विकृतेः कथंभावाकाङ्क्षा उपकारपृष्ठभावेन अनूयाजान्वयं यावदनुवर्तत इति यावदनूयाजान्वयो भवति तावदनूयाजानां स्वाङ्गसंबन्धं विनाऽन्वयायोगात् तन्मध्यपातित्वात् पृषदाज्यस्य अनिवृत्ताकाङ्क्षायामेव ग्रहणादुभयाकाङ्क्षया ग्रहणात् प्रकरणेनैव ग्रहणं भवति । तत्संदंशमध्यवर्तिनोऽङ्गस्य, यथा सांग्रहण्यामाम्नातप्रयाजानूयाजधर्मान्तरालविहिताऽऽमनहोमादेः । तथा तादृशप्राकृताङ्गसंबध्यङ्गसंदष्टं यत् न भवति प्राकृताङ्गसंबध्यङ्गसंबन्धात्पूर्वभावितया प्रधानोत्तरमपूर्वमङ्गं विहितम्, तस्यापि प्राकृताङ्गानुवादेन विहितोत्तराङ्गान्वयं यावदाकाङ्क्षाया अनिवृत्तेरनिवृत्ताकाङ्क्षायामेव ग्रहणात् प्रकरणेन ग्रहणमित्यर्थः ॥

**वस्तुतस्तु**—आमनहोमानां नैवानिवृत्ताकाङ्क्षया प्रकरणेन ग्रहणमिति चतुर्थे स्वयमेव वक्ष्यते । एवंच प्रकृते "माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते" इति वाक्येन प्राकृतमाहेन्द्रस्तोत्राङ्गानुवादेनाभिषेकस्य अभिषेचनीयोत्तराङ्गतया विधानार्थस्यानिवृत्ताकाङ्क्षायां ग्रहणे सति तत्पूर्वभावितया अभिषेचनीयोत्तरमाम्नातानां विदेवनादीनामपि पश्वादिषु सामिधेन्यनुवादेन विहितसाप्तदश्यवदनिवृत्ताकाङ्क्षया ग्रहणोपपत्तेः प्रकरणेनैवाभिषेचनीयाङ्गत्वापत्तिः, अत आह—**विदेवनादीनां चेति** ॥

यावता स्वाङ्गेन प्रकृतौ अङ्गानां क्लृप्तोपकारकत्वं तावत्स्वाङ्गसहितस्याङ्गस्य क्लृप्तोपकारकत्वेन विकृत्याकाङ्क्षया ग्रहणम्, तावतैव तदाकाङ्क्षोपरमात् । यत्तु प्राकृताङ्गानुवादेनाऽप्राकृतमङ्गं तद्विनापि प्राकृताङ्गस्य प्रकृतौ क्लृप्तोपकारकत्वदर्शनादिहापि तस्यैव विकृत्याकाङ्क्षया ग्रहणात् आकाङ्क्षाया निवृत्तेःअनिवृत्ताकाङ्क्षायामग्रहणात् उपहोमानामिवान्यतराकाङ्क्षयैव ग्रहणमिति न प्रकरणम् । **एतेन**—तत्सन्दष्टस्य प्राकृताङ्गसंबन्ध्यङ्गसंबन्धात् पूर्वभाविनः प्रधानोत्तरापूर्वाङ्गस्य वापि नैव प्रकरणेन ग्रहणम् इति सूचितम् । तथाच प्रकृते सत्यपि अभिषेकस्यापूर्वत्वे निवृत्ताकाङ्क्षयैव ग्रहणात् नाभिषेचनीयप्रकरणमित्यभिप्रेत्याशङ्कां निरस्यति—**प्राकृताङ्गानुवादेनेति** ॥ कुत्र तर्हि प्रकरणेन विकृतावङ्गत्वमित्यत आह—**यस्य हीति** ॥ औदुम्बरवाक्येन विहितस्यौदुम्बरत्वस्य तेन किं भावयेदित्याकाङ्क्षायां दृष्टादृष्टरूपयूपमात्रार्थत्वेन प्रकृतौ तं विनापि जातत्वेनानर्थक्यपरिहारादनिवृत्तेरस्त्येव भाव्याकाङ्क्षा । विकृतेरप्यस्ति कथंभावाकाङ्क्षा । सा च तदा शाम्यति, यदोपकारास्तत्पृष्ठभावेनच पदार्था अन्वीयन्ते नतूपकारान्वयेन शाम्यति । अतश्च यथा इन्द्रियभावनायाः करणाकाङ्क्षा दध्नः करणत्वेनान्वये जाते सिद्धस्य करणत्वानुपपत्त्या होमस्याश्रयत्वान्वयं यावदनुवर्तते नतु दध्यन्वयमात्रेण निवर्तते । आश्रयत्वेनच गृह्यमाणो होमः करणाकाङ्क्षयैव गृह्यत इत्युच्यते, नत्वाश्रयाकाङ्क्षा नाम चतुर्थ्यस्ति; एवं विकृतेः कथंभावाकाङ्क्षा नोपकारान्वयमात्रेण निवर्तते । उपकारपृष्ठभावेन गृह्यमाणाः पदार्थाः कथंभावाकाङ्क्षयैव गृह्यन्ते । तत्र प्राकृताः पदार्थाः तया गृह्यमाणा अपि प्रकृत्युपकारकतया तेषां निराकाङ्क्षत्वान्न प्रकरणेन गृह्यन्ते, ये त्वप्राकृताः प्राकृतस्थानापन्ना औदुम्बरत्वादयोऽन्यानुपकारकतया तेषां निराकाङ्क्षत्वान्न साकाङ्क्षास्ते पशुनियोजनयूपपृष्ठभावेन यावत् खादिरत्वमायाति तावद्विधीयन्त इत्युभयाकाङ्क्षया ग्रहणात् प्रकरणेन गृह्यन्त इति तस्यां विकृतावस्ति प्रकरणम् । एवं शरेष्वपि ज्ञेयमित्यर्थः ॥

प्रकृते वैलक्षण्यं दर्शयति—**अभिषेकस्य त्विति** ॥ **एतेन**—अभिषेचनीयाङ्गमाहेन्द्रस्तोत्राङ्गतयाऽभिषेकस्य विधानादभिषेचनीयावान्तरप्रकरणमिति—**निरस्तम्**; अवान्तरप्रकरणत्वेनाभिमतस्याभिषेचनीयस्य साकाङ्क्षत्वं शौनःशेपपाठकाले यदि स्यात् तदा तत्सन्निधावाम्नातेन शौनःशेपाख्यानादिना स्ववाक्यार्थपरिपूर्णेनाप्यवान्तरप्रकरणलक्षणा वाक्यैकवाक्यता कल्प्येत, तस्य त्वभिषेचनीयस्य विदेवनादिभ्यः प्रागेव प्राकृतैरङ्गैः निराकाङ्क्षत्वेन यावदसत्याकाङ्क्षा कल्प्या ततः प्रागेव राजसूये कथंभावाकाङ्क्षया सिद्धे विनियोगे अवान्तरप्रकरणवत्त्वायोगादित्यर्थः ॥

एवं माहेन्द्रस्तोत्राङ्गत्वमभिषेकस्याङ्गीकृत्यापि प्रकरणाग्राह्यत्वमुपपाद्याधुना तदङ्गत्वमेव अभिषेकस्यायुक्तमित्याह—**वस्तुतस्त्विति** ॥ शौनःशेपमाख्याय प्रत्यभिषिच्यत इत्येवं विदेवनाद्यभिषेकान्तानां स्वातन्त्र्येणोत्पन्नानां मध्ये अभिषेके माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यत इत्यनेन माहेन्द्रस्तोत्रकालमात्रविधानेन माहेन्द्रस्तोत्राङ्गत्वाभावान्न प्राकृताङ्गानुवादेनाभिषेकविधिः । अतः स्तोत्रद्वारा अपूर्वत्वविधयापि कथंभावग्रहणायोगान्न प्रकरणव्यापारः संभवति इत्युत्कर्षापकर्षाभ्या-

त्वप्रसक्तौ प्रकरणेन तद्बाधः। नच राजसूयस्यापि प्रत्येकं विकृतित्वात्प्रकरणाभावः; पवित्रादारभ्य क्षत्रस्य धृतिं यावद्राजसूयत्वधर्मपुरस्कारेण वाचनिकाङ्गाम्नानात्तत्सन्दष्टविदेवनादीनां प्रकरणग्राह्यत्वोपपत्तेः। एवं प्रकरणस्य क्रमान्तरैरपि उदाहरणान्यूह्यानि। एवं क्रमयोर्विरोधे सन्निधानेन याज्याद्वयस्य काम्यैन्द्राग्नद्वयाङ्गत्वे अनियमेन प्रसक्ते यथाक्रमपाठादाद्यस्याद्याङ्गत्वम्।

---

मनुष्ठेयत्वावगतौ प्रयोजनापेक्षाभावेन यत्रोत्पत्तिः तत्रैव प्रयोजनापेक्षया तत्कल्पने तेषां महाप्रकरणात् राजसूयाङ्गत्वमेव नतु सन्निधानादभिषेचनीयाङ्गत्वमित्यर्थः॥

**ननु**—राजसूयो नाम नार्थान्तरम्, अपितु इष्टिपशुसोमयागा एव, तेच सर्वे प्रत्येकं विकृतित्वान्निराकाङ्क्षा इति कथं राजसूयमहाप्रकरणमित्याशङ्कते—**नचेति**॥ समाधत्ते—**पवित्रादारभ्येति**॥ पवित्रसंज्ञकात् सोमयागादारभ्य क्षत्राणां धृताग्निष्टोमाग्निष्टोमः तेनान्ततो यजेतेति विधिविहितं क्षत्रस्य धृतिरितिसंज्ञकं सोमयागं यावदङ्गविधिषु राजसूयाय त्वेना उत्पुनातीत्युपक्रमात् राजसूयेनेजानः सर्वमायुरेतीत्युपसंहाराच्च तेषां राजसूयत्वपुरस्कारेण विधानप्रतीतेः वाचनिकाङ्गसन्देशेन राजसूयत्वेन रूपेण सर्वेषामेवाकाङ्क्षाया उत्तेजनात्तावदन्तमाकाङ्क्षानुवृत्तेः तत्संदंशपतितानामपि तत्प्रकरणग्राह्यत्वमेवोपपन्नमित्यर्थः॥

एतच्च राजसूयाङ्गमध्यपतितत्वं विदेवनादीनां शाखान्तरमनुसृत्योक्तम्॥ **वस्तुतस्तु**—तैत्तिरीयब्राह्मणे षोडशग्रहवर्त्यभिषेकार्थायां "राजसूयाय त्वेना उत्पुनाती"त्यनेन हिरण्यकरणकमुत्पवनं विधाय मध्ये आसन्दारोहणादिवहून्यङ्गानि विधाय अभिषेकपूर्वोत्तरभाविभूतावेष्टिहोमान् राजसूयेनेजान इत्यर्थवादसहितविधिना विधाय "माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते" इत्यनेनाभिषेकं विधाय वहूनामङ्गानामन्ते "दिशोभ्ययंराजाऽभूदि"त्यादिना विदेवनशौनःशेपोपाख्यानविध्याम्नानात् क्षत्रस्य धृतिं यावन्नैव राजसूयपरामर्शेन धर्माम्नानं नवा राजसूयत्वपुरस्कारेण विहितधर्ममध्यपातित्वं विदेवनादीनामस्ति। **अतएव**—"तदीयो हि कथंभावः पवित्रादारभ्य क्षत्रस्य धृतिं यावदनुसृतः शक्नोति विदेवनादीनि संप्रष्टुमि"ति वार्तिकं "प्रात्यात्मिकापूर्वसिद्ध्यै कथंभावस्य प्राकृतैः निवृत्तावपि समस्तसाध्यफलापूर्वसिध्यै कथंभावस्य पवित्राख्यात् सोमयागादारभ्य क्षत्रस्य धृत्याख्यसोमयागपर्यन्तमनुवृत्तेस्तन्मध्यपातिविदेवनादिस्पर्शात् तत्कथंभावेन विनियोगः सिद्ध इत्याशयः" इति ग्रन्थेन न्यायसुधायां कथंभावानिवृत्तिमध्यपातित्वपरतया व्याख्यातम्, नतु विदेवनादीनां राजसूयत्वपुरस्कारेण विहितधर्मसन्दंशपातित्वपरतया। शास्त्रदीपिकायामपि केषुचिदङ्गेषु राजसूयार्थत्वश्रवणेन राजसूयत्वेन कथंभावाकाङ्क्षामुपपाद्य महाप्रकरणेनैषां तदङ्गत्वमुक्तम्, नत्ववान्तरप्रकरणादिति। नहि भाष्यवार्तिकाद्यदर्शिते विदेवनादीनां वाचनिकाङ्गसन्दंशे शाखान्तरीयत्वकल्पना प्रभवति। अतोऽत्र सर्वेषां नवीननिबन्धकाराणां वाचनिकाङ्गसन्दंशपठितत्वे भ्रमएव॥

**परमार्थतस्तु**—महाप्रकरणात् राजसूयाङ्गत्वसिद्धान्तोऽपि कृत्वाचिन्तयैवाऽत्र युक्तः, तैत्तिरीयशाखायामभिषेचनीयप्रयोगमध्ये अभिषेकानन्तरं "दिशोभ्ययंराजाऽभूदिति पञ्चाक्षान् प्रयच्छति" "शौनःशेपमाख्यापयति" इति विदेवनादीनाम्नायमध्ये वहून्यभिषेचनीयाङ्गानि "अपां नप्त्रे स्वाहोर्जे नप्त्रे स्वाहाऽग्नये गृहपतये स्वाहेति तिस्र आहुतीर्जुहोति" इत्यादीन्याम्नातानि। तेषामुपहोमन्यायेन उत्थाप्याकाङ्क्षायाऽभिषेचनीयेन सहान्वीयमानानामन्तरालेऽभिषेकविदेवनादीनां पाठादवान्तरप्रकरणेन महाप्रकरणबाधादभिषेचनीयाङ्गत्वस्यैवापत्तेः। आपस्तम्बादिकल्पसूत्रेषु परिमले वेधाद्यर्थभेदादित्यधिकरणेऽप्येवम्। **यत्तु**—अभिषेचनीयोत्तरं प्राग्दशपेयाद्विदेवनप्रभृत्यभिषेकान्तधर्माम्नानमादायाभिषेकापकर्षे तदन्तापकर्षन्यायेन विदेवनादीनामपकर्षाभिधानं पाञ्चमिकं तद्भाष्यकारलेखनादस्तु शाखान्तरीयपाठकल्पनया प्रमाणम्, परंतु तेषामभिषेचनीयाङ्गत्वं तैत्तिरीयशाखादृष्टावान्तरप्रकरणात् नैव वारयितुं शक्यम्। नह्यपां नप्त्रे स्वाहा इत्यादिहोमानामभिषेचनीयान्वयायाभिषेचनीयाकाङ्क्षोत्थापनम्, नवा राजसूयाङ्गत्वं तेषां कस्यचिदिष्टम्। एवंचोत्पवनादिवाक्ये श्रूयमाणमपि राजसूयपदं अवान्तरप्रकरणादभिषेचनीयाख्यराजसूयविशेषयागपरमेवेति अलं विस्तरेण॥

अत्र चानुष्ठानसादेश्यस्थले प्रकरणसंभावनाया एवाभावात् कदाचित्संभवे पशुसामान्यविध्यधिकरणे तेन प्रकरणबाधस्यैव वक्ष्यमाणतया एतदपवादान्न प्रकरणबलीयस्त्वोदाहरणम्। एवं यथाक्रमपाठस्थले ऐन्द्राग्नादिकर्मभिः तुल्यक्रमाणां याज्यानुवाक्यायुगलानां कस्यचिदपि प्रकरणे अनाम्नानाद्द्ध्विमन्त्रस्य शुन्धनमन्त्रस्य च दर्शपूर्णमासप्रकरणाम्नातस्यापि असि शुन्धध्वमिति सन्निहितोपसंहारियुष्मदर्थविषयमध्यमपुरुषसामर्थ्यात्मकलिङ्गेन विरोधात् दध्विमन्त्रस्यापष्ठलिङ्गत्वेनाऽपि प्रकरणविनियोज्यत्वायोगात् यथासङ्ख्यलक्षणक्रमेण सन्निधिनोपांशुयाजे सान्नाय्यपात्रशुन्धनेच विनियोगान्नोदाहरणत्वम्, एवं निराकाङ्क्षविकृतिसन्निहितानां विकृतौ प्रकरणाभावे स्थानादेवाङ्गत्वात् प्रकरणसमवायासंभवेन नोदाहरणत्वमित्यभिप्रेत्याह—**एवं प्रकरणस्येति**॥

प्रयोजनं विदेवनाद्यन्तरा सोमाङ्गलोपप्रायश्चित्तं पूर्वपक्षे, सिद्धान्तेतु सोमेष्ट्यङ्गलोपप्रायश्चित्तं समुच्चयेनेति स्पष्टत्वान्नोक्तम्॥ यत्तु प्रकाशकारैः—सिद्धान्ते सोमेष्ट्यङ्गलोपप्रायश्चित्तद्वयस्य विकल्पत्वमुक्तम्, तदेकतरानुष्ठानेनैकतरवैगुण्यपरिहारासंभवात् अयुक्तमित्युपेक्ष्यम्। प्रयोजनान्तरं कौस्तुभे द्रष्टव्यम्॥

क्रमसमाख्ययोर्विरोधे पौरोडाशिकसमाख्याते काण्डे समाम्नातस्य शुन्धध्वमिति मन्त्रादेः सन्निधानात्सान्नाय्याङ्गत्वम् । नच महाधिकारेण सन्निधिबाधः; तस्यापि वाचनिकाङ्गसंन्दष्टत्वेन बलवत्त्वात् । नचैवं तस्य प्रकरणत्वापत्तिः; मन्त्रस्य सिद्धरूपत्वेन लिङ्गाविनियोज्यत्वेन च प्रकरणाविषयत्वात् । सन्निधानस्यापि समाख्यावदपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्व एव बलाबलं न तु विनियोगे । तत्र तूदाहरणान्तरं मृग्यम् । एवं समाख्ययोर्विरोधे आध्वर्यवमिति सामान्यसमाख्याया याजमानमिति विशेषसमाख्यया बाधः । एवं व्यन्तरितत्र्यन्तरितादिप्रमाणस्य पूर्वैः सह विरोधे शेषानेकत्वे च उदाहरणानि कौस्तुभे द्रष्टव्यानि ।

स चायं श्रुतिलिङ्गादिबाधोऽप्राप्तबाधः । तत्त्वं चाङ्गताबोधकलिङ्गादिकल्प्यप्रमाणप्रतिबन्धकत्वम् । पूर्वपूर्वप्रमाणेन हि अङ्गत्वेऽवधारिते निराकाङ्क्षत्वादुत्तरोत्तरतः पूर्वपूर्वप्रमाणकल्पनैव नोदेतीति सोऽयमप्राप्तबाधः । एवं गृहमेधीये आज्यभागौ यजतीत्यादावपि । अन्यत्र सामान्यवि-

---

**क्रमसमाख्ययोरिति** ॥ पौरोडाशिककाण्डे समाम्नातस्य मन्त्रस्य लिङ्गदर्शपूर्णमासाधिकाराभ्यां दार्शपौर्णमासिकपात्रशुन्धनार्थत्वेन सामान्यतोऽवगतस्य विशेषजिज्ञासायां समाख्यया पुरोडाशाङ्गत्वे तत्साध्याग्नेयादियागीयोलूखलमुसलजुह्वादिपात्रप्रोक्षणाङ्गत्वे च प्रसक्ते सन्निधानात् सान्नाय्यपात्रशुन्धनाङ्गत्वम् ॥

अत्रच पौरोडाशिकशब्दो न्यायसुधाकृता 'अधिकृत्य कृते ग्रन्थ' इत्यनुवर्तमाने 'पुरोडाशात् ठक्' इति स्मृतेष्ठगन्तत्वेन व्युत्पादितः, तदयुक्तम्; अधिकृत्येत्यधिकारे तादृशस्मृतेरनुपलम्भात् । अत एतदपरितोषेण यत् "तस्य व्याख्यान इति व्याख्यातव्यनाम्न" इत्यधिकारे "पौरोडाशपुरोडाशात् ष्ठनि"-तिपठितसूत्रविहितष्ठन्प्रत्ययान्तत्वेन व्युत्पादनं सोमनाथेन कृतं तदेव युक्तम् । संभवतिच "तस्य व्याख्यान" इत्यत्र व्याख्यायते अनेनेति व्याख्यानं इत्यर्थस्य तथा द्वितीयेच सूत्रे पौरोडाशाः पिष्टपिण्डाः तत्संस्कारको मन्त्रः पौरोडाशः तस्य व्याख्यानं तत्र भवो वा पौरोडाशिक इत्यर्थस्य काशिकावृत्तौ दर्शितत्वात् व्याख्यानशब्दस्य प्रतिपादनपरत्वावगतेः तादृशप्रतिपादनरूपं व्याख्यानं येन अध्यायेन काण्डेन वा क्रियते तत्परत्वमतश्च काण्डस्य पुरोडाशमन्त्रप्रतिपादकत्वेऽपि तस्या बाध एवेत्यर्थः ॥

**मन्त्रस्येति** ॥ तथाच यद्यपि सन्निध्यपेक्षया महाप्रकरणं बलवत्; तथापि अवान्तरसन्दंशेनाकाङ्क्षोत्तेजनादवान्तरसन्निधानस्य तदपेक्षया प्राबल्यात्तद्बाध इत्यर्थः । **ननु विनियोग इति** ॥ लिङ्गेनैव विनियोज्यत्वात् इति शेषः । एवंच यावत्समाख्यामुपलभ्य नूनमनयोः प्रकृतिप्रत्ययाभिहितयोः पुरोडाशकाण्डयोरस्ति संबन्ध इत्यनुमाय काण्डान्तर्गतमन्त्रस्य पुरोडाशस्यच संबन्धं कल्पयित्वा तद्द्वारा आग्नेयाकाङ्क्षाकल्पनापरश्रुत्या श्रुतिं कल्पयित्वा आग्नेयापूर्वसंबन्धं विज्ञाय लक्षणया तदपूर्वसाधनीभूतपात्रशुन्धनाङ्गत्वं कल्प्यते, तावदिध्मबर्हिःसंपादनमुष्टिनिर्वापयोरन्तरालभूतो देशः सान्नाय्यपात्रशुन्धनविधेः प्रत्यक्ष इतीध्मबर्हिर्निर्वापविषयमन्त्रानुवाकयोः मध्यमे अनुवाकेऽस्य पठितत्वेन क्लृप्तसन्निधानेन सान्नाय्यपात्रोपस्थित्या तदपूर्वसाधनत्वलक्षणया तत्रैवाकाङ्क्षादिपरम्परया श्रुतिकल्पनया लिङ्गेन तदीयपात्रशुन्धनाङ्गत्वम् ॥ नच पौरोडाशिकपात्रशुन्धनार्थत्वाभावे समाख्याया निरालम्बनत्वम्; तत्काण्डगतसान्नाय्ययाज्यादेः पुरोडाशसंबन्ध इव इहापि भूम्ना कृत्स्ने काण्डे तद्व्यपदेशोपपत्तेरिति भावः ॥ **वस्तुतस्तु**—"देवयज्याया एवैनानि शुन्धती"त्येवं तैत्तिरीयब्राह्मणे वाक्येनैवाहत्य विनियोगान्नात्र सन्निधेर्नवा समाख्याया विनियोजकत्वमिति कौस्तुभे द्रष्टव्यानीति तान्यपीह विस्तरभयात् नोच्यन्ते, मूले तु बाधितबाध्यदौर्बल्यस्य सुज्ञातत्वान्नोक्तानि ॥

एवं विनियोजकप्रमाणानां श्रुत्यादीनां मध्ये—"बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा । मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षये"ति वार्तिकोक्तरीत्या बाध्यबाधकभावे पर्यवसिते ननु लिङ्गादेः मन्थरप्रवृत्तिकत्वेन श्रुतिसत्त्वे अङ्गत्वबोधकत्वानुपपत्तेः अप्रसक्तस्य विनियोगस्य कथं बाध इत्याशङ्कां निरसितुं सर्वत्र बाधस्यैकरूप्याभावं सूचयन्नुपपादितबाधस्य स्वरूपं दर्शयति—**सचायमिति** ॥ **पूर्वपूर्वप्रमाणेनेति** ॥ ततश्चैन्द्र्याङ्गत्वमप्राप्तमेव बाध्यते; कल्पनामूलोच्छेदादित्यर्थः ॥

कथं तर्हि दशमेऽप्यप्राप्तबाधनिरूपणमित्याशङ्कामुत्सर्गतः तत्र प्राप्तबाधनिरूपणात् क्वचिदेव प्रसङ्गतोऽप्राप्तबाधनिरूपणेऽपि न क्षतिः, दशमे प्राप्तबाधस्यैव निरूपणमिहाप्राप्तबाधस्यैवेति कुलधर्मे मानाभावेन निरस्यति—**एवमिति** ॥ क्लृप्तोपकाराज्यभागपुनर्विधिना विहिताभ्यामाज्यभागाभ्यामेव क्लृप्तोपकारतया निराकाङ्क्षीकृते गृहमेधीये प्रयाजादिजन्योपकारानाकाङ्क्षणात् तत्प्रापकातिदेशप्रतिबन्धात् अप्राप्तबाध एव गृहमेधीय इति भावः ॥

**अन्यत्र त्विति** ॥ यथा सामान्यशास्त्रप्राप्त आहवनीयो विशेषशास्त्रविहितपदेन बाध्यते । यथावा नित्यं पाञ्चदश्यं वैश्यनिमित्तकसाप्तदश्येन बाध्यते । आदिपदेन प्राकृतं कुशादि वैकृतैः शरैः स्थानापत्त्या बाध्यते इत्यादयो वार्तिकोक्तेतरबाधाः संगृहीताः । तत्र प्राप्तबाध इत्यर्थः ॥ **ननु** प्राप्तबाधे सामान्यशास्त्रादिना प्राप्तस्य कथं बाधः? नह्यत्र नेदं रजतमित्यादिवत् मिथ्यात्वरूपो बाधः संभवति, सामान्यशास्त्रस्यापि निर्दुष्टत्वेन तज्जन्यबोधस्य दोषाजन्यतया मिथ्यात्वायोगात्, यदितु करणनिष्ठदोषाभावेऽपि वस्तुतः करणे विशेषातिरिक्तविषयकत्वेन विद्यमाने विशेषादर्शनकृतप्रमादरूपप्रमातृदोषेण प्रमातुः भ्रमरूपतद्विषयकत्वबोधोपपत्तौ विशेषदर्शनेन तन्मिथ्यात्वोपपत्तिरित्युच्येत, तदा श्रुतिलिङ्गादिष्वपि गार्हपत्याङ्गतारूपविशेषादर्शने प्रमातुः लिङ्गमात्रदर्शनेन श्रुतिकल्पनद्वारे-

शेषनित्यनैमित्तिकभावादौ प्राप्तबाधः । क्लृप्तस्य बोधकस्य विशेषविषयताप्रतिबन्धकत्वम् । सामान्यशास्त्रादेर्हि विशेषशास्त्रादिना पदहोमादिविषयतामात्रं प्रतिबध्यते, नतु सामान्यशास्त्रमपि; तस्य क्लृप्तत्वेनाकल्पनीयत्वात्, होमान्तरेष्वप्याहवनीयाभावापत्त्या मिथ्यात्वस्यापि कल्पयितुमशक्यत्वाच्च ।

अतएव येन सामान्यशास्त्रमेव पूर्वमालोचितं तस्य विशेषादर्शनजनितभ्रम एव विशेषविषयको विशेषशास्त्रेण बाध्यते । एवं यत्रापि "न तौ पशौ करोती"त्यादौ शास्त्रप्राप्तस्य निषेधस्तत्रापि प्रापकशास्त्रस्य यद्यपि निषेधस्य प्राप्तिसापेक्षत्वेनोपजीव्यत्वादत्यन्तबाधानुपपत्तेर्विशेषविषयत्वमावश्यकम्, तथापि तत्र विकल्पाङ्गीकारात्तदभावपक्षे विशेषविषयत्वप्रतिबन्धान्नोक्तलक्षणाव्याप्तिः । यथा च तत्र रागप्राप्तनिषेधवत् भ्रान्तिप्राप्तस्य बाधमङ्गीकृत्य न विकल्पस्तथा कौस्तुभे द्रष्टव्यम् । वक्ष्यते चात्रापि दशमे । अतः सिद्धं बाधस्य द्वैविध्यम् ॥ ३ ॥ ४१ ॥ इति **सप्तमं बलाबलाधिकरणम्** ॥

---

न्द्राङ्गताविषयकत्वभ्रमस्य संभवेन सर्वत्रैव प्राप्तबाधत्वापत्तेः कथमप्राप्तबाधत्वमित्याशङ्कानिरासायाह—**तत्त्वं चेति** ॥ **तस्य क्लृप्तत्वेनेति** ॥ नहि श्रुतिलिङ्गादिषु लिङ्गादिकल्प्या श्रुतिः क्लृप्ता; तस्याः प्रत्यक्षश्रुतिविरोधे नियमेनाकल्पनेन तदभावात्, कदाचित् कल्पिताया अपि तस्याः प्रत्यक्षश्रुत्या मिथ्यात्वस्यैव कल्पनाच्च । सामान्यशास्त्रादेस्तु क्लृप्तत्वेनाऽकल्पनीयत्वान्मिथ्यात्वकल्पने होमान्तरेष्वाहवनीयाभावापत्तेस्तत्कल्पनायोगात् सामान्यशास्त्रे विशेषशास्त्रादिना विशेषविषयतामात्रप्रतिबन्धाच्छ्रुतिलिङ्गादिवैषम्येण प्राप्तबाधत्वं युक्तमित्यर्थः ॥

**बाध्यत इति** ॥ येनच पदशास्त्रमेव प्रथमतो दृष्टम् तस्य पदविधानेन चरितार्थस्याहवनीयशास्त्रापेक्षाभावात् पश्चादवगम्यमानेन सामान्यशास्त्रेण भ्रमासंभवान्न विशेषदर्शनात् तन्निवृत्तिः विशेषादर्शनाभावेन भ्रमकारणाभावात् । अतएव तदा सामान्यशास्त्रं तद्व्यतिरिक्तविषयतां झटित्येव प्रतिपद्यते । येनतु सामान्यशास्त्रं पूर्वमाकलितं तस्य सामग्रीसत्त्वादुत्पन्नस्य भ्रमस्य विशेषदर्शनान्निवृत्तिः; तदनन्तरं तद्व्यतिरिक्तविषयत्वं पश्चादेवावगम्यते । अतोऽर्थतः तस्य बाधः फलं सिध्यतीत्यर्थः ॥

**ननु**—एवं तर्हि यत्र "न तौ पशौ करोती"त्यत्र बाध एव शास्त्रार्थस्तत्र यस्यातिदेशशास्त्रस्य प्रथमालोचनं तस्य विशेषादर्शनसहकृतप्रापकशास्त्रादाज्यभागयोरपि भ्रान्तिप्राप्तिमालोच्य निषेधशास्त्रावगमोपपत्तेः पश्चाद्विशेषदर्शने सति प्रापकशास्त्रस्य तद्व्यतिरिक्तविषयत्वकल्पनरूपस्य बाधस्य संभवेऽपि यदा निषेधशास्त्रस्यैव प्रथमालोचनं तदा तदर्थालोचनोत्तरं निषेध्यप्राप्त्यपेक्षया सामान्यशास्त्रालोचनात् तेनच विशेषदर्शनसत्त्वेनाऽऽज्यभागभ्रान्तिजननायोगात् निषेधपर्यवसानानुपपत्तेऽवश्यं प्रापकशास्त्रस्याऽऽज्यभागप्रमाजनकत्वमेव निषेधायाभ्युपगन्तव्यम् । तस्मात् शास्त्रप्राप्तनिषेधे प्रमारूपाया एव प्राप्तेरभ्युपेयत्वात् अतएव तादृशस्थले मीमांसकैः विकल्पाङ्गीकारात् कथं प्राप्तबाधत्वावच्छेदेन प्रापकशास्त्रस्य बाधकशास्त्रेण स्वविषयकताप्रतिबन्धेन तल्लक्षणसंभव इत्याशङ्कां निरसितुमाह—**एवं यत्रापीति** ॥ समाधत्ते—**तथापीति** ॥ यतोऽत्र प्रमारूपैव प्राप्तिः अतएव विकल्पाङ्गीकारात् यस्मिन् पक्षे आज्यभागयोरभावः तस्मिन् पक्षे निषेधशास्त्रस्य तदुपजीव्यत्वेन तत्प्रतिबन्धकत्वासंभवेऽपि सामान्यशास्त्रस्य विशेषविषयताप्रतिबन्धात् लक्षणस्य नाव्याप्तिरित्यर्थः ॥

ननु अनया रीत्या विशेषशास्त्रेण बाधेऽपि सामान्यशास्त्रतः प्रमारूपप्राप्तिमादाय विकल्पापत्तिरित्यत आह—**यथा चेति** ॥ तच्चोपपादितं प्राक् । रागस्य न तावद्बलवदनिष्टाननुबन्धित्वप्रमाजनकत्वम् । बलवदनिष्टाननुबन्धित्वज्ञानस्य प्रवृत्तिंप्रति प्रतिबन्धकत्वकल्पनेन तदभावस्यैव तत्कारणत्वकल्पनया प्रवृत्त्युपपत्तेः तदसंभवात् । यत्रत्विष्टसाधनत्वांशे प्रमाजनकत्वं तस्य निषेधावगतानिष्टसाधनत्वेन विरोधाभावादेव न तदंशे बाधकत्वम् । या तु तत्र सामग्रीसत्त्वे प्रवृत्तिः सा सामग्र्यभावे परं न जायते इति दैववशसंपन्नं निषेधस्य बाधकत्वं रागप्राप्तनिषेधस्थले इति न विकल्पः । तथा इहापि विशेषादर्शनजनितेष्टसाधनत्वस्य भ्रमस्य विशेषदर्शनेनापनयेऽर्थात् पदहोमे आहवनीयेष्टसाधनताज्ञानस्यापनये सामग्र्यभावादेव नाहवनीये प्रवृत्तिः प्रवृत्तिश्च पद इति सामग्र्यभावसंपादनेन स्ववशसंपन्नप्रवृत्तिप्रतिबन्धकत्वम् । निषेधे तु प्राप्तेरुपजीव्यत्वान्न भ्रमत्वमिति विकल्प इत्यर्थः ॥

एवं श्रुत्यादीनां परस्यैव दौर्बल्यम् पूर्वस्य प्राबल्यम् । तथा परस्य प्रत्यक्षत्वे पूर्वस्यानुमानिकत्वे यथा वा परस्यात्यन्तानर्थक्ये । तत्र "यत्र पुनः श्रुतिरानुमानिकी लिङ्गं प्रत्यक्षं तत्र कथं यथा स्मृतिवैदिकलिङ्गविरोधे तत्र स्मृतेः मूलान्तरमपि संभाव्यते नतु लिङ्गस्येति तदेव बलवदित्यनुसर्तव्यम् । दुर्बलस्यापि प्रमाणस्य यदि कश्चिदनर्थकः ततो विपरीतो बाधो योजयितव्यः" इति वार्तिकोक्तरीत्या परस्य प्राबल्येऽप्यप्राप्तबाधत्वमेवेत्यभिप्रेत्योपपादितम् । बाधद्वैविध्यमुपसंहरति—**अतः सिद्धमिति** ॥ अत्रच प्रत्यक्षलिङ्गेन आनुमानिकश्रुतिबाधे मातुलकन्यापरिणयनमुदाहृतं न्यायसुधाकृता । तद्दूषणं कौस्तुभे स्मृतिपाद एव कृतं द्रष्टव्यम् । उदाहरणान्तरं तु मृग्यम् । आनर्थक्यहेतुकविपरीतप्राबल्योदाहरणं वार्तिके कौस्तुभे च द्रष्टव्यम् । प्रयोजनं स्पष्टत्वात् नोक्तम् ॥

**संप्रदायस्य रक्षायै यावद्बुद्धिबलोदयम् ।**
**बलाबलविचारान्ता व्याख्याता भाट्टदीपिका ॥**
**इति सप्तमं बलाबलाधिकरणम् ॥**

( ८ अधिकरणम् । )

**अहीने वा** ॥ एवं विरोधे बलाबलं निरूप्याधुना विरोध एव क्वास्ति क्व नास्तीति चिन्तार्थं उत्तरः प्रपञ्चो यावदध्यायसमाप्ति। ज्योतिष्टोमे उपसदो विधाय "तिस्र एव साह्नस्योपसदो द्वादशाहीनस्ये"ति श्रुतम् ।

तत्र द्वादशत्वं किं द्वादशाहे निविशते, प्रकरण एव वेति

---

अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकम् ।
सर्वाभीष्टप्रदं नौमि श्रीरूपं सुन्दरं महः ॥ १ ॥

यो वेदशास्त्रार्णवपारदृश्वा
यज्ञादिकर्माचरणेऽतिदक्षः ।
सदाशिवाराधनशुद्धचित्त-
स्तं बालकृष्णं पितरं नमामि ॥ २ ॥

श्रीखण्डदेवं प्रणिपत्य सद्गुरुं
मीमांसकस्वान्तसरोजभास्करम् ।
अत्यन्तसंक्षिप्तपदार्थतत्कृतौ
**प्रभावलीटिप्पणमातनोम्यहम्** ॥ ३ ॥

यद्यप्यत्र गुरोः कृतावपि मया क्षुद्राव्यते काचना-
संभूतिस्तदपि प्रचारचतुरे नैषा पुरोभागिता ।
किंतु क्ष्मातिलकाः कुशाग्रधिषणाः सिद्धान्तवद्धादरा
मद्वाक्यं परिहृत्य तत्कृतिमलंकुर्वन्त्विवयं मे मतिः ॥ ४ ॥

अत्र च बलाबलाधिकरणसमाप्तिपर्यन्तं मया कृतेन मीमांसाकौस्तुभेन ग्रन्थेन प्रायशस्तदधिकरणसमाप्तिपर्यन्तं भाट्टदीपिकाव्याख्याकृतार्था जाताऽस्ति । अतस्तदन्तमुपेक्ष्याग्रे तद्व्याख्यानं कर्तव्यमित्येवं पूज्यपादानामेवाज्ञया "अहीनो वा प्रकरणाद्गौणः" इत्यारभ्य टिप्पणमारभ्यते ॥

**ननु** "अथातः शेषलक्षणम्—" इत्यध्यायादिसूत्रे कः शेषः ? केन हेतुना शेषः ? कथं च विनियुज्यते ? श्रुत्यादीनि च विनियोगे कारणानि, तेषां च बलाबलचिन्तेति पञ्चानामेव शेषप्रकाराणामध्यायार्थत्वेन प्रतिज्ञानस्य वार्तिककृतोक्तत्वात् बलाबलाधिकरणसमाप्तिपर्यन्तं च प्रतिज्ञाताध्यायार्थस्य कृत्स्नस्यापि निरूपितत्वादुत्तरचिन्ताजातस्य पूर्वलक्षणानाक्रान्तत्वेन लक्षणासङ्गतिः लक्षणान्तरापादकत्वं चापद्येतेत्याशङ्कापरिहाराय बलाबलचिन्ताविषयत्वेन सङ्गतिं दर्शयति—**एवमिति** । पूर्वाधिकरणोपपादितप्रकारेण श्रुतिलिङ्गादीनां विरोध इत्यर्थः । **अधुनेति** ॥ विरोधविषयस्यैव बलाबलचिन्ताविषयत्वात् विरोधविषय एवावसरलाभात्पूर्वाधिकरणोपपादितबलाबलसिद्ध्यर्थं निरूप्यते । अतएव विरोधश्च क्वास्ति क्व नास्तीत्यपि प्रतिज्ञातं भाष्यकृता । एवं चैतदध्यायार्थनिरूपणस्यापर्यवसानात् न चतुर्थलक्षणारम्भस्यावसरः । नचास्य लक्षणान्तरारम्भकत्वमित्यर्थः ॥

**उत्तरप्रपञ्च इति** ॥ अध्यायसमाप्तिपर्यन्तं केषुचिदधिकरणेषु विरोधविषयपरिहारेऽपि न सर्वस्याध्यायस्य विरोधविषयशोधकत्वमिति करिष्यमाणस्य सर्वस्य विचारस्य कथं लक्षणसङ्गतत्वम् ? इत्याशङ्कानिरासाय प्रपञ्चपदोपादानम् । तथाच "अहीनो वा—" इत्याद्यधिकरणद्वये श्रुत्या सह प्रकरणस्य विरोधौ जाघन्यधिकरणप्रभृति पादसमाप्तिपर्यन्तं तस्य वाक्येन सह तौ, निवीताधिकरणे पुनः श्रुत्या सह, उपवीताधिकरणे लिङ्गेन सह, ततः षड्विध्यनुवादचिन्ताः प्रासङ्गिक्यः । ततः कर्त्रधिकरणे पुनः श्रुत्या सहेत्यादिरूपेण विरोधविषयचिन्ताप्रसङ्गेनापि करिष्यमाणविचारस्य तस्यैव प्रपञ्चरूपेण करणान्नासङ्गतत्वमिति भावः ॥

अत्र बहुषु भाष्यपुस्तकेषु यद्यपि साह्नपदघटितमेव विषयवाक्यं लिखितं दृश्यते; तथापि भाष्योदाहृताग्निष्टोमपदघटितवाक्यापेक्षया साह्नपदघटितं वाक्यं शाखान्तरीयमप्यत्रोदाहरणमिति न्यायसुधायां लेखनात् "तिस्र एवाग्निष्टोमस्योपसदो द्वादशाहीनस्ये"त्येव भाष्यपुस्तकपाठः सांप्रदायिकः । साह्नपदघटितस्त्वपपाठ इति निश्चये सति भाष्योदाहृतमेव विषयवाक्यमुदाहर्तुमुचितम्; तथापि एकेनाह्ना समाप्यमानत्वेन स्तुतिसंभवोपपादनयुक्तेरधिकत्वेन वक्ष्यमाणाया भाष्योदाहृतवाक्येऽसंभवात् तल्लाभाय वार्तिककृता साह्नपदघटितमेव वाक्यमुदाहृतं स्वयमप्युदाहरति—**ज्योतिष्टोमे इति** ॥

प्रकरणेन सह विरोधं दर्शयितुं प्रकरणसद्भावो ज्योतिष्टोमे इत्यनेन दर्शितः । **उपसदो विधायेति** ॥ तैत्तिरीयशाखायां षष्ठाष्टके "यदुपसद उपसंपद्यन्ते भ्रातृव्यपराणुत्त्यै—" इति सिद्धवन्निर्देशकल्प्ये विधौ लाघवादेकोपसदिष्टिविधिरेव कल्प्यते । इतरथा बहुवचनबलात् त्रित्वविशिष्टोपसद्विधिकल्पनेऽग्रे "तिस्र उपसद उपैति—" इत्याम्नातविधिना "षट् संपद्यन्ते" इत्यर्थवादसहितेन विहितस्य त्रित्वस्य प्रत्येकं तिसृषु निवेशापत्त्या नवसङ्ख्यात्वात् षट्त्वेन संस्तवानुपपत्तेः । अत अर्थवादगतम् "उपसदः" इति बहुत्वमग्निसोमविष्णुरूपदेवताभेदेन अभ्यस्यमानाया एकेष्टेरभ्यासत्रित्वमादाय समर्थनीयमित्यभिप्रायेण स्वयमपि त्रित्वविधेः प्रागुपसद इति बहुवचनमुपात्तम् ॥ अत्र द्वादशत्वं प्रकरणे निविशते ? उत अहीनात्मकद्वादशाहे ? इति मुख्यसंशयहेतुभूतानि तदर्थं अहीनश्रुत्या प्रकरणेन सह विरोधोऽस्ति न वा इत्यादिसंशयान्तराणि प्राचां ग्रन्थेषु दर्शितानि । तत्रैवं संशयान्तराणां प्रदर्शनेऽनवस्थापत्तेस्तान्युपेक्ष्य मुख्यमेकमेव संशयं दर्शयति—**किं द्वादशाहे इति** ॥ पूर्वपक्षकोटेः पूर्वं सिद्धान्तकोटिप्रदर्शनं तत्सूत्रोपात्तवाशब्दार्थविवक्षया सिद्धान्तोपक्रमताज्ञापनाय । तथा चोपसद्द्वारा द्वादशाहे प्रकरण एव वेत्यर्थः । वक्ष्यमाणपूर्वपक्षोपपादनरीत्या त्र्युपसत्त्वस्य ज्योतिष्टोमाङ्गत्वेऽविवादात्र चिन्ताविषयत्वमित्यभिप्रेत्य तत्र द्वादशत्वमित्युक्तम् ॥

चिन्तायां, त्रित्वस्य तावदुपसदनुवादेन विहितस्य वाङ्नियमन्यायेन स्वापूर्वसाधनीभूतोपसदर्थत्वादुपसदां च प्रकरणाज्ज्योतिष्टोममात्राङ्गत्वावगतेः साह्नपदं अह्ना समाप्यमानत्वात्तदनुवादमात्रं न तूद्देश्यविशेषणं, वाक्यभेदाद्वैयर्थ्याच्च । अतश्च तद्वदेव द्वादशत्वमपि तदनुवादेन विधीयमानमुपसदर्थमेव ।

न च तस्याहीनोद्देशेन विधिः; उपसदुपसर्जनत्वेन श्रुतस्य तस्याहीनसंबन्धानुपपत्तेः, तस्यावृत्त्या द्वादशत्वोपपत्तेश्च, द्वादशाहप्रकरणपठितवाक्यान्तरेण तस्य तत्र प्राप्तत्वाच्च । अतोऽस्यापि त्रित्वेन विकल्पः । अहीनपदं च न हीयत इत्यादिव्युत्पत्त्या नञ्समासमङ्गीकृत्य ज्योतिष्टोमानुवादकम् । सर्वे ह्यन्ये क्रतवो विकृतित्वादेनमपेक्षमाणा न जहति ।

अथ नायं नञ्समासस्तथात्वे तस्य तत्पुरुषत्वात् तत्पुरुषे "तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या" इति स्मृत्या प्रकृत्या पूर्वपदमित्यनुवृत्तिसहितया अव्ययाख्यस्य नञः पूर्वपदस्योदात्ताख्यप्रकृतिस्वरत्वविधानादाद्युदात्तत्वा-

---

**वाङ्नियमन्यायेनेति** ॥ यथा "यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्" इति विहितस्य वाङ्नियमस्य ज्योतिष्टोमापूर्वस्य फलवत्त्वेऽपि विप्रकृष्टत्वात् सन्निहितदीक्षणीयापूर्वार्थत्वेऽप्यानर्थक्यपरिहारात् दीक्षणीयापदाम्नानाच्च दीक्षणीयार्थत्वम्, एवं त्रित्वस्याप्युपसदर्थत्वमित्यर्थः । **अह्ना समाप्यमानत्वादिति** ॥ "तं सहैवाह्ना संस्थापयति" इत्यर्थवादे एकेनाह्ना समाप्यमानत्वस्य दर्शितत्वादित्यर्थः ॥ स्वमते षष्ठ्यर्थस्यापि भावनायामेवान्वयात् साह्नेति पदस्योपसत्पदार्थेऽन्वये वाक्यभेदसंभवेऽपि प्राचां मते तस्य तत्रान्वयस्य व्युत्पन्नत्वात् न वाक्यभेद इत्यतो दूषणान्तरमाह—**वैयर्थ्याच्चेति** ॥ **एतेन**—साह्नपदेन ज्योतिष्टोमोऽभिधीयत इति त्र्युपसत्त्वं तावत्तदङ्गमिति साह्नपदभरेण ज्योतिष्टोमाङ्गत्वं प्राचां ग्रन्थेषूपपादितम्—**अपास्तम्**; वैयर्थ्यात्, वाङ्नियमविरोधाच्च । **नच**—एतावता साह्नवाक्ये उपसत्पदस्योद्देश्यसमर्पकतातात्पर्येणोपसदङ्गत्वं पूज्यपादानामभिप्रेतमिति—**भ्रमितव्यम्**; उपसद्विधानानन्तरमेव त्रित्ववि धेराम्नानादवान्तरप्रकरणेनैवोपसदङ्गत्वोपपत्तेरुपसत्पदवैयर्थ्यस्य समानत्वेनानुवादत्वस्यैव साह्नपदवत् युक्तत्वात् । अतः साह्नपदमुपसत्पदं चानुवादपरे इति भावः ॥

**तद्वदेवेति** ॥ यथा—भाष्योदाहृताग्निष्टोमवाक्येन त्र्युपसत्त्वं ज्योतिष्टोमीयोपसदङ्गं निःसन्दिग्धम्; एवं साह्नपदघटितवाक्येनापीति न चिन्ताविषयत्वमिति दृष्टान्ततयोपादानेन सूचितम् । तदनुवादेनेत्यत्र तच्छब्द उपसत्परः । अहीनात्मकद्वादशाहोद्देशेन द्वादशत्वविधिरिति भाष्यकारीयं सिद्धान्तमनूद्य पूर्वपक्षी दूषयति—**नच तस्येति** ॥ किमहीनोद्देशेन साक्षादेव द्वादशत्वस्य विधिः ? उत उपसद्द्वारा वा ? इति विकल्प्य, आद्यं पक्षं दूषयति—**उपसदुपसर्जनत्वेनेति** ॥ द्वितीयं निरस्यति—**द्वादशाहप्रकरणपठितेति** ॥ वार्तिके लिखितेति शेषः । **त्रित्वेन विकल्प इति** ॥ एतच्च पूर्वपक्षे विकल्पाभिधानं त्रित्वविधिमङ्गीकृत्य संभवाभिप्रायेण द्रष्टव्यम् ॥ **वस्तुतस्तु**—यथा वार्तिककारमते सिद्धान्ते वाक्यान्तरप्राप्तद्वादशत्वं त्रित्वस्तुत्यर्थमनूद्यत इति न विधिद्वयाङ्गीकारकृतो वाक्यभेदः । तथा द्वादशत्वविधिपक्षे तदन्तर्गतत्वेनैकं वृणीत इति वत्, तिस्रः इत्यस्यानुवादत्वम् न

स्तुत्यर्थमुपादानमित्यस्यार्थस्यापि पूर्वपक्षे उपपादयितुमशक्यत्वात् नाष्टदोषदुष्टो विकल्पोऽपि इति—ध्येयम् ।

प्रकरणे निवेश इति पूर्वपक्षे अहीनपदानुवादानुपपत्तिं परिहरति—**अहीनपदं चेति** ॥ अहानिरूपगुणयोगेनाहीनपदं नञ्समासान्तं सत् ज्योतिष्टोमानुवादकम् । अहानिरूपगुणयोगश्च न हीयते कुतश्चित् इति कर्मकर्तरि निष्ठाप्रत्ययात्, अथवा यं सर्वे क्रतवो न जहाति इति कर्मणि निष्ठाप्रत्ययात्, अथवा योऽन्यान्न जहाति इति कर्तरि निष्ठाप्रत्ययात्, अथवा केनचिदपि नायं हीयत इति कर्मनिष्ठाप्रत्ययात् इति व्युत्पत्तिचतुष्टयेन संभवतीति सौत्रं गौणपदमहानिरूपगुणयोगपरतया व्याख्यातुं वार्तिकदर्शितव्युत्पत्तिचतुष्टयमध्ये न हीयत इत्यनेन व्युत्पत्तिद्वयमित्यादीत्यादिपदेन च व्युत्पत्तिद्वयं दर्शितम् ॥ अत्र भाष्यकारेण दक्षिणया क्रतुफलेन वा न हीयते इत्यहीन इति दक्षिणादिकृताहानिगुणयोगप्रदर्शनं कृतम्; तद्दूषयितुं व्युत्पत्तिचतुष्टयेऽपि साधारण्येनाहानिरूपगुणयोगान्तरं दर्शयति—**सर्वे ह्यन्ये इति** ॥ दक्षिणाक्रतुकरणयोरनुपस्थिततत्वात् कथंचिदुपस्थितावपि सहस्रदक्षिणेभ्यः क्रतुभ्यो विकारभूतोक्थ्यादिकरणेभ्यश्चाग्निष्टोमसंस्थाकस्य न्यूनत्वाद्दक्षिणादिकृताहानिगुणयोगो भाष्योक्तो न युक्तः, किंतु सर्वे ह्यन्ये क्रतवो विकृतित्वादेनमपेक्षमाणा न जहति, अतोऽस्य कृत्स्नविधानत्वात् सर्वप्रकृतित्वाच्च सर्वतो वाऽहानिरिति साजात्यादुपस्थितसोमयागान्तरापेक्षयैवाहानिरूपो गुणयोगो द्रष्टव्य इति भावः ॥

सिद्धान्तवादी शङ्कते—**अथेति** ॥ **उदात्ताख्यप्रकृतिस्वरेति** ॥ **अयमर्थः**—"निपाता आद्युदात्ताः" इति सूत्रेण सर्वनिपातसाधारण्येनाद्युदात्तस्वरविधानात् नञोऽपि निपाततत्वेनाद्युदात्तस्वरस्तस्य प्रकृतिस्वरो भवति; स एव च तत्पुरुषसमासेऽपि पूर्वसूत्रेण विहित इत्यहीनपदान्तर्गतप्रथमाकारे आद्युदात्तस्वरे सति "अनुदात्तं पदमेकवर्जम्" इति सूत्रेणैकस्मिन्पदे एकस्य चोदात्तत्वे सत्यपरयोरनुदात्तत्वविधानात् हीकारगतेकारस्यानुदात्तस्वरे सति "उदात्तादनुदात्तस्य स्वरितः" इति सूत्रेणोदात्तात्परतो विद्यमानस्यानुदात्तस्य स्वरितत्वविधानात्स्वरितत्वापत्तिः, इष्यते तु मध्यभूत ईकार उदात्तः । तस्यानुपपत्तिः पूर्वपक्षे इति । अतो मध्योदात्तत्वानुरोधात्स्वप्र-

पत्तेः, अपि तु मध्योदात्तत्वा'दह्नः खः क्रतौ' इति स्मृत्या 'तस्य समूह' इत्यनुवृत्तिसहितया अहःशब्दस्य क्रतुसमूहवाचि—खप्रत्ययान्तत्वविधानात्तस्य च "आयनेनीयीयियः फढखछघां प्रत्ययादीनामि"ति स्मृत्येनादेशविधानात् अयं शब्दः खप्रत्ययान्तः। तथात्वे "आद्युदात्तश्चे"ति सूत्रात् प्रत्ययादेरीकारस्योदात्तस्वरसिद्धिः।

नचेकारस्येनादेशावयवत्वात् कथं खप्रत्ययावयवत्वमिति वाच्यम्; आयनादिपूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति स्मृत्या प्रत्ययस्वरसिद्ध्यर्थं ईनादेशस्यापि प्रत्ययोपदेशकालस्वरूपोपदेशिवद्भावस्य विहितत्वात्। अतो नायं नञ्समास इति चेत्,

तथापि प्रकरणानुरोधादहीनशब्दस्य ज्योतिष्टोमे बहुदिनकत्वसादृश्येन गौणतयोपपत्तिः। वस्तुतस्तु अहःसाध्यक्रतुसमूहत्वस्य शक्यतावच्छेदकस्य ज्योतिष्टोमेऽप्यभ्यास-समूहात्मकस्य सत्त्वादहीनशब्दस्य मुख्यवृत्त्यैवानुवादत्वोपपत्तिरिति प्राप्ते—

आस्तां तावदहीनपदं, एवकार एव तावत् त्रित्वातिरिक्तसङ्ख्यायाः साधनत्वाभावमनुवदन् द्वादशत्वेन न विकल्पं सहते। किंचैवं प्रकरणादेव त्रित्वद्वादशत्वयोर्ज्योतिष्टोमसंबन्धोपपत्तेः साह्नाहीनशब्दयोर्द्वयोरपि वैयर्थ्यप्रसङ्गः। अस्मिन्मते तु एकेन अह्ना समाप्यमानत्वेन स्वल्पकर्मणः स्वल्पैव सङ्कोचितेति औचित्येन स्तुतिपरतया साह्नशब्दस्य न वैयर्थ्यम्। किंच द्वयोः सङ्ख्ययोरेकार्थत्वेन विधौ शब्दभेदो न युज्यते। अतोऽहीनपदं साह्नादर्थान्तरपरमित्यप्यविवादम्।

युक्तंचैतत्—'तस्य समूह' इत्यनुवृत्तिसहितया 'अह्नः खः क्रता'विति स्मृत्या वैदिकप्रयोगाच्च अहःसमूहसाध्यक्रतुविशेषत्वस्यैव सत्रादिव्यावृत्तस्य यजतिचोदनाचोदितसुत्यास-

---

त्ययान्तः सन्द्वादशाहपर एवाहीनशब्द इत्युपपादयति—अपि त्विति ॥ मध्योदात्तत्वादिति पञ्चम्यन्तमयं शब्दः खप्रत्ययान्त इत्यनेनान्वयी। खप्रत्ययान्तत्वोपपादनार्थम् "अह्नः खः क्रतौ" इत्यादिपञ्चम्यन्तद्वयमिति योज्यम् ॥ **उपदेशिवद्भावस्येति** ॥ **अयमर्थः**—एतदभावे हि खप्रत्ययोत्पत्तिवेलायामेव तस्यैव प्रत्ययत्वात् "प्रत्ययः" "परश्च" "आद्युदात्तश्च" इति सूत्रेणेनादेशकरणात्प्राक् खप्रत्ययान्तर्गतस्याकारस्याद्युदात्तत्वप्राप्तेः, पश्चाद्व्यञ्जनीभूतस्य 'ख्' इत्येतन्मात्रस्येनादेशेऽपि तत्स्थानिनि व्यञ्जने स्वरस्यैवाभावात् नोदात्तस्वर ईनादेशान्तर्गतेकारस्य प्रत्ययत्वेन प्राप्नुयात्, किंतु नकारोत्तराकारस्य प्रत्ययान्तर्गतत्वात् तत्रैव प्रत्ययत्वप्रयुक्तः स्वरो भवति। **अतएव**—न "स्थानिवदादेशोऽनल्विधौ" इत्यनेन निस्तारः। उपदेशिवद्भाववचनसत्त्वे तु खप्रत्ययोपदेशकाल एव "आद्युदात्तश्च" इति सूत्रप्रवृत्तेः प्रागीनादेशविधानेन प्रत्ययत्वोपदेशात् तदनन्तरप्रवृत्ताद्युदात्तस्वरः प्राप्यत एवेति नानुपपत्तिरिति। स्वरानुरोधेनाहीनशब्दस्य खप्रत्ययान्तत्वमङ्गीकृत्यैव पूर्वपक्षी समाधत्ते—**तथापीति** ॥

**मुख्यवृत्त्यैवेति** ॥ **एतेन**—रथकाराधिकरणेन गतार्थत्वमपि—**परिहृतम्**; रथकारपदे केवलरूढ्यङ्गीकारेऽपीह तदङ्गीकारे प्रकरणबाधापत्तेः तदनाश्रयणेन गौण्या एव स्वीकारात्, **अथवा** अहीनपदे रूढेरेवानङ्गीकारायोगबलेन द्वादशाहोपस्थितावपि प्रकरणाबाधाय शक्यतावच्छेदकाक्रान्तत्वेन ज्योतिष्टोमाभिधानोपपत्तेस्तत्रैव निवेशो भवतु इति विशेषाशङ्कानिरासार्थत्वेनाधिकरणान्तरारम्भोपपत्तेः।

**न विकल्पं सहते इति** ॥ **एतेन**—एवकाराम्नानेनैव "एकं वृणीते" इतिवत्तस्य इत्यनुवाद इत्यपि पूर्वपक्षः—**निरस्तः**। यत्तु वार्तिके सिद्धान्ते साह्नपदवैयर्थ्यपरिहारार्थमुक्तम् "साह्नपदाभावे द्वादशत्वस्येव त्रित्वस्यापि अहीनेनैव वाक्यात्संबन्धभ्रमः स्यात् अतः साह्नपदं प्रयुक्तम्—" इति, तत् भ्रमकारणाभावे भ्रमानुपपत्तेः पुरुषभ्रमस्याव्यपेक्षत्वस्य वेदेऽसंभवादयुक्तमित्यभिप्रेत्य प्रकारान्तरेण साह्नपदानुवादप्रयोजनं दर्शयति—**अस्मिन्मते त्विति** ॥ **एतेन**—साह्नपदवैयर्थ्यस्य सप्तदशारत्निवाक्ये वाजपेयपदस्येव सिद्धान्तेऽपि समानत्वात्पूर्वपक्षे तद्वैयर्थ्यापादनं वार्तिककारीयमभ्युच्चयमात्रमिति शास्त्रदीपिकाप्रकाशकारोक्तम्—**परिहृतं** द्रष्टव्यम् ॥

अत्रच "नच नञ्समासेनावयवव्युत्पत्तिः; समुदायप्रसिद्ध्या तन्निराकरणात्—" इति वार्तिकं व्याचक्षाणेन न्यायसुधाकृतोक्तम्—"अहीनशब्दस्याखण्डस्याहर्विशिष्टगणवाचित्वे अनेकशक्तिकल्पनापत्तेः समुदायप्रसिद्ध्ययोगात् अहीनशब्दावयवभूतस्याहःशब्दस्याहःपरिमिते सोमयागाभ्याससमूहे समुदायप्रसिद्ध्यैव नञ्समासनिरासंभवादित्येवं व्याख्येयम्। विशेषभूतश्च नञ्समासोऽनेन निषिध्यते न विशेष्यभूतावयवप्रसिद्धिः"—इति। अस्मिंश्च ग्रन्थे ग्रहणाभ्यासजन्यसोमयागाभ्याससमूहे सुत्यापरपर्याये यत्र यावदेव दिनमहःपदापरपर्यायं विहितं तदहःपरमिति बहुशो वेदे प्रयोगादहीनशब्दावयवीभूताहःपदस्य रूढेः सत्त्वादहःपदेन न नञ्समास इत्यर्थप्रतीतेः सुत्यापरपर्यायादहःशब्दात् "तस्य समूहः" इत्यधिकारे पठितेन "अह्नः खः क्रतौ" इति सूत्रेण समूहात्मकक्रतुरूपार्थविशेषे खप्रत्ययविधानम्। तेन चाह्नां सुत्यानां समूहात्मकक्रतुरहीनशब्दार्थो विवक्षितः इति प्रतीयते। शास्त्रदीपिकायामपि—"अह्नां समूह इत्येवंयोगेनैव वृत्तिः"—इति ग्रन्थे तथैव। तदेतन्निराकुर्वन्नहीनशब्दस्यार्थान्तरपरत्वं व्युत्पत्तिप्रकारभेदेन दर्शयति—**अहःसमूहसाध्येति** ॥

**अयमर्थः**—नहि सर्वत्रैव वेदे प्रयुज्यमानोऽहःशब्दः सुत्यावचनः; एवं "स एष औपवसथ्येऽहयालब्धव्यः—" इत्यत्र दि-

मुदायात्मकत्वस्यैव योगरूढ्याऽहीनपदशक्यतावच्छेदकत्वप्रतीतेर्न द्वादशत्वस्य ज्योतिष्टोमे निवेशसंभवः । अतश्चाहीनसंबन्ध्युपसदुद्देशेन द्वादशत्वविधिः । षष्ठीस्थले च परस्परसंबन्धस्य प्राचीनमते व्युत्पन्नत्वान्न विशिष्टोद्देशे वाक्यभेदः ।

वस्तुतस्तु—अहीनोद्देशेनातिदेशप्राप्तेः पूर्वप्रवृत्त्या द्वादशोपसत्त्वमेवानेन वाक्येन द्वादशत्वप्राप्तिफलकं, तां चतुर्भिरितिवद्विधीयते । द्वादशाहप्रकरणस्थवाक्यान्तरं तु शाखान्तरीयतया वा सत्रमात्रपरतया न विरुध्यत इति भाष्यकाराभिप्रायः ।

---

नेऽपि तत्प्रयोगात्, अपितु यत्र मुख्यवृत्त्या दिनपरस्याहःपदस्य तद्बाधः प्रतीयमानार्थान्तरतात्पर्यं वा तत्र निरूढलक्षणिकोऽर्थो गृह्यते । यथा—"द्वादशाहेन प्रजाकामम्—" इति वाक्ये बहुव्रीहिमङ्गीकृत्यापि द्वादशदिनवत्त्वस्यार्थस्य "षट्त्रिंशदहो वा एष द्वादशाहः" इति श्रुतेः अनुष्ठानाच्च षट्त्रिंशत्सङ्ख्याकसावनदिनसाध्यत्वेन द्वादशदिनसाध्यत्वबाधे अहःपदेन तत्साध्यसुत्यानां ग्रहणम् । नच प्रधानयागस्य द्वादशदिनाधिकरणत्वं संभवत्येवेति कुतो बाधः? द्वादशानामपि यागानां भिन्नत्वेनान्यपदार्थभूतक्रतुरूपैकावयविनि मानाभावेन तत्र द्वादशसङ्ख्यदिनाधिकरणत्वानुपपत्तेः । अत एतादृशस्थले सुत्यायामेवाहःशब्दस्य वैदिकप्रयोगदर्शनात् सुत्याविशेष्यकबोधसिद्ध्यर्थमहःपदस्याहःपरिमितसुत्यायां रूढिर्निरूढलक्षणा वाङ्गीकार्या । **एतेन**—यागसमुदायस्यान्यपदार्थत्वमादाय द्वादशदिनाधिकरणकयागसमूहपरत्वं द्वादशाहपदस्येति—**अपास्तम्** । अनुभवसिद्धस्य सुत्याविशेष्यकबोधस्य तावताप्यनुपपन्नत्वात् । तत्सिद्ध्यर्थमहःपदस्य सुत्यायां रूढेर्निरूढलक्षणाया वाऽङ्गीकारे यागसमुदायपर्यन्तान्यपदार्थकल्पनायां प्रयोजनाभावाच्च । तत्र रूढिकल्पनापेक्षयाऽहःपरिमितत्वरूपशक्यसंबधेन लाघवान्निरूढलक्षणैव युक्ताऽऽश्रयितुम् । तथाच द्वादशसङ्ख्यापरिच्छिन्नाहःपरिमितसुत्यासमुदायेन यजेतेत्यर्थः ॥ एवमेवैकाहादिपदेष्वपि द्रष्टव्यम् । तदिह तव मते अहःपरिमितसुत्यासमूहात्मकः क्रतुरिति बोधः; तदपेक्षयाऽहीनशब्दावयवाहःपदे सुत्यापर्यन्तलाक्षणिकार्थग्रहणे प्रमाणाभावात् तद्धितप्रकृतिभूताहःपदस्य शक्त्या दिनपरत्वमेवाभ्युपगम्य तत्समूहसाध्यसुत्यासमुदायात्मकक्रतुरूपार्थे तस्मात्परतः खप्रत्ययः स्वीकर्तुमुचितः । "अह्नः खः क्रतौ" इति स्मृतेः समूहात्मके क्रताविवित् समूहसाध्यक्रतौ खप्रत्ययविधानेनोभयथाऽप्युपपत्तेश्च । **नच**—दिनसमूहसाध्यत्वबोधो नाहीनपदाज्जायत इति—**युक्तम्**; अनुभवस्य शपथनिर्णेयत्वात्; वैयाकरणैरपि तत्सूत्रेऽहीनपदस्याहर्गणसाध्यसुत्याकः क्रतुरित्येवमेव विवरणस्य दर्शितत्वाच्च । अतो युक्तमुक्तम्—अहःसमूहसाध्यक्रतुविशेषत्वस्य इत्यादि ॥ यद्प्यत्र शास्त्रदीपिकाप्रकाशे—"नच नञ्समासेनावयवव्युत्पत्तिः; समुदायप्रसिध्या तन्निराकरणात्—" इति पूर्वलिखितवार्तिकस्य "रूढ्या च द्विरात्रादिवचनत्वात् न योगेन वर्तितुमर्हति "**ननु** द्विरात्रादावप्यह्नां समूह इत्येवं योगेनैव वृत्तिः; न सत्रेष्वप्रयोगत" इति शास्त्रदीपिकासिद्धान्तग्रन्थस्य च यथाश्रुतार्थस्वारस्येनाहीनपदे न यौगिकत्वम्, अपितु यजतिचोदनाचोदितसुत्यासमुदायात्मके रूढत्वमेव । "तस्य समूहः" इत्यनुशासनस्य "गमेर्डोः" इतिवत्साधुत्वाख्यानपरतया नेयत्वात् इत्युक्तम्; **तन्निरस्यति—योगरूढ्येति** ॥

अहःसमूहसाध्यक्रतुसामान्यं व्याकरणस्मृतिदर्शितावयवयोगेन प्रतीयते; सुत्यासमुदायात्मकक्रतुविशेषप्रतीतिस्तु वैदिकप्रयोगाद्रूढ्येति योगरूढिरित्यर्थः । तत्राहर्गणसाध्यत्वप्रकारिका क्रतुविशेष्यकोपस्थिरस्मात्पदाद्यदि न जायते इत्युच्यते; तदानुभवापलापापत्तिः । यदितु जायमानापि समुदायशक्त्यैव जायते; नत्ववयवार्थे शक्त्येत्युच्येत; तदोद्भित्पङ्कजादिष्वपि तुल्यत्वाद्योगरूढिमात्रोच्छेदापत्तिः । क्लृप्तावयवशक्त्यैव बोधोपपत्तौ विशिष्टे समुदायशक्तिकल्पने गौरवं च; इतरथा वैयाकरणमते इव समासेऽतिरिक्तशक्तिकल्पनापत्तेः । अतो योगरूढ एवायमुद्भिदादिशब्द इवाहिनशब्दः । अतएव न्यायसुधायाम्—पूर्वग्रन्थ एव स्वोपपादितयोगरूढ्यविरोधेन "नच इति पूर्वलिखितं वार्तिकं "विशेषणीभूतनञ्समासनिराकरणपरतयाऽऽहीनशब्दान्तर्गताहःशब्दे समुदायप्रसिध्या तन्निराकरणात्"—इत्येवं व्याख्यातम्, नत्वहीनपदेऽवयवव्युत्पत्तेः समुदायप्रसिध्या निराकरणपरतया; इति शास्त्रदीपिकाग्रन्थोऽपि केवलयौगिकत्वनिराकरणपर एव; नतु सर्वथा यौगिकत्वनिरासपरः । अतएव यत्रावयवार्थप्रकारबोधस्तत्र व्याकरणसूत्रस्य शक्तिग्राहकत्वमपि; यत्रतु न तथा तत्र तु केवलसाधुत्वमात्रार्थत्वमेव वैयाकरणैः प्रतिपाद्यत इति न सर्वस्य व्याकरणस्यैकरूपत्वमिति न काऽपि क्षतिः—इति ॥

त्रित्वस्य ज्योतिष्टोमप्रकरणे पाठात् तत्रैव निवेशेन साह्नपदमनुवादो भवति; अहीनपदस्य तु अहीनसंबद्धस्य प्रमाणान्तरेणानवगतेः नानुवादत्वम्; अपितु उद्देश्यसमर्पकत्वमेवेति वैषम्यं दर्शयन् भाष्यकारीयमतेन सिद्धान्तमाह—**अतश्चाहीनेति** । स्वमतेऽहीनपदार्थस्योपसत्पदार्थेऽन्वयासंभवात् प्राप्तवाक्यभेदमहीनमात्रस्योद्देश्यत्वाङ्गीकारेण परिहरति—**वस्तुतस्त्वति** ॥ **तां चतुर्भिरितिवदिति** ॥ यथैवार्थप्राप्तेऽभ्यादाने लिङ्गकल्प्यश्रुत्यैव मन्त्रचतुष्टयप्राप्तौ "तां चतुर्भिः—" इति वचनमर्थप्राप्तेर्लिङ्गकल्प्यश्रुतेश्च प्राक् मन्त्रसङ्ख्योभयविशिष्टादानं विदधन्मन्त्रसमुच्चयप्राप्तिफलकं तथैवेदमपि द्वादशत्वप्राप्तिफलकमित्यर्थः ॥

यद्यपि द्वादशोपसत्त्वविधाने द्वादशोत्तरमुपसत्पदाश्रवणेन समासासंभवात् उपसद इत्यस्यानुषङ्गे च द्वादशपदार्थोपसत्प-

वस्तुतस्तु द्वादशाहप्रकरणस्थवाक्यस्य सत्राहीनोभयसाधारणत्वादेवाहीनेऽपि द्वादशत्वप्राप्त्युपपत्तेरेकवाक्यतालाभाय प्रकरणपाठार्थवत्त्वाय चौचित्येन त्रित्वविधेरेवायमर्थवादः । महतः कर्मणो महती सङ्ख्योचिता न तु प्रकृत इति च स्तुतिः । अतो वाक्येन प्रकरणं बाधित्वा द्वादशत्वस्याहीनसंबन्धावगतेर्न तेन ज्योतिष्टोमे द्वादशत्वम् । मूले तु षष्ठ्या भाक्तश्रुतित्वमादाय श्रुतिप्रकरणविरोधोपन्यास इति द्रष्टव्यम् ॥ ३ ॥ ४२ ॥ इत्यष्टममहीनाधिकरणम् ॥

( ९ अधिकरणम् । )

द्वित्वबहुत्व ॥ ज्योतिष्टोम एव "उपास्मै गायता नर"

इति नित्यां प्रतिपदं विधाय, "युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्य," इति श्रुतम् ।

तत्राद्यवाक्ये द्वयोर्यजमानयोरिति यदि सप्तमी, तदा सा निमित्तत्वपरा । यद्यपि च पृथक् विभक्तिश्रवणं, तथापि हविरार्त्यधिकरणन्यायेन पाक्षिकत्वाभावेन प्रत्येकं निमित्तत्वापर्यवसानात् प्रधानभूतनिमित्तत्वानुरोधेन मिलितयोरेव द्वित्वावच्छिन्नयजमानत्वावच्छिन्नयोर्निमित्तत्वं प्रतिपाद्यते ।

यदि तु षष्ठी, तदाऽधिकारित्वाख्यसंबन्धानुवादिका सती

---

दार्थयोः संबन्धप्रतिपाद्ययोः परस्परान्वयानुपपत्तेर्विधेयानेकत्वप्रयुक्तो वाक्यभेदो दुर्निवार इत्यहीने द्वादशत्वापत्तिः; तथापि अनुपक्तोपसत्पदार्थद्वादशपदार्थोभयविशिष्टाध्याहृताख्यातार्थभावनायाः अहीनोद्देशेन विधानान्न तत्प्रसक्तिः । पश्चाचारुणैकहायनीन्यायेन सङ्ख्योपसदोः पार्ष्ठिकः परस्परं संबन्ध इति नाहीने द्वादशत्वापत्तिश्चेति ध्येयम् ॥

वार्तिककारीयं सिद्धान्तं दर्शयति—**वस्तुतस्त्विति** ॥ स्पष्टार्थमन्यत् ॥

**मूले त्विति** ॥ अस्मिन्ग्रन्थे प्राचीनमूलभूतशास्त्रे मूलपदसङ्केतः कृत इति मूलपदेन सर्वत्र प्राचीनग्रन्थग्रहणं वेदितव्यम् ॥

यद्यपि मूलग्रन्थेष्वहीनपदश्रुत्या सह प्रकरणस्य विरोधाविरोधौ दर्शितौ इति षष्ठ्या भाक्तश्रुतित्वेन तद्विरोधप्रदर्शनं व्यर्थम्; तथाऽपि इह विनियोजकश्रुत्यादीनामेव तच्चिन्तनात् तस्याश्च पदश्रुतेः षष्ठ्यन्तत्वेनैव विनियोजकत्वमभिप्रेत्य षष्ठ्या इत्युक्तं नैव विरुध्यत इति ध्येयम् ॥

प्रयोजनं पक्षद्वयोपन्यासेनैव स्पष्टमिति नोक्तम् ॥ अत्र च प्राचां ग्रन्थेष्वनुक्तेनैवकारबलेन यत्पूज्यपादानां सिद्धान्तकरणम्; तदस्याधिकरणस्य वैयर्थ्यं सूचयति । यत् "द्वादश साहस्योपसदः स्युस्तिस्रोऽहीनस्य यज्ञस्य विलोमः क्रियेत; तस्मात्तिस्र एव साहस्योपसदो द्वादशाहीनस्य यज्ञस्य सलोमत्वाय—" इति तैत्तरीयशाखापठितपूर्वतनवाक्यशेषानुगृतैवकारेण द्वादशत्वस्य कथमपि ज्योतिष्टोमनिवेशपूर्वपक्षानुत्थानादिति ध्येयम् ॥ **वस्तुतस्तु**—पूर्वलिखितेन शतपथवाक्यसदृशेन "तिस्र उपसद उपैती"ति विधिना त्रित्वविधाने सति साह्नवाक्यस्य "यद्वा अनीशानो भारमादत्ते विवै स लिशते" इत्युपक्रमादेवकाराराम्नानाच त्रित्वस्तुत्यर्थतया निश्चयरूपेण निगमनार्थवादत्वप्रतीतेः साह्नवाक्यस्य त्रित्वविधानपरं वाक्यार्थवर्णनं पूज्यपादानां चिन्त्यमेव । ज्योतिष्टोमं प्रकृत्य श्रुतम्—"तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य—" इति भाष्यकारस्य विषयवाक्यप्रदर्शनं तु इतिशब्दस्योपसंहतपरतया प्रदृष्टपरतया वोपपद्यते । तत्र साह्नवाक्यस्य त्रित्वविधानपरतया निर्णयाकरणात् । सिद्धान्ते व्यपदेशभेदरूपहेतुसाधकतया परं साह्नवाक्यस्यैव लिखनमिति न किंचिद्विरुद्धम् ॥ विचारविषयवाक्यं तु "तिस्र उपसद उपैति" इत्येतदनन्तराम्नानं "द्वादशाहीने सोम उपैति—"इत्येव युक्तम्; तत्रैव द्वादशत्वविधानात् ॥ अस्तु वा भाष्यकारलेखनाच्छाखान्तरत्वम्; तथापि भाष्यग्रन्थेषु त्रित्वविशिष्टोपसद्विधित्वस्यैव प्रतीतेः "उपसदो विधाय—"इत्युक्तिर्विरुद्धैव । एवं स्थिते यदुपसदनुवादेन त्रित्वविधानमुक्तम्; तन्न्यायसुधाकारस्येनेत्यपि द्रष्टव्यम् ॥ **इति अष्टमं अहीनाधिकरणम्** ॥

**ज्योतिष्टोमे एवेति** ॥ एवकारेण च यथा ज्योतिष्टोमप्रकरणे पठितमपि द्वादशत्वमहीने उत्कृष्यते; प्रकरणस्य श्रुत्या विरोधे श्रुत्या बाधात्, एवमिहापीत्यतिदेशकसङ्गतिरुक्ता । विशेषाशङ्का त्वहीनपदस्य कथमपि प्रकृतवाचित्वाभावेऽपि द्वित्वबहुत्वश्रुतेः कथंचिद्वक्ष्यमाणप्रकारेण निवेशः संभवतीति नोत्कर्ष इति पूर्वपक्षवेलायामेव स्पष्टा भविष्यतीति नोक्ता ॥ **नित्यामिति** ॥ प्रतिपच्छब्देन स्तोत्रीया आद्या ऋगुच्यते । तत्र बहिष्पवमानस्तोत्र प्रथमे "उपास्मै गायता नर" इति स्तोत्रीयामाद्याम् ऋचं नित्यामित्यर्थः । अत्र भाष्यवार्तिकयोरेतत्प्रतिपद्द्वयस्य नैमित्तिकत्वोक्तावपि तत्रानुक्तां तदुपपत्तिं दर्शयति—**तत्राद्यवाक्ये इति** ॥ **पाक्षिकत्वाभावेनेति** ॥ हविष आर्तेश्च तन्निरपेक्षायाः सर्वदा सत्त्वेन तत्तन्निमित्ते विधीयमानस्य नित्यानुष्ठानापत्तौ नैमित्तिकत्वानुपपत्त्या निमित्तस्वरूपस्य वैयर्थ्यापत्तेस्तत्परिहारार्थमाक्षिप्तकादाचित्कत्वनिर्वाहाय लक्षणया यथा विशिष्टस्यैव निमित्तत्वम्; एवमिहापि लक्षणया विनापि निमित्तत्वोपादानसामर्थ्यान्मिलितयोर्निमित्तत्वमित्यर्थः ॥ पाक्षिकत्वाभावेनेत्यस्य कादाचित्कत्वाभावेनेत्यर्थः ॥ **द्वित्वावच्छिन्नेति** ॥ द्वित्वावच्छिन्नौ च यजमानत्वावच्छिन्नौ च तयोरित्यर्थः । यथाच कुलाययागे द्वियजमानकत्वस्य सदा सत्त्वात्सिद्धान्तापत्तिस्तथा दर्शयिष्यते ॥ शास्त्रदीपिकाप्रकाशकारैरियं षष्ठ्यङ्गीकृता; तथापि सा कथंचिन्निमित्तत्वपरेति दर्शयति—**यदि त्विति** ॥

स्ववैयर्थ्यपरिहारार्थं पदद्वयेऽपि लक्षणामङ्गीकृत्य लाघवाद् द्वित्वयजमानत्वयोरेकं व्यासज्यवृत्तिनिमित्तत्वं प्रतिपादयति; विशेषणविशेष्यभावे विनिगमनाविरहात् । एवं बहुभ्यो यजमानेभ्य इति तादर्थ्यचतुर्थ्या अपि अधिकारित्वसंबन्धानुवादिकाया उक्तविधे निमित्तत्वे लक्षणा । अतश्च नान्यतराविवक्षाप्रसङ्गः । निमित्ते च प्रतिपदुद्देशेन मन्त्रविधानेऽपि विजातीयत्वान्नानेकोद्देश्यता । प्रकरणाद्वा प्रतिपत्संबन्धलाभ इति पक्षद्वयेऽप्यविवादम् ।

**अयं भावः**—यद्यत्राधिकाररूपः संबन्धो गृह्यते; तदा प्रतिपत्पदेन तत्कार्यस्योक्तेस्तस्यैव द्वितीययोद्देश्यत्वात् तद्विशेषणत्वेनास्यान्वये द्वियजमानाधिकारप्रतिपत्कार्यस्योद्देश्यत्वं वक्तव्यम्; तदाच यदा द्वियजमानसाध्यः क्रतुर्भवति; तदानीमर्थादेव प्रतिपत्कार्यस्य तदधिकारकता प्राप्तेवेति तदंशेऽनुवादवैयर्थ्यम् । यदि तस्य व्यावर्तकतया विशेषणतोच्यते; तदा विशिष्टोद्देशकृतो वाक्यभेदः । विशिष्टलक्षणया तत्परिहारे द्वित्वावच्छिन्नयजमानत्वावच्छिन्नयोर्निमित्तस्वीकारापेक्षया तत्संबन्धिप्रतिपद्रूपार्थपर्यन्तलक्षणायां गौरवम् । अतोऽत्र षष्ठी संबन्धसामान्यपरापि स्ववैयर्थ्यपरिहारार्थमधिकारितासंबन्धावच्छिन्नं निमित्तत्वं सप्तमीव प्रतिपादयति । तत्राधिकारितांशेऽनुवादेऽपि निमित्तत्वे पर्यवसानान्न वैयर्थ्यम्—**इति** ॥ **लक्षणामङ्गीकृत्येति**—यदा षष्ठ्या निमित्तत्वे प्रत्येकनिमित्तत्वापर्यवसानाद्विशिष्टे लक्षणाऽऽवश्यकी; तदा पदद्वयेऽपि द्वित्वयजमानत्ववृत्तिनिमित्तत्वे एव सा आश्रयितुं युक्तेत्यर्थः । सप्तमीपक्षे सप्तमीद्वयेन पृथङ्निमित्तत्वोपादाननिर्वाहाय मिलितयोस्तदाश्रयणेऽपि निमित्तत्वं भिन्नमेवासीत्; अधुनातु लक्षणया कल्प्यमाने तस्मिन् लाघवादेकमेव तत्कल्प्यत इत्याह—**लाघवादिति** ॥ द्वित्वावच्छिन्नयजमानत्वावच्छिन्नवृत्तिनिमित्तत्वकल्पनापेक्षया द्वित्वयजमानत्ववृत्तिनः तस्यैकस्य तत्कल्पने लाघवम् । पदद्वयलक्षणापि द्वित्वयजमानत्वे एव । नच द्वित्वविशिष्टं यजमानत्वमेकं तद्वृत्त्येव निमत्तं कुतो नाङ्गीक्रियत इत्यत आह—**विशेषणेति** । तथाच द्वित्वयजमानत्वयोरेकार्थताभावेन विशेषणविशेष्यभावानपेक्षणात् अनपेक्षिततत्कल्पने विशेषणविशेष्यभावे विनिगमनाविरहात् उभयवृत्तिव्यासक्तमेकं निमित्तत्वमित्यर्थः ॥

**वस्तुतस्तु**—उभयथापि द्वयोर्निमित्तयोर्गुणत्वेन भावनान्वयाभावेऽरुणैकहायन्यादिवदेकक्रियावशीकाराभावेनान्योन्यनियमोपपत्तिर्दुरुपपादैवेत्यतो द्वित्वावच्छिन्नयजमानत्वावच्छिन्नेऽथवा द्वित्वसमानाधिकरणयजमानत्वे वा लक्षणापि तु युक्तैवेति ध्येयम् ॥ **उक्तविधे निमित्तत्वे इति** ॥ बहुत्वयजमानत्ववृत्तिनिमित्तत्वे इत्यर्थः ॥ **विजातीयत्वादिति** ॥ ईप्सितानीप्सितभेदेन विजातीयत्वादित्यर्थः ॥ **प्रकरणाद्वेति** ॥ निमित्तसंबन्धेन विधीयमानायाः प्रतिपदो विनियोगापेक्षायां प्रतिपत्प्रकरणकल्पितवाक्येन प्रतिपत्कार्योद्देशेन विधानेनाऽस्मिन्वाक्ये नैकोद्देश्यत्वमित्यर्थः । यदितु प्रतिपत्पदेनाऽऽश्यस्थानकत्वमुच्यते इति निमित्ते स्थानमन्त्रोभयविधानकृतो वाक्यभेद इत्याशङ्क्यते; तदप्येतेनैव परिहर्तव्यम्; प्रतिपच्छब्दस्य स्तोत्राद्यवर्गवाचिनः स्तोत्राख्यकार्यांश इव स्थानांशेऽपि प्रकरणप्राप्तत्वेनानुवादकत्वोपपत्तेः ॥ **इति पक्षद्वयेऽपीति**—वाक्यभेदाभावोपपत्तिसहितं निमित्तत्वमिति शब्दार्थः ॥

**वस्तुतस्तु**—षष्ठीपक्षे निमित्तत्वमेवार्थो न सिध्यति । नहि षष्ठी निमित्तत्वव्याप्ता; वसिष्ठानामित्यादौ व्यभिचारात् । अतोऽनीप्सितसंबन्धविशेषकल्पनापेक्षया ईप्सितत्वाख्योद्देश्यत्वरूपसंबन्धविशेषपरां तद्वदेव षष्ठीमङ्गीकृत्य द्वियजमानोद्देशेनैव प्रतिपत्कार्यद्वारा मन्त्रविधानं युक्तमङ्गीकृत्य द्वियजमानोद्देशेनैव प्रतिपत्कार्यद्वारा मन्त्रविधानं युक्तमङ्गीकर्तुम्, निमित्तत्वपक्षे इवास्मिन्नपि पक्षे वैयर्थ्यविकल्पापत्तेः परिहाराय द्वित्वविशिष्टलक्षणेति न वाक्यभेदः । बहुभ्य इत्यत्रतु स्पष्टमेव तादर्थ्यं प्रतीयते इत्यनायासेनोद्देश्यत्वे संभवति न निमित्तत्वपर्यन्तलक्षणाश्रयणं प्रमाणवत् । अतएव सप्तमीपक्षेऽपि निःसंदिग्धतादर्थ्यचतुर्थीसाहचर्यादुद्देश्यपरत्वमेव तस्या न निमित्तपरत्वम् ॥ **अतएव न्यायसुधायाम्**—यथावार्तिकमेतन्मन्त्रद्वयस्य नैमित्तिकत्वेन व्यवहारं कृत्वा सिद्धान्ते निमित्ते विहितस्यापि मन्त्रद्वयस्य कुलायादियज्ञोपस्थापकाभावे कथं तदङ्गत्वमित्याशङ्कोत्तरपरेण द्विवचनान्तयजमानशब्दोपस्थापितस्य द्वियजमानकस्य यज्ञस्याहीनवत् षष्ठ्या बहुवचनान्तोपस्थापितस्य च बहुयजमानकत्वस्य तादर्थ्यचतुर्थ्या प्राधान्यात् श्रुतिं प्रमाणं सूचयन् अधिकरणार्थमुपसंहरतीत्यधिकरणसमाप्तिग्रन्थेन षष्ठीचतुर्थ्योः प्राधान्यपरत्वमेव स्फुटीकृतम् ॥ नहि तयोर्निमित्तत्वमात्रपरत्वे सति कर्मगतप्राधान्यपरत्वम्, तदनुरोधेनच मन्त्रद्वयस्याङ्गत्वं श्रुत्येति वक्तुं शक्यते ॥ यदितु अव्यभिचरितक्रतुसंबन्धोपस्थितिन्यायेन निमित्तपरैतत्पदोपस्थापितस्य तत्तत्क्रतोः पदान्तरकल्पनया प्राधान्यप्रतिपादनपरोऽयं ग्रन्थः, न निमित्तत्वाभावतात्पर्यकः इत्युच्येत, तदा षष्ठ्या तादर्थ्यचतुर्थ्याः प्राधान्यमित्यसंबद्धमेवापद्येत; पदान्तरकल्पनायां निःसंदिग्धस्य द्वितीयान्तपदस्यैव कल्पनाया उचितत्वात् । अतश्च प्रतिपत्संबन्धिक्रतुद्वारा विहितैतन्मन्त्रद्वयस्य द्विबहुयजमानार्थत्वम्; अथवा न्यायसुधाकृदुक्तरीत्या तदुपस्थापितकर्मार्थत्वमेव युक्तमिति परमार्थसूचनम् **'यदितु सप्तमी' 'यदितु षष्ठी'**ति यदितुशब्दाभ्यामधिकरणारम्भे एव पूज्यपादैः कृतमित्यवधेयम् ॥ अत्रच वक्ष्यमाणमुख्यसंशयहेतुरशक्तिकृताङ्गत्यागविषयत्वे कर्तृगतैकत्वस्यास्ति नवेति संशयो राणके उक्तं, पार्थसारथिनातु—किं ज्योतिष्टोमे द्वौ बहवो यजमानाः संभवन्ति ? उत, न?—'' इत्ययमुक्तः । तत्र प्रकाशकृता राणकोक्तसंश-

तदिहेमौ मन्त्रौ ज्योतिष्टोम एव निविशेते उत द्विबहुयजमानके कुलायाहीनादाविति चिन्तायाम् प्रकरणाविरोधात् प्रकृत एव निवेशः । नच तत्र निमित्ताभावः; आख्यातेन 'वसन्ते वसन्ते ज्योतिषा यजेते'त्यादिना उपादेयकर्तृविशेषणत्वेनोक्तस्य विवक्षायामपि नित्यत्वेन ज्योतिष्टोमे यथाशक्त्युपबन्धस्य वक्ष्यमाणत्वाद् यद्येको न शक्नुयात् तदा द्विबहुयजमानकत्वप्राप्तेः प्रतिपद्विधानसंभवात् । अथवा यजमानशब्दस्य यागकर्तृमात्रवचनस्य पत्न्यामपि संभवादाद्यवाक्ये तावत् स्त्रीलिङ्गत्वे बाधकाभावात् पत्नीद्वित्वे स मन्त्रः । द्वितीयवाक्येऽपि पाशाधिकरणन्यायेन लिङ्गानुरोधेन प्रकरणबाधानुपपत्तेर्व्यत्ययानुशासनेन पुंलिङ्गस्य स्त्रीत्वपरत्वावगतेः पत्नीबहुत्वे द्वितीयो मन्त्रः । नित्या तु प्रतिपत् पत्न्येकत्वे इति प्राप्ते—

नित्यत्वेऽपि ज्योतिष्टोमस्य नैकत्वे यथाशक्तिन्यायविषयता; उत्पत्त्यादिवाक्येषु समानाभिधानश्रुत्या भावनायामन्वितस्य तस्यान्तरङ्गत्वेनाशक्तौ दक्षिणापरिमाणाद्यङ्गान्तरबाधेनास्यैवानुग्राह्यत्वात् । किंच यत् कृतिसाध्यत्वेनानुक्तशेषाप्रसक्तेः । नच धर्मप्रजासंपन्नेषु दारेषु नान्यां कुर्वीतेति निषेधेन पत्न्यैकतानियमात् न पत्नीद्वित्वसंभवः इति—वाच्यम्; पूर्वदाराणां प्रजासंपन्नत्वाभावेन दारान्तरकरणे एव संभवत्पत्नीद्वित्वाभिप्रायेण तन्निवेशाङ्गीकारात् । अतएवैतादृशस्य पत्नीद्वित्वस्य कादाचित्कत्वसंभवात् पत्न्यभिप्राये द्वित्वे तस्या नित्यत्वात् नित्यत्वासंभव इति प्राचां दूषणमपि परिहृतम् । यत एवं प्रमाणान्तरेण विरूपैकशेषो दुरुपपादः अतएव हेतोः तदङ्गीकारेण एकस्यां पत्न्यां यजमानेच नित्या "युवं स्थ इति द्वयोः" बह्वीषु वा पत्नीष्वेतेस्मप्रमिन्दव इति ॥ भाष्योक्तमेव द्वितीयमन्त्रस्य बहुपत्न्यभिप्रायकत्वमुपपादयति ॥

---

यस्य पार्थसारथ्युक्तद्वितीयसंशयहेतुत्वमङ्गीकृत्य द्वितीयसंशयहेतुभूतोऽप्ययं संशयः स्पष्टत्वान्नोक्तः इति व्याख्यातम् ॥ तदिदं सर्वमपि पूर्वाधिकरणरीत्या अनवस्थापत्तेरर्थतो ज्ञानस्य सर्वसंशयेष्वपि संभवेन स्पष्टत्वस्य तुल्यत्वाच्चायुक्तमित्यभिप्रेत्य हेतुभूतान् सर्वसंशयानुपेक्ष्य यथाभाष्यं मुख्यसंशयमेव दर्शयति—**तदिहेमाविति** ॥

षष्ठाद्यन्यायेन पुरुषस्य प्रधानतयोद्देश्यत्वेन तद्विशेषणत्वस्य पुंस्त्वस्येवैकत्वस्याप्यविवक्षयैव द्विबहुयजमानकत्वसंभवं प्रकृतौ निरसितुमाह—**उपादेयेति** ॥ प्राधान्यस्य भावनानिष्पादकत्वाख्यगुणत्वान्यथानुपपत्तिकल्प्यत्वेन गुणत्व एव शास्त्रव्यापारादाख्यातोपात्तैकत्वस्य भावनाक्षिप्तगुणभूतोपादीयमानकर्तृविशेषणत्वाद्विवक्षोपपादयिष्यत इत्यर्थः ॥ अत्रचैकत्वविवक्षायामपि अशक्तिकृतत्यागोपपादने "सोमेन" इत्युत्पत्तिवाक्यमपि प्रकाशकृता लिखितम्; तदशक्तिकृताङ्गत्यागानुपयोगीत्यभिप्रायेणोपेक्ष्य नित्यतावेदकवाक्यस्यैव तदुपयोगित्वेनोपादानं कृतम् ॥ **द्विबहुयजमानकत्वप्राप्तेरिति** । यदि चैकत्वविशिष्टस्यैव कर्तृत्वेन तस्यैवाधिकारादेकत्वत्यागेऽधिकाराभावाद्यागानुष्ठानमेव न प्राप्नुयात्; तदानैकत्वस्य त्यागो भवेत्; नत्वेतदस्ति; "बहुषु बहुवचनम्" "द्व्येकयोर्द्विवचनैकवचने" इति बहुद्व्येकशब्दानां सङ्ख्येयप्रधानत्वाभ्युपगमात् कर्तुरेकत्वे द्वित्वे बहुत्वे इति च व्याख्यानात् सङ्ख्येयविशेषणत्वेन सङ्ख्यान्वयात्प्रागेव कर्तृत्वप्रतीतेः एकत्वत्यागेऽपि कर्तृत्वसद्भावेनाधिकारसद्भावात् यागानुष्ठानोपपत्तेः । अत एकत्वत्यागे न बाधकमिति भावः ॥

**ननु**—भावनासङ्ख्ययोरेकप्रत्ययवाच्यत्वात् भावनाप्रतीतिकाल एव सङ्ख्याप्रतीतेः तदनन्तरं भावनाक्षिप्यमाणकर्तुरेकत्वविशिष्टस्यैव कर्तृत्वेनान्वयात् एकत्वत्यागे कर्तृत्वविघातेनाधिकाराभावः प्रसज्येतैवेत्यतः प्रकारान्तरेण ज्योतिष्टोमे निवेशमुपपादयति—**अथवेति** ॥ **पत्नीद्वित्वे इति** ॥ **एतेन**—पत्न्यभिप्रायं द्विवचनमिति पूर्वपक्षे विरूपैकशेषापादनं प्राचां—**निरस्तम्**; पत्नीयजमानाभिप्रायेण तदुपपादने तदापत्तावपि पत्नीद्वित्वाभिप्रायेण तदुपपत्तौ विरूपैकशेषानापत्तेः ॥

**द्वितीयवाक्येऽपीति** ॥ एवञ्च बहुभ्य इति वाक्ये विरूपैकशेषानङ्गीकारेण द्वित्ववाक्ये पूर्वोक्तदूषणसहस्य तस्यैवाङ्गीकारेण यत्पक्षान्तरोपपादनं तदर्धजरतीयग्रस्तत्वदुपेक्ष्यम्; पूर्ववाक्येऽपि तदनङ्गीकारेणैव पत्नीद्वित्वमादाय पूर्वपक्षोपपत्तेः संभवात् । यदितु वार्तिकन्यायसुधाकारस्येन बहुवाक्यस्थयजमानपदेष्वपि तदङ्गीकारः तदा बह्वीषु पत्नीष्विति भाष्यविरोधः स्पष्ट इति सूचितम् ॥ **पाशेति** ॥ प्रकरणसहकृतपाशप्रातिपदिकानुरोधेन बहुवचनस्यैकत्वलक्षणावदिहापि यजमानप्रातिपदिकानुरोधेन पुंलिङ्गस्य स्त्रीत्वे लक्षणेत्यर्थः । पत्नीयजमानाभिप्रायेण द्वित्वबहुत्वोपपत्त्या प्रकृतावेव निवेशात् पूर्वपक्षे एकपत्नीकस्य द्विपत्नीकस्यच प्रयोगस्य सर्वदैव नैमित्तिकैतन्मन्त्रद्वयावरुद्धत्वात् नित्यायाः प्रतिपद आनर्थक्यम् विकल्पापत्तिर्वेति यत्प्राचां दूषणम्, तदप्यस्मिन्पक्षे नास्तीति सूचयन् नित्यायाः प्रतिपदः सावकाशत्वं दर्शयति—**नित्या त्विति** ॥

**अनुग्राह्यत्वादिति** ॥ एवं सत्यपि यद्यन्याङ्गत्यागेऽप्येकस्याशक्तिः स्यात्, ततो "गुणलोपेच मुख्यस्यापि" इति न्यायात् प्रधानानुरोधेन गुणभूतैकत्वत्यागः शङ्क्येत, नत्वेतदस्ति; एकस्य यजमानस्यान्यपदार्थानुष्ठानाशक्तेऽध्वर्व्वादिसंपादनेन प्रतिनिधिद्वारा वा परिहर्तुं शक्यत्वादल्पवित्तस्य दक्षिणापरिणामादिविषये संभवन्त्या अशक्तेस्तत्त्यागेनैव परिहर्तुं शक्यत्वेनान्तरङ्गभूतैकत्वत्यागस्यावश्यकत्वाभावादित्यर्थः ॥

ष्ठेयतया प्रसक्तं तत्रैव यथाशक्त्युपबन्धो न त्वननुष्ठेये कालादौ। अतश्च तद्वदेवास्यापि न तन्न्यायविषयतेति न प्रकृते यागे द्वित्वबहुत्वे। नच यजमानशब्दः पत्नीपरः; पुंस्येव प्रचुरप्रयोगेण शक्त्यवगमेन लक्षणायां प्रमाणाभावात्। यजमानेभ्य इति पुंलिङ्गस्य प्राप्ता इत्यस्य मेष्यामिव निषिद्धत्वेनागतिकव्यत्ययानुशासनाङ्गीकारानुपपत्तेश्च। अतश्च वाक्येन प्रकरणबाधाद्यत्र "एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम् एको द्वौ बहवो वा यजेरन्नि"त्याहत्यैव कुलायाहीनादिषु द्वित्वबहुत्वविधानं तत्रैवास्योत्कर्षः। नचात्र तत्क्रतूपस्थापकाभावः; प्रतिपत्संबन्धेनैव सामान्यतः क्रतुसंबन्धेऽवगते निमित्तबलेन तद्विशेषोपस्थितौ बाधकाभावात् ॥३॥४३॥ **इति नवमं प्रतिपदुत्कर्षाधिकरणम्॥**

---

साङ्गप्रयोगविधायके प्रयोगविधावेव यथाशक्त्युपबन्धस्याशक्याङ्गत्यागबीजत्वात् तद्दूषणोपयोगित्वेनैकत्वस्य प्रयोगविध्यनुपसंग्रहं दर्शयति—**किंचेति** ॥ अत्र चानुपादेयमेकत्वं यजमानस्य कालवदिति शास्त्रदीपिकायां कालस्येवैकत्वस्याप्यनुपादेयत्वमापाततो भाति, तच्चानुपादेयपञ्चकनियमप्रदर्शनपरप्रकरणान्तराधिकरणवार्तिकविरुद्धमित्यतः तदाशयं दर्शयति—**तद्वदेवेति** ॥ प्रयोगविध्यनुपसंग्रहेणानुष्ठेयताभावसामान्येनानुपादेयत्वं कालवदुपचर्योक्तम्, नत्वेतावन्मात्रेणैव कालादिसाधारणमनुपादेयत्वं वास्तवमेकत्वे वक्तुं शक्यम्; तथात्वे कर्त्रादावपि तदापत्तेः ॥ **एतेन**—कृतिव्याप्यत्वमुपादेयत्वम्, तदव्याप्यत्वमनुपादेयत्वमिति लक्षणभेदं कृत्वा एकत्वस्य यजमानकृत्यव्याप्यत्वादनुपादेयत्वमेव पञ्चकनियमस्त्वप्रयोजक इति बालप्रकाशोक्तं बालप्रकाशनमिति—**निरस्तम्**; स्वयमेव यजमानव्यक्तेः स्वकृत्यव्याप्यत्वेन तद्द्वारापि न तदीयैकत्वजात्यादि कृतिव्याप्यमित्यनुपादेयमेवेति पूर्वमुक्तेर्यजमानकर्तरि तत्कृतिव्याप्यत्वाभावादुपादेयत्वाभावानुपादेयत्वयोरापत्तेः। अतः काले यथा यथाशक्त्युपबन्धप्रयोजकोपादेयत्वं नेति न यथाशक्त्युपबन्धस्तथैवैकत्वेऽपीत्यर्थः। विस्तरेण चैकत्वं नानुपादेयमिति वाजपेयाधिकरणप्रकरणान्तराधिकरणीयकौस्तुभे उक्तम् तत्रैव द्रष्टव्यम् ॥ **यत्तु**—अत्र प्रकाशे सोमादिद्रव्याशक्तौ प्रतिनिध्युपादानेन सोमत्वादिजातौ "शुक्लानां व्रीहिणामि"त्युपात्तशुक्लादिगुणेषुच यथाशक्त्युपबन्धस्येवेहाप्येकत्वे यथाशक्त्युपबन्धापत्तिरनिवार्यैव। नहि सोमत्वादिजातेः शुक्लादिगुणानांच प्रयोगविध्युपसंग्रहेणानुष्ठेयतया प्रसक्तिरस्ति। अतोऽनुष्ठेयतया प्रसक्तस्यैवाशक्तौ त्याग इत्यस्यायुक्तेरभ्युच्चयमात्रत्वमिति—**उक्तम्, तदयुक्तम्**; सोमादिद्रव्याणां तद्गतगुणजात्यादीनां च स्वतोऽनुष्ठेयत्वाभावेऽपि यैर्व्रीहिभिः सोमेन वा यजेत तान्विहारदेशंप्रापय्येत्याक्तत्वेति विहारदेशप्रापणक्रियाया अप्यन्वयानुपपत्त्या व्रीह्यादिविधिभिरेवाक्षिप्तत्वात् तत्क्रियाविशिष्टत्वेन रूपेण प्रयोगमध्येऽनुष्ठेयत्वप्रसक्तेरशक्तौ तत्त्यागोपपत्तेः। इतरथा द्रव्यादीनां यागादिप्रयोज्यत्वव्यवहारलोपापत्तेः। प्रकृतेतु नैवंविधमेकत्वमिति नानुष्ठेयताप्रसक्तिरिति न यथाशक्त्युपबन्धविषयतेति वैषम्यम् ॥

**अथवेति** पूर्वपक्ष्युक्तं पक्षान्तरमनूद्य दूषयति—**नच यजमानेति** ॥ यद्यपि—"याजमानं व्याख्यास्यामः" इत्यापस्तम्बसूत्रभाष्ये धूर्तादिभिः "उपहूतोऽयं यजमानः" इति तैत्तिरीयब्राह्मणे पत्न्यां यजमानपदप्रयोगलिङ्गात् पत्न्यामपि यजमानशब्दप्रयोग उक्त इति वेदे पुंस्येव प्रयोग इत्ययुक्तं मीमांसकानामभिधानम्; तथापि प्रचुरप्रयोगस्य पुंस्येव दर्शनेन तत्र शक्तिः पत्न्यांतु क्वाचित्कप्रयोगानुरोधेन निरूढलक्षणैव युक्तेति प्रचुरपदेन सूचितम् ॥ **प्रमाणाभावादिति** ॥ लाक्षणिकार्थग्रहणे प्रमाणाभावादित्यर्थः। यद्यपि यजमानशब्दस्येह लाक्षणिकार्थग्रहणेऽस्ति प्रकरणं तात्पर्यग्राहकम्; तथापि तदनुरोधेन न प्रबलयजमानश्रुत्यर्थबाधः कार्यः; इतरथा पूषानुमन्त्रणगतपूषपदेऽप्यग्न्यादिलक्षणापत्तेः। पाशमन्त्रेतु न प्रकरणानुरोधेनैकत्वश्रुत्यर्थत्यागः, किंतु प्रधानभूतपाशप्रातिपदिकोत्कर्षापत्तिभियेति वैषम्यमिति भावः। पुल्लिङ्गानुपपत्तिमप्यभ्युच्चययुक्तित्वेन बहुभ्य इति वाक्ये दर्शयति—**यजमानेभ्य इति** ॥ मेष्यधिकरणे पुंपशुमादायाप्यध्रिगुप्रैषस्य प्रकाशकत्वोपपत्त्या सर्वथा निवेशासंभवात्। पुल्लिङ्गस्य न लक्षणाश्रिता, इहतु सर्वथा प्रकृतौ तन्निवेशासंभवात् प्रातिपदिकानुरोधेनैकत्वस्य बहुत्वे इव पुंलिङ्गस्य स्त्रीत्वे लक्षणा युक्तैवेति पाशाधिकरणन्यायस्यैव प्रवृत्तेरभ्युच्चययुक्तित्वं द्रष्टव्यं तत्रैवेति ॥ **नच**—एवमुत्कर्षाङ्गीकारे कुलायादावपि द्वित्वबहुत्वयोर्नित्यतया कादाचित्कत्वाभावात् निमित्तत्वानुपपत्तितादवस्थ्यमिति—**वाच्यम्**; जीवनस्य निमित्तत्वेऽपि कादाचित्कत्वाभावेन व्यभिचारात् तदभावेऽपि निमित्तत्वोपपत्तेः। द्वित्वबहुत्वरूपं हि निमित्तत्वं स्वस्यानुष्ठापकतामात्रं बोधयत् कुलायादिक्रतूपस्थानद्वारैव तदुपपत्तेर्न स्वस्य पाक्षिकत्वमाक्षिपति। अतएव पूर्वपक्षे क्रतोः प्रकरणादेवोपस्थितेस्तस्यैवानुष्ठापकत्वापत्त्या निमित्तपदोपादानवैयर्थ्यापत्तेर्निमित्तस्यानुष्ठापकत्वसिद्ध्यर्थं पाक्षिकत्वाक्षेप आवश्यकः, ममतु द्विबहुयजमानकक्रतावेतन्मन्त्रद्वयमिति बोधकताद्वाराप्यनुष्ठापकत्वसंभवात् निमित्तोपादानं सार्थकमिति न पाक्षिकत्वाक्षेप इति वैषम्यम्, अहीने यजमानगतैकत्वसङ्ख्याया विकल्पात् पाक्षिकत्वस्याप्युपपत्तेश्चेति न बाधकम् ॥ **ननु** तत्तत्क्रतुविशेषोपस्थापकत्वे एव प्रमाणाभाव इत्याशङ्क्य परिहरति—**नचात्रेति** ॥ **प्रतिपत्संबन्धेनेति** ॥ यजमानसम्बन्धस्याप्युपलक्षणम् ॥ तथाच प्रतिपच्छब्दस्य स्तोत्रकृग्वाचित्वेन तत्पदोपस्थापितस्तोत्रसंबन्धेन यजमानशब्देन वा अव्यभिचरितक्रतुसंबन्धन्यायेन क्रतुसामान्यस्योपस्थितेः द्वि-

( १० अधिकरणम्। )

जाघनी ॥ दर्शपूर्णमासयोः पत्नीसंयाजावान्तरप्रकरणे,

"जाघन्या पत्नीः संयाजयन्ती"ति श्रुतम्। तत्र किमनेन वाक्येनाग्नीषोमीयपश्वनुनिष्पन्नजाघन्युद्देशेन पत्नीसंयाजा वि-

---

त्वादिनिमित्तसंबन्धेन च तद्विशेषोपस्थितिर्युक्तैव। ततश्च स्वतन्त्रफलार्थत्वकल्पनापेक्षयाऽपेक्षितत्वादुपस्थितक्रतुविशेषवाचकपदान्तरकल्पनया तत्क्रत्वङ्गत्वं नासुलभमित्यर्थः॥

प्रयोजनं पूर्वपक्षे उपपादितप्रकारभेदेन नैकरूपम्, किंतु भिन्नं भिन्नम्। यथा प्रकृतौ तथैवोद्भिदादिविकृतिष्वपि निमित्तसत्त्वे तदतिदेशात् समानमेव, सिद्धान्तेतु नैमित्तिकत्वेन मन्त्रद्वयस्य प्रकृतावनिवेशात् निमित्तवत् सर्वक्रत्वङ्गत्वेनोपदेशादेव कुलायाहीनादिसाधारण्येन तद्विकारेष्वपि प्राप्तिर्नातिदेशात् सुतरां च ज्योतिष्टोमविकृतिष्विति स्पष्टत्वान्नोक्तम्॥

॥ इति नवमं प्रतिपदुत्कर्षाधिकरणम्॥

---

विरोधविषयज्ञापनाय महाप्रकरणं दर्शयति—**दर्शपूर्णमासयोरिति** ॥ पत्नीसंयाजावान्तरप्रकरणप्रदर्शनप्रयोजनं स्वयमेव दर्शयिष्यति। पशोः पुच्छं जाघनीशब्दार्थः। अत्रच जाघन्युद्देशेन पत्नीसंयाजानां पत्नीसंयाजोद्देशेन जाघन्या वा विधानमिति पक्षद्वयेऽपि पत्नीसंयाजानामुपदेशेन प्रकृताविव विकृतौ पशावप्यतिदेशेन सत्त्वात्प्रतिपदादिवत्प्रकरणबाधफलीभूतपत्नीसंयाजाननुष्ठानाभावात् कथमुत्कर्षपूर्वपक्षो निष्फल आरभ्यते इत्यत आह—**किमनेन वाक्येनेति** ॥ यतएव नोत्कर्षः पत्नीसंयाजानाम्, अतएव न तदुत्कर्षानुत्कर्षाविह विचार्येते, अपितु "जाघन्या पत्नीः संयाजयन्ती"ति वाक्यं प्रकरणे किंचित्पदार्थविधायकं सन्नोत्कर्षं भजते, उत प्रकरणबाधेन प्रकरणान्तरे विधायकं सत्तं भजते इति वाक्योत्कर्षानुत्कर्षविचारकरणे न बाधकमित्यर्थः॥

यत्त्वत्र राणकक्रता जाघनीपत्नीसंयाजान्वयविधिः दर्शपूर्णमासयोः पशौ वेति चिन्तायाः प्रकरणस्य पूर्वैः सह विरोधाविरोधचिन्तात्वाभावेनासङ्गतिमाशङ्क्य निमित्तत्वेनोद्देश्यभूतयोः द्वित्वबहुत्वयोः प्रकृतकर्मासंयोगात् तत्संयुक्तयोः प्रतिपदोरुत्कर्षेऽभिहिते जाघन्या अपि संस्कार्यत्वेनोद्देश्यभूतायाः प्रकृतकर्मासंयोगात् तत्संयुक्तानां पत्नीसंयाजानामप्युत्कर्षं प्रसक्तमपवदितुं चिन्तैषेति विरोधाविरोधचिन्ताफलभूतोत्कर्षचिन्तात्वात्सङ्गतिरित्युक्तम्॥ **यच्च प्रकाशकृता**—दर्शपूर्णमासप्रकरणस्य पूर्वैः सह विरोधाविरोधचिन्ताया असंभवेऽपि पत्नीसंयाजावान्तरप्रकरणेन सह वाक्यस्य विरोधाविरोधचिन्ता संभवत्येव—किमयं जाघनीपत्नीसंयाजान्वयविधिर्वाक्यविरोधपरिहारासंभवात् पत्नीसंयाजावान्तरप्रकरणं बाधित्वा अतिदिष्टपाशुकपत्नीसंयाजेषूत्कृष्यते, उत जाघनीशब्दस्य जातिवचनतया वाक्यविरोधपरिहारसंभवात् पत्नीसंयाजशब्दस्य साधारण्येऽपि "अभिक्रामं जुहोति" इति-

वदवान्तरप्रकरणेन प्राक् कृप्तेष्वेव पत्नीसंयाजेष्विति राणकोक्तौ दूषणोपन्यासेन वाक्यप्रकरणविरोधाविरोधविषयचिन्तात्वात्सङ्गतिरित्युक्तम्—**तदुभयमप्ययुक्तम्**; अग्रे पूर्वपक्षोपन्यासवेलायां भाष्याद्यनुसारेण विध्युत्कर्षपूर्वपक्षस्यैव प्रदर्शनात्, पत्नीसंयाजानामप्युत्कर्षं प्रसक्तमपवदितुं चिन्तैषेति वक्तुमनुचितत्वात्। नह्यस्मिन्नधिकरणे पत्नीसंयाजोत्कर्षः पूर्वपक्षिण्यापादितः सिद्धान्तिना खण्ड्यते; पत्नीसंयाजानुष्ठानस्य विकृताविव प्रकृतावपि पूर्वपक्षिणा इष्टत्वात्। अतो विरोधाविरोधचिन्ताफलभूतोत्कर्षानुत्कर्षचिन्तात्वेन सङ्गत्यभिधानमयुक्तम्। किंच जाघन्याः संस्कार्यत्वपक्षे जाघनीस्वरूपे आनर्थक्ये प्राप्ते जाघनीशब्दोपस्थापितपशुयागापूर्वसाधनत्वेन तद्विधानात् दर्शपूर्णमासापूर्वाननुप्रवेशेन दर्शपूर्णमासप्रकरणबाधः, जाघन्या गुणत्वपक्षे तु पत्नीसंयाजानां प्रकृतिसंबन्धित्वेनोपस्थितौ भवति प्रकरणानुग्रह इत्युपपद्यत एव विरोधाविरोधचिन्ता॥ एवञ्च दर्शपूर्णमासप्रकरणेनैव वाक्यस्य विरोधाविरोधविचारसंभवे नान्तरीयकतया पत्नीसंयाजावान्तरप्रकरणविरोधाविरोधे जायमानेऽपि तत्प्राधान्येनैव विरोधाविरोधचिन्तात्वेन सङ्गत्युपपादनक्लेशो निरर्थक एव॥ **अपिच** "अभिक्रामं जुहोति" इत्यत्रावान्तरप्रकरणात्प्रयाजग्रहणेऽपि ते प्रयाजदर्शपूर्णमाससंबन्धिनो न वैकृता इति ज्ञानं महाप्रकरणाधीनमेव। अवान्तरप्रकरणं तूभयाविरोधि सदुदासीनमेव। नहि पशावतिदिष्टाः पत्नीसंयाजाः प्राकृतपत्नीसंयाजेभ्यः कर्मान्तरम्; अतिदेशेन तेषामेवोपस्थितेः। अतोऽत्र पाशुकपत्नीसंयाजग्रहणेऽपि पत्नीसंयाजावान्तरप्रकरणानुग्रहसंभवात् प्राकृतत्वबाधेन वैकृतपत्नीसंयाजेषूत्कर्षपूर्वपक्षो महाप्रकरणबाधपर्यवसायी, सिद्धान्तस्तु तदबाधपर्यवसाय्येवेत्यालोचनीयं सहृदयैः॥ अतएवाहीनाधिकरणमारभ्यैव महाप्रकरणस्यैव विरोधाविरोधयोश्चिन्तितत्वात्पूर्वाधिकरणन्यायेन महाप्रकरणस्यैव बाधेन प्रसक्तं वाक्योत्कर्षमपवदितुमेतदधिकरणमित्यापवादिकी सङ्गतिरुत्सर्गापवादयोरेकविषयत्वेनाङ्गस्येनोपपद्यते॥ एतदभिप्रेत्यैव वार्तिकादिग्रन्थेषु महाप्रकरणविरोध एवात्र क्वचित् क्वचिद्दर्शितः। शास्त्रदीपिकायामपि—अतो निर्मूला स्यादस्योत्कर्षकल्पनेति दर्शपूर्णमासयोरेव निवेशः" इति ग्रन्थेन सिद्धान्ते दर्शपूर्णमासनिवेशोपसंहारात्तदबाधः सिद्धान्ते, पूर्वपक्षेतु तद्बाध इति दर्शितम्। इतरथा अवान्तरप्रकरणात्प्रकृतपत्नीसंयाजेष्वेव निवेश इत्येवावक्ष्यत्। तदेतत्सर्वमभिप्रेत्य पूर्वपक्षे उद्देश्यांशनिर्वचने प्रकरणाननुग्रहं दर्शयितुं संशयोपन्यासकाल एवोद्देश्यकोटिं विविनक्ति—**अग्नीषोमीयपश्विति** ॥ विधिपाठोत्कर्षं व्यावर्तयितुं विधानस्येत्युक्तम्। ततश्चैतद्विधिबोधितापूर्वार्थज्ञापनस्योत्कर्षं इ-

धीयन्ते। ततश्चैतस्य विधानस्य प्रकरणादुत्कर्षः, उत पत्नीसंयाजोद्देशेन जाघनीत्वेन द्रव्यं विधीयत इति चिन्तायाम्—

जाघनीशब्दस्योत्तरार्धादिशब्दवदेकदेशद्रव्यवाचित्वेन जाघन्याः परप्रयुक्तत्वावगमात् प्रयोजनवत्त्वावगमेन प्रयाजशेषवदुद्देश्यत्वावगतेस्तृतीयाया द्वितीयार्थलक्षणामप्यङ्गीकृत्य पत्नीसंयाजा एव तदुद्देशेन विधीयन्ते। एवंच द्वितीयविधिप्रकाराङ्गीकरणाल्लाघवम्; इतरथा तृतीयविधप्रकारापत्तेः।

एवंच वाक्येन प्रकरणबाधात् पत्नीसंयाजानां पश्वङ्गत्वमात्रप्रतीतावपि "आज्येन पत्नीः संयाजयन्ती"ति वचनस्य निर्विषयत्वापत्तेः प्रकरणबाधायोगात्तेनारादुपकारकतया दर्शपूर्णमासाङ्गत्वावगमेऽप्यनेन वचनेन सन्निपत्योपकारकतया अग्नीषोमीयपशुयागाङ्गतया विधिर्नानुपपन्नः।

न च जाघन्याः परप्रयुक्तपश्वनुनिष्पन्नत्वस्य लोकेऽपि संभवादव्यभिचारिक्रतुसंबन्धाभावेन कथं यागीयत्वोपस्थितिः? अग्नीषोमीयप्रकरणे श्रुतेन जाघन्या पत्नीः संया-

---

त्यर्थः—**प्रकरणादिति** ॥ ल्यब्लोपे, अथवाऽपेक्षिकत्वार्थे पञ्चमी। ततश्च प्रकरणं विहायापेक्ष्य वेत्यर्थः ॥ **उत पत्नीसंयाजोद्देशेनेति** ॥ पत्नीसंयाजानामुद्देश्यतोक्त्यैव दर्शपूर्णमाससम्बन्धित्वलाभात् तदनुक्तौ न न्यूनता। तावताऽपि प्रकृतावेव निवेश इति सिद्धान्तकोटिज्ञानोपपत्तेः ॥

**उत्तरार्धादिशब्दवदिति** ॥ उत्तरार्धशब्दः कस्योत्तरार्ध इति ससंबन्धिद्रव्यवाचित्वेनैकदेशद्रव्यवचनो यथा भवति तथा किं जघनभवेत्यापेक्षिकत्वेनायमप्येकदेशद्रव्यवचन इति परप्रयुक्तत्वावगतिरित्यर्थः ॥ **इतरथेति**—अन्योद्देशेन धात्वर्थविधाने द्वितीयप्रकारे धात्वर्थगतविधेयताया अत्यागः, दध्ना जुहोतीतिवत् धात्वर्थोद्देशेन गुणविधाने तद्विधेयतात्याग इत्येकपदोपात्तगतविधेयतानुग्रहाय द्वितीयविधिप्रकार एवाश्रयितुं युक्त इत्यर्थः। **ननु** पत्नीसंयाजान्यजतीति वाक्योत्पन्नपत्नीसंयाजानां यावत्प्रकरणाद्दर्शपूर्णमासाङ्गत्वं कल्पनीयम् ततः पूर्वप्रवृत्तेनानेन जाघनीसंस्कारद्वारा पश्वङ्गत्वस्यैवापत्त्या दर्शपूर्णमासयोः पत्नीसंयाजानुष्ठानमेव प्राप्नोतीति पत्नीसंयाजोत्कर्षानुत्कर्षविचार एव युक्त इत्याशङ्कां परिहर्तुमनुवदति—**एवंचेति** ॥ अत्रच "प्राप्नुयादेव पत्नीसंयाजानां दर्शपूर्णमासयोरकरणम्। यदि पशौ पत्नीसंयाजा न स्युः, ते त्वतिदेशप्राप्ताः तत्र विद्यमाना एव जाघनीसंबन्धित्वेन विधीयन्ते" इत्येतदाशङ्कोत्तरपरवार्तिकग्रन्थव्याख्याने न्यायसुधाकृतोक्तम् "जाघनीवाक्यं विना पश्वाख्यक्रतुगामित्वासिद्धौ वाक्येन प्रकरणबाधात् दर्शपूर्णमासयोः पत्नीसंयाजाकरणं प्राप्नुयात्, अतिदेशात्तु तद्गामित्वप्रतीतिसंभवे वाक्यस्य तत्राव्यापारादतिदेशेन चोपदेशात्मकप्रकरणबाधायोगात् प्रत्युतातिदेशेनात्मलाभार्थं प्रकरणगम्यदर्शपूर्णमासाङ्गत्वापेक्षणात् तत्राकरणाप्राप्ति"रिति, **तदयुक्तम्**; यावत्प्रकरणेन पत्नीसंयाजानां प्रकृत्यङ्गत्वं बुध्यते ततः पूर्वमेव प्रवृत्तेन प्रत्यक्षवचनेन पश्वनुनिष्पन्नजाघनीसंस्कारार्थत्वेन तेषां विनियोगकरणेन प्रकृत्यङ्गत्वस्यैवाभावे पशौ तदङ्गभूतपत्नीसंयाजातिदेशस्यैवासंभवात् यत्र संस्कार्यं जाघनी तत्र पत्नीसंयाजा इति वचनेनैव विनियोगकरणे अहीने द्वादशोपसत्त्वस्येवोपदेशेनैव जाघनीद्वारा पशौ पत्नीसंयाजानां अङ्गत्वातिदेशेनाङ्गत्वस्य

पूर्वपक्षेऽनभिप्रेतत्वाच्च। अतः प्रकृतौ पत्नीसंयाजानामकरणप्राप्तिस्तन्मतेऽनिवार्यैवेत्यभिप्रेत्य स्वयं प्रकारान्तरेण तां वारयति—**आज्येनेति** ॥ आज्येनेत्यस्य पशुगतपत्नीसंयाजद्रव्यविधायकत्वाङ्गीकारे जाघनीसंस्कारकत्वानापत्तेराज्यस्य प्रतिपत्त्यनपेक्षस्य संस्कार्यत्वायोगादाज्यस्य द्रव्यत्वेन विधिः स्वविधेयनिवेशार्थं प्रकृतौ पत्नीसंयाजानां सत्त्वं गमयति; अन्यथा तस्य निर्विषयत्वापत्तेः। अतः प्रकृतौ पत्नीसंयाजानां आरादुपकारकत्वविधयाऽनुष्ठानं प्राप्नोत्येवेत्यर्थः ॥ **वस्तुतस्तु**—वक्ष्यमाणविधया केवलजाघनीपदेन पशुयागानुपस्थितेस्तदुपस्थितये वैकृतवाक्यान्तरपर्यालोचने सति प्रकरणान्तरस्थवैकृतवाक्यपर्यालोचनाविलम्बेनेह यावत्पश्वङ्गत्वं कल्प्यं तावत् झटित्युपस्थितप्रकृत्यङ्गत्वमेव युक्तमिति वाक्येन प्रकरणस्य बाधाभावादुपपन्नमेव प्रकृतौ तेषां करणमित्याज्यवाक्यस्य निर्विषयत्वापत्तिभरेणैव प्रकृतौ तदनुष्ठानसाधनं युक्त्यन्तरसंग्रहायैवेति**ध्येयम्** ॥ **ननु**—तर्हि प्रकृतौ पत्नीसंयाजानां सत्त्वे तत्रैवाज्यवज्जाघन्या द्रव्यत्वेन विधिरस्त्वित्याशङ्कां युक्त्यन्तरकथनव्याजेन निरस्यति—**अनेन वचनेनेति** ॥ आज्यविधौ संनिपत्योपकारकविधया विधानासंभवादारादुपकारकतया प्रकृत्यङ्गत्वं तद्बलात् स्वीकृतम्, इहतु तत्संभवे किमित्यारादुपकारकत्वविकल्पयोराश्रयणमित्यर्थः ॥

**ननु**—पूर्वपक्षे प्रकृतावाज्येन सह जाघन्या विकल्पाभावेनाप्रसक्तविकल्पनिरासार्थत्वेनापि वैयर्थ्यपरिहारासंभवे पशुप्रकरणगतैतद्वाक्यसदृशवाक्यान्तरस्य—**"द्रव्यविकारं तु पूर्ववदर्थकर्म स्यात्; तथा विकल्पेन नियमः प्रधानत्वात्"** इति द्वादशतुरीयपदाधिकरणलिखितस्य वैयर्थ्यमित्याशङ्कामाशङ्कान्तरनिरासव्याजेन परिहर्तुमग्निष्टोमीययागस्योपस्थित्यभावे कथं तदङ्गतया विधानम्? इत्याशङ्कते—**नचेति** ॥ परिहरति—**अग्नीषोमीयप्रकरणे इति** ॥ "अंशुं गृह्णात्यदाभ्यं गृह्णाति" इत्यनारभ्याधीतवाक्योत्पन्नांश्वदाभ्ययोस्तैत्तरीयशाखापठितैतादृशवाक्यान्तरेण क्रतुसंबन्धः; तद्वदिह प्राकृतवाक्येन जाघनीपात्रसंस्कारकत्वेऽवगतेऽपि वैकृतवाक्येन तस्या यागसंबन्धावगमोत्तरमुपसंहारन्यायेन तस्या

जयन्तीति वाक्यान्तरेण प्रकृतापूर्वसाधनीभूतजाघन्युद्देशेन पत्नीसंयाजविधायकेन यागसंबन्धोपस्थितौ अंशुं गृह्णातीतिवदनारभ्याधीतेऽप्यस्मिन् क्रतुसंबन्धावगमोपपत्तेः।

यत्तु कैश्चिदतिदेशादेव पत्नीसंयाजानां पशुयागसंबन्धावगमात् प्राकरणिकं वाक्यं तद्धर्मककर्मान्तरविधायकं पूर्वपक्ष इत्युक्तम्। तदतिदेशेन पत्नीसंयाजानामारादुपकारकविधया पशुयागसंबन्धावगमेऽपि तात्पर्यग्राहकाभावे अनारभ्याधीते वाक्ये जाघन्यास्तदीयत्वोपस्थितौ प्रमाणाभावादतिदेशेन सन्निधाने प्रकरणान्तरासंभवेन कर्मान्तरत्वानुपपत्तेश्चोपेक्षितम्। तस्माद्वाक्येन प्रकरणं बाधित्वेदं विधानं अग्नीषोमीय उत्कृष्यत इति प्राप्ते—

जाघनीशब्दस्य पश्ववयववाचित्वेऽपि उत्तरार्द्धादिशब्दवत् ससंबन्धिकत्वाभावात् लोकसिद्धहट्टस्थजाघन्या एवाज्यवत् पत्नीसंयाजोद्देशेन विधिसंभवे तृतीयाया लक्षणाङ्गीकरणे प्रमाणाभावः। अतिदेशात् प्राप्तानां पत्नीसंयाजानामारादुपकारकत्वबाधेन पशुप्रकरणस्थवाक्येन सन्नि-

---

एवेह ग्रहणोपपत्तिः॥ यद्यपि वैकृतवाक्येनैकेनैव सर्वं सुकरमिति प्राकृतं वाक्यं व्यर्थमेव; तथापि अंश्वदाभ्यन्यायेनाभ्युदयशिरस्कत्वकल्पनेनोभयवचनं सार्थकम्॥ अत्र चानारभ्याधीतत्वमपेक्षितपशुप्रकरणभिन्नप्रकरणस्थत्वसाम्येन ज्ञेयमिति भावः॥

प्रकाशकारमतमनूद्य दूषयति—**यत्त्विति** ॥ **तद्धर्मकमिति** ॥ प्राकृतपत्नीसंयाजधर्मकं जाघनीसम्बन्धमांसलक्षणया तद्द्रव्यकं विधीयत इत्यर्थः ॥ **तदतिदेशेनेति** ॥ **अयमर्थः**—आज्यद्रव्यका एव पत्नीसंयाजा आरादुपकारकविधया प्रकृत्यङ्गम्। तादृशा एवातिदेशेन पश्वङ्गमिति तेषामतिदेशप्राप्तानामारादुपकारकत्वबाधेन जाघनीसंस्कारार्थतया प्राकृतवाक्येन विधानात् पत्नीसंयाजानां पशुयागसम्बन्ध इति तु न युक्तम्। अस्मिन् पूर्वपक्षे जाघनीद्वाराऽनेनोपदेशेनैव पश्वङ्गत्वस्येष्टत्वेनातिदेशाभावात् प्रकृतावुत्पन्नानां पत्नीसंयाजानां आज्यवाक्येनादृष्टविधया प्रकृत्यङ्गत्वबाधकाल एव प्राकृतजाघनीवाक्येन सन्निपत्योपकारकविधया पश्वङ्गत्वबोधात्॥ अस्तु वातिदेशः। तावताऽपि पश्वङ्गभूतपत्नीसंयाजानामग्नीषोमीयपश्वनुनिष्पन्नजाघन्यर्थत्वे एव किं मानम्; पश्वनुनिष्पन्नमात्रस्यैच्छिकपशुमांसभक्षणादावपि संभवेन यागव्यभिचरितत्वात्। नच लौकिकजाघनीसंस्कारस्य वैयर्थ्यात् परिशेषात् क्रतुगतोपस्थितिः; तथात्वे हिरण्यं धार्यमित्यत्रापि क्रतुगतहिरण्यस्यैव धारणसंस्कारापत्तेः। यदितु तत्र क्रतुगतहिरण्यानुवादनिश्चये संस्कार्यत्वं तन्निश्चयेच निष्प्रयोजनस्य तदयोगात् क्रतुस्था प्रतीतिरितीतरेतराश्रय इत्युच्येत; तत्प्रकृतेऽपि तुल्यम्। **अथोच्यते** हिरण्ये संस्कार्यत्वनिश्चायकाभावेनेतरेतराश्रयसत्त्वेऽपि जाघनीशब्दस्य ससंबन्धिकतया तदर्थस्य संस्कार्यत्वनिश्चयात् नासाविति, तद्धिरण्यस्यापि क्रत्वश्रुत्या कर्मत्वाभिधानेन संस्कार्यत्वनिश्चयात् तुल्यम्॥ **वस्तुतस्तु**—गृहकृष्यन्नादौ वास्तुशान्तिबलिहरणवैश्वदेवादिबहुतरसंस्कारदर्शनादितरथा परिशेषात् तेष्वपि यागीयत्वापत्तेर्न क्वापि परिशेषो यागीयत्वोपस्थापकः। अतएव मीमांसकैः प्रकरणमव्यभिचरितक्रतुसम्बन्धो वा सर्वत्र यागीयत्वोपस्थापकमित्युपन्यस्यते। अतश्च प्रकृते तदभावादुक्तवचनमेव तस्या यागीयत्वोपस्थापकं वक्तव्यम् इति॥ अपिच कर्मान्तरं विधीयते किमभ्यासात्? उत प्रकरणान्तरात्? **नाद्यः**; उक्तविधया जाघन्या यागसम्बन्धबोधनेनानन्यपरत्वाभावात्। **द्वितीयं** दूषयति—**अतिदेशेनेति** ॥ संस्कार्यरूपानुपादेयगुणयोगेऽपि अतिदेशेन संनिधानात् असंनिधानस्यासंभवादित्यर्थः॥ अपिच विशिष्टविधिगौरवापादककर्मान्तरविधिकल्पनापेक्षया वैकृतवाक्ये जाघनीनियमार्थत्वासंभवेऽपि प्रकृतिप्राप्तकेवलाज्यबाधकत्वेन गुणविधिरेव युक्तः। नच प्राकृतवाक्यबोधितसंस्कार्यत्वस्य साधनतया विनासंभवात् अर्थादेवाज्यबाधसिद्धिः; आज्यसमुचितजाघन्या अपि संस्कार्यत्वोपपत्तौ तद्बाधे प्रमाणाभावात्। जाघन्या हि संस्कार्यत्वं शाब्दम्, आर्थिकं तु करणत्वम्। नह्याज्यसमुच्चये शाब्दसंस्कार्यत्वस्य हानिः, नवा तद्गतसंस्कार्यत्वेनाज्यगतनिरपेक्षकरणत्वहानिः; भिन्नप्रकारेण द्वयोरन्वये मैत्रावरुणग्रहे पयसा सोमगतनिरपेक्षकरणत्वबाधस्येवेहापि तदभावात्। वैकृतवाक्यसत्त्वेतु जाघन्या आज्यस्येव निरपेक्षकरणताबोधनात् समुच्चये द्वयोरेकरूपेणान्वयात् शाब्दोभयगतकरणताबाधापत्तेः नाज्यप्रसक्तिः। नच गुणत्वेन विधाने प्रयोजकत्वापत्तिः; आज्यनिवृत्तिमात्रेणैव विधिचारितार्थ्ये प्रयोजकत्वशक्तिव्यापारकल्पने प्रयोजनाभावात्। नचैवं तदर्थादेव जाघन्या संस्कार्यत्वसंभवात् प्राकृतवाक्यवैयर्थ्यम्; लोकसिद्धजाघनीकरणताव्यावर्तकतया तत्सार्थक्योपपत्तेः। यदितु तृतीयया जाघन्याः कारणत्वमेव शाब्दम्, आर्थं तु संस्कार्यत्वम्, तत्तु प्राकृतवाक्येनापि सिद्धमिति वैकृतवाक्यवैयर्थ्यमित्युच्येत; तदा तृतीयायाः द्वितीयार्थे लक्षणावैयर्थ्यम्। अस्तुवा तदा पूज्यपादोक्तमेव वैकृतवाक्यप्रयोजनमित्यलं विस्तरेण॥

**पश्ववयववाचित्वेऽपीति** ॥ हृदयादिशब्दवदाकृतिविशेषवाचिनः पशुसामान्यावयवपरत्वम्, नतु छागमात्रावयवपरत्वम्। अतएव यज्ञीयस्य पशोः भक्ष्यस्यवा पशोः पुच्छमिति व्याख्यातं याज्ञिकग्रन्थेषु ॥ **लोकसिद्धेति**—यद्यपि हृदयादीनामपि लोकत एवानेन न्यायेन ग्रहणं प्राप्तम्; तथाऽपि वेदेनैव संज्ञपनादिनोत्पत्तिप्रकाराम्नानात्र क्रमाद्याश्रयणम्। जाघन्यास्तु पत्नीसंयाजावान्तरप्रकरणेनैवोत्पादनप्रका-

पत्न्योपकारकत्वलाभे दर्शपूर्णमासप्रकरणस्थवाक्यवैयर्थ्याप-त्तिश्च। अतः पत्नीसंयाजोद्देशेनैव जाघनीविधिः।

न च—प्राप्तकर्मानुवादेन पत्नीनामपि विधाने देवतात्वेन ग्राह्युद्भावनेऽपि च विशिष्टोद्देशेन वाक्यभेदापत्तिरिति—वाच्यम्; अवान्तरप्रकरणादेव कर्मविशेषोद्देशसंभवेनावाक्यभेदात्। अतो नास्य प्रकरणादुत्कर्षः। अग्नीषोमीय-प्रकरणस्थवाक्यं तु विकल्पेन प्राप्तायानियमार्थमिति वक्ष्यते। न चैवं तत्र हृद्दस्थजाघन्या एव नियमसंभवेन पश्वनुनिष्पन्नाया ग्रहणे प्रमाणाभावः। प्रतिपत्त्यन्तराभावेनोपस्थितायास्तस्यास्त्यागे प्रमाणाभावादिति तत्रैव वक्ष्यमाणत्वात् ॥ ३ ॥ ४४ ॥ इति दशमं जाघन्यधिकरणम् ॥

---

राम्नानमिति लोकसिद्धग्रहणे न बाधकमित्यर्थः। **वाक्यवैयर्थ्यापत्तिरिति** । अभ्युदयशिरस्कत्वफलकल्पनस्यानन्यगतिकस्येह कल्पनापेक्षया द्रव्यत्वेन विधानमेव युक्तमित्यर्थः। **अवाक्यभेदादिति** ॥ पत्नीसंयाजनामधेयावयवभूतपत्नीशब्दस्य मान्त्रवर्णिकदेवतारूपदेवपत्न्यनुवादकत्वेऽपि न तस्येतरव्यावृत्त्यर्थतया यागविशेषणत्वम्; तस्यावान्तरप्रकरणादेव सिद्धेर्यागविशेषस्यैवोद्देश्यत्वेनोभयविधवाक्यभेदाभावादित्यर्थः ॥ **विकल्पेनेति** ॥ अतिदेशतः आज्येन सहेति शेषः। **वक्ष्यत इति** ॥ पूर्वलिखितद्वादशतुरीयपादाधिकरण इति शेषः ॥ **त्यागे प्रमाणाभावादिति** ॥ एवं सत्यपि हृद्दस्था गृह्येत यदि प्रकृताया विशिष्यप्रतिपत्त्यन्तराम्नानं भवेत्, नत्वेतदस्ति; अतः प्रकृताया एव ग्रहणम्। **नच**—तर्हि पत्नीसंयाजानामेव तत्प्रतिपत्तित्वमस्त्विति—**वाच्यम्**; तथात्वे पत्नीसंयाजानामप्राकृतकार्यकारित्वापत्तेः। अतः आराहुपकारकेष्वेवातिदेशप्राप्तेषु पत्नीसंयाजेषु जाघनीनियमार्थमित्यपि तत्रैव वक्ष्यमाणमित्यर्थः ॥

प्रयोजनं पूर्वपक्षे प्रकृतौ पत्नीसंयाजा आज्येनैव। सिद्धान्तेतु तेन सह जाघन्या विकल्पः। तथा अग्नीषोमीये पत्नीसंयाजानां संनिपातित्वात्पशुगणे सर्वजाघनीसंस्काराय जाघनीमात्रस्य ग्रहणम्, सिद्धान्ते पश्वनुनिष्पन्नैकतमजाघनीग्रहणमित्यादि स्पष्टत्वादेव नोक्तम्। **यत्तु प्रकाशकृता**—पशौ पूर्वपक्षे प्रकृतजाघनीनियमः; सिद्धान्तेतु तस्यां सत्यामुपादानलाघवानुरोधेन तस्याः ग्रहणम्; तन्नाशादौ तु प्रकृताविव पशावपि लोकत उपादानमिति प्रयोजनान्तरमपि दर्शितम्; तत् सिद्धान्ते जाघनीनाशादौ हविर्नाशप्रयुक्ताज्यस्यैव प्रकृतावपि प्राप्तेः पूर्वपक्षेऽपि संस्कार्याभावेन क्षेपांशलोपेऽपि त्यागांशस्याज्येन लोकसिद्धजाघन्या वाऽनुष्ठानस्य न्यायसिद्धत्वात् पशौ प्रकृतजाघनीनियमस्य तदभावे लोकसिद्धजाघनीग्रहणस्य च वक्तुमशक्तेरयुक्तम् ॥ यद्यपिच "तानि द्वैधम्—" इत्यधिकरणे उपादेयस्थले प्रकृतग्रहणं नास्ति, अतएव व्रीहीणामवघातार्थत्वपूर्वपक्षे यागीयव्रीहिग्रहणे मानाभावात् लोकसिद्धव्रीहिग्रहणेच सति प्रैयङ्गवे चरौ यागीयव्रीह्यभावेऽपि लोकसिद्धव्रीहिभिरवघातोऽदृष्टार्थं कार्य इति प्रयोजनमुक्तम्; तेनैव न्यायेनेह प्रकृतजाघनीग्रहणं सिध्यति; तथापि तदधिकरणे प्रकृतग्रहणनियमस्यैव खण्डनात् न विरोधः ॥

**स्यादेतत्**—प्रकृतौ तावत्सोम–त्वष्टृ–देवपत्नी–राका–सिनीवाली–कुहग्नि–गृहपति–देवताकाः सप्त पत्नीसंयाजयागा आपस्तम्बसूत्रे, बोधायनमते अनुमतिदैवत्याऽप्यधिका इत्याष्टौ। तत्र सोम–त्वष्टृ–देवपत्न्य–ग्निगृहपति–देवताकाश्चत्वारो नित्याः अन्ये काम्याः। नित्यत्वाभिप्रायेणैव चत्वारः पत्नीसंयाजा इति तैत्तरीयलिङ्गदर्शनम्। तेषां सप्तानामपि पत्नीशब्दस्य लिङ्गसमवायेन पत्नीसमुदायदेवताकत्वलक्षणया पत्नीसंयाजपदं नामधेयमिति याज्ञिकमर्यादा। तदिह पत्नीसंयाजावान्तरप्रकरणाविशेषात् सर्वेष्वपि तेषु जाघनीप्राप्त्यापत्तेर्देवपत्नीसंयाजेष्वेव तदनुष्ठानप्रचारो याज्ञिकानां विरुध्येत; एवं पशावप्यतिदेशप्राप्तसर्वपत्नीसंयाजेषु जाघनीप्राप्त्यापत्तिः। अतस्तदविरोधाय पत्नीपदार्थस्य विशेषणत्वे विशिष्टोद्देशवाक्यभेदो दुर्वारः **इति** ॥ **उच्यते**—"आज्येन सोमत्वष्टाराविष्ट्वा जाघन्या पत्नीः संयाजयन्त्याज्यस्य वा गृहीतेन" इत्यापस्तम्बसूत्रे सोम–त्वष्टृ–दैवत्यपत्नीसंयाजानन्तर्यस्य देवपत्नीदैवत्यपत्नीसंयाजे एव संभवात् तत्रैव जाघन्याज्ययोर्विकल्पः। अग्निगृहपतिदैवत्ये त्वाज्यमेवाथवा आनन्तर्याविशेषादुभयोरप्युत्तरयोर्जाघन्याज्यद्रव्ययोर्विकल्पः प्रकृताविति मतभेदो धूर्तस्वाम्यादिभिरुक्तः। पशौ तु पुच्छोर्ध्वाधोभागसम्बन्धीडाव्यवस्थया पत्न्यग्निगृहपतिदैवत्ययोः जाघन्यैव; नत्वाज्यमिति विशेषः। सर्वथा पत्नीपदार्थविशेषणत्वाभावेऽपि तत्रैकजाघनीनिवेशोपपत्तेः; प्रत्युत तद्विशेषणत्वेऽप्यग्निगृहपतिदैवत्ये तदनापत्तेस्तेन विनाप्याद्ययोर्जाघनीनिवारणं नासुलभम्। अतएव पत्नीशब्दोऽत्र न देवतापरः, किन्त्वधिकरणमालादर्शितरीत्या कर्मनामधेयस्य पत्नीसंयाजशब्दस्यैकदेशपरः। तथा च "वसन्ते ज्योतिषा" इति पदस्य ज्योतिष्टोमपरत्वस्येव पत्नीशब्दस्य पत्नीसंयाजरूपकर्मपरत्वात् पत्नीसंयाजं यजन्ति जाघन्येत्येवमेवार्थः। एवञ्च पूर्वपक्षे दर्शपूर्णमासयोः पत्नीसंयाजाकरणापादनतत्परिहारावपि देवपत्नीदैवत्यपत्नीसंयाजविषयावेव द्रष्टव्यौ। तत्रैव जाघनीविधायकवाक्यसत्त्वेन तद्विषय एव विचारात् ॥ **ननु—एवं** तर्हि आज्यवाक्यनिर्विषयत्वापत्त्या तदनुष्ठानसाधनं प्रकृतावयुक्तम्; आज्यविधेर्देवपत्नीसंयाजव्यतिरिक्तविषये चारितार्थ्यात्, अतस्तेषामनुष्ठानेप्येतत्पत्नीसंयाजानुष्ठानं प्रकृतौ दुरुपपादमिति—**चेत्, सत्यम्**; "आज्येन पत्नीसंयाजा" इति तैत्तिरीये सिद्धवन्निर्देशकल्पितविधिना आज्यं सर्वपत्नीसंयाजसाधारणम्, तथापि देवपत्नीसंयाजे विशेषविहितजाघन्या बाधो मा भूदित्येतदर्थमा-

(११ अधिकरणम्।)

**सन्तर्दनम्** ॥ ज्योतिष्टोमे अभिषवणफलके प्रकृत्य "न सन्तृणत्ती"त्यनेनासन्तर्दनं विधाय "थो खलु दीर्घसोमे सन्तृद्ये धृत्यै" इत्यनेन सन्तर्दनं विहितम्। सन्तर्दनं नाम द्वयोः फलकयोः संश्लेषप्रदेशे तनूकरणेन एकोपर्यपरस्य संश्लेषः। तदिदं सन्तर्दनं किं प्रकरण एव निविशते उताग्निष्टोमान्यमात्रे उत्कृष्यत इति चिन्तायाम्—प्रकरणानुग्रहादनुत्कर्षः। न च वाक्यविरोधः; ज्योतिष्टोमस्यापि इष्ट्याद्यपेक्षया दीर्घत्वात् सोमद्रव्यकत्वाच्च दीर्घसोमत्वोपपत्तेः। अतश्च तत्रैव व्रीहियवादिवत्सन्तर्दनासन्तर्दनयोर्विकल्पः। यस्त्वत्र सूत्रे क्रयवदिति क्रयदृष्टान्तो विकल्पे दत्तः स द्वादशे दशभिः क्रीणातीति वचनेन समुच्चयस्य वक्ष्यमाणत्वाद्वचनाभावं कृत्वा बोध्यः। अस्तु वा इष्ट्यादेरिहानुपादानात् तदपेक्षया दीर्घत्वस्य च नित्यत्वेन

"ज्यस्य वा चतुर्गृहीतेने" त्यापस्तम्बसूत्रे विकल्पबोधनद्वारा सर्वथा नाज्यबाधः, किंतु पक्षे सर्वसाधारणतया विहितमाज्यमपीति विधीयते॥ एवंच देवपत्नीसंयाजे तदुत्तरस्मिन्नपि च पत्नीसंयाजे वैकल्पिकाज्यविधेरेतस्य निर्विषयत्वमस्त्येवेति न बाधकम्। एतच्च पारमार्थिकीं याज्ञिकमर्यादामनुसृत्योक्तम्। वार्तिककारप्रभृतिसर्वमीमांसग्रन्थेषु तु सर्वेष्वेव पत्नीसंयाजेषु "आज्येन पत्नीः संयाजयन्ती"तिवत् "जाघन्या पत्नीः संयाजयन्ती"ति वाक्यमाज्यसमानकक्षतया जाघनीविधायकमभिप्रेत्य सर्वोऽप्येतदधिकरणविचार इति तदनुरोधेन पत्नीसंयाजा एव तदुद्देशेन विधीयन्त इत्येवं पूर्वपक्षग्रन्थे जाघनीसंस्कारार्थतया बहूनां पत्नीसंयाजानां विधिरुक्तः पूज्यपादैरित्यलं बहुना विस्तरेण॥

**इति दशमं जाघन्यधिकरणम्॥**

---

**अभिषवणफलके इति** ॥ अभिषवाधारकाष्ठफलक इत्यर्थः। अनेन च "न संतृणत्ति" "संतृद्यादि"ति विधिनिषेधापेक्षितसन्तर्दनीयकर्मप्राप्तिरुक्ता। यद्यपि तैत्तिरीयशाखायां रुद्राध्याये "अधिषवणे" इति धकारः पठितः; तथापि तत्समानार्थकत्वेन स्वकर्तृकाभिषवणफलके इति वाक्यप्रयोगे न बाधकम्। न्यायसुधाप्रभृतिग्रन्थेषु "हनू वा एते यज्ञस्य यदधिषवणे" इति वाक्यलेखनं तु शाखान्तरीयत्वेन पुस्तकलेखनकर्तृप्रमादेनैव वा ज्ञेयम्॥

**ननु**—नैव प्रकारान्तरेण सन्तर्दनं प्राप्तम्; यत्र संतृणत्तीत्यनेन निषिध्यते इत्यत आह—**असन्तर्दनमिति** ॥ नात्र सन्तर्दननिषेधः क्रियते, अपितु उखेषूभयोः फलयोरुपस्थापने संश्लेषस्योभयथापि संभवाद्वक्ष्यमाणसन्तर्दनाभावप्रयुक्तः संश्लेष एव लक्षणया विधीयते; अपेक्षितविधानस्योचितत्वात्। नचार्थप्राप्तसंश्लेषान्यथानुपपत्त्या सन्तर्दनप्राप्तिः; हनूत्वसंस्तवेन कदाचित् संश्लेषप्राप्तावपि तत्र नियमेन सन्तर्दनप्राप्त्यभावेऽनियतप्राप्त्युपजीवनेन तदुपपादने निषेधस्य पाक्षिकत्वापत्तेः। अतएव शास्त्रदीपिकायामपि—"असन्तर्दनं विधाय" इत्येवमेवोक्तम्, नतु सन्तर्दनं निषिध्येति। अतोऽसन्तर्दनपदमर्शआद्यजन्तं कृत्वा न विद्यते सन्तर्दनं यस्मिन्निति व्युत्पत्त्या अन्यपदार्थसंश्लेषो हनूत्वसंस्तवोपस्थित एवात्र विधीयत इति॥

**अपरस्येति** ॥ लोहकीलेनेति शेषः। अत्र च शुद्धे एव ज्योतिष्टोमे निवेशः दीर्घयजमानके वा, अथवोक्थ्यादिसंस्थास्वेवेति पक्षाः सूत्रानुसारेण पूर्वपक्षे वक्तव्याः। तेषु सर्वेष्वपि प्रकरणे निवेशस्य सत्त्वेन लाघवात् संशयकोटौ प्रकरण एवेत्येतावतैव सर्वेषामुपादानं कृतमिति न न्यूनतादोषः॥

**ज्योतिष्टोमस्यापीति** ॥ **अनेन च**—दीर्घश्चासौ सोमश्चेति कर्मधारये सोमपदस्य लतामात्रवाचित्वात् सप्तम्या निमित्तस्य तस्य चाऽप्यपूर्वपक्षे कादाचित्कत्वाभावादिष्ट्याद्यपेक्षया दीर्घत्वोपपादनानुपपत्तिरित्येतत्—**परिहृतम्**; दीर्घसोमपदस्यापेक्षिताङ्गाङ्गिभावपरत्वसंभवेऽनपेक्षितनिमित्तत्वकल्पनायोगात्; अतो दीर्घसोमपदेन यागस्यैव निरूढलक्षणयाऽभिधानात् प्रकृतस्य ज्योतिष्टोमस्यापि दीर्घसोमपदेन ग्रहणोपपत्तिरित्यर्थः॥ सूत्रकारानुक्तमप्युभयवादिसिद्धं विकल्पे दृष्टान्तमाह—**व्रीहियवादिवदिति** ॥ यस्तु सूत्रकृता विकल्पे क्रयणवदिति दृष्टान्तो दत्तः, सः **"क्रयणेषु विकल्पः स्यादेकार्थत्वात्"** इति द्वादशाधिकरणपूर्वपक्षाभिमतोऽपि **"समुच्चयो वा प्रयोगे द्रव्यसमवायात्"** इत्युत्तरसूत्रेण सिद्धान्ते क्रयसाधनानां द्रव्याणां समुच्चयस्य साधनान्नोभयवादिसंप्रतिपन्नः, तथाप्यत्रत्यपूर्वपक्षिणा तत्रत्यसिद्धान्तयुक्तेरसंमतत्वमभिप्रेत्य तत्रत्यसमुच्चयखण्डनसूचनेन नैव दोषः। न हि विक्रेत्रानतिवशात्तत्रोक्तः समुच्चयो युक्तः; तथात्वे ऋत्विगानतिवशात् प्राकृतवैकृतदक्षिणानामपि समुच्चयापत्तेः। अतः सिद्धान्तिनाऽपि तत्र विकल्पस्यैव बलात् स्वीकार्यत्वमापाद्योभयवादिसंमतत्वं ज्ञेयम्॥ **ननु** तत्रत्ययुक्तेरसंमतत्वेऽपि "तं वै दशभिः क्रीणाती"ति वचनबलात्समुच्चयसिद्धेर्न दृष्टान्तत्वं तस्य युक्तमित्यत आह—**वचनाभावं कृत्वेति** ॥ **वस्तुतस्तु**—"अनर्थलोपेऽयं दृष्टान्त" इति वार्तिकोक्तमेव साधु; ततश्चायमर्थः॥ **ननु**—असन्तर्दनेनाप्यभिषवस्य जायमानत्वात् सन्तर्दनविध्यानर्थक्यमित्यत आह—**क्रयणवदिति** ॥ यथाल्पमूल्यत्वात्सोमस्य वासःप्रभृतीनां मध्ये येनकेनचिदानतिसिद्धेः शेषाणि वचनानि व्यर्थानि भवन्ति सन्ति स्वसार्थक्यायाऽऽनतस्यापि पुनरानतिं विधाय तेन क्रीतः सोमोऽभ्युदयकारीति कल्पयन्ति; तथात्राप्यसन्तर्दनेनाभिष-

दीर्घसोमपदवैयर्थ्यापत्तेरष्टदोषदुष्टविकल्पस्य चान्याय्यत्वाद्दीर्घस्य यजमानस्य सोमो दीर्घसोम इत्येवं षष्ठीतत्पुरुषमपि प्रकरणानुरोधेनाङ्गीकृत्य यजमानदैर्घ्ये निमित्ते सन्तर्दनविधानम्।

यदि तु निषादस्थपत्यधिकरणन्यायेन कर्मधारयस्यैव न्याय्यत्वात् यजमानदैर्घ्येण च फलकविदारणाप्रसक्तेस्तद्द्वारकत्वेन सन्तर्दनस्तुतेरसंभवेन "धृत्या" इत्यर्थवादानुपपत्तेर्दीर्घश्चासौ सोमश्चेति कर्मधारय एवाङ्गीक्रियते तथापि ज्योतिष्टोम एव उक्थ्यादिसंस्थान्तरयुक्ते प्रदानविवृद्ध्या प्रदेयसोमविवृद्धेरावश्यकत्वात् दीर्घसोमत्वोपपत्तेर्वाक्यप्रकरणयोरविरोधान्निवेशः।

न च प्रदानविवृद्धेस्तोयादिना संपादनम्; सोमद्रव्यकस्य यागस्य विना वचनं द्रव्यान्तरसंसृष्टेन सोमेन करणायोगात्। न च त्रिपर्वदशमुष्टित्वरूपसोमपरिमाणबाधः; स्थूलदीर्घपर्वसोमग्रहणेन तद्बाधाभावात्। अत एव सोमपदेन यागलक्षणाऽभावात् सोमदीर्घपर्वत्वमेव सन्तर्दने निमित्तमित्यपि शक्यं वक्तुम्।

वस्तुतस्तु—त्रिपर्वदशमुष्टिपरिमितसोमग्रहणोत्तर"मवशिष्टानंशूनुपसमूहती" त्युपसमूहनविधानात्तत्र चार्थवादे "यद्वै तावानेव सोमः स्याद्यावन्तं मिमीते यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्यस्त्वेत्यवशिष्टानंशूनुपसमूहती"ति पूर्वोक्तमाननिन्दयोत्तरादोहनवद्यावदपेक्षितपरत्वप्रतीतेः कपिञ्जलाधिकरणन्यायस्याप्यप्रवृत्त्या परिमाणाभावात् प्रदेयविवृद्धिः सुलभैव।

न च—एवमपि अग्निष्टोमसंस्थाया अङ्गत्वादन्यासां काम्यानां तिसृणां संस्थानांच विकृतित्वेन स्वतः प्रकरणाभावात्

---

वस्य जायमानत्वेऽपि प्रकरणानुगृहीतवचनसामर्थ्यात् दृढतरसंस्कारस्याभ्युदयशिरस्कत्वकल्पनयानर्थलोपो भविष्यतीति ॥

**यजमानदैर्घ्ये निमित्ते इति** ॥ यथैव जञ्जभ्यमानपुरुषसंस्कारार्थत्वेन विधीयमानानुवचने जृम्भाया विशेषणतयोपादानेनाऽजृम्भावतो व्यावृत्त्यार्थाद्भवति जृम्भाया निमित्तत्वम्, एवमिहापि यजमानदैर्घ्यस्य निमित्तत्वम्। तथाच यजमानदैर्घ्ये निमित्ते तत्कर्तृकसोमयागानां सन्तर्दनमित्यर्थः ॥

इष्ट्याद्यपेक्षया दीर्घे ज्योतिष्टोमे अभिषवसत्त्वेन धृतेः इत्यर्थवादानुपपत्त्यभावेऽपीह पक्षे साऽस्तीत्याह—**यजमानदैर्घ्येण चेति** ॥ अस्मिंश्च पक्षे ह्रस्वयजमानकर्तृकप्रयोगेऽप्यभिषवसत्त्वेन स्वरूपेणैव धृतेः सद्भावात् यतो दैर्घ्यं तत्र नास्ति धृतिरित्यनुपपत्तेः धृतिस्वरूपसत्त्वासत्त्वाभ्यामर्थवादोपपत्तेरसम्भवात्सोमगतदीर्घताप्रसक्तफलकविदारणाशङ्कानिवृत्त्यर्थंपरत्वमेवार्थवादस्य वक्तव्यम्, तच्च तवानुपपन्नमित्यर्थः। कर्तृसमवेतस्य दैर्घ्यस्य परविशेषणद्वारा सोमविशेषणत्वे व्यवहितत्वेन बहिरङ्गत्वात्स्वसमवेतस्य च दैर्घ्यस्य सन्निहितत्वेनान्तरङ्गत्वमिति दूषणान्तरस्याप्युपलक्षणमेतत् द्रष्टव्यम् ॥ **प्रदानविवृध्येति** ॥ अग्निष्टोमापेक्षया इतरसंस्थासूक्थ्यादिग्रहणानामधिकानामङ्गानां सत्त्वात् तदर्थं सोमवृद्धेरावश्यकत्वमित्यर्थः ॥ **दीर्घसोमत्वोपपत्तेरिति** ॥ यद्यपि अग्निष्टोमादेरप्यनुपादानान्न तत्प्रतियोगिकं दीर्घत्वमुपपादयितुं शक्यम्; तथापि सोमपदेनैव तत्सजातीयसोमान्तराणां सजातीयत्वेन बुद्धावुपस्थितत्वात् द्विरात्राद्यपेक्षया प्रकरणेन झटित्युपस्थिताग्निष्टोमप्रतियोगिकं दीर्घत्वमन्यपक्षापेक्षया सूपपादमिति तदुपपत्तिरुक्थ्यादिसंस्थास्विति भावः ॥ **स्थूलदीर्घपर्वेति**—॥ स्थूलत्वं च मुष्टिपरिणामाविरोधेन ज्ञेयम्। पूर्वस्मिन्पक्षे सोमद्रव्यगतदैर्घ्यानुक्तेः यजमानगतदैर्घ्येण दीर्घसोमत्वोपपादने यागलक्षणायामपि यजमानदैर्घ्यस्य निमित्तत्वमर्थादुक्तम्, अस्मिन् पक्षे तु सोमगतदैर्घ्यस्यापि संभवात् तस्यैव शब्दतो निमित्तत्वसंभवे किमिति यागपर्यन्तलक्षणयाऽऽर्थिकनिमित्तत्वाश्रयणं कर्तव्यमित्यभिप्रेत्याह—**अत एवेति** ॥ नच संस्थानामुपस्थित्यर्थं यागलक्षणा; प्रतिपदि द्वित्वादिनिमित्तोपस्थापितासन्निहितकुलायादियागवाचकपदान्तरकल्पनया तदङ्गत्वस्येवेहापि तदुपस्थापितप्रकरणसन्निहितसंस्थाङ्गत्वोपपत्तेर्लक्षणायां प्रयोजनाभावादिति भावः ॥ **उपसमूहनविधानादिति** ॥ उपसमूहनं नामेकीकृत्योपादानम्। अंशूनां संस्कार्यत्वात् तद्गतबहुत्वाविवक्षयैकांशुग्रहणेनाप्युपसमूहनसिद्धेर्न तावता सोमवृद्धिरित्यत आह—**उत्तरादोहनवदिति** ॥ "नास्यैतां रात्रिं कुमारा अपि पयो लभन्ते" इति अर्थवादे सर्वासामेव दोहनप्रतीत्या अधिकानामप्युत्तरासां दोहनवदिहाप्यर्थवादे यावदपेक्षितग्रहणप्रतीत्याऽधिकानामेवांशूनां परिमाणबाधेन ग्रहणात्तदुपपत्तिरित्यर्थः ॥ **ननु**—कस्य प्रकरणम्? येन सह दीर्घसोमे इति वाक्यस्याविरोध उच्यते; न तावच्छुद्धसंस्थानाम्; अग्निष्टोमसंस्थाया अङ्गत्वेनं स्वतः प्रकरणाभावात्, इतरासां तु काम्यत्वेन तदभावात्, नापि सर्वसंस्थाकज्योतिष्टोमस्य; संस्थानां प्रकरणितावच्छेदककोटिनिवेशे मानाभावात्, गौरवाच्च। अतः परिशेषात्ज्योतिष्टोमत्वं प्रकरणितावच्छेदकं वाच्यम्। तत्र च प्रदानविवृध्यभावेन प्रदेयवृद्ध्यप्रसक्तौ कथं दीर्घसोमत्वमुपपद्यते? इत्याशङ्कां परिहरति—**नचैवमपीति** ॥ **एतेन**—संस्थानां विकृतित्वेन स्वतः प्रकरणाभावस्य वक्ष्यमाणत्वात् संस्थासु च पृषदाज्यवत् प्राकृताङ्गानुवादेनापूर्वाङ्गविधानाभावेन सन्तर्दनस्यानिवृत्ताकाङ्क्षारूपप्रकरणग्राह्यत्वानुपपत्तेः संस्थाऽवान्तरप्रकरणे सन्तर्दनस्य विधानाभावात् प्रत्युत संस्थाभिरग्राह्यैर्ज्योतिष्टोमिकधर्मैर्व्यवधानात् न संस्थानां प्रकरणेनोपस्थितत्वाद्वेतोर्ग्रहणं युक्तमिति भाष्यकारीये सिद्धान्ते वार्तिकोक्तदूषणम्—**परिहृतम्** ॥ फलाय विधीयमानेऽपि गोदोहने दर्शपूर्णमासौ प्रकृतिभूतावेव, एवं फलार्थमुक्थ्यादिसंस्थानानुष्ठानेऽपि

ज्योतिष्टोमे च प्रदानवृद्ध्यभावेन प्रदेयवृद्ध्यभावात् कथं वाक्यप्रकरणयोरविरोध इति; वाच्यम्—काम्यसंस्थासु ग्रहणाविवृद्ध्या आश्रयभूतज्योतिष्टोमाभ्यासे विवृद्धेरावश्यकत्वात्, संस्थानां चतुर्णामपि स्वतःप्रकरणाभावेऽपि च ज्योतिष्टोमस्य सर्वत्रानुस्यूतत्वात् काम्यसंस्थाकज्योतिष्टोमप्रयोगे सन्तर्दनविधानेन प्रकरणानुग्रहोपपत्तेः। अत एवाग्निष्टोमसंस्थाकज्योतिष्टोमप्रयोगेऽसन्तर्दनं प्रदानविवृद्ध्यभावादिति न विकल्पोऽपि। अत एव च दीर्घत्वस्यानुयोगिनः काम्यसंस्थाकज्योतिष्टोमस्य प्रतियोगिनश्च नित्यसंस्थाकज्योतिष्टोमस्य प्रकरणादेव लाभादतिलाघवम्।

न च—एवमितरसंस्थाकज्योतिष्टोमस्यापि प्रकरणे अङ्गीक्रियमाणे "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वा अथान्येन यजते गर्त्तपत्यमेव तद्भवतीत्यत्रापि एतच्छब्देनेतरसंस्थाकस्य ज्योतिष्टोमस्य ग्रहणापत्तेरग्निष्टोमसंस्थाकस्यैव प्रकरणात् ग्रहणं वक्ष्यमाणं विरुध्येतेति—वाच्यम्; ज्योतिष्टोमत्वावच्छेदेनैव फलवत्त्वेन प्रकरणाङ्गीकारात्, अग्निष्टोमसंस्थाया अङ्गत्वेनेतराङ्गवत्प्रकरणावच्छेदकत्वानुपपत्तेश्च। एतच्छब्देन तु ज्योतिष्टोमत्वावच्छिन्नस्योक्तावपि अन्यशब्देन तद्विकृतिमात्रवाचकेन संस्थानामप्युक्तत्वात् तासामपि ज्योतिष्टोमोत्तरकालविधिप्रतीतेरर्थादग्निष्टोमसंस्थाकस्यैव प्रथमं करणोपपत्तेः। अतो वाक्यप्रकरणयोरविरोधात् प्रकरण एव सन्तर्दनस्य निवेश इति प्राप्ते—

भाष्यकारेण तावदिष्टापत्त्यैव सिद्धान्तितम्। पूर्वपक्षश्चाद्यप्रकारद्वयेनैव कृतः, वार्तिककारेण तु विकृतिमात्रे विवृद्धसोमके निवेश इत्युक्तम्। तस्यायमाशयः—दीर्घत्वं तावत् ग्रहणविवृद्धिप्रयुक्तसोमविवृद्धिकृतमिति भवतोऽप्यविवादम्। विवृद्धग्रहणानि च संस्थाङ्गानि वचनान्न तु ज्योतिष्टोमाङ्गानि। अतश्च दीर्घसोमत्वस्य ज्योतिष्टोमसंबन्धाभावाद्विकृतिमात्रपरत्वमिति।

न चोक्तग्रहणानां ज्योतिष्टोमाङ्गत्वाभावेऽपि संस्थाद्वारा तत्संबन्धसत्त्वात्तस्य दीर्घसोमत्वोपपत्तिः; सर्वतोमुखादौ

---

तदाश्रयो ज्योतिष्टोमः प्रकृतिरूप एवेति "नित्यात्काम्यस्य शैघ्र्यादि"ति विधिरसायनश्लोकविवरणोपपादितरीत्या काम्यसंस्थाकज्योतिष्टोमस्यापि ज्योतिष्टोमत्वानपायात् तस्य च भेदाभावेन प्रकरणितावच्छेदकरूपाक्रान्तत्वेन काम्यसंस्थाकज्योतिष्टोमप्रयोगे तदनुष्ठानेन प्रकरणानुग्रहसंभवादित्यर्थः॥ **प्रदानविवृद्ध्यभावादिति—॥ ननु**—प्रदानवृद्धिकृतप्रदेयवृद्ध्या अग्निष्टोमे दीर्घसोमत्वाभावेऽपि अंशूनामनियतपरिमाणानामुपादानस्य तत्रैव विहितस्यातिदेशतः संस्थासु प्राप्तेः तानादाय संस्थास्विवाग्निष्टोमेऽपि दीर्घसोमत्वोपपत्तेः कथं न सन्तर्दनम्? इति—**चेत्, सत्यम्,** तथाऽप्यवशिष्टांशुग्रहणोपपादनपक्षे अग्निष्टोमे दीर्घपर्वसोमग्रहणनियमाभावात् सोमगतदीर्घत्वमादाय दीर्घसोमत्वस्य निमित्तत्वानुपपत्तेरंशुग्रहणेन बहुसोमसद्भावेऽपि तद्गतदीर्घत्वस्य प्रदेयवृद्ध्यभावेन कालकृतत्वेन वक्तुमशक्तेः यागपरत्वेऽपि वा तस्य स्वरूपेण कालतोऽपि दैर्घ्याभावान्नोभयपरत्वेऽप्यग्निष्टोमे संतर्दनप्राप्तिः, संस्थासु तु सोमे यागेऽपि वा कालकृतदीर्घत्वस्य ग्रहणान्तराद्यपूर्वाङ्गानुष्ठानेन संभवान्न काचित्क्षतिः॥

**ननु**—प्रतियोगिसापेक्षे दीर्घत्वे प्रकरणोपस्थितज्योतिष्टोमत्वावच्छिन्नस्यैव तत्त्वेनान्वयात् काम्यसंस्थाकज्योतिष्टोमस्यापि प्रतियोग्यन्तःपातितया तदपेक्षया दीर्घसोमत्वस्य द्विरात्रादिष्वेव संभवात् कथं संस्थासु सन्तर्दनम्? इत्यत आह—**अत एव चेति॥** अग्निष्टोमसंस्थाकस्यैव प्रतियोगित्वेनान्वयेऽपि तत्र ज्योतिष्टोमत्वस्यापि सत्त्वात् तदवच्छिन्नप्रकरणानुग्रहः संभवत्येवेति तदपेक्षयैव दीर्घत्वमादाय संस्थासु सन्तर्दननिवेशेनापि प्रकरणानुग्रहसंभवे किमिति प्रकरणबाधपर्यवसायिनः संस्थानामपि प्रतियोगित्वेनान्वयस्याश्रयणमिति न द्विरात्रादिषु सन्तर्दनापत्तिरित्यर्थः॥ योऽप्यत्र वार्तिककृता "यथान्येन" इत्यत्रान्यपदेनाग्निष्टोमान्यसंस्थासाधारणविकृतिग्रहणम्; तथेहापीति दृष्टान्तकथनव्याजेन संस्थानां प्रकरणाङ्गीकारे तत्राप्यन्यशब्देन संस्थातिरिक्तविकृतिग्रहणस्यैतच्छब्देन च सर्वसंस्थाकज्योतिष्टोमग्रहणस्यापत्त्या पाञ्चमिकाधिकरणविरोधो भाष्यमते आपादितः, तमनूद्य दूषयति—**नचैवमितरेति॥ तद्विकृतिमात्रवाचकेनेति॥ अयमर्थः**—एतच्छब्देनाग्निष्टोमग्रहणेऽपि प्रकरणानुग्रहोपपत्तेरन्यशब्दसङ्कोचे मानाभावादग्निष्टोमविकृतिमात्रवाचकत्वमेव युक्तम्। नहि ज्योतिष्टोमत्वावच्छिन्नमात्रग्रहण एव प्रकृतानुग्रहः, येन तद्व्यतिरिक्तत्वेनान्यपदेन संस्थानां ग्रहणं न स्यात्; अग्निष्टोमस्यापि ज्योतिष्टोमत्वेन प्रकृतग्रहणोपपत्तेः। **किंच** यज्ञानां मध्ये प्रथमयज्ञत्वेनोक्तस्य ज्योतिष्टोमस्यैव प्रकृतत्वादेतच्छब्देन ग्रहणम्। प्रथमयज्ञत्वं च ज्योतिष्टोमस्यैवेति तस्यैव ग्रहणे सिद्धे न तद्व्यतिरिक्तत्वं यज्ञानामिति पदोपस्थितविकृतियज्ञमात्रस्यैव ग्रहणमन्यपदेन युक्तम्। **अपिच एतेनेति** तृतीयाश्रवणात् एतत्करणकभावनायाः पूर्वकालत्वप्रतीतेरग्निष्टोमयागस्यैव भावनां प्रति करणत्वात् संस्थान्तरयुक्तज्योतिष्टोमस्याश्रयत्वेनान्वयेऽपि तत्प्रतियोगिकदीर्घत्वानुयोगित्वस्य प्रकरणानुग्रहाय संस्थान्तरयुक्ते ज्योतिष्टोम एव स्वीकारे न किंचिद्बाधकमिति॥

भाष्यकारसिद्धान्ते वार्तिककारोपपादितसकलदूषणपरिहारे स्वयं कृते सति कया युक्त्या तर्हि अग्निष्टोमान्यविकृतिमात्रे सन्तर्दनमिति वार्तिककारीयसिद्धान्तोपपत्तिरित्यपेक्षायामाह—**तस्यायमाशय इति॥ अविवादमिति॥** भाष्यकारेण

पूर्वादिदिक्षु अग्निष्टोमादिनानासंस्थाके दिगन्तरे दीर्घसोमत्वस्य सत्त्वादग्निष्टोमसंस्थाकेऽपि सन्तर्दनापत्तेर्यदङ्गग्रहणविवृद्धिप्रयुक्तविवृद्धप्रदेयकत्वं यत्प्रयुक्तविवृद्धप्रदेयकत्वमेव वा यत्र तत्र तदपूर्वसाधनीभूतफलकसंस्कारकतया सन्तर्दनविध्यवगमादुक्तविवृद्धेश्च संस्थाप्रयुक्तत्वेन ज्योतिष्टोमप्रयुक्तत्वाभावात्तदङ्गत्वेन सन्तर्दनविध्यनुपपत्तेर्वाक्येन प्रकरणं बाधित्वोक्तविधसर्वविकृतावेव निवेशः, नतु संस्थास्वेव; तासां विकृतित्वेन प्रकरणाभावादिति।

अतएव सन्तृद्यादिति धातोः सकर्मकत्वादनुषक्तद्वितीयान्तपदेन फलकस्यैव संस्कार्यत्वावगमाद्दीर्घसोमस्योद्देश्यत्वतद्विशेषणत्वयोरसंभवेन निमित्तत्वमेव। अत एव नायं बहुव्रीहिर्न वा सोमपदेन यागलक्षणया स्वराक्रान्तोऽपि तत्पुरुषः, अपि तु तेन लतामेवोक्त्वा तत्पुरुषः; समासत्वाच्च न निमित्तेऽपि विशिष्टोद्देशे वाक्यभेदः ॥३॥ ४५ ॥

इत्येकादशं सन्तर्दनाधिकरणम् ॥

---

सोमविवृद्धिकृतस्य दीर्घत्वस्योपपादनादविवादमित्यर्थः ॥ **तदङ्गत्वेन सन्तर्दनेति** ॥ ज्योतिष्टोमाङ्गत्वेनेत्यर्थः । **उक्तविधेति** । यदङ्गग्रहणविवृद्धिप्रयुक्तविवृद्धप्रदेयकत्वं यस्यां विकृतौ तादृशाग्निष्टोमान्यसर्वविकृतिमात्र इत्यर्थः । अग्निष्टोमसंस्थामधिकृत्यैव सकलज्योतिष्टोमधर्माम्नानात् "तस्य नवतिशतं स्तोत्रीया" इति लिङ्गदर्शने उक्तानां स्तोत्रीयाणामृचामग्निष्टोम एव नवत्युत्तरशतत्वादग्निष्टोमस्यैव प्रकरणम्, न संस्थानामित्याशयेन तासां प्रकरणमेव नास्तीति दर्शयति—**प्रकरणाभावादिति** ॥ **ननु** दीर्घसोमपदेन यागाभिधानात्काम्यसंस्थाकज्योतिष्टोमस्य पूर्वोक्तरीत्या दीर्घसोमपदासंग्रहात् संस्थानां च यागत्वाभावात् कथमितरविकृतियागवद्दीर्घसोमपदेन ग्रहणम्? येनाग्निष्टोमान्यमात्रे संस्थासाधारण्येन सन्तर्दननिवेशः स्यात् **इत्यत आह—अत एवेति** ॥ अतश्च दीर्घसोमत्वे निमित्ते फलकोद्देशेन सन्तर्दनविधानात् तस्य च प्रदेयवृद्ध्या संस्थासाधारण्यात् सर्वत्रैव तन्निवेशो नासुलभ इत्यर्थः । एवं स्वाभिमतरीत्या अग्निष्टोममात्रे निवेश इति सिद्धान्ते स्थिरीकृते वार्तिकतन्त्रन्यायसुधादिग्रन्थेष्वपेक्षिताङ्गपरत्वे संभवत्यनपेक्षितनिमित्तपरत्वकल्पनायोगात् दीर्घसोमपदस्य लक्षणया यागपरत्वं कालकृतमेव दीर्घत्वं चादाय संस्थाद्विरात्रादिषु सन्तर्दननिवेशोपपादनं यत् कृतम्; तद्दूषयति—**अतएव नायमिति** ॥ दीर्घः सोमो यस्मिन् यस्येति वा बहुव्रीहिमङ्गीकृत्य यागस्य यजमानस्य वा निमित्तत्वम्; अथ वा तयोरुद्देश्यमेवादायार्थात् सोमगतदीर्घत्वस्य निमित्तत्वमिति यद्यपि वार्तिकेऽनङ्गीकृतम्; तथापि तटस्थाशङ्कापि वक्ष्यमाणविरोधात्परिहर्तव्येत्यभिप्रायेणाद्युदात्तस्य "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इति विहितस्यापत्त्या पठ्यमानान्तोदात्तस्वरानुपपत्तेरयुक्तेति प्रसङ्गात्परिहर्तुं नायं बहुव्रीहिरित्युक्तम् । स्वरानुपपत्तिः स्वराक्रान्तोऽपीत्यपिना सूचिता ॥ वार्तिककारमते बहुव्रीहेरनाश्रयणाद्यागलक्षणया कर्मधारयाङ्गीकारात् स्वरोपपत्तेरङ्गितापरत्वमस्त्वित्याशङ्कानिराकरणं लक्षणयेति पदेन सूचितम् । अतएव नायमित्यत्रात एवेति वक्ष्यमाणहेत्वभिप्रायम् ॥ **अयं त्विति** ॥ दीर्घश्चासौ सोमश्चेति कर्मधारयतत्पुरुषाङ्गीकारेण दीर्घसोमपदस्य निमित्तपरत्वमेव युक्तम्, नतु लक्षणामङ्गीकृत्योद्देश्यपरत्वम्; लक्षणापत्तेः, फलकयोरेवोद्देश्यत्वादनपेक्षितत्वस्य तत्रापि समानत्वादिति भावः ॥ फलकयोरप्युद्देश्यानेकत्वाद्वाक्यभेदस्य निमित्तत्वेन परिहारसंभवेऽपि विशिष्टोद्देशे वाक्यभेदं प्रसक्तं परिहरति—**समासत्वादिति** ॥ तदनेन प्रकारेण वार्तिककारीयसिद्धान्तोपपादनम् न परमार्थतः पूज्यपादानामभिप्रेतमिति मम प्रतिभाति ॥ **तथाहि**—यदि ग्रहणवृद्धिकृतं दीर्घत्वमादाय निमित्तपरत्वं तस्य, तर्हि द्विरात्रादिषु केषांचिदह्नामग्निष्टोमसंस्थात्वेन तत्र प्रदेयवृद्ध्यभावेन निमित्तासंभवात् सन्तर्दनानापत्तेरिति वार्तिकोक्तदूषणात् कथं मुक्तिः? अतो द्विरात्राद्यन्तर्गताग्निष्टोमसंस्थाककतिपयाहःसु वार्तिककाराभिप्रेतसन्तर्दनप्राप्त्यै यागगतमेव कालतो यद्दीर्घत्वं तदेव विवक्षितम् ॥ **अपिच** प्रदानवृद्ध्या प्रदेयसोमवृद्धौ सोमे बहुत्वे सिद्धेऽपि तत्र कालकृतं दीर्घत्वं दुरुपपादमेव । नहि रसवृद्धौ दीर्घः सोम इति प्रतीतिः कस्याप्यस्ति । यागे तु अभ्यासवृद्ध्या बहुकालसाध्यत्वात् तत्कृतं दीर्घत्वमुपपद्यते ॥ **किंच** निमित्ताङ्गीकारे कदाचिद्विक्रेत्रा दशमुष्टिपिपर्वत्वाविरोधेनैव स्थूलदीर्घपर्वा सोम आनीतः, तादृशदीर्घसोमवत्प्रयोगगतदीर्घसोमत्वस्यापि कादाचित्कत्वात्साक्षादेव दीर्घत्वोपपत्तेश्च दुर्निवारमेव निमित्तत्वमिति कदाचित्तादृशनिमित्तवत्यग्निष्टोमे तादृशनिमित्ताभाववति च विकृत्यन्तरे सन्तर्दनप्राप्त्यप्राप्त्यापत्तिः ॥ **एतेन**—यदङ्गग्रहणेति विवक्षायामपि यच्छब्दोपात्ताङ्गिनो द्विरात्रादौ द्विरात्रत्वादिरूपेण ग्रहणे बाधकाभावात् तत्र च प्रदेयवृद्धिसत्त्वेन दीर्घसोमत्वसंभवे निमित्तत्वस्योपपत्तेरग्निष्टोमसंस्थाकेष्वप्यहःसु तत्सुलभमेवेति—**परास्तम्**; तथात्वे सर्वतोमुखीयाग्निष्टोमीयसस्थादिगन्तरेष्वप्यनेनैन न्यायेन तदापत्तेर्यदङ्गग्रहणेति विवक्षाया एव वैयर्थ्यापत्तेश्च । अपिच संस्थासु भवन्मते अंशुग्रहणेनैव प्रदेयवृद्धिकरणात्तदभिषवस्य चाग्निष्टोमे समानत्वात् तदभिषवप्रयुक्तफलकविदारणस्य प्रकृताविव तास्वप्यप्रसक्तेः. "धृत्या" इत्यर्थवादानुपपत्तिः । अतो "दीक्षाः सोमस्य" "दर्शपूर्णमासाविष्ट्वा सोमेन यजेते"त्यादिषु सोमशब्दस्य यागे निरूढलक्षणया प्रयोगात् तस्याश्च शक्तितुल्यत्वे बाधकाभावाद्यागपरत्वं कालकृतम् दैर्घ्यं च ग्रहीतुं युक्तम् ॥ ततश्च द्विरात्रादेः द्विरात्रत्वेनैव दीर्घत्वादग्निष्टोमसंस्थाकेष्वहःस्वपि सन्तर्दनोपपत्तेः तत्तुल्यन्यायतया सर्वतोमुखीया-

( १२ अधिकरणम्। )

**सङ्ख्यायुक्त** ॥ अनारभ्याधीतः प्रवर्ग्यो "यत्प्रवर्ग्यं प्रवृञ्जती"ति श्रुतः। तस्य च "पुरस्तादुपसदां प्रवर्ग्येण प्रवृणक्ती"ति ज्योतिष्टोमाङ्गत्वेन विनियोगः; अव्यभिचरित-

---

ग्निष्टोमीयसंस्थे दिगन्तरेऽपि सन्तर्दनमस्मन्मते इष्टमेव; कालतो दैर्घ्यस्य सर्वतोमुखेऽपि सत्त्वात्॥ **ननु** कादाचित्कविक्रेत्रानीतस्थूलदीर्घपर्वसोममादाय निमित्तपरत्वमेव कुतो न स्यादिति—**चेन्न**; तथात्वे सन्तर्दनविधेः पाक्षिकनिमित्तत्वरोधेनात्यन्तं सङ्कोचापत्ते,। तदपेक्षया दीर्घसोमयागस्योद्देश्यत्वेऽग्निष्टोमापेक्षया सर्वविकृत्यन्तरमात्रपरत्वात् सन्तर्दनविधेर्नियमेन वहुविषयत्वकल्पनस्यैवोचितत्वात्। अत एव सप्तम्या प्राधान्यलक्षणा द्वारीभूतफलकयोरवान्तरप्रकरणात्प्राप्तेर्दीर्घकालसाध्यविकृतिरूपसर्वसोमयागाङ्गमेव संतर्दनमिति। एतच्च सर्ववार्तिककारीयसिद्धान्तोपपादने दीर्घत्वं तावद्ग्रहणविवृद्धिप्रयुक्तसोमवृद्धिकृतमिति भवतोऽप्यविवादमित्युक्तौ त्वदभिमतेनैव दीर्घसोमत्वेनाग्निष्टोमान्यमात्रे निवेश इत्येतद्वार्तिकसिद्धान्तोऽप्युपपादयितुं शक्यते, न तु त्वदभिमतं दीर्घसोमत्वं वस्तुतो युक्तमिति भवत्पदेन पूज्यपादैः सूचितम्। परन्तु काम्यसंस्थासु प्रकृताविवांशुग्रहणेनापि प्रदेयवृद्धिसिद्धेर्नियमेन विप्रकृष्टसर्वस्थूलसोमग्रहणे प्रमाणाभावात् याज्ञिकाचारस्यापि तथा दर्शनादभिषवाधिक्याभावेन फलकविदारणाप्रसक्त्या "धृत्या" इत्यर्थवादानुपपत्तिः भाष्यवार्तिककारीयोभयमते दुर्वारैव। ततश्चार्थवादान्यथानुपपत्त्या कर्मधारयाङ्गीकारवत्प्रसक्तवहुभिषवप्रयुक्तफलकविदारणशङ्कासद्भावात् तत्रैव द्विरात्रप्रभृतिषु संतर्दनमङ्गत्वेन विधीयते, न संस्थास्वपि; तासां दीर्घसोमपदेनाग्रहणादिति विभावनीयम्—**इति**॥

**अस्मिंश्चाधिकरणे** वाक्यप्रकरणविरोधोऽयमित्यधिकरणारम्भवार्तिकमवतारयता न्यायसुधाकृता दीर्घसोमे इति सप्तम्या प्राधान्यानभिधानादधिकरणत्वस्य संतर्दनं प्रति यागस्यायोगाद्वाक्यप्रकरणविरोध इह चिन्त्यते इत्युक्तम्, **तस्यायमाशयः**—यद्यप्यहीनाधिकरणे द्वित्ववहुत्वाधिकरणे चाहीनादिप्रातिपादिकश्रुत्यैव सह प्रकरणविरोधाविरोधौ चिन्तितौ, तावतैव तदधिकरणयोः श्रुतिप्रकरणविरोधविषयः प्रतिपादितः, तथेहापि दीर्घसोमप्रातिपादिकश्रुतेरेव प्रकरणेन सह विरोधचिन्तनात् संभवत्येव श्रुतिप्रकरणविरोधः; तथापि न तत्र प्रतिपादिकश्रुत्या सह प्रकरणस्य विरोधश्चिन्त्यते। अङ्गत्वप्रमाणीभूतश्रुत्यादिभिः सहैव परस्परं विरोधविषयस्य विचारणीयत्वात्। इतरथा अङ्गत्वस्य तत्प्रमाणानामेव च निरूपणस्याध्यायार्थत्वेन प्रतिज्ञानादस्य विचारस्याध्यायसङ्गत्यनापत्तेः। अतस्तत्र षष्ठीश्रुतिः किं प्रमाणानुगृहीता अहीनादिपदार्थस्याङ्गितां बोधयति, **अथवा** तदनुगृहीतस्येति संशयपूर्वको विचारः कर्तव्यत्वेन युक्तोऽपि स अहीनप्रातिपदिकश्रुतिप्रकरणविरोधाविरोधफलीभूत इत्यर्थसिद्धत्वान्न क्रियते॥ सर्वथापि तु तत्राङ्गत्वप्रमाणीभूतषष्ठ्यादिश्रुतिप्रकरणविरोधावेव विचारणीयौ। इह तु घटकीभूतपरोद्देश्यताकृतिकारकत्वयोः प्राधान्यवाचकः शब्द इत्येतल्लक्षणे लक्षितायाः श्रुतेरभावान्न सप्तम्याः श्रुतित्वम्। तस्याः प्राधान्यवाचकत्वाभावात्। षष्ठ्यां तु सम्वन्धत्वेनरूपेणोद्देश्यवाचकत्वात् सुलभं श्रुतित्वम्। अतएव पूज्यपादैरपि निरुक्तं श्रुतिलक्षणं विधाय यत्र विभक्तेः विभक्त्यन्तरार्थे लक्षणा; तत्र वाचकत्वाभावात् न श्रुतित्वमिति वाक्यीय एव विनियोग इति उक्तमस्मिन्नेवाध्याये तेषामर्थाधिकरणे। अतो युक्तमुक्तं वाक्यकरणविरोधोयमिति॥

**पूज्यपादैस्तु**—षष्ठीस्थलेऽपि शक्त्या सम्वन्धत्वेन रूपेण संवन्धसामान्यस्यैव वाच्यत्वात् तत्तत्कारकत्वबोधार्थविशेषलक्षणाया आवश्यकत्वान्न कारकतावाचकत्वमिति न श्रुतित्वमित्यभिप्रेत्य वाक्यीय एव विनियोग इत्यहीनाधिकरणमारभ्य प्रकरणस्य वाक्येनैव विरोधश्चिन्तितः॥ सर्वथापि तु विभक्तेः विभक्त्यन्तरार्थे लक्षणायां तया विभक्त्या विनियोगो वाक्यीय एवेति सिद्धेः दीर्घसोमपदस्य निमित्तत्वपरत्वे इह प्रकरणस्य वाक्यविरोधेऽपि उद्देश्यत्वपक्षे सप्तमीश्रुत्या तदभिधानात् श्रुत्यैव तस्य विरोध इति कथं वाक्यप्रकरणविरोधोक्तिः पूज्यपादानामित्याशङ्का–**परास्ता**॥ एतच्च मर्यादामनुरुध्योक्तम्॥

**वस्तुतस्तु**—वेदे सर्वत्र शक्तितुल्याया एव निरूढलक्षणाया अङ्गीकारात् वाचकत्वघटितं श्रुतिलक्षणं पूर्वोक्तमुपेक्ष्य शक्तिनिरूढलक्षणान्यतरवृत्त्योद्देश्यत्वकृतिकारकत्वयोः प्राधान्येन बोधकः शब्दः इत्यपि श्रुतिलक्षणं शक्यतैव कर्तुमिति सर्वत्र विभक्तिकृतविनियोगमात्रे श्रौत एव विनियोगः। इतरथा विभक्तीनामनियतश्रुतित्वापत्तिः। मास्तु वा एतादृशस्थले मुख्यश्रुतिव्यवहारः, तथापि समानाभिधानैकपदोपात्तत्वश्रुत्योरिवेहापि लाक्षणिकार्थपरविभक्तौ गौणः श्रुतिव्यवहारोऽस्तु। तथाच गौणमुख्यसाधारणश्रुतिप्रकरणविरोधाविरोधविचारकरणेऽपि वाधकाभावात् शक्यत एव श्रुतिप्रकरणविरोधाविरोधोऽयमिति वक्तुम् इति॥

## इति सन्तर्दनाधिकरणम्॥

---

अत्राहीनाधिकरणे यथैव श्रुतिप्रकरणविरोधाविरोधौ, अग्रे च श्रुतिमुज्झित्वा वाक्यप्रकरणयोस्तौ प्राचां मते, स्वमते तु सर्वत्रैव श्रुतिपरित्यागेनैव वाक्यप्रकरणयोस्तौ, तथैवेहापि वाक्ययोर्विरोधाविरोधसंभवात्सङ्गत्युपपत्तेरनभ्याधीतयोः प्रवर्ग्यविधिनिषेधयोरप्येतदधिकरणविचारविषयत्वं सूचयितुं उच्चैर्घोषेण प्रवर्ग्यस्यानारभ्याधीनत्वं दर्शयति—**अनारभ्याधीतेति**॥अत्र प्रवर्ग्यप्रवृञ्जनशब्दयोरर्थः प्रवर्ग्यकाण्डभाष्ये विद्यारण्यस्वामिभिः प्रदर्शितः। तप्ते घृते पयः प्रक्षेपः **प्रवृञ्जनम्**; तद्यस्मिन्कर्मविशेषे विद्यते सोऽयं प्रवर्ग्यः, स कर्मविशेषो यथा संपद्यते तथा प्रवृञ्जनं कुर्यात्—इति॥

क्रतुसंबन्धसहकृतद्विरुक्तत्वन्यायेन तदुपस्थितेः। न च उपसदङ्गत्वमेव किं न स्यादिति—वाच्यम्; उपसत्पदस्य पुरस्तात् कालप्रतियोगित्वेन स्वार्थोपस्थापकस्योद्देश्यसमर्पकत्वाभावात्, उपस्थितत्वात् तद्वाचकपदान्तरकल्पनयोद्देश्यत्वाङ्गीकारे तु उपसदां फलवत्त्वज्ञानार्थं ज्योतिष्टोमोपस्थितेरावश्यकत्वात् लाघवेन तदर्थत्वोपपत्तेः, कौषितकिब्राह्मणे प्रकरण एव प्रवर्ग्याम्नानाच्च।

तत्र च न प्रथमयज्ञे प्रयुंज्यादिति श्रुतम्। तत्र प्रथमयज्ञपदेन सर्वसंस्थः सर्वावस्थश्च ज्योतिष्टोमोऽभिधीयते उत तदीयप्रथमप्रयोगमात्रमिति चिन्तायाम्—

**ननु**—उपसत्पूर्वकाले प्रवर्ग्यकर्तव्यत्वस्याविधानेऽपि कथमनेन वचनेन तस्य ज्योतिष्टोमाङ्गत्वसिद्धिः **इत्यत आह—अव्यभिचरितेति**॥ अनेन वचनेनोपसत्पूर्वकाले विहिते ज्योतिष्टोमाव्यभिचरितोपसत्संबन्धेनोपस्थितज्योतिष्टोमाङ्गत्वबोधकपदघटितवाक्यान्तरकल्पनया ज्योतिष्टोमाङ्गत्वमित्यर्थः। उपसत्संबन्धस्य विकृत्यव्यभिचरितत्वेऽपि "प्रकृतौ वा द्विरुक्तत्वादि"ति प्रसिद्धेन पर्णतन्यायेन ज्योतिष्टोमस्यैवात्रोपस्थितिं दर्शयति—**द्विरुक्तेति**॥ वैमृधस्य "संस्थाप्य" इति संस्थाप्रतियोगित्वेनान्वितस्यापि पौर्णमासीपदस्य पुनरुपस्थितत्वेनावृत्तिं प्रकल्प्य पौर्णमास्यङ्गत्वमात्रकल्पनम्, एवमिहाप्युपसदङ्गत्वमाशङ्क्य निराकरोति—**उपस्थितत्वादिति**॥ **ज्योतिष्टोमोपस्थितेरावश्यकत्वादिति**॥ यद्यपि ज्योतिष्टोमोपस्थितिरिहोपसद्द्वारैवेति विलम्बिता, उपसदुपस्थितिस्तु पुरस्तात्पदान्वितोपसत्पदेन द्राक्; तथापि प्रवर्ग्यं विनाप्युपसत्स्वरूपनिष्पत्तेर्नोद्देश्यत्वं संभवतीत्ययोग्यतानिश्चयस्य प्रतिबन्धकस्य सत्त्वे कथमुपस्थितस्यापि पदान्तरकल्पनोद्देश्यत्वम्? अतः सर्वसंस्थाकज्योतिष्टोमापूर्वसाधनत्वलक्षणार्थमावश्यकी ज्योतिष्टोमोपस्थितिः, तास्वपि यदङ्गमुपसदस्तत्वङ्गत्वस्यैव 'नहि भिक्षुक इति न्यायेन कल्पनं युक्तम्, तेनैव प्रवर्ग्यगतशेष्याकाङ्क्षायाः शान्तेर्नोपसद्वाचकपदान्तरकल्पनावसरः॥ अतएव यत्रावान्तरप्रकरणेन वाक्ये स्वशब्देनैव वोद्देश्यत्वं प्रमितम्, तत्र तद्गतानर्थक्यपरिहारार्थं ज्योतिष्टोमाद्युपस्थितेरावश्यकत्वेऽपि यावत्तद्वाचकपदकल्पनम् तावत्पूर्वमेव प्रत्यक्षश्रुतशब्देन तदङ्गत्वमेव बलादापतितं नैव वार्यते; यथा दीक्षणीयास्वराभिक्रमणपृषदाज्योत्पवनाद्यङ्गानाम्, प्रकृते तु उपसद्वाचकपदस्याश्रुतत्वादुभयोः कल्प्यत्वे समाने सति प्रधानान्वयसाम्यर्हितत्वात् तदङ्गत्वमेव। एवं वैमृधस्यापि पौर्णमासीयागस्य स्वतः फलवत्त्वात् तदर्थं दर्शोपस्थितेरावश्यकत्वाभावात् यावदुभयसाधारणप्रकरणकल्प्यवाक्येनोभयाङ्गत्वं कल्प्यम्, ततः स्ववाक्योपस्थितपौर्णमास्यङ्गत्वमेव कल्प्यत इति वैषम्यम्॥ **अतएव**—"अग्निं चित्वा सौत्रामण्या यजेते"त्यत्रापि वैमृधन्यायेन प्राप्तं कर्मान्तरभूतसौत्रामण्याश्रयनाङ्गत्वं निराकृत्य "क्रत्वङ्गं वा चित्यङ्गत्वेनोपपद्यते" इति सङ्कर्षणसूत्रोद्दलितं तस्याः क्रत्वङ्गमेवेति भट्टसोमेश्वरमतमेतन्न्यायमूलकमेव। **वस्तुतस्तु**—चयनावान्तरप्रकरणे पाठाच्चयनस्यापि "पशुकाममश्विन्वीत" "प्रजाकाममश्विन्वीत" इति वाक्ये स्वतः फलसंबन्धात् तदङ्गत्वमेवेति नात्र प्रवर्ग्योक्तन्यायप्रवृत्तिरित्यतश्चयनाङ्गत्वं साधयिष्यते॥

**वस्तुतस्तु**—उपसदवान्तरापूर्वमादायाप्यानर्थक्यपरिहारसंभवात् नावमिकद्वितीयाधिकरणवर्णकान्तरोपपादितप्रकारेण दीक्षणीयापूर्वे साक्षात्फलवत्त्वाभावेऽपि परम्परया फलवत्त्वमात्रेण स्वस्य तदपूर्वमात्रार्थत्वस्येवेहापि तथैव फलवत्त्वोपपत्तेः इतरथा पूर्वपठितस्रौवाघारस्यापि तदङ्गत्वानापत्तेर्न ज्योतिष्टोमोपस्थितिरावश्यकी। अतएव स्थाण्वाहुतेः स्थाणुसंस्कारकत्वम्, यूपारूपादष्टाश्रयकाष्ठप्रकृतित्वेनापूर्वसंबन्धित्वलक्षणयाङ्गीकृत्य वैमृधवत्स्थाणुवाचकपदान्तरकल्पनया यूपत्वोत्पादकत्वं दशमे स्वयमेव वक्ष्यते। इतरथा तत्रापि यूपादृष्टस्य निष्फलत्वेन पशुपूर्वाङ्गत्वस्यैवारादुपकारकविधयापत्तेः। यत्र तूपसदपूर्वस्य सौम्येन विनापि प्रकृतौ जायमानत्वेन न तन्मात्राङ्गतयाऽप्यानर्थक्यपरिहारः, तत्र तत्परिहाराय राजसूयसंबन्धित्वेन रूपेणोपस्थितेरावश्यकत्वे तदङ्गत्वमेव युक्तम्, नोपसदङ्गत्वमित्यपि वक्ष्यते चतुर्थे। ज्योतिष्टोमे तूपसदपूर्वस्य निर्ज्ञातोपायत्वाभावे प्रवर्ग्येण विना तदुत्पत्तौ मानाभावात् वैमृधन्यायेन प्राप्तं तदङ्गत्वं वाक्यान्तरोत्पन्नप्रवर्ग्यानुवादेन कालाङ्गोभयविधाने वाक्यभेदापत्त्यैव निराकर्तुं युक्तम्। वैमृधे तूत्पत्तिवाक्यत्वेन विशिष्टविधानात् न तदापत्तिरिति वैषम्यं ध्येयम्। उपसद्द्वारैव ज्योतिष्टोमोपस्थितिरिह नास्ति, किंतु प्रकरणादपि संभवतीति दर्शयितुं शाखान्तरीयप्रकरणपाठं दर्शयति—**कौषीतकीति**॥ ततश्चोत्पन्नमात्रस्य प्रवर्ग्यप्रकरणेनैव ग्रहणाद्वाक्यस्य कालविधायकत्वेनोपपत्तेः किमित्युपसद्वाचकपदान्तरकल्पनम्। अतएव तैत्तरीये "ग्रीवा उपसदः प्रवर्ग्यः शिरः" इति ज्योतिष्टोमावयवत्वेन स्तुतिरुपपद्यत इति भावः॥

**तत्रचेति**॥ अनारभ्याधीतप्रवर्ग्यतन्निषेधविध्यनन्तरं कौषीतकिब्राह्मणे ज्योतिष्टोमप्रकरणपठिततद्विध्यनन्तरं च श्रुतमित्यर्थः। सर्वावस्थः सर्वप्रयोगावस्थ इत्यर्थः॥ **इति चिन्तायामिति**॥ तथाच प्रवर्ग्यतन्निषेधयोरनारभ्याधीतत्वपक्षे पूर्वोक्तन्यायेन कल्पितवाक्येन प्रवर्ग्यस्य सर्वसंस्थसर्वप्रयोगावस्थज्योतिष्टोमाङ्गत्वम्। निषेधस्यापि प्राप्तिपूर्वकत्वात् निषेध्योपस्थापितज्योतिष्टोमवाचकपदान्तरकल्पनया वाक्येनैवाङ्गत्वं चोभयोः प्रकरणपाठपक्षे इव निर्विवादम्। तत्र यदि पूर्वपक्षे प्रथमयज्ञपदेन सर्वस्य ज्योतिष्टोमस्याभिधानम्, तदा तदनुवादकं सन्निषेध्योपस्थापितज्योतिष्टोमवाचकपदघटितवाक्येनाविरुद्धमेव। यदा तु प्रथमप्रयोगाभिधानं कल्पितज्योतिष्टोमाङ्गताबोधकवाक्येन विरोधात् तद्बाधित्वा प्रत्यक्षश्रुतप्रथमयज्ञवाक्यात् प्रथमप्रयोगमात्राङ्गत्वं भवतीति वाक्ययोर्विरोधा-

प्रथमयज्ञशब्दो ज्योतिष्टोमनामा, "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम" इति सामानाधिकरण्यात्, तस्य प्रथमं प्रयुज्यमानत्वेन प्रवृत्तिनिमित्तसत्त्वाच्च । यद्यपि च संस्थानामन्यपदेनाभिधानात् तासु ज्योतिष्टोमोत्तरकालत्वविधानात् न सर्वसंस्थाकज्योतिष्टोमस्य प्रथमं प्रयुज्यमानत्वम्; तथापि ज्योतिष्टोमत्वसामानाधिकरण्येन तावत् तदस्तीति प्रवृत्तिनिमित्ताविघातः ।

अतो वाक्यात् प्रकरणाच्च ज्योतिष्टोमत्वावच्छेदेनैवायं

विरोधविचारादप्युपपद्यत एव विरोधाविरोधप्रकरणसङ्गतिः ॥ **एतेन**—सर्वसंस्थसर्वप्रयोगावस्थज्योतिष्टोमाङ्गम्? उत प्रथमप्रयोगाङ्गमिति विचारसंभवेऽप्यनारभ्याधीतपक्षे वाक्यप्रकरणविरोधचिन्तात्वाभावात् प्रकृतासंगतिः प्रसज्येतेति प्राकरणिकवाक्य एव तद्विचारः कर्तव्य इति प्राचामुक्तं—**अपास्तम्**; नहि वाक्यप्रकरणविरोधचिन्तैव केनचित्प्रतिज्ञाता, प्रमाणाभावात्, किंतु अङ्गत्वप्रमाणमात्रस्य विरोधविषयचिन्ता । सा च यथासंभवं यत्र येन केनचित्सह प्रसक्ताऽग्रे करिष्यते इतीहापि वाक्ययोस्तत्करणे किमित्यसङ्गतत्वम्? अतएव मध्ये लिङ्गप्रकरणविरोधोदाहरणमप्रदर्श्यैव वाक्यप्रकरणविरोधः कथं क्रियत इति पर्यनुयोगोऽपि उभयमते नापद्यते । प्रतिज्ञातार्थनिरूपणे तदकरणे तत्संभवेऽपि इतराकरणे पर्यनुयोगासंभवात् । अतो नासङ्गतिरनभ्याधीतत्वपक्षेऽपीत्यभिप्रेत्यैव प्रवर्ग्यस्यानारभ्याधीतत्वं प्रतिज्ञाय तदङ्गत्वोपपत्तिप्रदर्शनम्, तत्साधकत्वेनैव युक्त्यन्तरतया प्रकरणपाठोपन्यासश्चाडम्बरेण पूज्यपादैः कृतः । इतरथा अनारम्याधीतत्वकथनस्य प्रकृतविचारानुपयोगात् शास्त्रदीपिकायामिव मुख्यतयैव प्राकरणिकवाक्योल्लेखनस्यैवापत्तेरिति ॥ एवमस्मिन्पक्षे सङ्गतिसत्त्वेऽपि प्रकरणपाठमङ्गीकृत्य प्रस्तुतेन वाक्यप्रकरणविरोधविचारेणापि सङ्गतिः सुलभैवेत्यभिप्रेत्य प्राचामनुसारेणाधिकरणपूर्वपक्षमारचयति—**प्रथमयज्ञशब्द इति** ॥

"द्वितीये वा तृतीये वा प्रवृञ्ज्यादि"ति भाष्योदाहृते वचनेऽपि द्वितीयादिशब्दानां प्रयोगवाचित्वस्य निःसंदिग्धत्वात् प्रत्युत तत्साहचर्यस्य प्रथमयज्ञपदे सिद्धान्तसिद्धप्रयोगवाचित्वापादकत्वेन पूर्वपक्षाननुगुणत्वाच्च नोपादानमुदाहरणत्वेन कृतम् ॥

अत्रच **"नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात्"** इति सिद्धान्तसूत्रे नैमित्तिकं वेत्युपादानेन प्रथमयज्ञे इत्यस्य निमित्तपरत्वं भाति; तथापि—पूर्वपक्षे निषेध्योपस्थितिद्वारा ज्योतिष्टोमाङ्गत्वसिद्धौ अर्थादेवाङ्गिन उद्देश्यत्वेन प्रयोजकत्वलाभात् न निमित्तताकृतविशेषलाभ इति न तत्परत्वमाश्रीयते । यद्यपि त्वदुक्तरीत्यैव ज्योतिष्टोमाङ्गत्वस्यापि लाभान्नाङ्गत्वपरताप्रयुक्तविशेषलाभोऽपि; तथापि अनुवादकत्वकल्पने उभयोः समाने सति क्लृप्तोपस्थिताङ्गत्वपरताकल्पनेन तत्संभवे नानुपस्थितनिमित्तपरत्वकल्पनेन तत्कल्पनं युक्तम् ॥ **वस्तुतस्तु**—सिद्धान्तेऽपि न निमित्तपरत्वम्; निषेधस्यानारभ्याधीतत्वपक्षेऽपि ज्योतिष्टोमाङ्गत्वात्प्रथमप्रयोगे निमित्ते ज्योतिष्टोमत्वावच्छिन्नाङ्गत्वस्य परस्परप्रयोजकत्वव्याघातेनासंभवात् निमित्ततयोपस्थितप्रथमप्रयोगाङ्गत्वं तत्पदकल्पनयाऽऽवश्यकमेवेति तदपेक्षया लाघवादस्यैव तत्परताकल्पनस्य युक्तत्वात् । सूत्रे नैमित्तिकत्वोक्तिस्तु प्रथमप्रयोगाङ्गत्वे यदा प्रथमप्रयोगः तदैव निषेधस्य प्रवृत्तिरित्यभिप्रायिका ॥

यत्तु अपेक्षिताङ्गपरतासंभवेऽनपेक्षितनिमित्तपरताकल्पनमयुक्तमित्यतो न दीर्घसोमशब्दवन्निमित्तपरत्वम् इति न्यायसुधाप्रकाशलेखनं तन्निषेध्योपस्थितिद्वारा ज्योतिष्टोमाङ्गिनो लाभेन तदपेक्षायाः प्रकरणपाठपक्षे इवानारभ्याधीतपक्षेऽप्यभावादुपेक्षितम् ॥ अतः पूर्वोक्तयुक्त्याऽङ्गिपरताकल्पनस्यावश्यकत्वादनपेक्षायामपि ज्योतिष्टोमत्वावच्छिन्नाङ्गिताबाधहेतोरेवाङ्गिपरत्वकल्पनं युक्तमिति प्रथमयज्ञपदस्याङ्गिपरत्वमङ्गीकृत्यैव पूर्वोत्तरपक्षौ ज्ञेयौ । अत एव **सङ्ख्या** द्वितीयाद्यपेक्षया प्राथम्यं सङ्ख्या, निषेधनं **तद्युक्तं क्रतो**र्ज्योतिष्टोमस्याङ्गं प्रकरणादित्यर्थकम्—**"सङ्ख्यायुक्तं क्रतोः प्रकरणात्स्यात्"** इति पूर्वपक्षसूत्रं प्रथमयज्ञपदस्याङ्गिताबोधकतां दर्शयति । पूर्वपक्ष्युपपादितफलीभूतार्थप्रदर्शनपरस्यापि सूत्रस्यावृत्त्या **सङ्ख्या** प्राथम्यं तद्युक्तम्, तद्युक्तः प्रथमयज्ञशब्दः क्रतोर्वाचकः स्यात्संज्ञेत्यर्थः प्रकरणात् प्रकरणपठितादेव वा वाक्यादित्यर्थकरणेन सूत्रे सूचितां पूर्वपक्ष्युपपादनयुक्तिं दर्शयति—**एष वा वेति** ॥

**ननु**—प्रथमो य एतेनेति वाक्येन सर्वविकृतिष्वग्निष्टोमोत्तरत्वस्यैवाङ्गत्वेन विधानस्य स्थापनादविधीयमानं प्राथम्यं कथं तत्प्रख्यन्यायसिद्ध्यर्थं प्रवृत्तिनिमित्तं भविष्यति; विहितत्वेऽपि वा ज्योतिष्टोमत्वावच्छिन्ने तदसंभव एव; . अग्निष्टोमस्यैव प्राथम्याङ्गकत्वात्—**इत्याशङ्क्य परिहरति—यद्यपि चेति** ॥ इतरविकृतिष्वग्निष्टोमोत्तरत्वविधानेन यद्यर्थतः सिद्धमग्निष्टोमसंस्थे ज्योतिष्टोमे प्राथम्यम् तदेवाग्निहोत्रवैश्वदेवादिनामपदयोरग्निदेवत्यत्वविश्वदेवदेवत्यत्वे इवैकदेशेनापि ज्योतिष्टोममात्रनाम्नि प्रथमयज्ञपदे प्रवृत्तिनिमित्तं भविष्यतीति न किंचिद्बाधकमित्यर्थः ॥

**अत्र न्यायसुधाकृता** अग्निष्टोमसंस्थस्यैव प्रकरणमिच्छता "प्रकरणात् तदङ्गत्वमात्रप्राप्तेः प्रथमयज्ञपदेनापि प्रकरणादेतस्यैवाभिधानोपपत्तेर्यद्यपि न पूर्वपक्षे ज्योतिष्टोमत्वावच्छेदेन निषेधः प्राप्नोति;—तथापि प्रथमयज्ञश्रुतिः प्रकरणेन सङ्कोचायोगाद्वाक्येन सर्वज्योतिष्टोमे संभवत्येवे"ति समाधानग्रन्थेन पूर्वपक्षेऽपि वाक्यप्रकरणविरोध उक्तः, तन्निरासाय सर्वथा पूर्वपक्षे वाक्याविरोधमेव दर्शयति—**अतो वाक्यादिति** ॥ संतर्दनाधिकरणदर्शितरीत्या सर्वसंस्थानुगतज्योति-

प्रतिषेधः, पर्युदासो वा ज्योतिष्टोमभिन्ने प्रवृणक्तीति; अन्यथा विकल्पप्राप्तेः। यत्त्व "ग्निष्टोमे प्रवृणक्ती"ति वचनं तत्पर्युदस्तप्रतिप्रसवार्थम्। तदपि च "कामं तु योऽनूचानः श्रोत्रियः स्यात् तस्य प्रवृज्यादि"त्यनेनोपसंह्रियते। तेनानूचानस्य श्रोत्रियस्याग्निष्टोमसंस्थाकज्योतिष्टोमे नित्यं करणम्, अन्यज्योतिष्टोमे तु नित्यमकरणम्। विकृतिषु नित्यं करणमिति प्राप्ते—

प्रत्येकशक्त्यैवार्थबोधोपपत्तौ अतिरिक्तशक्तिकल्पनायां प्रमाणाभावात् प्रथमशब्दस्य चाप्रवृत्तप्रवर्तनविषयवाचित्वादाद्यप्रयोगपरत्वावगतेर्यज्ञशब्दस्य च लक्षणया प्रयोगपरत्वं प्रकरणाज्ज्योतिष्टोमरूपयज्ञपरत्वमेव वाऽङ्गीकृत्य प्रथमयज्ञपदेन ज्योतिष्टोमप्रथमप्रयोगोऽभिधीयते। स चाग्निष्टोमसंस्थाकस्य ज्योतिष्टोमस्य पाञ्चमिकन्यायेन, "प्रथमं यजमानोऽतिरात्रेण यजेते"ति वचनादतिरात्रसंस्थाकस्य च। अत उभयत्राप्यनेन वचनेन प्रवर्ग्यस्य प्रतिषेधः पर्युदासो वा, न तु विकृत्यन्तरे; तत्रोपदेशातिदेशाभ्यां तदप्राप्तेः।

---

ष्टोमरूपेणैव फलसंबन्धात्प्रकरणं ज्योतिष्टोममात्रस्य, न त्वग्निष्टोमसंस्थत्वं प्रकरणितावच्छेदकम्; प्रमाणाभावात्, अतएव गुणकामाधिकरणन्यायेन संस्थाजन्यफलव्यतिरिक्तमाश्रयभूतज्योतिष्टोमात् स्वर्गफलमुत्पद्यते एव। अतः प्रथमयज्ञरूपवाक्येन ज्योतिष्टोममात्रवाचकेन प्रकरणस्याविरोधे बाधाभावादुभाभ्यामपि ज्योतिष्टोमत्वावच्छेदेनैव ज्योतिष्टोमे प्रतिषेधोऽङ्गत्वेन विधीयत इत्यर्थः॥

**प्रकाशकारास्तु**—"इह सर्वसंस्थानुगज्योतिष्टोमरूपस्य प्रकरणं साधयन्तः संस्थासु तद्रूपे विद्यमानेऽपि संस्थासु न सन्तर्दनस्य निवेशः प्रकरणानुग्रहाभावादिति वदन्तश्च परस्परग्रन्थविरोधान्न मुच्येरन्नित्यालोचनीयम्। अतएव पूज्यपादैः संस्थासु सन्तर्दननिवेशेऽपि प्रकरणानुग्रहः तत्र दर्शित इत्यलं विस्तरेण॥

अत्र चानवगतज्योतिष्टोमाङ्गभावस्य प्रवर्ग्यस्योत्पत्तिमात्रसमये एव निषेधकरणे विधिनिषेधयोरुभयोरपि वैयर्थ्यापत्तेः पुरस्तात्कालविध्यनुपपत्तेश्चाव्यभिचरितन्यायेन प्रकरणाद्वाऽवगताङ्गभावस्यैव प्रवर्ग्यस्य कर्तव्यताप्राप्तौ निषेधेनाकर्तव्यतोपदेशो निषेध्यद्वारा ज्योतिष्टोमाङ्गत्वेन प्राप्त इत्यनुवादकमपि पूर्वपक्षे प्रथमयज्ञपदं यदि प्रकरणेन विरुद्धम् तदा प्रकरणं वाक्यरूपानुवादविरोधे बाध्येतैव, अतस्तदविरोधसाधनाय प्रथमयज्ञपदस्य ज्योतिष्टोमनामत्वप्रसाधनेनानुवादरूपाद्वाक्यात्प्रकरणाच्चेत्युक्तम्। **यद्यपि** सिद्धान्ते प्रथमप्रयोगमत्राभिधाने नास्ति ज्योतिष्टोमप्रकरणेन विरोधः तस्यैव प्रथमप्रयोगग्रहणात्; **तथापि** ज्योतिष्टोमत्वावच्छेदेन प्रकरणावगतसर्वप्रयोगाङ्गत्वबाधप्रयोजकविरोधोऽस्त्येवेति न बाधकम्। पर्युदासपक्षेतु यद्यपि न्यायेन प्रकरणेन वाऽनारभ्याधीतस्य प्रकरणाधीतस्य वा प्रवर्ग्यस्य ज्योतिष्टोमाङ्गत्वं प्राप्तम् पर्युदासवाक्येनान्याङ्गताबोधनाद्बाध्यते इति प्रकरणवाक्यविरोधः पूर्वपक्षेऽस्ति; तथापि पूर्वपक्षे पर्युदस्यमानस्वरूपनिर्णयमात्रे एव प्रकरणवाक्ययोरविरोधमभिप्रेत्य "तस्माद्वाक्यात्प्रकरणाच्चायं क्रतोरङ्गमि"ति प्राचीनोक्तित्यागेन प्रतिषेधपर्युदाससाधारणवाक्यप्रकरणाविरोधसूचनार्थं ज्योतिष्टोमत्वावच्छेदेनैवेत्युक्तम्॥

**विकल्पप्राप्तेरिति**॥ यद्यपि पर्युदासेऽपि पर्युदस्यमाने तत्प्राप्तिः शास्त्रीयैवेति तत्पर्युदासे विकल्पापत्तिः संभाव्यते; तथापि प्राप्तायाः प्रवर्ग्यकर्तव्यतायाः अकर्तव्यतया विरोधे सत्यकर्तव्यतया सर्वथा बाधासंभवात् भवति प्रतिषेधे विकल्पः, इहतु तत्कर्तव्यतायास्तद्भिन्नकर्तव्यतया पर्युदासवाक्यबोधितया सह विरोधाभावे बाधस्यैवाप्रसक्तेर्न विकल्पः। पुरस्तात्कालविधिः प्रकरणपठितोऽपि तत्र विकल्पेनापि प्रवर्ग्याभावादनिविशमानो यत्र प्रवर्ग्यो विकृतौ तत्रेत्येवमुत्कृष्येतेति न काऽप्यनुपपत्तिः॥

"एष वा वे"त्यर्थवादे ज्योतिष्टोमपदसामानाधिकरण्यात्प्रथमयज्ञपदस्य नातिरिक्तशक्तिकल्पनम्; गौरवापत्तेः, अतः प्रथमश्चासौ यज्ञश्चेति कर्मधारयान्तर्गतप्रथमशब्देन "वषट्कर्तुः प्रथमभक्ष" इत्यत्राप्रवृत्तप्रवर्तनमात्रेणैव प्रथमशब्दस्य प्रयोगात्तदभावे ज्यौतिष्टोमिकद्वितीयादिप्रयोगेषु तस्याप्रयोगात् अन्वयव्यतिरेकाभ्यामप्रवृत्तप्रवर्तनस्यैवाभिधानात्तद्विषयत्वस्याद्यप्रयोग एव संभवात् तत्रैव निषेध इति सिद्धान्तमुपपादयति—**प्रत्येकशक्त्यैवेति**॥ तथाच प्रथमप्रयोगविषयत्वेन लक्षणया क्वचित्प्रथमपदस्य ज्योतिष्टोमपदसामानाधिकरण्याङ्गीकारेऽपि इह लक्षणायां प्रमाणाभावात् यज्ञपदस्यैव जघन्यत्वेन प्रयोगे लक्षणा युक्तेत्यभिप्रेत्याह—**यज्ञशब्दस्य चेति**॥ अथवा—नैव लक्षणा; प्रकरणेन ज्योतिष्टोमपरत्वे सति प्रथमपदसामानाधिकरण्यबलादर्थादेव प्रयोगपरत्वं भविष्यतीत्यभिप्रेत्याह—**प्रकरणादिति**॥ **स चेति**॥ यद्यपि पाञ्चमिकन्यायवचनाभ्यां ज्योतिष्टोमान्यसंस्थाकप्रयोगवारणेऽपि अन्ययागीयप्रथमप्रयोगवारणं न संभवति; तथापि निषेधस्य प्राप्त्यपेक्षत्वात्तत्सामर्थ्येन सोमयागातिरिक्तयागीयप्रथमप्रयोगनिवारणात्प्रवर्ग्यप्राप्तिमत्सोमयागमात्रार्थतासिद्धौ तद्विकृतिप्राप्तिकाले वैषम्याद्विरुक्तत्वन्यायेन निवृत्तेः परिशेषादेव ज्योतिष्टोमीयाद्यप्रयोगलाभो नासुलभ इति भावः। एतच्च परिशेषाज्ज्योतिष्टोमयागगामित्वं तद्विकारेषु कथंचित्प्रथमयज्ञत्वाङ्गीकारेणातिदेशतः प्राप्तिं निषेधस्याङ्गीकृत्योक्तम्॥ **वस्तुतस्तु**—तद्विकृतिषु प्रथमयज्ञोपसंग्रहाभावादेव नातिदेशोपदेशाविति निषेधस्याप्रवृत्तिं साधयति—**नतु विकृत्यन्तरे इति**॥ अतिरात्रसंस्थातिरिक्तसंस्थासाधारण्यात् विकृतिमात्रभूते सोमयागान्तरे इत्यर्थः। **तदप्राप्तेरिति**॥

न च—ज्योतिष्टोमे द्वितीयादिप्रयोगापेक्षया प्राथम्यस्य विवक्षितत्वाद्विकृतावपि तद्द्वितीयादिप्रयोगापेक्षया प्राथम्यस्य सत्त्वात् कथं न तत्प्राप्तिरिति—वाच्यम्; प्राथम्यस्य निरूपकापेक्षायां द्वितीयादिप्रयोगस्य निरूपकत्वाकल्पनात्। "एष वाव प्रथमो यज्ञो यज्ञाना"मिति वचनेन ज्योतिष्टोमविकृतिमात्रस्यैव तदवधारणात् । अत एव प्रथमप्रयोगविषयोऽपि ज्योतिष्टोम एव बोध्यः ।

तथाच प्रथमयज्ञशब्दो वाक्यशेषाद्वैदिकप्रयोगाच्च निरूढलक्षणया सोमान्तरनिरूपितप्राथम्यवत्प्रयोगविषयज्योतिष्टोममेवाभिधत्ते, अन्यथा स्व—स्व—द्वितीयादिप्रयोगनिरूपितप्राथम्यवत्प्रयोगविषययज्ञमात्राभिधाने "आहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशाः सत्रमासीरन्नि"त्यादौ सत्रे यज्ञमात्रोत्तरकालताऽऽपत्तेः । अत उक्तद्विविधज्योतिष्टोमप्रथमप्रयोगे एव प्रवर्ग्यप्रतिषेधः ।

वस्तुतस्तु—नायं प्रतिषेधस्तथात्वे "न तौ पशौ करोती"तिवदतिरात्रप्रथमाहारेऽपि विकल्पापत्तेः । न च—

---

प्रथमयज्ञपदप्रवृत्तिनिमित्ताभावादिति शेषः । **सोमान्तरनिरूपितेति** ॥ **नच**—"द्वितीये वा तृतीये वा प्रवृञ्ज्यादि"ति भाष्यलिखितोत्तरवाक्ये द्वितीयादिशब्दानां प्रयोगवाचित्वस्य निःसंदिग्धत्वात्तदपेक्षयैव पूर्ववाक्ये प्राथम्यप्रतीतेः कथं सोमान्तरनिरूपितत्वं तस्येति—**वाच्यम्**; द्वितीये तृतीये वा प्रत्येकं प्रवर्ग्यविधाने वाक्यभेदापत्तेरनास्थाद्योतकवाशब्दद्वयतात्पर्यग्राहकबलात् पूर्ववाक्यनिर्दिष्टप्राथम्यापेक्षया उत्तरपरत्वस्यैव द्वितीयादिपदयोर्लक्षणया स्वीकारात्प्रथमवाक्ये निर्णीतज्योतिष्टोमरूपप्रथमयज्ञापेक्षया तदुत्तरभूतानां सर्वेषां सोमयागान्तराणामप्युपादानेन तदुपपत्तेः । अन्यथा "यावद्वचनम्" इति न्यायाद्द्वितीयतृतीययोरेव तदीयप्रयोगे तदापत्तावितरविकृतिभूतसोमयागान्तरेषु प्रवर्ग्यानापत्तेः ॥

**वस्तुतस्तु**—प्रथमप्रयोगे निषेधे सत्यर्थप्राप्त्याऽनुवादकत्वमेव तयोरिति नैतद्बलेन पूर्वप्रवृत्तशास्त्रनिर्णयः कर्तव्यः, किन्तु न्यायेन यथैव पूर्वशास्त्रं निर्णीतम् तद्विषये यादृश्यर्थप्राप्तिः तामादायैवानुवादकत्वमिति न बाधकम् । अतो विकृतिभूतसोमान्तरनिरूपकत्वकल्पनं युक्तमेवेति भावः । विपक्षे बाधकमाह—**अन्यथेति** ॥ **प्रथमप्रयोग एवेति** ॥ तथाच यत्किंचिन्निरूपितप्राथम्यग्रहणेऽग्निष्टोमसंस्थाकप्रथमप्रयोग इव तद्विकृतिभूतसोमयागान्तरेष्वतिदेशेन प्रवर्ग्यतन्निषेधयोः प्राप्तत्वाद्विकल्पे प्राप्तेऽपि स्वमते सोमयागान्तरनिरूपितप्राथम्यस्य तत्राभावादुपदेशातिदेशयोरप्रवृत्तौ निषेधाभावान्नित्यमेव तदतिदेशात्करणमित्यनुष्ठानभेदो विकृतिभूतसोमयागान्तरे एवकारसूचितः । पूर्वपक्षे एव विकल्पापत्तिभिया दूषितमपि प्रतिषेधत्वं परमतखण्डनाय दूषयन् पर्युदासपक्षेऽनुष्ठानभेदं दर्शयितुं पुनः प्रतिषेधत्वं नास्तीति स्मारयति—**वस्तुतस्त्विति** ॥

**अतिरात्रप्रथमाहारेऽपीति** ॥ यथैवाग्निष्टोमसंस्थाकाद्यप्रयोगे सामान्यविधिना प्राप्तस्यानेन निषेधाद्विकल्पः । एवमतिरात्रप्रथमाहारे पर्णतान्यायेन प्रकरणेनच सामान्यविधेरग्निष्टोममात्रविषयस्य प्रवृत्तावप्यतिरात्रस्याग्निष्टोमविकृतित्वात् तदतिदेशेन प्राप्तस्य प्रवर्ग्यस्य निषेधाद्विकल्पापत्तिः स्यात्, नतु नित्यं प्रवर्ग्यकरणम्, अग्निष्टोमसंस्थाकाद्यप्रयोगस्य दृष्टान्तत्वमपिना सूचितम् ॥ यदपिच प्रतिषेधत्वपक्षेऽपि विकल्पापत्तिं परिहर्तुं प्रकाशकृतोपपादितम्—"विधिनिषेधकयोः सर्वत्र कर्मवाचकपदे सप्तमी श्रूयमाणा क्वचिदधिकरणत्वकारकपरा क्वचिल्लक्षणयोद्देश्यत्वपरेति व्यवस्थायां तावदिदं नियामकम्—तत्र विधिषु यत्र विधेयस्याङ्गत्वं प्रमाणान्तरप्रमितमधिकरणत्वस्य चास्ति प्रयोजनम् यथा—"मन्द्रं प्रातःसवने" इत्येवमादिषु मन्द्रस्वरस्य प्रकरणप्रमितं ज्योतिष्टोमाङ्गत्वं सवनान्तरव्यावृत्तिश्चाधिकरणत्वप्रयोजनम्, तत्र सवने इत्यस्याधिकरणत्वपरत्वम् । यत्रतु अङ्गत्वं विधेयस्य नान्यतः प्रमितम्, प्रयोजनं च नाधिकरणत्वस्य यथा—"तत्र जयान्जुहुयात्" "तप्ते पयसि" "तावत्या दीक्षणीयायाम्" इत्यादिषु तत्रोद्देश्यत्वपरत्वमेव लक्षणया भवति। वैधक्रियानिषेधेषु विधीयमानकर्मवाचकपदोत्तरसप्तम्यास्तु यत्राङ्गत्वमन्यतोऽवगतम् प्रयोजनं चाधिकरणत्वस्य तस्य मध्ये प्रत्यभिज्ञानमपीत्येवं त्रितयमस्ति तत्रैवाधिकरणत्वपरत्वम्—यथात्रैव क्रत्वव्यभिचार्युपसद्द्वारा प्रकरणेन वा प्रवर्ग्यस्य क्रत्वङ्गत्वात्तदाश्रितस्य प्रथमप्रयोगरूपाधिकरणनिषेधस्य ज्योतिष्टोमाङ्गत्वम्, अधिकरणताप्रतिपादनस्य चास्ति प्रयोजनम् अधिकरणत्वे ह्युक्ते तस्यैव निषेधात् क्रियानिषेधाभावेन विकल्पानापत्तावतिरात्रेऽपि तदतिदेशान्नित्याकरणसिद्धिरूपम् "पुरस्तादुपसदां प्रवर्ग्येण चरन्ति" इति प्रत्यक्षतो विशेषतः क्रतुमध्ये विधानात्प्रत्यभिज्ञायमानं क्रतोरधिकरणत्वमेवेति पूर्वोक्तहेतुत्रयसत्त्वात् अधिकरणत्वे निर्णीते तस्यैव कारकस्य निषेधात्क्रियानिषेधाभावेन विधिनिषेधयोरेकविषयत्वाभावात् न विकल्पः । एवं दीक्षितकर्तृकहोमदाननिषेधे संक्रान्त्यधिकरणकपिण्डदाननिषेधेष्वपि द्रष्टव्यम् ॥ "न तौ पशौ" इत्यादौ तु पशुयागगताधिकरणत्वपुनः प्रत्यभिज्ञानाभावेन हेतुत्रयाभावान्नाधिकरणत्वपरत्वमिति क्रियानिषेध एवेति विकल्प एव । "न होतारम्" इत्यत्रापि द्वितीयाश्रुतित एव होतुः साध्यत्वात् वरणैकपरो निषेधः श्रुतिबलादेव जात इति सर्वमनवद्यमिति ॥

तदिदमुपपादनं स्पष्टदूषणमेवेति मत्वा अवहेलनयैव शङ्कारूपेणानुवदति—**नचेति** ॥ स्पष्टदूषणता चास्योपपाद्यते—तत्र

**क्रियायाः स्वरूपेणोद्देश्यसंबन्धित्वेन वा निषेध एव विकल्पो यथोक्तस्थले, यत्र तु कारकनिषेधो यथा "रात्रौ श्राद्धं न कुर्वीते"त्यादौ, तत्र निषेधस्य कारकमात्रविषयत्वेन क्रियाविषयत्वाभावात् क्रियाविषयविधिविकल्पापादकत्वानुपपत्तिः; प्रकृते च प्रथमयज्ञशब्दस्य नोद्देश्यत्वपरत्वम्, अपि तु मन्द्रं प्रातःसवन इतिवदधिकरणकारकत्वम् । अतश्च न**

तावद्विधिषु यत्राङ्गत्वं विधेयंस्यान्यतोऽवगतमनवगतंच तत्र सर्वत्रैवोत्सर्गतः शक्त्या प्रतीयमानाधिकरणत्वत्यागे किं प्रमाणम्? अतएव कर्माङ्गभूततिथ्यादिवाचकपदोत्तरसप्तम्या निमित्तपरतानङ्गीकारेणाधिकरणत्वपरत्वात्तिथ्यादीनामङ्गत्वप्रतीतेः गुणभूतकालानुरोधेनैव कर्मावृत्तिर्नास्तीत्युक्तं निबन्धकारैः। **नच**—यत्राङ्गत्वं प्रमितं तत्रोद्देश्यताबोधे प्रयोजनाभावादधिकरणत्वस्य चापेक्षितत्वादधिकरणत्वपरत्वमस्तु; यत्रतु न तत्तत्र तद्बोधार्थं निरर्थकाधिकरणत्वपरत्वापेक्षयोद्देश्यत्वपरत्वमेवेति—**युक्तम्**; मन्द्रस्वरस्य महाप्रकरणेन प्राप्तस्य ज्योतिष्टोमाङ्गत्वस्य बाधयैव सोमयागाभ्यासविशेषरूपसवनाङ्गत्वबोधने बाधकाभावेनार्थादेव तत्कालस्याधिकरणताप्राप्त्या सवनान्तरकालव्यावृत्तिसिद्धेरधिकरणत्वस्य निष्प्रयोजनत्वात् । नह्यपेक्षाभावेऽपि वाक्यबलादापतदङ्गत्वं वारयितुं शक्यम्; **इतरथा** वैमृधस्यापि प्रकरणावगतदर्शपूर्णमासाङ्गभावस्यापेक्षाभावात्संस्थावाक्यस्य कालविधायकतया सार्थक्ये सति वाक्यादपि पौर्णमास्यङ्गत्वानापत्तेः, सवनाङ्गत्वपक्षेऽपि तदङ्गभूतस्तोत्रशस्त्रादिषु मन्द्रस्वरव्यावृत्तिरूपप्रयोजनस्यापि त्वदुक्तरीत्यैव लाभसंभवाच्च । इतरथा सवनानङ्गभूतानामपि तेषां सवनाधेयतासंभवादधिकरणत्वपक्षे तेषु स्वरप्राप्त्यापत्तेः । अत एवेदमेव सवनाङ्गत्वपक्षे प्रयोजनम् स्वरचर्चायां कौस्तुभे उक्तम् निराकृतं चाधिकरणत्वपरत्वम् । सर्वत्रैव कर्माधिकरणतायाः कालद्वारैव भवद्भिः स्वीकारात् तस्य चाधिकरणत्वेन विधानेऽङ्गत्वापत्तेः गुणभूतकालानुरोधेन प्रधानभूतस्वरावृत्तेरन्याय्यत्वेनैकतरप्रातःसवनिकग्रहाभ्यासाङ्गतयैव ज्योतिष्टोमाङ्गत्वापत्तेः प्रातःसवने सकृदेव मन्द्रस्वरानुष्ठानापत्तेश्च । एवं सत्यपि प्रातःसवने इत्यत्राधिकरणत्वपरत्वसमर्थनाशक्त्या प्रतीयमानाधिकरणत्वत्यागे प्रमाणाभाव इत्येव वाच्यम् । तर्हि तत्सममेव भवदभिमतोद्देश्यत्वस्थलेषु महाप्रकरणाद्दीक्षणीयात्वस्यावगतज्योतिष्टोमाङ्गत्वादितरव्यावृत्तिरूपप्रयोजनस्यापि लाभाद्दीक्षणीयायामिति सप्तम्या अपि तत्परत्वापत्तिः । तथा तप्ते पयसीत्यत्रापि प्रकरणाद्दध्यानयनस्यामिक्षाजनकत्वसामर्थ्यात् दृष्टद्वाराङ्गत्वस्य लाभादधिकरणत्वपरत्वापत्तिः । अस्ति चात्र प्रयोजनमामिक्षामात्रप्रयोजकत्वव्यावृत्त्या वाजिनस्यापि प्रयोजकत्वसिद्धिः । तथाऽतप्तपयोधिकरणत्वव्यावृत्तिरपि; इतरथा तव मते तापस्योद्देश्यविशेषत्वेनाविवक्षितत्वापत्तेरतप्ते एव पयसि दध्यानयनप्राप्तौ तापापेक्षायामपि पश्चात्तापस्यैवोपपत्तौ तप्तपयोधिकरणत्वासिद्धेः ॥ एवं जयादिष्वपि; तत्रेति सप्तम्या अधिकरणत्वपरत्वापत्तौ प्रयोजनानपेक्षायामुपस्थितत्वात् कर्मवाचकपदकल्पनया तदङ्गत्वमपि संभवत्येवेति न श्रौतार्थत्यागो युक्तः । नहि कालान्वयात्प्रागेव प्रयोजनवत्त्वेन भाव्यमिति नियमोऽस्ति; मानाभावात् । प्रवर्ग्ये एवोपसत्पूर्वकालान्वयोत्तरमव्यभिचरितक्रतुसंबन्धेन ज्योतिष्टोमाङ्गत्वस्य कल्प्यत्वात्, आग्नेयादिप्रयोगेष्वपि तथा दर्शनाच्च । जयादिहोमानां सर्वैरपि तत्तत्कर्मबहिर्भूतत्वेनैवाङ्गत्वस्वीकाराद्यदाकदाचिदपि तत्करणे तद्विघातादनियतकालनिवृत्त्यर्थत्वेन तत्तत्कर्मकालाधिकरणत्वविधेः प्रयोजनवत्त्वलाभाच्च । किंचावगताङ्गभावस्थले दीर्घसोमे इत्यादावपि सप्तम्या अधिकरणत्वपरत्वापत्तौ तदधिकरणस्थतत्रत्यसप्तम्या प्राधान्यपरत्वं स्वपरोक्तं सर्वमेव दत्तजलाञ्जलमापद्येत । वैधक्रियानिषेधेष्वप्यनेन विधिसमानन्यायेन भवदुपपादितेन सर्वत्रैवाधिकरणत्वपरत्वस्यैवापत्तावधिकरणताप्रत्यभिज्ञानस्य नियामकत्वकल्पनमपि निष्प्रमाणमेव । इतरथा स्वमनोरथमात्रेण तत्कल्पने विधिष्वपि तस्य नियामकत्वापत्तिः । प्रवर्ग्याधिकरणनिष्ठत्वेन विकल्पापात्तिं निरस्यतो "न तौ पशावि"त्यत्र विकल्पसाधनायाधिकरणत्वप्रत्यभिज्ञानस्य निष्प्रमाणस्य नियामकत्वकल्पनस्य व्यर्थत्वम्, प्रत्युतास्य नियामकत्वाकल्पने नानूयाजेष्वित्यत्रापि कारकनिषेधेनैव विकल्पानापत्तौ लक्षणापादकं पर्युदासाश्रयणं नापद्यत एवेति गुण एव लभ्यते । **अपिच**—निषेधेन प्रथमप्रयोगकालाधिकरणतानिषेधेऽपि उत्पत्तिवाक्यावगताङ्गत्वस्य निषेधाभावादङ्गाकरणप्रयुक्तप्रायश्चित्तापत्तिभिया यदाकदाचिदपि प्रथमप्रयोगकालातिरिक्ते तदनुष्ठानापत्तिरनिवार्यैव । तथा निश्चिताधिकरणत्वपदघटितैकादश्यां नभुञ्जीतेत्यादिवाक्येष्वपि एकादश्यधिकरणनिषेधस्यैवापत्तौ क्रियानिषेधस्य प्रायशो लोपापत्तिः । न कलञ्जं भक्षयेदित्यत्रापि कलञ्जकर्मत्वादीनामेव निषेधापत्तेः सकलशास्त्रस्यैवान्यथापत्तिः । **नच**—यत्र विकल्पप्रसक्तिस्तत्र नञः क्रियान्वयो नाङ्गीक्रियते, यथा—प्रकृते, कलञ्जादिनिषेधेषु तदप्रसक्तेः किमिति तत्त्यागेनान्यथाश्रयणमिति—**युक्तम्**, तथात्वे "न तौ पशावि"त्यत्रापि तदापत्तेः । **किञ्च** कारकनिषेधाङ्गीकारे क्रियानिषेधोऽस्ति वा? नवा? **आद्ये** विकल्पानिवारणात् व्यर्थः कारकनिषेधस्वीकारक्लेशः । **द्वितीये** प्रतिषेधलक्षणानाक्रान्तत्वात् प्रतिषेधत्वस्यैवासंभव इति मयूरनृत्यापत्तिः । **अपिच** "न कलञ्जं भक्षयेत्" इति निषेधेषु कलञ्जकर्मकभक्षणानुकूलभावनां रागप्राप्तामुद्दिश्य नञा निवर्तनाविधानं स्वीक्रियते । तद्वदेवात्रापि प्रथमप्रयोगाधिकरणकप्रवर्ग्यानुकूलकृतिं शास्त्रप्राप्तामुद्दिश्य नञर्थविधानेऽपरिहार्य एव क्रियानिषेधः, प्रवर्ग्यकृतिनिरूपितं प्रथमप्रयोगाधिकरणत्वमुद्दिश्य नञर्थविधाने आख्यातोपात्तकृतेः

विकल्पापादकत्वापत्तिरिति केषाञ्चिदुक्तं युक्तमिति—वाच्यम्; कारकस्यापि प्रथमप्रयोगाधिकरणत्वस्य विधितः प्राप्तौ न्यायतौल्येन प्रथमप्रयोगाधिकरणत्वस्यैव विकल्पापत्तेरावश्यकत्वात्। अत एवाक्षेपेण यत्किञ्चित्कालप्राप्तौ रात्र्युपादानस्यैच्छिकत्वेन रागप्राह्या वैधत्वाभावान्न तन्निषेधस्य विकल्पापादकत्वम्, प्रकृते तु प्रथमप्रयोगाधिकरणत्वं नैच्छिकं प्रतिप्रधानं गुणान्वयस्य वैधत्वात्। अतस्तन्निषेधोऽपि विकल्पापादक एव।

---

प्रथमप्रयोगपदार्थेऽन्वयापत्त्या वैपरीत्यापत्तिः। अथ प्रथमप्रयोगाधिकरणत्वस्य नञर्थेऽन्वयाङ्गीकारे कारकाणां क्रियान्वयनियमभङ्गापत्तिः, प्रथमप्रयोगाधिकरणत्वाभाववत्प्रवर्ग्यानुकूलकृतिविधानापत्तौ प्रवर्ग्यानुष्ठानापत्तिः। अनेनैव न्यायेन "नेक्षेतोद्यन्तमादित्यम्" इत्यादिष्वपि तथैव वाक्यार्थापत्तौ संकल्पलक्षणाङ्गीकारसिद्धान्तवैयर्थ्यापत्तिश्च। अतस्तत्रापि लक्षणया नञ्प्रथमयज्ञपदाभ्यां प्रथमयज्ञाधिकरणत्वाभावः प्रतिपादनीय इति को विशेषः पर्युदासादिति प्रतिषेधत्वनिर्वाहाय न कारकनिषेधाश्रयणम्; कारकनिषेधव्यवहारस्य फलितवृत्त्याप्युपपत्तेः प्रथमबोधे प्रधानान्वयत्यागे मानाभावात्॥

**वस्तुतस्तु**—कर्मवाचकपदोत्तरसप्तम्याः पतनप्रतिबन्धकत्वरूपमुख्याधिकरणत्वस्य कर्मण्यसंभवात्कालद्वारा लाक्षणिकतत्स्वीकारे तदपेक्षया प्राधान्यलाभरूपप्रयोजनलाभात् लक्षणयोद्देश्यत्वपरत्वमेव मीमांसकसंमतम्। क्वचिदेवतु ज्ञापकसत्त्वे निमित्तत्वपरत्वम्। तस्मात् प्रथमप्रयोगोद्देशेन क्रियाया एव निषेधाद्विकल्पापत्तिर्दुरुद्धरेत्येतत्सर्वमेतद्दूषणोपसंहारे न किंचिदेतदित्यनेन पूज्यपादैः सूचितम्॥ एवं निर्युक्तिके कारकनिषेधेऽसत्यप्यङ्गीकृत्यापि तस्यैव निषेधं विकल्पापत्तेरपरिहार्यत्वेन दूषयति—**कारकस्यापीति**॥ ज्योतिष्टोमाङ्गत्वेन सर्वस्मिन्नपि प्रयोगे प्रवर्ग्यस्य विधानात् तत्प्रयोगविधिना च साङ्गे तस्मिन्कालविधाने सति प्रथमप्रयोगाधिकरणत्वस्य कालद्वारापि विधितः प्राप्तेरित्यर्थः॥ **ननु**—"रात्रौ श्राद्धं न कुर्वीत" इत्यत्र विहितश्राद्धक्रियाया निषेधे सांवत्सरिकादिषु मृतदिनाधिकरणत्वेन प्राप्तरात्र्यधिकरणत्वस्य वा निषेधे सति निषेध्यप्राप्तेः शास्त्रीयत्वाद्विकल्पो दुष्परिहर एव इत्यत आह—**अतएवेति**॥

**अयं भावः—यद्यपि** पार्वणैकोद्दिष्टनान्दीश्राद्धादिविहितकालानामपराह्णादिशास्त्रैरपराह्णादिकालपरिच्छेदविधानात् रात्र्यधिकरणत्वस्य तद्विशिष्टश्राद्धक्रियाया वा न रागतः प्राप्तिरिति तन्निषेधकत्वमस्य दुरुपपादम्; **तथापि** "अहरहः श्राद्धं कुर्वीते"ति नित्यश्राद्धादौ वीप्सावशात् सवनदिनस्य निमित्तत्वमवगतम्; तत्राक्षेपेणानियतकालस्येच्छया प्राप्तौ यथाऽपराह्णादिवाक्यैः कालविशेषाधिकरणत्वबोधनद्वारा तन्निवृत्तिरर्थात् क्रियते एवं स्मृत्यन्तरेणैच्छिकरात्रिकालस्य प्राप्तस्य निषेधः क्रियते। एकप्रणीतस्मृत्यन्तरेण भिन्नप्रणीतस्मृत्यन्तरवैयर्थ्यापादनस्यायुक्तत्वेनास्य निषेधस्यापराह्णादिशास्त्रसंबन्धोत्तरमेव प्रवृत्तेर्नियन्तुमशक्यत्वात्। नह्येतावता रात्र्यधिकरणत्वस्य वैधी प्राप्तिः; तत्तत्सवनदिननिमित्ततायाः शास्त्रतो बोधेऽपि तदधिकरणत्वस्यार्थतः प्राप्तस्य विध्यभावात्॥ **एवं** संक्रान्त्यादिप्रयुक्तपिण्डदाननिषेधेष्वपि संक्रान्त्यादेर्निमित्तत्वेनोपादानादर्थप्राप्ततदधिकरणत्वनिषेधेऽपि न वैधी प्राप्तिरिति न विकल्पापादकत्वम्, इहतु प्रथमप्रयोगाधिकरणत्वस्य विधितः प्राप्तेर्वैषम्यम्॥

**एतेन**—विधिषु संक्रान्तिकालाधिकरणविधानाभावे तद्दिनादन्यत्रापि तत्प्रयुक्तश्राद्धाद्यापत्तेस्तद्दिनाधिकरणत्वविधिरावश्यक इति—**अपास्तम्**; बाधकाभावे निमित्तोत्पत्त्यनन्तरमेव नैमित्तिकानुष्ठानप्राप्तेरर्थसिद्धाधिकरणत्वबलेनैव दिनान्तरव्यावृत्तिसिद्धौ तत्र विधिव्यापाराभावात्। अस्तुवा संक्रान्त्यादीनां कालत्वेनाधिकरणत्वविधानम्; तथापि तदुपलक्षितसंपूर्णदिनमध्ये रात्रौ प्राप्तिस्त्वैच्छिक्येवेति न वैधत्वम्॥ **वस्तुतस्तु**—प्रारब्धे श्राद्धे मध्ये विघ्नेन सूर्यास्ते सति न्यायप्राप्ते गौणतयोत्तरकालेऽनियते प्राप्ते सति रात्र्यधिकरणत्वं प्रसक्तम्। तदुपजीव्यैवाऽयं निषेध इति न वैधप्राप्त्युपजीव्यत्वम्। **अतएव** एतद्विषयतयैव "नच नक्तं श्राद्धं कुर्वीत" **"प्रारब्धेचाभोजनमासमापनात्"** इत्यापस्तम्बसूत्रमुज्वलावृत्तिकारादिभिर्व्याख्यातम्॥ ततश्चोपक्रान्तं श्राद्धं तादृशमपरेहनि कार्यम्, श्राद्धसमाप्तिपर्यन्तं च कर्तुरभोजनमिति शास्त्रार्थः सिद्धो भवतीति सिद्धं रात्र्यधिकरणत्वं न वैधमिति॥ **वस्तुतस्तु**—पौरुषेयनिषेधेषु प्राप्तिपूर्वकत्वेन विकल्पतात्पर्ये वाशब्दप्रयोगस्यैवोपपत्तेः सर्वत्र पर्युदास एव युक्तः। अतएव व्याकरणादिस्मृतिभिर्निषेधकरणे नैव विकल्पः, किंतु विभाषादिग्रहणे एव। वेदेतु तादृशपर्यनुयोगस्यासंभवात् पर्युदासज्ञापकाभावे निषेधाश्रयणे तदापत्तिरिति वैषम्यनिमित्ता न कापि क्षतिः। प्रकृते वैषम्यमाह—**प्रकृते त्विति। प्रतिप्रधानमिति**॥ साङ्गप्रयोगविधिना प्रधानोद्देशेनाङ्गतया विहितस्य प्रवर्ग्यस्य द्वितीयादिप्रयोगेष्विव प्रथमप्रयोगेऽपि प्रतिप्रधानं गुणावृत्तिरिति न्यायेनानुष्ठानप्राप्तौ प्रथमप्रयोगाधिकरणत्वस्य विधित एव प्रवर्ग्ये प्राप्तिरित्यर्थः। अनेनैव न्यायेन यावज्जीवादिवाक्येन दीक्षितकर्तृत्वस्यापि वैधत्वात् विकल्पापत्तिभिया पर्युदासत्वं "दीक्षितो न जुहोती"त्यादिषु स्थापयिष्यते दशमे॥ **"सङ्ख्यायुक्तं क्रतोः प्रकरणात्"** इत्येतत्सूत्रभाष्यादिषूक्तेन प्रथमप्रयोगस्योद्देश्यत्वेन विरोधसद्भावेऽपि तमनिर्दिश्यैव शास्त्रदीपिकाव्याख्यातृत्वेन मुख्यतया अपेक्षितं तदुक्तविरोधमेव न सहते

वस्तुतस्तु—प्रथमप्रयोगस्य उद्देश्यत्वमेव शास्त्रदीपिकायामुक्तमिति न किञ्चिदेतत्। अतो "नानूयाजेष्वि"तिवत्पर्युदास एवायमनारभ्यवादवाक्यशेषः—उक्तविधप्रथमप्रयोगभिन्ने प्रवृञ्ज्यादिति । ततश्च प्रापकप्रमाणाभावात् प्रथमप्रयोगे अकरणप्रसक्तावग्निष्टोमे प्रवृणक्तीति वचनं वस्तुतोऽत्यन्ताप्राप्तप्रापकमपि प्रतिप्रसवफलकं सदग्निष्टोमसंस्थाकत्वे निमित्ते प्रथमप्रयोगेऽपि नित्यं प्रवर्ग्यविधानार्थम्, न तु विकल्पेन; विकल्पे प्रमाणाभावात्।

अस्य च नान्यविषयता सामान्यविधित एव सर्वत्र प्राप्तत्वादिति प्रथमप्रयोगविषयतैव । अनेन च काममित्यनू-

भवदुपपादनमित्यभिप्रेत्याह—शास्त्रदीपिकायामिति. ॥ शास्त्रदीपिकायाम्—"प्रथमप्रयोगाङ्गम्" इत्यसकृल्लेखनादुद्देश्यत्वमुक्तमित्यर्थः। पर्युदासपक्षेऽप्यस्य "न अग्निष्टोमे प्रवृणक्ती"त्यस्य वाक्यस्य शेषत्वं प्रथमयज्ञभिन्नेऽग्निष्टोमे प्रवृणक्तीति; तथा सत्यस्य द्वितीयादिप्रयोगविषयत्वस्यैव प्राप्तेः तत्रच सामान्यविधिनैव सिद्धेऽग्निष्टोमवाक्यवैयर्थ्यापत्तेः । नच विकृत्यग्निष्टोमेपूत्कर्षः; तत्राप्यतिदेशेनैव सामान्यविध्यर्थं प्राप्तेस्तस्य तुल्यत्वादविशेषितसर्वसोमप्राथम्यस्य च तत्राप्राप्तेः पर्युदासरूपवाक्याशेषानन्वयापत्तेः । अतः सामान्यविधिवाक्यशेष एवायं सन्निधानादित्यभिप्रेत्याह—अनारभ्यवादवाक्यशेष इति । उक्तविधेति । अग्निष्टोमातिरात्रसंस्थाकद्विविधप्रथमप्रयोगभिन्ने इत्यर्थः ।

ननु पर्युदाससहितेन सामान्यविधिना न तावदतिरात्रातिरिक्तविकृतिषु तद्विधानम्; अविशेषितसर्वसोमप्राथम्यस्य तत्राप्राप्तौ प्रथमयज्ञभिन्न इति वक्तुमशक्तेः, अतिरात्रातिरिक्ताग्निष्टोमरूपविकृतावग्निष्टोमातिदेशेनैव तत्प्राप्तिसिद्धेः सामान्यवाक्यानर्थक्याच्च । नचातिरात्रे तत्प्रथमप्रयोगेऽविशेषितसर्वसोमप्राथम्यसंभवेन प्रथमयज्ञत्वोपपत्तेस्तद्भिन्नतदीयद्वितीयादिप्रयोगेषु विधानम्; प्रकरणपाठपक्षे तत एव तत्र विधानायोगात्, अनारभ्याधीतपक्षे उत्पन्नमात्रप्रवर्ग्यपर्युदासे पर्युदसनीयपर्युदासयोः क्रत्वङ्गत्वानापत्तेः, अतिरात्रेच प्रकृत्यङ्गभूतप्रवर्ग्यसंबन्ध्युपसत्पूर्वकालत्वस्यातिदेशायोगेन स्थानानियमप्रसङ्गादुपसदन्वितप्रवर्ग्योत्पत्तिशेषत्वेन पर्युदासस्योपसत्प्रतीक्षित्वात् तासां च प्राप्तिकालवैषम्येन प्रकृतावेव निवेशोपपत्त्याऽतिरात्रे तद्विधानासंभवात्। एवंच प्रथमयज्ञभिन्ने प्रकृतावेवानारभ्याधीतविधिना प्रवर्ग्यविधानलाभेऽग्निष्टोमवाक्यमनेनैव वा प्रकृतौ तद्विधाने सामान्यवाक्यं किमर्थमित्याशङ्कां निरसितुमग्निष्टोमवाक्यस्यैव सार्थक्यं दर्शयति—ततश्चेति॥

अत्र वार्तिकस्वारस्येन पर्युदासत्वमङ्गीकृत्यैव न्यायसुधाकृतोक्तम्—पर्युदासेन प्रथमप्रयोगभिन्ने प्रवर्ग्यविधानात् अग्निष्टोमवाक्येनच पुनः प्रथमप्रयोगे तद्विधाने तत्र प्रवर्ग्यस्य नित्यमनुष्ठानम् पर्युदासाग्निष्टोमवाक्यद्वयसाध्यम्, तत्तु सामान्यवाक्येनाप्यग्निष्टोमाङ्गत्वेनैव प्रवर्ग्यविधानादुपपन्नमिति पर्युदासाग्निष्टोमवाक्यद्वयमनर्थकमेव, अनयोरुभयोरप्येकाग्निष्टोमविषयं विना प्रयोजनान्तराभावात्। अतो वाक्यानर्थक्यपरिहारायास्याग्निष्टोमविधेः प्रतिप्रसवार्थत्वमवश्यमङ्गीकार्यमेव । तच्चाकर्तव्यत्वोक्त्यर्थनिषेधविषयीकृतस्य कर्तव्यतोक्तिरूपं प्रतिप्रसवत्वमकर्मव्यत्वबोधकाभावेऽनुपपद्यमानम् अन्यत्र पर्युदासेऽविद्यमानमपीह तस्मिन्नकर्तव्यतावोधकतामाक्षिपतीति पर्युदासेनाकर्तव्यतया प्राप्तस्य पुनर्विधानात्कर्तव्यतावोधे निषिद्धविहितत्वादग्निष्टोमप्रथमप्रयोगे विकल्प इति, तन्निरस्यति—विकल्पे प्रमाणाभावादिति ॥ अयमर्थः—न तावत्प्रतिप्रसवलक्षणानुरोधेनेह पर्युदासस्याकर्तव्यतापरत्वम्, भवदुक्तलक्षणस्यैवाव्याप्त्यादिदुष्टत्वेनायुक्तत्वात् । नह्येतल्लक्षणमुत्तराधिकरणे पेषणप्रतिप्रसवविधौ संभवति । चरावतिदेशेन प्राप्तस्य प्रयोजनाभावेन निवृत्तस्य पेषणस्य पुनर्विधाने निषेधविषयत्वेनाकर्तव्यताया अप्राप्तेः। अतो निवर्तनाविषयत्वरूपाकर्तव्यताया असंभवात् विहितस्य कथंचित्प्रसक्तानुष्ठानस्य पुनर्विधिः प्रतिप्रसव इत्येव लक्षणं वक्तव्यमितीहापि पर्युदासेनानुष्ठानाभावे प्रसक्ते युक्त एव प्रतिप्रसवः ॥

वस्तुतस्तु—प्रकाशकारोक्तं विहितत्वघटितं प्रतिप्रसवलक्षणमादाय नास्य प्रतिप्रसवविधित्वं युक्तम्। पर्युदासान्वितसामान्यविधिना प्रथमप्रयोगभिन्ने एव विधानादग्निष्टोमप्रथमप्रयोगे विधानाभावे सति विहितस्य कथञ्चित्प्रसक्तानुष्ठानस्य पुनर्विध्यभावात् । अतोऽपूर्वविधेरेव प्रसक्तप्राप्तिकस्य कारणान्तरेण निवृत्तिप्रसक्तौ विधिः प्रतिप्रसवविधिरित्युत्तराधिकरणपूज्यपाददर्शितलक्षणलक्षितप्रतिप्रसवफलक इति प्रागुक्तमेव युक्तम्। अस्तिचेह विहितत्वाभावेऽपि प्रसक्तप्राप्तिकत्वम्; पर्युदासान्वयाभावे सामान्यविधितस्तत्प्रसक्तेः । नापि पर्युदासोऽग्निष्टोमप्रथमप्रयोगे प्रतिप्रसवफलीभूतविकल्पं विना स्वप्रयोजनमलभमानः स्वस्याकर्तव्यतावोधमाक्षिपतीति तद्बलाद्विकल्पः इतरेतराश्रयापत्तेः, अतिरात्रप्रथमप्रयोगे तद्वर्जनेन तत्सार्थक्योपपत्तेश्च ॥

यथाच निषिद्धप्रतिप्रसवत्वेऽपि न विकल्पोपपत्तिः तथा स्फुटीकरिष्यते । एतेन—पर्युदासवैयर्थ्यापत्त्याऽग्निष्टोमप्रथमप्रयोगे विकल्पः स्यादेवेति निवर्तनानिरूपणावसरं भाट्टालङ्कारकारोक्तम्—अपास्तम्। अतो न विकल्प इति भावः ॥ यत्रैवाप्राप्तिः तद्विषय एव विधानफललाभाद्विधिसामर्थ्यसहकृतप्रकरणादग्निष्टोमप्रथमप्रयोगविषयत्वसिद्धिरित्याह—अस्य चेति। अतएवान्यत एवाग्निष्टोमीयप्रथमप्रयोगाङ्गत्वलाभादग्निष्टोमपदं व्यर्थं सन्निमित्तपरमेव; तेनातिरात्रप्रथमाहारे पर्युदासवशादप्राप्त्यैव नित्यानुष्ठानेऽपि अग्निष्टोमातिदेशात् तत्प्राप्तौ नित्यानुष्ठानापत्तिः अथवा पर्युदासस्य निरवकाशत्वात् विकल्पापत्तिर्निरस्ता; अग्निष्टोमसंस्थाकत्वरूपनिमित्ताभावेना-

चानवाक्योपसंहारः । तेनाग्निष्टोमसंस्थाकप्रथमप्रयोगे अनूचानस्य नित्यकरणम् । तथा श्रोत्रियस्यापि । **अनूचानो** वेदाध्यापकः । तेन क्षत्रियवैश्ययोर्निवृत्तिः । **श्रोत्रियः** प्रकर्षेण वेद—तदर्थ—ज्ञः । कामं पदेन प्रकर्षाभिधानात् ।

तस्येत्येकपदेनोभयोः कर्त्रोर्विधानाच्च न विधेयानेकत्वम् । तदन्येषामग्निष्टोमप्रथमाहारेऽपि नित्यमकरणम् ।

यत्तु वार्तिके अनूचानादेर्विकल्पोऽन्येषां नित्यमकरण-

---

तिदेशाप्रवृत्तेरित्येतत्सूचनायैव पूज्यपादैरग्निष्टोमसंस्थाकत्वे निमित्ते इति प्रागुक्तम् ॥

एवंच पर्युदासस्याकर्तव्यतापरत्वमङ्गीकृत्याग्निष्टोमवाक्यस्य विकल्पफलकप्रतिप्रसवविधित्वमिच्छतो न्यायसुधाकारस्याग्निष्टोमपदस्य निमित्तपरत्वाङ्गीकारेणैवातिरात्रप्रथमाहारे सामान्यवाक्यशेषभूतस्य पर्युदासस्यातिरात्रे अतिदेशाप्राप्तेर्नित्यमकरणाद्विकल्पार्थस्य प्रतिप्रसवस्यानतिदेशादित्युक्तिर्द्रष्टव्या । तेनातिरात्रप्रथमप्रयोगे निमित्ताभावात् अग्निष्टोमातिदेशाप्रवृत्तेः प्राप्त्यभावादकर्तव्यतारूपपर्युदासस्य चातिदेशात् विशेषतस्तद्विषये प्रतिप्रसवाभावात् नित्यमकरणम्, ननु विहितनिषिद्धत्वाद्विकल्पः । नह्यत्राकर्तव्यत्वं कर्तव्यतापेक्षम्, येनेहाकर्तव्यत्वस्य कर्तव्यतापूर्वकत्वात्कथंचित्कर्तव्यताप्राप्तौ विकल्पापत्तिः स्यात्, किंतु प्राप्त्यभावादेव यदकर्तव्यत्वं फलीभूतम् तदेवाग्निष्टोमविध्यानर्थक्यभिया नञ्तात्पर्यविषयीभूतं कल्प्यत इत्यकर्तव्यत्वस्य शास्त्रार्थत्वे सिद्धे अनन्तरं प्रतिप्रसवेन प्राप्तिरिति विकल्पः, इहतु तदभावान्नेति तात्पर्यम्, नत्वग्निष्टोमवाक्यानर्थक्यरूपतात्पर्यग्राहकबलेन पर्युदासे अकर्तव्यतापरत्वमग्निष्टोमप्रकृतौ तदतिदेशतः तत्संस्थाकविकृतावेव भवतीत्यन्यत्र तात्पर्यग्राहकाभावे नाकर्तव्यतापरत्वं नञस्तत्रेत्यभिप्रायः ॥ **एतेन**—तात्पर्यग्राहकस्यानतिदेशेऽपि तेनाकर्तव्यत्वे गृहीततात्पर्यकतया निर्णीतार्थस्यैव पर्युदासस्यातिदेशादेकस्य च प्रकृतावकर्तव्यतोक्त्यर्थत्वं विकृतौ नेति परस्परविरुद्धानेकार्थत्वायोगात् विकृतावप्यकर्तव्यतोक्त्यर्थत्वादतिरात्रेऽपि विकल्पप्रसङ्गः पर्युदासपक्षे दुर्निवार इति प्रकाशकारोक्तं न्यायसुधाकृद्दूषणम्—**अपास्तम्**; न्यायसुधाकृता पूर्वोक्तरीत्या पर्युदासफलीभूताकर्तव्यतातिदेशस्याङ्गीकरणात् तत्र नित्याकरणप्राप्तेः तन्निवर्तकातिदेशस्य प्रतिप्रसवान्तरस्य चाभावे विकल्पानङ्गीकारात् अनभ्युपगमदूषणस्य व्यर्थत्वात् । अतो न्यायसुधाकृत्संमतं निमित्तत्वमेव युक्तम् । नहि भवन्मते इवाग्निष्टोमे इति सप्तम्या अधिकरणत्वपरत्वमावश्यकम्, येन निमित्तत्वपरत्वं न कल्प्येत । अधिकरणनिमित्तत्वोद्देश्यत्वयोरभिधाने प्रयोजनाभावात् अतिरात्रप्रथमाहारे नित्याकरणप्रयोजनलाभाय निमित्तत्वपरत्वस्यैव न्याय्यत्वात्, **भवन्मतेतु** निषेधेन प्रथमप्रयोगाधिकरणत्वस्यैव निषेधात् निषेधप्रतिप्रसवयोः एकविषयत्वायाग्निष्टोमाधिकरणत्वस्यैव प्रतिप्रसवरूपेण विधानावश्यकत्वमिति तदनुरोधेन तत्परत्वमावश्यकम् । **नचैतावताऽपि** भवन्मतेऽस्य प्रतिप्रसवविधित्वं **युज्यते**; विहितस्य कथंचित्प्रसक्तानुष्ठानस्य पुनर्विधिः प्रतिप्रसवः इति भवदुक्तलक्षणासंभवात् । नहि प्रथमप्रयोगाधिकरणत्वस्यानुष्ठानं तदभावोऽपि संभवति । किंच विहितस्येति विशेषणात् प्रथमप्रयोगाधिकरणत्वं विहितं वा ? नवा ? आद्ये वैधत्वेन तन्निषेधेऽपि पूज्यपाददर्शितरीत्या विकल्पापत्तिर्दुरुद्धरैव । **द्वितीये** तद्विषयकप्रतिप्रसवानुपपत्तिः । **यत्तु भाट्टदिनकरे**—षोडशग्रहणविधिनिषेधयोरुद्देश्यतावच्छेदकैक्याद्विकल्पप्रापकत्वेऽपीह भिन्नोद्देश्यतावच्छेदकत्वेन तदभावान्निषेधपक्षेऽपि न विकल्पप्रसक्तिः, अतो निषेधोत्तरप्रवृत्तेनैकोद्देश्यतावच्छेदकावच्छिन्नोद्देश्येन "अग्निष्टोमे प्रवृणक्ती"ति विधिना विधानाद्विकल्पः सिद्धान्ते युक्त इत्युक्तम्, **तन्मन्दम्**; विध्युपजीविनिषेधस्थले निषेधोद्देश्यतावच्छेदकरूपावच्छिन्नोद्देश्यकत्वस्यैव विधिगतस्य विकल्पप्रयोजकत्वेनैकोद्देश्यतावच्छेदकनियमस्याप्रयोजकत्वात् । इतरथा प्राप्त्यभावादेव तन्निषेधानुपपत्तेः । अतएव "न तौ पशौ"वित्यस्य निषेधस्यातिदेशात् प्रागप्रवृत्तेस्तत्प्राप्तिप्रापकातिदेशोत्तरमेव प्रवृत्तेः शास्त्रप्राप्तस्यात्यन्तं बाधायोगाद्विकल्प इत्युक्तम् नतूद्देश्यतावच्छेदकैक्यादिति मीमांसकैः । भवन्मतेऽपि प्रथमप्रयोगत्वस्यातिरात्रप्रथमप्रयोगसाधारणतयोद्देश्यतावच्छेदकत्वादग्निष्टोमवाक्ये अग्निष्टोमत्वस्य तत्त्वेनैक्याभावादतिरात्रविधिनिषेधवैलक्षण्याद्विकल्पानापत्तेश्चेत्यस्तु प्रासङ्गिकम् । अतोऽतिरात्रप्रथमाहारेऽपि प्रवर्ग्यानतिदेशात् सर्वथा न्यायसुधाकारमते न विकल्पापत्तिः, स्वमतेतु सुतरामिति सिद्धम् ॥

एवं स्थिते "न प्रथमयज्ञे" इत्यस्य निषेधत्वपरत्वे न्यायसुधाकृता अतिरात्रप्रथमाहारेऽप्यतिदेशप्राप्तप्रवर्ग्यप्रतिषेधाद्विकल्पापत्तिः प्रकृतावपि विहितप्रतिषिद्धत्वात् विकल्पसिद्धेः विकल्पप्रतिप्रसवविधानपराग्निष्टोमवाक्यानर्थक्यं चेति दूषणद्वयं दत्तम्, तत्परिहर्तुमग्निष्टोमवाक्यार्थवर्णनं बालप्रकाशेऽन्यथाकृतम् ॥ **तथाहि**—सामान्यवाक्यनिषेधाभ्यामग्निष्टोमप्रथमप्रयोगे विकल्पस्तावत्प्रसिद्धः । अतिरात्रप्रथमप्रयोगे त्वतिदेशप्राप्तस्य तस्य निषेधात्सः । तत्राग्निष्टोमवाक्यं यत्प्रवृणक्ति तदग्निष्टोम एवेति परिसङ्ख्यापरं सदतिरात्रे प्रवर्ग्यानुष्ठानं नास्तीति फलतो विकल्पपरिसङ्ख्यार्थम् । तेनातिरात्रप्रथमप्रयोगे नित्यमेव तदननुष्ठानं सिद्ध्यतीति न विकल्पापत्तिः, अग्निष्टोमप्रथमप्रयोगेतु विकल्पपरिसङ्ख्याभावादुक्त एव सः । नचैवं तर्हि अतिरात्रप्रथमप्रयोगवत्तद्द्वितीयादिप्रयोगसाधारण्येन विकृत्यन्तरेऽपि वैकल्पिकप्रवर्ग्यानुष्ठानपरिसङ्ख्यापत्तिः; यत्रैव पक्षे निवृत्तिः प्राप्ता तत्रातिदेशप्राप्तविकल्पवशात्तदनुष्ठानेन तस्या अप्राप्तौ तत्पूरणकरणे लघ-

मित्युक्तम्, तत्प्रौढिमात्रम्। अत एव पार्थसारथिना अनू- चानादेर्नित्यमेव प्रयोग इत्युक्तम् । यदि तु तदेव समर्थ-

वादन्यत्र तदप्रवृत्तेः । अतिरात्रप्रथमप्रयोगे निवृत्तिर्हि निषेधेनैव जाता । सैव प्रवर्ग्यानुष्ठानपक्षेऽप्राप्ता प्रवर्ग्यानुष्ठाननिरसनद्वारा बोध्यते, नत्वपूर्वा; तद्द्वितीयादिप्रयोगेषु त्वपूर्वैव सा विधेयेति गौरवमिति लाघवानुरोधादतिरात्रप्रथमप्रयोग एव तन्निवृत्तिर्नान्यत्रेति न बाधकमिति ॥

**तदप्येतेन निरस्तम्**; पूर्वोक्तरीत्या पर्युदासे सति क्वचिदप्यष्टदोषदुष्टविकल्पानाश्रयणेन सकलवाक्यसामञ्जस्योपपत्तौ विकल्पापादकनिषेधपरिसङ्ख्योभयपरत्वकल्पनस्य निरर्थकत्वात्, प्रतिप्रसवत्वपक्षेऽप्यग्निष्टोमपदस्य निमित्तपरत्वाङ्गीकारेण न्यायसुधाकृदुक्तदूषणद्वयपरिहारसंभवे परिसङ्ख्यापरत्वकल्पनस्य गौरवग्रस्तत्वाच्च । **यद्यपि** "अश्वाभिधानीमादत्ते" इत्यत्रेव यावदतिदेशेनातिरात्रप्रथमप्रयोगे प्रवर्ग्यतन्निषेधप्राप्त्या विकल्पः प्राप्नुयात् ततः पूर्वप्रवृत्तेनाग्निष्टोमसंबन्धे प्रवर्ग्यस्य बुद्धेऽर्थादतिदेशप्रतिबन्धः फलमिति फलतः परिसङ्ख्यात्वात् न त्रैदोष्यमत्रेति तद्ग्रन्थे उक्तम्; **तथापि स्यादेवम्** यदि प्रवर्ग्योत्पत्तिसमय एव ग्राह्यव्यावर्तनीययोः शेषिणोः समुच्चयेनैकस्मिन्काले प्रवर्ग्यः प्राप्नुयात्, नत्वेतदस्ति; अग्निष्टोमाङ्गत्वबोधानन्तरमेवातिदेशस्य प्रवृत्तेः समुच्चयासंभवात् । अग्निष्टोमाङ्गत्वबोधानन्तरं चातिरात्रप्रथमप्रयोगप्राप्तिकाले अग्निष्टोमशेषिणः समुच्चयस्य सिद्धत्वादेवासंभवः । अत एवैकप्रमाणप्रापितत्वे एव फलतः परिसङ्ख्याङ्गीकारो मीमांसकानाम् ॥ **किंच** अतिदेशप्रतिबन्धोऽपि प्रवर्ग्येऽतिरात्रप्रथमप्रयोगस्य नैराकाङ्क्षापादनद्वारा स्यात्, नत्वेतदस्ति; अग्निष्टोमाङ्गत्वबोधनेन तदीयप्रयोगविधिनैराकाङ्क्षासंभवेन तत्प्रतिबन्धानुपपत्तेः । **अतएव** "तं द्विरात्रेणे"त्यादिवाक्यानामप्राप्तविकृत्यन्तरपरिसङ्ख्यापरत्वं खण्डितं विधिरसायनादिषु ॥ किंच प्राप्तपरिसङ्ख्यायां यत्र पक्षे निवृत्तिः प्राप्ता तत्रैवानेन निवृत्तिबोधने लाघवेऽप्यतिदेशप्रतिबन्धद्वाराऽत्र निवृत्तेः फलत्वकल्पने यत्र निवृत्तिस्तद्विषयकातिदेशस्यैव प्रतिबन्धे मानाभावः । प्रवर्ग्यपुनर्विधिना अन्यत्र तदतिदेशस्यैव प्रतिबन्धकरणादर्थात्प्राप्त्यभावादेव निषेधाप्रवृत्तेः परिसङ्ख्याविधेरतिदिष्टनिषेधशास्त्रालोचनापेक्षित्वाभावात् यत्रैतदतिदेशः तन्मात्रस्यैव प्रतिबन्धापत्त्या विकृत्यन्तरपरिसङ्ख्याया अप्यापत्तेः । नह्यत्रातिदेशद्वयमस्ति, येनैकातिदेशेन प्राप्तस्य निषेधेन विकल्पसिद्धौ पक्षे प्रापकस्यातिदेशान्तरस्य प्रतिबन्धः फलमुच्येत । अतो निवृत्तिप्राप्तिसिद्ध्यर्थमतिदेशस्यावश्यकत्वे तत्प्रतिबन्धायोगान्न निवृत्तिमात्रविषया अतिदेशप्रतिबन्धसिद्धिः । अस्तुवा भवदभिमतम्; तथात्वे "नोक्थ्ये प्रवृंज्या-दि"ति निषेधेनोक्थ्येऽपि तन्निवृत्तेः सत्त्वात् परिसङ्ख्याविषयत्वापत्तौ विकल्पानापत्तिः ॥

**अपिच**—अग्निष्टोमवाक्यस्य सामान्यशास्त्रोपजीविनिषेधशास्त्रसिद्धविकल्पप्रवृत्त्यनन्तरमेव प्रवृत्तौ किं प्रमाणम्? येन पक्षप्राप्तस्य प्रवर्ग्यस्याग्निष्टोमसंबन्धबोधनेन पक्षप्राप्तविषयिण्येव परिसङ्ख्या स्यात्, किंतु कथंचित्परिसङ्ख्यापरत्वस्यैव स्वीकारे सति सामान्यवाक्यप्रवृत्त्यनन्तरमेव निषेधप्रवृत्तेः पूर्वं एतद्वाक्यप्रवृत्त्यङ्गीकारेण तस्य वैयर्थ्यपरिहारार्थं सर्वविकृत्यतिदेशप्रतिबन्धफलस्य कल्पनात् पश्चान्निषेधप्रवृत्तावग्निष्टोमप्रथमप्रयोगविषये निषेधे सति तत्रैव विकल्पः, अन्यविकृतौ तु सर्वत्रैवानुष्ठानवदतिरात्रप्रथमप्रयोगे तदनुष्ठानं सिध्यत्येवेति प्रकारेणापि परिसङ्ख्यापरत्वापत्तिः। **युक्तंचैतत्**—अन्यशाखायां सामान्यविध्यनन्तरनिषेधाम्नानवत् तैत्तिरीयशाखायां निषेधाभावात् प्रत्युत "पुरस्तादुपसदां प्रवर्ग्यं प्रवणक्ती"-ति विधानानन्तरमेवाग्निष्टोमवाक्यस्य पठितत्वादस्य वैयर्थ्यपरिहारजिज्ञासायां शाखान्तरीयत्वेन विलम्बोपस्थितिकनिषेधसापेक्षविकल्पपरिसङ्ख्यापरत्वकल्पनापेक्षया पूर्ववाक्योपस्थितप्रवर्ग्यपरिसङ्ख्यापरत्वकल्पनस्यैवोचितत्वात्, अतिदेशविलम्बितोपस्थितिकत्वस्योभयोरपि समत्वात् । अस्तु वा सकलग्रन्थोपपादितस्य निषेधानन्तरमेव प्रवृत्तिः । **तथापि** प्रतिषेधपक्षेऽग्निष्टोमे विकल्पप्राप्तावुत्तरेऽहनि द्विरात्रस्य गृह्यते इत्यत्रेव प्रकरणपाठफले प्रकृते एव विधेयगामिनि च संभवति सति पक्षप्राप्तप्रवर्ग्यायोगव्यावृत्तिरूपनियमविधानमेव युक्तमङ्गीकर्तुम् न तूक्तविधप्रकारद्वयेन परिसङ्ख्यापरत्वं तदफलकम्, प्रत्युत निषेधस्य प्रकृतावविशेषकारित्वादतिरात्रप्रथमप्रयोगपरत्वमेवेति तत्रैवातिदेशप्राप्तस्य निषेधाद्विकल्पः स्यादित्यग्निष्टोमे एव न विकल्पः प्राप्नुयात् । अतश्च परिसङ्ख्यानियमविध्यपेक्षयापि प्रतिप्रसवस्य लघुत्वात्तेनैवाग्निष्टोमविधेः सार्थक्यमुपपादनीयम्। तथापि सामान्यविशेषभावेनाग्निष्टोमविधिना विशेषरूपेणाग्निष्टोमप्रथमप्रयोगे सामान्यनिषेधस्य बाधे सति निषेधस्यातिरात्रप्रथमप्रयोगपरत्वमेवेति तत्रैव पुनरपि विकल्पापत्तिरप्राप्तिश्च विकल्पस्याग्निष्टोम इति सर्वथा नाग्निष्टोमवाक्यस्य कथंचिदपि वाक्यार्थवर्णनेन प्रकृतौ विवक्षितलाभः । अथापि प्रकृतौ विवक्षितलाभाभावेऽपि लघुभूतप्रतिप्रसवविधित्वस्वीकारेणार्थवत्त्वोपपादने अतिरात्रप्रथमप्रयोगे विकल्पापत्तिरिति न्यायसुधाकृदुक्तदूषणतात्पर्यं दुष्परिहरमेवेति **दिक्** ॥ **तस्मात्** अग्निष्टोमवाक्यस्य विधित्वे सत्यग्निष्टोमसंस्थाकत्वस्य निमित्तत्वमाश्रित्यैवातिरात्रप्रथमप्रयोगे तदतिदेशनिवारणं पर्युदासपक्षे कर्तव्यमिति विकल्पाप्राप्तेरेव न नियमविधित्वाद्यापादनप्रसङ्गः । **न चैवम्**—भवन्मतेऽग्निष्टोमसंस्थाकत्वनिमित्ताभावेनातिरात्रप्रथमप्रयोग इव न द्वितीयादिप्रयोगसाधारणाग्निष्टोमसंस्थान्यविकृतिष्वपि नित्यं तदननुष्ठानापत्तिरि**ति—वाच्यम्**; पर्युदासान्वितसामान्यविधिना विहितस्य प्रवर्ग्यस्यैव पर्णतान्यायेन प्रकरणेन वाग्निष्टोमाङ्गत्वात् तदतिदे-

शेनैव तत्र तत्प्राप्त्युपपत्तेः । अतिरात्रप्रथमप्रयोगे तु प्रथमप्रयोगभिन्ने एव तदङ्गबोधनात्—नातिदेशः । अग्निष्टोमप्रथमप्रयोगेऽप्राप्तप्रवर्ग्यविधानात् तदतिदेशेन तत्प्राप्तिस्तु निमित्ताभावादेव न भवतीति सिद्धमग्निष्टोमसंस्थाकत्वं निमित्तं केवले अतिरात्रप्रथमप्रयोगेऽग्निष्टोमातिदेशव्यावृत्त्यर्थम्—इति ॥ तदेतत्सर्वमभिसन्धाय **अग्निष्टोमसंस्थाकत्वे निमित्ते** इत्युक्तं पूज्यपादैः॥ प्रस्तुतमनुसरामि॥ **अत एव पार्थसारथिनेति।** एतच्च पार्थसारथ्युक्तं गुणवत्तरत्वेन स्वोक्ति सम्मत्यर्थं न, प्रयोजनाभावात्, अपितु पार्थसारथ्युक्तं मदीयप्रकारेणैव निर्वहति, नतु विकल्पाङ्गीकारेणेति सूचनाय । **तथाहि**—प्रकाशकृता तावदनूचानस्य प्रथमप्रयोगे नित्यं करणमिति मूलोक्तौ वैकल्पिकमनुष्ठानमनूचानस्येति वार्तिकविरोधमाशङ्क्य परिहृतम् । नह्यत्र "रथन्तरं वा पृष्ठं भवति बृहद्वा पृष्ठं भवती"तिवद्वाक्यार्थ एव विकल्पः, येन तदुपसंहारे श्रोत्रियविषय एव विकल्पः स्यात् । न्यायतस्तु निषेधेन सहाग्निष्टोमवाक्यस्यात्यन्तसमानविषयत्वाद्विकल्पः प्राप्त आसीत्, अनूचानविधिना तु तस्योपसंहारादत्यन्तसमानविषयत्वघटनात् कुतो विकल्पः ? तदा ह्यग्निष्टोमवाक्यं श्रोत्रियमात्रविषयं कृतमिति विशेषविषयं सम्पन्नम्, निषेधस्तु श्रोत्रियाश्रोत्रियसाधारणत्वात्सामान्यशास्त्ररूपः सिद्ध इति स विधिना बाधित एवेति मिश्राणामाशय इति । अनेन च "सर्वथाऽस्मिन्निषिद्धप्रतिप्रसवविधौ विकल्पो नास्तीत्युक्तं भवती"त्युक्तम्, तदेतच्छास्त्रदीपिकापूर्वग्रन्थविरुद्धम्; "तेनाग्निष्टोमप्रथमप्रयोगे विकल्पः । स च व्यवस्थितो वचनान्तरवशादिति पूर्वग्रन्थे विकल्पमङ्गीकृत्यैव तस्य व्यवस्थादर्शनात् "यदग्निष्टोमप्रथमप्रयोगे प्रवृणक्ति सोऽनूचान" इति उपसंहारप्रतीतेरनूचानवाक्योपसंहृताग्निष्टोमवाक्यस्य प्रतिप्रसवार्थत्वोक्त्या निषिद्धप्रतिप्रसवत्वेन संपद्यमानो विकल्पोऽनूचानविषय एवेति प्रतीतेः । स्वयमपि च न्यायसुधाकृन्मतखण्डनानन्तरं "तस्मादतिरात्रप्रथमप्रयोगे नित्याप्रयोगम् अग्निष्टोमप्रथमप्रयोगे च विकल्पप्रतिप्रसवार्थवत्त्वं च वयमेवं मिश्रवार्तिकसंमतं समर्थयामः" इति ग्रन्थे विकल्पप्रतिप्रसवार्थत्वेऽग्निष्टोमवाक्यस्य मिश्रसंमतत्वस्यावश्यकत्वेन दर्शितत्वाच्च, अतो विकल्पाङ्गीकारेणानूचानस्य नित्यं करणं न सिध्यति ॥ अतएव वार्तिककृता विकल्पस्यैवोपसंहारो दर्शितः ॥

**नच**—शास्त्रदीपिकायाम् न्यायप्रसक्तविकल्प एव वास्तवतया उक्तेऽपि तस्यानुष्ठानतदभावोभयांशसहितस्य नाम्ने व्यवस्थोच्यते, किंतूभयात्मकस्य मध्ये योऽनुष्ठानांशः सोऽनूचानस्य यस्त्वननुष्ठानांशः स तद्व्यतिरिक्तस्येत्येवं सोच्येत; तथाचानूचानादेरनुष्ठानांशविधिना निषेधस्य बाधादेव युक्तम्—अनूचानस्य नित्यमग्निष्टोमप्रथमप्रयोगे प्रवर्ग्यकरणमिति वचनम्—**इति वाच्यम्**; तथात्वे श्रोत्रियन्यायेनाग्निष्टोमातिरात्रप्रथमप्रयोगसाधारण्येन निषेधस्य सामान्यरूपत्वादग्निष्टोमप्रथमप्रयोगविषयकविशेषविधिना बाधादेव सर्वथा विकल्पाप्रसक्तेः । नहि निषेधस्य प्राप्त्युपजीव्यत्वेन सामान्यतोऽपि प्राप्तस्य निषेधे विकल्पवदिह निषेधोत्तरप्रवृत्तविधेर्निषेधोपजीव्यत्वमस्ति, येन सामान्यतः प्राप्तस्यापि निषेधस्य बाधार्थं प्रवृत्तेन विधिना सह विकल्पः स्यात् । तथात्वे श्रोत्रियोपसंहारेऽपि विकल्पापत्तेः । अतः प्रतिप्रसवस्थले निषेधावगताप्राप्तांशपूरणमेव विवक्षितम् । आर्थिकी तु निषेधनिवृत्तिः । अतएव "न दीक्षितस्यान्नमश्नीयात्" इति निषेधोत्तरप्रवृत्तवपाहोमोत्तरदीक्षितान्नभोजनविधौ न विकल्प इति सर्वसंमतम् ॥

यद्यपि अग्निष्टोमवाक्यस्यापि बहुप्रयोगान्तरक्रत्वन्तरंगामित्वेन सुतरां सामान्यरूपत्वमिति वार्तिके तद्व्याख्याने न्यायसुधायां च द्वितीयादिप्रयोगेषु क्रत्वन्तरेषु चान्यतः प्राप्त्यालोचनया ज्यौतिष्टोमिकाद्यप्रयोगाख्यविशेषविषयत्वावगमेऽपि स्वारसिकसामान्यविशेषविषयत्वालोचनया बाध्यबाधकभावप्रसिद्धेर्निषेधस्याग्निष्टोमातिरात्राद्यप्रयोगयोः द्वयोरेव सामान्यरूपत्वात् विधेस्तु बहुषु द्वितीयादिषु क्रत्वन्तरेषु च सामान्यरूपत्वात् विधेर्बाधकता न युक्तेत्येवंविधेः सामान्यशास्त्रत्वं युक्तम्, तथापि नैतद्बहुपयोगि; आपाततः स्वारसिकप्रतीतिसिद्धस्य सामान्यशास्त्रत्वस्य तदुक्तस्य स्वीकारे श्रोत्रियोपसंहारात् प्राक् स्वरसतोऽस्य सामान्यशास्त्रस्य श्रोत्रियविषयेऽपि निषेधबाधकत्वायोगात् ॥

**वस्तुतस्तु**—यदि स्वारसिकप्रतीतिसिद्धसामान्यशास्त्रत्वाङ्गीकारेण न निषेधबाधकत्वमिति शास्त्रार्थनिर्णयः, तर्हि तादृशसामान्यशास्त्रमादाय निषेधाक्रान्ते अग्निष्टोमप्रथमप्रयोगविशेषे तस्याप्रवृत्तेः बाधात् द्वितीयादिप्रयोगक्रत्वन्तरविषयमेवाग्निष्टोमवाक्यमित्येतावतैव निषेधबाध्यत्वमेव स्यात् । तत्र वैयर्थ्ये सत्यपि प्रमाणायातमनुवादत्वमेवापद्येतेति विधित्वमेवासिद्धम् । अतो यदि स्वारसिकप्रतीतिकाले एवं अनधिगतार्थगन्तृत्वरूपस्वप्रामाण्यनिर्वाहाय अन्यथानुपपत्त्याऽग्निष्टोमपदं तदीयप्रथमप्रयोगविशेषपरं लक्षणयोच्यत इति न सामान्यरूपत्वम्, अपितु विशेषशास्त्रत्वेन न निषेधबाध्यत्वम्, तर्हि निषेधबाधकत्वं दुर्वारमेवेति क्व विकल्पप्रसक्तिः ? अस्तु वार्तिककारादिसंमतमेव तादृशं सामान्यविशेषत्वम्, तावता श्रोत्रियकर्तृकप्रयोगे नित्यं प्रवर्ग्यानुष्ठानं साधयतोऽग्निष्टोमप्रथमप्रयोगे विकल्पोपपादनं दुरूहमेव । अत एव तैत्तिरीयारण्यकपठितप्रवर्ग्यकाण्डभाष्ये अधिकरणमालायाम्—अनूचानवाक्योपसंहारेणानूचानाननूचानाधिकारिभेदेनैव विकल्पानाश्रयणेन निषेधाग्निष्टोमवाक्ययोः व्यवस्था श्रीविद्यारण्यगुरुभिरुक्ता । **वार्तिककृतापि**—पूर्वोक्तप्रकारेण सामान्यविशेषशास्त्रत्वमङ्गीकृत्यैव साधितस्य विकल्पस्यानूचानप्रयोगेऽपि तत्प्रसक्तिरुक्ता ॥

**मम तु . प्रतिभाति**—वार्तिकाद्युपपादितमग्निष्टोमवा-

क्यस्य सामान्यपरत्वमिति निषेधस्य वाधाभावान्निषिद्धत्वे सति विहितत्वात् विकल्प• इत्येतत् सर्वथाऽयुक्तमेव । निषेधप्रतिप्रसवार्थत्वेनाग्निष्टोमवाक्यस्यैवानूचानवाक्योपसंहारात्प्राक् प्रवृत्तौ मानाभावात्, प्रत्युत अनूचानवाक्ये निषेधमुल्लङ्घ्यापीत्यर्थककामपदोपादानात् तस्यैव पूर्वप्रवृत्त्या प्रतिप्रसवार्थत्वं युक्तम् । ततश्चानूचानवाक्यस्य स्वारसिकप्रतीतावेव विशेषपरत्वनिश्चयात् तेन विशेषरूपेणानूचानाननूचानसाधारणप्रवृत्तस्य सामान्यरूपस्य निषेधस्य वाधादेव क विकल्पप्रसक्तिरित्यग्निष्टोमातिरात्रप्रथमप्रयोगयोरनूचानस्य प्रतिप्रसवाभित्यं करणमननूचानादेस्तु तयोः सर्वथा विकल्पेनेति सिध्यति । एवं सत्यपि पश्चादग्निष्टोमवाक्येनाप्यनूचानवाक्यस्योपसंहारकल्पने तु निषेधवाधेनाग्निष्टोम एवानूचानस्य प्रतिप्रसवकरणात् सुतरां निषेधस्यातिरात्रप्रथमप्रयोगविषयत्वादपि सामान्यरूपस्य वाध एवेति नैतावताऽप्यग्निष्टोमे विकल्पः सिध्यति॥

**परमार्थतस्तु**—अनूचानाग्निष्टोमवाक्ययोरेकतरस्यापि निषेधोत्तरप्रवृत्तिमादाय प्रतिप्रसवविधित्वाङ्गीकारेऽपि उभयोरपि स्पष्टत्वान्नैव परस्परमुपसंहारः, अस्पष्टस्यैव स्पष्टेनोपसंहारात्, **तदुक्तं वार्तिके**—"सामान्यविधिरस्पष्टः संहियेत विशेषतः । स्पष्टस्य तु विधेर्नान्यैरुपसंहार इष्यते ॥" इति; अन्यथा "न ब्राह्मणो हन्तव्य" इत्यस्यापि "नात्रेयीं हन्या"दित्यनेनोपसंहारापत्तेः । यत्रापि स्पष्टस्यापि पुरोडाशसामान्यवाक्यस्याग्नेयवाक्येनोपसंहार इष्यते, सोऽपि यत्र विशेषवाक्यस्यानन्यथासिद्धसंकीर्तनमस्ति तत्रैव । अत एव दशमे—"**अभावादतिरात्रेषु गृह्यते**" इत्यधिकरणे "उत्तरेऽहि द्विरात्रस्य गृह्यते" इत्यनारभ्याधीतवाक्यस्य सामान्यतो द्विरात्राणामुत्तरेऽहनि षोडशग्रहणविधायकस्याङ्गिरसां द्विरात्रप्रकरणे पठितेन "वैखानसं पूर्वेऽहनि साम भवतीति षोडश्युत्तरे" इति विशेषसंकीर्तितेन षोडश्युत्तरे इत्यनेन नोपसंहारोऽङ्गीकृतः, अस्य वैखानसवाक्यशेषत्वेनाप्युपपत्तौ द्विरात्रसामान्योत्तराहःपुरस्कारेण विहितषोडशिग्रहणनियमस्य सङ्कोचायोगात् । एवं "यत्किंचित्प्राचीनमग्नीषोमीयादि"त्यस्याप्युपांशूपसत्स्वित्यनेन नोपसंहारः; आतिथ्यादीक्षणीयाखरविध्यर्थवादत्वेनाप्युपपत्तौ तत्संकोचकत्वायोगात् । तथाचेहापि तैत्तिरीयशाखायामग्निष्टोमं प्रवृणक्तीत्यनन्तरमेव "नोक्थ्ये प्रवृञ्ज्यादि"ति निषेधाम्नानादग्निष्टोमवाक्यस्य तच्छेषत्वेनोपपत्तौ नानूचानवाक्यसङ्कोचकत्वं युक्तम् । अतएवास्यां शाखायाम्—"पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति—" इति वाक्येन पूर्वं प्रवर्ग्यविधानात् निषेधानाम्नानेनैव नित्यमेव प्रवर्ग्याम्नानम् ॥

**अस्तु वा** अग्निष्टोमवाक्यस्यापि विधित्वम्, तथापि पुरस्ताद्वाक्यार्थवादे कालस्तुतेरेव करणात्तस्य कालविधायकत्वमेव । अग्निष्टोमवाक्यानन्तरपठितार्थवादेऽग्निष्टोमसंबन्धेन प्रवर्ग्यस्तुतेरेव प्रतीत्याऽग्निष्टोमोद्देशेन प्रवर्ग्योत्पत्तिविधिरेवेति न शाखान्तरीयवाक्यालोचनयाऽस्य वैयर्थ्यापादनं युक्तम्; इतरथाऽनारभ्याधीतवाक्येनैव तदनुष्ठाननिषेधयोः प्राप्तौ कौषीतकिब्राह्मणप्रकरणे उभयपाठवैयर्थ्यस्यापरिहार्यत्वापत्तेः । अतोऽनारभ्याधीतस्य प्रवर्ग्यस्योपसद्द्वारा द्विरुक्तत्वन्यायेन यावज्ज्योतिष्टोमाङ्गत्वं कल्प्यम् ततः पूर्वमेव तस्यामेव शाखायाम्—"साहस्रे प्रवृञ्ज्याद्राजसूये प्रवृञ्ज्या"दित्यादिप्रत्यक्षविनियोगविधिदर्शनात्तत्रैव विनियोगापत्तेः पुरस्ताद्वाक्यस्यापि तदीयोपसत्पूर्वकालताविधायकत्वेनोपपन्नत्वात्कथमप्यप्राप्तं ज्योतिष्टोमाङ्गत्वं प्रकरणपाठेनैव साधनीयम् नान्यथा सिध्यतीति प्रकरणपाठवैयर्थ्यं परिहरणीयम् ॥

अत एवाधिकरणारम्भे—पूज्यपादैः प्रकरणपाठेनैव ज्योतिष्टोमाङ्गत्वं साधितम् । एवमिहाप्यग्निष्टोमवाक्याभावेऽग्रे "विश्वजिति सर्वपृष्ठे प्रवृञ्ज्यादि"ति विधिदर्शनात्तत्रैव पुरस्ताद्वाक्येन विहितस्य विनियोगप्राप्तौ ज्योतिष्टोमाङ्गत्वाप्राप्तेस्तत्प्राप्त्यर्थत्वेनाग्निष्टोमवाक्यमावश्यकमेवेति तद्वैयर्थ्यं शक्यत एव परिहर्तुम् । अत एव वेदान्तपरिभाषायाम्—प्रदेशान्तरस्थस्य प्रवर्ग्यस्यानेनैव वाक्येन क्रत्वङ्गत्वमुक्तम् । सति च प्रकरणपाठे अग्निष्टोमवाक्ये च ताभ्यां प्रतिसंबन्धे बुद्धे तत्रैव कालविधानार्थमुपसत्संबन्धबोधकं वचनम्, तेन विश्वजित्सहस्रसत्रराजसूयादावतिदेशाधीनप्राप्तिकस्य कस्यचित्प्रतीक्षणीयस्याभावात्प्रकृतिसमकालमेव विश्वजिदादिविकृतिषु विनियोगः क्रियते । तत्र यद्यपि अतिदेशेनापि तत्र प्रवर्ग्यप्राप्तिः संभवति; तथापि नात्र "तस्मुक्थ्येने"त्यादिवाक्येष्विव गृहमेधीयाज्यभागन्यायेनाङ्गान्तरपरिसङ्ख्या संभवति; प्रकृतप्रवर्ग्यविधेरपि वैकृतप्रवर्ग्यविधिकाल एव निष्पद्यमानत्वेन तस्य प्रकृतौ क्लृप्तोपकारकत्वाभावात् । नापि तेष्विवातिदेशप्रतिवन्धद्वाराऽप्राप्तशेषिपरिसङ्ख्या; विश्वजिदादिषु प्रवर्ग्यविधानेन विकृत्यन्तरप्रयोगविधीनां नैराकाङ्क्ष्यापादनासंभवात् । अतस्तद्वदत्र गुणकामप्राप्त्यादिरूपप्रयोजनालाभेऽगत्या प्राप्तपरिसङ्ख्यां त्रिदोषामप्यङ्गीकृत्य शेषिपरिसङ्ख्यैव । आवश्यकश्चायं परिहारो वैयर्थ्यापादनवादिनोऽपि । अतश्च यत्रैव प्रत्यक्षवचनेन प्रवर्ग्यविनियोगः कृतः तत्रैव प्रवर्ग्यानुष्ठाने सिद्धे अतिरात्रे विकृत्यन्तरसाधारण्येनैव तत्परिसंख्यालाभेन तत्प्राप्तेरभावेन 'प्रथमयज्ञे' इति निषेधः केवलमग्निष्टोमविषय एवेति तत्रैव विकल्प इति वस्तुतार्थः सम्पद्यते । एवं च तैत्तरीये "नोक्थ्ये प्रवृञ्ज्या"दिति निषेधोऽपि परिसङ्ख्याविध्यनुवादत्वेन तदर्थवादतया सार्थको द्रष्टव्यः । यदि तु "तं द्विरात्रेणे"त्यादिवाक्येष्विव विधिरसायनोपपादितदिशा विश्वजिदादिषु प्रवर्ग्यविधानसमये तत्समसमयविधानस्य प्राकृतप्रवर्ग्यस्य विकृत्यन्तरे चोदकतः प्राप्त्यभावात् न प्राप्तपरिसङ्ख्यात्वमित्यालोच्यते, तदा प्रयोजनान्तरानुपलब्धेः "नोक्थ्ये प्रवृञ्ज्यादि"ति निषेधार्थवादत्वमेव तद्वाक्यानामस्तु । सर्वथा नाग्निष्टोमवाक्यस्य वैयर्थ्यापत्त्या निषेधप्रतिप्रसवार्थत्वम् ॥

**यत्तु**—सर्वप्राचीनविसंवादेन भाट्टदिनकरे अनूचानवा-

नीयमित्याग्रहस्तदा कामं पदेन विकल्पाभिधानादग्निष्टोमवाक्यस्य च तेनोपसंहारादनूचानादेर्विकल्प इत्येवं समर्थनीयम् । सर्वथा अतिरात्रप्रथमाहारे प्रतिप्रसवाभावान्नित्यमेवाप्रयोगः, विकृतौ तु प्रथमप्रयोगे नित्यं करणमिति स्थितम् ॥ ३ ॥४६॥ इति द्वादशं प्रवर्ग्याधिकरणम् ॥

( १३ अधिकरणम् । )

पौष्णम् ॥ दर्शपूर्णमासप्रकरणे—"पूषा प्रपिष्टभागोऽदन्तको हि सः" इति श्रुतम् । तत्र किं दर्शपूर्णमासयोरेवाङ्गत्वेन कर्मान्तरविधिरुत पूषदेवत्ययागे पेषणमात्रविधिरिति चिन्तायाम्—

क्यस्य प्रथमप्रयोगे निषेधाग्निष्टोमवाक्याभ्यां विकल्पेन प्राप्तस्य प्रवर्ग्यस्य नियमकरणे लाघवादनूचानस्य प्रवृञ्ज्यादेवेत्येवं नियमविधित्वमेव युक्तम्, उपसंहारे अनूचानपरिसङ्ख्याविधित्वापत्त्या तदपेक्षया तस्य युक्तत्वादित्युक्तम्, तन्न; उपसंहारे सत्यर्थादेवाननूचाननिवृत्तिसिद्धेः फलतः परिसङ्ख्यात्वेन दोषाभावादेकवाक्यताभङ्गेन नियमविधित्वकल्पनस्य वाक्यभेदापादकस्यायुक्तत्वात् । पूर्वोक्तरीत्या सामान्यशास्त्ररूपस्य निषेधस्यानूचानवाक्येन विशेषशास्त्रेण बाधे सति विकल्पस्यैवाप्राप्तौ पाक्षिकायोगासंभवात् । अग्निष्टोमवाक्यैकवाक्यताभावे निषेधोत्तरमेवानूचानवाक्यप्रवृत्तावपि प्रतिप्रसवकरणे लाघवसंभवात् विकल्पोत्तरनियमप्रवृत्तौ नियामकाभावादतिरात्रप्रथमप्रयोगसाधारण्येनापि प्रतिप्रसवापत्तावनूचानस्य तत्प्रथमप्रयोगेऽप्यग्निष्टोमप्रथमप्रयोग इव नित्यप्रवर्ग्यानुष्ठानस्य निवारयितुमशक्यत्वाच्च । अग्निष्टोमवाक्योपसंहारपक्षे तु तत्रैवानूचानस्य प्रतिप्रसवकरणान्नायं दोष इत्यलं विस्तरेण ॥

सर्वथा अग्निष्टोमवाक्यस्य मदुक्तरीत्या वैयर्थ्याभावात्परस्परोपसंहारे प्रमाणाभावेनानूचानवाक्यस्य प्रतिप्रसवत्वादग्निष्टोमवाक्यस्यान्यथासिद्धत्वादुभयप्रथमप्रयोगे विकल्प इति वार्तिककारशास्त्रदीपिकाकारासंमतमेव युक्तमनुष्ठानम्, पूज्यपादानामग्निष्टोमवाक्यस्य विधित्वाङ्गीकारेणानूचानवाक्योपसंहारोपपादनं तु वार्तिकादिरीत्योपसंहारस्वीकारे न तदुक्तविकल्पसिद्धिरिति तत्खण्डनमात्रतात्पर्यकमेव, नाग्निष्टोमवाक्यस्यैवाप्राप्तविधित्वाग्रहे तात्पर्यम्, तदुक्तरीत्यानूचानवाक्यस्याप्यप्राप्तविधित्वोपपत्तेरिति दिक् ॥ प्रस्तुतमनुसरामि । अतः प्रतिषेधत्वपक्षे सुतरां च पर्युदासपक्षे विकल्पाप्राप्तेरेवानूचानस्य नित्यं प्रयोग इति भावः ॥

**कामं पदेनेति** । व्याख्यातश्च "कामं कामयेताम् तस्मै दद्याताम्" इत्यापस्तम्ववाक्यं व्याचक्षाणैः धूर्तस्वाम्यादिभिः कामशब्दः विकल्पपरतया, तद्वदिहापीति भावः । **यत्तु भाट्टालङ्कारकृता**—प्राप्तप्रवर्ग्यानुवादेनानूचानसंबन्धस्य विकल्पस्य च विधाने वाक्यभेदापत्तिः, अनूचानकर्तृकप्रवर्ग्यानुवादेन विकल्पविधाने विकल्पापत्तिरिति विहितप्रतिषिद्धतया प्राप्तविकल्पानुवादकं कामपदम्—**इत्युक्तम्**, तत्कामशब्दस्य स्वयमेवाव्ययत्वाभिधानात् तदर्थस्य स्वसमभिव्याहृतानूचानपदार्थेऽप्यन्वयस्य व्युत्पन्नत्वेन विकल्पितानूचानसंबन्धविधाने तदनापत्तेरर्थादनूचानस्य प्रवर्ग्यविकल्पसिद्धेरयुक्तमित्युपेक्ष्यम् ॥ **प्रतिप्रसवाभावादिति** । प्रतिप्रसवफलकप्राप्कविध्यभावादित्यर्थः । तथाच प्रतिप्रसवाभावे पर्युदासस्यैव प्राप्तेः नित्यमकरणं सिद्धम् । अनारभ्यविधिप्राप्त्यभावेऽपि अग्निष्टोमे प्रतिप्रसूतस्यातिदेशेन प्राप्तिस्तु अग्निष्टोमसंस्थाकत्वरूपनिमित्ताभावादेव न संभवतीति सर्वथापदेन सूचितम् । तेन अनूचानाननूचानादेः सर्वथापि नित्यमेवाप्रयोग इत्यर्थः । एवंचाग्निष्टोमवदतिदेशादतिरात्रेऽप्यनूचानस्य नित्यं करणमन्येषामकरणमिति व्यवस्थाशङ्कापरिहारार्थं अनूचानवाक्यं हि अग्निष्टोमवाक्यस्योपसंहारं कुर्वत् व्यवस्थापकमिष्टमित्युपसंहार्यसमानविषयत्वादग्निष्टोम एव प्रवर्त्तते । उपसंहार्यं चाग्निष्टोमवाधिकायामतिरात्रसंस्थायां नातिदिश्यते इत्यनूचानवाक्यस्यानतिदेशात्, निषेधस्य तु प्राथम्यसत्त्वेनातिदेशात् नित्याप्रयोगः सर्वेषामेवेति यत्प्रकाशकाराणां दुष्टकल्पनं तदपि नापद्यत इति ॥

**विकृतौ त्विति** ॥ अतिरात्रप्रयोगातिरिक्तसर्वसंस्थसर्वप्रयोगावस्थसर्वसोमयागविकृताविति तुशब्दार्थः । तासु च प्रथमप्रयोगत्वाभावेन निषेधाप्रवृत्तेरबाधितातिदेशात् तत्प्राप्तेर्नित्यकरणमित्यर्थः । एतच्च विकृतिसामान्ये नित्यं प्रवर्ग्यानुष्ठानकथनं न्यायसिद्धत्वाभिप्रायमात्रेण, पूर्वोक्तरीत्या विकृतिविशेषपुनर्विधिवलात् विकृत्यन्तरपरिसङ्ख्याया अपि दर्शितत्वादत्र मतभेदेनानुष्ठाने कियानपि भेदः **स्थितमिति** पदेन सूचितः । तथाचाग्निष्टोमप्रयोगे विकल्परहितमेवमनुष्ठानं पर्युदासपक्षे स्थितम् । अन्यमते न तथा; कातीयानां द्वितीयादिप्रयोगेषु "न सर्वस्मा इव प्रवृञ्ज्यादि"ति सर्वाधिकारनिषेधेनावकाश्यस्य "प्रवृञ्ज्यादि"ति विधिना प्रवर्ग्यविधानम् । तेन ज्ञाताप्रियानूचानत्रये सङ्केतितस्यावकाश्यस्य नित्यं तत्करणम्, अनवकाश्यस्य तु तत्रापि निषेधः, तथानवकाश्यस्याप्यनूचानापरपर्यायावकाश्यादेः विहितप्रतिषिद्धत्वात् वार्तिकमते इव प्रथमप्रयोगे विकल्प इति भेद इत्यर्थः ॥

॥ इति द्वादशं प्रवर्ग्याधिकरणम् ॥

---

अत्र भाष्यकारादिभिर्दीर्घसोमपदाहीनपदयोः प्रकृतौ अनिविशमानत्वात् प्रकरणबाधेनोत्कर्षस्य पूर्वं साधितत्वात्तेनैव न्यायेन पूषपदस्य प्रकरणानिवेशित्वादुत्कर्षस्यैव सिद्धेर्नात्र पूर्वं पूर्वपक्षसिद्धान्तरचनं कर्तव्यमित्युत्तरविवक्षार्थं सूत्रकृता साधितं इत्युक्तम्,

तत्र वक्ष्यमाणयुक्तिभिर्विकृतावुत्कर्षेऽपि वाक्यार्थानुपपत्तेर्न तत्र प्रकरणबाधेन निवेशः, किंतु तदविरोधेन कथं-

न तावद्भागशब्दलक्षितयागोद्देशेन पेषणविधिः; एकप्रसरताभङ्गापत्तेः, पूषपदेन विशेषणे वाक्यभेदाच्च, कप्रत्ययार्थद्रव्योपसर्जनपेषणस्य यागान्वयानुपपत्तेश्च। अत एव न पूषपदमेव शक्यार्थस्य लक्षितपूषदेवत्ययागस्य वोद्देश्यतापरम्, पूष्णोऽव्यभिचरितक्रतुसंबन्धाभावेन क्रतूपस्थितौ प्रमाणाभावाच्च। अतो गुणद्रव्यदेवताविशिष्टकर्मान्तरविधिरेवायमिति प्राप्ते—

प्रपिष्टभागपदेन तावद्भागो भजनीयं सेव्यं अस्येति व्युत्पत्त्या सेवनासंभवेऽपि संबन्धमात्रं देवस्वादिव्यवहारप्रमाणकं प्रपिष्टपूष्णोः प्रतीयते। तच्च यागं विनाऽनुपपन्नमिति यागमनुमापयतीत्येतावत्तु उभयोरविवादम्। तत्र च विशेषणमात्रसंभवे विशिष्टविध्यादिकल्पनस्यान्याय्यत्वात् प्रमाणाभावेन नापूर्वयागान्तरानुमितिरित्यपि प्रथमतोऽवगतमेव।

अतश्चानुमीयमानयागे अनुमापकपूषसंबन्धेन प्रसिद्धपूषदेवत्ययागत्वोपस्थितिरपि सुलभैव। अतश्च यागविशेषानुमितेरेव तात्पर्यग्राहकत्वात् पूषपदं विजातीयापूर्वसाधनीभूतपूषदेवतापरम्। तदुद्देशेनैव च स्वजन्ययागप्रदेयचरुप्रकृतिकत्वसंबन्धेन प्रपिष्टद्रव्यकत्वं प्रपिष्टभागसमार्थो विधीयते। संभवति च द्रव्योद्देशेन देवताविधिवद्देवतोद्देशेनापि निरुक्तसंबन्धेन द्रव्यविधिर्विशेषणमात्रविधिफलकः। यद्यपि च प्रकृतिद्रव्यस्याप्यतिदेशेन संभवत्प्राप्तिकता, तथापि ततः पूर्वं विधानाङ्गीकारान्नैकप्रसरताभङ्गाद्यापत्तिः। पेषणमात्रविधिश्च फलमिति गुणादिप्रमाणाभावान्न कर्मान्तरता। एतेन पूषपदेन तद्देवत्यकर्मलक्षणया तदुद्देशेन प्रपिष्टभागपदलक्षितपेषणविधिरिति प्रकाशोऽपि निपादस्थपत्यधिकरणन्यायेन लक्षणापेक्षया कर्मान्तरविधेरेव न्याय्यत्वा"द्वषट्कर्तुः प्रथमभक्ष"इत्यादावतिप्रसङ्गापत्तेश्चोपेक्षितः। तत्रास्मदुक्तप्रकारस्तु भक्षस्य प्रत्यक्षविधिनैव प्राप्तत्वेन ततः पूर्वप्रवृत्त्यङ्गीकारानुपपत्तेरसंभवी। तदेतत्सर्वं सिद्धमेवोत्तरविवक्षया स्मार्यत इति प्राञ्चः॥ ३॥ ॥ ४७॥ इति त्रयोदशं पौष्णपेषणस्य विकृत्यर्थताधिकरणम्॥

( १४ अधिकरणम्। )

**तत्सर्वार्थम्॥** तत् पेषणं पूषदेवत्ये चरौ पशौ पुरोडाशे च स्यादुत चरावेवेति चिन्तायाम्—अविशेषाददन्तकत्वहेतुवशाच्च सर्वत्रेति प्राप्ते—

---

चित्पूषपदस्य गौणीमनाश्रित्यापि प्रकरणे निवेशो युक्त इत्यधिकशङ्कया क्लेशेन परिहार्यया शक्यत एवाधिकरणारम्भः कर्तुमित्यभिप्रायेण पूर्वपक्षमारचयति—**न तावदिति॥**

**यत्तु भाट्टदिनकरे**—चतुर्थीतद्धिताद्यभावेन देवतात्वानुपस्थितेर्न तद्देवत्यकर्मान्तरविधित्वम्, पेषणमात्रविधौ तु देवतात्वेनैव प्राप्तस्य पूष्णोऽनुवादात् देवतात्वेनोपस्थितिरिति वैषम्यमुपपादितम्, **तदयुक्तम्**; अध्वरकल्पनायाम्—"सरस्वत्याज्यभागः स्यादि"ति विहितस्यापि यागस्य कर्मान्तरत्वेन विधानापत्तेः, एवं सारस्वतौ भवत इत्यत्रापि तदनापत्तेश्च। यदि तु कथंचिदर्थवादे देवतात्वेन क्वचित्संकीर्तनात् भागशब्दोपादानात् देवतात्वप्राप्तिरुच्येत, तदेहापि अदन्तकत्ववाक्यशेषेण तदुपस्थिते भागपदोपादानाच्च तुल्यमेव। **चरुप्रकृतिकत्वसंबन्धेनेति।** उत्तराधिकरणसिद्धान्तालोचनेन संबन्धे चरुपदोपादानं कृतम्। **संभवति चेति।** अभ्युदितेष्टिवाक्ये इति शेषः। **यद्यपि चेति।**

यथैव "लोहितोष्णीषा ऋत्विजश्चरन्ति—" इति वाक्ये लोहितोष्णीषपदोपात्तानामृत्विजामेवातिदेशप्रवृत्तेः पूर्वप्रवृत्त्यङ्गीकारेण विधिविशेषणीभूतलोहितोष्णीषत्वविधानफलकः तद्वदिहेत्यर्थः। **अतिप्रसङ्गापत्तेरिति॥** प्राथम्यवाक्येऽपि समस्तपदेन प्राथम्यं लक्षयित्वा समाख्याप्राप्तभक्ष्यानुवादेन तद्विधानापत्त्या कर्मान्तरत्वानापत्तेरित्यर्थः॥ **ननु** अत्र यथातिदेशप्राप्तेः पूर्वं प्रपिष्टद्रव्यप्रकृतित्वविधिः पेषणमात्रफलकः स्वीक्रियते, तथा तत्रापि प्राथम्यविशिष्टभक्षणस्य वषट्कर्त्रुद्देशेन नैमित्तिकभक्षप्राप्तेः पूर्वं विधिः प्राथम्यमात्रफलक इति न कर्मान्तरत्वं स्यात् इत्याशङ्कां परिहर्तुं वैलक्षण्यं दर्शयति—**तत्रास्मदिति॥ तत्र** प्राथम्यवाक्ये। **अस्मदुक्तप्रकारः** अत्र य उक्तोऽस्माभिः प्रकारः स इत्यर्थः। तथाच वषट्कर्तुः सर्वनैमित्तिकस्य भक्षस्य तत्तत्प्रत्यक्षविधिनैव विहितत्वात् न ततः पूर्वं प्राथम्यवाक्यप्रवृत्त्या विशिष्टविधिर्युक्त इत्यर्थः। एवमधिकरणविचारे संभवति सति प्राचीनानुपहसितुमिव प्राचामुक्तमनुवदति—**तदेतत्सर्वमिति॥** तदेतदिति पदाभ्यां प्राञ्च इत्यनेन चोपहासः सूचितः॥

॥ इति त्रयोदशं पौष्णपेषणस्य विकृत्यर्थताधिकरणम्॥

---

अत्राप्येकदेवत्ये एव पेषणमिति सिद्धान्ताभावात् द्विदेवत्या अपि च पुरोडाशपशवो भवन्त्येवात्रोदाहरणम्। तथा चैकपूषदेवत्यपुरोडाशपशुयागयोरप्रसिद्धत्वेऽपि "सोमापौष्णं त्रैतमालभेत" "सोमापौष्ण एकादशकपालः" "ऐन्द्रापौष्णश्चरुः" इति वाक्यविहिते पशौ चरौ पुरोडाशे च पेषणं भवति वा न वेति विचारः संभवत्येवेत्यभिप्रायेण अथवा—"पौष्णं चरुमनुनिर्वपेत्" "पौष्णं श्याममालभेतान्नकाम" इति वाक्यविहितावेकपूषदेवत्यौ चरुपशू तथा "पशुमालभ्य पुरोडाशं निर्वपती"त्यनेन केवलपूषदेवत्यपशुयागाङ्गत्वेन विहितस्य पुरोडाशस्य प्रधानयागीयपूषदेवताकत्वादेकपूषदेवत्यः पुरोडाशोऽपि संभवतीत्यभिप्रेत्य विचारमारभते—**तत्पेषणमिति।**

पुरोडाशे तावत्पाकात्पूर्वं पेषणस्य प्राप्तत्वादेव विधानं व्यर्थम्, तदुत्तरं तु पुरोडाशपदवाच्याकृतिविनाशापत्तिः । एवं पशुहृदयादावपि; तेषामप्याकारविशेषविशिष्टमांसवाचित्वात् । न चोभयत्रावदानोत्तरकालं पेषणविधिः; अत्यन्ताप्राप्तपेषणविधौ गौरवापत्तेः, चरावतिदेशेन प्रसक्तस्य प्रयोजनाभावेन निवर्तमानस्य प्रतिप्रसवमात्रकरणे तु लाघवम् ।

प्रकृतौ हि प्रदेयपुरोडाशसिद्धेरन्यथोपपादयितुमशक्यत्वादर्थप्राप्तमपि पेषणं अध्वर्युकर्तृकत्वादिप्रयोजनसिद्ध्यर्थं सधर्मकं विहितम् । तच्चरौ प्रदेयसिद्धेस्तद्व्यतिरेकेण जायमानतया चरुत्वावच्छिन्नं प्रति पेषणस्याकारणत्वान्निवर्तमानं प्रतिप्रसूयते । अत एव प्रसक्तप्रासिकस्य कारणान्तरेण निवृत्तिप्रसक्तौ विधिः प्रतिप्रसवः । तत्र चोत्पत्तिविनियोगाङ्गसंबन्धादौ यथासंभवं विधेर्व्यापाराभावाल्लाघवम् ।

अत एव पेषणस्य प्रदेयसिद्धिरूपप्राकृतप्रयोजनलोपेनादृष्टप्रयोजनान्तरकल्पनेऽपि न प्रतिप्रसवत्वविघातः । धर्माणां तु पेषणस्य कर्मान्तरत्वाभावेन **प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति** इति न्यायेन प्राकृतपेषणाङ्गतया प्राप्तानामत्रैवादृष्टरूपकार्यान्तरकल्पनं न दोषाय । इष्यते चायमर्थोऽग्निसंस्कारकमन्थनादेः पशुप्रकरणाम्नातस्य वचनाचातुर्मास्याङ्गत्वेन विनियोगे तद्धर्माणां कार्यान्तरप्रयुक्तत्वकल्पनादौ ।

वस्तुतस्तु अत्र पेषणस्य न कार्यान्तरकल्पनाऽपि; प्रदेयसिद्ध्यर्थत्वादेव । यद्यपि हि चरुत्वावच्छिन्नं प्रति पेषण-

---

**गौरवापत्तेरिति** । पञ्चमे अवदानादिप्रदानान्तेनानुसमयसाधनाय तावत एकपदार्थत्वोक्तेः तावन्मध्ये अवदानोत्तरं पेषणानुष्ठाने व्यवधानादेकपदार्थताभङ्गापत्तेरप्येतदुपलक्षणं द्रष्टव्यम् । लाघवमेवोपपादयति—**प्रकृतौ हीति** ॥ **ननु** पिष्टकचरावपि चरुशब्दप्रयोगात् तस्यैव पूषदेवत्ययागे ग्रहणेऽपेक्षितं पेषणं न निवर्तमानमिति तत्सिध्यर्थमप्राप्तपेषणविधानमेव स्यादित्याशङ्कां निराकर्तुं पिष्टं विनाप्योदनेऽपि चरुशब्दप्रयोगात् तस्यैव ग्रहणसिद्धेः पेषणस्य प्रयोजनाभावेन निवर्तमानताऽस्त्येवेति चरुत्वावच्छिन्नं प्रति पेषणस्य कारणत्वाभावेन दर्शयति—**तद्व्यतिरेकेणेति** ॥ न्यायसुधाकारादिभिः पूर्वाधिकरणे कृतं प्रतिप्रसवलक्षणमयुक्तमिति सूचयितुं स्वयं प्रतिप्रसवस्वरूपं दर्शयति—**प्रसक्तप्राप्तिकस्येति** । तल्लक्षणोपपादनं तद्दूषणं च प्रागेवोक्तम् ॥ **व्यापाराभावादिति** ॥ पुनः करणमात्रे व्यापाराल्लाघवमित्यर्थः ॥

**अत्रेदं मतद्वयम्**—तत्र न्यायसुधाकारस्तावत्—अवस्रावितानवस्रावितानुवृत्तान्योन्यासंलग्नत्वलक्षणविशदपाकनिमित्तमोदनत्वं वैशद्यसापेक्षम्, चरुत्वं तु वैशद्यानपेक्षमेवोदने पिष्टसाध्ये चरावनुवृत्तमनवस्रावितान्तरूष्मपक्वत्वमात्रनिमित्तमिति चरौ न वैशद्यापेक्षमोदनत्वम् । कथं तर्हि चरोरनोदनत्वे **"ओदनो वा प्रयुक्तत्वात्—"** इति दशमाधिकरणसिद्धान्तसूत्रे चरुशब्दस्योदनवाचित्वोक्तिरिति चेत्, न; अदितिमोदनेनेति वाक्यशेषे ओदनपदस्य वैशद्याख्यचरुविशेषविधिसूचनार्थत्वेन स्थालीमात्रवाचित्वपूर्वपक्षनिवृत्तितात्पर्येऽपि **अथवा**—चरुशब्दस्यानवस्रावितान्तरूष्मपक्वत्वमात्रवाचित्वे सूपशाकादेरपि चरुत्वापत्तेः तन्निवृत्त्यै ओदनशब्दस्य सूपादिव्यतिरिक्तत्वोपलक्षणार्थत्वेऽपि चरुशब्दस्य ओदनवाचित्वोक्त्यर्थत्वे मानाभावात्, अवस्रावितौदने चरुशब्दाप्रयोगाच्च । अतः वैशद्याभाववत्येवौदनचरुत्वोपपत्तिः । तथा वैशद्याभाववत्येव तण्डुलचरावपि चरुत्वसिद्धिः । क्वचित् पिष्टकौदन इति पिष्टके ओदनशब्दप्रयोगो गौण एवेति । पार्थसारथिस्तु दशमे त्रिवृच्चर्वैश्ववालाधिकरणे अर्थवादादनवस्रावितान्तरूष्मपक्वौदने चरुशब्दस्य याज्ञिकानां प्रयोगाच्चौदनवाचित्वमेव चरुशब्दस्य सिद्धमेव । **अतएव**—वैशद्यस्य पिष्टकचरावपि संभवादोदनरूप एव वैशद्यवति तस्मिन् चरुशब्दप्रयोग इत्याह । उभयथापि पिष्टकचरौ चरुशब्दप्रयोगस्य मुख्यतयैवाङ्गीकारात् ओदनवाचितातदवाचितयोः स्वीकारेऽनुष्ठानभेदाभावात्तत्राग्रहमप्रदर्श्यैव पिष्टकचरौ चरुशब्दमात्रप्रवृत्तिप्रदर्शनेन प्रदेयसिद्ध्यर्थत्वं पेषणस्योपपादयति—**वस्तुतस्त्विति** ॥ पिष्टकचरुग्रहणेऽपि पौष्णं चरुमिति वाक्यार्थाविरोधात् पेषणविधेर्दृष्टार्थतालाभाय सामान्यपरस्यापि चरुशब्दस्य विशेषावधारणोपपत्तेः पेषणं प्रदेयपिष्टचरुसिद्ध्यर्थमेवेति नादृष्टरूपकार्यान्तरकल्पनेत्यर्थः ।

**अत्रेदमवधेयम्**—यदि अत्र पेषणविधिवलात् सामान्यवाचिनः चरुशब्दस्य पिष्टकचरुविशेषपरत्वम्, तदा नैवास्य पेषणविधित्वं क्लेशेन स्वीकर्तुमुचितम्; अस्य "निवीतं मनुष्याणामि"त्यस्योपवीतवाक्यशेषत्वेनेव तैत्तिरीयशाखायां प्राशित्रहरणविधिवाक्यशेषत्वेनापि "अदितिमोदनेने"तिवदिह नियामकत्वोपपत्तेः । नहि सन्निहितपठितमेव ज्ञापकमिति नियमः; प्रमाणाभावेन यथातथाभूतस्य प्रदेशान्तरे स्थितस्याऽपि ज्ञापकत्वोपपत्तेः । **अतएव** आतिथ्यवाक्यशेषभूतस्यापि ज्ञापकत्वोपपत्तिः । "नह्यत्राऽनूयाजान्यजन्भवती"त्यर्थवादस्य प्रदेशान्तरस्थस्य "अष्टावुपभृति गृह्णाती"ति वाक्यगताष्टपदस्य चतुष्कद्वयलक्षणाज्ञापकत्वमिष्यत एव । एवंच पिष्टकचरौ चरुशब्दप्रयोगानुरोधेनेह तद्ग्रहणपेषणस्य प्रदेयसिद्धिद्वाराऽतिदेशादेव प्राप्तेः निरर्थकमेव तस्य विधित्वाश्रयणम् । नह्येकवाक्यत्वसंभवे वाक्यभेदमङ्गीकृत्य द्विदेवत्ये पेषणवारणाय विधित्वं युक्तम्; ज्ञापकत्वस्यैवैकवाक्यताभङ्गेन युक्तत्वेन द्विदेवत्ये तद्द्वारा प्रयोजनाभावात् ॥

**यदप्युक्तं पार्थसारथिना**—पिष्टकचरावपि विशदपाकसंभवात् चरुशब्दस्यौदनवाचित्वमिति, **तत् न**; पिष्टस्य जल-

पूरितायां स्थाल्यां प्रक्षेपेण पाके सति वैशद्यस्यासंभवात्। नहि पिष्टे जलेन पिण्डीभूते अन्योन्यभावस्य प्रतियोग्यनुयोग्युपलंभो जायते, येन अन्योन्यासंलग्नत्वरूपं वैशद्यं प्राप्नुयात्। अतएव ओदने तण्डुलानामेवान्योन्यतया पृथगवस्थानात् तदसंलग्नत्वं स्पष्टमेवोपलभ्यते । अनवस्रावितेतण्डुलचरौ वैशद्यव्यावृत्त्यर्थमेव प्रचुरजलदानस्य तथाभूते ओदने च तावत्पर्याप्तमात्रजलदानस्य च शिष्टसंप्रदाये दर्शनात् परस्परसंलग्नत्वे सति अनवस्रावितान्तरूष्मपक्वत्वमात्रेणैव चरुव्यवहार इति वैशद्यस्यानपेक्षणान्न वैशद्यप्रयुक्तमोदनत्वमिति तत्रैव याज्ञिकप्रयोगः स्यात्। तत्रत्यभाष्यवार्तिकन्यायसुधाग्रन्थेषूपलम्भादनवस्रावितान्तरूष्मपक्वौदने याज्ञिकानां प्रयोगोपपादनमपि तदीयं न युक्तम्॥

**यत्तु**—अत्र प्रकाशकारैरुक्तं पिष्टके हि ओदनत्वे यथा लौकिकप्रयोगप्रसक्ता स्थालीवाचिताऽर्थवादिकोदनवाचितया बाध्यते, तथा तयैव पिष्टकचरुः साध्यते इति प्रयोगमूलानोदनपिष्टकवाचिताऽपि बाध्येत। मिश्रमते चोदनसामान्ये शक्तिग्रहे तदविरोधात् तद्विशेषानवस्रावितान्तरूष्मपक्ववाचिता याज्ञिकप्रयोगाद्युक्ता, सामान्यग्रहणे हि अपेक्षितविशेषसमर्पकमनुकूलमेव नतु विरुद्धं इत्युक्तम "क्ताधिकरणे । तव तु लौकिकप्रयोगादिव याज्ञिकप्रयोगादप्यर्थवादप्राबल्यात् तद्विरुद्धानोदनपिष्टकवाचिताऽयुक्ता—" **इति, तदेतद्दा**शमिकाधिकरणशास्त्रदीपिकाया विरुद्धम्। तत्र हि अनवस्रावितान्तरूष्मपक्वौदन एवयाज्ञिकप्रयोगस्योक्तेः तत्रैचाऽर्थवादात् पूर्वं चरुशब्दश्रवणानन्तरं शक्तिग्रहादर्थवादस्य तदुपोद्बलतया स्थालीमात्रवाचकतानिरास एव तात्पर्यप्रतीतेः निर्णीतोपक्रमस्थचरुशब्दानुरोधेन सामान्यवचनस्य विशेषपरत्वकल्पनयाऽप्यर्थवादाविरोधेन चरुशब्दशक्तिग्राहकत्वे मानाभावेनार्थवादवशात् सामान्यत ओदनवाचिनो विशेषापेक्षया याज्ञिकप्रयोगग्रहणमित्यर्थकल्पनस्याऽसङ्गतत्वात् । **अतएव** तदधिकरणेऽर्थवादसमानकक्ष्यतयैव याज्ञिकप्रयोग ओदनपर्यन्तत्वेनोक्तो मिश्रैः, यस्य तु न्यायसुधाकृतो मते ओदनपर्यन्ते चरुशब्दस्य शक्तिस्तस्यापि मते न त्रिवृच्चर्वश्ववालाधिकरणे चरुशब्दस्य स्थालीवाचितानिरासेनार्थवादस्योदनरूपार्थशक्तिग्राहकतयोपन्यासः; चरुशब्दार्थनिर्णयस्य याज्ञिकप्रसिध्यैव सिद्धेः प्रयोजनाभावात्॥

**अतएव दशमे शास्त्रदीपिकायां**—विश्वस्ततरयाज्ञिकप्रयोगस्य साधारणस्थालीप्रयोगापेक्षया प्राबल्येनापि स्थालीवाचित्वं खण्डितम्॥ **नच**—ओदनपर्यन्तवाचित्वाभावेऽर्थवादविरोधात् स्थालीवाचित्वे लाघवात् याज्ञिकप्रयोगस्याऽपि बाधापत्तिरिति—**युक्तम्**; अविरोधात्। यथैव हि तव मते सामान्यापेक्षित्वेनाविरोधः तथैव ओदनसादृश्यविवक्षया प्राप्तवैशद्यसूपशाकादिव्यावृत्त्यर्थत्वेनाविरोधः संभवत्येव। इतरथा प्रयोगाविशेषात् लोकप्रसिद्धस्थाल्या याज्ञिकप्रसिद्धस्य च मध्ये कतरस्य ग्रहणमिति सन्देहनिराकरणार्थत्वस्यैवापत्त्या "सन्दिग्धेषु वाक्यशेषादि"त्यनेनैव गतार्थत्वापत्तेः। तथाच निर्णीतार्थस्यैव चरुशब्दस्याऽत्रार्थवादेन निर्णयान्न सन्दिग्धन्यायविषयतेति त्रिवृच्चर्वश्ववालाधिकरणशास्त्रदीपिकोक्तं विरुध्येत। अतो लौकिकप्रसिद्धिबाधेन याज्ञिकप्रसिध्यैव निर्णीतार्थकत्वे वक्तव्ये अर्थवादस्य शक्तिग्रहेऽनुपयोगाद्वैशद्यप्राप्त्यर्थमेव तदुपासनम्॥ **किंच** अस्मिन् मते ऊष्मपक्व ओदने इव पिष्टसाध्येऽपि तस्मिन् चरुशब्दार्थत्वाङ्गीकारात् द्वयोरप्यर्थयोः स्थालीवचनत्वाबाधेन याज्ञिकप्रसिध्या ग्रहणापत्तिनिवारणफलकौदनरूपचरुतात्पर्यत्वकल्पनया-प्युपपद्यत एव तदविरोधः॥

**वस्तुतस्तु**—स्थाल्यां चरुशब्दस्य निर्णीतशक्तिकत्वे सति उपक्रमगतनिर्णयानुरोधेनोपसंहारगतौदनपद एव ओदनसाधनत्वलक्षणयापि स्तुतेरुपपत्तेर्नार्थवादवशेन तद्वाचित्वबाधः शक्यते कर्तुमिति स्थालीवचनत्वनिवृत्तिः दुर्घटैव॥ **किंच** चरुशब्दस्य स्थालीवचनत्वबाधेनानवस्रावितौदनविशेषवाचित्वमर्थवादप्रतीतेः प्राक् निर्णीतं वा नवा; **आद्ये** तेनैवाऽर्थवादगतसामान्यशब्दार्थनिर्णायकत्वात् अर्थवादेन चरुशब्दनिर्णय इत्येतत्परता तदधिकरणे दुरुपपादैव। **द्वितीये** निश्चितेन विशेषेण सामान्याकाङ्क्षानिवृत्तावपि अनिश्चितेन तेन तदयोगात् विशेषसमर्पकत्वेनाविरोधोपपादनं याज्ञिकप्रसिद्धेरयुक्तम्; वाचकतातात्पर्यग्राहित्वं विना केवलं याज्ञिकप्रसिद्धिमात्रत्वेन नियामकत्वानुपपत्तेः। अतो यथैव म्लेच्छप्रसिद्धिः आर्यप्रसिध्या बाध्यते, एवं साधारणार्यप्रसिद्धिरपि न्यायतौल्यात् कर्मानुष्ठानवत्त्वेन विश्वस्ततरार्यप्रसिध्या बाध्यते। एवं साधारणार्थप्रसिद्धेरपीत्येवं स्थालीवाचित्वनिराकरणेनानवस्रावितान्तरूष्मपक्वमात्रवाचित्व एवोपक्रमे निर्णीते तदनुसारेणोपसंहारगतौदनपदे सादृश्यलक्षणाया उचितत्वात् वैशद्ययुक्ततण्डुलप्रकृतिकत्वमेवार्थवादस्य न्याय्यम्, नतु एतावतापि वैशद्ययुक्ततण्डुलप्रकृतिकत्वांशे शक्तिग्राहकत्वम्; तथात्वे मौद्गयवमयादिचरुषु चरुचब्दानामनन्तानां गौणत्वापत्तेः, व्रीहिप्रकृतिकतण्डुलेष्वेव लोकशास्त्रप्रसिध्या तण्डुलत्वाङ्गीकारात्। **अतएव** वार्तिककृताऽनवस्रावितान्तरूष्मपक्वमात्रमेव तच्छब्दप्रवृत्तिनिमित्तमुक्तम् । **एतेन**—सूपशाकादिव्यावृत्तये तण्डुलप्रकृतिकत्वविशेषणोपादानं सर्वग्रन्थलिखितमपि—**परास्तम्**; अतिव्याप्तिपरिहारेऽपि मौद्गादिष्वव्याप्त्यापत्तेः, लोके फलत्वेन प्रसिद्धेषु तण्डुलप्रकृतिकेषु वर्तुलत्वेन दृढेष्वतिव्याप्त्यापत्तेश्च । अतः सूपशाकादिव्यतिरिक्तत्वोपलक्षणत्वाङ्गीकारेण तद्व्यावृत्तेः वक्तव्यतया तदुपलक्षणसूचकत्वमस्तु नामार्थवादस्येति युक्तम् । न्यायसुधाग्रन्थेऽप्यनवस्रावितान्तरूष्मपदद्वयसार्थक्यप्रदर्शनावसरे तण्डुलप्रकृतिकपदानुपादानात्सूपशाकादिव्यतिरिक्तत्वोपलक्षणार्थत्वस्यैवार्थवाद उपपादितत्वेन मदुक्तार्थतात्पर्यकत्वप्रतीतेः । तस्मान्नार्थवादस्य शक्ति-

स्याकारणत्वम्; तथापि पिष्टकचरावपि चरुशब्दप्रयोगात् पेषणविधिबलेन च "पौष्णं चरुमि"त्यत्र सामान्यवाचिनोऽपि चरुशब्दस्य पिष्टकचरुविशेषपरत्वनिश्चयात् तस्य प्रदेयस्य पेषणमन्तरेणासिद्धेर्न पेषणस्य कार्यान्तरकल्पनाऽपि । अत एव चरुत्वं नामानवस्रावितान्तरूष्मपक्वतण्डुलप्रकृतिकत्वम्। अत्र भक्तव्यावृत्त्यै **अनवस्रावितेति** । मण्डकव्यावृत्त्यै **अन्तरिति** । सूपशाकादिव्यावृत्त्यै **तण्डुलेति** । अत एव पिष्टकचरावपि तत्संभवान्न पेषणस्य विघातकत्वमिति तत्रैव पेषणम् ॥ ३ ॥ ४८ ॥ **इति चतुर्दशं पौष्णपेषणस्य चरावेव निवेशाधिकरणम् ॥**

( १५ अधिकरणम् । )

**एकस्मिन्** ॥ यत्रान्यसहितः पूषा देवता; यथा राजसूये ऐन्द्रापौष्णश्चरुरिति, तत्रापि पेषणमुत यत्र केवल एव देवता तत्रैवेति चिन्तायाम्—"अदन्तको हि स" इति अर्थवादानुसारात् पेषणस्य पूषस्वरूपप्रयुक्तत्वावगतेस्तत्स्वरूपस्य चान्यसाहित्येऽपि सत्त्वाद्युक्तमेव पेषणम्। अत एव "सोमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकाम" इति नेमपदवाच्यार्द्धपिष्टत्वानुवादोऽपि सङ्गच्छते ।

यदि तु नवमाद्यन्यायेन पूषस्वरूपे आनर्थक्यादपूर्वसाधनत्वलक्षणाया आवश्यकत्वमाशङ्क्येत, तदाऽस्तु पूर्वोक्तविधया पूषप्रपिष्टसंबन्धज्ञानजन्ययागानुमितेरेव तात्पर्यग्राहिकायाः सत्त्वात् साऽपि पूषपदे । परं त्वर्थवादाद्यनुरोधात् पूषाधिष्ठानकदेवतात्वप्रयोज्यापूर्वीयत्वलक्षणाया एवाङ्गीकाराद् द्विदेवत्येऽपि पेषणधर्मः संभवति । यथाचैवं सति पाकसंपत्तिस्तथा यतितव्यं अन्तरायकरणेन वा क्रामिकनिक्षेपेण वा पात्रभेदेन वेति प्राप्ते—

---

ग्राहकत्वमित्येव न्यायसुधोक्तं साधु । परंतु उभयमतेऽपि प्रायणीये अन्यत्र सारस्वतादिचरुपिष्टकचरुव्यावृत्तिः दुर्घटैव । अतः सर्वग्रन्थाविरोधेनैवं परिहर्तव्यम् । पिष्टकचरौ चरुशब्दो गौण एव न मुख्यः । **अतएव** श्रौतस्मार्तकर्मणोश्चरुकर्तव्यतायां पिष्टस्यैव तत्करणं विशिष्टानामिति गौणमुख्यन्यायादेव सर्वत्र तस्याग्रहणम् । पौष्णे चरौ पेषणं विनैव प्रदेयसिद्धेः प्रतिप्रसवरूपेण पेषणविधानादेव गौणार्थस्य ग्रहणात् पिष्टकचरुः संपद्यत इति सर्वं समञ्जसमित्यलं श्रमेण । यस्मात्पिष्टकचरावपि चरुशब्दप्रयोगः अत एव वैशद्यानपेक्षं चरुत्वप्रवृत्तिनिमित्तमिदमित्याह—**अत एव चरुत्वं नामेति** ॥ **स्पष्टमन्यत्** ॥

**॥ इति चतुर्दशं पौष्णपेषणस्य चरावेव निवेशाधिकरणम् ॥**

अत्र न्यायसुधाकृता "आनर्थक्यपरिहाराय अपूर्वप्रयुक्त एव पेषणे द्वारापेक्षायां बहुव्रीहिणा प्रधानभूतः पूषैव द्वारम् । स च भागविशिष्टः । भागश्च भज्यते सेव्यते इति व्युत्पत्त्या सेव्यम् । देवतायाश्च भोक्तृत्वाभावेन तदसंभवाल्लक्षणया स्वत्वपरत्वे मिश्रोद्देशेनापि त्यक्ते समं स्यादिति न्यायेन लोकवदर्धे पूषस्वाम्यसंभवे तस्यापि यथेष्टविनियोज्यत्वरूपस्य भोक्तृत्ववदेवासंभवात् जीवत्पितृकस्येव पितृधने अन्यं प्रति यथेष्टविनियोज्यत्वप्रतिबन्धाख्यं स्वाम्यम् "देवस्वं ब्राह्मणस्वं च लोभेनोपहिनस्ति यः ।" इतिस्मृत्युक्तं भागशब्दोक्तं द्वारमित्यपूर्वप्रयुक्तत्वेऽपि द्विदेवत्ये पेषणमिति पूर्वपक्षोपपत्तिरि"त्युक्तम्, तदिदं नवमे देवताविग्रहनिरासे सति भोक्तृत्वयथेष्टविनियोज्यत्वयोरभावस्येवान्यं प्रति विनियोगप्रतिबन्धस्याऽप्यभावेनायुक्तमित्येवं निराकृत्य प्रकाशकृताऽन्यथोपपादितम् । अपूर्वप्रयुक्तत्वेऽपि यद्यपि बहुव्रीहिणा प्रधानभूतः पूषैव द्वारं शाब्दम्; तथापि साक्षात्पूष्णः पेषणानर्हत्वादानर्थक्यादेव विपरीतविशेषणविशेष्यत्वेन भागशब्देन यागसाधनं लक्षितं हविरेव द्वारम्, न देवता; तद्द्वारत्वेऽपि हविर्द्वारस्यावश्यकत्वात् । पूषा तु हविरुपलक्षणम्; तत्राग्नेयेन्द्रपीतादिवत्पूष्णो नैरपेक्ष्यबोधकतद्धितसमासाभावान्नान्ययोगव्यावृत्त्या विशेषणत्वम्, किंत्वयोगव्यावृत्तिमात्रेणेति तदिदं द्विदेवत्येऽप्यस्त्येवेति ॥ तदेतन्निरासायाह—**सापि पूषपदे इति** ॥

येन वाक्येन यदुद्देश्यसंबन्धेन यस्य विधानं तस्य शब्दशक्त्युपस्थिततदुद्देश्यसंबन्धे आनर्थक्यप्रसक्तौ तद्वाचकपदे एवापूर्वसाधनत्वलक्षणया तेन रूपेणोद्देश्ये विधेये विहिते तदेवापूर्वं प्रति द्वारमिति "व्रीहीनहन्ति;" इत्यादिसंस्कारवाक्येषु क्लृप्तं न्याय्यं च; प्रकरणादेवावघातादीनामपूर्वसंबन्धावगमे सति अवघातादिवाक्यगतव्रीह्यादिपदद्वारविशेषस्यैव समर्पणात् । तदिह पूषसंबन्धेनैव भागशब्देन यागलक्षणात्तेनोपस्थापितमप्यपूर्वं न साक्षादुद्देश्यम्; तद्वाचकपदाभावात् । तथाच भागशब्देन यागसाधनहविषो द्वारत्वम् । तदभावे तस्यैवोद्देश्यत्वं शाब्दं भवेत् । नच तत्संभवति, एकप्रसरताभङ्गापत्तेः, पूष्णोऽयोगव्यावृत्तिमात्रेणापि विशेषणत्वे विशिष्टोद्देशापत्तेरेव हेतोराद्याधिकरणे परम्परासंबन्धेन पूषदेवतोद्देशेनैव विधानस्य बालप्रकाशे भवद्भिरन्यैश्च स्थापितत्वेन तदुपजीवनेनैवाग्रिमविचारकरणादत्र हविष उद्देश्यत्वानुपपत्तेः । एवंचोद्देश्यसमर्पके पूषपदे एवापूर्वसाधनत्वलक्षणया देवताद्वारेणैवापूर्वार्थत्वेनानर्थक्यपरिहार इति न पूर्वपक्षसिद्धिः । यदपि देवताविग्रहनिरासान्नान्यं प्रति यथेष्टविनियोज्यत्वप्रतिबन्धस्याप्यभावेन तथाभूतस्वत्वविशिष्टस्य पूष्णो द्वारत्वमिति न्यायसुधाकृद्दूषणम्, तदपि शब्ददेवतात्ववादिनापि देवताविग्रहानङ्गीकारेऽपि देवस्वादिव्यवहारं तदङ्गीकारजनकसम्बन्धविशेषस्याङ्गीकार्यत्वात् य एव तदुपपादकः संबन्धविशेषः कल्पनीयः तद्विशिष्टस्यैव पूष्णो द्वारत्वमित्येवं तदाशयाद्-

आनर्थक्यपरिहारायापूर्वसाधनत्वलक्षणाया आवश्यकत्वादधिष्ठानद्वारकत्वकल्पनस्य च पूष्णो देवतात्वोपस्थितिमन्तरेणानुपपत्तेः तदुपस्थितौ च तद्द्वारकत्वमात्रकल्पनयैवानर्थक्यपरिहाराद् द्विदेवत्ये च चतुर्धाकरणाधिकरणन्यायेन केवलस्य पूष्णो देवतात्वाभावाद्यत्र केवल एव पूषा तत्रैव पेषणम्।

न च—अपूर्वसाधनीभूतदेवतात्वस्यैव प्रकारतया पूषपदेन लक्षणेऽपि तस्य पूषोपरि भाने स्वरूपसंबन्धस्यैव संसर्गविधया विवक्षणेन पर्याप्तेरविवक्षणात्तस्य च द्विदेवत्येऽप्येकस्मिन् पूष्णि सत्त्वेन तस्याप्युद्देश्यरूपत्वोपपत्तेः कथं न पेषणादीति—वाच्यम्; व्यासज्यवृत्तिधर्मपर्याप्तप्रकारतायां एकमात्रवृत्तिसंबन्धस्य संसर्गत्वानुपपत्तेः। अन्यथा एको द्वित्वसमवायवानितिवदेको द्वित्ववानेको द्वौ इत्यादिशाब्दबोधापत्तेः। अतो व्यासज्यवृत्तिदेवतात्वस्य पर्याप्तिसंबन्धेनैव प्रकारत्वात् तस्य च पूष्णि केवले बाधात् पूषमात्रवृत्तिदेवतात्वस्यैव प्रकारत्वेन तत्रैव पेषणादि। अदन्तकत्वं त्वर्थवादमात्रत्वान्न विरुध्यते। नेमपिष्टत्वस्यापि च तत्रैव विधेयत्वाङ्गीकाराद्विशिष्टभावनाविधानेन चावाक्यभेदादगमकत्वम्॥ ३॥ ४९॥ इति पञ्चदशं पौष्णपेषणस्यैकदैवत्यत्वाधिकरणम्॥

॥ इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां तृतीयाऽध्यायस्य तृतीयः पादः॥

---

पेक्ष्यम्। अतएवान्यं प्रति यथेष्टविनियोज्यत्वप्रतिबन्धाख्यस्वाम्यस्यापूर्वं प्रत्युपयोगाभावात् न द्वारत्वं संभवतीति न्यायसुधाकृद्गुरुक्तेरेव पूषपदे एवापूर्वसाधनत्वलक्षणामङ्गीकृत्यैवान्यथा पूर्वपक्षं साधयति—**परं त्विति**—॥ स्पष्टमन्यत्॥

अत्र च प्रयोजनं पूर्वपक्षे द्विदेवत्येऽपि पेषणमर्धस्येति पूर्वपक्षोपपादनवेलायामेव भाष्यानुसारेणोक्तम्। सिद्धान्ते तु प्रापकप्रमाणाभावान्नैव तदिति स्पष्टमेव। तत्र वार्तिककृता पूर्वपक्षे कांस्यभोजिन्यायेनामुख्यानुग्रहस्याप्युक्तत्वात् इह तु इन्द्रसमकक्षतयोपात्तपूषानुरोधात्सुतरां सर्वस्यापि पेषणं शक्यत एव कर्तुमित्यपि प्रयोजनान्तरं सूचितमित्यपि यत्पूज्यपादैरुक्तम्, तस्यायमेवाशयः—यत् पूषानुरोधेन सर्वस्यापि पेषणे कृते चरुशब्दस्य पिष्टकचरावपि प्रयोगेणेन्द्रदेवताद्रव्याविरोधोपपत्तेः कांस्यभोजिन्यायेन सर्वस्य पेषणम्। यदि च चरुशब्दोऽनवस्रावितौदने एव रूढः स्यात्, तदापि पूषानुरोधेन पेषणकरणे इन्द्रस्यौदनरूपस्वद्रव्यनाशापत्तेः तत्र कस्यानुग्रह इति संदेहे मुख्यत्वेनासंजातविरोधित्वेनाध्वरकल्पायां मुख्यभूताग्नावैष्णवधर्मानुग्रहस्येव, इन्द्रधर्मोदनानुग्रहकर्तव्यतापत्त्या न सर्वपेषणं प्राप्नोति, अतः पिष्टकचरुग्रहणे एवाविरोधात्? कांस्यभोजिन्यायोपपादने पूर्वपक्ष इव सिद्धान्तेऽपि सर्वपेषणं संभवत्येवेति न कश्चन पूर्वोत्तरपक्षयोः प्रयोजनभेदः सिध्येत्। अतस्तण्डुलचरुग्रहणपक्षे विरोधप्रसक्तावप्यर्धपेषणेन तत्परिहारसंभवान्न तदनुरोधेनेन्द्रदेवताद्रव्यविघातः कर्तव्य इत्यर्धमेव पेषणं पूर्वपक्षे प्रयोजनं भिन्नं सिध्यति। यत्र ह्यमुख्यस्य सर्वथा बाधस्तत्र मुख्यस्यैवानुग्रहः॥ अध्वरकल्पागताज्यद्रव्यगतमध्यतनसरस्वतीयागीयहविरभिमर्शनस्य सकृद्धविरभिमर्शनस्यैव शास्त्रार्थत्वेन वृधन्वतीमन्त्रेणापि सिद्धेः तद्बाधाभावात् इह तु मुख्येन्द्रानुग्रहे सर्वथा पूषाङ्गपेषणस्य बाधप्रसङ्गादर्धपेषणं युक्तमित्येव प्रयोजनं कांस्यभोजिन्यायोपपादनेनाश्रयणीयमिति तदेवात्र प्रयोजनं वक्तुमिति॥

॥ इति पञ्चदशं पौष्णपेषणस्यैकदैवत्यत्वाधिकरणम्॥

इति श्रीमत्पूर्वोत्तरमीमांसापारावारीणधुरीण कविमण्डन-खण्डदेवशिष्य-शंभुभट्टविरचितायां भाट्टदीपिकाव्याख्यायां प्रभावल्यां तृतीयाऽध्यायस्य तृतीयः पादः॥

अत्र निवीतान्तं समाप्तम्॥

| अध्यायः | पादः | अधिकरणसंख्या | आदितोऽधिकरणसंख्या |
|---|---|---|---|
| ३ | ३ | १५ | ५० |